जन्मेत्यादिगौतमसूत्रस्यार्थो दर्शितः, तत्रैव "न ह्यशरीरम्" इत्यादि श्रुतिरनुग्राहिता । ३८ ३

१०५. दुःखस्य निमित्तं दुःखं निमित्तमस्येति वा विग्रहे दुःखं संसारः युक्त्या व्यवस्थापितः । ३८ ७

१०६. "इदमः प्रत्यक्षगतम्" इति वचनानुसाराद् दुःखनिमित्तमपीदमितीदम्पदेन मनुष्यजन्मनो ग्रहणम्, युक्तिरपि तत्र प्रदर्शिता । ३८–१०

१०७. तेनेत्यत्र तत्पदस्य यो ज्ञानमित्यत्र यत्पदस्यार्थविशेषोपदर्शनम्, तत्र "यं सर्वशैलाः" इति "तदन्वये शुद्धिमति" इति, "तस्याप्यत्र मृगाक्षि !" इति पद्योपदर्शनम् । ३९ ३

१०८. सुलब्धमित्यस्य भावोपवर्णनम्, भवतीत्युक्तिसमर्थनम् । ४० ४

१०९. (२ कारिका) अवतार्य जन्मनि कर्मक्लेशैरिति द्वितीयकारिकोल्लिखिता । ४१ १

११०. निरुक्त्या कर्मपदार्थोपदर्शनम् । ४१ ४

१११. मिथ्यादर्शनाविरतिप्रमादकषाययोगाख्यैरिति मूलविवरणे मिथ्यादर्शनादीनां स्वरूपं विविच्य दर्शितम् । ४१ ९

११२. मिथ्यादृष्टेर्मिथ्यादर्शनहेतुकोऽविरतसम्यग्दृष्टेश्चाविरतिपरिणामहेतुकः सर्वविरतस्य च प्रमादवतः प्रमादहेतुकः, अप्रमादिनोऽपि संज्वलनकषायवतस्तस्य कषायहेतुक उपशान्तमोहादिगुणस्थानत्रयवर्तिनः केवलयोगहेतुको बन्धोऽन्वयव्यतिरेकाभ्या व्यवस्थापितः । ४१–३०

११३. सयोगिकेवलिनो योगसद्भावेऽपि तन्निमित्तको बन्धो न भवतीति दिगम्बरमतस्य खण्डनम्, तत्र पञ्चमाङ्गसूत्रवचनं प्रमाणीकृतम् । ४२–१६

११४. अथैकैकहेतुक एव बन्ध इत्याशङ्काया अपाकरणं पूर्वस्मिन् पूर्वस्मिन्नुत्तरोत्तरबन्धहेतोर्यथा सद्भावस्तथा विवरणेन । ४२–२२

११५. संसारस्यानादित्वसाधकमनुमानमुपदर्शितम् । ४२–२६

११६. जन्मनः कर्मक्लेशानुबद्धत्वोक्तौ हेतुपदर्शनस्य विवरणम् । ४२–२७

११७. परमार्थस्य कर्मक्लेशाभावस्य भवने शङ्काद्यतिचारवियुक्तावासदर्शनो हीत्यादिना प्रकार उपवर्णितः । ४३ १

११८. गर्भवासादिभयोद्विग्न इत्यस्य स्पष्टीकरणम्, गर्भवासदुःखस्याऽगर्भोत्पन्ननारकदेवनिगोदादिदुःखस्य च प्रतिपादकं सिद्धान्तवचनमुपदर्शितम् । ४३ ५

११९. पञ्चविंशतिभावनाभावितान्तरात्मेत्यस्य विवरणम् । ४३–२०

१२०. द्वादशानुप्रेक्षास्थिरीकृताध्यवसाय इत्यस्य विवरणम् । ४३–२६

१२१. संवृताश्रवत्वादित्यस्य विवरणे द्रव्यभावभेदेन संवरस्य द्वैविध्यम्, तत्र प्रवचनसारोद्धारवचनसंवादः । ४३–२९

१२२. शङ्काद्यतिचारेत्यादिप्रकारोपवर्णनं टीकाकृत इत्युपसंहृतम् । तत्रानाभिभवकर्मागम इत्यादेर्विवेचनं टीकायाम् । ४४ २

१२३. श्लोके कर्मक्लेशाभाव इत्युक्तेरभिप्राय आवेदितः । ४४ २

१२४. जन्मादित्रयाणामन्योन्यं कारणभावेऽपि कर्मक्लेशौ प्रति जन्मनोऽन्वयो न नियतः, जन्म प्रति च तयोरन्वयो नियत इत्यादिर्विनिगमक उक्तः । ४४ २
१२५. क्लेशाभावोपादानस्यावश्यकत्वे कर्मक्लेशाभाव इति यदुक्तम् तत्प्रयोजनमुपदर्शितम् । ४४ ८
१२६. कर्मक्लेशैरित्यत्र कर्मक्लेशाभाव इत्यत्र च समासस्यैव कर्मपदस्योपादानप्रयोजनमावेदितम् । ४५ २
१२७. कर्मक्लेशाभावस्यैव परमार्थत्वनिष्टङ्कनेन जन्मनः सुलभत्वं निगमितम्, इति द्वितीयकारिका । ४५ ६
१२८. (३ कारिका) परमार्थालाभे वेति तृतीयकारिकावतरणस्यावतारिका, तत्र मोक्षाभिलाषुकस्यापि तस्मिन् भवे क्रियानुष्ठानेन मोक्षाभावे तत्क्रियानुष्ठानस्यानादरणीयत्वं स्यादित्याशङ्काया अपाकरणम् । ४५–२०
१२९. अभ्यासतः मोक्षोत्पादकत्वात्क्रियानुष्ठानस्य साफल्यमित्यत्र "जं अब्भसेइ" इत्यादिसिद्धान्तोक्तेः "अनेकजन्मसंसिद्धः" इति गीतावचनस्य "यः शुभकर्मासेवने-" त्यादिवक्ष्यमाणकारिकायाश्च संवादः । ४५–२९
१३०. परमार्थालाभे वेति तृतीयकारिका यथाऽनवद्यं कुशलानुबन्धमेव कर्म भवेत्तथा यतितव्यमित्यर्थिका, तद्व्याख्यानञ्च । ४६ ३
१३१. कुशलानुबन्धमित्यादि व्याख्याभावोपदर्शने "ज्ञानं क्रियेव विरुणद्धि" इति महावीरस्तवप्रकरणोक्तेः प्रकृतार्थसङ्गमनपरार्थख्यापनम् । ४६–२१
१३२. निराशंसभावेनैव मोक्षार्थिना शुभक्रिया कर्तव्येत्यत्र 'नो इह लोगट्ठयाए' इत्याद्यागमेन भोगफलत्वेनाऽशुभाशंसैव निषिद्धा, न तु शुभाऽऽशंसा, अत एव "वारिज्जइ जइवि" इत्याद्यागमः सङ्गत इत्यभिप्रायकतया न चैवं शुभाशंसाकृतमिति ग्रन्थोऽवतारितः । ४६–२७
१३३. भोगप्राप्तिफलस्य निदानरूपतया "सल्लं कामा" इत्याद्यागमेन निषेध इति तृतीयकारिका । ४७ ३
१३४. (४ कारिका) कर्माहितमिह चामुत्रेति चतुर्थकारिकाऽधमतमाधमविमध्यमपुरुषकर्मविशेषोपदर्शिका, तद्व्याख्यानञ्च । ४७- ७
१३५. भङ्ग्यन्तरेण पुरुषषट्कस्वरूपप्रतिपादकं महानिशीथसिद्धान्तवचनमुपदर्शितम् । अधमतमत्वलक्षणं दर्शितम्; तत्परिष्करणं टीकायाम् । ४७–११
१३६. संरम्भ–समारम्भारम्भाणां स्वरूपोपदर्शनम्, तत्र मतभेदश्च दर्शितः । ४८ १
१३७. संरम्भादीनां त्रयाणां प्रत्येकं कायवाङ्मनोभेदेन त्रैविध्यतो नवविधत्वमुपपादितम् । ४८–१४
१३८. पूर्वोक्तनवभेदानां मध्ये एकैकभेदेन सह कृतकारितानुमतसंयोजनया सप्तविंशतिभेदाः, तत्रापि क्रोधादिसंयोजनया चाष्टोत्तरशतभेदा यथा भवन्ति तथा प्रतिपादितम् । ४८–१६
१३९. मूलोक्ताधमलक्षणस्य परिष्करणम् । ४८ २७
१४०. अधमस्योल्लापः "कः पुनः परलोकादागत" इत्यादिरुट्टङ्कितः । ४९ २
१४१. विमध्यमस्य लक्षणम्, तल्लक्ष्यपुरुषा भाविताः । ४९ ५

१४२. (५ का.) मध्यमोत्तमपुरुषयोर्विशेषप्रतिपादिका "परलोकहितायैव" इत्यादि पञ्चमी कारिका । ४९–१४

१४३. यावज्जीवेदित्यादिश्लोकचतुष्टयं भूतचैतन्यवादिमतरहस्यावेदकमुपदर्शितम् । ४९–१८

१४४. मध्यमस्य लक्षणं मध्यमव्यपदेशनिबन्धनमावेदितम् । ५० ३

१४५. "विशिष्टमतिरुत्तमो मोक्षायैव घटत" इत्यस्योपपादनम् । ५० ७

१४६. उत्तमोत्तमोत्तमयोर्विविक्तलक्षणमुपदर्शितम् । ५०–१५

१४७. शैलेशीकरणप्रयत्नजन्यमोक्षेत्यस्य व्याख्यानं तत्र शैलेशीत्यस्य स्वरूपप्रपञ्चनम् । ५०–२२

१४८. (६ का.) निरनुबन्धस्वामिन उत्तमोत्तमस्योपदर्शिका "यस्तु कृतार्थोऽपीति" षष्ठी कारिका तस्या यशोविजयोपाध्यायव्याख्या । ५१–१३

१४९. ज्ञानिनो धर्मतीर्थस्येति परमतपद्यम्, तत्खण्डने "दग्धे बीजे यथाऽत्यन्तं" इति पद्यमुट्टङ्कितम् ५२ ९

१५०. (७ का.) अर्हत उत्तमोत्तमत्वपूज्यतमत्वहेतूपदर्शिका "तस्मादर्हति पूजामिति" सप्तमी गाथाऽवतार्य व्याख्याता । ५३ १

१५१. कृतार्थमकोपप्रसादमर्हन्तमर्चयता को गुण इति प्रश्नस्य प्रतिविधानम् । ५३ ७

१५२. अर्हतो यथार्थनामत्वे "अरिहंति" इति सिद्धान्तोक्तिः प्रमाणत्वेन दर्शिता । ५३–१०

१५३. अकोपप्रसादस्यापि सेवकामीप्सितगुणहेतुत्वे "अप्रसन्नात् कथं प्राप्यम्" इति वचनसंवादो दर्शितः । ५३–२२

१५४. अन्यायेनासेवमानानामिति ग्रन्थावतरणम् । ५३–२४

१५५. गुणदोषालम्बनत्वेन भगवतः सेव्यासेव्योभयरूपतापत्त्याशङ्काया निरसनम्, तत्र सेव्यत्वमसेव्यत्वञ्च विविक्तं व्यवहारासङ्कीर्णतानिबन्धनम्, तत्सङ्गमना च टीकायाम् । ५४ ३

१५६. (८ का.) मनःप्रसादादिकमर्हत्पूजाफलमित्युपदर्शिका "अभ्यर्चनादर्हताम्" इत्यष्टमी कारिका, तद्व्याख्यानञ्च । ५५ २

१५७. (९ का.) तीर्थकरनामकर्मोदयात्कृतार्थोऽपि भगवानुपदिशतीत्येतत्प्रतिपादिका "तीर्थप्रवर्तनफलं" इति नवमी कारिका, तद्व्याख्यानञ्च । ५५–१२

१५८ (१० का.) फलनिरपेक्षा कथमस्य तीर्थकरणप्रवृत्तिरित्याशङ्काव्यवच्छेदार्था "तत्स्वाभाव्यादेवेति" दशमी कारिका, तद्व्याख्यानञ्च । ५६ २

१५९. पूर्वतृतीयमनुष्यभवे निकाचिततया बद्धस्य तीर्थकरनामकर्मणो वेदनं धर्मदेशनयैव भवतीत्यत्र विशेषावश्यकभाष्यसंवादोपदर्शनं, तीर्थकरनामकमादयः केवलज्ञानोत्पत्तिकाल एव भवतीत्यत्र "उदए जस्स" इति वचनसंवादो दर्शितः । ५६–१०

१६०. भास्करदृष्टान्तेन तत्स्वाभाव्यात्प्रवृत्तौ भाष्यवचनसंवादः । ५६–१९

१६१. भिन्नाभिन्नानल्पसंशयभाजाम् देवनरतिरश्चाम् युगपदेवैकवचनेनैव सर्वसंशयान् व्यवच्छिनत्ति भगवान्, तत्र प्रमाणं बृहत्कल्पभाष्यम्, युगपत्संशयोच्छेदनेऽनल्पगुणा इत्यत्र बृहत्कल्पभाष्यसंवादोक्तिः । स्वस्वभाषाभाषिणां भगवदुक्तभाषामजानतां युगपदनेक-

विषयसंशयोच्छेदः कथमित्याशङ्कायाः समाधानम्, तत्र समवायाङ्गसंवादोक्तिः। ५६–२७

१६२. इच्छां विना कथमस्योपदेशादौ प्रवृत्तिरित्याशङ्कोन्मूलनम्, एतदुपपादनं टीकायाम्। ५७ १

१६३. पुद्गलग्रहणनिसर्गादिप्रवृत्तौ मोहोदयस्यैव हेतुत्वं, क्षीणमोहस्योपदेशादिकं नैयतिकमेवेति दिक्पटमतमपाकृतं, तत्स्पष्टीकरणं टीकायामवतरणादिना। ५८ १

१६४. उक्ताशङ्कोद्वेलकम् समन्तभद्रवचनमुट्टङ्कितम्। ५८–१५

१६५. केवलनियतिवादस्य मिथ्यात्वे "कालो सहाव णियई" इति सन्मतिगाथा प्रमाणतयोल्लिखिता। ५९–१६

१६६. विलक्षणचेष्टायामेव प्रवृत्तिर्हेतुरिति दिगम्बरमतापाकरणं, तद्विवेचनं टीकायाम्। ५९ २०

१६७ ( ११ का. ) अपश्चिमतीर्थकृतो महावीरस्य चरित्रवर्णने तज्जन्मवैशिष्ट्यख्यापिका "यः शुभकर्मासेवने"ति कारिकैकादशी, तद्व्याख्यानञ्च। ६० ३

१६८. ( १२ का. ) पूर्वभवाधिगतमतिश्रुतावधिज्ञानत्रययुक्त इहागत इत्यावेदिका द्वादशी कारिका, तद्व्याख्यानञ्च। ६१ १

१६९. ( १३ का. ) शुभसारादियुक्तत्वत्रिदशकर्तृकमहावीरनामधेयत्वावेदिका "शुभसारसत्वसंहनने"ति त्रयोदशी कारिका तद्व्याख्या च। ६१ ७

१७०. त्रिदशैरित्यस्यान्तर्मुहूर्तमात्रेणेत्यादिव्याख्यानस्य भावाविष्करणे 'जह मेहासणि' इत्यादि गाथात्रयं, कृतमहावीराभिधान इत्यस्योपोद्बलिका 'बालत्तणेऽवि सूरो' इति गाथा चोल्लिखिता। ६१–२५

१७१. ( १४ का. ) स्वयमेवावगतपरमार्थत्वादिधर्मविशेषप्रतिपादिका "स्वयमेव बुद्धतत्त्व" इति चतुर्दशी कारिका, तद्व्याख्यानञ्च। ६२ २

१७२ ( १५ का. ) असारसंसाराभिसमीक्षणपुरस्सरस्फीतराज्यपरित्यागपूर्वकं श्रीमतोऽस्य दीक्षाग्रहणमित्युपदर्शिका "जन्मजरामरणार्तम्" इति पञ्चदशी कारिका, तद्व्याख्यानञ्च। ६२ ७

१७३. चतुर्दश्यां कारिकायां सलोकान्तिकैरिन्द्रैरित्यनुक्त्वा सेन्द्रैर्लोकान्तिकैरिति किमित्युक्तमिति प्रश्नप्रतिविधाने "सारस्सय माइच्चा" इत्यादिकम् आवश्यकभाष्यगाथात्रयं संवादकमुपदिष्टम्। ६२–२३

१७४. ( १६ का. ) किं कृत्वा प्रव्रजेत्याकाङ्क्षानिवर्तिका 'प्रतिपद्याशुभशमनं' इति षोडशी कारिका, तद्व्याख्यानञ्च। ६६ ९

१७५. पञ्चदशकारिकाव्याख्यायां महावीरस्य निष्क्रमणानन्तरमेव सञ्जायते मनःपर्यायज्ञानमित्युक्तमित्यत्र "पडिवण्णम्मि चरित्ते" इत्यावश्यकभाष्यसंवादः। ६३–१४

१७६. अस्यान्यभवानाकाङ्क्षात्वे "भवे मोक्खे चे"त्ति वचनं प्रमाणम्। ६३–१७

१७७. कृतसामायिकानामेव परमार्थतश्चारित्रवत्त्वं, तेन शाक्यादयस्तूपचरितं चारित्रवन्त एवेत्यावेदितम्। ६३ २१

१७८. करोमि भदन्त! सामायिकमित्यत्र भगवतो भदन्तेत्युच्चारणं सिद्धात्मकभदन्तमुद्दिश्याचारार्थं चेत्युक्तं तच्चार्थबृहट्टीकायां। जीतमिति भदन्तेति न भण्यत इत्युक्तमावश्यकचूर्णौ। ६३ २४

१७९ ( १७ का. ) सम्यक्त्वादित्रययुक्तस्य भगवतो मोहनीयादिघातिकर्मचतुष्टयहननं केवलज्ञानकारणमिति तत्पूर्वं तद्भवतीत्यावेदिका 'सम्यक्त्वज्ञानचारित्रेति' सप्तदशी कारिका, तद्व्याख्यानञ्च । ६४ १
१८०. ( १८ का. ) अनन्तज्ञानदर्शनोपयोगलक्षणकेवलप्राप्त्यनन्तरं लोकहितार्थं कृतार्थस्यापि भगवतो वर्तमानतीर्थदेशनेत्यावेदिका "केवलमधिगम्य"त्यष्टादशी कारिका, तद्व्याख्यानञ्च । ६४ ७
१८१. ( १९ का. ) द्व्यादिभेदादियुक्तस्य वर्तमानाऽऽगमरूपतीर्थस्य संसारार्णवपारगमनदुःखक्षयसामर्थ्यावेदिका " द्विविधमनेकद्वादशविधं " इत्येकोनविंशतितमा कारिका, तद्व्याख्यानञ्च । ६९ ४
१८२. प्रकृत्या क्लिष्टकर्मणामभव्यानां भगवद्रूपभावसूर्योदयेऽपि प्रबोधाभावे तद्दौर्भाग्यं कारणमित्यत्र "अभव्येषु च भूतार्था" इत्यादि हरिभद्रवचनं, कादम्बर्यां "अपगतमले हि" इत्यादिवचनं च सम्वादिदर्शितम् । ६५–१६
१८३. सकलजन्तुभाषापरिणामिन्या भाषया भगवान् तीर्थमिदं देशयामासेत्यत्र " देवा देवीं नरा नारीम् " इत्यादिवचनं प्रमाणं द्रर्शितम् । ६९–२३
१८४. मण्डूकचूर्णसदृशविलक्षणेत्यादिविवरणस्यार्थो भावार्थश्चोपदर्शितः । ६५–२६
१८५. (२० का.) देशनीयस्यैतस्य तीर्थस्याऽत्यानमिभवनीयत्वं ज्ञापिका "ग्रन्थार्थवचनपटुभिः" इति विंशतितमा कारिका तद्व्याख्यानञ्च । ६६ २
१८६. उपमानपदस्योपमेयपदसमानविभक्तिकत्वप्रसङ्ग उत्थाप्यापाकृतः । ६६ ८
१८७. समानलिङ्गकत्वप्रसङ्गोऽनाशङ्कनीयत्वे "मुखं तव तथा भाति" इति भिन्नलिङ्गकोपमानोपमेयवचनदर्शनं हेतुतयोद्भाव्य समानविभक्तित्वनियमावश्यम्भावतो " हरीतकीं भुङ्क्ष्व " इत्यादिवचनासाधुत्वस्य काव्यप्रकाशटीकोक्तस्योपदर्शनेन समानविभक्तिकत्वाशङ्कोद्भाव्य समाहिता मूले तथापीत्यादिना । ६६–१९
१८८. ( २१ का. ) विघ्नविघाताय कृतस्य महावीरनमस्काररूपमङ्गलस्य प्रतिज्ञारूपा " कृत्वा त्रिकरणशुद्धं " इति एकविंशतितमा कारिका, तद्व्याख्यानञ्च । ६७ २
१८९. परमर्षये इत्यादि विशेषणचतुष्टयेन चतुर्थ्यन्तेन वचनातिशयादिचतुष्टयस्योक्तिरिति दर्शितम् । ६७ ८
१९०. त्रिकरणशुद्धमिति " शाङ्गरजग्वादिज्ञापकान्निष्ठापरनिपातः " इति ग्रन्थोऽवतार्य व्याख्यातः । ६७ १४
१९१. (२२ का.) " तत्त्वार्थाधिगमार्थम् " इति द्वाविंशतितमा कारिका, तद्व्याख्यानञ्च । ६८ २
१९२. अत्र विषयप्रयोजनाधिकारिसम्बन्धचतुष्टयलक्षणानुबन्धचतुष्टयोक्तिरुपदर्शिता । ६८ ७
१९३. (२३ का.) जिनवचनमहोदधिसङ्ग्रहकरणे न सामर्थ्यं तत्रापीति पराक्षेपपरा "महतोऽतिमहाविषयस्य " इति त्रयोविंशतितमा कारिका, तद्व्याख्यानञ्च । ६९ ३

क्षमार्गत्वप्रतिपादक—“ ज्ञानक्रियाभ्यां मोक्षः ” इति सिद्धान्तवचनयोर्विरोधाशङ्का प्रतिक्षिप्ता । ७८–२४
२२३. तथा ‘ नाणं पयासयं ’ इति विशेषावश्यकभाष्योक्त्या ज्ञानतपःसंयमरूपत्रिकस्य समुदितस्य मोक्षमार्गत्वप्रतिपादिकयाऽस्य विरोधो दूरीकृतः, उक्तभाष्योक्तेर्ज्ञानक्रियाभ्यां मोक्ष इत्यनेनापि विरोधोऽपहस्तितः, तत्र ‘ संजमतवोमई ” इति भाष्यसम्वादः । ७९ १
२२४. सम्यग्दर्शनादित्रिकस्य समुदितस्यैकशक्तिमत्त्वावच्छिन्नमोक्षमार्गत्वव्यवस्थापनेन “ सम्यक्श्रद्धासंविच्चरणानि मुक्त्युपायाः ” इति नव्यसूत्रं सूत्रयता यद् बहुवचनमुक्तं तत्प्रतिक्षिप्तमित्यावेदितम् । ७९–१२
२२५. उक्तैककारणत्वात्तत्त्वार्थवृहट्टीकावचनसङ्गतिः । ७९–२१
२२६. एतानि समस्तानि मोक्षसाधनानीति भाष्यव्याख्यानासङ्गतिपरिहारो विस्तरतः । ७९–२३
२२७. प्रकृते समस्तपदप्रयोगेऽप्येकवचनमेव न्याय्यमिति दर्शितम् । ७९–२८
२२८. चरणेन श्रद्धासंविदोरन्यथासिद्धिरित्याशङ्कापरिहाराय प्रत्येककारणत्वबोधाय बहुवचनस्य न्याय्यत्वमिति पराकृतस्य निरसनं, व्यापारेण व्यापारिणो नान्यथासिद्धिरिति विचारश्च। ८० ९
२२९. ‘ सलेश्यं क्षायोपशमिकं चारित्रं ’ क्षायिकभावेन परिणतितो मोक्षं प्रत्यव्यवहितकारणं तथा क्षायोपशमिकसम्यग्दर्शनज्ञाने अपीत्यत्र ‘ चिच्चारुतां ’ इति खण्डखाद्यवचनसम्वादः, अन्योक्तेर्निरसनम् । ८०–२२
२३०. एतत्सूत्रं सकलतत्त्वार्थशास्त्राभिधेयमुररीकृत्य प्रवृत्तं, कथं मोक्षोपाया एव प्रथमं कीर्तिताः, न तु मोक्ष इति प्रश्नप्रतिविधानम् । ८१ १
२३१ सम्यगुपदस्य दर्शनादिभिस्त्रिभिः प्रत्येकमन्वय इत्युपदर्शकस्य भाष्यस्यावतरणम् । ८१ ४
२३२. प्रथमतो मोक्षानुपदर्शने हेतूक्तेर्भावोपदर्शनम् । ८१–१४
२३३. कार्याणां कारणयत्नजन्मत्वेन तदुपादानस्यैवादौ न्याय्यत्वादिति द्वितीयहेतोः स्पष्टीकरणम् । ८१–२३
२३४. सम्यग्दर्शनादीनां त्रयाणां ग्रहणे हेतूपदर्शनम्, एषां पूर्वलाभे उत्तरस्य भजना, उत्तरलाभे पूर्वलाभो नियतः । ८२ २
२३५. सम्यग्दर्शनादीनां त्रयाणां लक्षणं दर्शितम् । ८२ ६
२३६. दर्शनस्य ज्ञानात् पूर्वनिपातेऽभ्यर्हितत्वं हेतुस्तस्योपपादनञ्च । ८२–१४
२३७. किमर्थं प्रत्येकं सम्यक्शब्दप्रयोग इति प्रश्नः, तत्प्रतिविधानञ्च । ८३ २
२३८. माषतुषादीनां केवलज्ञानलक्षणकार्यसिद्धिरित्यत्र “एवं सामायिकाद्यर्थेऽपीति” वचनसंवादः। ८३–२७
२३९. उद्देशलक्षणं निष्टङ्कितम् । ८४ ८
२४०. सम्यग्दर्शनादीनि त्रीणि सम्मिलितानि मोक्षसाधनान्येवेत्यवधारणानुपपत्तिराशङ्किता ,तत्र “ संहननायुरिति ” वचनोट्टङ्कनम् “आ य सव्वहेउवुत्तं” इति हारिभद्रवचनञ्च । ८६ १

२४१. उक्तशङ्काप्रतिविधानम् । ८६ ७

२४२. मानुषत्वसंहननविशेषादीनामपि मोक्षोपायत्वात्त्रयाणामेवावधारणं कुत इत्याद्याशङ्का-प्रतिविधानम् । ८७ ५

२४३. एषां च पूर्वलाभे भजनीयमुत्तरमित्यादिभाष्यस्य स्पष्टीकरणम् । ८९ २

२४४. पूर्वस्य सम्यग्दर्शनस्य लाभे भजनीयमुत्तरं ज्ञानं चारित्रं चेत्यादि व्याख्यानं दर्शन-ज्ञानयोर्भेदे, स च तयोः कारणभेदात् स्वभावभेदात् विषयभेदाच्च, कारणभेदादिकं च यथा तथोपपादितम् । ८९ ७

२४५. ज्ञानदर्शनयोर्भेदाभावपक्षमाश्रित्य व्याख्यानान्तरं, तयोर्भेदाभावश्चोपपादितः । ९० १

२४६. ज्ञानदर्शनयोर्भेदाभावपक्षे कारणभेदस्यान्यथोपपादनम् । ९० ५

२४७. सम्यग्दर्शनज्ञानयोर्भेदविषये उत्तराध्ययनसूत्राष्टाविंशाध्ययनटीकायां श्रीशान्तिसूरि-कृतायां यदुक्तं तदुल्लिखितम् । ९० ८

२४८. तयोः स्वभावविषयभेदाभावोपपादनम् । ९१ ४

२४९. ज्ञानावरणविशेष एव दर्शनावरणं, तदभिप्रायकः सम्मतिग्रन्थस्साक्षितयोक्तः । ९१ ८

२५०. सम्यग्ज्ञानेन सह सम्यग्दर्शनस्य सामनैयत्ये साक्षितया " सम्मन्नाणे " इति सम्मतिगाथा दर्शिता । ९२ ५

२५१. उक्तदिशा चारित्रस्य ज्ञानविशेषत्वं, तत्र " आत्मानमात्मना वेत्तीति " वचनसंवादः । ९२ ९

२५२. सम्यग्दर्शने सम्यग्शब्दस्य दर्शनशब्दस्य च निर्वचनं भाष्ये, उपाध्यायटीकायां तत्स्पष्टीकरणम् । ९३ ४

२५३. ( सूत्र २. ) तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ २ ॥ इति द्वितीयसूत्रं सम्यग्दर्शनस्य लक्षणप्रतिपादकं, तद् व्याख्यानं भाष्ये, उपाध्यायटीकायां तत्स्पष्टीकरणम् । ९४ ६

२५४. सम्यग्दर्शनस्य निर्गलितलक्षणम् । ९५ ३

२५५. तारादृष्टौ स्थितो जीवः शिष्टाचरितमेव पुरस्कृत्य प्रवर्तते इत्यत्र " नास्माकं महती प्रज्ञेति " वचनसंवादो दर्शितः । ९५–१५

२५६. तत्त्वार्थश्रद्धानलिङ्गानां प्रशमादीनां भाष्योक्तानां लक्षणान्युपदर्शितानि । ९६ ६

२५७. निसर्गसम्यग्दृष्टौ श्रेणिकादौ चोक्तलक्षणाव्याप्तेराचार्या अनन्तानुबन्ध्यादिक्षयोपश-मादिजनिता एव प्रशमादयो ग्राह्या इत्यत्र " पढमाणुदयाभावो " इति वचनं प्रमाण-मुपदर्शितम् । तद्विवेचनं टीकायां विस्तरतः । ९७ ६

२५८. अनुकंपालक्षणनिरुपधिपरदुःखप्रहाणेच्छेत्यस्य व्याख्याने 'दट्ठुण पाणिणिवहम्' इति वचनमुपदर्शितम् । ९७–१५

२५९. पूर्वपक्ष–सिद्धान्ताशयोद्घाटनम् । ९८ २

२६०. लैङ्गिकवल्लिङ्गस्यापि दुर्ग्रहत्वादज्ञानासिद्धिरित्याशङ्कानिराकरणम् । ९८ ५

२६१. प्रशमादयो निश्चयसम्यक्त्वस्यैव लिङ्गमित्यत्र "णिच्छयसम्मत्तं वा" इति गाथासंवादो दर्शितः; आस्तिक्यमेव शुद्धं लिङ्गमिति च । ९९ १

२६२. लक्षणशास्त्रस्य लक्षणमुपदर्शितम् । ९९ ५

२६३. असाधारणधर्मवचनत्वं लक्षणशास्त्रत्वमित्यत्र व्यतिरेकिधर्मत्वमसाधारणत्वमिति गोवर्धनाद्युक्तस्य खण्डनम् । १०० ३

२६४. उद्देश्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वमसाधारणत्वमित्येतद्घटितासाधारणधर्मवचनलक्षणेऽतिव्याप्त्याऽऽशङ्कानिराकरणार्थं तत्परिष्करणमित्येवं गौरीकान्तमतमपाकृतम् । १०० ४

२६५. स्वाभिमतं लक्षणशास्त्रलक्षणं लक्षणत्वलक्षणं तद्बोधप्रकारश्च दर्शितः । १०० ८

२६६. (सूत्र ३) " तन्निसर्गादधिगमाद्वा " इति तृतीयं सूत्रं सम्यग्दर्शनस्य द्विहेतुकत्वेन द्वैविध्यप्रतिपादकं, तद्भाष्यञ्च । १०१ ५

२६७. निसर्गाधिगमौ निरुच्य तद्धेतुके निसर्गसम्यग्दर्शनाधिगमसम्यग्दर्शने प्ररूपिते । १०१ ८

२६८. सूत्रे असमासकरणस्य प्रयोजनमुपदर्शितम् । १०३ १

२६९. तृणारणिमणीनां वह्नौ यथैकशक्तिमत्त्वेन कारणत्वं तथा निसर्गाधिगमयोरपीति दर्शितम् । १०३ २

२७०. तृणारणिमणीनामिति ग्रन्थावतरणे गूढार्थदीपिकायामेतदुपपादनम् । १०३–१०

२७१. पूर्वं निसर्गाधिगमयोर्वैकल्पिकी कारणतोक्ता, इदानीं तयोरेककारणतेति पूर्वापरग्रन्थविरोध इत्याशङ्कानिराकरणम् । १०३–१८

२७२. तृणारणिमणीनां वह्निगतवैजात्यत्रयमभ्युपेत्य तत्प्रत्येकावच्छिन्नं प्रति विभिन्नकारणतात्रयाभ्युपगमो नैयायिकस्य कथमिति प्रश्नप्रतिविधानम् । १०३–२६

२७३. परामर्शस्थलेऽपि व्यभिचारवारणाय स्वाव्यवहितोत्तरत्वं कार्यतावच्छेदककोटौ निवेशनीयं, न तु कार्यतावच्छेदकजातिभेदाभ्युपगमः श्रेयानिति निसर्गाधिगमयोः कार्यतावच्छेदककोटावपि स्वस्वाव्यवहितोत्तरत्वं निवेशनीयमिति । १०४ १

२७४. कार्यानुकूलैकशक्त्यभ्युपगन्तृमते वैकल्पिककारणतास्थलेऽप्येकैव कारणतेति प्रकृतेऽपि तथैवोपगम इति न पूर्वापरग्रन्थविरोध इति भावितम् । १०४ ६

२७५. मीमांसकमतावलम्बनेनैककारणताभ्युपगमः, न्यायनयावलम्बनेन विभिन्नकारणतोपगता इति अव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ निवेशोऽनेकनयमये जिनमते " जावइया नयवाया " इत्युक्तेर्नयदानां विचित्रत्वान्न दोषपोषाय । १०४–२७

२७६. निसर्गः परिणाम इत्यादि भाष्यस्य विवरणम् । १०५ १

२७७. परिणामवादे दृष्टान्तत्रयोपदर्शनम् । १०५ ४

२७८. स्वभावाऽर्थकः परिणामोऽत्र वैस्रसिको ग्राह्य इत्यधिगतये प्रायोगिकवैस्रसिकभेदेन

परिणामस्य द्वैविध्यमुपपादितम् । १०५ ९
२७९. उपादानकारणस्य लक्षणं स्वमतानुसारि, न्यायानुमतमुपादानलक्षणमुपदर्श्य तस्य जैनमताविरुद्धत्वमुपदर्शितं, तत्र विशेषश्च दर्शितः । १०५–२६
२८०. स्वभावोऽपरोपदेश इत्यस्यावतरणपुरस्सरं भावोपवर्णनम् । १०६ २
२८१. दैव–पुरुषकारभेदोपपादनं तद्विषये उपदेशपदग्रन्थोक्तमुपवर्णितम् । १०६–१९
२८२. उपदेशरहस्यादौ चास्माभिर्विवेचितत्वादिति विवरणस्पष्टप्रतिपत्तये तद्ग्रन्थस्तद्भावार्थश्च दर्शितौ । १०७–१४
२८३. व्यवहारः सर्वकार्ये दैवपुरुषकारयोरन्वयव्यतिरेकाभ्यां हेतुत्वं स्वीकरोतीत्यत्रोपाध्यायकृतदैवपुरुषकारद्वात्रिंशिकापद्यं प्रमाणतया दर्शितम् । १०७ १९
२८४. गौणत्वमुख्यत्वयोर्लक्षणमुपदर्शितम् । १०७–२१
२८५. उत्कटत्वप्रयुक्तं प्रत्येकजन्यत्वव्यवहरणमित्यत्र " उत्कटेन हि दैवेनेति " वचनेन भावना कृता । १०७–२४
२८६. सर्वस्य कार्यस्योभयकृतत्वेऽपि दैवकृते पुरुषकारकृतत्वाभावो व्यवहारविषय उपदर्शितः । १०७–२७
२८७. साकारस्य ज्ञानत्वं निराकारस्य च दर्शनत्वं तदुभयात्मकत्वमुपयोगस्येति दर्शितम् । १०७–२९
२८८. "अनादौ संसारे" इत्युक्त्या भाष्यकारः सृष्टिवादं निराचष्टे, तस्य युक्तत्वं, पराभिप्रेतसकर्तृकत्वसाधकानुमानस्याप्रयोजकत्वं, यद्विशेषयोरिति न्यायस्याव्यापकत्वमुपदर्शितम्। १०८ ३
२८९. युक्तश्चैतदित्यादितत्त्वार्थविवरणस्यावतरणपुरस्सरं स्पष्टीकरणं गूढार्थदीपिकायाम् । १०८ ९
२९०. क्षित्यादौ सकर्तृकत्वसाधकस्य कार्यत्वस्यासिद्धिदोषकलङ्कितत्वं प्रपञ्चितम् । १०८–२१
२९१. यद्विशेषयोरिति न्यायबलात्कार्यत्वेन कर्तृत्वेन कार्यकारणभावोपगमे कार्यत्वकरणत्वाभ्यामपि कार्यकारणभावापत्तितः करणस्याप्येकस्य सकलकार्यकारणस्य सिद्धिः स्यादित्यापादितम् । १०९ १
२९२. कार्यत्वावच्छिन्ने उपादानप्रत्यक्षत्वेन हेतुत्वत ईश्वरसिद्ध्याऽऽशङ्काया अपाकरणं । १०९- १
२९३. घटादौ प्रत्यक्षेच्छयोरन्वयव्यतिरेकासिद्धे कारणत्वे तन्निरूपितकार्यतावच्छेदकं लाघवात्कार्यत्वमेवेत्याशङ्काया निरसनम् । १०९ ३
२९४. कार्यत्वहेतोरसिद्ध्युद्भावनं कार्यसमं जात्युत्तरमिति प्रश्नस्य प्रतिविधानम् । १०९–१०
२९५. घटत्वावच्छिन्ने कृतित्वेन कारणत्वेऽपि खण्डघटकर्तृतयेश्वरसिद्धिरिति दीधितिकारमतस्य तदीयैर्दूषितत्वमुद्भावितम् । ११० ४
२९६. परमाणव एवेश्वरस्य शरीरमिति नैयायिकमतस्य निराकरणम् । ११०–१५
२९७. जैनमतेन शिरोमणिमतस्य दूषितत्वमुपदर्शितम् । ११०–२३
२९८. "न च वैशेषिकनये" इत्यादिग्रन्थस्यावतरणम् । ११०–२७
२९९. पाकस्थले श्यामघटादिनाशोत्तरं रक्तघटाद्युत्पत्तिरिति वैशेषिकमतमाशङ्क्यापाकृतम् । १ १
३००. वैशेषिकमतखण्डनहेतुप्रतिपादकपूर्वसंयोगादीत्यादिग्रन्थस्य स्पष्टीकरणम् ।

२०१. दण्डादेः स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन हेतुत्वं भवतु नाम, कृतेस्तु लाघवाद्विशेष्यतयैव हेतुत्वमिति न्यायमतस्य खण्डनम् । ११२ १

२०२. लौकिकसन्निकर्षजन्यमुपादानप्रत्यक्षमेव कार्यजनकम्, न चेश्वरप्रत्यक्षं तथेति न तदाश्रयतयेश्वरसिद्धिरित्यावेदितम् । ११२ ४

२०३. कुलालादिकृत्यभावकूटापेक्षया लघुभूतस्य कृतिसामान्याभावस्यैव कार्यसामान्याभावप्रयोजकत्वम्, तच्च कृतित्वेन कारणत्वे सति युक्तमिति कृत्याश्रयतयेश्वरसिद्धिरिति न्यायमतस्य खण्डनम् । ११२–१८

२०४. आभोगवीर्यजन्ये आभोगस्यानाभोगवीर्यजन्येऽनाभोगस्य कारणत्वे यद्विशेषयोरिति न्यायेनाभोगानाभोगसामान्यकारणत्वतस्तदाश्रय ईश्वरः स्यादित्यापादितम् । ११३ १

२०५. सृष्टिप्राक्काले शरीरादिरहितत्वेन मुक्तकल्पानां जीवानां पुनः सृष्टौ तेषामीश्वरेण संसारित्वापादने मुक्तावनाश्वास इत्यापादितम् । ११३ ३

२०६. उक्तापत्त्युद्धारप्रकारो नैयायिकस्याशङ्क्य निरस्तः । ११३ ४

२०७. आभोगवीर्यजन्यानाभोगवीर्यजन्ययोः क्रमेण स्पष्टीकरणम् । ११३–१४

२०८. प्रलयाभावे कालत्वस्य भोगव्याप्यत्वं निमित्तं, प्रलयाभावात्सृष्टेरभाव आवेदितः । ११४ १

२०९. ईश्वरस्य सृष्टिकर्तृत्वखण्डने युक्तय उद्भाविताः । ११४ १

२१०. प्रलयाभावेऽनुमानं प्रमाणमुपदर्शितम् । ११४–१२

२११. कर्मसापेक्षस्य नेश्वरत्वमित्यसहमानस्य नैयायिकस्य पूर्वपक्ष उद्भाव्यापाकृतः । ११४–१७

२१२. संसारस्यानादित्वसाधनप्रकार उपदर्शितः । ११४–२७

२१३. आत्मनो विभुत्वेऽपि जन्ममरणोपपत्तिराशङ्क्यापाकृता । ११५ ४

२१४. ज्ञानावरणीयादिकर्मणः साधकमनुमानं दर्शितम् । ११५–१०

२१५. कर्मणोऽदृष्टापरनामकस्यात्मगुणत्वं नैयायिकाभिमतमाशङ्क्य निराकृतम् । ११५–१७

२१६. आत्मनः पारतन्त्र्यं प्रश्नप्रतिविधानाभ्यां प्रसाध्य तेन कर्मणः पौद्गलिकत्वं व्यवस्थापितम् । ११५–२१

२१७. 'अन्ने उ अमुत्तं चिय' इत्यादि सिद्धान्तयुक्तिभिः कर्मणः पौद्गलिकत्वे सिद्धे तस्य ज्ञानावरणतया सिद्धावनुमानमुपदर्शितम् । ११५–२६

२१८. बन्धनिकाचनोदयनिर्जरापेक्षं पुण्यपापफलमित्यत्र बन्धनिकाचनास्वरूपप्रदर्शनं, टीकाकृदुक्त्या स्पृष्टताया निकाचनाभेदत्वं दर्शितम् । ११६ ६

२१९. बद्धस्पृष्टनिकाचितस्वरूपभेदस्य निदर्शनेन स्पष्टीकरणम् । ११७ २

२२०. बन्धनिकाचनोदयस्य निर्जरायाश्च स्वरूपप्रपञ्चनं तदुपयोगभेदश्च भावितः । ११७ ९

२२१. अनाभोगनिर्वर्तितेन यथाप्रवृत्तकरणेनेति मूलस्यार्थो व्यावर्णितः, तत्र यथाप्रवृत्तकरणापूर्वकरणानिवृत्तिकरणभेदेन त्रिविधानि करणानि विविच्य दर्शितानि । ११७–२३

३२२. उक्तानि त्रीण्यपि करणानि भव्यानां, अभव्यानाञ्च प्रथमं यथाप्रवृत्तकरणमेव, अत्र 'करणं अहापवत्तं' इति भाष्यवचनसंवादः। ११७-३०

३२३. अनादिकालादारभ्य यावद्ग्रन्थिस्थानं तावत् प्रथमं यथाप्रवृत्तकरणं भवतीति प्रतिज्ञाय तदुपपादनं प्रश्नप्रतिविधानाभ्यां कृतं, तत्र 'पाएण पुव्वसेवा' इत्यादि भाष्यसंवादः। ११८ २

३२४. ग्रन्थिभिन्दानस्य द्वितीयमपूर्वकरणं, अभिमुखसम्यक्त्वस्य तृतीयमनिवर्तिकरणं, 'जा गंठी ता पढमं' इति विशेषावश्यकभाष्यसंवादश्च। ११८-१८

३२५. उत्कृष्टकर्मस्थित्युपवर्णनं तत्र "वीससयरोवमाणं" इति विशेषावश्यकवचनं प्रमाणं, तत्र स्थितस्य सम्यग्दर्शनालाभे "अट्ठण्हं वि पयडीणं" इति वचनं प्रमाणम्। ११८-२४

३२६. अन्तिमकोटीकोट्याः पल्योपमासंख्येयभागे क्षपिते कठिनरूढगूढग्रन्थिरुपतिष्ठते इत्यत्र "अन्तिमकोडाकोडीए" इति वचनं प्रमाणमावेदितम्। ११९ ४

३२७. असौ ग्रन्थिः कर्कशघनरूढवल्कलग्रन्थिसदृश इत्यत्र "गंठित्ति सुदुब्भेओ" इति वचनं प्रमाणम्। ११९ ७

३२८. अमुं ग्रन्थिं यावद् भव्य इवाभव्योऽप्यागच्छति, तत्रागतस्य तस्य श्रुतसामयिकावाप्तिरित्यत्र "तित्थकराइपूअं" इति विशेषावश्यकवचनं, तदर्थश्च दर्शितः। ११९ ८

३२९. तत्र सङ्ख्येयकालमसङ्ख्येयकालं वाऽभव्योऽत्र तिष्ठते इत्याद्युपदर्शकं धर्मसङ्ग्रहवचनमुपनिबद्धम्। ११९-१८

३३०. अभव्यसिद्धिकोऽभिन्नानि दशपूर्वाणि चतुर्दशपूर्वाणि वा नैव लभते इत्यत्र कारणमुपदर्श्य तत्र "चोद्दस दस य अभिन्ने" इति वचनं दर्शितम्। ११९-२१

३३१. भव्याभव्ययोरुक्तविशेषप्रयोजको जातिभेद उपदर्शितः। ११९-२७

३३२. भव्यजीवो भिन्ने ग्रन्थिस्थाने मोक्षहेतुं सम्यग्दर्शनमासादयतीत्यत्र "भिन्नम्मि तम्मि" इति वचनसंवादः। ११९-३१

३३३. नैसर्गिकसम्यग्दर्शननिर्वचनं, प्रसंगाद्यथाप्रवृत्तकरणापूर्वकरणानिवृत्तकरणानां निर्वचनपुरस्सरं फलभेदकथनम्। १२० १

३३४. निसर्गसम्यग्दर्शननिगमनपुरस्सरमधिगमसम्यग्दर्शनप्ररूपणम्। १२० ८

३३५. जीवाजीवादिसप्ततत्त्वोद्देशात्मकचतुर्थसूत्रावतरणं भाष्यकृतः, तद्विवरणञ्चोपाध्यायस्य। १२१ ६

३३६. जीवाजीवादिसप्ततत्त्वोद्देशसूत्रं तुरीयं, तद्भाष्यञ्च। १२२ ६

३३७. जीवाजीवाश्रवबन्धसंवरनिर्जरामोक्षाणां संक्षेपेण लक्षणाभिधानं, इत्येष सप्तविधोऽर्थस्तत्त्वं, एते वा सप्तपदार्थास्तत्त्वानीत्येवमेकवचनबहुवचनान्तघटितभाष्यव्याख्यानभेदस्य संगमनञ्च। १२२ ९

३३८. गूढार्थदीपिकायामेतत्सर्वस्य स्पष्टीकरणम्। १२२-१२

३३९. तत्त्वमिति सौत्रमेकवचनान्तं निरवद्यतयोपपादितम् । १२३—५
३४०. तत्र जीवानुद्दिश्य तत्त्वविधानं, तत्त्वमुद्दिश्य पुनरावृत्त्या जीवादिविधानं कर्त्तव्यमिति विवेचितम् । १२३ ७
३४१. जीवादीनुद्दिश्य यत्तत्त्वविधानं, यच्च तत्त्वमुद्दिश्य जीवादिविधानं तयोरवतरणादिनोपपादनम् । १२३—२६
३४२. अन्यत्र पुण्यपापयोरप्यधिकस्य श्रवणात्कथं सप्तैव पदार्था इति प्रश्नप्रतिविधानम् । १२४ ३
३४३. आश्रवादीनां पञ्चानां जीवाजीवयोरेवान्तर्भावाज्जीवाजीवौ द्वावेव पदार्थौ वक्तव्याविति प्रश्नप्रतिविधानम् । १२४ ४
३४४. विभागलक्षणघटनाऽयुक्तसूत्रं कथं विभागरूपमिति प्रश्नस्य प्रतिविधानम् । १२४—१३
३४५. "जीवाजीवा पुण्णं" इति नवतत्त्वप्रतिपादकं नवतत्त्वप्रकरणादौ वचनम् । १२४—२३
३४६. आश्रवो मिथ्यादर्शनादिपरिणाम इत्यस्यावतरणेन द्रव्याश्रवोऽजीवे भावाश्रवो जीवेऽन्तर्भवतीति दर्शितम् । १२४—२४
३४७. आश्रवादीनां जीवाजीवयोरन्तर्भवतामपि पार्थक्येनाभिधाने हेतुरुपदर्शितः । १२५ ५
३४८. द्रव्यसंवर—भावसंवरलक्षणभेदप्रतिपादकं "यः कर्मपुद्गलादान—च्छेदः" इति पारमर्षवचनमुट्टङ्कितम् । १२५—१५
३४९. मोक्षस्येव संसारस्यापि पार्थक्येनाभिधानमुचितमिति प्रश्नप्रतिविधानम् । १२५—२५
३५०. संवरनिर्जरयोः पार्थक्येनाभिधाने युक्तिः स्वयमावेदिता । १२५—३०
३५१. नामस्थापनेत्यादिनिक्षेपचतुष्टयप्रतिपादकं पञ्चमसूत्रमवतार्य विवृत्तम् । १२६ १
३५२. 'जत्थ य जं जाणिज्जा' इत्यनेन निक्षेपान्तरकल्पनाया अनुमतत्वमाश्रित्य 'णामं ठवणा दविए' इत्यादिसूत्रेषूक्तत्वान्निक्षेपाणां षड्विधत्वं सप्तविधत्वादिकञ्चेति कथमत्र निक्षेपचतुष्टयस्यैवाभिधानमिति प्रश्नस्य प्रतिविधानम् । १२६—१३
३५३. तत्र सर्ववस्तुनियतत्वं नामादिनिक्षेपचतुष्टयानामेव, नान्येषां, उक्तञ्च भाष्ये "नामादिभेदसद्दत्थ" इत्यादि, तेन नामादिनिक्षेपचतुष्टयाभिधानं युक्तमिति । १२६—२२
३५४. अन्येषां निक्षेपाणां निक्षेपचतुष्टय एवान्तर्भाव इत्यत्र "चतुष्काभ्यधिकस्येह" इति पद्यं प्रमाणं दर्शितम् । १२६—२८
३५५. सर्वशब्दानां सर्वार्थवाचकत्वेन जीवादिपदानां जीवादिपदार्थेषु नियताः शक्तयो जैनमते न सन्तीति कथं नियतशक्त्युपपादनेन स्वस्वपदशक्तिग्रहो जैनानामिति प्रश्नप्रतिविधानं, तत्र प्रतिनियतसंकेतग्रहस्याभिव्यञ्जकत्वमुपपादितम् । १२६—३०
३५६. संकेतग्रहस्यैव शाब्दहेतुत्वमाशंक्यापाकृतम् । १२७—१२
३५७. आशङ्क्य लक्षणोच्छेद इष्टापत्त्या परिहृतो यशोविजयोपाध्यायैश्शास्त्रवार्तासमुच्चयटीकायामिति दर्शितम् । १२७—१८

३५८. वाच्यवाचकभावलक्षणशक्तिश्च न मीमांसकमतवद्धर्मितो भिन्ना, किन्तु भिन्नाऽभिन्ना च कथञ्चिदिति दर्शितम् । १२७–२३
३५९. नैयायिकाभ्युपगतसंकेतलक्षणशक्तिखण्डनम् । १२७–२४
३६०. पर्यवसितस्य शक्यतावच्छेदकभेदेनैकस्य शब्दस्यानेकशक्तिप्रदर्शकवचनरूपनिक्षेपसामान्यलक्षणस्य नामादिप्रत्येकनिक्षेपवचने न सम्भव, इति प्रश्नस्य प्रतिविधानम् । १२७–२८
३६१. तत्रानुगतं निक्षेपसामान्यलक्षणं तस्य प्रत्येकं नामनिक्षेपादिचतुष्टयेषु नानाशक्यतावच्छेदकोपपादनपुरस्सरं सङ्गमनं, तदन्तर्गतञ्च "अणुवओगो दव्वमित्यादि" वचनम् । १२८ ६
३६२. वस्तुमात्रस्य निक्षेपचतुष्टयरूपत्वे एकार्थकशब्दोच्छेदापत्तिरित्याशङ्काया निराकरणम् । १२८–३१
३६३. 'व्यक्त्याकृतिजातयस्तु पदार्थः' इत्यभ्युपगच्छद्भिर्नैयायिकैर्द्रव्यस्थापनाभावनिक्षेपत्रयमभ्युपगतमेव, वैयाकरणैर्नामपदार्थः इष्यत इति निक्षेपचतुष्टयाभ्युपगमः परमतेऽपि । १२९ १
३६४. भावश्च शब्दार्थः, वार्तिकवचनेन नाम्नो भावत्वमिति नाम्नः शब्दार्थत्वं सिद्ध्यतीति । १२९ ३
३६५. नामादीनां त्रयाणामप्रस्तुतार्थनिराकरणमात्रफलकत्वेन व्यवहारे भावनिक्षेपस्यैव मुख्यत्वेन मुख्यार्थमादायैकार्थकत्वोपपत्तिः, भावघटत्वादेस्तिर्यग्सामान्यस्य प्रवृत्तिनिमित्तस्यैकत्वात्, अष्टसहस्र्यामेतद्विषये निष्कर्षश्च । १२९ ५
३६६. ततश्च निक्षेपचतुष्टयानुगतगोत्वादेः प्रवृत्तिनिमित्तस्यैकत्वाद् गोपदादेरप्येकार्थत्वं, निक्षेपसामान्यलक्षणं नामनिक्षेपादीनां पृथग्लक्षणञ्च दर्शितम् । १२९–११
३६७. नाम्नः पदार्थत्वे वैयाकरणानां युक्तिरुपदर्शिता, तत्र 'न सोऽस्ति प्रत्ययो लोके' इति हरिकारिका तत्साधिका दर्शिता । १२९–२४
३६८. घट इति नाम्नो घटार्थाऽभेदो व्यवस्थापितः । १२९–२९
३६९. शब्दानां भावत्वं युक्तमित्युपपादितम् । १३० २
३७०. प्रमेयत्वादिना हरित्वादिविशिष्टे शक्तिग्रहाद्धरित्वादिनोपस्थितितो हरित्वादिना शाब्दबोध इत्याशङ्काया निरासः । १३० ४
३७१. भगवत्प्रवचने जघन्यतोऽपि निक्षेपचतुष्टयम् । उत्कर्षतस्तु यस्मात्पदाद् यावन्तोऽर्थास्संप्रदायाऽविरोधेनोपतिष्ठन्ते तावत्सु निक्षेपप्रवृत्तिरिति दर्शितम् । १३० ६
३७२. लक्षणोच्छेदाशङ्कायाः परिहारः । १३० ८
३७३. जघन्यतोऽपि निक्षेपचतुष्टयस्य वस्तुनियतत्वे 'निययं जं' इति विशेषावश्यकभाष्यसंवादः । १३०–२०
३७४. शक्तिसंकोचविकासयोरिति मूलस्यावतरणपुरस्सरमर्थो दर्शितः । १३०–२३
३७५. शक्तिसङ्कोचतो निक्षेपचतुष्टयस्यैव ततो न्यूनस्य कथं न करणमिति प्रश्नप्रश्नप्रतिविधानाभिप्रायाश्रयेण एभिर्नामादिभिरित्यादिभाष्यावतरणम् । १३१ २

३७६. नामनिक्षेपादिचतुष्टयस्य प्रत्येकं जीवाजीवादिषु साद्यऽनादिभावेषु सर्वेष्वनुगमनं लक्ष्योपादानपुरस्सरं कृतं, द्रव्यनिक्षेपे विचारभेदो दर्शितश्च । १३१ ६
३७७. उक्तभाष्यविवरणमुपाध्यायस्य । १३१–२२
३७८. द्रव्यास्तिकनय एव नामादिनिक्षेपत्रयमभ्युपगच्छति पर्यायास्तिकनय एव भावनिक्षेपमात्रमभ्युपगच्छति अत्र "नामं ठवणा" इति सम्मतिगाथासंवादः । १३२ ४
३७९. अनुयोगः सकलगणिपिटकार्थ इत्यादि यशोविजयोपाध्यायवचनार्थस्य स्पष्टीकरणम् । १३२–१८
३८०. चेतनावतोऽचेतनावतो वा यद् जीव इति नाम क्रियते स नामजीव इत्यत्र "अत्ताभिप्पायकया" इति वचनसंवादः । १३२–२६
३८१. जीवनाम्नाऽभिधेयस्य जीवनामाविशिष्टार्थस्य नामरूपत्वाभावान्नामजीव इति व्यपदेशो न स्यादिति प्रश्नप्रतिविधानपरतया नामनामवतोरभेदोपचारादिति ग्रंथोऽवतारितः । १३२–२९
३८२. नाम्ना जीवो नामजीव इत्यत्र नामप्रकारको बोधः, नामैव जीवो नामजीव इत्यत्र वस्तूपाधिको नामविशेष्यको बोध इति पक्षभेदेन बोधप्रकारे वैचित्र्यमुपदर्शितम् । १३३ १
३८३. नाम्ना जीव इति तृतीयासमासस्थले जीवान्यत्वविशिष्टजीवनाम नामनिक्षेपविषयतावच्छेदकमित्यत्र "यद्वस्तुनोऽभिधानं" इति पद्यसंवादः । १३३ ५
३८४. नाम नामवतोरभेदोपचारादित्यादि व्याख्यातम् । १३३ ६
३८५. यद्वस्तुनोऽभिधानमित्यस्यैव समानार्थकम् 'पज्जायाऽणभिधेयं' इति विशेषावश्यकवचनमुपदर्श्य तदर्थ उपदर्शितः । १३३–२६
३८६. अन्यस्मिन्नर्थे यदारोपितं स्वप्रधानार्थनिरपेक्षं स्वपर्यायानभिधेयं यच्च यादृच्छिकं तदुभयानुगतं लक्षणमुपदर्शितम् । १३४ ७
३८७. इत्वरनाम्नो यावद्द्रव्यभाविनाम्नश्च क्रमेण निर्वचनम् । १३४–१३
३८८. नामेन्द्रादिसाधारणमन्यतमत्वघटितलक्षणं दर्शितम्, एवं पुस्तकादिलिखितेन्द्रादिवर्णावलीस्वरूपनाम्नोऽन्यतमत्वेन सङ्ग्रह इत्युपदर्शितम् । १३४–२३
३८९. स्थापनाजीवनिरूपणपरतया 'यः काष्ठेत्यादि' भाष्यमवतार्य व्याख्यातम् । १३५ १
३९०. स्थापनालक्षणोपदर्शकं 'यत्तु तदर्थवियुक्तमिति' महर्षिपद्यमर्थभावनाद्युपदर्शनेन व्याख्यातम् । १३५ ७
३९१. सद्भूतासद्भूतस्थापनाद्वयोपदर्शकं "लेप्पगहत्थी" इत्यादिपद्यमुल्लिखितम् । १३५–२२
३९२. इत्वरयावत्कथिकस्थापनाविवेचनम् । १३५–२५
३९३. 'जे चित्तभित्ति विहिया' इत्यादि बृहत्कल्पभाष्यवचनेन देवलोकानियतभावानां शाश्वतत्वमुपदर्शितम् । १३५–२९
३९४. सद्भूतासद्भूतजीवस्थापनयोः समर्थनं स्थापनादृष्टान्तोपदर्शकतया "इन्द्रो रुद्रः" इत्यादिभाष्यमवतारितम् । १३६ २

३९५. "जं पुण तयत्थसुन्नं" इति विशेषावश्यकपद्यानुसारेणानुगतस्थापनालक्षणं तद्विशेषणादिप्रयोजनं च दर्शितम् । १३६–१०

३९६. उक्तलक्षणेऽस्वारस्योद्भावनपुरस्सरं लक्षणान्तरमुपदर्शितम् । १३६–१८

३९७. द्रव्यजीवनिक्षेपलक्षणपरतया द्रव्यजीव इत्यादिभाष्यमवतार्य विवृतम् । १३७ २

३९८. द्रव्यजीवनिक्षेपो न सम्भवतीत्युपदर्शकं 'शून्योऽयं भङ्ग' इति भाष्यमवतार्य व्याख्यातम् । १३७ ७

३९९. निगोदजीवानामप्यक्षरानन्ततमो ज्ञानभागो नित्योद्घाटित इत्यत्र 'सव्वजीवाणं पि' इति सिद्धान्तवचनमुल्लिखितम् । १३७–१५

४००. विद्यमानं वस्तु भविष्यत्पर्यायकारणत्वात्तदपेक्षया द्रव्यरूपमित्यत्र दृष्टान्तप्रतिपादकं "मिउ पिंडो दव्वघडो" इत्यादिसिद्धान्तवचनमुपदर्शितम् । १३७–२६

४०१. जीवे द्रव्यनिक्षेपाभावे नामादिचतुष्टयस्याव्यापकत्वं स्यात् 'जत्थ य जं जाणिज्जा' इत्यादि वचनेन नामादिचतुष्टयस्य व्यापकत्वं सिद्धमिति प्रश्नस्य प्रतिविधानम् । १३८ ५

४०२. जीवत्वस्यानाद्यनिधनपारिणामिकभावस्य प्रतिपादकं 'दव्वेणेगं दव्वं" इति विशेषावश्यकभाष्यवचनं दर्शितम् । १३८–२४

४०३. जीवेऽपि द्रव्यनिक्षेपसंभवोपपादकं मतान्तरमुपदर्शितं तत्रास्वरस आवेदितः, तत्र द्रव्यजीवत्वभावजीवत्वयोर्विरोध आवेदित. । १३९ १

४०४. द्रव्यजीवत्वभावजीवत्योर्विरोधः स्फुटीकृतः । १३९–२६

४०५. तयोरविरोधोपपादकप्रश्नस्य प्रतिविधानम् । १४० १

४०६. द्रव्यरूपं जीवादिकं वस्तुमात्रं द्विधा आगमतो नोआगमतश्चेत्यादि चर्चितं विस्तरतः । १४०–१०

४०७. जीवशब्दार्थज्ञस्तत्रानुपयुक्तो द्रव्यजीव इत्यादिना व्यापित्वोपपादकं मतातरमुपदर्शितम् । १४१ १

४०८. भावनिक्षेपोपदर्शकं 'भावतो जीवा' इति भाष्यम् । १४१ २

४०९. जीवशब्दार्थज्ञस्तत्रानुपयुक्तो द्रव्यजीव इत्यादि मूलमवतार्य विवृतम् । १४१–१४

४१०. क्वचिदप्रधानेऽप्यर्थे द्रव्यपदं, तत्र "अप्पाहन्ने वि इहं" इति गाथा, सकलद्रव्यनिक्षेपानुगतं द्रव्यनिक्षेपलक्षणञ्चोपदर्शितम् । १४१–१८

४११. सिद्धान्तोक्तं भावसामान्यलक्षणं किमिति प्रश्नप्रतिविधाने 'भावो विवक्षितक्रियेति वचनं, तदर्थश्च दर्शितः ।' १४१–२६

४१२. आगमतो नोआगमतश्च भावो द्विविध इति प्रपञ्चत उपपादितम् । १४२ १

४१३. अर्थाभिधानप्रत्ययास्तुल्यनामधेया इत्यवलंब्यार्थादीना त्रयाणामिन्द्रत्वं भावितम् । १४२–११

४१४. इन्द्रार्थं जानन् तत्रोपयुक्तो भावेन्द्र इत्यस्य बृहत्कल्पभाष्ये "न हि जो घडं वियाणइ" इत्यादिगाथाद्वयं प्रश्नोत्तराभ्यां संवादकमुपदर्शितम् । १४२–१६

४१५. इन्द्रार्थोपयोगवतो भावेन्द्रत्वे अग्न्युपयुक्तस्य माणवकस्य भावाग्नित्वाऽऽशंकाया अपाकरणम् । १४२–१९
४१६. नोआगमतः स्वर्गाधिपो भावेन्द्र इति व्यवस्थापितम्, १४२–२४
४१७. नोआगमत इत्यत्र नोशब्दस्य सर्वनिषेधार्थत्वे देशनिषेधार्थत्वे च विभिन्नदृष्टान्ताद्युपदर्शनम् । १४२–२९
४१८. पूर्वं भावजीव इत्येकवचनेन विन्यस्य व्याख्याने भावतो जीवा इति बहुवचनमयुक्तमिति प्रश्नप्रतिविधानम् । १४३- १
४१९. औपशमिकादीत्यादावन्यत्स्वरूपकथनं, उपयोग एव लक्षणमित्युपपादितम् । १४३ ३
४२०. 'पुरुष एवेदं सर्वं' इत्यादि ग्रंथो व्याख्यातः, भावजीवनानात्वे मानमुपदर्शितम् । १४३–१६
४२१. लक्ष्यतावच्छेदकत्वस्येव शक्यतावच्छेदकत्वस्य गुरुण्यपि स्वीकारादिति ग्रंथः सम्यक्तया व्याख्यातः । १४४–१९
४२२. तत्तद्धर्मविशिष्टब्रह्मसत्ताया एव तत्तद्धर्मरूपत्वेन तत्तत्पदप्रवृत्तिनिमित्ततया भावत्वमित्यत्र "संबंधिभेदात्सत्तैवेति" वाक्यपदीयं पदद्वयमुपदर्शितम् ।
४२३. जीववदजीवादिष्वपि नामादिचतुष्टयस्य विविच्योपदर्शनपुरस्सरं व्यापित्वं निगमितम् । १४९ ६
४२४. भिन्नवस्तुनि निक्षेपचतुष्टयावतारवदेकस्मिन्नपि वस्तुनि निक्षेपचतुष्टयावतारः, तत्र 'अहवा वत्थुमिहाणं' इति महाभाष्यसम्मतिरावेदिता 'जात्याकृतिव्यक्तयः पदार्थः' इति गौतमसूत्रसङ्गमना च कृता । १४५–२०
४२५. आत्मवादीनां द्रव्य—भावनिक्षेपविचारे टीकाकाराभिप्रायो भावितः । १४६ ६
४२६. दानहरणयोर्दातृहर्तृनिष्ठत्वं अपुनर्बंधकस्वरूपलक्षणञ्च दर्शितम् । १४६–२३
४२७. अप्राधान्ये द्रव्यशब्दः सिद्धान्तप्रयुक्तो दर्शितः । १४७ २
४२८. जीवादीनां सामान्यशब्देष्वपि नामादिचतुष्टयावतार इत्यर्थकतया पर्यायान्तरेणापीत्यादि भाष्यमवतार्य व्याख्यातम् । १४७ १०
४२९. द्रव्यद्रव्ये पक्षान्तरप्रतिपादकं केचिदप्याहुरित्यादि भाष्यमवतार्य व्याख्यातम् । १४७ १२
४३०. द्रव्याज्ञाभावाज्ञयोः प्रतिपादकं 'गंठिगसत्ता' 'भावाण। पुण' इति गाथाद्वयमुपदेशपदादिगतमुल्लिखितम् । १४७–२३
४३१. सङ्घाताद् द्रव्योत्पादस्य युक्तत्वेऽपि भेदात्कथं द्रव्योत्पाद इति प्रश्नस्य प्रतिविधानम् । १४८ २
४३२. 'अणवः स्कन्धाश्च' 'सङ्घातभेदेभ्य उत्पद्यन्ते' 'भेदादणुः' इति तत्त्वार्थसूत्रकदम्बकं मूलोल्लिखितमवतार्य व्याख्यातम् । १४८ ५
४३३. अथ सङ्घाताद् द्रव्यमुत्पद्यत इत्यादिप्रश्नप्रतिविधानरूपमूलग्रंथोऽवतार्य व्याख्यातः । १४८–१८
४३४. सयुक्तिको भेदस्य न द्रव्यजनकत्वमिति प्रश्न उत्थाप्यापाकृतः, उत्पादव्ययध्रौव्याणामविरोधोक्तिः, निराश्रयस्य परमाणुद्रव्यस्य नोत्पत्तिरिति परमतस्य निरासश्च । १४९ २

४३५. उत्पत्तेः प्रागित्यादिप्रश्नप्रतिविधानादिग्रंथा अवतार्य व्याख्याताः । १४९–१२

४३६. परमाणुत्रयेण द्विप्रदेशिकद्वयस्यैवोत्पत्तिः एकपरमाणुविगमे च तद्द्विप्रदेशिकविगमादेकद्विप्रदेशिकस्याभिव्यक्तिर्न तु भेदादुत्पत्तिरिति शङ्काया निराकरणम् । १५० १

४३७. दशतन्तुकादेश्चरमतन्तुसंयोगवियोगक्रमेण नाशे नवतन्तुकादेरभिव्यक्तिरेव, न तूत्पत्तिरिति परमतस्य निराकरणम् । १५० ४

४३८. "विगमस्स वि एस विही" इति सम्मतिगाथामुल्लिख्य तदनुसारेण विनाशस्य समुदायविभागार्थान्तरभावगमनभेदेन द्वैविध्यमुपपादितम् । १५१–१६

४३९. भावतो द्रव्यमित्येकवचनेनोद्दिश्य भावतो द्रव्याणीति निर्दिशतो भाष्यकारस्याभिप्राय आवेदितः । १५२ १

४४०. सगुणपर्यायाणीत्यादिभाष्यग्रन्थार्थो दर्शितः । १५२ २

४४१. आगमे द्रव्यशब्दस्य भव्यादिपर्यायशब्देनार्थकथनमित्यागमत इत्यादि भाष्याभिमतमिति दर्शितम् । १५३ १

४४२. जीवादीना द्रव्यशब्दस्येव गुणक्रियादिशब्दानामपि तत्त्वाधिगमार्थं न्यास इत्यर्थकं 'एवं सर्वेषामि'त्यादि भाष्यं व्याख्यातम् । १५३ ७

४४३. निक्षेपफलवत्त्वप्रतिपादने 'इदमेवं च नामादिभेदोपन्यासेन'इत्यादिपिण्डनिर्युक्तिपाठो दर्शितः । १५३–२९

४४४. 'प्रमाणनयैरधिगमः' १–६ । इति सूत्रमवतार्य तद्विवृतिरूप भाष्यं, तत्र प्रमाणं प्रत्यक्षपरोक्षभेदेन द्विविधं वक्ष्यमाणं मतान्तरेण चतुर्विधं, नया नैगमादयो वक्ष्यमाणा इति च दर्शितम् । १५५ १

४४५. प्रमाणनयैरित्यत्र तृतीयाकरणे व्यवस्थापिता । १५५ ७

४४६. षष्ठसूत्रावतरणिका तत्त्वार्थाधिगमे निक्षेपप्रमाणनयानां हेतुत्वमित्युपपादनेनावतारिता । १५५–१७

४४७. प्रमाणनयैरित्यत्र नयस्याल्पाच्तरत्वेन पूर्वनिपातः कुतो नेति प्रश्नस्य प्रतिविधानम् । १५५–२४

४४८. "तं समासओ दुविहं" इति प्रत्यक्षपरोक्षभेदेन प्रमाणद्वैविध्यप्रतिपादकं नंदीसूत्रवचनमुपदर्शितम् । १५६–१४

४४९. बौद्धाः प्रत्यक्षमनुमानं चेति प्रमाणद्वयमभ्युपगच्छन्तीत्युपपादितम् । १५६–१६

४५०. वैशेषिका अपि प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमेवाभ्युपगच्छंति शब्दोपमानयोर्यथाऽनुमानेऽन्तर्भावस्तथा दर्शितः, अर्थापत्त्यनुपलब्धिसंभवैतिह्यानां प्रमाणान्तरत्वमपाकृतम् । १५६–२०

४५१. अनुयोगद्वारग्रन्थे उक्तं प्रमाणचतुर्विधत्वं नयवादान्तरेण, तद्यथा दुःस्थितं तद्भाष्यकारो दर्शयिष्यति, शब्दसमभिरूढैवंभूतानां शब्दसंज्ञया सङ्ग्रहान्नयानां पञ्चविधत्वमिति दर्शितम् । १५७ १

४५२. प्रमाणनययोः कः प्रतिविशेष इति प्रश्नप्रतिविधानं तत्र सर्वनयानां मिथ्यादृष्टित्वं स्वपक्षप्रतिबद्धानाम् । १५७ ५

४५३. परस्परापेक्षा नैगमादयो नयाः, तैः समस्तवस्तुस्वरूपावलंबनं ज्ञानं जन्यते तत्प्रमाणमित्यपराचार्याणां मतं तत्र परस्परनिरपेक्षाणां नयाभासत्वञ्च दर्शितम् । १५७ ७

४५४. अत्र पक्षद्वयप्रविभागो विविच्य दर्शितः प्रमाणवाक्यलक्षणञ्चावेदितम् । १५८ १

४५५. नयदुर्णयलक्षणविभागो दर्शितः, लौकिकलोकोत्तरप्रामाण्याप्रामाण्याभ्याञ्च नयस्योभयरूपत्वाभिप्रायेण " णिययवयणिज्ज सच्चा " इत्यादि प्रतिपाद्यत इति च । १५९ २

४५६. नयस्यानुभवरूपत्वमभिप्रेत्य नयोपदेशे " अयं न संशयः कोटे " रिति पद्यद्वयं मया यशोविजयेनोक्तमिति दर्शितम् । १६० १

४५७. अयं न संशय इति पद्यद्वयस्यार्थो भावश्च दर्शितः । १६० ६

४५८. भ्रमप्रमासंशयसमुच्चयव्यावृत्तस्य नयज्ञानस्य कथम् शब्दप्रमाणान्वयव्यतिरेकानुविधायित्वमिति प्रश्नस्य प्रतिविधानम् । १६१ १

४५९. स्वनिमित्तापेक्षयाऽनंतधर्मात्मकत्वप्रतिपत्तिविशिष्टे एकधर्मावधारण एव नयत्वं न त्वेकधर्मावधारणमात्रे, किन्तु तत्र दुर्नयत्वमेव, प्रमिणोमि नयामीत्यनुभवसाक्षिको विषयताविशेषः प्रमाणनयभेदक इति दर्शितम् । १६१ ५

४६०. " निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः । १-७ । " इति सूत्रमवतार्य तद्व्याख्यानस्वरूपं भाष्यमुट्टङ्कितम् । १६२-१२

४६१. निरुक्तभाष्यार्थस्पष्टीकरणम् । १६३ १

४६२. निर्देशादीनामनुयोगद्वाराणा भावना, तत्र उद्देशनिर्देशयोर्लक्षणभेदकथनं, जीवे निर्देशलक्षणसमन्वयश्च द्रव्यनय-पर्यायनयतदुभयावलंबनेन विवेकः । १६३ ५

४६३. जीवे स्वामित्वादिकं न दर्शितवान् भाष्यकारः, उपाध्यायस्तु जीवो यस्य स्वामी जीवस्य ये प्रभवस्तदुभयं दर्शितम् । १६५ ४

४६४. साधनं निरुच्य तत्संगमनं जीवे भावितम् । १६५ ८

४६५. 'जीवो गुणपडिवन्नो ' इति गाथार्थो दर्शितः । १६५-१६

४६६. आधारस्थितिविधानानि क्रमेण निरुच्य जीवे भावितानि । १६६ २

४६७. सम्यग्दर्शनपरीक्षायामित्यादि भाष्यमवतार्य सम्यग्दर्शनपरीक्षणे तन्निर्देशादयो विस्तरतो भाविताः । १६६ ६

४६८. "सत्सङ्ख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च " । १-८ । इति सूत्रमवतार्य तद्विवरणरूपं भाष्यमुट्टङ्कितम् । १७४-२२

४६९. सदाद्यष्टाऽनुयोगद्वारेण सम्यग्दर्शनतत्त्वपरीक्षायामाशङ्कावाक्यरूपतया सम्यग्दर्शनं किमस्ति नास्तीति भाष्यमवतार्य व्याख्यातम् । १७५-११

४७०. अस्तीत्युच्यते इत्युत्तरवाक्यार्थकथनं, तत्रैव सम्यग्दर्शनस्याधारनिष्टङ्कनम् । १७५–१६
४७१. तत्र अजीवेषु सम्यग्दर्शनं नास्ति जीवेषु तु भाज्यमित्यादिभाष्यार्थस्फोरणम् । १७६–१
४७२. विशेषावश्यकभाष्यादिवचनोपदर्शनेन नारकप्रभृतिषु गतिषु चतसृष्वपि पूर्वप्रतिपन्नाः प्रतिपद्यमानाश्च जीवाः सन्तीति मूलग्रंथो व्याख्यातः । १७६–१४
४७३. किं सम्यग्दृष्टिः सम्यग्दर्शनं प्रतिपद्यते मिथ्यादृष्टिर्वेत्यादि प्रश्नस्य निश्चयनयाश्रयणेन व्यवहारनयाश्रयणेन च विभिन्नप्रतिविधानमार्गो दर्शितः, तद्भावना च सिद्धान्तवचनालंबनेन दीपिकायां विहिता । १७८ ३
४७४. सङ्ख्या–क्षेत्र–स्पर्शनद्वारैः सम्यग्दर्शनस्य परिभावनं, तद्विशदीकरणञ्च दीपिकायाम् । १८० ७
४७५. सम्यग्दृष्टिसम्यग्दर्शनयोर्भेद उपपादितः । १८१ २
४७६. कालद्वारेण सम्यग्दर्शनस्य परीक्षणम् । १८१–१०
४७७. अन्तर–भावाल्पबहुत्वद्वारैः सम्यग्दर्शनविवेचनम् । १८२ ३
४७८. ज्ञानस्य पञ्चभेदोपदर्शकं 'मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम् । १–९ ।' इति सूत्रं तद्भाष्यञ्च । १८३ ४
४७९. सूत्रे केवलानीति बहुवचन–ज्ञानमित्येकवचनोपन्यासप्रयोजनमुपदर्शितं टीकायां तद्विवेचनञ्च । १८३ ७
४८०. मतिज्ञानस्य श्रुतज्ञानस्य च लक्षणमुपदर्शितम् । १८४ १
४८१. मूलोक्तमतिज्ञानलक्षणं परिस्कृत्य तत्राव्याप्तिदोषाऽऽपाकरणं, तद्भावार्थमुपदर्श्य श्रुताननुसारित्वे सतीति विशेषणोपादानेन श्रुते मतिलक्षणातिव्याप्तिनिरासश्च । १८४ ३
४८२. श्रुताननुसारित्वे सतीति विशेषणोपादाने मतिज्ञानविशेषेऽव्याप्त्याशङ्काया अपाकरणं तत्र श्रुतनिश्रिताश्रुतनिश्रितमतिज्ञानलक्षणमुपदर्श्य विशेषावश्यकसंवादो दर्शितः । १८४–१४
४८३. मूलोक्तश्रुतज्ञानलक्षणं परिस्कृत्य तत्राव्याप्तिनिरसनम् । १८४–२८
४८४. श्रुतनिश्रितमतिज्ञानादाववधिज्ञानादौ च श्रुतलक्षणातिव्याप्तिनिरसनम् । १८४–३०
४८५. श्रुतज्ञाने शब्दोपरागे कारणभेदो मतभेदेन दर्शितः । १८५– ५
४८६. शाब्दज्ञानात्मकस्य श्रुतज्ञानस्य नातिरिक्तप्रमात्वं, तत्करणस्याप्यनुमानविधयैव प्रामाण्यमिति वैशेषिकाशङ्काया अपाकरणम् । १८५ ९
४८७. रूपिमात्रविषयमवधिज्ञानमित्यवधिज्ञानेऽव्याप्तिदोष आशङ्क्य परिहृतः, तत्रावधिज्ञानभेदोपदर्शनपुरस्सरं तदनुगतलक्षणमुपदर्शितम् । १८५–१७
४८८. भावमनःपर्यायमात्रसाक्षात्कारि मनःपर्यायज्ञानमिति मनःपर्यायज्ञानलक्षणप्रसङ्गे द्रव्यभावभेदेन मनसो द्वैविध्यप्ररूपणेन तल्लक्षणं परीक्षितम् । १८६ ८
४८९. निरुक्तमनःपर्यायज्ञानलक्षणे मात्रपदप्रयोजनं तत्रातिव्याप्त्यादिदोषनिरसनं, मनःपर्यायज्ञानिनो बाह्यवस्तुज्ञानं समस्ति न वेत्यादि बहु विचारितम् । १८७ १९

४९०. ज्ञानांतरासहचरितं सर्वविषयं वा केवलज्ञानमिति केवलज्ञानलक्षणे केवलशब्दार्थ एकः, एकत्वं च ज्ञानांतरासहचरितत्वं सर्वविषयत्वं वाऽभिप्रेत्येति व्यवस्थापितम् । १८८–२८
४९१. " तत्प्रमाणे । १–१० । " इति सूत्रमवतार्य तद्भाष्यमुल्लिख्य तद्विवरणमुपदर्शितं तत्र मत्यादिपञ्चविधमपि ज्ञानं प्रमाणं भूत्वा परोक्षं प्रत्यक्षं चेत्येवं द्वित्वसङ्ख्योपेतमेव भवतीति दर्शितम् । १८९ ३
४९२. इन्द्रियादिनिमित्तसापेक्षज्ञानं परोक्षं, तन्निरपेक्षज्ञानं प्रत्यक्षमिति परोक्षप्रत्यक्षयोर्लक्षणमुपदर्शितम् । १८९ ९
४९३. निरुक्तपरोक्षलक्षणमवतार्येन्द्रियपदेन द्रव्येन्द्रियस्यादिपदेन द्रव्यमनसो ग्रहणं, भावेन्द्रियस्य तत्रापि साक्षात्कारणस्य न ग्रहणमित्यादि चर्चितम् । १८९–१९
४९४. द्विविधेऽपि प्रत्यक्षपरोक्षज्ञाने यः साकारांशः स एव प्रमाणव्यपदेश्यः, तत्र प्राचां वचनं प्रमाणमुपदर्शितम् । १९० १
४९५. सर्वं ज्ञानं प्रत्यक्षमेवेति मतमुपदर्श्य तद्विशुद्धशब्दनयाभिप्रायेणेति संप्रदायविदामित्युद्भाव्य विशुद्धः शब्दनय एवंभूत इति दर्शितम् । १९० ३
४९६. तन्निरपेक्षं प्रत्यक्षमिति प्रत्यक्षलक्षणं परिस्कृत्य सांव्यवहारिकप्रत्यक्षेऽव्याप्त्याशङ्कां तदलक्ष्यतया परिहृत्यावध्यादेः प्रत्यक्षत्वस्यावश्यकत्वं, निश्चयनयतः आत्ममात्रसापेक्षज्ञानत्वं प्रत्यक्षलक्षणं मुख्यवृत्त्येति निष्टङ्कितम् । १९०–१०
४९७. जीवस्याक्षशब्दवाच्यत्वं तत्र विशेषावश्यकभाष्यवचनं, व्यवहारनिश्चयप्रत्यक्षसाधारणमनुगतलक्षणं च दर्शितम् । १९०–२१
४९८. सर्वज्ञानस्य प्रत्यक्षैकरूपत्वे 'अमित्रि मादृशा ज्ञानमिति सिद्धसेनवचनसंवादः, सङ्ग्रहनयाभिप्रायेण प्रत्यक्षत्वस्य जातिरूपत्वेऽपि तस्य सर्वज्ञानवृत्तित्वं, विषयांशे परोक्षत्वं तु कल्पितमेवेति दर्शितम् । १९१ १
४९९. विशेषावश्यकनिर्युक्त्युक्तं " वंजण अत्थ तदुभयं एवंभूओ विसेसेइ " इत्यस्य व्याख्यानं "वंजणमत्थेणत्थं च" इति भाष्यवचनमुपदर्श्य तदर्थ उपदर्शितः । १९१ ७
५००. अमित्रि मादृशामिति सिद्धसेनवचनार्थो दर्शितः । १९१–१९
५०१. विशदाविशदभावेन प्रत्यक्षपरोक्षविषयविभागैकांतस्यायुक्तत्वं, ज्ञानानवच्छेदकतया विषयस्य विशदाविशदभावस्य तुच्छत्वं च दर्शितम् । १९२ १
५०२. वेदान्तिमते सर्वं वस्तु ज्ञाततयाऽज्ञाततया च साक्षिप्रत्यक्षविषय इत्यत्र साक्षिप्रत्यक्षस्य प्ररूपणम् । १९२–१४
५०३. मतिज्ञानश्रुतज्ञानयोः परोक्षत्वप्रतिपादकं ' आद्ये परोक्षम् ' १–११ । इति सूत्रमवतार्य तद्भाष्यमुल्लिखितम् । १९३ ७
५०४. तत्र मतिश्रुतयोर्निमित्तापेक्षत्वेन परोक्षत्वमुपदर्शितं । १९३–१०

५०५. मतिज्ञाने मुख्यतः श्रुतज्ञाने गौणत्वत आद्यत्वं समर्थितम् । १९३–१२
५०६. आद्ये सूत्रक्रमप्रामाण्यात्प्रथमद्वितीये स्यादित्यादिभाष्यं स्पष्टतया विवृतम् । १९४ २
५०७. श्रुतज्ञानं परोक्षं परोपदेशजत्वादित्यनुमाने भागासिद्धाशङ्कोत्थाप्य परिहृता । १९५–३१
५०८. मतिज्ञानं परोक्षं इन्द्रियापेक्षत्वाद्धूमादग्निज्ञानवदित्यनुमाने दृष्टान्तस्य हेतुवैकल्याशङ्कायाः प्रतिविधानम् । १९६ १
५०९. गुणविशेषजन्यतावच्छेदकप्रत्यक्षत्वाभावादप्यस्य परोक्षत्वमिति ग्रन्थस्यावतरणम् । १९६–२९
५१०. "त्वया हि योगजधर्मप्रत्यासत्तेः" इत्यादिग्रन्थस्य भावार्थो दर्शितः । १९७–१०
५११. एतेनेन्द्रियजन्यज्ञानत्वं परोक्षत्वाभावव्याप्यमिति विरुद्धोऽयं हेतुरित्यप्यपास्तमिति मूलग्रन्थार्थो विशिष्य दर्शितः । १९७ २६
५१२. यदि लोकविरोध इन्द्रियजज्ञानस्य परोक्षत्वे तदा मतिश्रुतयोर्नैश्चयिकः परोक्षत्वविधिर्व्यवहारतस्तु प्रत्यक्षत्वमिति दर्शितं, तत्र ' तं समासओ दुविहं पण्णत्तं ' इति नंदीसूत्रं प्रमाणमुक्तम् । १९८ ३
५१३. मतिश्रुतयोः परोक्षत्वविधायकं ' परोक्खं दुविहं पण्णत्तं ' इत्यादि नंदीसूत्रं दर्शितम् । १९८–२६
५१४. इंदियपच्चक्खं च नोइंदियपच्चक्खं चेति सूत्रमधिकृत्य विचारो दर्शितः । १९८–२८
५१५. अत्रैव देवसूरिवचनविशेषावश्यकभाष्याकलङ्कवचनान्युपदर्शितानि । १९९–१६
५१६. इन्द्रियप्रत्यक्षमित्यनेन व्यवहारप्रत्यक्षता भणितेति मूलग्रन्थमधिकृत्य प्रश्नप्रतिविधानाभ्यामेकान्ततः परोक्षस्यैकान्ततः प्रत्यक्षस्योपदर्शनं कृत्वेन्द्रियमनोभवज्ञानस्य नैकान्ततः प्रत्यक्षत्वपरोक्षत्वे, किंतु सांव्यवहारिकप्रत्यक्षत्वमित्यत्र 'एगंतेण परोक्खं' इत्यादिवचनं प्रमाणमुपदर्शितम् । १९९–२९
५१७. मतिश्रुतभिन्नस्यावध्यादिज्ञानत्रयस्य प्रत्यक्षत्वप्रतिपादकं ' प्रत्यक्षमन्यत् १–१२ । ' इति सूत्रं तद्भाष्यञ्चोल्लिखितम् । २०० ४
५१८. निरुक्तभाष्यविवरणं, तत्रावधिमनःपर्यायकेवलभेदात्त्रिविधं प्रत्यक्षमेव भवति, नियमार्थं योगविभागार्थं चायं प्रयत्न इति दर्शितम्, तद्विवेचितञ्च टीकायाम् । २००–१३
५१९. आत्माभिमुखत्वलक्षणमतीन्द्रियत्वं प्रत्यक्षलक्षणं, प्रमाणशब्दे करणे ल्युट्, अर्थे करणव्यपदेशनियामकः शक्तिविशेष इति टीकाकृन्मतेऽरुचिश्च दर्शिता । २०१ ३
५२०. उपयोगेन्द्रियस्यैव प्रमाणत्वमिति देवसूरिप्रभृतीना मतं, प्रमाणशब्दः सम्यग्ज्ञाने रूढ एव, फलं तु यथासम्भवं दोषनिवृत्तिः, केवलं तु स्वयमेव फलमिति दर्शितम् । २०२ २
५२१. तस्मादुपयोगेन्द्रियमेवेत्यादि मूलग्रन्थोऽवतार्य व्याख्यातः । २०२–११
५२२. ज्ञानस्य प्रमाणत्वं स्वार्थसंवित्तेः फलत्वमित्यस्य प्रश्नप्रतिविधानाभ्या निर्णायकं देवसूरीणां पद्यपञ्चकमुपदर्शितम् । २०२–२७
५२३. मतिज्ञानादितो दोषनिवृत्तिरिति तत्फलं, केवलज्ञानं तु स्वयमेव फलमित्यत्र ..

सेनवचनं प्रमाणमुपदर्शितं, व्यक्तीनां बहुत्वेन प्रमाणानीति बहुवचनोक्तिः । २०३ १
५२४. साङ्ख्य नैयायिक–प्रभाकर–भाट्टवेदान्ति–पौराणिकाः त्रि–चतुः–पञ्च–षडष्टप्रमाणानीत्युपगता इति कथं प्रत्यक्षपरोक्षे द्वे एव प्रमाणे इत्याशङ्कापरतया अत्राहेत्यादिभाष्यग्रन्थोऽवतारितः । २०३ ३
५२५. अनुमानादीनां मतिश्रुतयोरन्तर्भूतत्वेन द्वे एव प्रत्यक्ष–परोक्षे प्रमाणे इत्येवमत्रोच्यत इत्यादि समाधानग्रन्थो व्याख्यातः, तत्रानुमानादीनामिन्द्रियार्थसन्निकर्षजन्यत्वमुपपादितम् । २०३ ७
५२६. दोषपंवित्तिर्मतिज्ञानादिति सिद्धसेनपद्यस्यार्थो दर्शितः । २०३–१४
५२७. उक्तार्थसंवादकं " उपेक्षाफलमाद्यस्य " इत्यष्टसहस्री–पद्यमुपदर्श्य व्याख्यातम् । २०३–१८
५२८. विरतेर्ज्ञानफलत्वमुपपादितम् । २०३–२४
५२९. प्रमाणफलोपदर्शकं देवसूरिसूत्रकदम्बकमुपदर्शितम् । २०३–३१
५३०. पराभ्युपगतान्यनुमानादीन्यप्रमाणान्येव मिथ्यादर्शनपरिग्रहादिति पक्षान्तरं भावितम् । २०४ ६
५३१. मिथ्यादृष्टिसम्बन्धिज्ञानस्याज्ञानत्वं कथमिति प्रश्नप्रतिविधानम् । २०४–९
५३२. सम्यग्दृष्टेरप्यनन्तपर्यायात्मकवस्तुन एकपर्यायज्ञानं कथं ज्ञानमिति प्रश्नस्य प्रतिविधानं, तत्र " जे एगं जाणइ से सव्वं जाणइ " इत्यागमवचनोपष्टम्भतः सम्यग्दृष्टेरेकपर्यायज्ञानस्याप्यनन्तपर्यायात्मकवस्त्ववगाहित्वतः प्रामाण्यमुपपादितम् । २०४–११
५३३. मिथ्यादृष्टिसम्बन्धिनो ज्ञानमात्रस्याज्ञानत्वे " निण्णयकाले " इत्यादि विशेषावश्यकभाष्यवचनसंवादो दर्शितः । २०४–२४
५३४. " जे एगं जाणइ " इत्यादिवचनस्य भावार्थो दर्शितः । २०५–१६
५३५. अनुमानादीनां नयवादान्तरेण मतिश्रुतयोरन्तर्भूतत्वमित्युपदर्शकं नयवादान्तरेणेत्यादि भाष्यमवतार्य व्याख्यातम् । २०६ १
५३६. शब्दनये मिथ्यादृष्टिरन्यो वा नास्तीति तन्मते प्रमाणानीत्येव वक्तव्यमिति, सम्यग्दृष्टिसम्बन्धित्वेन प्रमाणान्यनुमानादीनि मतिश्रुतयोरन्तर्भवन्तीति दर्शितम् । २०७ २
५३७. 'मतिः स्मृतिः सञ्ज्ञा चिन्ताऽभिनिबोध इत्यनर्थान्तरम् । १ । १३ ।' इति सूत्रं लक्षणपरतयाऽवतार्य तद्भाष्यं तद्विवरणञ्च दर्शितम् । २०७ ६
५३८. अवतरणिकासङ्क्रमनं कृतम् । २०७ २४
५३९. मतिज्ञानस्मृतिज्ञानयोर्लक्षणं, स्मृतिलक्षणेऽव्याप्त्यतिव्याप्तिदोषपरिहारश्च । २०८ ५
५४०. सञ्ज्ञाज्ञानं प्रत्यभिज्ञानं तल्लक्षणमुपदर्शितम् । २०८ ९
५४१. प्रत्यभिज्ञानस्य तिर्यगूर्ध्वतासामान्यविषयकत्वं सङ्क्रमितम् । २०८–२१
५४२. चिन्ताज्ञानलक्षणमाभिनिबोधिकज्ञानलक्षणञ्च दर्शितम् । २०९ १
५४३. योग्यसाक्षात्कार इत्यस्य विवरणे योग्यता सम्यग्विचारिता । २०९–१०

५४४. मतिज्ञानद्वैविध्यप्रतिपादकं " तदिन्द्रियानिन्द्रियनिमित्तम् ।१।१४।। " इति सूत्रं तद्भाष्यं तद्विवरणञ्च । २१० २

५४५. तत्र इन्द्रियनिमित्तस्य स्पर्शनादिभेदेन पञ्चविधत्वं, अनिन्द्रियनिमित्तस्य मनोवृत्त्योघज्ञानभेदेन द्वैविध्यमुपदर्शितम् । २१० ५

५४६. एतत्स्पष्टीकरणं दीपिकायां, तत्रैव मनसोऽनिन्द्रियत्वं व्यवस्थापितम् । २१०–१४

५४७. आद्यज्ञाननिदर्शनमुपदर्श्याऽमनस्कानामेकेन्द्रियाद्यसंज्ञिपञ्चेन्द्रियपर्यन्तानामिन्द्रियनिमित्तमेव मतिज्ञानं, समनस्कानां चक्षुरादिव्यापाराभावेऽनिन्द्रियनिमित्तं स्मृतिज्ञानं, जाग्रदवस्थायामिन्द्रियानिन्द्रियनिमित्तं, ओघज्ञानञ्चैकेन्द्रियादीनामिति विभागस्तान्त्रिकसम्मत इति चोपदर्श्येन्द्रियमनस्तदुभयजन्यतावच्छेदकौघजन्यतावच्छेदकान्युपदर्शितानि । २११ १

५४८. वल्ल्यादीनामोघज्ञानं, तत्र विशेषावश्यकभाष्यवचनं द्रव्यलोकप्रकाशवचनं च संवादकम् । २११–१६

५४९. उभयविधमतिज्ञानभेदोपदर्शकं ' अवग्रहेहापायधारणाः । २१२।१।१५।' इति सूत्रं तद्भाष्यं तद्विवरणञ्च । २१२ ४

५५०. अवग्रहादीनां चतुर्णां स्पर्शनादीन्द्रियानिन्द्रियमनःप्रभवाणां चतुर्विंशतिर्भेदाः, तत्र व्यञ्जनावग्रहार्थावग्रहभेदेनावग्रहो द्विविधः चक्षुर्मनसोर्व्यञ्जनावग्रहो न भवतीति चतुर्णां व्यञ्जनावग्रहाणां तत्र प्रवेशेऽष्टाविंशतिर्भेदा इत्याद्युपदर्शितम् । २१२–२२

५५१. अवग्रहादीनां पार्थक्ये क्रमोत्पादे च मानमुपदर्शितम् । २१२–२३

५५२. अवग्रहस्वरूपमुपदर्शितम् । २१३ २

५५३. अवग्रहेहाऽभावेऽप्यभ्यस्ते विषये प्रथमत एवावायोत्पत्तिः, अवग्रहादित्रयं विनैव प्रवुद्धसंस्कारात् स्मृत्युत्पत्तिश्चेति प्रश्नप्रतिविधानं विस्तरतः । २१३–१६

५५४. व्यञ्जनावग्रहार्थावग्रहभेदेनावग्रहस्य द्वैविध्यं, तत्र व्यञ्जनावग्रहप्ररूपणं तस्य ज्ञानत्वमुपपादितम् । २१४–२

५५५. व्यञ्जनावग्रहान्त्यसमयेऽर्थावग्रह इति निर्णीय तस्यानिर्देश्यसामान्यमात्रग्राहित्वं व्यवस्थापितम् । २१६ ३

५५६. तेन शब्द इत्यवगृहीत इति नन्दिसूत्रे वक्त्रा तथोक्तम्, न त्वशब्दव्यावृत्तशब्द इति प्रथमावग्रहाऽपेक्षयोक्तम् । २१७ १

५५७. टीकायामेतद्विचारो विस्तरतः प्रदर्शितः । २१७ ४

५५८. शब्द इत्याकारकज्ञानजनकेहाद्यर्थं व्यञ्जनावग्रह एवाश्रयणीयो नार्थावग्रह इत्यस्य निराकरणम् । २१८ १

५५९. एतत्स्पष्टीकरणं टीकायाम् । २१८–११

५६०. प्रत्यक्षमात्र एव विशेषदर्शनविधयेहाया हेतुत्वं, तेन बालस्याद्यसमये सामान्यज्ञानं, परिचितविषयस्य त्वाद्यशब्दश्रवणसमय एव विशेषनिश्चय इति खण्डितम् । २१९ १

सेनवचनं प्रमाणमुपदर्शितं, व्यक्तीनां बहुत्वेन प्रमाणानीति बहुवचनोक्तिः । २०३ १

५२४. साङ्ख्य-नैयायिक-प्रभाकर-भाट्टवेदान्ति-पौराणिकाः त्रि-चतुः-पञ्च-षडष्टप्रमाणानीत्युपगता इति कथं प्रत्यक्षपरोक्षे द्वे एव प्रमाणे इत्याशङ्कापरतया अत्राहेत्यादिभाष्यग्रन्थोऽवतारितः । २०३ ३

५२५. अनुमानादीनां मतिश्रुतयोरन्तर्भूतत्वेन द्वे एव प्रत्यक्ष-परोक्षे प्रमाणे इत्येवमत्रोच्यत इत्यादि समाधानग्रन्थो व्याख्यातः, तत्रानुमानादीनामिन्द्रियार्थसन्निकर्षजन्यत्वमुपपादितम् । २०३ ७

५२६. दोषपंक्तिर्मतिज्ञानादिति सिद्धसेनपद्यस्यार्थो दर्शितः । २०३-१४

५२७. उक्तार्थसंवादकं "उपेक्षाफलमाद्यस्य" इत्यष्टसहस्री-पद्यमुपदर्श्य व्याख्यातम् । २०३-१८

५२८. विरतेर्ज्ञानफलत्वमुपपादितम् । २०३-२४

५२९. प्रमाणफलोपदर्शकं देवसूरिसूत्रकदम्बकमुपदर्शितम् । २०३-३१

५३०. पराभ्युपगतान्यनुमानादीन्यप्रमाणान्येव मिथ्यादर्शनपरिग्रहादिति पक्षान्तरं भावितम् । २०४ ६

५३१. मिथ्यादृष्टिसम्बन्धिज्ञानस्याज्ञानत्वं कथमिति प्रश्नप्रतिविधानम् । २०४-९

५३२. सम्यग्दृष्टेरप्यनन्तपर्यायात्मकवस्तुन एकपर्यायज्ञानं कथं ज्ञानमिति प्रश्नस्य प्रतिविधानं, तत्र "जे एगं जाणइ से सव्वं जाणइ" इत्यागमवचनोपष्टम्भतः सम्यग्दृष्टेरेकपर्यायज्ञानस्याप्यनन्तपर्यायात्मकवस्त्ववगाहित्वतः प्रामाण्यमुपपादितम् । २०४-११

५३३. मिथ्यादृष्टिसम्बन्धिनो ज्ञानमात्रस्याज्ञानत्वे "निण्णयकाले" इत्यादि विशेषावश्यकभाष्यवचनसंवादो दर्शितः । २०४-२४

५३४. "जे एगं जाणइ" इत्यादिवचनस्य भावार्थो दर्शितः । २०५-१६

५३५. अनुमानादीनां नयवादान्तरेण मतिश्रुतयोरन्तर्भूतत्वमित्युपदर्शकं नयवादान्तरेणेत्यादि भाष्यमवतार्य व्याख्यातम् । २०६ १

५३६. शब्दनये मिथ्यादृष्टिरन्यो वा नास्तीति तन्मते प्रमाणानीत्येव वक्तव्यमिति, सम्यग्दृष्टिसम्बन्धित्वेन प्रमाणान्यनुमानादीनि मतिश्रुतयोरन्तर्भवन्तीति दर्शितम् । २०७ ३

५३७. 'मतिः स्मृतिः सञ्ज्ञा चिन्ताऽभिनिबोध इत्यनर्थान्तरम् । १ । १३ ।' इति सूत्रं लक्षणपरतयाऽवतार्य तद्भाष्यं तद्विवरणञ्च दर्शितम् । २०७ ६

५३८. अवतरणिकासङ्गमनं कृतम् । २०७-१४

५३९. मतिज्ञानस्मृतिज्ञानयोर्लक्षणं, स्मृतिलक्षणेऽव्याप्त्यतिव्याप्तिदोषपरिहारश्च । २०८ ५

५४०. सञ्ज्ञाज्ञानं प्रत्यभिज्ञानं तल्लक्षणमुपदर्शितम् । २०८ ९

५४१. प्रत्यभिज्ञानस्य तिर्यगूर्ध्वतासामान्यविषयकत्वं सङ्गमितम् । २०८-२३

५४२. चिन्ताज्ञानलक्षणमाभिनिबोधिकज्ञानलक्षणञ्च दर्शितम् । २०९ १

५४३. योग्यसाक्षात्कार इत्यस्य विवरणे योग्यता सम्यग्विचारिता । २०९-१०

५४४. मतिज्ञानद्वैविध्यप्रतिपादकं " तदिन्द्रियानिन्द्रियनिमित्तम् ।१।१४। " इति सूत्रं तद्भाष्यं तद्विवरणञ्च । २१० २

५४५. तत्र इन्द्रियनिमित्तस्य स्पर्शनादिभेदेन पञ्चविधत्वं, अनिन्द्रियनिमित्तस्य मनोवृत्त्योघज्ञानभेदेन द्वैविध्यमुपदर्शितम् । २१० ५

५४६. एतत्स्पष्टीकरणं दीपिकायां, तत्रैव मनसोऽनिन्द्रियत्वं व्यवस्थापितम् । २१०–१४

५४७. आद्यज्ञाननिदर्शनमुपदर्श्याऽमनस्कानामेकेन्द्रियाद्यसंज्ञिपञ्चेन्द्रियपर्यन्तानामिन्द्रियनिमित्तमेव मतिज्ञानं, समनस्कानां चक्षुरादिव्यापाराभावेऽनिन्द्रियनिमित्तं स्मृतिज्ञानं, जाग्रदवस्थायामिन्द्रियानिन्द्रियनिमित्तं, ओघज्ञानञ्चैकेन्द्रियादीनामिति विभागस्तान्त्रिकसम्मत इति चोपदर्श्येन्द्रियमनस्तदुभयजन्यतावच्छेदकोघजन्यतावच्छेदकान्युपदर्शितानि । २११ १

५४८. वल्ल्यादीनामोघज्ञानं, तत्र विशेषावश्यकभाष्यवचनं द्रव्यलोकप्रकाशवचनं च संवादकम् । २११–१६

५४९. उभयविधमतिज्ञानभेदोपदर्शकं ' अवग्रहेहापायधारणाः । २१२।१।१५।' इति सूत्रं तद्भाष्यं तद्विवरणञ्च । २१२ ४

५५०. अवग्रहादीनां चतुर्णां स्पर्शनादीन्द्रियानिन्द्रियमनःप्रभवाणां चतुर्विंशतिर्भेदाः, तत्र व्यञ्जनावग्रहार्थावग्रहभेदेनावग्रहो द्विविधः चक्षुर्मनसोर्व्यञ्जनावग्रहो न भवतीति चतुर्णां व्यञ्जनावग्रहाणां तत्र प्रवेशेऽष्टाविंशतिर्भेदा इत्याद्युपदर्शितम् । २१२–२२

५५१. अवग्रहादीनां पार्थक्ये क्रमोत्पादे च मानमुपदर्शितम् । २१२–३३

५५२. अवग्रहस्वरूपमुपदर्शितम् । २१३ २

५५३. अवग्रहेहाऽभावेऽप्यभ्यस्ते विषये प्रथमत एवावायोत्पत्तिः, अवग्रहादित्रयं विनैव प्रबुद्धसंस्कारात् स्मृत्युत्पत्तिश्चेति प्रश्नप्रतिविधानं विस्तरतः । २१३–१६

५५४. व्यञ्जनावग्रहार्थावग्रहभेदेनावग्रहस्य द्वैविध्यं, तत्र व्यञ्जनावग्रहप्ररूपणं तस्य ज्ञानत्वमुपपादितम् । २१४–२

५५५. व्यञ्जनावग्रहान्त्यसमयेऽर्थावग्रह इति निर्णीय तस्यानिर्देश्यसामान्यमात्रग्राहित्वं व्यवस्थापितम् । २१६ ३

५५६. तेन शब्द इत्यवगृहीत इति नन्दिसूत्रे वक्त्रा तथोक्तम्, न त्वशब्दव्यावृत्तशब्द इति प्रथमावग्रहाऽपेक्षयोक्तम् । २१७ १

५५७. टीकायामेतद्विचारो विस्तरतः प्रदर्शितः । २१७ ४

५५८. शब्द इत्याकारकज्ञानजनकेहाद्यर्थं व्यञ्जनावग्रह एवाश्रयणीयो नार्थावग्रह इत्यस्य निराकरणम् । २१८ १

५५९. एतत्स्पष्टीकरणं टीकायाम् । २१८–११

५६०. प्रत्यक्षमात्र एव विशेषदर्शनविषयेहाया हेतुत्वं, तेन बालस्याद्यसमये सामान्यज्ञानं, परिचितविषयस्य त्वाद्यशब्दश्रवणसमय एव विशेषनिश्चय इति खण्डितम् । २ ९

५६१. तथापि क्रमसंगयोत्तरत्वं परित्यज्येत्यादि मूलग्रन्थोऽवतार्य व्याख्यातः। २१९ ५

५६२. आलोचनज्ञानानंतरमर्थावग्रह इति मतमपाकृत्य रूपाद्यव्यावृत्तशब्दसामान्यविषय एवार्थावग्रहो न तु शब्द इत्याकार इत्युपसंहृतम्। २२० १

५६३. शब्द इति त्वौपचारिकोऽर्थावग्रहः, सर्वत्रोत्तरोत्तरविशेषाकाङ्क्षायां पूर्वपूर्वापायस्यौपचारिकावग्रहत्वेनाश्रयणान्नैश्चयिकावग्रहापाययोः पूर्वोत्तरतारतम्यवदवध्यभाव एव विश्रान्तेः २२१ १

५६४. उक्तार्थे संवादकस्य 'सव्वत्थेहावाया' इति विशेषावश्यकभाष्यगाथाद्वयस्यार्थो विवृतः। २२१–१७

५६५. ईहास्वरूपोपदर्शक 'अवगृहीते' त्यादिभाष्यार्थविवरणम्। २२२ १

५६६. जिज्ञासारूपत्वादीहाया न संशयरूपत्वम्। २२२ ७

५६७. 'इय सामण्णगाहणा' इति विशेषावश्यकोक्तेहालक्षणमुपदर्शितम्। २२२–१५

५६८. ईहाया इच्छारूपत्वेऽपि ज्ञानत्वं न विरुद्धं, तस्या ज्ञानविशेषरूपत्वात्, ईहाया ज्ञानाऽवच्छिन्नार्थविषयकेच्छारूपत्वेन जिज्ञासारूपत्वमप्यविरुद्धम्, तस्याः प्रत्यक्षजनकत्वे दोषस्य परिहारः, अस्या दीर्घोपयोगरूपत्वेनानेकज्ञानपर्यायैः समन्वयः, विशेषदर्शनरूपत्वेन न सर्वत्र निश्चये उपयोग इति शंकानिरासश्च। २२३ १

५६९. अवग्रहानन्तरं संशयसद्भावेऽपि तदनन्तरमीहासम्भवः, तस्याः संशयनिश्चयाभ्यां वैलक्षण्यम्, उत्कटकोटिकसंशयरूपत्वाशङ्कायाः परिहारश्च। २२४ ३

५७०. पर्यायशब्दैरीहाव्याख्यानरूपम् 'ईहा ऊह' इत्यादिभाष्यमवतार्यापायनिरूपणरूपमवगृहीतेत्यादिभाष्यमवतारितम्। २२५ २

५७१. टीकाकृता संशयेहयोर्लक्षणभेदं स्वयमुपदर्श्य तत्र भाष्यवचनसंवादस्तदर्थश्चोपदर्शितः। २२५–१२

५७२. अपायशब्दव्युत्पत्त्यागतमपायलक्षणमुपदर्श्य तत्पर्यायोपदर्शनम्। २२६ १

५७३. व्युत्पत्तिविशेषभ्रान्तानां केषाञ्चित् 'असद्भूतार्थविशेषापनयनमपायः' सद्भूतविशेषावधारणं धारणा' इति लक्षणकथनमयुक्तमिति दर्शितम्। २२६- ७

५७४. 'महुराइगुणत्तणओ' इति भाष्यवचनं तदर्थश्च दर्शितः। २२६–१३

५७५. अत्र केचिदित्यादि मूलग्रन्थमवतार्य तदुपदर्शितापायधारणालक्षणवाक्यार्थो व्याख्यातः। २२६–२३

५७६. धारणानिरूपणं तद्भेदोपवर्णनं, तत्र प्रथम–द्वितीय–तृतीयभेदस्फोरणम्। २२७ २

५७७. धारणापर्यायाणामुपदर्शनं, तत्स्फुटीकरणञ्च। २२८ ३

५७८. नास्ति धारणाऽऽख्यो ज्ञानस्य कश्चिद्भेद इति प्रश्नस्य युक्त्योपपादितस्य प्रतिविधानम्। २२८ ७

५७९. तत्रैवापायाप्रच्युति वासना–स्मृतिलक्षणापायाधिकज्ञानस्वरूपधारणाव्यवस्थापनम्। २२९ ५

५८०. बहुबहुविधेत्यादि षोडशसूत्रावतरणरूपं। 'अवग्रहेत्यादीनाम्' इति विवरणमवतार्य व्याख्यातम्। २३० ७

५८१. 'बहुबहुविधक्षिप्रानिश्रितसन्दिग्धध्रुवाणां सेतराणाम्' '१–१६।' इति सूत्रं तद्भाष्यञ्च। २३०–१४

५८२. विवरणे वहोरवग्रहो वहुमवगृह्णातीत्यनयोरर्थभेदः प्रश्नपूर्वकप्रतिविधानत उपदर्शितः। २३०-२२
५८३. स्पर्शनावग्रहो यथा वहुमवगृह्णाति तथा निदर्शनेन स्पष्टीकृतम् । २३०-२५
५८४. वह्वऽवग्रहादिभेदप्रदर्शनं व्यावहारिकावग्रहमाश्रित्य, न तु नैश्चयिकावग्रहमाश्रित्येति भावितं प्रश्नप्रतिविधानाभ्याम् । २३१ २
५८५. स्पर्शनाऽवग्रहमाश्रित्यैवाल्पावग्रहादिभेदा विभाविताः । २३१ ६
५८६. कोलाहलप्रत्यक्षस्यावहुमध्ये एकविधमध्ये वाऽन्तर्भावो दर्शितः । २३२ २
५८७. स्पर्शनाऽवग्रहमाश्रित्य च क्षिप्रावग्रहादिभेदा भाविताः । २३२-११
५८८. उक्तावग्रहानुक्तावग्रहविकल्पत्यागे वीजमुपदर्शितम् । २३३ ३
५८९. निश्रितानिश्रितावग्रहप्ररूपणे "निस्सिए विसेसो वा" इति भाष्यवचनसम्वादो दर्शितः। २३३ ९
५९०. निश्रितावग्रहानिश्रितावग्रहयोः प्ररूपणम् । २३३-१२
५९१. ध्रुवाध्रुवावग्रहयोः प्ररूपणम्, प्रश्नप्रतिविधानाभ्यामध्रुवत्वस्वरूपनिष्टङ्कनम् । २३४ ३
५९२. वह्वादिभेदा अवग्रहोपदर्शितदिशैवेहादिष्वपि भावनीयाः । २३५ १
५९३. (सूत्र० १७) 'अर्थस्य' इति सप्तदशसूत्रमवग्रहादयो मतिज्ञानभेदा अर्थस्य भवन्तीत्येतत्परं चर्चितम् । २३५ ४
५९४. शङ्कासमाधानमुखेन स्पर्शादिग्राहकाणामवग्रहादीनां द्रव्यग्राहकत्वं व्यवस्थापितम् । २३५ ७
५९५. पर्यायग्रहणे द्रव्यग्रहणस्यावश्यकत्वादित्यस्य व्याख्याने पर्यायद्रव्ययोरविनाभावो गुणपर्यायवद् द्रव्यमिति द्रव्यलक्षणसङ्गमनं, निर्गुणमेव द्रव्यमुत्पद्यत इति सिद्धान्तप्रवणन्यायमतखण्डनञ्च । २३५-२१
५९६. चक्षुस्त्वग्मनांसि द्रव्यग्राहकाणि इतराणीन्द्रियाणि द्रव्याग्राहकाणीति नैयायिकमतस्यातिदेशेन निराकरणम् । २३६ ३
५९७. वद्धस्पृष्टताभिमुख्यस्पृष्टताः प्रत्यासत्तयो द्रव्यद्वारैव पर्यायेष्वित्युभयग्रहणमित्यस्योपपादनं, तत्र 'पुट्ठं सुणेइ सद्दं' इति विशेषावश्यकनिर्युक्तिवचनसंवादः । २३६-२६
५९८. (सूत्र० १८) अवग्रहभेदस्य व्यञ्जनावग्रहाख्यस्य प्रतिपादकं 'व्यञ्जनस्यावग्रहः' इत्यष्टादशसूत्रम् । २३७ ३
५९९. व्यञ्जनावग्रहस्य स्वरूपमुपवर्ण्यार्थावग्रहतो मलीमसत्वं तस्य व्यवस्थापितम् । २३७ ७
६००. व्यञ्जनस्यावग्रह एव भवति न त्वीहावायधारणा भवन्तीति दर्शितम् । २३७-१०
६०१. (सूत्र० १९) चक्षुर्मनोभ्यां व्यञ्जनावग्रहो न भवतीत्युपदर्शकं "न चक्षुरनिन्द्रियाभ्याम्" इत्येकोनविंशतितमसूत्रम् । २३८ ६
६०२. मतिज्ञानस्य यावद्भेदोपदर्शनपुरस्सरं निगमनम् । २३८ ८
६०३. उक्तसूत्रभाष्यस्य प्राचां व्याख्यानं न युक्तमिति तदुपदर्शनपुरस्सरं दर्शितम् । २३८-१०
६०४. इन्द्रियचतुष्टयस्य प्राप्यकारित्वाद् व्यञ्जनावग्रहः सम्भवति, न तु चक्षुर्मनसोरित्युपपादितम् । २३९ १

६०५. चक्षुर्मनसोरप्राप्यकारित्वसाधकमनुमानमुपदर्शितम् । २३९ २

६०६. चक्षुषः प्राप्यकारित्वाभावसाधकानुमानापाकरणं नैयायिकाभिमतमुपन्यस्य निराकृतम्, अन्यदपि तदुपोद्बलकं व्युदस्तं विस्तरतः । २३९ ६

६०७. मनसोऽप्राप्यकारित्वस्य समर्थनम्, तत्र मनसः प्राप्यकारित्वसाधकस्य पराभिमतयुक्तिनिकुरुम्बस्याऽपाकरणञ्च । २४१ ३

६०८. मतिज्ञानस्य द्विविधत्व–चतुर्विधत्वाष्टाविंशतिविधत्वाऽष्टचत्वारिंशदुत्तरशतविधत्व–षट्त्रिंशत्त्रिशतभेदत्वानि सम्यगुदर्शितानि । २४२ ३

६०९. स्वप्नज्ञानादिस्थले चिन्ताद्याऽऽरूढानां पदार्थानां मनसा मानस्य निमित्तमुपदर्शितम् । २४२–१७

६१०. ( सूत्र २० ) श्रुतज्ञानलक्षणोपदर्शकं 'श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम्' इति विंशतितमसूत्रं तद्भाष्यञ्च । २४२–२७

६११. सूत्रे लक्ष्य लक्षण–विधानांशा दर्शिताः । २४३–१८

६१२. श्रुतमित्यनेन ज्ञानस्यैव ग्रहणं न शब्दस्य, मतिज्ञानपूर्वकमित्यनेन पर्यवसितं तल्लक्षणञ्च दर्शितम्, अत्र मतिविशेषग्रहणञ्च । २४३ १९

६१३. श्रुते मतिज्ञानमपेक्षाकारणमेव न समवायिकारणम्, मतिज्ञानमेव कस्मान्न श्रुतज्ञानरूपेण परिणमते इत्याकाङ्क्षाव्युदसनम् तत्र 'जत्थ मई' इत्यागमसंवादः । २४४ १

६१४. श्रुतमाप्तवचनम्, आगमः, उपदेशः, ऐतिह्यम्, आम्नायः, प्रवचनम्, जिनवचनमित्यनर्थान्तरमिति भाष्यस्य प्रत्येकपदार्थविवेचनेन सङ्गमनम् । २४४ ५

६१५. द्व्यनेकद्वादशभेदमित्यस्य प्राचां व्याख्यानं न सुसङ्गतमित्युपपाद्य स्वव्याख्यानमुपदर्शितम् । २४५ १

६१६. अङ्गबाह्याङ्गप्रविष्टयोर्मूलभेदयोः स्पष्टीकरणम् । २४६ १

६१७. सामायिकं चतुर्विंशतिस्तव इत्यादीनामृषिभाषितपर्यन्तानामङ्गबाह्यानां पार्थक्येन स्वरूपाणि लक्षितानि । २४६ ३

६१८. आचारः सूत्रकृतमित्यादिद्वादशविधानामङ्गप्रविष्टानां लक्षणान्युपदर्शितानि । २४६–१२

६१९. मतिश्रुतयोर्विशेष उपदर्शितः । २४७ ३

६२०. श्रुतज्ञानस्य द्विविधत्वमनेकविधत्वं द्वादशविधत्वञ्च यैरुपाधिभिस्ते उपाधयः प्रश्नोत्तराभ्यां भाष्ये दर्शिताः, तत्सङ्गमना यशोविजयोपाध्यायैः कृता । २४७ ६

६२१. भगवच्छब्दप्रवृत्तिनिमित्तोपदर्शिका 'ईसरियरूवेत्यादिमहाभाष्यगाथा ऐश्वर्यादिमद्भिरित्यस्यावतरणे दर्शिता । २४७ १३

६२२. सर्वज्ञैरित्यस्य विवरणस्य सर्वद्रव्यपर्यायान् जानन्ति विशेषतस्तैरित्यस्यावतरणे प्रतिक्षेप्यस्य बौद्धाद्यभ्युपगतसर्वज्ञस्योपवर्णने 'सर्वं पश्यतु वा मा वा'' इत्यादिपद्यानामुपनिबन्धनम् । २४७ १७

६२३. भाष्योक्तानां परमर्षिभिरित्यादीनां स्पष्टीकरणम् । २४८ १

६२४. तत्त्वाभाव्यादिति भाष्यविवरणे 'हेतुभूतिनिषेधो न' इत्युदयनकारिकोपदर्शिता । २४८ ५
६२५. हेतुभूतिनिषेधो नेति कारिकाव्याख्यानम् । २४८–२३
६२६. परमशुभस्येत्यादेर्भाष्यवचनस्य विवरणम् । २४९ २
६२७. गणधरानन्तर्यादिभिरित्यादितदङ्गबाह्यमित्यन्तभाष्यवचनस्य विवरणम् । २४९ ७
६२८. तीर्थकरनामकर्मणोऽनुभावादित्यस्य व्याख्याने संवादकतया 'तित्थयरो किं कारणम्' इत्यादि विशेषावश्यकवचनं दर्शितम् । २४९–१९
६२९. अतिशयवद्भिरित्यादेरवतरणे 'पहूणं भंते' इत्यादि परमर्षिवचनं दर्शितम् । २४९–२१
६३०. "बुद्धिश्च बीजकोष्ठादिका" इत्यस्य व्याख्याने बीजबुद्धिकोष्ठबुद्धी उपवर्णिते । २४९–२४
६३१. सर्वज्ञप्रणीतत्वादानन्त्याच्च ज्ञेयस्य श्रुतज्ञानं मतिज्ञानात्महाविषयमित्यादिभाष्यार्थो स्पष्टीकृत्य दर्शितः । २५० ३
६३२. अङ्गोपाङ्गनानात्वे हेत्वन्तरोपदर्शकस्य "किञ्चान्यत् सुखग्रहणधारणविज्ञानापोहप्रयोगार्थञ्चेत्यादिभाष्यस्य विवरणम् । २५० ६
६३३. मतिश्रुतयोस्तुल्यविषयत्वे एकत्वमेवास्त्विति शङ्कासमाधानपरस्य 'अत्राह मतिश्रुतयो'-रित्यादिभाष्यस्य विवरणम् । २५०–१७
६३४. त्रिकालविषयत्वस्य श्रुतज्ञानेऽव्याप्तिं मतिज्ञाने चातिव्याप्तिमाशङ्कय तत्प्रतिविधानमुपदर्शितम् । २५१ २
६३५. उप्पज्जमाणकालमिति सम्मतिगाथाया विवरणोल्लिखिताया अर्थ उपदर्शितः । २५१ ८
६३६. 'संखाइए वि भवे' इत्यादिगाथाया अर्थो दर्शितः । २५१–२६
६३७. मतिश्रुतयोः कारणभेदाद् भेदस्योपदर्शकस्य 'किञ्चान्यत् मतिज्ञानमिन्द्रियानिन्द्रियनिमित्तम्' इत्यादिभाष्यस्य व्याख्यानम् । २५२ ३
६३८. लक्षणभेदादिना मतिश्रुतभेदोपदर्शकस्य जिनभद्रगणिक्षमाश्रमणमतस्योपपादनपुरस्सरमुपदर्शनम् । २५२ ८
६३९. तत्र मतिश्रुतयोर्लक्षणभेदस्य प्रतिपादनम् । २५२–१०
६४०. मतिश्रुतयोर्हेतुफलभावाद् भेदस्य प्रतिपादनम् । २५५ २
६४१. भेदभेदात् मतिश्रुतयोर्भेदो दर्शितः, एवमिन्द्रियभेदादपि । २५७ ७
६४२. गन्धे रूपप्रागभावस्यैवैकस्यान्यथासिद्धिरपि तुल्यैवेत्यस्याभिप्रायोऽवतरणेन स्पष्टीकृतः । २५७–११
६४३. वल्कसुम्बोदाहरणेन मतिश्रुतयोर्भेदो भावितः, तत्रान्येषामाचार्याणां वल्कसुम्बोदाहरणसङ्गमना निराकृता । २५८ ३
६४४. भावद्रव्यश्रुतयोर्भेद एव वल्कसुम्बोदाहरणसमनुगमनमिति केषाञ्चिन्मतमपि दूषितम् । २५८ ८
६४५. वल्कसुम्बोदाहरणेन भेद इति ग्रन्थाभिप्रायः प्रश्नप्रतिविधानाभ्यामावेदितः । २५८–१९
६४६. अतिदेशेन वल्कसुम्बोदाहरणव्याख्यानान्तरमपि खण्डितम् । २५९ १

६४७. अक्षरानक्षराभ्यां मतिश्रुतयोर्भेदो भावितः, तत्राक्षरस्य द्रव्याक्षरभावाक्षरभेदेन द्वैविध्यं विचारितम् । २५९ ५
६४८. मतिज्ञानमनक्षरं श्रुतज्ञानं चाक्षरवदनक्षरवच्चेति केषाञ्चिद्व्याख्यानमपाकृतम् । २६१ १
६४९. मूकेतरभावात् मतिश्रुतयोर्भेद उपपादितः । २६२ ४
६५०. विवरणकृता स्वकृतमतिश्रुतभेदविचारस्योपादेयत्वाभिव्यक्त्यर्थकं पद्यमुपनिबद्धम् । २६४ ३
६५१. गुरुवरविजयनेमिसूरिसेवाप्रभावतो दर्शनसूरिकृतेयं विवृतिर्विज्ञैर्विशोध्य वाच्यमानाऽऽनन्ददाऽस्त्वित्यर्थकं पद्ययुगलम् । २६४–१६
६५२. ( सूत्र० २१ ) अवधिनिरूपणप्रवणं " द्विविधोऽवधिः " इत्येकविंशतितमसूत्रम् । २६४–२२
६५३. अवधेर्भवप्रत्यय–क्षयोपशमनिमित्तभेदेन द्वैविध्योपदर्शकं भाष्यम् । २६४–२३
६५४. लक्षणे पृष्टे भेदकथनस्यान्याय्यत्वमित्याशङ्काया निरासः । २६४–२५
६५५. भवप्रत्यय इत्यस्य बहुव्रीहिणा देवनारकावधिज्ञानस्वरूपोपदर्शकत्वमभिहितम् । २६४–२६
६५६. भवप्रत्ययस्याप्यवधेः क्षयोपशम एव मुख्यं कारणमित्युपपाद्याऽशुद्धनयमते भवः कारणकारणत्वात्कारणमिति तस्य भवप्रत्ययतेति दर्शितम् । २६५ १
६५७. शुद्धनयमते भवस्य कारणत्वाभावाद् भवप्रत्ययो नावधिः, दण्डादेरपि तन्मते न घटकारणत्वम्, इष्टप्रयोजकत्वज्ञानादेव तत्र प्रवृत्तिः, प्रपञ्चितश्चैतदस्माभिरध्यात्ममतपरीक्षादाविति दर्शितम् । २६५ ३
६५८. अवधिः क्षयोपशमनिमित्तो यथा तथा दर्शितः स न्यायतो गुणप्रत्ययः । २६५ ६
६५९. ( सूत्र० २२ ) भवप्रत्ययमवधिज्ञानं नारकाणां देवानाञ्चेत्युपदर्शकं " तत्र भवप्रत्ययो नारकदेवानाम् " इति द्वाविंशतितमसूत्रम् भाष्यञ्च । २६६ ५
६६०. भाष्ये भवप्रत्ययमित्यस्य भवहेतुकं भवनिमित्तमित्यर्थकथनस्य प्रयोजनमुपदर्शितम् । २६६–१०
६६१. भव एव हेतुस्तस्य, यथा पक्षिणामाकाशगमने, इत्यत्र "भवपच्चइआ" इति भाष्यवचनसंवादः । २६६–३१
६६२. ( सूत्र० २३ ) क्षयोपशमहेतुकावधेः स्वामिविकल्पोपदर्शकं " यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् " इति सूत्रं भाष्यञ्च । २६७ १
६६३. भाष्ये अनानुगमिकम् आनुगमिकम् हीयमानकं वर्धमानकं अनवस्थितम् अवस्थितमित्येवं षड्भेदाः क्षयोपशमनिमित्तावधिज्ञानस्य, प्रपञ्चतस्तेषां पार्थक्येन लक्षणोपदर्शनञ्च । २६७ ४
६६४. भाष्योक्तिमात्रस्य सुस्पष्टं विवरणं भावार्थोपदर्शनञ्च । २६७ १४
६६५. देशान्तरमभिव्रजन्तं स्वामिनं स्वलोचनवदानुगामिकावधिज्ञानमनुगच्छतीत्यत्र 'अणुगामिओऽणुगच्छइ' इत्यादि वचनसंवादो दर्शितः । २६७ ३३
६६६. हीयमानकमवधिज्ञानमित्यत्र ' हीयमाणं पुव्वावत्थाओ अहोऽहो हस्समाणं ' इति वचनसंवादः । २६८–३०

६६७. ( सूत्र० २४ ) भेदद्वारेण मनःपर्यायज्ञानस्य लक्षकं "ऋजुविपुलमती मनःपर्यायौ" इति चतुर्विंशतितमसूत्रं, तद्भाष्यञ्च । २६९-११

६६८. ऋजुत्वं विपुलत्वञ्च निरूप्य ऋजुमतिविपुलमतिमनःपर्यायज्ञाने निरूपिते । २६९-१५

६६९. द्विविधेनापि मनःपर्यायज्ञानेन तत्तदर्थचिन्तनपरिणतानि मनोद्रव्याण्येव गृह्यन्ते, चिन्त्यमानास्तु बाह्याः पदार्था अनुमानेनैवावगम्यन्ते इत्यादि चर्चितम् । २६९-१८

६७०. "चारुमारुतधुते यथोर्मयः" इति श्लोकस्य व्याख्यानम् । २६९-२२

६७१. (सूत्र० २५) ऋजुमति-विपुलमतिमनःपर्यायज्ञानयोर्विशेषस्य प्रतिपादकं 'विशुद्धय-प्रतिपाताभ्यां तद्विशेषः' इति पञ्चविंशतितमसूत्रं तद्भाष्यञ्च । २७० ६

६७२. विशुद्धतरामित्यस्य विवरणम् । २७०-११

६७३. अप्रतिपातरूपहेत्वन्तरप्रतिपादकस्य किञ्चान्यदित्यादिभाष्यस्य विवरणम् । २७-०१४

६७४. आकेवलप्राप्तेरित्यस्य व्याख्यानं तत्र 'नट्ठम्मि छाउमत्थिए' इतिसिद्धान्तवचनं प्रमाणं दर्शितम् । २७१ ४

६७५. (सूत्र० २६) विशुद्धि-क्षेत्र-स्वामि-विषयकृता अवधिमनःपर्यायज्ञानयोर्विशेषा इत्युपदर्शकं 'विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्याययोः' इति षड्विंशतितमसूत्रं तद्भाष्यञ्च । २७१-१२

६७६. क्रमेणैते विशेषा भाष्ये उपपादिताः, दशमेऽध्याये केवलज्ञानस्य निरूपणं तत्सूत्रञ्च भाष्ये दर्शितम् । २७१-१४

६७७. भाष्योक्तानां चतुर्णामपि विशेषाणां भाष्यार्थोद्भावनपुरस्सरं सङ्गमनम् । २७१-२४

६७८. (सूत्र० २७) मतिश्रुतयोर्विषयोपदर्शकं " मतिश्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु " इति सप्तविंशतितमसूत्रं तद्भाष्यञ्च । २७२-१८

६७९. मतिश्रुताभ्यां सर्वाणि द्रव्याणि जानीते न तु सर्वैः पर्यायैरिति दर्शितम् । २७२-१९

६८०. विषयनिबन्धो भवतीत्यस्य विषयनियमो भवतीत्यनेन बाह्यार्थापलापियोगाचारमतस्य सर्वशून्यतावादिमाध्यमिकमतस्य च खण्डनं यथा भवति तथोपपाद्य दर्शितम् शून्ये मानमुपैती"ति पद्यञ्चोल्लिखितम् । २७३ १

६८१. अर्थान्तरसंक्रमितवाच्यनिबन्धपदार्थोऽयमित्यस्यार्थो दर्शितः । २७३-२१

६८२. मतिश्रुताभ्यां सर्वद्रव्यावबोधो निष्टङ्कितः । २७४ २

६८३. मतिश्रुतयोरसर्वपर्यायविशिष्टसर्वद्रव्यविषयकत्वमुपाध्यायग्रन्थलभ्यं यथा तथा भावितम् । २७४ ६

६८४. धर्मास्तिकायादिद्रव्याणामनन्तपर्यायविशिष्टतयैव वस्तुत्वे तथैव मतिश्रुताभ्यां ग्रहणं युक्तमिति प्रश्नप्रतिविधानम् । २७४-१४

६८५. ( सूत्र० २८ ) अवधिज्ञानस्य विषयनियमोपदर्शकं 'रूपिष्ववधेः' इति अष्टाविंशतितमसूत्रम् । २७५ २

६८६. अवधिज्ञानस्यासर्वपर्यायेषु रूपिद्रव्येष्वेव विषयनिबन्ध इति दर्शितम् ।

६८७. गूढार्थदीपिकायामेतस्य स्पष्टीकरणं, तत्र सिद्धान्तवचनानि संवादतया दर्शितानि । २७५ ९
६८८. ( सूत्र० २९ ) मनःपर्यायज्ञानस्य विषयनियमोपदर्शकं " तदनन्त( तम )भागे मनः-पर्ययस्य " इत्येकोनत्रिंशत्तमसूत्रम् । २७६ १
६८९. अवधिज्ञानविषयस्यानन्ततमभागं मनःपर्यवज्ञानी जानीते, रूपिद्रव्याणि मनोरहस्यविचार-गतानि मानुषक्षेत्रपर्यापन्नानि विशुद्धतराणि चेति भाष्ये यदुक्तं तत्स्पष्टीकरणं विवरणे । २७६ ३
६९०. मानुषक्षेत्रपर्यापन्नस्यैव ग्राहकत्वमित्यत्र ' मुणइ मणोदव्वाइं नरलोए सो मणिज्ज-माणाइं' इति सिद्धान्तसंवादः । २७६–१५
६९१. ( सूत्र० ३० ) केवलज्ञानविषयोपदर्शकं " सर्वद्रव्यपर्यायेषु केवलस्य " इति त्रिंशत्त-मसूत्रम् तद्भाष्यञ्च । २७६–१९
६९२. तत्र केवलज्ञाने सर्वभावग्राहकत्व–केवलत्व–परिपूर्णत्व समग्रत्वाऽसाधारणत्व–निरपे-क्षत्व–विशुद्धत्व–सर्वभावज्ञापकत्व–लोकालोकविषयत्वानन्तत्वपर्याया दर्शिताः । २७६–२०
६९३. सर्वेऽप्युक्ताः केवलस्य धर्माः स्वस्वासाधारणस्वरूपेण लक्षिताः । २७६–२४
६९४. गूढार्थदीपिकायां सर्वेषा समन्वय उपपादितः, सर्वद्रव्यपर्यायेष्वित्यत्र द्वन्द्वगर्भकर्मधार-यसमासश्च व्यवस्थापितः । २७६–२८
६९५. ( सूत्र० ३१ ) मतिज्ञानादीनां युगपदेकस्मिन् जीवे सम्भवतां सङ्ख्याभजनोपदर्शकं " एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः " इत्येकत्रिंशत्तमसूत्रम् तद्भाष्यञ्च । २७९–१६
६९६. तत्र कस्मिंश्चिज्जीवे मत्यादीनामेकं, कस्मिंश्चिद् द्वे, कस्मिंश्चित्त्रीणि, कस्मिंश्चिच्चत्वारि भवन्तीत्येवं भजना दर्शिता, एवं यस्य श्रुतज्ञानं तस्य नियतं मतिज्ञानं, यस्य मतिज्ञानं तस्य श्रुतज्ञानं भवति नवेत्युपदर्शितम् । २७९–१८
६९७. केवलज्ञानस्य मतिज्ञानादिभिस्सहभावं केचिन्मन्यन्ते, केचिन्न, उभयत्र तत्तदनुमता युक्तयो दर्शिताः । द्वितीयमते वह्वयो युक्तयो दर्शिताः ॥ २७९–२०
६९८. एकशब्दः प्राथम्ये इति विवरणग्रन्थमवतारयितुमेकशब्दस्यानेके अर्थाः दर्शिताः । २७९–३०
६९९. एकादीनीत्यादिशब्दानामर्था उपदर्शिताः । २८० १
७००. एकादीनीत्यत्र तद्गुणसंविज्ञानबहुव्रीहिसमास इति निष्टङ्कितम् । २८० ५
७०१. युगपदेककाले इति विवरणोक्तौ मतिश्रुतावधिमनःपर्यायज्ञानाना युगपद्भावित्वं न सम्भवतीत्याशङ्कायाः प्रतिविधानम् । २८०–१९
७०२. आचतुर्भ्य इत्यत्राङ् अभिविधौ न मर्यादायामित्युपपादितम् । २८१ १
७०३. अनुपयोगात्मकतया युगपदवस्थितसत्ताकानां मत्यादिचतुर्ज्ञानानां बोधस्वभावत्वाऽबोध-स्वभावत्वयोर्दोषोद्भावनशङ्काया निराकरणम्, तत्र सिद्धान्तवचनानि अपसिद्धान्त-निरासायोपदर्शितानि । २८१ ६
७०४. अत्र मत्यादीनां पञ्चानां ज्ञानानामेकं मतिज्ञानमित्युक्तौ भगवतीवचनविरोधमाशङ्क्य तत्परिहार उपदर्शितः ॥ २८१–२०

७०५. कस्मिँश्चिज्जीवे एकस्यैव मतिज्ञानस्याभ्युपगमे नन्दीसूत्रविरोधप्रश्नस्य परिहारो विहितः । २८२ ८
७०६. अत्रैव लोकप्रकाशवचनसंवादो दर्शितः । २८२–१९
७०७. श्रोत्रेन्द्रियजन्यज्ञानं श्रुतमेव न तु मतिज्ञानमित्युपगमे मतिज्ञानस्याष्टाविंशतिभेदभङ्गापत्तिरिति प्रश्नस्य प्रतिविधानं, तत्र भाष्यसंवादः । २८२–२५
७०८. कस्मिंश्चित् त्रीणि, द्वे मतिश्रुते, तृतीयं चावधिज्ञानमितिप्रतीकं गृहीत्वा, तदनन्तरं सिद्धान्ते च द्वे मतिश्रुते, तृतीयं मनःपर्यायज्ञानमित्यप्युक्तमित्युपक्रम्य तद्विचारो दर्शितः । २८२–३१
७०९. कस्मिंश्चिच्चत्वारि, त्रीण्युक्तानि, चतुर्थं च मनःपर्यायज्ञानमित्यभिधाय श्रुतमेकं क्वचित् किं न प्रदर्श्यत इति प्रश्नस्य प्रतिविधानम् । २८३ १
७१०. अत्र गूढार्थदीपिका सिद्धान्तवचनोद्गारपरिपूर्णाऽस्ति । २८३–१९
७११. केवलज्ञानस्य मतिज्ञानादिभिस्सहभावो भवति न वेति प्रश्नस्य प्रतिविधाने केषाञ्चिदाचार्याणा सहभावप्रतिपादकं मतमुपदर्शितम् । २८४ २
७१२. उक्तप्रश्नोपपादनपूर्वकं तत्प्रतिविधाने सहभावप्रतिपादकाचार्यमतस्य सम्यगुपपादनं, तत्रागमवचनान्यप्युट्टङ्कितानि । २८४–१२
७१३. उक्ताचार्यमतस्यायुक्तत्वव्यवस्थापनम् । २८५––६
७१४. उक्तमताऽयुक्तत्वहेतुप्रदर्शकस्य पूर्वं सतो मत्याद्युपयोगस्य कालत एव विरतेरित्यादिग्रन्थस्यागमवचनसंवलितं सम्यग्विवेचनम् । २८५–१०
७१५. क्षायोपशमिकाना मत्यादीनां केवलेन सहभावाभावेऽपि क्षायिकानां तेषां केवलेन सहभावः स्यादेवेत्याशंकामुद्भाव्य तन्निवारणपरं केवलज्ञानव्यावृत्तज्ञानत्वव्याप्यजात्यवच्छिन्नं प्रति केवलज्ञानावरणस्यैव हेतुत्वं, तदभावात्केवलज्ञानकाले न मत्यादीनां सम्भव इत्यवतारितं 'केचिदप्याहुरिति' साम्प्रदायिकमतम् । २८६ ३
७१६. उक्तसाम्प्रदायिकमतावतरणं सम्यग्व्याख्यातम् । २८६–१७
७१७. भाष्ये साम्प्रदायिकमतोपदर्शितानि यानि केवलिनि मत्यादिज्ञानाभावोपपादकानि तानि सर्वाणि क्रमेण व्याख्यातानि । २८७ ६
७१८. 'मतिज्ञानादिषु चतुर्षु पर्यायेणोपयोगो भवति, न युगपत्, संभिन्नज्ञानदर्शनस्य तु भगवतः केवलिनो युगपत्सर्वभावग्राहके निरपेक्षे केवलज्ञाने केवलदर्शने चानुसमयमुपयोगो भवतीति ' भाष्यस्य सम्यग्विवरणम् । २८७–१०
७१९. केवलज्ञानकेवलदर्शनयोर्वारंवारेणोपयोग इति प्राचा मतं, एक एवोपयोगः सामान्यविषयत्वाद्दर्शनं विशेषविषयत्वाज्ज्ञानं वारंवारेणोपयोगो नास्तीति नव्याना मतं तन्न युक्तमिति प्राञ्चः इत्येवमुपदर्शितम् । २८८ १
७२०. ज्ञानदर्शनयोर्यौगपद्यमिति मल्लवादिमतं, एक एवोपयोगो यदेव ज्ञानं तदेव दर्शन-

मिति नव्यमतं, प्रथमं ज्ञानं ततो दर्शनमित्येवं क्रमिकोपयोगधारेति वृद्धानां मतं, इतिमतत्रययोजना ज्ञानबिन्दावुपपादितेति दर्शितम् । २८९ २
७२१. उक्तमतत्रयसाधारण्यो विप्रतिपत्तयो दर्शिताः । २८९ ३
७२२. तत्र क्रमोपयोगवादिनां जिनभद्रगणिक्षमाश्रमणानां मतं केवलीणं भंते इत्याद्यागमप्रमाणप्रमापितमुद्भावितम् । २८९–१३
७२३. केवलज्ञानदर्शनयोः क्रमेणोत्पादेऽपि नाशकाभावान्न नाश इति प्रश्नस्य प्रतिविधानम् । २८९–२६
७२४. केवलिनः क्रमेणोपयोगाभ्युपगमे प्रतिसमयं सान्तत्वापत्त्या केवलज्ञानदर्शनयोः साद्यपर्यवसितत्वप्रतिपादकसूत्रविरोध इति प्रश्नप्रतिविधानम् । २९० २
७२५. केवलिनः एकान्तरज्ञानदर्शनोपयोगाभ्युपगमे पराभिहितदोषजालस्य छद्मस्थगतैकान्तरज्ञानदर्शनयोस्तत्प्रसङ्गप्रतिबन्धाऽपाकरणम् । २९० ६
७२६. सूत्रे युगपदुपयोगद्वयस्य निषेध एव, न तु विधानं, तत्रागमसम्मतिरुट्टङ्किता । २९०–२१
७२७. युगपदुपयोगद्वयवादिनां श्रीमल्लवादिनां मतमुपदर्शितं यथा सम्मतिटीकाकृद्भिरभयदेवसूरिभिः तत्र यथाऽऽगमाविरोधपरिहारश्च कृतः, तथोपदर्शितम् । २९०–२५
७२८. अत्र ज्ञानबिन्दौ श्रीमद्भिर्यशोविजयोपाध्यायैर्या समालोचना कृता सोपदर्शिता । २९१–२०
७२९. सामान्यग्राहिविशेषग्राहि चैकमेव केवलं ज्ञानं दर्शनञ्चेति सिद्धसेनदिवाकराणां महातार्किकशिरोमणीनां मतमुपदर्शितम् । २९३–१४
७३०. अत्रैव प्रसङ्गात्(स्तु)तिकारस्य "एवं कल्पितभेदमप्रतिहतमिति" पद्यमुट्टङ्कितम् । २९४–१३
७३१. अत्र केवलोपयोगे एकत्वं व्यक्त्या, द्व्यात्मकत्व नृसिंहत्ववदांशिकजात्यन्तररूपत्वमित्येकं मतम्, माषे स्निग्धोष्णत्ववद्व्याप्यवृत्तिजातिद्वयरूपमित्यपरमतं, केवलत्वमावरणक्षयात्, ज्ञानत्वं जातिविशेषः, दर्शनत्वं च विषयताविशेषो दोषक्षयजन्यतावच्छेदक इत्युपाध्यायमतमिति दर्शितम् । २९४–१८
७३२. उक्तमतत्रये एकस्यैव मतस्य प्रामाणिकत्वेन तदन्यमताभ्युपगन्त्रोर्मिथ्यात्वप्रसङ्ग इति प्रश्नप्रतिविधानम् । २९४–२१
७३३. प्रावचनिकानां जिनभद्रसिद्धसेनप्रमृतीनां स्वस्वतात्पर्यविरुद्धविषये सूत्रे परतीर्थिकपदमित्यादिनयोपदेशवृत्तिव्याख्यानतस्तेषां सूरीणां केषामप्यपसिद्धान्तोक्त्या मिथ्यात्वप्रसङ्गो न भवतीत्युपपादितम् । २९५ २
७३४. व्यवहारनयमाश्रित्य भेदाभेदोभयात्मके केवले भेदम्प्रधानीकृत्यैकसमयावच्छिन्नोत्पत्तिककेवलज्ञानकेवलदर्शनभेदं प्रोचुश्श्रीमल्लवादिन इत्युपदर्शितम् । २९५–१३
७३५. सङ्ग्रहनयमाश्रित्यकेवलज्ञानस्य व्यक्त्याऽभेदेऽपि ज्ञानत्वदर्शनत्वोपाधिभेदेन भेदमुपाजन्तः सिद्धसेनदिवाकरा इति दर्शितम् । २९५–१८
७३६. सूरित्रयाणाम्मध्ये नैकस्मिन्नपि सूरिवरे आभिनिवेशिकमिथ्यात्वप्रसङ्ग इति निगमितम् । २९५–२१

७३७. उक्तार्थोपोद्बलनाय श्रीयशोविजयोपाध्यायकृतज्ञानबिन्दुगतानि "प्राचां वाचाम्" इत्यादीनि सप्तपद्यानि दर्शितानि । २९५-३१
७३८. संक्षेपतस्तेषां पद्यानामर्थो उपदर्शिताः । २९६-३१
७३९. मत्यादीनि चत्वारि ज्ञानानि क्षयोपशमजानि क्षायिकज्ञानवति केवलिनि न सम्भवन्तीति निगमनम् । ३०१ १
७४०. नैयायिकाद्यभिमतं योगजधर्मजन्यं मानसं विलक्षणं योगिज्ञानमित्यस्य खण्डनम् । ३०१ ३
७४१. ( सू० ३२ ) मत्यज्ञान-श्रुताज्ञान-विभङ्गज्ञानात्मकप्रमाणाऽभासत्रयप्रतिपादकं 'मति-श्रुतावधयो विपर्ययश्च ' इति द्वात्रिंशत्तमसूत्रं तद्भाष्यञ्च । ३०२ ३
७४२. मत्यादिज्ञानमेव मत्याद्यज्ञानमित्यत्यन्तविरोधान्न सम्भवन्तीति प्रश्नस्य प्रतिविधानम् । ३०२ ५
७४३. सम्यग्दर्शनपरिगृहीतं मत्यादिज्ञानमन्यथाऽज्ञानमित्येतत्कथमिति प्रश्नस्य प्रतिविधानम् । ३०२ ७
७४४. अभिगृहीतमिथ्यादर्शनाऽनभिगृहीतमिथ्यादर्शनप्रवचनार्थसन्देहिभेदेन मिथ्यादृष्टयस्त्रिविधाः, ते पुनर्भव्याभव्यभेदेन द्विविधा इति दर्शितम् । ३०३ ५
७४५. (सू० ३३) मिथ्यादृष्टिज्ञानस्याज्ञानत्वप्ररूपकं ' सदसतोरविशेषात् यदृच्छोपलब्धे-रुन्मत्तवत्' इति त्रयस्त्रिंशत्तमसूत्रं तद्भाष्यञ्च । ३०३-२७
७४६. एकान्तवाद्यभ्युपगतस्य प्रमालक्षणस्यानुपपन्नत्वं दर्शितम् । ३०४-११
७४७. अत्रैव 'वसतिदृष्टान्तेन विनात्मभावमविश्रान्तेरिति विवरणस्य भावार्थो दर्शितः । ३०६ ९
७४८. 'अर्पितानर्पितसिद्धेरित्याद्युक्तदिशा भजनयैव प्रमाऽप्रमाण्यव्यवस्थितेः' इति विवरणस्य सम्यगर्थो व्यावर्णितः । ३०७ ८
७४९. गौरीकान्ताद्युक्तप्रमाऽप्रमाविवेचनस्य खण्डनम् । ३१० ५
७५०. चतुस्त्रिंशत्तमसूत्रावतरणिकास्वरूपं 'अवसरप्राप्तमपि चारित्रं नोच्यते' इत्यादिग्रन्थं समवलम्ब्य नयविचारकर्तव्योपोद्बलनाय नयसामान्यलक्षणाविष्करणपुरस्कृतप्रमाणनिक्षेपविचारालिङ्गितावतारग्रन्थोतिपुष्टिन्नीतः । ३१०-२७
७५१. प्रसज्ञान्नयसमुदाये न सम्यक्त्वमिति प्रश्नस्य निराकरणम् तत्र सम्मतिविशेषावश्यकवचनसंवादो दर्शितश्च । ३१२-११
७५२. सर्वेषां नयवादानां मिथ्यादृष्टित्वे तत्समुदायेऽपि न सम्यक्त्वमिति प्रश्नस्य प्रतिविधानम्, तत्र नयानां यौगपद्याऽसम्भवाद्रत्नावलीदृष्टान्तेन तत्समुदायोपपादनं न सम्भवतीति प्रश्नप्रतिविधानम् । ३१३ ६
७५३. दुर्नय-सुनय-प्रमाणानां लक्षणान्युपदर्शितानि । ३१३-२९
७५४. सदेवेति दुर्नयवचनं, सदिति सुनयवचनं, स्यात्सदिति प्रमाणवचनमित्यत्र 'सदेवेत्यादि' हेमचन्द्रसूरिवचनसंवादो दर्शितः । ३१४-१४
७५५. व्यासतोऽनेकविकल्पत्वं, मूलजातिभेदतः सप्तविधत्वं नयानामिति स्थितौ सूत्रे पञ्चविधत्वं कथमुक्तमित्याकाङ्क्षानिवृत्तये तदनेकप्रकारोपदर्शनप्रपञ्च. । ३१४-

७५६. (सू० ३४) मूलजातिभेदतो नयपञ्चविधत्वोपदर्शकं 'नैगमसंग्रहव्यवहारर्जुसूत्रशब्दा नयाः' इति चतुस्त्रिंशत्तमसूत्रं, तद्भाष्यविवरणञ्च । ३१४–२८

७५७. त्रयाणां शब्दनयानामेकत्वेनैव सूत्रे प्रदर्शने हेतुरुपदर्शितः । ३१५ १

७५८. नयसामान्यलक्षणं, तत्र 'सत्त्वासत्त्वाद्युपेतार्थे' इति वचनसंवादः । ३१५ २

७५९. शब्दनयस्वरूपप्रपञ्चनम् । ३१६ ६

७६०. (सू० ३५) नैगमो द्विविधः शब्दस्त्रिविध इत्युपदर्शकं 'आद्यशब्दौ द्वित्रिभेदौ' इति पञ्चत्रिंशत्तमसूत्रं तद्भाष्यञ्च । ३१५–१५

७६१. सूत्रस्थाद्यशब्देन नैगमस्य ग्रहणमित्येतत्प्रतिपादकस्य 'आद्य इति सूत्रक्रमप्रामाण्या-न्नैगममाह' इति भाष्यस्य विवरणम् । ३१६–३८

७६२. नैगमद्वैविध्यप्रतिपादकस्य 'देशपरिक्षेपी सर्वपरिक्षेपी च' इति भाष्यस्य विवरणम् तत्र सामान्यविशेषरूप इत्येवमनभिधाने बीजमुपदर्शितम् । ३१७ २

७६३. टीकायां क्रमसूत्रराद्धान्तप्रवर्तकत्वेनास्याभिधानं यत्कृतं तद्भावितम् । ३१७ ५

७६४. शब्दनयास्त्रिभेदा इत्यादि भाष्यार्थो दर्शितः । ३१७ ७

७६५. अनुवृत्तिलक्षणं सामान्यमेवेत्यादि विवरणग्रन्थः स्पष्टीकृतः । ३१७–१०

७६६. न च कालादुभितिति साम्प्रतिक इति भवितव्यमित्यादिशङ्काप्रतिक्षेपरूपो विवरण-ग्रन्थो विचारितः । ३१८ ३

७६७. यां यां संज्ञामभिधत्ते तां तां समधिरोहतीति समभिरूढ इति विवरणग्रन्थस्यार्थो भावार्थश्च सम्यगुपदर्शितः । ३१८ ९

७६८. एवंभूतनयप्ररूपणम्, तत्र पारिभाषिकी औपाधिकी नैमित्तिकीभेदेन संज्ञाया त्रैविध्यं सदृष्टान्तमुपदर्श्य साम्प्रतादिनयत्रयाणां शब्दसंज्ञा लाघवार्थं कृतेति दर्शितम् । ३१९ १

७६९. अस्य गूढार्थदीपिकायां स्पष्टीकरणम् । ३१९ ७

७७०. शब्दस्य ये भेदा अभिहितास्ते नयभेदा एव, नैगमस्याभिहितौ भेदौ तु नयप्रभेदा-विति दर्शितम् । ३२० २

७७१. अनुयोगद्वारे स्थानाङ्गे च सप्तनया उक्ताः, तत्त्वार्थसूत्रकृतोऽपि तत्रैव चेतः स्वरसः । दिगम्बरस्य नव नयविभागो नोचित इत्यादि भावितम् । ३२० ४

७७२. अत्राह–किमेषां लक्षणमिति, अत्रोच्यते, निगमेषु येऽभिहिताः शब्दास्तेषामर्थः शब्दा-र्थपरिज्ञानञ्च देशसमग्रग्राही नैगमः' इति नैगमप्ररूपकभाष्यस्य सम्यक्पर्यालोचनम् । ३२२ ५

७७३. निगमेष्वित्यादि भाष्यमेव, न तु सूत्रमित्युपपादितम् । ३२२ ६

७७४. सामान्यग्राहिणो नैगमस्य जातिमात्रपदवाच्यत्वाभ्युपगमः, विशेषग्राहिणस्तस्य द्विक-त्रिकादिपदार्थाभ्युपगमः, तत्र 'एकं द्विकम्' इत्यादिपद्यसंवादः । ३२३ ३

७७५. तत्र एकं जातिर्नामार्थ इति पक्षस्योपपादनम् । ३२३ ५

७७६. केवला व्यक्तिरेवैकः शब्दार्थ इति पक्ष उपपादितः, तत्र 'आनन्त्येऽपि हि भावानामिति पद्यसंवादः। ३२४ २

७७७. अत्रैव आकृतिविशिष्टव्यक्तिर्नामार्थः, न चैकपक्षविरोधोऽपीति मतं दर्शितम्। ३२५ ३

७७८. द्विकमिति जातिव्यक्ती नामार्थ इति पक्षस्योपदर्शनम्। ३२६ १

७७९. त्रिकमिति जातिव्यक्तिलिङ्गानि नामार्थ इति पक्षस्योपपादनम्, पुंस्त्वस्त्रीत्वनपुंसकत्व-लक्षणोपदर्शनञ्च। ३२६ ७

७८०. लिङ्गस्य वाच्यत्वादेव पशुनेत्यादौ न छागयादिलाभः, मीमांसाविचारोऽप्येतदुपोद्बलको भावितः। ३२७ १

७८१. सङ्ख्यादिसहितमुक्तत्रिकमिति चतुष्कं नामार्थः, कारकसहितमुक्तचतुष्कमिति पञ्चकं नामार्थः, अत्र कारकं प्रत्ययस्यैव वाच्यं न तु प्रकृतेरिति प्रश्ने ओमिति समाधानं, वाक्यपदीयं 'द्योतिका वाचिका वा स्युर्द्वित्यादीना विभक्तयः' इति पद्यं पक्षद्वयव्युत्पा-दकमुपदर्शितम्, अस्योत्तरार्द्धो दीपिकायां दर्शितः। ३२८ १

७८२. शब्देन सह षडपि नामार्थाः, शब्दस्यापि शाब्दबोधे नियतं भानमुपपादितम्। ३२८ ६

७८३. अत्र 'न सोऽस्ति प्रत्ययो लोके' इति हरिकारिका दर्शिता। ३२८-२४

७८४. जवगडदशादिशब्दस्य क्वचिदप्यर्थे शक्त्यभावात्स्वस्मिन् शक्यसम्बन्धरूपलक्षणाया असम्भवेन शक्तिरुपेया, तथाऽनुकार्यानुकरणयोर्भेदविवक्षायां शक्तिरनुकार्ये उपेयेति भावितम्। ३२९ १

७८५. अज्ञातायाश्च वृत्तेरनुपयोगादिति विवरणस्यावतरणपुरस्सरं व्याख्यानम्। ३२९ ७

७८६. अत्र चानुकार्यानुकरणयोरित्यादि विवरणग्रन्थोऽवतारितः। ३२९-११

७८७. शाब्दबोधे वृत्त्या शब्दार्थयोरुभयोरप्युपस्थितिरिति भाने प्रकार उपदर्शितः, तत्र ग्राह्यत्वं ग्राहकत्वं चेति पद्यद्वयं वाक्यपदीयं संवादकम्। ३३० १

७८८. अनुकार्यानुकरणयोरभेदपक्ष एवेत्यादि विवरणमवतार्य व्याख्यातम्। ३३१-१२

७८९. 'बुद्धिप्रतिबिम्बकान्यापोह एव शब्दार्थ इत्यपि केचित्प्रतिपन्ना' इति विवरणग्रन्थः सम्यक्तया भावितः। ३३१-२५

७९०. 'तेषा विषयतया तदाश्रयस्याक्षेपादेव लाभः' इत्यादि तन्मतोपदर्शकविवरणग्रन्थस्या-वतरणपुरस्सरं व्याख्यानम्। ३३२ १

७९१. उपदर्शिताः सर्वेऽपि शब्दार्थाऽध्यवसाया नैगमनये सम्भवन्तीत्युपसंहारः। ३३२ ३

७९२. "प्रस्थकवसत्यादिदृष्टान्तेन विचित्रस्य तस्य सूत्रे प्रतिपादनात्" इति विवरण-ग्रन्थावतरणभूमिका, तत्र प्रस्थकवसत्यादिषु निगमाभिप्रायप्रकारोट्टङ्कनम्। ३३२-२२

७९३. उक्तेषु सर्वेषु शब्दार्थप्रकारेष्वभ्यनुज्ञया च जैनानामपक्षपातित्वं, तत्र स्वोक्तं 'अध्यात्म-सारप्रकरणे 'शब्दो वा मतिरर्थ एव किमु वा' इति पद्यमुट्टङ्कितम्। ३३३ १

७९४. प्रस्थकवसत्यादिदृष्टान्तेन विचित्रस्य नैगमनयस्य प्रतिपादकं सूत्रमुल्लिखितम् । ३३३ ९
७९५. 'शब्दो वा मतिरर्थ एव किमु वेत्यादि' पद्यार्थो दर्शितः । ३३३–१५
७९६. एतादृशाध्यवसायवृत्तिद्रव्यार्थिकत्वव्याप्यजातिमत्त्वमित्यादिनैगमलक्षणमुपदर्श्योक्त-दिशा नयान्तरलक्षणानि वाच्यानीति प्रतिपादितम् । ३३४ १
७९७. अध्यात्मसारप्रकरणे यशोविजयोपाध्यायनिर्मितं 'यत्रानर्पितमिति' 'धर्मा नार्कमपाकरोति' इति च पद्यद्वयमुल्लिखितम् । ३३४ ३
७९८. एतादृशाध्यवसायवृत्तीत्यादिनैगमलक्षणस्य प्रयोजनं तद्घटकविशेषणप्रयोजनञ्चोपदर्श्याकाराद्युक्तान्यपि नैगमलक्षणानि भावितानि । ३३४–११
७९९. अर्थाना सर्वैकदेशसङ्ग्रहणं सङ्ग्रह इति भाष्यार्थो दर्शितः । ३३५ २
८००. ग्रन्थान्तरे विषयभेदेन सङ्ग्रहस्य द्वैविध्यमुक्तमपि यदत्र नादृतं तत्र हेतुरुपदर्शितः । ३३६ २
८०१. सङ्ग्रहनयाच्छब्दब्रह्मपरब्रह्माद्यद्वैतदर्शनानि प्रवृत्तानीति दर्शितम् । ३३६ ५
८०२. 'लौकिकसम उपचारप्रायो विस्तृतार्थो व्यवहारः' इति भाष्यस्यार्थो भावितः । ३३६ ५
८०३. संगहियेति गाथार्द्धस्य 'संग्रहः संगृहीतस्येति' पद्यस्य चार्थ उपदर्शितः । ३३६–१३
८०४. संवादकतया 'दव्वट्ठियनयपयडी' इति सम्मतिगाथा दर्शिता । ३३७ २
८०५. शब्दब्रह्माद्यद्वैतदर्शनस्य शुद्धसङ्ग्रहनयजातत्वे 'जातं द्रव्यार्थिकाच्छुद्धादिति वचनं नयोपदेशस्य दर्शितम् । ३३७ २
८०६. अशुद्धद्रव्यार्थिकव्यवहारनयप्रकृतिकत्वं साङ्ख्यदर्शनस्य भावितम्, तत्र सम्मति-नयोपदेशवचनसंवादो दर्शितः । ३३७ ४
८०७. शब्दब्रह्मवादो भर्तृहरिणादृतः, तत्र 'अनादिनिधनं ब्रह्म'इत्यादिवाक्यपदीयपद्यकदम्बकमुपदर्शितम् । शब्दार्थयोरभेद एव सम्बन्ध इति वैयाकरणमतमप्येतदालम्बनमित्यादि दर्शितम् । ३३७–१६
८०८. सच्चिदानन्दब्रह्मवादो वेदान्तिभिरादृतस्तन्मतमुपदर्शितम् । ३३७–२५
८०९. उपचारबहुलत्वविस्तृतार्थत्वे व्यवहारस्योपपादिते । ३३८ १
८१०. व्यवहारस्य लौकिकसमत्वादिकं विशेषतो भावितम् । ३३८ ४
८११. व्यवहारस्य लक्षणम् । ३३९ १
८१२. 'सतां साम्प्रतानामर्थानामभिधानपरिज्ञानमृजुसूत्रः' इति भाष्यस्य विवरणम्, तत्र भावत्वे वर्त्तमानत्वव्याप्तिर्धीरिति स्वपद्यसंवादः । ३३९ १
८१३. 'यथार्थाभिधानं शब्दः' इति भाष्यमवतार्य व्याख्यातम् । ३३९ ५
८१४. व्यवहारलक्षणं परिस्कृत्य दर्शितम् ३३९ ७
८१५. 'पच्चुप्पन्नग्गाहीति' ऋजुसूत्रलक्षणस्यानुयोगद्वारसूत्रोक्तस्योपदर्शनं तद्भावनञ्च, व्यवहारनयादस्य विशेषो दर्शितः । ३३९–२०

८१६. शब्दनयस्य लक्षणम्, साम्प्रतसमभिरूढैवम्भूतेष्वनुगतैका जातिर्नास्ति, ततस्तद्व्यञ्जकमनुगतं लक्षणं नाश्रयणीयमतः साम्प्रतसमभिरूढैवम्भूतान्यतमत्वमेव शब्दत्वमुक्तमित्युपपादितम्। ३४० १

८१७. 'नामादिषु प्रसिद्धपूर्वाच्छब्दादर्थे प्रत्ययः साम्प्रतः' इति भाष्यस्य सम्यगथा विभावितः। ३४१ ९

८१८. दव्वट्ठिओत्ति तम्हेति सम्मतिगाथार्थौ दर्शितः। ३४१—१४

८१९. साम्प्रतनयस्य निष्कृष्टलक्षणं तदुपपादनञ्च। ३४२ १

८२०. निरुक्तनिष्कृष्टलक्षणस्य तदुपपादनप्रकारस्य च विवेचनम्। ३४२ ६

८२१. 'सत्स्वर्थेष्वसंक्रमः समभिरूढः' इति भाष्यार्थप्रकटनम्, तत्र समभिरूढस्य निष्कृष्ट-लक्षणम्, तदुपपादनञ्च, तत्र नैकस्य शब्दस्य शब्दान्तरं पर्याय इति प्रश्नप्रतिविधान-सङ्घटितविचारेण निष्टङ्कितम्। ३४३ ६

८२२. 'व्यञ्जनार्थयोरेवम्भूतः' इति भाष्यार्थविवरणम्, तत्र 'वंजणअत्थतदुभयं एवंभूओ विसेसेइत्ति' भद्रबाहुवचनं 'एवम्भूतस्तु सर्वत्रेति' नयोपदेशपद्यञ्च संवादकतया दर्शितम् ३४६ २

८२३. एतन्मते समभिरूढतो विशेष उद्भावितः। ३४६—४

८२४. 'अत्राह—उद्दिष्टा भवता नैगमादयो नया', तन्नया इति कः पदार्थः' इति भाष्यप्रश्न-ग्रन्थोऽवतार्य व्याख्यातः। ३४७ ३

८२५. 'अत्रोच्यते, नयाः प्रापकाः कारकाः साधका निर्वर्तका निर्भासका उपलम्भका व्यञ्जका इत्यनर्थान्तरम्' इति भाष्यसमाधानग्रन्थो नयादिप्रत्येकपदव्युत्पत्त्युपदर्शन-द्वारा विवृतः। ३४७ ८

८२६. "जीवादीन् पदार्थान्नयन्ति प्राप्नुवन्ति कारयन्ति साधयन्ति निर्वर्तयन्ति निर्भासयन्ति उपलम्भयन्ति व्यञ्जयन्तीति नयाः' इति भाष्यस्य विवरणम्। ३४८ ६

८२७. अत्र कर्तृक्रिययोरभेदोपदर्शनेन आख्यातस्थले क्रियायाः प्राधान्यं कर्तुर्गुणभाव इति कर्तृक्रिययोरेकान्तभेदाभ्युपगन्तॄणां वैयाकरणम्मन्यानां दीक्षितादीनामेकान्तस्य निरसनम्। ३४८ ७

८२८. पश्य मृगो धावतीत्यादिभाष्यसिद्धैकवाक्यतानुरोधेन क्रियाप्रधानमाख्यातमिति वाक्या-श्रयणेन चाख्यातस्थले क्रियामुख्यविशेष्यक एव शाब्दबोध इति वैयाकरणमतं दर्शितम्। ३४९ १

८२९. तस्य खण्डनं वैयाकरणाभिमतस्य पचतीत्यत्रैकाश्रयिका पाकानुकूला भावनेत्यादिबोध-स्यायुक्तत्वोद्भावनेन, चरमव्यापारं फलस्थानीयं कृत्वा तदतिरिक्तानां तदनुकूलानां भावनात्वेन भानस्वीकारे "गुणीभूतैरवयवै"रिति वचनविरोधश्च दर्शितः। ३५० २

८३०. घटो नश्यतीत्यादावपि घटाभिन्नाश्रयको नाशानुकूलो व्यापार इत्यादिबोधाभ्युपगमे दोष उपदर्शितः। ३५० ७

८३१. जानातीच्छतीत्यादौ ज्ञानेच्छाद्यनुकूलैकव्यापारमानस्य खण्डनम्।

८३२. पचतीत्यादौ पाकानुकूलयत्नवानित्यादिः प्रथमान्तपदार्थमुख्यविशेष्यकबोध एव नैयायिकाद्यभ्युपगतः श्रद्धेय इत्युपसंहृतम् । ३५१ ७

८३३. भावनाप्रकारकबोधे प्रथमान्तपदजन्यपदार्थोपस्थितेर्हेतुत्वे न गौरवं, धात्वर्थभावनोपस्थितेः पृथग्घेतुत्वे च वैयाकरणस्य गौरवं, पश्येत्यादिवाक्ये तमिति कर्माध्याहार्यमिति दर्शितम् । ३५२ १

८३४. उक्तार्थोपपादनं दीपिकायाम् । ३५२ ५

८३५. पश्येत्यादिवाक्ये वैयाकरणैः कथञ्चिद्वाक्यभेदापत्तिपरिहारस्य कर्तुं शक्यत्वेऽपि 'स्विद्यति कूणति वल्गतीत्यादौ दीपिकालङ्कारोदाहरणे वाक्यभेदापत्तिपरिहारः कर्तुमशक्य एवेति, तत्र तत्परिहारश्चाऽऽशङ्क्य व्युदस्तः । ३५३ १

८३६. एकस्य कारकस्यानेकक्रियाभिसम्बन्ध एव दीपकालङ्कार इत्यस्यावबोधाय दीपकालङ्कारलक्षणं तस्य द्वैविध्यं तदुदाहरणादि च दर्शितम् । ३५३–१२

८३७. अनेकक्रियास्थले निघातानुरोधादेकक्रियायाः प्राधान्यमिति वैयाकरणाभिप्रेतमुपन्यस्य दूषितम् । ३५४ १

८३८. निघातानुरोधादित्यस्य व्याख्याने निघातस्वरूपतद्विधायकसूत्रतदर्थादिकञ्चोपदर्शितम् । ३५४ ९

८३९. क्रियाद्वयस्यैकत्र कर्त्रर्थेऽन्वय एव चकारो वर्तते, स वैयाकरणमते न स्यादित्यस्य परिहाराय कर्तृपदोत्तरचकारस्य कर्तृद्वये एकक्रियाया इव क्रियापदोत्तरचकारस्य क्रियाद्वये एककर्तुरन्वयद्योतकत्वादेव नानुपपत्तिरिति वैयाकरणाकूतमाशङ्क्य प्रतिक्षिप्तम् । ३५५ २

८४०. अथकत्वादेकं वाक्यमित्यादिमीमासकोक्तन्यायादेकवाक्यत्वोपपत्त्याशङ्कायाः प्रतिक्षेपः । ३५५ ३

८४१. कर्तुः क्रियान्यत्वानन्यत्वस्याद्वादस्फोरणार्थं नयाः प्रापका इत्यादिकं, न तु कर्तृप्राधान्यबाधेन क्रियाप्राधान्यैकान्तस्फोरणार्थमित्युपसंहारः । ३५५ ६

८४२. फलीभूतशाब्दबोधे वैचित्र्यं नयवैचित्र्याधीनमिति दर्शितम् । ३५५ ७

८४३. फलीभूतेत्युक्तग्रन्थस्यावतरणपुरस्सरं भावोपदर्शनम् । ३५५–२६

८४४. स्याद्वादस्तुतिपरं पद्यम् । ३५६ १

८४५. 'अत्राह किमेते तन्त्रान्तरीया वादिन., आहोस्वित्स्वतन्त्रा एव चोदकपक्षग्राहिणो मतिभेदेन विप्रधाविता इति, अत्रोच्यते, नैते तन्त्रान्तरीयाः, नापि स्वतन्त्रा मतिभेदन विप्रधाविताः, ज्ञेयस्य त्वर्थस्याध्यवसायान्तराण्येतानि' इति प्रश्नोत्तरभावेन प्रवृत्तस्य भाष्यस्य स्फुटीकरणम् । ३५६ २

८४६. 'तद्यथेत्यारभ्य तेषामेव व्यञ्जनार्थयोरन्योन्यापेक्षार्थग्राहित्वमेवम्भूत इत्येतत्पर्यन्तस्य तत्तन्नयाध्यवसायप्रतिपादकभाष्यस्य सम्यग्विवरणम् । ३५७ २

८४७. सामान्यविशेषयोरवच्छेदकभेदेनाधाराधेयभाव उपपादितः ३५७–१०

८४८. देशग्राही नैगम ऊर्ध्वतासामान्यकृतमेकत्वमभ्युपगच्छति, सर्वग्राही नैगमस्तिर्यक्सामान्य-

कृतमेकत्वमुपैतीति । ३५८ १

८४९. सङ्ग्रहाध्यवसायोपवर्णनम्, सङ्ग्रहविषयस्य साम्प्रतविषयत्वमाशङ्क्य प्रतिक्षिप्तञ्च, तत्र नानार्थकत्वोच्छेददोषोऽपि परिहृतः । ३५८ ४

८५०. सङ्ग्रहनये न किञ्चित्पदं नानार्थं, न वाऽर्थो नाना, एवं सति वस्तुमात्रसंकोचे नामघटादिष्वेव सङ्कोचे सङ्ग्रहः कथमिति प्रश्नप्रतिविधानम्, तत्र 'पज्जवणयवुक्कंतं' इति सम्मतिसम्मतिश्च । ३५९ २

८५१. हन्तैवं यथोक्तघटेष्वेवेति कोऽयं सङ्कोच इति ग्रन्थस्यावतरणं, भावार्थश्च प्रकटितः । ३५९–११

८५२. पज्जवणयवुक्कंतमिति सम्मतिगाथाया अर्थो दर्शितः । ३६० ८

८५३. व्यवहारनयाभिप्रायोपदर्शकभाष्यविवरणम् । ३६१ ३

८५४. महासामान्यस्य सामान्यरूपत्वमेव, अन्त्यविशेषस्य विशेषरूपत्वमेवेत्यत्रापसिद्धान्तत्वप्रसङ्गशङ्कानिवर्त्तकस्य 'अयं द्रव्योपयोगः स्यादिति' व्याख्यानगतस्योपदर्शनम् । ३६१ ८

८५५. ऋजुसूत्रनयमतविवरणपरभाष्यविवरणम् । साम्प्रताभिप्रायनिरूपकभाष्यविवरणम् । ३६२–१–२

८५६. समभिरूढाभिप्रायप्रकाशकभाष्यविवरणम् । एवम्भूताभिप्रायाविष्कारकभाष्यविवरणम् । ३६३–१३

८५७. एवं नयप्रस्थानभेदे परकीयदोषापादनशङ्कातत्प्रतिविधानपरस्य अत्राह—एवमिदानीमेकस्मिन्नर्थे इत्यारभ्य तद्भन्नयवादा इत्यन्तभाष्यस्य पूर्वपक्ष्यभिप्रायोत्तरपक्ष्यभिप्रायस्फोरणस्वरूपं विवरणम् । ३६५ १

८५८. यथैकत्र सत्त्वजीवाजीवात्मकत्वाद्यध्यवसायानां भिन्नत्वादविरुद्धकोटिकत्वाद्वा न विप्रतिपत्तित्वं तथा नयवादेष्वपीत्यादि दर्शितम् । ३६५ ९

८५९. बहु–बहुतरादिपर्यायग्राहित्वान्मत्यादीना यथा विशेषो न च विप्रतिपत्तित्वं तथा नयवादानामित्यन्याचार्यव्याख्यानं दर्शितम् । ३६६ १०

८६०. एवं यथा प्रत्यक्षादीना विषयाभेदेऽपि सामग्रीभेदाद्भेदस्तथा नयवादानां न च विप्रतिपत्तित्वमिति दर्शितम् । ३६७ १

८६१. अस्य नयज्ञानस्य संशय समुच्चय–विपर्यय–प्रमाणबोधविलक्षणत्वं, तत एव जात्यन्तरत्वं, 'अयं न संशयः कोटेरिति पद्यं 'न समुद्रोऽसमुद्रो वेति' पद्यञ्च संवादकमत्रेति । ३६७ ४

८६२. संशयसमुच्चययोः को भेद इति प्रश्नप्रतिविधाने बहवः प्रकारा उद्भाविताः । ३६७–१२

८६३. संक्षिप्तरुचीनामनुग्रहायोदाहरणोपदर्शितनयलक्षणसङ्ग्राहकस्य भाष्यगतस्य 'नैगमशब्दार्थानामिति' "यत् संगृहीतवचनमिति" 'समुदायव्यक्त्याऽऽकृतीति' 'साम्प्रतविषयग्राहकमिति' आर्याचतुष्टयस्य विवरणम् । ३६८ ४

८६४. जीव इति नोजीव इति अजीव इति नोऽजीव इत्येवं पदचतुष्टये उच्चारिते केन नयेन कोऽर्थः केन पदेन प्रतीयत इति प्रश्नोत्तरभावमाभेजानस्य 'अत्राह—अथ जीवो नोजीव इत्यारभ्य एवं सर्वभावेषु नयवादाधिगमः कार्यः' इत्यन्तभाष्यस्य विवरणम् । ३७१ ९

८६५. पूर्वाचार्योक्तानां सप्तनयसांक्षिप्तस्वरूपोपदर्शकानां 'शुद्धं द्रव्यमिति' 'अन्यदेव हीति' 'सद्रूपतेति' व्यवहारस्त्विति' तत्रर्जुसूत्रनीतिरिति 'अतीतानागतेति' 'विरुद्धलिङ्गेति' 'तथाविधस्येति' 'एकस्यापीति' नवपद्यानामुट्टङ्कनम् । ३७१–२२

८६६. नञः सर्वनिषेधार्थत्वमसहमानानां वैयाकरणैकदेशिनां पूर्वपक्षः, तत्र अजीव इत्यत्र नञ. सर्वनिषेधो नार्थः, तथा सति सर्वनामकार्यानापत्तिः, तस्मादब्राह्मण इत्यादावपि आरोपितत्वमारोपमात्रं वा नञर्थः, ब्राह्मणपदस्यैव वा ब्राह्मणारोपविषये लक्षणा, नञ्पदं तात्पर्यग्राहकमिति दर्शितम् । ३७६ २

८६७. उक्तप्रश्नोपपादनम् । ३७६–१७

८६८. उक्तप्रश्नप्रतिविधानं वृद्धानामुपदर्शितम्, तत्र कैयटमतमुद्भाव्य प्रतिक्षिप्तम् 'तत्सादृश्यमभावश्चेति पद्येन, षट्नञर्थोपदर्शनं त्वार्थिकार्थमाश्रित्येत्यादि प्रपञ्चितम् । ३७७ २

८६९. गौणत्वेऽपि नञ्समासे सर्वनामसंज्ञोपपादिता, अनेकमन्यपदार्थे इत्यादावेकवचनं विशेष्यानुरोधाद् व्यवस्थापितम् । ३७८ १

८७०. अत्र वैयाकरणशङ्कासमाधाने सम्यगुपपादिते, तत्र पाणिनीयसूत्रभाष्यादिकं सङ्गमितम् । ३७८ ७

८७१. सेव्यतेऽनेकया सप्ततापाङ्गयेत्यत्रैकवचनस्य समर्थनम् । ३७९ २

८७२. अत्वं भवसि अनहं भवामीत्यादौ पुरुषवचनादिव्यवस्थोपपादनप्रकारो भावितः । ३७९ ४

८७३. उक्तार्थसङ्गमनादिकं भावार्थोपदर्शनादिना भावितम् । ३७९ ६

८७४. अत्वं भवसि अनहं भवामीत्यादौ वैयाकरणमते न्यायमते च शाब्दबोधवैलक्षण्यमुपदर्शितम् । ३८० १

८७५. नञर्थस्याभावस्य प्रतियोगिविशेषणत्वमेवेति वैयाकरणमतं खण्डयित्वाऽभावस्य प्रतियोगिविशेष्यतयाऽन्वय इति नैयायिकमतं निगमितम् । ३८० ६

८७६. त्वं न पचसीत्यादौ वैयाकरणमतेन न्यायमतेन च बोधवैलक्षण्योपदर्शनपुरस्सरं न्यायमतस्यैव युक्तत्वमावेदितम् । ३८१ १

८७७. घटो न पचतीत्यादौ अन्धआकाशं न पश्यतीत्यादौ बोधोपपादनप्रकारमुपदर्श्य अजीव इत्यत्र नञः सर्वनिषेधोऽर्थ इत्युक्तः सुसङ्गतत्वं निगमितमिति । ३८१ ५

८७८. जीवोऽजीवो नोजीवो नोऽजीव इति चतुर्षु विकल्पेषु एवम्भूतभिन्नानां नैगमादीनां सर्वेषां नयानां समा प्रवृत्तिरित्युपसंहृतम् । ३८१–१०

८७९. एवम्भूतनये जीव इत्युच्चारिते नोजीव इत्युच्चारिते अजीव इत्युच्चारिते नोअजीव इत्युच्चारिते क्रमेण भवस्थजीव–परमाण्वादिसिद्ध–परमाण्वादि–भवस्थजीवानां प्रतीतिः, न सिद्धादीनामित्युपपादितम् । ३८२ १

८८०. संवादकतया भगवत्यङ्गाभिहितस्य 'जीवइ भंते जीवे' इत्यादि वचनस्यार्थ उपदर्शितः । ३८२–१६

८८१. नयोपदेशगतानि 'भावमौदयिकमिति' 'सिद्धो निश्चयतो जीव इति' 'यज्जीवत्वं कचिदिति' पद्यानि प्रसङ्गसङ्गतानि दर्शितानि । ३८२–२४

८८२. एते चत्वारो विकल्पा एकवचनेन दर्शिताः तथा द्विवचनबहुवचनाभ्यामपीति । ३८१ २

८८३. सर्वसङ्ग्रहेण एकवचनद्विवचनान्ता विकल्पा नाभ्युपगम्यन्ते, एतद् भावना कृता । ३८३ ६

८८४. नगमादयश्च नया एकवचनं बहुवचनञ्चाभ्युपगच्छन्ति तत एव सर्वाकारिताग्राहिण इत्युपपादितम् । ३८३–११

८८५. सर्वसङ्ग्रहो बहुवचनमेव सहत इति न युक्तं, तस्य सामान्यविषयत्वेनैकवचनसहिष्णुताया एव युक्तत्वादिति पूर्वपक्षः । ३८३–१५

८८६. तत्र "जात्याख्यायां नवैकोऽसंख्येयो बहुवत्" इति हैमसूत्रं, 'दूरे राज्ञोऽपतन् सूता' इति द्व्याश्रयमहाकाव्यपद्यमुदाहृतञ्चेति दर्शितम् । ३८४ २

८८७. अत एव नैगमव्यवहारयोर्भङ्गोपदर्शनायामेकवचनबहुवचनाभ्यां षड्विंशतिर्भङ्गाः, संग्रहस्य तु सामान्याश्रिताः सप्तैव भङ्गा अनुयोगद्वारसूत्रे लिखिताः । ३८५ १

८८८. षड्विंशतिर्भङ्गा इत्यस्य व्याख्याने यथा षड्विंशतिर्भङ्गाः सम्भवन्ति तथोपपाद्य दर्शिताः । ३८५ ४

८८९. अतएव च वृत्तौ अभेदैकत्वसङ्ख्याया एव मानमित्युपदर्शितम् । ३८६ १

८९०. सङ्ग्रहस्य तु सामान्याश्रिताः सप्तैव भङ्गा इत्यस्योपपादनम् । ३८६–१०

८९१. न चेदेवं, तदा राजपुरुष इत्यादावित्यादिग्रन्थस्य स्पष्टीकरणम् । ३८६–२३

८९२. उक्तप्रश्नप्रतिविधानम्, तत्र क्वचित्सङ्ग्रहस्यैकवचनं क्वचिद्बहुवचनमिति विवेको भावितः ३८७–२

८९३. जीवा नोजीवा इत्यादौ तु परसङ्ग्रहो बहुवचनान्तमेवेच्छतीति निर्णयो व्यवस्थापितः । ३८७ ७

८९४. प्रमाणे नयविचारं कर्तुकामस्य भाष्यकृतः 'अत्राह–अथ पञ्चानां ज्ञानानां सविपर्ययाणामित्यारभ्य प्रत्यक्षानुमानोपमानाप्तवचनानामपि प्रामाण्यमभ्यनुज्ञायते इति' इत्यन्तस्य वचनस्य प्रश्नोत्तरभावेन प्रवृत्तस्य व्याख्यानम् । ३८८ ७

८९५. तत्र नैगमसङ्ग्रहव्यवहारा मतिज्ञानमत्यज्ञान–श्रुतज्ञान–श्रुताज्ञानावधिज्ञान–विभङ्गज्ञान मनःपर्यवज्ञान–केवलज्ञानानीत्यष्टौ ज्ञानानि श्रयन्ते इति दर्शितम् । ३८८ ९

८९६. ऋजुसूत्रस्तु मतिज्ञानमत्यज्ञाने त्यक्त्वा षडभ्युपगच्छतीत्युपपादितम् । ३८८–१०

८९७. शब्दनयस्तु द्वे एव श्रुतज्ञानकेवलज्ञाने श्रयते, नान्यानि, तत्र युक्तिरावेदिता, एतन्मते मिथ्यादृष्टिरज्ञो वा जीवो नास्तीति, एतन्नयाश्रया प्रभाकरदर्शनप्रवृत्तिरिति । ३८८–१५

८९८. सूक्ष्मनिगोदापर्याप्तजीवेष्वपि सर्वनिकृष्टोपयोगो वर्तत इत्यत्र आचाराङ्गवृत्त्युक्तं 'सर्वनिकृष्टो जीवस्य' इत्यादिपद्यद्वयं दर्शितम् । ३८९–२७

८९९. अस्य मते ज्ञानाभावो न कुत्रापि जीवे इत्यत्र 'सव्वजीवाणं पीति वचनं प्रमाणमुपदर्शितम् । ३९० १

९००. "विण्णेया संसारी सव्वे सुद्धा हु सुद्धणया" इति दिक्पटवचनमपि एतन्नयापेक्षया समीचीनतामञ्चतीति चर्चितम् । ३९० ३

९०१. 'विण्णेया संसारी' इत्यस्या बृहद्द्रव्यसङ्ग्रहसत्काया गाथाया विवरणम् । ३९०–११

९०२. कर्मोपाधिनिरपेक्षशुद्धद्रव्यार्थिकेन कर्मोपाधिनिरपेक्षशुद्धपर्यायार्थिकेन 'विण्णेया संसारी' इति –

गाथासङ्घटना यथा न सङ्गता तथोपपादनपुरस्सरं दर्शिता । ३९१ १
९०३. सकलाध्यायार्थोपसंहारपराणां 'विज्ञायैकार्थपदानीत्यादिपञ्चकारिकाणां प्रथमाध्यायाऽन्तिमसमाप्यगतानां विवरणम् । ३९२ ६
९०४. तत्र 'विज्ञाय'इति प्रथमकारिकाविवरणम् । ३९२ ७
९०५. ज्ञानमिति द्वितीयकारिकाविवरणम् । ३९२–१०
९०६. ऋजुसूत्र इति तृतीयकारिकाविवरणम् । ३९३ १
९०७. मिथ्येति चतुर्थकारिकाविवरणम् । ३९४ १
९०८. इति नयवादा इति पञ्चमकारिकविवरणम् । ३९४ ७
९०९. उत्सर्गतः स्याद्वादाभिधानमेवोचितं, नयवादेष्वप्यपवादतः प्रवृत्तिरुचितेत्यत्र अशुद्धे वर्त्मनीति न्यायः 'सीसमईविप्फारण'इति सम्मतिगाथासंवादश्च । ३९९ ३
९१०. स्वरूपतोऽशुद्धत्वेऽपि फलतः शुद्धत्वं सर्वेषां नयवादानामिति रहस्यमावेदितम् । ३९६ १
९११. प्रशस्तिः, तत्र जिनेश्वरस्तुति–श्रीगुरुवरनेमिसूरीश्वरस्तुति–स्वगुरुनामस्वजन्मग्राममातृपितृस्वनामगर्भितगुरुहराम्बुजगतैतत्कृतिसमर्पणम् । ३९७ १

>:<

## ॥ तत्त्वार्थविवरणगूढार्थदीपिकाख्यटीकासाक्षिभूत ग्रन्थनामानि ॥

( १ )

| ग्रन्थपत्राङ्कानि | ग्रन्थपत्राङ्कानि |
|---|---|
| १. आचाराङ्गम् २०५, ३८२ | ७. प्रज्ञापनासूत्रम् १७७, २८९, २९० |
| २. समवायाङ्गम् ९७ | ८. दशवैकालिक २४६ |
| ३. स्थानाङ्गम् ३२० | ९. उत्तराध्ययनपाइयटीका ९० |
| ४. भगवतीसूत्रम् ४२, २८१, २८३, २८७, ३८२ | १०. बृहत्कल्पभाष्यम् ५२, ९७, १२८, १३५, १४२, १८७, १९६, २४८, २८९. |
| ५. नन्दीसूत्रम् १३७, १५६, १९८, २१४, २१५, २१७, २५१, २६०, २८२, ३८९. | ११. विशेषावश्यकभाष्यम् ४, ५०, ९६, ७६, ७९, ८४, ८९, ९०, ११७, ११८, ११९, १२६ १२८, १३०, १३३, १३६, १३८, १४५, १५५, १६१, १७१, १७६, १८०, १८१, १८२, १८४, १८८, १८९, १९०, १९१, १९५, १९६, १९९, २०० |
| ६. अनुयोगद्वारसूत्रम् १३४, १३५, १४०, १४१, १६६, २६४, २८६, ३१४, ३१५, ३१९, ३२३, ३३९, ३७०, ३७२, ३७३, ३८१, ३८६, ३८७. | |

ग्रन्थपत्राङ्कानि

२०४, २०६, २०७, २११, २१५, २१६, २२०, २२२, २२५, २२६, २२७, २३०, २३५, २३६, २४७, २४९, २५२, २५३, २५४, २५७, २५८, २६०, २६४, २६५, २६६, २६७, २७२, २७१, २८०, २८२, २८८, २९०, ३०२, ३११, ३१२, ३१९, ३२६, ३२८, ३२९, ३४०, ३४२, ३४६, ३६२, ३८१.

१२. श्रीआवश्यकभाष्यम् ५२, ६०, ६१, ६२, ६३, ७६, १५५, १६३, १७०, १८५, १८६, २४८, २९१, २८५.

१३. आवश्यकचूर्णिः १७९, १८६, २८३

१४. जीवसमासः १८१

१५. पिण्डनिर्युक्तिः १९३

१६. जीतकल्पः २४६

१७. प्रवचनसारोद्धारः ४३, ४४, १७६

१८. पञ्चसङ्ग्रहः ११६, १८१, २९३.

१९. पञ्चाशकम् ९०, १४७

२०. नवतत्त्वप्रकरणम् १२४.

२१. कर्मग्रन्थः २३४

२२. तत्त्वन्यायविभाकरः ७९

२३. धर्मसङ्ग्रहः ९१ ११९

२४. सद्धर्मविंशिकाऽन्त्यविंशिका ९८.

२५. प्रमाणनयतत्त्वालोकालङ्कारः १९९, २०३, २२२, २४४, ३१४, ३३५.

२६. स्याद्वादरत्नाकरः २०२, २८१, ३३५.

२७. शास्त्रवार्तासमुच्चयः १२७

२८. सम्मतितर्कः ५९. ९२, १०४, १३२, १५१, १५७, १५९, २०६, २३१, २५१,

ग्रन्थपत्राङ्कानि

३११, ३१२, ३२२, ३३७, ३४१, ३६०, ३६१, ३९५

२९. अष्टसहस्री १२९, २०३

३०. अध्यात्मसारः ३३३, ३३४

३१. न्यायखण्डखाद्यम् ४६, ८०

३२. जैनतर्कभाषा ३३६

३३. नयोपदेशः तद्वृत्तिश्च, ८६, १६०, २९५, ३०५, ३३६, ३३७, ३४०, ३४२, ३६१, ३७२, ३७४, ३७५, ३७६, ३८२,

३४. उपदेशरहस्यम् १०७

३५. ज्ञानार्णवः १८४, १८७

३६. नयरहस्यम् ३३८

३७. ज्ञानबिन्दुः २८९, २९५

३८. यशोविजयजीकृतद्वात्रिंशद्-द्वात्रिंशिका ६६, १०७

३९. अध्यात्ममतपरीक्षा ८९.

४०. उपदेशपदम् ८६, १०६, १४१, १२७

४१. षोडशकम् १४७

४२. योगशास्त्रवृत्तिः ३०

४३. अष्टकम् ६५

४४. अन्ययोगव्यवच्छेदिका ३१४

४५. तत्त्वार्थसूत्रम् ४४, ६२, ७२, १२८, १६९, १८६, ३००

४६. द्रव्यलोकप्रकाशः ८०, १८८, २११, २८२, २८३.

४७. योगदृष्टिसमुच्चयः २८६

४८. तत्त्वार्थश्लोकवार्तिकम् २८२, २८३, ३१२, ३३८

४९. तत्त्वार्थसूत्रवार्तिकम् २८०

ग्रन्थपत्राङ्कानि

५०. धवलाटीका १३८
५१ बृहद्द्रव्यसङ्ग्रहः ३८२, ३९०
५२. लघुनयचक्रम् ३२०
५३. आलापपद्धतिः ३२०
५४. वैशेषिकोपस्कारसूत्रम् ७, १११, १५६, १८५, २१३, ३१७
५५. कारिकावली १९६
५६. पक्षता ३४४
५७. कुसुमाञ्जलिः २४९
५८. व्युत्पत्तिवादः १३, १८, ३६, ७७, १८३
५९. न्यायसूत्राणि ७७, १४५, २८०
६०. श्रीहर्षखण्डनखाद्यम् ३४६
६१. वाक्यपदीयम् १२, २४, १२९, १४५, ३२८, ३३० ३३७
६२. मीमांसासूत्राणि ३५९
६३. मीमांसाश्लोकवार्तिकम् १०
६४. भगवद्गीता ४९, ६०, ७३
६५. सर्वदर्शनसङ्ग्रहः ४९
६६. वाराहिसंहिता ३००
६७. सिद्धहेमसूत्राणि १३, २४, २६, ३३, ६७, ७२, ७३, ३८९

ग्रन्थपत्राङ्कानि

६८. पाणिनीयसूत्राणि १३, २२, २३, २५, ३४, १५३, १९१, २८८, ३२७, ३२८, ३३१, ३४९, ३५४, ३७७, ३७८, ३७९, ३८३
६९. हैमधातुपारायणम् ३
७०. पातञ्जलमहाभाष्यम् १५, १७, १९, २६, ४०, १६१, ३२९, ३४९, ३५४, ३७८, ३७९
७१. वार्तिकम् २६, १६३, ३१८, ३५४
७२. प्रदीपटीका उद्योतटीका ३४५
७३. शब्देन्दुशेखरः २४५
७४ वैयाकरणभूषणसार : १५, १७, ३७७
७५. काव्यप्रकाशटीका ६६, ७७
७६. द्व्याश्रयमहाकाव्यम् ३८४
७७. कुमारसम्भवः ३९, ४०
७८. रघुवंशः ४०
७९. कादम्बरी ६५
८०. धनञ्जयकोशः २१
८१. मेदिनीकोशः २१
८२. अमरकोशः ९६, १८५

॥ श्रीतत्त्वार्थसूत्रप्रथमाध्यायविवरणगूढार्थदीपिका-
ऽऽख्या टीका तपागच्छाचार्यश्रीविजय-
दर्शनसूरिप्रणीता समाप्तिमगात् ॥

शुभं भवतु ॥

॥ ॐ अर्हं नमः ॥

॥ अनेकलब्धिनिधानभगवच्छ्रीमद्गौतमस्वामिने नमः ॥

॥ श्रीतपोगच्छाधिपति-शासनसम्राट्-श्रीविजयनेमिसूरि-भगवद्भ्यो नमः ॥

॥ श्रीवीतरागप्रमुस्याद्वादसिद्धान्तवाक्सुधापायि प्रभुतीर्थरक्षणोद्भूताद्भूताखिलभूमण्डलव्यापि-यशःकीर्त्तिलताविस्तार सकलसूरिसार्वभौम-भट्टारकाचार्य श्रीविजयनेमिसूरिपट्टाम्भोधिचन्द्र समवाप्तन्यायवाचस्पति-शास्त्रविशारदविरुद-श्रीविजयदर्शनसूरिकृत "गूढार्थदीपिका" सनाथीकृतेन अनुपलभ्यमानाद्यपञ्चमङ्गलकारिकाविवरणस्थानापन्न-सकलस्वपरसमयाब्धिपारीण भट्टारकाचार्यश्रीविजयनेमिसूरि पट्टोदयाद्रि-भानु समवाप्तसिद्धान्तवाचस्पति न्यायविशारदविरुद श्रीविजयोदयसूरि-सन्दृब्धाद्यभाष्यपञ्चमङ्गलकारिकाविवरणसंयोजित काशीविद्वद्वर्गप्रदत्त-न्यायाचार्यपदवीक-महोपाध्याय-श्रीयशोविजयगणि प्रणीतविवरणेन भूषितं स्वोपज्ञभाष्यसंवलितं वाचकावतंसश्रीमदुमास्वातिवाचकविरचितं ।

# "तत्त्वार्थाधिगमसूत्रम्"

***

तत्त्वार्थविवरणमङ्गलम्

ऐन्द्रम्पदं यदवधिगम्य धियाऽतिफल्गु, राज्ञायते यमवतामवनादराणाम् ।
तेजः स्वतः स्फुरतु तत् तमसां विहन्तृ, निर्धूतकर्मरजसां हृदयेऽर्हतान्नः ॥१॥

गूढार्थदीपिकामङ्गलपद्यानि

गिरा नावा पारं गमयति भवाब्धेः श्रितपदो,-
ञ्जिनो यो वन्द्यन्ते त्रिदशनरनाथा यमनिशम् ॥
सुधर्माख्यं बीजं भविकहृदि येनोप्तममलम्,
नृणां भिक्षा यस्मै बहु फलति दत्ताऽऽशिवफलम् ॥ १ ॥

यतो याता दूरं सपदि भविनां दुर्मतितति,
वचरिसैन्धोर्वाचस्पतिरपि न यस्यान्तमगमत् ॥

यथार्थस्याद्वादश्रुतिहतमदा वादिन इताः,
शिवं लीना यस्मिन् स हर जिन विघ्नं त्वमखिलम् ॥२॥ युग्मम् ॥

महातीर्थोद्धाराद्यगणितशुभव्याप्तिपरो,-
निशं सम्यग्ज्ञानामृतरसनिपायी भविनृणाम् ॥
सदा क्षान्तस्वान्तः सकलजनतागीतचरितः,
गुरुर्नेमिसूरिर्वितरतु मतिं बाधविकलाम् ॥ ३ ॥

बुधा यस्मै काश्यां विबुधविजयान्न्यायसुविशा-
रदं न्यायाचार्ये पदमनुशतग्रन्थकृतितः ।
ददू रम्यां मोहादिविजयजगद्व्याप्तयशसां,
यशःसंज्ञां धत्ते विजयचरमां तेन कृतिना ॥ ४ ॥

कृता तत्त्वार्थस्य प्रभुसमयतत्त्वामृतनिधे-
र्दशाध्यायोपर्युत्तमविवरणाद् भाग्यवशतः ।
अबाध्यस्याद्वादागमविमलतत्त्वाधिगमकृत्,
यदाद्याध्यायीयं गहनमवशिष्टं विवरणम् ॥ ५ ॥

क्व गाम्भीर्यं तस्य क्व च मम मतिः स्वल्पविषया,
तदीयान् गूढार्थान् विवरितुमनाः स्यां न च मनाक् ।
बुधानां हास्योऽहं तदुदितपथे यत्नकरणात्
स्वशक्त्या यत्नं तेऽभिदधति शुभे कर्मणि यतः ॥ ६ ॥

॥ त्रिभिर्विशेषकम् ॥

सुभाग्वार्धिश्रीमद्गुरुवरकृपैवातुलफले,-
त्यतस्तद्गूढार्थं विवरितुमहं कुण्ठितधियाम् ।
यते किञ्चिन् मोक्षाध्वसितिनयनिक्षेपप्रभृति-
रहस्यज्ञानार्थं गुरुचरणनिष्ठैकधिषणः ॥ ७ ॥

अथ संसारोदरवर्त्तिनां प्राणिनां तृष्णोपनीतभोगजन्यं सुखं विषमिश्रान्नभक्षणजन्यतृप्तिवदनन्तदुःखनिमित्तत्वात्परमार्थदृष्ट्या हेयमेव, उपादेयन्तु सुरासुरनरेन्द्रसुखेभ्योऽपि प्रकर्षकाष्ठावस्थानादनुत्तरत्वादनतिशयं दुःखासम्भिन्नत्वेन निराबाधं विनाशकारणाभावादनन्तं मनोज्ञविषयसंसर्गानधीनमत एव शुद्धात्मस्वभावमात्रसंसिद्धं प्राण्युपमर्दनजन्यलौकिकसुखवैपरीत्यादनाबाधकं मोक्षसुखमेवेत्युपदेष्टॄणां भगवतामात्यन्तिकैकान्तिकेष्टफलजनकत्वेन भावमङ्गलरूपत्वात्प्रणामो मुमुक्षुभिर्मोक्षमार्गप्रदर्शकस्यास्य शास्त्रस्य व्याख्यायाः प्राक् तस्याः श्रेयोरूपत्वात्त-

द्विघ्नोपशमनार्थं कर्त्तव्य एवेति मन्वान आचार्यो हृदि कृतं नमस्कारात्मकं भावमङ्गलं सदाचार-परम्परासम्प्राप्तकर्त्तव्यताकं शिष्यशिक्षायै ग्रन्थघटकीभूतं करोति " ऐन्द्रपदम् " इत्यादिना । ऐन्द्रम्पदमित्यादिश्लोकस्य अवनादराणां यमवतां यदवगम्य धिया ऐन्द्रम्पदमतिफल्गु संजायते, निर्धूतकर्मरजसामर्हतां स्वतः तमसां विहन्तृ तत्तेजो, नो हृदये स्फुरतु इत्यन्वयः ॥ १ ॥

अवनादराणाम् " अव रक्षण गति कान्ति प्रीति–तृप्त्यवगमन–प्रवेश–श्रवण–स्वाम्यर्थ याचन–क्रियेच्छा–दीप्त्यवाप्त्यालिङ्गन–हिंसा दहन–भाववृद्धिषु एकोनविंशतावर्थेषु " इति हैमधातुपारायणवचनात् ' अवने ' जीवरक्षणे, अवने गतौ मोक्षमार्गप्रयाणे यद्वा " ये गत्यर्थास्ते ज्ञानार्थाः " इति वचनाद् बोधे शास्त्रीयज्ञाने अथवा अवने अन्तर्भावितण्यर्थतया बोधने भविकजनाववोधने, अवने श्रवणे गुर्वादिसदुपदेशाकर्णने अन्तर्भावितण्यर्थतया योग्यजनानां श्रावणे वा आदरः समीचीना प्रवृत्तिर्येषां तेषामित्यर्थः । एवं यथोचितमन्येऽपि प्रकारास्तत्रधियैव भावनीयाः । यमवताम् इन्द्रियादिनिग्रहवताम् । अथवा पञ्चमहाव्रतादि-नियमपरिपालनपराणां साधूनाम्, यदवगम्य आर्हतीयं यज्ज्ञानात्मकं तेजः शास्त्रचक्षुषा ज्ञात्वा, धिया शास्त्रतत्त्वपर्यालोचनजनितातिशायितबुद्ध्या, ऐन्द्रपदम्–इदु परमैश्वर्ये इन्दति-स्वर्गीयैश्वर्यमनुभवतीतीन्द्रः, तस्येदं तत्सत्कं पदमित्यर्थः । अतिफल्गु–अतिनिस्सारम्, सञ्जायते प्रतिभासते, अन्यत्तुच्छं प्रतिभासत इति किमु वक्तव्यमिति भावः । आवृत्त्या सर्वषष्ठ्यन्तविशेषणानि ' अर्हतां ' इत्यत्रापि योज्यानि । तथा च अवनादराणाम् अवने जीवानां कार्ययोगेन रक्षाकरणे वाग्योगेन रक्षाकारणे यद्वा अवने ज्ञानकारणे भविकजनाववोधने अथवा अवने सर्वभाषापरिणामिन्या योजनगामिन्या भाषया जगत्तत्त्वानां श्रावणे आदरो येषां तेषामित्यर्थः, यमवतां इन्द्रियादिसंयमनवताम्, निर्धूतकर्मरजसां समूलकाषं कषितज्ञानावरणादिघातिकर्मचतुष्टयानाम् । अर्हताम् अर्हन्ति पूजामित्यर्हन्तः तेषाम्, केवलज्ञान-भास्वत्प्रकाशितत्रिलोकाखिलपदार्थसार्थचतुस्त्रिंशदतिशयविज्ञातमाहात्म्यविशेषाशोकाद्यष्टप्राति-हार्यविभूषितदिग्वलयानां जिनानाम् । स्वतः–बाह्यसामग्रीनिरपेक्षम्, तमसां विहन्तृ-भविजीवव्याप्ताज्ञानान्धकाराणां विनाशकम्, तत्तेजः–लोकालोकप्रकाशकज्ञानतेजः, तेजसा ह्यन्धकारविध्वंस उचित एव, नः–अस्माकं, मादृशजनानां, हृदये–अन्तःकरणे, स्वतः-स्फुरतु–विकसतु अज्ञानान्धकारविध्वंसकं भवत्वित्यर्थः । अत्रार्हतां तेजसि ज्ञानस्वरूपे बाह्यतमोविहन्तृत्वासम्भवात् तमस्त्वेनाऽज्ञानाध्यवसायाद्रूपकातिशयोक्तिरलङ्कारः । वसन्ततिलका-वृत्तम् " उक्ता वसन्ततिलका तभजाजगौगः " इति तल्लक्षणात् ।

योल्लासिता भगवता त्रिपदी पटिष्ठा, स्याद्वादिनां विजयदाऽर्थमतो सुभङ्गा ॥
सा भारती गणधराद्युपनीतमार्गा, सन्नीतिमानभजना जयताद्जस्रम् ॥२॥

योल्लासितेति भगवता उल्लासिता या त्रिपदी पटिष्ठा स्याद्वादिनां विजयदा, अर्थमतो

सुमङ्गा गणधराद्युपनीतमार्गा सन्नीतिमानभजना सा भारती अजस्रं जयतात् इत्यन्वयः ॥ २ ॥ भगवता इस्सरिय रूव–सिरि–जस,–धम्म–पयत्ता मया भगा[ख्खा]। ते तेसिमसामण्णा, संति जओ तेण भगवंतो ॥ १०४८ ॥ इति विशेषावश्यकभाष्यवचनाद् ऐश्वर्यादिषड्थवता, उल्लासिता "अत्थं भासेइ अरहा" इति वचनात् वाग्योगेन प्रकटीकृता, त्रिपदी "उप्पन्नेइ वा विगमेइ वा धुवेइ वा" इत्येवं मातृकापदत्रयलक्षणा, पटिष्ठा जीवानाम् "उत्पादव्ययध्रौव्ययुक्तं सदित्याकारे निखिलपदार्थतत्त्वावबोधेऽतिनिपुणा, स्याद्वादिनाम् अवगत परस्परसापेक्षभेदाभेदनित्यानित्यत्वाद्यविरुद्धानेकान्ततत्त्वानां, विजयदा तत्तत्कुनयावलम्ब्येकान्ततत्तन्मतकल्पनावादिविजयदानसमर्था, अर्थमतौ अनेकान्तात्मकानन्तार्थबोधकरणे, सुमङ्गा सुष्ठु भङ्गाः प्रकारा यस्यां सा तथा, परस्परसाकाङ्क्षसत्त्वासत्त्वादिसप्तधर्मप्रकारकबोधजनकतापर्याप्त्यधिकरणसप्तभङ्गघटितेति यावत् । गणधराद्युपनीतमार्गा गणधरादिभिरुपनीतो द्वादशाङ्गीरूपतया निरूपितो मार्गो विस्तारपथो यस्याः सा तथा, श्रीप्रभुमुखात्पुनः पुनः प्रणिपत्य पृच्छालक्षणनिषद्यात्रयेण त्रिपदीमवाप्य तत्प्रभावतो ज्ञानावरणकर्मक्षयोपशमेन तदानीमेवाऽन्तर्मुहूर्तकालमात्रेण पूर्वभवभावितमतिना श्रीगणधरभगवता कृताया द्वादशाङ्ग्यास्त्रिपदीविस्ताररूपत्वात्, अथवा गणधरादीनामुपनीतः प्रापितो मार्गो यया सा तथा, त्रिपद्याः प्रवचनमूलत्वात् तद्द्वारैव गणधरादीनां चतुर्दशपूर्वरचनमार्गप्राप्तेः, सन्नीतिमानभजना–नीतिर्नयो मानम्प्रमाणं तयोर्द्वन्द्वे नीतिमाने, सती समीचीने नीतिमाने इति सन्नीतिमाने सुनयप्रमाणे इति यावत्, ताभ्यां भजना अनेकान्तवादरूपा या सा तथा, सुनयप्रमाणप्रयुक्तानेकान्तवादरूपा, अथवा सती विद्यमाने नीतिमाने नयप्रमाणे यस्यां सा सन्नीतिमाना, सा चाऽसौ भजना अनेकान्तवादरूपा सा तथा, अथवा सन्नीतिमानाभ्यां भज्यते सेव्यते प्रमाणीक्रियते या सा सन्नीतिमानभजना, भारती अर्हन्मुखकमलप्रभाषितस्याद्वादब्राह्मीरूपा, अजस्रं सन्ततं जयतात् सर्वोत्कर्षेण वर्त्तताम् ॥ २ ॥

**स्याद्वादमुद्रितपदार्थविवेचनेद्धा, यस्याऽनघा मतिरकुण्ठविभा नयौघे ।**
**श्रीनेमिसूरिरिह मङ्गलमातनोतु, सोऽयं गुरुश्चरणगे मयि सानुकम्पः ॥३॥**

स्याद्वादेति स्याद्वादमुद्रितपदार्थविवेचनेद्धा अनघा नयौघे अकुण्ठविभा यस्य मतिः सोऽयं नेमिसूरिः गुरुः चरणगे मयि सानुकम्पः मङ्गलम् आतनोतु इत्यन्वयः ॥ ३ ॥ स्याद्वादमुद्रितपदार्थविवेचनेद्धा स्याद्वादेन अनेकान्ततत्त्वेन मुद्रिता अङ्किता ये पदार्थाः जीवाजीवादितत्त्वानि, तेषां विवेचने निरूपणे, इद्धा देदीप्यमाना अनघा निरवद्यरूपा, दोषशून्या, अत एवाखर्वगर्वगर्विष्ठवाद्यप्रधृष्या नयौघे संग्रहादिसप्तनयप्रपञ्चे, अकुण्ठविभा–अप्रतिहतप्रभावा यस्य मतिर्बुद्धिः सोऽयं वक्त्रदृष्टिसमुखीभूतः श्रीनेमिसूरिर्गुरुः चरणगे–चारित्रवर्त्तिनि अथवा गुरुपादोपसेविनि, एतेन शिष्यस्य सुगुरु-

पादोपसेवित्वगुणो ध्वन्यते, मयि सानुकम्पः सदयः कृपार्द्रीभूत इति यावत् मङ्गलं कल्याणमातनोतु–विस्तारयतु ॥ ३ ॥

**श्रीमद्यशोविजयवाचकपुङ्गवानां, तत्त्वार्थवृत्तिरपराकलितार्थभावा ।**
**क्वाऽखण्डमाननयमार्गजुषां क्व तस्यां, विच्छेदितांशपरिपूरणमस्मदादेः ॥४॥**

श्रीमदिति अखण्डमाननयमार्गजुषां, श्रीमद्यशोविजयवाचकपुङ्गवानां, अपराकलितार्थभावा तत्त्वार्थवृत्तिः क्व, तस्यां अस्मदादेर्विच्छेदितांशपरिपूरणं क्व इत्यन्वयः । अस्यायमर्थः– **अखण्डमाननयमार्गजुषां** माने प्रत्यक्षपरोक्षप्रमाणे च नयाः सङ्ग्रहादिसप्तनयाश्चेति माननयाः, न खण्ड्यन्ते तत्तद्वादिभिः नाऽप्रमाणीकर्त्तुं शक्यन्ते इत्यखण्डाः, अखण्डाश्च ते माननयाश्चेत्यखण्डमाननयास्तेषां, मार्गः सुसूक्ष्मविचारपथस्तं जुषन्ते सेवन्ते जानन्ति प्रतिपादयन्ति वेत्यखण्डमाननयमार्गजुषस्तेषां, अखण्डमाननयमार्गस्य विज्ञानां, प्रतिपादकानां वा । **श्रीमद्यशोविजयवाचकपुङ्गवानां** वाचकेषूपाध्यायेषु पुङ्गवाः श्रेष्ठा इति वाचकपुङ्गवाः, श्रीमन्तः ज्ञानादिलक्ष्मीशालिनश्च ते यशोविजयाश्चेति श्रीमद्यशोविजयाः, ते च ते वाचकपुङ्गवाश्चेति ते तथा, तेषां, **अपराकलितार्थभावा,** अर्थानां जीवादिपदार्थानां भावः परमार्थतत्त्वमित्यर्थभावः, अपरैः स्याद्वादतत्त्वानभिज्ञैः मिथ्यावादिभिः, अकलितोऽज्ञातोऽर्थभावो यस्याः सा तथा, यद्वा अर्थश्च भावश्चेत्यर्थभावौ शक्यार्थतात्पर्यार्थावितियावत्, अपरैरकलितावर्थभावौ यस्यास्सा तथा, अथवा न परैः अपरैः, स्वीयैः जैनतत्त्वज्ञैः आसमन्तात् कलितो ज्ञातोऽर्थभावो कलितौ ज्ञातावर्थभावौ वा यस्याः सा तथा, अथवाऽपरेति पदच्छेदः, भिन्नेत्यर्थः, आकलितर्थभावेत्यस्य पूर्ववद्व्याख्यानम् । एतेन न त्वस्येयमेव नव्या टीका किन्तु तदानीमप्यन्ये टीके विद्येतेऽपीति ध्वनितम् । क्व ? **तस्यां** तत्त्वार्थवृत्तौ **अस्मदादेः विच्छेदितांशपरिपूरणं**–त्रुटितभागसम्पूर्तिर्मादृशजनस्य क्व ? अनयोः समकक्षत्वं न घटत इतिभावः । अत्र क्वेतिपदं निरभिमानतासूचकम्, अत्र क्वेतिपदेन वक्तरि सामर्थ्येऽपि असामर्थ्यसूचनादतिशयोक्तिरलङ्कारः ॥४॥

**याः कारिकाः प्रथममङ्गलतां व्रजन्त्यः, पञ्चापि तद्विवृतिसंस्कृतिमण्डितार्थाः ।**
**नो दृष्टिपद्धतिमिता विवृणोति तत्ताः, प्रीत्यै सतामुदयसूरिरुपात्तबुद्धिः ॥५॥**

याः कारिका इति तद्विवृत्तिसंस्कृतिमण्डितार्थाः प्रथममङ्गलतां व्रजन्त्यो याः पञ्चापि कारिका दृष्टिपद्धतिं नो इताः तत् ता उपात्तबुद्धिरुदयसूरिः सतां प्रीत्यै विवृणोतीत्यन्वयः ॥ ५ ॥

**तद्विवृत्तिसंस्कृतिमण्डितार्थाः**–विवृतिरेव संस्कृतिः विवृतिसंस्कृतिः तस्य यशोविजयवाचकपुङ्गवस्य विवृतिसंस्कृतिरिति तद्विवृतिसंस्कृतिः । अत्र षष्ठ्यर्थः कार्यत्वलक्षणः सम्बन्धः, तथा च श्रीयशोविजयवाचकपुङ्गवनिष्ठहेतुत्वस्य स्वनिरूपितजन्यतासम्बन्धेन विवृतिसंस्कृतावन्वयात्तत्कर्तृकविवृतिसंस्कृतिरित्यर्थः । तया मण्डिताः सुनिश्चिता अर्था अभिधेया यासां ताः

**तथोक्ताः, प्रथममङ्गलता भजन्त्यो ग्रन्थादौ मङ्गलतां गताः, याः पञ्चापि कारिकाः, नो दृष्टपद्धतिमिताः**—अस्माकं दृष्टिगोचरतां नैव गताः, कालानुभावेन विनष्टत्वात्, **तत्** तस्माद्धेतोः **ताः, सतां** सत्पुरुषाणां **प्रीत्यै** लक्षणया जिज्ञासूनां तदर्थज्ञानार्थम्, **उपात्तबुद्धिः** निरुपकृतोपकारिश्रीगुरुकृपया तद्विषये लब्धबुद्धिप्रसरः—**उदयसूरिर्विवृणोति** व्याख्याति ॥ ५ ॥

इह धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानां मोक्ष एव परमपुरुषार्थः, तदर्थमेव चानेकविधदुःखमयभवोद्विग्नमनसः क्लेशार्तिहेतुपरिजिहीर्षवः सुखानन्दनिमित्तोपादानलालसाः प्रेक्षावन्तः क्रियासु प्रवर्तमाना दृश्यन्ते । तन्त्रप्रणेतारोऽपि स्वस्वाभिमततत्त्वनिरूपणपरमप्रयोजनतया मुक्तिमेवोररीकृत्य तत्तद्दर्शनान्यारचयन्ति स्म । यतः “ अथातो धर्मं व्याख्यास्यामः ” “ यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ”

**इह धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानां मोक्ष एव परमपुरुषार्थ इति ।** धर्मार्थकामानां त्रयाणां पुरुषेणाऽर्थ्यते प्रार्थ्यतेऽभिलष्यत इति पुरुषार्थ इति व्युत्पत्तिसिद्धपुरुषाभिलाषाविषयत्वलक्षणपुरुषार्थत्वेऽपि तत्र सुखेच्छयैव जनानां प्रवृत्तेस्तदिच्छा सुखेच्छाधीनैवेत्यन्येच्छानधीनेच्छाविषयत्वं मुख्यपुरुषार्थत्वमिति लक्षणसङ्गमनाभावात्ते न परमपुरुषार्थाः किन्तु मोक्ष एव, तत्र गतानां दग्धाशेषकर्मबीजानां चतुर्निकायसंसारक्षेत्रे प्ररोहाभावादपुनरावृत्तितोऽक्षयशश्वत्सुखरूपात् तस्मान्नान्यत्किमपि प्राप्यमित्यन्येच्छानधीनेच्छाविषयत्वादिति भावः । **अनेकविधदुःखमयभवोद्विग्नमनस इति**—अनेन दुःखनिवृत्तौ प्रतियोगिविधया कारणीभूतस्य दुःखस्य जगति सत्त्वं प्रौढोद्वेगभावेन जिहासितत्वं चाऽनित्यत्वेन शक्यसमुच्छेदत्वं च प्रदर्शितम्, अन्यथा दुःखनिवृत्तिरेवाऽशक्या स्यादिति भावः । अनिष्टकार्यप्रहाणेच्छायास्तत्कारणप्रहाणेच्छाम्प्रति कारणत्वेन दुःखपरिजिहीर्षया तत्कारणपरिजिहीर्षावन्तो भवन्तीति सूचयितुमाह—**क्लेशार्त्तीति** । अनेकविधदुःखमयभवोद्विग्नमनसो दुःखजिहासामात्रेण प्रवर्त्तेरन् तदाऽऽत्यन्तिकी दुःखनिवृत्तिरेव मुक्तिः स्यात्, न तु परमसुखानन्दरूपा, न चैवमित्यावेदयितुं विशेषणान्तरमाह—**सुखानन्देति**, यद्यस्य प्रबलतरविरोधि तत्तेन नश्यति यथाऽग्निना शैत्यं, दुःखविरोधी च सुखात्मकाऽऽनन्द इति तेन तन्नाशात् तदर्थं तन्निमित्तोपादित्सव इत्यर्थः । मोक्षस्यैव परमपुरुषार्थत्वं तन्त्रान्तरीया अप्यविवादेन प्रतिपादयन्तीत्युपपादनायाह—**तन्त्रप्रणेतारोपीत्यादि । अथाऽतो धर्मं व्याख्यास्याम इति**—अथ शब्दस्यात्राऽऽनन्तर्यमर्थः, शिष्यजिज्ञासानन्तरमित्यर्थः । **अत इति**—यतः श्रवणादिपटवोऽनसूयकाश्चाऽन्तेवासिन उपसन्नाः, अतः कारणाज्ज्ञाननिदानं धर्मं व्याख्यास्यामो निरूपयिष्याम इत्यर्थः । यद्वाऽथशब्दो मङ्गलार्थः

“ ओङ्कारश्चाऽथशब्दश्च, द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ, तेन माङ्गलिकावुभौ ॥ १ ॥ ”

इति स्मरणात् । एतेन शास्त्रं प्रणयता महर्षिणा मङ्गलाचरणं शास्त्रादौ सूचितम् । धर्मस्य परमपुरुषार्थसाधनत्वं दर्शयंस्तल्लक्षणमाह

इत्यादिसूत्रयतौलूक्येन " प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति सूत्रयताऽक्षपादेन "अथातो ब्रह्मजिज्ञासा" इति सूत्रयता वेदव्यासेन ' दुःखत्रयाभिघाता–ज्जिज्ञासा तदपघातके हेतौ । दृष्टे सापार्था चे–न्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥ ' इति सूत्रयतेश्वरकृष्णेन, अन्येन च ग्रन्थादौ मुक्तिरेव परमप्रयोजनतयाऽऽदृता । श्रुतिरपि परैः प्रमाणमूर्द्धाभिषिक्ता–" आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये " " आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यः " " न स पुनरावर्त्तते

**" यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति । "** अभ्युदयस्तत्त्वज्ञानं, निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिः, तदुभयं यतः स धर्मः । अभ्युदयद्वारकं निःश्रेयसमिति मध्यमपदलोपिसमासः, पञ्चमीतत्पुरुषो वा, यद्वाऽभ्युदयः स्वर्गो निःश्रेयसं मोक्षस्तयोः सिद्धिरुत्पत्तिर्यतस्स धर्मः, अत्र धर्मस्य स्वर्गसाधनता साक्षादेवाऽपवर्गसाधनता तु तत्त्वज्ञानद्वारेति विशेष इत्यर्थः। औलूक्येनेति वैशेषिकदर्शनप्रणेत्रा कणभक्षापरनामकणादमुनिनेत्यर्थः । **दुःखत्रयाभिघातादित्यादि**–दुःखानामाध्यात्मिकाधिभौतिकाधिदैविकाख्यानामन्तःकरणवर्त्तिनां रजःपरिणामानां त्रयेण चेतनाशक्तेः प्रतिकूलवेदनीयतयाऽभिसम्बन्धोऽभिघातस्तस्मात्तथा, अत्र हेत्वर्थे पञ्चमीति तदर्थस्य दुःखत्रयाभिघातनिष्ठहेतुत्वस्य स्वनिरूपितजन्यतासम्बन्धेन जिज्ञासायामन्वयः । कस्मिन् विषये जिज्ञासेत्याशङ्कायामाह–**तदपघातक** इति । तस्य दुःखत्रयस्याऽपघातको निवर्तकस्तस्मिन्नित्यर्थः, अत्र शङ्कते –**दृष्टे साऽपार्था चेदिति** । दुःखत्रयोच्छेदके दृष्टोपाये शक्ये सति अनेकजन्माभ्यासपरम्परायाससाध्यतयाऽतिदुष्करेऽदृष्टोपाये सा जिज्ञासाऽपार्था निरर्थिकेति चेदित्यर्थः, तन्निराकरोति **नेति** । निषेधे हेतुमाह–**एकान्तेति** । एकान्तो दुःखनिवृत्तेरवश्यम्भावः । अत्यन्तो निवृत्तस्य दुःखस्य पुनरनुत्पादो, दृष्टोपाये सति तयोरेकान्तात्यन्तयोरभाव एकान्तात्यन्ततोऽभावस्तस्मात्तथेति । एतदुक्तं भवति यथाविधिरसायनादिकामिनीमन्त्राद्युपयोगेऽपि दुःखत्रयस्य निवृत्तेरदर्शनादनैकान्तिकत्वम्, निवृत्तस्यापि तस्य पुनरुत्पत्तिदर्शनादनात्यन्तिकत्वमिति हेतोर्नापार्था जिज्ञासेति । अनया कारिकयाऽत्यन्तदुःखनिवृत्तिरेव मोक्षस्तदर्थं तद्धेतौ यतितव्यमिति सूचितामिति भावः। **आचार्यवान् पुरुषो वेदेत्यादि**। **तस्य** उत्पन्नतत्त्वज्ञानस्य, **चिरं** विलम्बः कैवल्यप्रागभाव इति यावत्, **न विमोक्ष्य इति**–न विमोक्ष्यते उपात्तकर्मराशेः सकाशात्फलोपभोगेनेति शेषः । **अथेति**–प्रारब्धकर्मनाशानन्तरमित्यर्थः । **सम्पत्स्ये** सम्पत्स्यते कैवल्येन मुक्तो भवतीत्यर्थः, छन्दसि कालपुरुषादीनामनियमाद् व्यत्यय इति ध्येयम् । **श्रोतव्यः** शास्त्राधीनश्रवणपदवाच्यशाब्दबोधरूपात्मज्ञानविषयः । **मन्तव्यः** शास्त्रादिबोधितवैधर्म्यलिङ्गकात्मपक्षकेतरभेदानुमितेरात्मा देहादिभिन्नः, अनादित्वात् यन्नैवं तन्नैवं, इत्याकारिकाया विषयः, **निदिध्यासितव्यः** श्रवणादिमूलकसंस्काराधीनतत्समानविषयकध्यानाभ्यासविषयः । **साक्षात्कर्त्तव्यः**–आत्मतत्त्वसाक्षात्कारविषयः । **न स पुनरावर्त्तते** इति–न स पुनश्शरीरी भवतीत्यर्थः, न पुनर्देहेन्द्रियादिसम्बन्धादात्मनो भोग इति भावः ।

न स पुनरावर्तते " भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि, तस्मिन् दृष्टे परावरे ॥ १ ॥" इत्यादिका मुक्तेरेव परमप्रयोजनत्वमुपपादयन्ती विलोक्यन्ते, मुक्तिश्च समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसरूपा समानाधिकरणदुःखप्रागभावासमानकालीनदुःखसाधनध्वंसरूपा आत्यन्तिकदुःखप्रागभावरूपा दुःखात्यन्ताभावरूपा दुःखध्वंसस्तोमरूपा अनुपप्लवचित्तसन्ततिरूपा स्वात्म...रूपा

**भिद्यते हृदयग्रन्थि-**रित्यादिश्लोकस्याऽयमर्थः—**तस्मिन्** ब्रह्मणि, **परावरे-**परेऽपरे च, **दृष्टे** साक्षात्कृते, **अस्य-**परमात्मसाक्षात्कारिणः, **हृदयग्रन्थिः** आत्मशरीरयोरभेदसंस्कारः, **भिद्यते** विनश्यति, ईश्वरसाक्षात्कारे जाते तत्सामग्रीनियतसामग्रीजन्यतया जीवात्मसाक्षात्कारो भवत्येव, अतस्तद्विपरीतगोचरात्मशरीराद्यभेदसंस्कारो नश्यतीति हृदयम् । **छिद्यन्ते सर्वसंशया इति** । ईश्वरसाक्षात्कारे सति योगजधर्मबलेन दोषविरहान्निखिलपदार्थानां यथार्थ एव साक्षात्कारो जायते, ततः कोऽपि संशयो भवितुं नैवाऽर्हति, संशयस्यैककोटौ भ्रमत्वनियमात्, यथार्थसाक्षात्कारस्य च भ्रमविरोधित्वादिति भावः । **कर्माणि** सञ्चितादृष्टानि, **क्षीयन्ते** नश्यन्तीत्यर्थः, नाशकान्तरविरहेण परमात्मसाक्षात्कारेणैवाऽदृष्टनाश इत्यर्थः । नैयायिकमतमाह—**समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसरूपेति** स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसरूपेत्यर्थः । दुःखध्वंसस्येदानीमपि सत्त्वेन तद्वतामस्मदादीनामपि मुक्तत्वापत्तेर्वारणाय वृत्त्यन्तम् । मुक्तात्मकदुःखध्वंसस्याऽन्यदीयदुःखप्रागभावसमानकालीनत्वान्मुक्तात्मनामप्यमुक्तत्वं स्यादिति तद्वारणाय स्वसमानाधिकरणत्वं प्रागभावस्य विशेषणम्, प्रतियोगितानिरूपकत्वसम्बन्धेन प्रागभावस्य दुःखं विशेषणं तु संयोगादिप्रागभावमादायाऽसम्भववारणायेति । दुःखाभावेच्छया दुःखसाधनध्वंसे प्रवृत्तेस्स एव मुक्तिरित्यभ्युपगच्छतां मतमाह—**समानाधिकरणदुःखप्रागभावासमानकालीनदुःखसाधनध्वंसरूपेति** । प्रभाकरमतमाह—**आत्यन्तिकदुःखप्रागभावरूपेति** । अत्राऽऽत्यन्तिकत्वं स्वसमानाधिकरणदुःखासमानकालीनत्वं स्वसमानाधिकरणयावदधर्मनाशविशिष्टत्वं वा, तेन संसारितादशायां नातिप्रसङ्गः । न चाऽनादित्वेनाऽसाध्यत्वान्नायं पुरुषार्थ इति वाच्यं प्रतियोगिजनकाधर्मनाशमुखेन तस्य कृतिसाध्यत्वात्, न च प्रतियोग्यजनकत्वे प्रागभावत्वक्षतिः, यतः प्रतियोगिजनकोऽभावः प्रागभाव इति लक्षणे जनकत्वं स्वरूपयोग्यतामात्रं, न तु फलोपधानरूपं, सामग्री वै जनिकेति नियमात् सामग्रीविरहात् पूर्वकाल इवोत्तरकालेऽपि प्रतियोग्यजननेऽपि न प्रागभावत्वक्षतिः, सामग्रीकाले प्रतियोगिजनकत्वेनोक्तलक्षणसङ्गतेरिति भावः । दुःखेनात्यन्तं विमुक्तश्चरतीतिश्रुतिमवलम्बमानानाम्मतमाह—**दुःखात्यन्ताभावरूपेति** प्राचाम्मते प्रतियोगिनेव ध्वंसप्रागभावाभ्यामप्यत्यन्ताभावस्य विरोधाद् दुःखात्यन्ताभावो नाऽऽत्मनिष्ठस्तथापि लोष्ठादिनिष्ठ एवाऽऽत्मनि साध्यते, यतस्तस्य ... ध्वंस एव सम्बन्धोऽभ्युपगत इति तस्य साध्यत्वेन तद्द्वारा नित... सति दुःखेनात्यन्तं विमुक्तश्चरतीति श्रुतिरप्युपपादिता ...

प्रकृतितद्विकारोपधानविलयसमुद्भूतपुरुषस्वरूपावस्थानरूपा आत्यन्तिकचित्तसन्ततिविच्छेदलक्षणा आत्महानिलक्षणा नित्यनिरतिशयसुखाभिव्यक्तिलक्षणाऽविद्यानिवृत्त्युपलब्धीविज्ञानसुखात्मकब्रह्मलक्षणा वा तीर्थान्तरीयाऽभिमता प्रतिपक्षयुक्तिविक्षोभितात्मस्वरूपाऽऽत्मलाभाद् विभ्यती परमपुरुषार्थतामनासादयन्ती च मा भवतु प्रेक्षावद्भिर्मुमुक्षुभिर्गवेषणीयसाधननिकुरम्बा, परन्तु अनेकान्तभावनाजनिततत्त्वज्ञानोपबृंहित-

रिति केषाञ्चिन्मतमाह–**दुःखध्वंसस्तोमरूपेति** । अत्र स्तोमपदोपादानान्नैकदुःखध्वंसकाले मुक्तिव्यपदेशापत्तिः, तत्तदात्मवर्त्तियावद्दुःखध्वंससंवलनकाल एव तथाऽभ्युपगमादिति भावः ।

**चित्तमेव हि संसारो, रागादिक्लेशवासितम् ।**
**तदेव तैर्विनिर्मुक्तं, भवान्त इति कथ्यते ॥ १ ॥**

इति वचनस्वारस्याद्रागद्वेषविनिर्मुक्ता चित्तसन्ततिर्मुक्तिरित्यभ्युपगन्तॄणां बौद्धानां मतमाह–**अनुपप्लवचित्तसन्ततिरूपेति** । मतान्तरमाह–**स्वातन्त्र्यरूपेति** । यथा पुष्करपलाशमापो न श्लिष्यन्ति तथा पुरुषमप्यपरिणामित्वान्मुख्यवृत्त्या न कर्म श्लिष्यति, अत एव न विश्लिष्यतीति तस्य बन्धमोक्षौ न भवतः, मूलकारणीभूतायाः प्रकृतेस्तद्विकारस्य च महत्तत्त्वस्याऽऽत्मना सह सम्बन्धात्तयोर्भेदाग्रहे कर्तृत्वाद्यारोपादात्मनस्संसारः, तद्वियोगाद्भेदग्रहे पुरुषस्य चैतन्यात्मनाऽवस्थानं मोक्ष इत्युपचर्यत इति साङ्ख्यमतोपदर्शनायाऽऽह–**प्रकृतितद्विकारोपधानविलयसमुद्भूतपुरुषस्वरूपावस्थानरूपेति** । न द्रव्यस्य न वा पर्यायस्य कस्यचिदात्मस्थानाभिषिक्तस्य मुक्ताववस्थानमिति सकलशून्यवादिमतमाह आत्यन्तिकचित्तेति । चार्वाकसम्मतमुक्तिमाह **आत्महानिलक्षणेति** । तौतातिक( कुमारिलभट्ट )मतमाह **नित्यनिरतिशयेति** । वेदान्तिमतमाह–**अविद्येति** । ननूक्ततत्तद्वाद्यभ्युपगतोक्तलक्षणा मुक्तिः किं प्रमाणभूता किं वा नेत्याशङ्कायामाह–प्रतिपक्षयुक्तीति । उक्ततत्सर्वमतनिराकरणयुक्तयो विस्तारभयान्नेह प्रतन्यन्ते, विशेषार्थिना न्यायालोकादिग्रन्थादवसेयाः । अवच्छेदकतासम्बन्धेनाऽऽत्मविशेषगुणम्प्रति तादात्म्यसम्बन्धेन शरीरस्य कारणीभूतस्याऽभावेन मुक्तौ न तदुत्पत्तिरित्यशेषविशेषगुणोच्छेदलक्षणा मुक्तिर्नैयायिकैरभ्युपगता तथा जैनैरप्युररीक्रियते किं वाऽन्यथेत्याशङ्कानिवृत्त्यर्थमाह–**तज्जन्यपरमानन्दरूपा वेति** । यस्स्वाभाविकगुणः परायत्तावृत्तस्वभावः स परस्याऽऽच्छादकस्य समूलक्षये सति सर्वथैवाऽऽविर्भवति, यथा सूर्यस्य प्रकाशगुणः, परमानन्दगुणोऽपि तथेति तदावारकस्य कर्मणस्समूलकाषं कषणे मुक्तौ सोऽखण्डरूपतया प्रादुर्भवतीति तदात्मैव मुक्तिः, सोपाधिकानन्दगुणवन्निरुपाधिकपरमानन्दगुणोऽपि न नैमित्तिको, येन निमित्ताभावे नैमित्तिकस्याऽपि तस्याऽभावो मुक्तौ स्यात्, किन्तु निरावरणात्ममात्रजन्य एवेति तज्जन्यस्य तस्य नाशकाभावान्न मुक्तावभाव इति भावः । उक्तञ्च वाचकचक्रवर्तिना "देहमनोवृत्तिभ्यां, भवतः शारीरमानसे दुःखे । तदभावात्तदभावे, सिद्धं सिद्धस्य सिद्धिसुखम् ॥ १ ॥" इति । सा मुक्तिः केन कारणेन साध्येत्यत आह–**अनेकान्तभावनेत्यादि** । मुक्तेरस्वरूपविशेषण-

शैलेशीकरणरूपप्रयत्नसाध्या तु कृत्स्नकर्मक्षयरूपा तज्जन्यपरमानन्दरूपा वा मुक्तिः पारगतागमसमुद्वीक्षिता युक्तिस्तोमोन्नीतपरमपुरुषार्थभावा स्वानुरागानुषक्तचित्तैरन्वेषणीयसाधनैव, भ्रमप्रमादविप्रलिप्सादिदोषास्पदपुरुषोपदर्शितापथविप्रधावितसम्मुग्धजनाऽलब्धपदापि सा शङ्काद्यतीचारानालिङ्गितनिसर्गाधिगमान्यतरसमुद्भवतत्त्वार्थश्रद्धानात्मकप्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणविशुद्धसम्यग्दर्शनतद्विशुद्धज्ञानादिभाग्भिः पारम्पर्येणाध्यवसायविशुद्धिस्थानान्तराण्यवाप्नुवद्भिः सुप्रापैव । निखिलकर्मक्षयोद्भूतरूपत्वादेव चास्याः शश्वदप्रतिपातादात्यन्तिकत्वम्, व्यतिकीर्णसुखदुःखहेतुभावार्थान्तरानपेक्षत्वादैकान्तिकत्वम्, प्रकर्षकाष्ठावस्थानादनुत्तरत्वादनतिशयत्वम्, प्राण्युपमर्दनजलौकिकसुखविपरीतत्वेनानाबाधकत्वम्, सर्वद्वन्द्वस्पर्शविषयातिक्रमाद् दुःखक्लेशाकलङ्कितत्वेन केवलत्वम्, निष्प्रतिद्वन्द्वत्वादेव निराबाधत्वम्, आत्मतादात्म्याविर्भावमात्रत्वेन मनोज्ञविषयसंसर्गायत्तोत्पत्तिविधुतत्वेन स्वाधीनत्वं च गीयते प्रमाणनयनिष्णातैः, अविगतिरप्यस्याः संसर्गप्रतिबन्धोपरागोन्मूलनात् पुनर्भवोच्छेदादत्यन्तदुःखोच्छेदादिति सर्वथोपपत्तिसमलङ्कृताया अस्याश्शासनाच्छास्त्रत्वमाबिभ्राणस्यास्य तत्त्वार्थाधिगमाख्यस्य शास्त्रस्य स्वबुद्धौ विपरिवर्तमानस्याभ्युदयफलप्राप्त्युत्सवफलकधर्मार्थकामविमुखान् दुःखाभावार्थिनो हिताहितप्राप्तिपरिहारार्थिनः प्रत्युपदेशरूपत्वमाकलयन् हिताहितविभागोपदेशानुग्रहैकप्रवणो मोक्षमार्गं संक्षेपेणोद्देष्टुकाम आचार्य इदमाह

> सम्यग्दर्शनशुद्धं, यो ज्ञानं विरतिमेव चाप्नोति ।
> दुःखनिमित्तमपीदं, तेन सुलब्धं भवति जन्म ॥ १ ॥

( य० टीका ) 'सम्यग्दर्शनसंशुद्धमिति' अनया च कारिकया जन्मनीत्यादिद्वितीयकारिकानुस्यूतया "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः"॥१-१॥ इत्यनुबन्धचतुष्टयप्रदर्शनप्रवणं कृत्स्नशास्त्रार्थसंग्राहकमादिमं

---

**चतुष्टयमाह—पारगतागमसमुद्वीक्षितेत्यादि** । सा मुक्तिः कैः पुरुषविशेषैः कीदृशसाधनानि प्राप्नुवद्भिश्च समधिगम्येत्यत आह—**शङ्काद्यतिचाराऽनालिङ्गितेत्यादि सुप्रापैवेत्यन्तम्** । मुक्त्यधिगतौ हेतुत्रयमाह—**संसर्गप्रतिबन्धेत्यादिना** । **अभ्युदयफलप्राप्तीति**—अभ्युदयफलं स्वर्गफलं तस्य प्राप्तिर्यस्माद्धर्मात् सोऽभ्युदयफलप्राप्तिरित्यर्थः, अस्य धर्मेत्यनेनान्वयः । **उत्सवफलकेति**—अस्याऽर्थकामेत्यनेनाऽन्वयः । **दुःखाभावार्थिन इति**—दुःखञ्च किञ्चिन्मे मा भूदित्यभिलाषिण इत्यर्थः । **हिताहितप्राप्तिपरिहारार्थिन इति**—हितं सुखं तत्प्राप्तिः, अहितं दुःखं तत्परिहारश्च मे भूयादित्येवं सुखेच्छादुःखजिहासावन्त इत्यर्थः ।

> विषयश्चाऽधिकारी च, सम्बन्धश्च प्रयोजनम् ।
> विनाऽनुबन्धं ग्रन्थादौ, मङ्गलं नैव शस्यते ॥ १ ॥

इति पारमार्षोक्तिमाश्रित्याह—**अनुबन्धचतुष्टयप्रदर्शनप्रवणमिति**, तत्राऽनुबन्धत्वं नाम प्रवृत्तिजनकज्ञानजनकज्ञानविषयत्वं प्रवृत्तिप्रयोजकज्ञानविषयत्वं वा । प्रवृत्तिरत्र शास्त्राध्ययनविषयिका तज्जनकज्ञानमिदं शास्त्राध्ययनं मदिष्टसाधनमित्याकारकं ज्ञानं मत्कृतिसाध्यमित्याका-

सूत्रं सुसंगतार्थतयाऽऽवेदितं भवति, यद्यपि मुक्तिरेवोपादेयतया प्रथमं निरूपणार्हा, तथापि कारणनिरूपणमन्तरेण निरूप्यमाणापि सा न मुमुक्षूणामात्मसाद्भवितुमुत्सहत इति प्रथमं तन्निरूपणमित्यभिसन्धिः । यः सम्यग्दर्शनशुद्धं ज्ञानं विरतिमेव चाप्नोति दुःखनिमित्तमपीदं जन्म तेन सुलब्धं भवति इत्यन्वयः ।

अत्र सम्यग्दर्शनेन सम्यग्दर्शनाय सम्यग्दर्शनात् सम्यग्दर्शने वा शुद्धमित्येते विग्रहाः सम्भवन्ति, तत्र प्रथमे तृतीयेयं " हेतुकर्तृकरणेत्थम्भूतलक्षणे " ॥२–२–४४॥ इति सूत्रविहिता, फलसाधनयोग्य-

रकं ज्ञानञ्च, तच्च विशिष्टबुद्धौ विशेषणज्ञानं कारणमिति नियमेन तत्र विशेषणीभूतस्य मदित्यस्येष्टेत्यस्य च ज्ञाने सत्येव भवतीति तज्जनकज्ञानमस्य शास्त्रस्याध्ययनेऽहमधिकारीति ज्ञानं एतच्छास्त्रप्रतिपादिततत्त्वज्ञानं साक्षान्मोक्षश्च परम्परया फलमिति तदात्मकेष्टज्ञानञ्च, तद्विषयत्वमधिकारिणि प्रयोजने च वर्त्तते । अस्य शास्त्रस्य मोक्षमार्गप्रतिपादनपरत्वात् तदभिधेयस्य सामान्यतो ज्ञाने सत्येवेदं शास्त्रं मत्कृतिसाध्यमिति ज्ञानं भवति तथा शास्त्रस्याभिधेयेन सह प्रतिपाद्यप्रतिपादकभावसम्बन्धस्य ज्ञाने सत्येवेदं शास्त्रं मदिष्टसाधनमिति ज्ञानं सम्भवतीति प्रवृत्तिजनककृतिसाध्यत्वज्ञानजनकमभिधेयज्ञानं प्रवृत्तिजनकेष्टसाधनत्वज्ञानजनकञ्च प्रतिपाद्यप्रतिपादकभावसम्बन्धज्ञानम्, एवं प्रयोजनेन तत्त्वज्ञानेन सह शास्त्रस्य जन्यजनकभावसम्बन्धज्ञानञ्च तद्विषयत्वमभिधेये सम्बन्धे च वर्त्तत इत्येवमधिकारिप्रयोजनाभिधेयसम्बन्धलक्षणानुबन्धचतुष्टयप्रदर्शनप्रवणमित्यर्थः । ननु शास्त्रादावनुबन्धचतुष्टयप्रदर्शने किं प्रयोजनमिति चेत्, उच्यते, शेषनागमणिवदशक्यानुष्ठानाभिधेयम्, अजिज्ञासिताऽभिधेयत्वेनाऽनधिकारिकञ्च, जलताडनवदनभिमतप्रयोजनञ्च, उन्मत्तवाक्यवदसम्बद्धं च शास्त्रं प्रेक्षावद्भिर्नाऽऽद्रियत एव, प्रेक्षावत्त्वक्षतेः । तथा चेदं शास्त्रं मोक्षमार्गादिरूपशक्यानुष्ठानाभिधेयं मोक्षमार्गादिसम्यग्ज्ञप्तिरूपसाक्षात्फलमोक्षरूपपरम्पराफलात्मकाभिमतप्रयोजनञ्च, तत्त्वार्थसूत्रमुपायः, तदर्थावगमश्चोपेयः, स च प्रयोजनाभिधानादेवाभिहित इत्युपायोपेयभावसम्बन्धकञ्च, चतुस्त्रिंशदतिशयशालिनो भगवतोऽर्हतो मुखकमलात्त्रिपदीमवाप्य विदितसकलार्थस्वभावोऽन्तर्मुहूर्त्तमात्रेण भव्यसत्त्वहिताय शब्दतो रचितद्वादशाङ्गोऽनेकलब्धिनिधिर्भगवान् गणधरोऽपूर्वागमार्थतत्त्वं स्वशिष्येभ्य उपदर्शितवान्, ते च स्वशिष्येभ्यस्तेऽपि स्वशिष्येभ्य इत्येवं परिपाट्यैव सातिशयश्रुतधरैर्वाचकावतंसश्रीमदुमास्वातिभिर्मन्दमेधसामनुग्रहाय शास्त्रसमुद्रादपूर्वतत्त्वरत्नान्याकृष्यैतत्तत्त्वार्थशास्त्रे निबद्धानीति गुरुपर्वक्रमलक्षणसम्बन्धाश्रयं च, एतच्छास्त्राभिहितमोक्षमार्गादितत्त्वजिज्ञासूक्तप्रयोजनाभिलाषिलक्षणाधिकारिकं च, तस्मादेतच्छास्त्रमादरणीयमेव प्रेक्षावद्भिरिति शास्त्रप्रवृत्त्यर्थमादावनुबन्धचतुष्टयं प्रदर्शनीयमिति भावः । **फलसाधनयोग्यतालक्षणं हेतुत्वमिति** । फलं कार्यं तस्य साधनं निष्पादनं करणमिति यावत्, तत्र योग्यः सामान्यतो दृष्टसामर्थ्यस्तस्य भावस्तत्ता तल्लक्षणं हेतुत्वमित्यर्थः । ननु फलसाधनतालक्षणं हेतुत्वमित्येवोच्यतां योग्यतापदग्रहणेन किमिति चेत्; उच्यते समाधिः, तदप्रवेशे फलाव्यवहितप्राक्कालसम्बन्धलक्षणं हेतुत्वं लब्धं स्यादिति यः फलं साधयति क्रियाऽऽविशिष्टस्तत्र हेतुत्वप्रतिपत्तिस्स्यात्, न तु फल-

स्वलक्षणं हेतुत्वम्, पारतन्त्र्यासम्पृक्तस्वातन्त्र्यविशिष्टक्रियाहेतुत्वलक्षणं कर्तृत्वम्, प्रकृष्टोपकारकत्वप्रकारक-

स्वरूपयोग्ये, तद्ग्रहणेन तु जनकतावच्छेदकधर्मलक्षणस्वरूपयोग्यतामात्रप्रतिपत्तौ कारणान्तरविरहात्तत्फलमकुर्वन्नपि हेतुस्स्यादेव, अन्यथासिद्धिशून्यत्वे सति कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वलक्षणकारणतावच्छेदकधर्मस्य तत्र सत्त्वाद्धेतुत्वप्रतिपत्तेः । योग्योऽत्र निर्व्यापारो गृह्यते, सव्यापारत्वे तु करणत्वं कर्तृत्वमेव वा स्यात्, तादृशयोग्यत्वनिवेशादेव धनेन कुलमित्यादौ धनादीनि कुलादिकमकुर्वन्त्यपि योग्यतामात्रेण तृतीयामुत्पादयन्ति, अन्नेनाऽध्ययनेन वा वसतीत्यादावपि वसनक्रियायामन्नादेर्योग्यतामात्रस्यैव विवक्षेति हेतावेव तृतीयेतिभावः । **पारतन्त्र्याऽसम्पृक्तस्वातन्त्र्यविशिष्टक्रियाहेतुत्वलक्षणं कर्तृत्वमिति**-क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात्, न तु पारतन्त्र्येण, यथा रामेण बाणेन हतो वालीत्यत्र रामाभिन्नकर्तृनिष्ठव्यापारप्रयोज्यो यो बाणनिष्ठो व्यापारस्तज्जन्यं प्राणवियोगरूपं यत्फलं तदाश्रयो वालीति बोधः, अत्र रामः स्वव्यापारे धात्वर्थप्रधानीभूतव्यापाराश्रयत्वलक्षणस्वतन्त्रत्वात्कर्तृसंज्ञां प्राप्नोति, न तु बाणः, रामव्यापाराधीनव्यापाराश्रयत्वेन परतन्त्रत्वात् । अयम्भावः—यद्यपि बाणोऽपि हननक्रियायां स्वतन्त्र एव, फलजनकव्यापाराश्रयत्वात्, तथापि यावन्न रामस्स्वव्यापारं प्रयुङ्क्ते तावन्न बाणोऽपि स्वव्यापारेण हननक्रियां प्रति समर्थ इति बाणे स्वातन्त्र्यस्य पारतन्त्र्यसम्पृक्तत्वेन न कर्तृत्वमित्यभिप्रायेण स्वातन्त्र्यस्याऽन्यव्यापारानधीनव्यापाराश्रयत्वलक्षणस्य पर्यवसितार्थरूपतया विशेषणमाह **पारतन्त्र्यासम्पृक्तेति** । न चाऽन्यव्यापारानधीनव्यापाराश्रयस्य स्वतन्त्रत्वे देवदत्तेन यज्ञदत्तस्तण्डुलं पाचयतीत्यादिणिजन्तस्थले प्रयोज्यकर्तृदेवदत्तव्यापारस्य यज्ञदत्तव्यापाराधीनत्वात्तदाश्रयस्य देवदत्तस्य कर्तृत्वं न स्यादिति तृतीयानुपपत्तिरिति वाच्यं, सर्वेषां स्वस्वव्यापारे स्वतन्त्रत्वस्य निर्विवादत्वात्, न चैवं स्वस्वव्यापारे सर्वेषां स्वतन्त्रत्वे प्रयोज्यप्रयोजकव्यवहारो न स्यादिति वाच्यं, प्रयोज्यकर्तृदेवदत्तप्रथमव्यापारस्य प्रयोजककर्तृयज्ञदत्तव्यापाराधीनत्वेनोक्तव्यवहारस्य देवदत्तीयद्वितीयादिव्यापाराणां तु स्वाधीनत्वेन तत्र स्वतन्त्रत्वात्कर्तृत्वव्यवहारस्यापि चोपपत्तेरिति दिक् । स्वातन्त्र्यविशिष्टक्रियाहेतुत्वेत्यत्र वैशिष्ट्यं सामानाधिकरण्येन सम्बन्धेन बोध्यम् । साधकतमं करणं क्रियासिद्धौ प्रकृष्टोपकारकं करणसञ्ज्ञं स्यादित्यतः "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र, करणं तत्तदा स्मृतम् ॥ १ ॥" इति भर्तृहरिकारिकाबलाच्च परिष्कृतकरणत्वलक्षणमाह—**प्रकृष्टोपकारकत्वप्रकारकविवक्षाविषयक्रियासाधकतमत्वलक्षणमिति** । विवक्षातः कारकाणि भवन्तीति नियमाद् रामेण बाणेन हतो वालीत्यत्र बाणव्यापारस्य यदा विवक्षा स्यात्तदा तस्य बाणस्य करणसञ्ज्ञा भवति, यदा च न स्यात्तदा निर्व्यापारसाधारण्येन तस्य बाणस्य हेतुत्वमेव स्यादित्यभिप्रायेण विशेषणमाह—**प्रकृष्टोपकारकत्वप्रकारकविवक्षाविषयेति** । उक्तलक्षणस्योक्तविशेषणमात्रपरत्वे निर्व्यापारे हेतुभूते "इदमस्मिन् कार्ये प्रकृष्टोपकारकं" इति भ्रान्तविवक्षाविषयेऽ-

विवक्षाविषयक्रियासाधकतमत्वलक्षणं करणत्वम्, विशेष्यतावच्छेदकधर्मप्रकारकज्ञानजनकज्ञानविषयत्वविशिष्टविशेष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगित्वलक्षणमित्थम्भूतत्वं वार्थं प्रतिपादयितुं शक्ताऽपि कृदन्तशुद्धपदेन समासविधायकशास्त्राननुग्रहतो हेतुत्वेत्थम्भूतलक्षणत्वार्थतायां समासमसहमाना कर्तृत्वं करणत्वं वार्थमुपादायैव प्रवृत्तेति वक्तव्यम्, तत्र न तावत्कर्तृत्वेऽर्थे सा, अकर्मकात् 'शुधंच्' धातोः

तिप्रसङ्गस्स्यात्तन्निवृत्तये विशेष्यदलमाह—**क्रियासाधकतमत्वेति** ॥ **विशेष्यतावच्छेदकधर्मप्रकारकज्ञानेत्यादि** । जटाभिस्तापस इत्यादावित्थम्भूतलक्षणे तृतीया, तत्रोक्तलक्षणसङ्गमनं चैवम्, विशेष्यतावच्छेदकधर्मस्तापसत्वं, तत्प्रकारकं ज्ञानं तापसोऽयमित्याकारकं तज्जनकज्ञानं जटाज्ञानं तद्विषयत्वं जटायां वर्त्तते, तापसोऽयमित्याकारकज्ञानविशेष्यतावच्छेदकं यत्तापसत्वं तत्समानाधिकरणो योऽभावस्स जटाऽभावस्तत्प्रतियोगित्वमपि तत्र वर्त्तत इति । तदुक्तं व्युत्पत्तिवादे "इत्थम्भूतलक्षण इत्यनेन लक्षणवाचिपदात्तृतीयाऽनुशिष्यते, लक्षणत्वं च व्यावर्त्तकत्वम्, तच्च विशेष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगित्वम्, तदाश्रयश्च धर्मो द्विविधो विशेषणमुपलक्षणञ्च, विद्यमानं सद्व्यावर्त्तकं विशेषणम्, यथा पुरुषादौ वर्त्तमानकालावच्छेदेन विद्यमानो दण्डादिः । अविद्यमानं सद् व्यावर्त्तकमुपलक्षणम्, यथा तापसादेः कालान्तरीणजटादिकम् । विशेषणस्य सम्बन्धो मतुबादिभिः प्रत्याय्यते, अस्तीत्यर्थे विहितानां प्रत्ययानां वर्त्तमानसम्बन्धार्थकत्वात्, अतो जटाभिस्तापस इत्यादावविद्यमानजटादेः सम्बन्धाविवक्षया मतुबाद्यनवकाशात्तृतीयेति, अत्र गूढार्थतत्त्वालोके तापसमात्रस्य जटाया अभावेन तत्सम्बन्धस्य विशेष्यतावच्छेदकतापसत्वसमानाधिकरणाभावप्रतियोगित्वसम्भव इत्युक्तम् । अयमाशयः—इत्थम्भूतः कश्चित्प्रकारम्प्राप्तः, प्रकारेऽर्थे थम्प्रत्ययः, प्राप्त्यर्थकाद् भूधातोः कर्त्तरि क्तः, लक्ष्यतेऽनेनेति लक्षणं ज्ञापकं, किञ्चिद्धर्मविशिष्टस्य ज्ञापकं यत्तद्वाचकात्तृतीया, यथा जटाभिस्तापस इत्यादौ, प्रकारस्तापसत्वं धर्मः, तं प्राप्तस्य तद्धर्मविशिष्टस्य तापसस्य ज्ञापिका जटा, तया तापसत्वप्रत्ययात्, तद्वाचकाज्जटापदात्तृतीया, जटाविषयकज्ञानजन्यज्ञानविषयीभूततापसत्ववानितिप्रयोगार्थः ।

तत्र ज्ञानजन्यज्ञानं तृतीयार्थः, स्वनिरूपितविषयित्वसम्बन्धेन जटापदार्थस्य भिस्प्रत्ययार्थैकदेशे ज्ञानेऽन्वयः, द्वितीयज्ञानस्य च विषयत्वसम्बन्धेन तापसपदार्थैकदेशे तापसत्वेऽन्वय इति । **कृदन्तशुद्धपदेन समासविधायकशास्त्राननुग्रहत इति** । यत्र कर्तृकरणयोस्तृतीया भवति तत्र—"कर्तृकरणे कृता बहुलम्" इति पाणिनीयसूत्रेण "कारकं कृता" इति हैमव्याकरणसूत्रेण च कृदन्तेन सह समासो भवति, हेत्वर्थ इत्थम्भूतलक्षणे च विहितायास्तृतीयायास्समासः कृदन्तेन सह न भवति, तद्विधायकसूत्राभावादित्यर्थः । तन्निषेधेति—**तत्र नेत्यादिना**, शुधंच्धातोः कर्तृत्वार्थकक्तप्रत्ययनिष्पन्नेन शुद्धपदेनैव कर्तृत्वस्याऽभिहितत्वेन तस्याऽनभिहितत्वाभावात्तत्राऽनभिहित इत्यधिकारसहितस्य "कर्तृकरणयोस्तृतीया" इति सूत्रस्याऽप्राप्तेस्सम्यग्दर्शनेनेति तृतीयाऽनुपपन्नैवेत्याह—**अकर्मकात् शुधंच्धा-**

कर्तरि निष्पन्नस्य शुद्धपदस्यैव कर्तृत्वप्रतिपादनप्रत्यलत्वेन तेनाभिहितस्य कर्तृत्वस्य तृतीयाया अनभिहितकर्तृत्वकरणत्वार्थसमुद्भूताया: प्रतिपादयितुमशक्तेः, न च शुद्धिर्ज्ञानादभिन्नैव कथञ्चित्सैव धातुना शुद्धिक्रियात्वेन रूपेण प्रतिपाद्यते, भावार्थकप्रत्ययेन तु स्वरूपत्वेनेति भावार्थनिष्पन्नस्य शुद्धपदस्य कर्तृत्वानभिधायकत्वेन तृतीया कर्तृत्वे उपपन्नैवेति वाच्यम्, यथा हि शुद्धिक्रिया कथञ्चिज्ज्ञानादभिन्ना तथा प्राप्तिक्रियापीति तदभिन्नाभिन्नस्य तदभिन्नत्वमिति शुद्धक्रियाऽभिन्नज्ञानाऽभिन्नायाः प्राप्तिक्रियायाः शुद्धक्रियाऽभिन्नत्वेन शुद्धिक्रियाकर्तृत्वस्य तृतीयया प्रतिपादने प्राप्तिक्रियाकर्तृत्वमपि तया प्रतिपादितमिति तत्प्रतिपादकस्याप्नोतीत्याख्यातस्यानुपपत्तिः । न चाप्नोतीत्यनेनाप्तिक्रियाया विशेष्यत्वेन कर्तृत्वं प्रतिपाद्यते, सम्यग्दर्शनशुद्धमित्यनेन च शुद्धिक्रियाया विशेषणत्वेनेति नानुपपत्तिरिति वाच्यम्, एवं सति चैत्रेण पचति चैत्र इत्यपि प्रयोगः स्यात् । न च तत्र कर्तैक एवेति तन्निरूपितवृत्तित्वेन कर्तृत्वस्य ज्ञाने

तोरिति । ननूक्तदोषादकर्मकाच्छुध्धातोः कर्तरि क्तप्रत्ययो न स्वीक्रियते, किन्तु भावे, तथा च कर्तुरनभिहितत्वेन सम्यग्दर्शनरूपकर्तृपदात्तृतीयोपपन्नैव, यथा चोपपत्तिस्तथाऽऽशङ्क्य निरस्यति—न च शुद्धिरिति । न चेत्यस्य वाच्यमित्यनेनान्वयः, शुध्धातोर्भावार्थे कृत्प्रत्यये सति शुद्धधात्वर्थो भाव इति तल्लक्षणाद् य एव शुद्धिरूपोऽर्थश्शुधंच्धातोस्स एव कृदन्तशुद्धपदस्येति तस्य शुध्धात्वर्थशुद्धिरूपस्य प्रातिपदिकार्थत्वेन निपातातिरिक्तनामार्थद्वयोरभेदातिरिक्तस्सम्बन्धोऽव्युत्पन्न इति नियमेन ज्ञानरूपप्रातिपदिकार्थेऽभेदसम्बन्धेनैवाऽन्वयस्सम्भवतीति प्रतिपादनाय शुद्धिर्ज्ञानादभिन्नैवेत्युक्तिः ।

न चोक्ताव्युत्पत्तौ किम्प्रमाणमिति वाच्यं, भेदसंसर्गावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभावस्यैव प्रमाणत्वात्, अत एव राज्ञः पुरुष इत्यत्र भेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धौ विशेष्यतासम्बन्धेन ङस्प्रत्ययजन्योपस्थितेः कारणत्वाद्भेदसंसर्गको बोधो भवति, न हि भवति राजा पुरुष इत्यत्र तादृशो बोधः । भेदसंसर्गकबोधे ङस्प्रत्ययजन्योपस्थितेः कारणीभूताया अत्राऽभावात् । निषेधे हेतुमाह—यथा हीत्यादि—तृतीययेति । सम्यग्दर्शनेनेति तृतीययेत्यर्थः, तया तृतीयया । न चाप्नोतीत्यादिनाऽऽशङ्क्य तन्निषेधति—एवं सतीत्यादिना ।

चैत्रेण पचति चैत्र इत्यपि प्रयोगस्स्यादिति चैत्रकर्तृकपाकानुकूलकृतिमान् चैत्र इति प्रयोगार्थः । पुनरप्याशङ्क्ते—न च तत्रेत्यादिना । तत्र चैत्रेण पचति चैत्र इत्यत्र । सोऽप्यवगत एवेति चैत्रेणेत्यनेन स्वनिरूपितवृत्तित्वसम्बन्धेन चैत्रविशिष्टा कृतिरिति ज्ञाने सति कृतिमान् चैत्र इत्यपि ज्ञानं सञ्जातमेवेति कृत्याश्रयतया चैत्रोऽवगत एवेति कर्तुश्चैत्रस्यैकत्वेन पुनरत्र पचतीत्याख्यातेन कर्तृत्वमानं नोपयुक्तमितिभावः । तन्निषेधे हेतुमाह—

कर्तृत्वाश्रयतया सोऽप्यवगत एवेति न तत्र कर्तृत्वभानेन कृत्यम्, प्रकृते तु शुद्धिक्रियाकर्तृत्वं सम्यग्दर्शनगतं शुद्धज्ञानावासिक्रियाकर्तृत्वं चात्मगतमित्याश्रयभेदाद् द्विधा कर्तृत्वभानं सप्रयोजनमेवेति वाच्यम्, ज्ञानदर्शनोपयोगलक्षणस्याऽऽत्मनः सम्यग्दर्शनाभेदेनाश्रयभेदस्याप्यभावात्। यत्तु "प्रथमार्थः प्रकृत्यर्थविशेषणविधयाऽन्वयिनी संख्यैव, अत एव यत्र विशेष्यवाचकसमानविभक्तिपदं निपातपदं वा नास्ति तत्र प्रथमान्तार्थस्य विशेष्यभासकसामग्र्यभावादसौ मुख्यविशेष्यतयैव भासते" इति गदाधरग्रन्थपर्यालोचनया प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधाभ्युपगन्तॄणा नैयायिकानां मते आख्यातार्थस्य कर्तृत्वस्य प्रथमान्तार्थविशेषणतया धात्वर्थविशेष्यतया च भानस्योपपन्नत्वेऽपि भावप्रधानमाख्यातमिति स्मृत्यनुसाराद् भावप-

---

ज्ञानदर्शनोपयोगेत्यादिना। **अत एवेति**–प्रकृत्यर्थे विशेषणविधयाऽन्वययोग्यायाः संख्याया एव प्रथमार्थत्वादित्यर्थः। एतेन चैत्रादीनामेकत्वमात्रबोधनाय तत्तात्पर्येण चैत्र इति वाक्यात्प्रथमान्तार्थचैत्रमुख्यविशेष्यकैकत्वप्रकारकबोधस्य क्लृप्तत्वेन चैत्रः पचतीत्यादावपि सति सम्भवे प्रथमान्तार्थस्यैव मुख्यविशेष्यत्वमिति सूचितम्। **विशेष्यवाचकसमानविभक्तिकपदं निपातपदं वा नाऽस्तीति**। पीन इत्यत्र नील इत्यत्र च विशेष्यवाचकसमानविभक्तिकपदं निपातपदं वा नाऽस्तीति यथाक्रमं पीन एव नील एव च मुख्यविशेष्यतया प्रथमाविभक्त्यर्थैकत्वञ्च विशेषणतया भासते, पीनश्चैत्र इत्यत्र नीलो घट इत्यत्र च निपातपदाभावेऽपि पीन इति पदस्य नील इति पदस्य च समानविभक्तिकविशेष्यवाचकं यथाक्रमं चैत्र इति घट इति च पदमस्तीति मुख्यविशेष्यतया चैत्र एव घट एव च भासते, तत्र च विशेषणविधया यथाक्रमं पीनो नीलश्च प्रथमार्थैकत्वसंख्या च भासते। चैत्रो नास्तीत्यत्र विशेष्यवाचकसमानविभक्तिकपदाभावेऽपि नास्तीति निपातपदमस्तीति न चैत्रो मुख्यविशेष्यतया भासते, किन्तु नास्तिपदवाच्योऽभाव एवेति भावः। भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति यास्कवचनं, तत्र भावप्रधानमित्यस्य कोऽर्थः? इति चेत्। व्यापारप्रधानमित्यर्थः, "व्यापारो भावना सैवो–त्पादना सैव च क्रिया" इति कौण्डवचनात्, इति प्राचीनवैयाकरणा दीक्षितादय एवं मन्यन्ते। नागेशास्तु भावप्रधानमित्यस्य शुद्धधात्वर्थो भावो, धात्वर्थौ फलव्यापाराविति धात्वर्थप्रधानमित्यर्थः। कुत्रचिच्छन्दरत्नादौ क्रियाप्रधानमाख्यातमिति दृश्यते, तत्र क्रियाशब्दस्य करणं क्रिया, क्रियत इति च क्रियेति व्युत्पत्तेर्द्व्यर्थकत्वम्। तेन कर्तृप्रत्ययस्थले व्यापारमुख्यविशेष्यको बोधो भवति, कर्मप्रत्ययस्थले फलमुख्यविशेष्यको बोधो भवति, तत्र प्रमाणं "सुप आत्मनः क्यच्" इति सूत्रस्य भाष्यमेव, तत्र हि इष्यते पुत्र इति विग्रहे क्यच्प्रत्ययो न भवति, पुत्रमिच्छतीति विग्रहे क्यच्प्रत्ययो भवति, तत्र किं विनिगमकमिति प्रश्ने सत्युत्तरयति भाष्यकारो भिन्नार्थत्वात्, अत्राऽऽशङ्कते किमत्र भिन्नार्थत्वं? समाधत्ते, एकत्र व्यापारः प्रधानोऽपरत्र च फलं प्रधानम्, इदमेव भिन्नार्थत्वं, व्यापारमुख्यविशेष्यकबोधस्वीकारादेव पश्य मृगो धावतीत्यादौ मृगकर्तृकं धावनं दृशिक्रियायां कर्म, प्रधानं दृशिक्रियैवेत्याशयेनाऽऽह–**भावप्रधानमाख्यातमिति स्मृत्यनुसा-**

दस्य धात्वर्थपरतामभ्युपेत्य धात्वर्थस्यैव प्राधान्यं मुख्यविशेष्यत्वमित्यभ्युपगन्तॄणां वैयाकरणानां मते सम्यग्दर्शनशुद्धमित्यत्राप्नोतीत्यत्र च कर्तृत्वस्य क्रियाविशेषणतयैव भानेन नोक्तोपपत्तिरिति समाधानम्, तदपसमाधानमेव, यतः " आद्यशब्दौ द्वित्रिभेदौ " ॥ १–३६ ॥ इति सूत्रस्य " नयाः प्रापकाः कारकाः साधकाः " इत्यादिभाष्यं व्याख्यानयद्भिः श्रीमद्भिर्यशोविजयोपाध्यायैः " प्रापका इत्यादिना यः कर्त्रंशो दर्शितः प्राप्नुवन्तीत्यादिना स एव क्रियाऽनन्यत्वेन, तेनाख्यातस्थले " क्रियायाः प्राधान्यं कर्तृगुणभाव इति वैयाकरणंमन्यानां दीक्षितादीनामेकान्तो निरस्तः " इत्यादिनैकान्तवादस्यायुक्तत्वमुपदर्श्य, " अत्र पश्य मृगो धावतीत्यादिभाष्यसिद्धैकवाक्यत्वानुरोधेन क्रियाप्रधानमाख्यातमिति वाक्याश्रयणेन चाख्यातस्थले क्रियामुख्यविशेष्यक एव शाब्दबोधः " इत्यादिना वैयाकरणमतमुद्भाव्य " ननु पचतीत्यत्रैकाश्रयिकेत्यादिग्रन्थेन तन्मतखण्डनपुरस्सरं तस्मात्पचतीत्यादौ पाकानुकूलयत्नवान्, नश्यतीत्यादौ नाशप्रतियोगी, जानातीच्छतीत्यादौ ज्ञानाश्रय इच्छाश्रय इत्याद्याकारकः प्रथमान्तपदार्थविशेष्यक एव बोधः श्रद्धेयः इत्यन्तराले न्यायमतमुपपाद्य " ज्ञात्वा सदूषणं बाह्य–वैयाकरणभूषणं । कण्ठे निर्दूषणं कुर्मः, स्याद्वादं हैमभूषणम् ॥ १ ॥ " इत्युपसंहृतमिति सम्यग्दर्शनशुद्धमित्यत्र कर्तृत्वस्य क्रियाविशेषणत्वे आप्नोतीत्यत्र तस्य क्रियाविशेष्यत्वमित्येव न्यायः। न च स्याद्वादे सम्यग्दर्शनज्ञानयोरात्मनोऽभेदवद्भेदोऽपीति तद्विवक्षयाऽऽश्रयभेदोऽस्तीति वाच्यम्, तथा सति कर्तृत्वलक्षणप्रविष्टस्य पारतन्त्र्यासम्पृक्तस्वातन्त्र्यस्य समभिव्याहृतक्रियाकारकान्तरव्यापारानधीनतत्क्रियानुकूलव्यापारलक्षणस्य सत्त्वमपि सम्यग्दर्शने दुर्घटमापद्येत, यतः सम्यग्दर्शनशुद्धत्वविशिष्टज्ञानावाप्तिक्रियाकर्तुरात्मनः सम्यग्दर्शनजन्यशुद्धिं प्रति व्यापाराभावे तदालिङ्गितज्ञानावाप्तिक्रियां प्रति व्यापारस्यानुपपन्नत्वमिति तस्य समभिव्याहृत-

रादित्यादि, न चाऽऽप्नोतीत्यादिना पूर्वमाशङ्क्य आप्नोतीत्याख्यातस्योपपत्तिः कृता, सा वैयाकरणमते उक्तनीत्या न सम्भवतीति यत्समाधानं कृतं तदप्यसङ्गतमेव प्रतिभाति,तत्र हेतुमाह–यत इत्यादिना, इदं सर्वं चाऽग्रे स्फुटीभविष्यति। ननु गुणगुणिनोरभेदवद्भेदोऽप्यनेकान्तवादेऽस्तीति निश्चयनयेनाऽऽत्मनः सम्यग्दर्शनेन सहाऽभेदवद् व्यवहारनयेन भेदोऽप्यस्तीति शुद्धिक्रियाकर्ता सम्यग्दर्शनं, आप्तिक्रियाकर्ता चाऽऽत्मेत्याश्रयभेदाद् द्विधा कर्तृत्वभानं भविष्यत्येव, तथाहि–आप्नोतीति तिबाख्यातेनाऽऽत्मगतकर्तृत्वस्योक्तत्वेऽपि सम्यग्दर्शनस्याऽऽत्मभिन्नत्वात्तद्गतं कर्तृत्वं तेन नोक्तं, शुद्धपदस्य भावप्रत्ययानिष्पन्नत्वात्तेनाऽपि तन्नोक्तमित्यनभिहितकर्तरि सम्यग्दर्शने तत्पदात् तृतीयोपपद्यत एवेति पूर्वोक्ताशङ्कां दृढीकर्तुं भूयोऽप्याशङ्कते–न च स्याद्वादे इत्यादिना, न चेत्यस्य वाच्यमित्यनेनान्वयः।

**समभिव्याहृतक्रियाकारकान्तरव्यापारानधीनतत्क्रियानुकूलव्यापारलक्षणस्येति**। पदद्वारा शुद्धिक्रियया समभिव्याहृता या आप्तिक्रिया तस्याः शुद्धिक्रियाकारकापेक्षया भिन्नं यत्कारकमात्मलक्षणं तद्व्यापाराप्रयोज्या या शुद्धिक्रिया तदनुकूलव्यापारलक्षणस्येत्यर्थः। नन्वस्तु समभिव्याहृतक्रियाकारकान्तरमात्मरूपं, तथापि तस्य शुद्धिक्रियां प्रति व्यापारानभ्युपगमे को दोष ? इत्यत आह–यतः सम्यग्दर्शनशुद्धत्वेत्यादि।

क्रियाकारकान्तरस्य व्यापाराधीन एव सम्यग्दर्शनस्य शुद्धिक्रियानुकूलव्यापार इत्यभेद एवात्मनः कर्तृत्वं सम्यग्दर्शने, तत्त्वे च शुद्ध्याप्तिकर्तृत्वेऽभिन्नाश्रयत्वं दुष्परिहरम्, किञ्चात्र सम्यग्दर्शनस्य कर्तृतयाऽन्वये शुद्धपदे प्रत्ययस्य क्रियास्वरूपभावार्थकत्वं निरर्थकत्वकल्पं, कर्तृत्वस्य कृतिमत्त्वलक्षणस्यानुपपत्त्या व्यापारविशेषलक्षणं गौणमेवाश्रितं स्यादित्याश्रयत्वलक्षणं कर्तृत्वं ज्ञानगतमेव 'शुध्' धातु-

**अभेद एवाऽऽत्मन इति ।** आत्मनोऽभेदे सत्येवेत्यर्थः। **तत्त्वे च शुद्ध्याप्तिकर्तृत्व इति**— शुद्धिक्रियाप्तिक्रियाकर्त्रोर्भेदे आत्मनः सम्यग्दर्शनरूपकर्तृभिन्नकर्तृरूपतया कारकान्तरत्वप्राप्त्या शुद्धिक्रियानुकूलव्यापारस्याऽऽप्तिक्रियाकर्त्रात्मव्यापाराधीनत्वेन तदाश्रयस्य सम्यग्दर्शनस्य स्वातन्त्र्याभावात्तल्लक्षणकर्तृत्वं न स्यादित्यभेदपक्ष एव स्वीकरणीयः, तत्पक्षस्वीकारे चोक्तस्वातन्त्र्यलक्षणकर्तृत्वस्योपपन्नत्वेऽप्याप्नोतीत्यनेनाऽऽप्तिक्रियाकर्तृत्वस्येव शुद्धिक्रियाकर्तृत्वस्याऽप्यभिहितत्वेन सम्यग्दर्शनेन शुद्धमित्यत्र तृतीया न स्यादेव । सम्यग्दर्शनेन शुद्धमित्यत्र तृतीयया कर्तृत्वाभिधाने शुद्धिक्रियया सहाऽभेदादाप्तिक्रियायास्तत्कर्तृत्वस्याऽपि तृतीययाऽभिहितत्वात्तदभिधायकस्याऽऽप्नोतीत्याख्यातस्याऽनुपपत्तिरित्युभयतः पाशारज्जुरिति भावः। सम्यग्दर्शनस्य तृतीयार्थेन कर्तृत्वरूपेण शुद्धिक्रियायामन्वये "व्यापारो भावना सैवोत्पादना सैव च क्रिया ।" इति महाभाष्यवचनात् क्रियाभावयोरैक्येन शुध्धातुनैव क्रियास्वरूपभावार्थस्य लब्धत्वात् शुध्धातूत्तरभावार्थप्रत्ययो निरर्थक इत्याशयकं किञ्चेत्यादिना यदुक्तं तन्न युक्तम्, यतः क्रिया द्विविधा साध्यावस्थापन्ना सिद्धावस्थापन्ना च, यत्र साध्या क्रियाऽस्ति तत्र पचति भवति करोतीत्याद्युक्ते न हि क्रियान्तरस्याऽऽकाङ्क्षा भवति, किन्तु किं पचति ? किं भवति ? किं करोति ? इत्यादिरूपा कारकान्तरस्यैवाऽऽकाङ्क्षा जायते । यत्र सिद्धा क्रियाऽस्ति तत्र पाकश्छिन्नो भिन्न इत्याद्युक्ते भवत्यभूद्भविष्यतीत्यादिक्रियान्तरस्यैवाऽऽकाङ्क्षा जायते, न तु कारकान्तरस्य, इत्युक्ताकाङ्क्षानिवृत्तये भवतीत्यादिक्रियाध्याहारः कर्त्तव्यः, अन्यथा क्रियान्वयित्वं क्रियाजनकत्वं वा कारकत्वमिति नियमात् पाक इत्युक्ते पाकरूपकर्तृकारकस्योक्तलक्षणं कारकत्वं नाऽस्तीति तस्य कारकत्वमेव न स्यादिति तस्य क्रियान्वयित्वमवश्यमेव स्वीकार्यम् । तथा च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपं साध्यत्वं, क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकरूपं सिद्धत्वमिति पर्यवसन्नमिति वैयाकरणभूषणसार उक्तं कौण्डभट्टेन । तथा चोक्तोभयक्रिययोर्भेदेन प्रतीयमानत्वात् केवलेन शुध्धातुना साध्यावस्थापन्ना क्रिया प्रतिपाद्यते, तदुत्तरकृत्प्रत्ययेन तु सिद्धावस्थापन्ना क्रिया प्रतिपाद्यत इति शुध्धातुना शुद्धिक्रियारूपसाध्यक्रियायाः प्रतिपादनेऽपि सिद्धक्रियाप्रतिपादनार्थं शुध्धातूत्तरं भावार्थप्रत्ययो न्याय्य एवेत्यतो दूषणान्तरमाह **कर्तृत्वस्य कृतिमत्त्वलक्षणस्येत्यादि** यथा रथो गच्छति घटो भवतीत्यादावचेतनपदार्थस्य रथस्य घटस्य च कृतिमत्त्वाभावात्तल्लक्षणं कर्तृत्वं न सम्भवतीत्याश्रयत्वलक्षणं गौणमेव कर्तृत्वं तत्र स्वीकृतं तथाऽत्राऽपि सम्यग्दर्शने कृतिमत्त्वाभावात् कृतिमत्त्वलक्षणं मुख्यं कर्तृत्वं न सम्भवतीत्याश्रयत्वलक्षणमेव गौणं कर्तृत्वं स्वीकार्यमिति

त्तरप्रत्ययप्रतिपाद्यमिति न कर्तृत्वार्थकतृतीयाऽत्र श्रेयसी । यदपि कर्तृत्वार्थकत्वेऽपि तृतीयाया विग्रहगतायाः समासे लुप्तत्वेन तदर्थस्य कर्तृत्वस्य न प्रकारतया भानं, किन्तु संसर्गमर्यादयैव, आप्नोतीत्यत्र त्वाख्यातेन श्रुतेनोपस्थितस्य कर्तृत्वस्य प्रकारतयैव भानमिति शुद्धिक्रियाऽऽप्तिक्रिययोः पूर्वोक्तयुक्त्याऽभेदेऽभिन्नाश्रयकत्वेऽपि च बोधवैलक्षण्यमस्त्येवेति य आप्नोतीत्यस्य नानुपपत्तिरिति, तदपि न विचारसहम्; समासविग्रहवाक्ययोः समानार्थकत्वानुरोधेन समासघटकसम्यग्दर्शनपदस्य सम्यग्दर्शनकर्तृत्वरूपार्थपरताया अवश्यमभ्युपगमनीयत्वात्, न च निपातातिरिक्तनामार्थयोर्भेदसम्बन्धातिरिक्तसम्बन्धेना-

ज्ञानस्यैव शुद्ध्याश्रयत्वात्तद्गतमेव शुद्धिकर्तृत्वं शुधंधातूत्तरप्रत्ययप्रतिपाद्यं स्यात्, न तु सम्यग्दर्शनगतमिति तत्र कर्तृत्वाभावात्तदुत्तरं तृतीया न स्यादिति भावः। "श्रुतानुमितयोः श्रुतसम्बन्धो बलवान्" इति परिभाषाबलेन श्रुतेनाऽन्वये सम्भवति सत्यश्रुतेनाऽन्वयो न भवतीति सम्यग्दर्शनशुद्धमित्यत्र तृतीयाया लुप्तत्वेनाऽनुमिततया तदर्थस्य कर्तृत्वस्याऽश्रुतत्वेन तेन सहाऽन्वयः शुद्धपदार्थस्य न सम्भवति, आप्नोतीत्यत्राऽऽख्याततिबर्थेन कर्तृत्वेन श्रुतेन य इत्यस्याऽन्वयस्सम्भवति, तथा चाऽऽकाङ्क्षाभास्यतया संसर्गमर्यादयैव कर्तृत्वस्य सम्यग्दर्शनशुद्धमित्यत्र भानं, आप्नोतीत्यत्र तु तिबर्थेन श्रुतस्य कर्तृत्वस्य प्रकारतयैव भानं भवतीत्याश्रयाऽभेदेऽप्यनयोस्सुस्पष्ट एव भेद इत्याशङ्क्य प्रतिक्षिपति—यदपि कर्तृत्वार्थकत्वेऽपि तृतीयाया इत्यादिना। प्रतिक्षेपे हेतुमाह—**समासविग्रहवाक्ययोः समानार्थकत्वानुरोधेनेति**—वृत्त्यारम्भकाणि यानि पदानि यादृशार्थानि तादृशार्थान्येव पदानि विग्रहे स्थितानि तानीत्येवं समानार्थकत्वानुरोधेनेत्यर्थः। अयम्भावो—विग्रहश्चाऽत्र समासारम्भकपदानामसमासावस्थायां यादृशानि रूपाणि तादृशरूपकाणां तेषां प्रदर्शकं वाक्यं, विग्रहार्थानुसारेणैव वृत्त्यर्थः कल्प्यते, एवञ्च सम्यग्दर्शनेन शुद्धमित्यत्र लौकिको विग्रहः, सम्यग्दर्शनशुद्धमिति च वृत्तिः, तत्र च यादृशार्थकं विग्रहे पदं तादृशार्थकमेव वृत्तावपीति विग्रहे सम्यग्दर्शनेनेति पदं सम्यग्दर्शनकर्तृत्वार्थकमिति वृत्तावपि सम्यग्दर्शनपदं तादृशार्थकमेव कल्प्यमिति तदनुरोधेनेति। **अवश्यमभ्युपगमनीयत्वादिति** य आप्नोतीत्यत्राऽऽख्यातप्रतिपाद्यस्य तिबर्थस्य कर्तृत्वस्य प्रकारतया यथा भानं तथा समासघटकसम्यग्दर्शनपदस्य लक्षणया सम्यग्दर्शनकर्तृत्वार्थपरत्वात् समासेऽपि प्रकारतयैव भानमिति बोधवैलक्षण्याभावात्सम्यग्दर्शनपदादेव कर्तृत्वस्य लक्षणया लब्धत्वाद् आप्नोतीत्याख्याततिबर्थेन पुनः कर्तृत्वाभिधानं तद् व्यर्थमेव प्रतिभातीति पूर्वोक्ता या य आप्नोतीत्यनुपपत्तिः सा तदवस्थैवेति भावः। **न च निपातातिरिक्तनामार्थयोर्भेदसम्बन्धातिरिक्तसम्बन्धेनाऽन्वयोऽव्युत्पन्न** इति—ननूक्तेऽव्युत्पत्तौ किम्मानमिति चेत्, उच्यते, सत्यपि पदार्थोपस्थितियोग्यताज्ञानादिरूपकारणकलापे राजा पुरुषः, भूतलं घट इत्यादिवाक्यात् स्वत्वसम्बन्धेन राजविशिष्टः पुरुषः, आधेयत्वसम्बन्धेन भूतलविशिष्टो घट इत्यादिबोधाभाव एव प्रमाणम्। उक्ताव्युत्पत्तौ निपातातिरिक्तेति विशेषणाद् घटो घटो न

न्वयोऽव्युत्पन्न इति सम्यग्दर्शनकर्तृत्वस्य नामार्थत्वे तस्य निरूपकत्वसम्बन्धेन शुद्धपदार्थे शुद्धिक्रियाया-मन्वयायोगेन सम्यग्दर्शननिष्ठकर्तृतानिरूपकस्य शुद्धपदार्थे शुद्धावभेदेनान्वेतुं योग्यस्यैव सम्यग्दर्शन-पदार्थत्वस्य स्वीकरणीयतया समासविग्रहवाक्ययोः समानार्थकत्वासम्भव इति वाच्यम्। समासविग्रह-वाक्ययोः समानार्थकत्वमभ्युपगच्छद्भिर्निपातातिरिक्तनामार्थयोरभेदेनैवान्वय इति नियमस्यानङ्गीकारेण सम्यग्दर्शनशब्दार्थस्य सम्यग्दर्शनकर्तृत्वस्य निरूपकतया शुद्धावन्वये क्षत्यभावात्, न चोक्तनियमान-ङ्गीकारे विभक्त्यर्थस्य संसर्गतयैव भानमित्यभ्युपगन्तॄणां नव्यानां मतमेवानुमोदितम्भवति, तथा च सम्यग्दर्शनपदस्य सम्यग्दर्शनकर्तृत्वपरताऽपि नावश्यकी, तच्छक्यार्थस्यापि सम्यग्दर्शनस्य स्वनिष्ठकर्तृ-तानिरूपकत्वसम्बन्धेन शुद्धपदार्थे शुद्धावन्वयसम्भवादिति वाच्यम्, तथा सति आप्नोतीत्यत्रापि कर्तृत्वस्य संसर्गतयैव भानेनोक्तवैलक्षण्यस्य तथाप्यभावात्। यदपि "समर्थः पदविधिः" इति सूत्रे

इत्यत्र नञर्थे भेदे घटस्य स्वप्रतियोगिकत्वसम्बन्धेन भेदस्य च पटे स्वरूपसम्बन्धेनाऽन्वयेऽपि मुखं चन्द्र इवेत्यत्र चेवार्थसादृश्ये स्वप्रतियोगिकत्वसम्बन्धेन चन्द्रस्य मुखे स्वरूपसम्बन्धेन सादृश्यस्य चाऽन्वयेऽपि न क्षतिः। निपातातिरिक्तेति निवेशाभावे तु नञिवयोरपि नामत्वा-त्तदर्थे तदर्थस्य वा भेदान्वयो न स्यादिति भावः। **अन्वयोऽव्युत्पन्न इति**—अत्र साक्षा-दिति विशेषणीयम्, अन्यथा राज्ञः पुरुष इत्यादौ विभक्त्यर्थस्वत्वद्वारा राजरूपनामार्थस्य पुरुषरूप-नामार्थेऽन्वयस्येष्टस्याऽनुपपत्तिस्स्यादिति। **समानार्थकत्वासम्भव इति**—विग्रहवाक्ये तृतीयार्थस्य सम्यग्दर्शननिष्ठस्य कर्तृत्वस्य निरूपकत्वसम्बन्धेन शुद्धपदार्थे शुद्धिक्रियायामन्वयः, समासवाक्ये तु लक्षणया सम्यग्दर्शनपदार्थस्य सम्यग्दर्शननिष्ठकर्तृत्वनिरूपकस्याऽभेदसंसर्गेण शुद्धपदार्थे शुद्धिक्रियायामन्वय इत्युभयत्र समानार्थकत्वासम्भव इत्यर्थः। **नियमस्याऽ-नङ्गीकारेणेति** संसर्गतावादिभी राज्ञः पुरुष इत्यादौ राजरूपनामार्थस्य राज्ञः पुरुषरूप नामार्थे पुरुषे स्वत्वरूपभेदसंसर्गेणाऽन्वयस्वीकारादिति भावः। **अथ समर्थः पदविधिरित्यत्र**—विधीयत इति विधिः कर्मसाधनः, तस्य षष्ठ्यन्तेन पदशब्देन सह समासः, पदस्य विधिः पद-विधिः। समर्थपदस्य समर्थाश्रितोऽर्थः, तथा च पदसम्बन्धी विधिः समर्थाश्रितो भवतीत्यर्थः। सामर्थ्यं द्विविधं, एकं व्यपेक्षारूपं द्वितीयमेकार्थीभावरूपं, विग्रहवाक्ये वैयाकरणमते नैयायिक-मते च तत्तत्पदानां पृथक्शक्त्यैव तत्तदर्थोपस्थितिर्भवति, समासे तु वैयाकरणमते समासघट-कतत्तत्पदानां पृथक्शक्त्या तत्तदर्थोपस्थितिर्न भवति किन्तु समुदायशक्त्यैव विशिष्टार्थोपस्थि-तिर्भवति "संसृष्टार्थं समर्थम्" इति भाष्यात्, तथा च विशेषणविशेष्यभावावगाह्येकार्थो-पस्थितिजनकत्वलक्षणमेकधर्मावच्छिन्नशक्तिमत्त्वरूपार्थपर्यवसानकमेकार्थीभावरूपमत्र सामर्थ्यं गृह्यते, न तु पृथगर्थानां पदानां पृथगर्थोपस्थितिजनकत्वलक्षणं निरूप्यनिरूपकभावापन्नवि-षयताकशाब्दबोधप्रयोजकाकाङ्क्षाशालित्वरूपार्थपर्यवसानकं व्यपेक्षारूपं सामर्थ्यं, गौरवा-लिङ्गितत्वात्, शाब्दिकनये समुदायशक्त्यङ्गीकारादस्ति कृत्तद्धितैकशेषसमाससनाद्यन्तधातुरूप-पञ्चवृत्तिष्वेकार्थीभावरूपं सामर्थ्यम्, अत एव राजपुरुष इत्यादिसमासे पदार्थैकदेशे राज्ञि

सामर्थ्यं न निरूप्यनिरूपकभावापन्नविषयताकशाब्दबोधप्रयोजकाकाङ्क्षाशालित्वरूपव्यपेक्षात्मकं गौरवालिङ्गितं, किन्तु एकधर्मावच्छिन्नशक्तिमत्त्वरूपैकार्थीभावात्मकमेव लघुभूतमिति समासे शक्तिरवश्यमभ्युपगन्तव्येत्यभ्युपगन्तॄणां वैयाकरणानाम्मते सम्यग्दर्शनशुद्धमिति समासस्य शक्त्यैव सम्यग्दर्शननिष्ठकर्तृतानिरूपकशुद्धिक्रियायाः प्रतिपाद्यत्वेन तत्र प्रकारतया भासमानस्य कर्तृत्वस्य न विधेयत्वम्, असंसृष्टोद्देश्यविधेयोपस्थित्यात्मकपृथगुपस्थितिरूपस्योद्देश्यविधेयभावभासकस्य हेतोरभावात्, अत एव "वषट्कर्तुः प्रथमभक्षः" इत्यत्र वषट्कर्तृविशिष्टभक्षाद्युद्देशेन न प्राथम्यस्य विधानं, किन्तु प्राथम्यविशिष्टभक्षान्तरस्यैवेति मीमांसासिद्धान्तः, आप्नोतीत्यत्र तु कर्तृत्वस्य विधेयभावभासकोक्तहेतुसद्भावाद्विधेयत्वमिति बोधवैलक्षण्यसद्भावान्न कर्तृत्वार्थकत्वे तृतीयाया आप्नोतीत्यस्यायुक्तत्वमिति, तदप्यनुपपन्नम्, यतः निषादस्थपतिं याजयेदित्यत्र तत्पुरुषे लक्षणाप्रसङ्गभयात्कर्मधारयसमासमभ्युपगच्छतो मीमांसकस्य समासे शक्त्यनभ्युपगम एव, अन्यथा निषादाभिन्नस्थपतौ कर्मधारयस्येव निषादसम्बन्धिस्थपतौ तत्पुरुषस्य शक्तिरेवेति गौरवाभावे "न स्त्रीशूद्रौ वेदमधीयाताम्" इति निषिद्धस्य वेदाध्ययनस्य याजनानु-

ऋद्धादिविशेषणान्वयतात्पर्येण ऋद्धस्य राजपुरुष इत्यादिप्रयोगो न भवति, पदार्थः पदार्थेनाऽन्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तेः, एतत्फलितार्थकथनमेव सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो नेति, देवदत्तस्य गुरुकुलमित्यादौ नित्यसाकाङ्क्षत्वादेव गुरुत्वरूपे पदार्थैकदेशेऽप्यन्वय इति । यत्तु समासस्थले व्यपेक्षावादिनो नैयायिकादयः समासे न शक्तिमङ्गीकुर्वन्ति, राजपुरुष इत्यादौ राजपदस्य राजसम्बन्धिनि लक्षणयैव राजसम्बन्ध्यभिन्नः पुरुष इति बोधात्, अत एव राज्ञः पदार्थैकदेशत्वान्न तत्र ऋद्धस्येत्यादिविशेषणान्वयः, सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो नेत्युक्तेश्च । न वा घनश्यामो निष्कौशाम्बिर्गोरथ इत्यादावविवक्षान्तयुक्तादिप्रयोगापत्तिः, लक्षणयैवोक्तार्थतया "उक्तार्थानामप्रयोगः" इति न्यायेनेवादीनामप्रयोगादिति, तन्न, समासे शक्त्यनभ्युपगमे विशिष्टस्याऽर्थवत्त्वाभावात् प्रातिपदिकत्वं न स्यादित्याशयेनाऽऽह—**यदपि समर्थः पदविधिरित्यादि । असंसृष्टेति**—विशेषणविशेष्यभावानापन्नेत्यर्थः, भिन्नपदादिति शेषः, अस्य च पृथगुपस्थितावन्वयः । समासे शक्त्यभ्युपगमादेव "वषट्कर्तुः प्रथमभक्षः" इति वाक्याद्वषट्कर्तृविशिष्टभक्षाद्युद्देशेन न प्राथम्यस्य विधानं, तथा सति समुदायशक्तिर्न सिद्ध्येत, उद्देश्यविधेयभावेनान्वये पृथगुपस्थितेर्नियामकत्वेन प्राथम्यस्य पृथक् शक्त्यैवोपस्थितत्वात्, किन्तु समुदायशक्तिमङ्गीकृत्य प्राथम्यविशिष्टभक्षान्तरस्यैव विधानमित्याशयेनाह—**अत एवेत्यादि । उक्तहेतुसद्भावादिति**—आप्नोतीत्यत्राऽऽख्याततिङोक्तस्य कर्तृत्वस्य पृथगुपस्थितिरूपहेतुसद्भावादित्यर्थः । **अन्यथा**—समासे शक्त्यभ्युपगमे । **गौरवाभावे**—तत्पुरुषे समुदाये शक्त्यङ्गीकाराल्लक्षणाप्रसङ्गरूपगौरवाभावे । **याजनानुरोधेन कर्मधारये सङ्कोचनमनुचितमापद्येतेति**—अयम्भावः—निषादस्थपतिं याजयेदिति वाक्ये कर्मधारयसमासे कृते निषादश्चाऽसौ स्थपतिरिति विग्रहे निषादपदार्थेन सहाऽभेदसम्बन्धेनाऽन्वितं स्थपतिं स्वामिनं याजयेदित्यर्थः । "पुलिन्दः

रोधेन कर्मधारये सङ्कोचनमनुचितमापद्येत; एवञ्च वषट्कर्तुः प्रथमभक्ष इत्यत्र समासघटकप्रथमपदात्प्राथम्यस्य पृथगुपस्थितेर्विधेयभावभासकहेतोः सद्भावेऽपि यदविधेयत्वं तत् "प्राप्ते कर्मणि नानेको, विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते, बहवोऽप्येकयत्नतः ॥ १ ॥" इति वचनात् भक्षणे

शबरो दस्यु–र्निषादो व्याधलुब्धकौ । धानुष्कोऽथ किरातश्च, सोऽरण्यानीचरः स्मृतः ॥१॥" इति धनञ्जयकोशात्, "निषादः स्वरभेदेऽपि, चण्डाले धीवरान्तरे" इति मेदिनीकोशाच्च निषादपदस्य शूद्रविशेषपरत्वेन तस्य "न स्त्रीशूद्रौ वेदमधीयाताम्" इति वेदवाक्येन वेदाध्ययनस्य निषिद्धत्वेन याजनं निषिद्धं, निषादस्थपतिं याजयेदिति वेदवाक्येन याजनं च विहितमिति तदन्यथानुपपत्त्या तत्राऽध्ययनपदस्य निषादस्थपतिं याजयेदिति वेदवाक्यविहितयागोपयुक्तवेदातिरिक्तवेदाध्ययनपरत्वेन सङ्कोचनमावश्यकं, तेनैव च निषादस्य विशेषतः प्राप्ताध्ययनभिन्नाध्ययननिषेधः शूद्रान्तरस्य चाऽध्ययनमात्रनिषेधस्सिद्धयतीत्युक्तवेदवाक्ययोश्चरितार्थता कर्तव्या । तत्पुरुषे तु निषादानां स्थपतिरिति विग्रहवाक्ये निषादपदार्थस्य भेदसम्बन्धेनैव स्थपतिपदार्थेऽन्वये कृते ब्राह्मणक्षत्रियादेरपि निषादसम्बन्धिस्थपतित्वसम्भवेन तस्य यागोपयुक्तवेदाध्ययननिषेधासम्भवेनोक्तसङ्कोचनमनावश्यकमेव प्रतिभातीति भावः ।

एवञ्च–उक्तयुक्त्या समासस्य शक्त्यभावे सिद्धे च । यदविधेयत्वं तदिति–वषट्कर्तुः प्रथमभक्ष इत्यस्मिन् वाक्ये प्रथमभक्ष इति समासवाक्यघटकप्रथमपदेन प्राथम्यस्य भक्षपदजन्यभक्षणोपस्थितितो भिन्नाया उपस्थितेः शाब्दबोधे यद्विधेयतया भानं तत्प्रयोजिकायास्सत्त्वेऽपि प्राथम्यस्य यन्न भक्षणमुद्दिश्य विधेयत्वं तदित्यर्थः । तदित्यस्याऽनुसन्धानबललब्धविशिष्टविधेरेवेत्यनन्तरं सम्बन्धः । प्राप्ते कर्मणि वाक्यान्तरेण प्राप्तेऽधिगते कर्मणि, यथाऽत्रैव यजमानपञ्चमा ऋत्विज इडां भक्षयन्तीति वाक्यान्तरेणाऽवगते इडाभक्षणात्मककर्मणि ॥ इडा हुतावशिष्टद्रव्यविशेषस्तां, यजमानपञ्चमाः यजमानः पञ्चमो येषु ऋत्विक्षु ते यजमानपञ्चमाः, तथा चेडां यजमान ऋत्विजो होतृउद्गातृब्रह्मवषट्कर्तृनामानश्चत्वारश्च भक्षयन्तीत्युक्तवाक्यार्थः । अनेको गुणः–प्राथम्यं वषट्कर्तृसम्बन्धश्चेति गुणद्वयं विधातुं न शक्यते, यतस्तथा विधाने प्राथम्यनिष्ठविधेयतानिरूपितभक्षणनिष्ठोद्देश्यताक एको बोधः, अपरश्च वषट्कर्तृसम्बन्धनिष्ठविधेयतानिरूपितभक्षणनिष्ठोद्देश्यताको बोध उक्तवाक्यात्स्यात्, तथा च साक्षात्परम्परया वा परस्परनिरूप्यनिरूपकभावानापन्नविषयताकबोधजनकत्वलक्षणो वाक्यभेददोषः स्यात्, तत्किमनेकगुणविधानं न भवत्येव ?, भवत्यनेकगुणविधानं यदाऽनेकगुणविशिष्टं वाक्यान्तराप्राप्तलक्षणमपूर्वमेकं कर्म विधीयते तदा, अनेकगुणसंवलितापूर्वकर्मविधाने विशेषणतयाऽनेकगुणस्याऽपि विधानात्, तदाह–अप्राप्ते तु वाक्यान्तरादप्राप्तेऽनधिगते कर्मणि पुनर्बहवोऽपि गुणा एकयत्नतस्तावद्गुणविशिष्टापूर्वकर्मविधानात्मकैकयत्नतो विधीयन्ते, यथा वषट्कर्तुः प्रथमभक्ष इत्यत्रैव यदा यजमानपञ्चमा ऋत्विज इडां भक्षयन्तीति वचनप्राप्तभक्षणानुवादेन न वषट्कर्तृसम्बन्धप्राथम्ययोर्विधानं, किन्तु वषट्कर्तृसम्बन्धविशिष्टप्राथम्यविशिष्टभक्षणान्तर-

वषट्कर्तृसम्बन्धस्य प्राथम्यस्य च विधाने वाक्यभेदापत्तिरूपं गौरवं वषट्कर्तृविशिष्टभक्षणे प्राथम्यविधानन्तु तादृशभक्षणस्याप्राप्तत्वादेवानुद्देश्यत्वेन न सम्भवतीत्यनुसन्धानबललब्धविशिष्टविधेरेव, एवञ्च पृथगुपस्थितिसम्भवेन सम्यग्दर्शननिष्ठस्य शुद्धक्रियाकर्तृत्वस्य समासनिविष्टपदप्रतिपाद्यस्यान्यतः प्राप्त्यभावाद्विधेयत्वस्य सम्भवेनोक्तबोधवैलक्षण्यस्याभावादाप्नोतीत्यस्यायुक्तत्वमेतत्पक्षे दुष्परिहरमेव । यत्तु समासस्याशक्तत्वेऽर्थवत्त्वाभावात् नामसञ्ज्ञाया अभावे तदुत्तरप्रथमादिविभक्त्यनुपपत्तिरिति, तन्न, वृत्तिम-

स्यैव यजमानपञ्चमा ऋत्विज इडां भक्षयन्तीति श्रुतिप्रतिपाद्यभिन्नत्वरूपस्य विधानमित्युररीक्रियते तदा विशिष्टविधिमहिम्ना वषट्कर्तृसम्बन्धप्राथम्यभक्षणान्तराण्येकयत्नेन एव विधीयन्ते तदानीं विशिष्टनिष्ठविधेयताके एक एव शाब्दबोध इति न वाक्यभेदः, तथा चोक्तवचनाद् भक्षणे यजमानपञ्चमा ऋत्विज इडां भक्षयन्तीति वचनप्राप्तभक्षणे, वषट्कर्तृसम्बन्धस्येति–दर्शितादिशोभयविधाने वाक्यभेदापत्तिरूपं गौरवं भवति, वषट्कर्तृविशिष्टभक्षणमुद्दिश्यैकस्यैव प्राथम्यस्य विधानं तु न सम्भवति, यतो यदेव प्रमाणान्तरप्राप्तं तस्यैवोद्देश्यत्वं भवति, यजमानपञ्चमा ऋत्विज इडां भक्षयन्तीत्यनेन यजमानसहितर्त्विक्चतुष्टयकर्तृकभक्षणमेव प्राप्तं, न तु वषट्कर्तृविशिष्टभक्षणं, तथा चाऽप्राप्तत्वात्तस्योद्देश्यत्वासम्भवात्तदुद्दिश्य प्राथम्यविधानं न सम्भवतीत्याकारकानुसन्धानबलाल्लब्धो यो वषट्कर्तृसम्बन्धविशिष्टप्राथम्यविशिष्टभक्षणान्तरविधिः, तस्मादेव कारणाद्भक्षणानुवादेन समासघटकप्रथमपदादुपस्थितस्य केवलस्य प्राथम्यस्याऽविधेयत्वम् । एवञ्च–ऽ ऽक्तदिशा पृथगनुपस्थितत्वादऽ स्यैवाऽविधेयत्वप्रयोजकत्वं न तु समासघटकपदोपस्थितत्वस्येति व्यवस्थितौ च । सम्यग्दर्शनशुद्धामिति समासनिविष्टपदप्रतिपाद्यस्याऽपि सम्यग्दर्शननिष्ठशुद्धिक्रियाकर्तृत्वस्य पृथगुपस्थितिसम्भवेनाऽविधेयत्वप्रयोजिकाया अन्यतः प्राप्तेरभावाद्विधेयत्वस्य सम्भवेनोक्तबोधवैलक्षण्यस्याऽभावादाप्नोतीत्ययुक्तमित्यर्थः । समासे शक्त्यनभ्युपगमेऽर्थवत्त्वाभावेन तस्य प्रातिपदिकसंज्ञा न स्यादिति विभक्त्युत्पत्तिर्न स्यादित्यादिवैयाकरणमतखण्डनायाऽऽह तन्नेति । अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १–२–४५ । इति पूर्वसूत्रेऽर्थविषयकबोधजनकत्वमर्थवत्त्वं, कृत्तद्धितसमासाश्च । १–२–४६ । इत्युत्तरसूत्रे एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वमर्थवत्त्वमेकार्थीभावत्वं च पृथगर्थानां पदानामेकार्थोपस्थितिजनकत्वमित्यादिलक्षणमर्थवत्त्वं वैयाकरणैरभ्युपगतं तद्गौरवान्नैयायिकैर्नाभ्युपगम्यते, किन्तु वृत्तिमद्विषयकप्रतीत्यविषयत्वलक्षणमेवार्थवत्त्वमभ्युपगम्यते, लाघवात्, तस्य चैवं सङ्गमनं, वृत्तिमान् शक्तिलक्षणान्यतरवान् रामशब्दस्तद्विषयिका प्रतीती रामरूपार्थस्याऽपभ्रंशो यः कश्चिच्छब्दस्तस्य, रामघटकतत्तदक्षरस्य वा प्रतीतिस्तदविषयत्वं रामशब्देऽस्तीति तत्राऽर्थवत्त्वम्, एवमन्येष्वपि शब्देषु सङ्गमनं कर्तव्यं, समासस्थले

द्विषयप्रतीत्यविषयत्वलक्षणस्यार्थवत्त्वस्य तत्र सम्भवेन नामसञ्ज्ञासम्भवात्, न चैवं गौरवम्, अनन्तानां समासानां प्रत्येकं शक्तिभेदकल्पनापेक्षया व्यपेक्षारूपसामर्थ्ये " समर्थः पदविधिः " इति सूत्रापेक्षितत्वस्यो ऽप्यर्थवत्त्वस्य नामसञ्ज्ञानिमित्तत्वस्य च कल्पने गौरवाभावादिति दिग् । नापीयं तृतीया करणे, तत्त्वे शुद्धिं प्रति करणत्वं सम्यग्दर्शनस्याभिमतं, शुद्धज्ञानं प्रति वा, नाद्यः पक्षः, देहादिगतमलापनोदादिलक्षणायामपि शुद्धौ शुद्धित्वस्य सत्त्वेन तस्यातिप्रसक्ततया सम्यग्दर्शनजन्यतानवच्छेदकत्वात्, नापि द्वितीयः, नीलघटत्वनीलेतरघटत्वादेरिव शुद्धज्ञानत्वस्यापि स्वघटकतत्तद्धर्मावच्छिन्नोत्पादकसामग्रीसमुदायप्रयोज्यत्वलक्षणेन स्वस्वप्रयोजकसामग्रीप्रयोज्यतत्तद्धर्मावच्छिन्नघटितत्वलक्षणेन वाऽर्थसमाजसिद्धत्वेनालिङ्कियातत सम्यग्दर्शनजन्यतावच्छेदकत्वासम्भवात्, किञ्च शुद्धज्ञानत्वस्य सम्यग्दर्शनजन्य-

तद्घटकानि यावन्ति पदानि तावत्सु सर्वेषु वृत्तिर्वर्तत इति तदविषयिका न तत्तत्समासविषयिका प्रतीतिः, किन्त्वन्यविषयिकैव, तदविषयत्वं तत्तत्समासे वर्तत इति तत्राऽप्यर्थवत्त्वं सुसङ्गतमेवेति नामसंज्ञा स्यादेवेत्याशयेनाऽऽह—**वृत्तिमदविषयकप्रतीत्यविषयत्वलक्षणस्यार्थवत्त्वस्येत्यादि** । नन्वेतादृशार्थवत्त्वस्वीकारे वृत्तिघटकानि यानि यानि पदानि तत्र तत्र सर्वत्राऽर्थवत्त्वं स्यात्तदा राजपुरुष इत्यादिसमासे राजपदादावपि नामत्वापत्तिः, तथा च सति तस्माद्विभक्त्युत्पत्तिस्स्यादिति चेत्, न, "अवयवप्रसिद्धेस्समुदायप्रसिद्धिर्बलीयसी इति न्यायमूलकवृक्षप्रचलन्न्यायात्समुदायादेव विभक्त्युत्पत्तिर्भवति, न त्ववयवात्, यथा पातञ्जलभाष्यमते वर्णानामर्थवत्त्वे घटादिशब्दघटकवाद्युत्तरमपि विभक्त्युत्पत्तिस्स्यादित्याशङ्क्य वृक्षप्रचलन्न्यायेन समाहितं तथाऽत्राऽपि राजपदेऽर्थवत्त्वेऽपि न विभक्त्युत्पत्तिः, उक्तन्यायादिति भावः । राज्ञः पुरुष इत्यादि विग्रहस्थले राजपदस्य राजत्वावच्छिन्ने पुरुषपदस्य पुरुषत्वावच्छिन्ने शक्तिर्वैयाकरणैस्स्वीकृता, तयैव समासघटकराजपुरुषादितत्तत्पदे निर्वाहे न्यायमते नाऽतिरिक्तशक्तिकल्पना, वैयाकरणमते च समासे शक्त्यभ्युपगमे यावत्संख्यकानि पदानि तत्तत्पदसंयोगप्रभवत्वेन तावत्संख्याधिकसंख्यकतयाऽनन्तानां समासानां प्रत्येकं भिन्नभिन्नशक्तिः कल्प्या स्यादिति गौरवं तन्मते स्यात्, न्यायमते च लाघवमिति लाघवतर्कबलेन निरूप्यनिरूपकभावापन्नविषयताकशाब्दबोधप्रयोजकाकाङ्क्षाशालित्वरूपव्यपेक्षात्मके सामर्थ्ये " समर्थः पदविधिः " इति सूत्रसिद्धत्वमभ्युपगन्तव्यं, न त्वेकधर्मावच्छिन्नशक्तिमत्त्वलक्षणैकार्थीभावात्मकसामर्थ्ये, गौरवप्रतिसन्धानरूपप्रतिबन्धकबलात्, एवमुक्तनीत्या समासे शक्तिलक्षणान्यतरवत्त्वलक्षणस्याऽर्थवत्त्वस्य मुख्यस्य बाधेन गौणभूतं वृत्तिमदविषयकप्रतीत्यविषयत्वलक्षणार्थवत्त्वं तत्र नामसंज्ञानिमित्तत्वं च कल्प्यमित्याशयेनाऽऽह—**अनन्तानां समासानामित्यादि** । **सम्यग्दर्शनजन्यतानवच्छेदकत्वादिति** अन्यूनानतिप्रसक्तधर्मस्यैवाऽवच्छेदकत्वमिति नियमादिति भावः । सम्यग्दर्शनेनेत्यत्र करणार्थे तृतीयास्वीकारे करणत्वस्य निरूपकत्वसम्बन्धेन शुद्धज्ञानेऽन्वयस्स्वीकरणीयः स्यात्, तथा सति तस्य व्यपेक्षात्मकसामर्थ्यवत्त्वेन सम्यग्दर्शनपदेन समासे कृते विभक्तेर्लुकि कृते सम्यग्दर्शनशुद्धज्ञानमिति प्रयोगापत्तिस्स्यादित्याशयेनाऽऽह—**किञ्च शुद्धज्ञानत्वस्येति** ।

तावच्छेदकत्वे तस्यैव सम्यग्दर्शनकरणकत्वान्वयितावच्छेदकत्वमुचितमिति सम्यग्दर्शनशुद्धज्ञानमिति स्यात्, न तु सम्यग्दर्शनशुद्धं ज्ञानमिति, किञ्च विवक्षाघटितस्य करणत्वस्य पूर्वमुपदर्शितस्य करणसञ्ज्ञादिविधायकसूत्रापेक्षितत्वेऽपि शाब्दबोधे विवक्षादेः प्रायोऽभानादन्वदेव किञ्चिद्वक्तव्यम्, तच्च न व्यापारवत्कारणत्वम्, तथा सति कर्तुरपि किञ्चिद्व्यापारवत एव कारणत्वेन चैत्रेण पचति काष्ठमित्यपि प्रयोगः स्यात्, अत एव कर्तृव्यापाराधीनव्यापारवत्कारणत्वमपि न तत्, कर्तुश्चेष्टादिरूपस्य कृतिरूपव्यापाराधीनत्वेनोक्तप्रयोगप्रसङ्गस्य तादवस्थ्यात्, स्वभिन्नत्वस्य कर्तृविशेषणत्वेऽपि यत्रैकैव पाकक्रिया चैत्रेण काष्ठादिना मैत्रेण तुषादिप्रक्षेपेण जन्यते तत्र चैत्रः काष्ठैर्मैत्रस्तुषैः पचतीतिवत् चैत्रस्तुषैर्मैत्रः काष्ठैः पचतीत्यपि स्यात्, अतः स्वभिन्नसमभिव्याहृतकर्तृव्यापाराधीनव्यापारवत्कारणत्वं तदिति वक्तव्यम्, एवञ्च छिदादिक्रियातः पूर्वं परश्वादीनामिव शुद्धज्ञानात्पूर्वं सम्यग्दर्शनस्य सत्त्वमापद्येत, न चैतदभ्युपगन्तुं शक्यम्, अधिगमसम्यग्दर्शनस्य ज्ञानानन्तरमेवात्मलाभत्वेनाभ्युपगमात् । सम्यग्दर्शनाय शुद्धमिति द्वितीयपक्षे चतुर्थीयम् " तादर्थ्ये ॥ २ । २ । ५४ ॥ " इति सूत्रविहिता यूपाय दार्वित्यादाविवात्र सम्भाव्येत, न तु क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वपर्यवसन्नमुख्यभाक्तसाधारण-

करणसंज्ञादिविधायकसूत्रापेक्षितत्वेऽपीति क्रियासिद्धौ प्रकृष्टोपकारकत्वेन यद्विवक्ष्यते तत्करणसंज्ञं स्यादित्यर्थक " साधकतमं करणम् " २-२-२४ । इति सूत्रापेक्षितत्वेऽपीत्यर्थः । प्रकृष्टोपकारकत्वञ्चात्र यद्व्यापारानन्तरं कार्यनिष्पत्तिस्तत्त्वलक्षणम्, अत एव " क्रियायाः परिनिष्पत्ति-र्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र, करणं तत्तदा स्मृतम् ॥ १ ॥ " इति वाक्यपदीयकारिकोक्तलक्षणमपि सङ्गच्छते । **चैत्रस्तुषैर्मैत्रः काष्ठैः पचतीत्यपि स्यादिति**—उक्तप्रयोगे स्वं करणत्वेनाऽभिमतस्तुषस्तद्भिन्नकर्तृत्वं चैत्रमैत्रयोरविशिष्टमिति मैत्ररूपकर्तारमादाय, स्वं काष्ठं तद्भिन्नं चैत्ररूपकर्तारमादाय चोक्तप्रयोगप्रसङ्गदोषो बोध्यः । स्वभिन्नसमभिव्याहृतेत्याद्युक्तौ च स्वपदेन यदि गृह्यते तुषस्तदा तद्भिन्नसमभिव्याहृतः कर्ता चैत्रो, न तु मैत्रः, तद्व्यापाराधीनव्यापारवत्कारणत्वं तुषे नाऽस्ति । एवं यदि स्वं काष्ठं तदा तद्भिन्नसमभिव्याहृतः कर्ता मैत्रः,तद्व्यापाराधीनव्यापारवत्कारणत्वं काष्ठे नाऽस्तीति नोक्तप्रयोगप्रसङ्ग इति भावः । **मुख्यभाक्तसाधारणक्रियाकर्मसम्बन्धित्वेना कर्त्रभिप्रेतत्वलक्षणसम्प्रदानत्वमिति** यथा चैत्रो देवदत्ताय गां ददातीत्यत्र दानक्रियाकर्म गौः तत्सम्बन्धित्वनिष्ठप्रकारतानिरूपितदेवदत्तनिष्ठविशेष्यतानिरूपको यश्चैत्ररूपदानकर्तुर्गोसम्बन्धी देवदत्तो भवत्वित्याकारकोऽभिप्रायः, तद्विशेष्यत्वं देवदत्ते वर्तत इति तत्र सम्प्रदानत्वं, उक्तस्थले दाधात्वर्थो मुख्यः स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिरूपमुख्यफलोत्पत्तेः, गुरुश्शिष्याय चपेटां ददातीत्यत्र गौणः, उक्तफलाभावादिति, उक्तलक्षणघटकस्वामित्वसम्बन्धविवक्षायां मुख्यप्रयोगः, उद्देश्यत्वसम्बन्धविवक्षायां च भाक्तप्रयोगः । तल्लक्षणं कुत्र पर्यवसन्नमित्याशङ्कायां तस्य परिचायकमाह—**क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वपर्यवसन्नेति पर्यन्तम्** । तस्य चैवं सङ्गमनं, क्रिया दानक्रिया तज्जन्यफलं

क्रियाकर्मसम्बन्धितया कर्त्रभिप्रेतत्वलक्षणसम्प्रदानत्वमर्थमुपादाय प्रवृत्ता सम्प्रदानचतुर्थी, तस्याः समासविधायकशास्त्राऽविषयत्वेन प्रकृतानुगुण्याभावात्, समभिव्याहृतपदार्थे तादर्थ्यविवक्षाया तद्वाचकाच्चतुर्थीत्यर्थे उक्तसूत्रस्य तात्पर्यम्, तत्र तादर्थ्यं स एवार्थः प्रयोजनमस्य तत्त्वमिति निरुक्त्या तत्प्रयोजनकत्वं, तच्च तदिच्छाधीनेच्छाविषयव्यापाराश्रयत्वं, तत्र तेच्छब्दार्थस्य प्रकृतिलभ्यत्वेन न प्रत्ययार्थे प्रवेशः, एवञ्च यूपेच्छाधीनेच्छाविषयतक्षणादिरूपव्यापारवत्त्वं यथा दारुणः, तथा सम्यग्दर्शनेच्छाधीनेच्छाविषयशुद्धिव्यापारवत्त्वं शुद्धज्ञानस्येति कृत्वा तादर्थ्यमत्रोपपाद्येतापि, परन्तु " चतुर्थी प्रकृत्या ॥३।१।७०॥ " इति समासविधायकसूत्रे " प्रकृतिः परिणामिकारणम्, चतुर्थ्यन्तमर्थाद्विकृतिवाचि नाम प्रकृतिवाचिना नाम्ना सह समस्यते तत्पुरुषश्च समासो भवति " इति विवृतिमुपरचयता सूरिणोक्तसूत्रेण समासे प्रकृतिविकारभावस्य नियामकत्वस्यानुमततया शुद्धस्य गुणवाचिनः सम्यग्दर्शनोपादानतानवच्छेदकशुद्धत्वप्रवृत्तिनिमित्तकस्य प्रकृतिवाचिनामत्वाभावेन तेन सह तत्पदार्थनिरूपितोपादेयतानवच्छेदकसम्यग्दर्शनत्वावच्छिन्नवाचिसम्यग्दर्शनपदस्योक्तसूत्रविहितसमासासम्भवतोऽसाधुत्वं स्यात्, शुद्धज्ञानं सम्यग्दर्शनात्मना परिणमत इत्युपगमाश्रयणे शुद्धज्ञानत्वस्यैवोपादानतावच्छेदकत्वेन तदवच्छिन्नाववोधकेन शुद्धज्ञानेन सह समाससम्भवेऽपि सम्यग्दर्शनशुद्धज्ञानमिति स्यात्, न तु सम्यग्दर्शनशुद्धमिति, एतेन आरामगृहाश्वघासादाविव चतुर्थीति योगविभागेन समासोपपादनप्रक्रियाऽपि शाब्दिकानां व्याख्याता, गृहत्वघासत्वादेरिव शुद्धज्ञानत्वस्योक्तदिशाऽन्वयितावच्छेदकत्वात्, अर्थबाधस्तु चतुर्थी पक्षे जागर्त्येव, सति हि सम्यग्दर्शने ज्ञानं शुद्धं भवति, न तु यूपात् पूर्वं दारुण इव सम्यग्दर्श-

स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिलक्षणं तद्भागितया गोसम्बद्धो देवदत्तो भवत्वित्याकारकेच्छाया यैत्ररूपकर्तृगतायाः विशेष्यत्वाख्यविषयत्वं देवदत्ते वर्तत इति भावः । यूपाद्यात्मना दार्वादि परिणममानं यूपादेः प्रकृतित्वेन विज्ञायत इति तद्वाचिदारुनाम्ना सह विकृतिवाचियूपनाम समस्यते, प्रकृते तु नैवं सम्यग्दर्शनस्य शुद्धं प्रकृतित्वेन विज्ञायते, तस्य गुणत्वात्, गुणस्य च प्रकृतित्वाभावात्, शुद्धस्य प्रकृतिरूपत्वाभावेन न तद्विकृतित्वं सम्यग्दर्शनस्येति तयोर्नोपादानोपादेयभावलक्षणप्रकृतिविकृतिभाव इति शुद्धपदस्य प्रकृतिवाचिनामत्वाभावेन तेन सह सम्यग्दर्शनपदं विकृतिवाचि नेति न तत्समस्यत इति सम्यग्दर्शनशुद्धमिति प्रयोगस्याऽसाधुत्वं स्यादित्याशयेनाऽऽह—**परन्त्वित्यादि । परिणामिकारणमिति**—उपादानकारणमित्यर्थः । प्रकृतिविकारभावस्येति—उपादानोपादेयभावस्येत्यर्थः । प्रकृतिविकृतिभावाभावेऽपि चतुर्थीति योगविभागेनाऽऽरामाय गृहमश्वाय घास इत्याद्यर्थे आरामगृहमश्वघास इत्यादिसमासवत्प्रकृतेऽपि समास इति केषाञ्चिच्छाब्दिकानां मतमुपदर्श्य निरस्यति—**एतेन आरामेति** । एतेनेति व्याख्यातेत्यनेनाऽन्वयः, व्याख्यातेत्यस्य निरस्तेत्यर्थः । निरसने हेतुमाह । **गृहत्वघासत्वादेरिवेति**—गृहस्याऽऽरामनिमित्तत्वमश्वनिमित्तत्वं च घासस्येव शुद्धज्ञानस्यैव सम्यग्दर्शननिमित्तत्वमिति तेनैव सह समासे सम्यग्दर्शनशुद्धज्ञानमित्येव प्रयोगः स्यात्, न तु सम्यग्दर्शनशुद्धं ज्ञानमिति भावः । अर्थबाधमेवाह—**सति हीत्यादिना** । तथा

नात्पूर्वं शुद्धं ज्ञानम्, तथा सति दारुणस्साक्षाद्यूपकार्यासमर्थत्वेन यूपरूपेण परिणमनस्यावश्यकत्वेऽपि शुद्धज्ञानस्य स्वतो मोक्षादिकार्यकारित्वस्य केवलिनि दृष्टतया तद्रूपेण परिणमनस्यासामञ्जस्यं स्यादिति द्वितीयपक्षोऽपि न विद्वज्जनचेतश्चमत्कारी । सम्यग्दर्शनाच्छुद्धमिति तृतीये पञ्चमीयम् "गुणादस्त्रियां न वा ॥ २ । २ । ७७ ॥" इति सूत्रविहिता हेतुत्वमर्थमुपादाय प्रवृत्तेत्यभ्युपगन्तव्यम्, तत्रान्यथासिद्धिशून्यत्वे सति कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वलक्षणं हेतुत्वं स्वयंसम्बुद्धादौ व्यतिरेकव्यभिचारतः सम्यग्दर्शनस्य शुद्धज्ञानं प्रति वक्तुमशक्यमित्यर्थबाधः ॥ पञ्चमी भयाद्यैः ॥ ३ । १ । ७३ ॥ इत्यनेनाकृतिगणे भयादौ शुद्धपदस्य पाठकल्पनया पाणिनीयसम्मतपञ्चमीति योगविभागसमाश्रयणेन वोक्तसमासस्योपपत्तावपि तृतीयापक्षोक्तदिशा शुद्धित्वस्य कार्यतानवच्छेदकत्वेन शुद्धज्ञानत्वस्यैव सम्यग्दर्शनकार्यतावच्छेदकत्वस्य वक्तव्यतया सम्यग्दर्शनशुद्धज्ञानमित्यस्यैवापत्तिश्च । चतुर्थीपक्षोक्तदोषकवलितो निमित्तसप्तमीमवलम्ब्य प्रवृत्तः सम्यग्दर्शने शुद्धमिति तुर्यपक्षोऽप्यलग्नक एवेति । अत्र ब्रूमः ॥ सम्यग्दर्शनेन शुद्धमिति पक्षे तृतीयायाः कर्तृत्वार्थे-

त्वेति–शुद्धज्ञानस्य सम्यग्दर्शनपूर्वत्वाभ्युपगमे । तद्रूपेण सम्यग्दर्शनरूपेण । **गुणादस्त्रियां न वा ॥ २ । २ । ७७ ॥** इति–अस्त्रियां वर्तमानाद्धेतुभूतगुणवाचिनो गौणान्नाम्नः पञ्चमी वा भवतीत्यर्थः । **व्यतिरेकव्यभिचारत** इति–अधिगमसम्यग्दर्शनरूपकारणाभावेऽपि शुद्धज्ञानरूपकार्यसद्भावादिति भावः । **पञ्चमी भयाद्यैः ॥ ३ । १ । ७३ ॥** इति । पञ्चम्यन्तं नाम भयाद्यैर्नामभिस्सह समस्यते, तत्पुरुषश्च समासो भवति, भयादिराकृतिगण इत्यर्थः । **पञ्चमी भयेन ॥ । २ । १ । ३७ ॥** इति पाणिनीयसूत्रे योगो विभज्यते, पञ्चमीत्येको योगः, भयेनेत्यपरः । तत्र पूर्वयोगस्य सुप्सुपेत्यतः सुपेत्यनुवर्तनात्पञ्चम्यन्तं सुबन्तेन सह समस्यत इत्यर्थः । उत्तरयोगस्य च पूर्वयोगात्पञ्चमीत्यनुवर्तनात्पञ्चम्यन्तं भयेन सुबन्तेन समस्यत इत्यर्थः । तत्राऽऽद्यपक्षमाश्रित्याऽऽह–**पाणिनीयसम्मतपञ्चमीति योगविभागसमाश्रयणेनेति** । "निमित्तात्कर्मयोगे" इति वार्तिकेन निमित्तयोगे सप्तमी भवति । यथा–" चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः ॥ १ ॥" इत्यादौ "हेतौ" इत्यनेन पाणिनीयसूत्रेण हेत्वर्थे तृतीया प्राप्ता, तां बाधित्वोक्तवार्तिकेन निमित्तयोगे सप्तमी भवति । एवं प्रकृतेऽपि सम्यग्दर्शनशुद्धं ज्ञानमित्यत्र निमित्तयोगे सप्तमीति यः पक्षस्तन्निराकरणायाऽऽह–**चतुर्थीपक्षोक्तदोषकवलित** इत्यादि । अकर्मकाच्छुधंच्धातोर्न कर्तरि प्रत्ययो, येन तेनैव कर्तृत्वस्याऽभिहितत्वेन सम्यग्दर्शनेनेति तृतीया नोपपद्येत, किन्त्वन्तर्भूतण्यर्थत्वेन शुधंच्धातोस्सकर्मकत्वात् कर्मणि प्रत्यये कर्तुरनभिहितत्वेन कर्तरि तृतीयोपपद्यत एव । अन्तर्भावितण्यर्थत्वादेव मूलटीकायां **स स्वपायैरात्मानं शोधयतीति प्रयोग उपपद्यते** इत्युक्तम्, अन्यथा शुधंच्धातोरकर्मकत्वादात्मानं शोधयतीतिवचनं विरुध्येतेति तृतीयापक्षे न कोऽपि दोष इत्याशयेन समाधत्ते–**अत्र ब्रूमः–सम्यग्दर्शनेन शुद्धमित्यादि** ।

कत्वेऽन्तर्भूतण्यर्थलाक्षणिकस्य शुद्धपदस्य शोधनक्रियाकर्मार्थत्वे नोक्तदोषाणामवकाशः, तथाहि शोधनक्रियायां सम्यग्दर्शनस्य कर्तृत्वम्, आप्तिक्रियायां चात्मनः कर्तृत्वं नेदानीमभेदनयावलम्बनमिति सम्यग्दर्शनशुद्धमित्यनेनाप्तिक्रियाकर्तृत्वस्यानभिहितत्वेन तत्प्रतिपादकस्याप्नोतीत्यस्य युक्तत्वं, तत एव च तदर्थान्वियर्थप्रतिपादकस्य य इति कर्तृनिर्देशस्याप्यवश्यकर्त्तव्यत्वम्, तेन च सम्यग्दर्शनशुद्धज्ञानावस्थानुयायिन आत्मनः एकत्वम्प्रतिपादितम्भवति, एवञ्च 'आत्मा हि सम्यग्दर्शनी सलिलमिव स्वच्छतामन्या ज्ञानावस्थामाप्नोतीति, स ह्युपायैरात्मानं शोधयतीति' च टीकाकृद्वचनमुपपद्यते, सम्यग्दर्शनवानेवात्मा ज्ञानं शोधयतीति सम्यग्दर्शनस्य प्राधान्यविवक्षया कर्तृत्वं समीचीनमेव । करणार्थकत्वमेव तृतीयाया अत्र पक्षे सुसङ्गतम्, शुद्धिं प्रत्येव च करणत्वं तत्राभिमतं, तच्च शाब्दिकाना मते शक्तिविशेष एव, तस्य च सम्यग्दर्शनत्वादिकं व्यञ्जकमेव, तस्य च तदपेक्षया न्यूनवृत्तित्वं न दोषाय, यतः

**एवञ्चेति**—पूर्वं यः सम्यग्दर्शनावस्थामाप्तवान् स एवोत्तरकालं शुद्धज्ञानावस्थामाप्नोतीत्येवमात्मनः परिणामिन एकत्वादेव चेत्यर्थः । **आत्मा हि सम्यग्दर्शनी सलिलमिव स्वच्छतामन्यां ज्ञानावस्थामाप्नोतीति** मलिनावस्थापन्नं जलं कतकचूर्णेन मलिनावस्थां परित्यज्याऽपूर्वां स्वच्छावस्थामाप्नोति तद्वन्मिथ्यात्वमलमलीमस आत्मा सम्यग्दर्शनेन कतकचूर्णतुल्येन मिथ्यात्वमलप्रयुक्तामसज्ज्ञानावस्थां परित्यज्याऽपूर्वां सज्ज्ञानावस्थां प्राप्नोतीत्यर्थः । **स ह्युपायैरात्मानं शोधयतीति**—आत्मा सम्यग्दर्शनाद्युपायैर्ज्ञानस्वरूपं शोधयति, ज्ञानगतामसद्रूपतां परिहृत्य सद्रूपतां प्रकाशयतीति भावः । यद्यप्युक्तनीत्याऽऽत्मैव शुद्धिक्रियाकर्ता तथापि विवक्षातः कारकाणीति द्वारीभूतस्याऽपि सम्यग्दर्शनस्य प्राधान्येन शुद्धिक्रियायां कर्तृत्वविवक्षया तदर्थे सम्यग्दर्शनेनेति तृतीयोपपद्यत एवेत्याशयेनाऽऽह—**सम्यग्दर्शनवानेवाऽऽत्मेति** । सम्यग्दर्शनेन शुद्धमित्यत्र तृतीयायाः कर्तृत्वार्थकत्वमुपपाद्य करणार्थकत्वमुपपादयति—**करणार्थकत्वमेवेत्यादिना** । शुद्धिं प्रति शुद्धज्ञानं प्रति चोभयथाऽपि सम्यग्दर्शनस्य करणत्वमभिमतं, तत्र प्रथमं प्रथमपक्षोपपादनायाऽऽह—**शुद्धिं प्रत्येव चेत्यादि** । **तदपेक्षया** शक्तिविशेषरूपकरणत्वापेक्षया । तृणत्वमणित्वारणित्वादिप्रत्येकधर्मेण वह्नित्वावच्छिन्नं प्रति तेषां कारणत्वे एकस्याऽभावेऽप्यन्यस्मादग्न्युत्पत्तेर्व्यतिरेकव्यभिचार इति तद्दोषपरिजिहीर्षया कार्ये वैजात्यमभ्युपगम्य विजातीयवह्नित्वावच्छिन्नं प्रति तृणत्वेन विजातीयवह्नित्वावच्छिन्नं प्रति मणित्वेनाऽरणित्वेन च कारणत्वाभ्युपगमे विशेषरूपेणाऽनेककार्यकारणभावप्रसङ्गस्स्यादिति यावत्सु वह्निजनकेष्वऽनुगतशक्तिविशेषमङ्गीकृत्य तद्रूपमेवाऽखण्डकारणत्वं सर्वत्राऽनुगतमभ्युपगन्तव्यम्, अत एव न तृणत्वादीनां धर्मविधयाऽवच्छेदकत्वं किन्त्वभिव्यञ्जकविधयैव, इदमेवाऽस्याऽऽशक्तेरभिव्यञ्जकमिति नियमाभावेन येन येन कार्योत्पत्तिस्तत्तद्गतधर्मस्याऽभिव्यञ्जकत्वेन तत्तद्धर्मस्य तत्तन्मात्रवृत्तितया शक्तिविशेषरूपकारणत्वापेक्षया न्यूनवृत्तित्वेऽपि न क्षतिः, कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वलक्षणसखण्डकारणताया धर्मविधया यदवच्छेदकत्वं तदपेक्षयैवाऽन्यूनानतिप्रसक्तधर्मस्यैवाऽवच्छेद .त्व

तृणारणिमणीनां वह्निम्प्रति कारणत्वे तस्य शक्तिरूपत्वेन तन्न्यूनवृत्तीनामपि तृणत्वादीनां तदभिव्यञ्जकत्वलक्षणं तदवच्छेदकत्वन्निर्विवादम्, उक्तसाधकतमत्वरूपमपि करणत्वं सङ्गतिमच्चत्यैव, सिद्धान्ते शक्तिमत्त्वेनैव कारणत्वस्यैकजातीयकार्यं प्रति विजातीयानामुपगमात्, न च शक्तिरेव कारणत्वमिति पक्षे कथं शक्तेरेव शक्तिरूपकारणताया अवच्छेदकत्वमात्माश्रयदोषदुष्टं स्यादिति वाच्यम्, अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वमिति नियमतः फलोपधानरूपकारणत्वाभाववत्यरण्यस्थदण्डादौ वर्त्तमानस्य दण्डत्वादेः कार्याव्यवहितपूर्ववर्त्तिजातीयत्वलक्षणस्वरूपयोग्यतारूपकारणताया अवच्छेदकत्वमेव परेण वाच्यम्, तत्र यथा विशिष्टस्य दण्डत्वादेरवच्छेद्यत्वं शुद्धस्य चावच्छेदकत्वमित्युपगम्यात्माश्रयदोषः परिह्रियते तथैतत्पक्षेऽपि तत्तद्धर्मावच्छिन्नकार्यतानिरूपितत्वविशिष्टकारणतात्वेनावच्छेद्यत्वं शक्तित्वेन चावच्छेदकत्वमाश्रित्य, शक्तिश्च तत्तद्व्यञ्जकाभिव्यङ्ग्या कथञ्चिद्भिन्नाऽभिन्नाऽखण्डस्वरूपैवावच्छेदिका, तत्तत्कार्यानुकूलत्वञ्च विलक्षणायास्तस्या परिचायकमेव, न तु तन्निष्ठकारणतावच्छेदकतायामवच्छेदकमिति न तदुपनिपातिदोषावकाशः, कार्यगतवैजात्याभ्युपगन्तॄणान्तु यथा वह्निगतवैजात्याभ्युपगमेन वह्निं

नियमेन तस्य चात्राऽनभ्युपगमादित्याशयेनाऽऽह—यतस्तृणारणिमणीनां वह्निं प्रतीत्यादि । न च शक्तिमत्त्वेन शक्तिरूपकारणत्वे प्रकृतिजन्यबोधे प्रकारीभूतो भाव इति न्यायेन शक्तिमत्त्वं शक्तिरेवेति तस्याः शक्तिरूपकारणत्वस्याऽवच्छेदकत्वेऽवच्छेदकस्य परिचायकविधया निमित्तत्वेन स्वस्य स्वापेक्ष्यत्वेनाऽऽत्माश्रयत्वं स्यादित्याशङ्कते—न च शक्तिरेव कारणत्वमितीति । स्वरूपयोग्यत्वलक्षणकारणत्वस्याऽवच्छेदकत्वं दण्डत्वादेर्वाच्यं, न तु फलोपधानरूपकारणत्वस्य, तदधिकदेशवृत्तितयाऽतिप्रसक्तत्वात्तस्य, स्वरूपयोग्यत्वं च कारणतावच्छेदकधर्मवत्त्वलक्षणमिति दण्डत्ववत्त्वमेव दण्डनिष्ठं कारणत्वं दण्डत्ववत्त्वं च प्रकृतिभूते प्रकारीभूतो भाव इति सिद्धान्तेन दण्डत्वमेव, तथा च कारणत्वं दण्डत्वं तदेव च कारणतावच्छेदकमित्यात्माश्रयदोषो यथा घटत्वावच्छिन्नकार्यतानिरूपितकारणतात्वेन रूपेण कारणत्वीभूतदण्डत्वस्याऽवच्छेद्यत्वम्, अवच्छेदकीभूतदण्डत्वस्य निरवच्छिन्नतयाऽवच्छेदकत्वमित्येवमात्माश्रयदोषः परिहृतः, तथैतत्पक्षेऽपि घटत्वपटत्वादिधर्मावच्छिन्नकार्यतानिरूपितत्वविशिष्टकारणतात्वेनाऽवच्छेद्यत्वं शक्तित्वेन चाऽवच्छेदकत्वम् । तथा च शक्तित्वावच्छिन्नशक्तिनिष्ठाऽवच्छेदकतानिरूपिता या तत्तद्धर्मावच्छिन्नकार्यतानिरूपितकारणतात्वेनाऽवच्छेद्यता तच्छालिशक्तिरूपकारणत्वमित्येवमुक्तदोषः परिहरणीय इत्याशयेनोत्तरयति—अन्यूनानतिप्रसक्तधर्मस्येत्यादि । तत्तत्कार्यानुकूलत्वविशिष्टशक्तिमत्त्वेन शक्तिरूपकारणत्वं नाऽभ्युपगतं येन तत्तत्कार्यानुकूलत्वस्य कारणतावच्छेदकतावच्छेदकत्वापत्त्या तत्तत्कार्यभेदेन तद्भेदप्रयुक्ततद्विशिष्टभेदापत्त्या कारणताभेदापत्तिरस्यात्, किन्तु तत्तत्कार्यानुकूलत्वोपलक्षितशक्तिमत्त्वेनैव, न चोपलक्षणतावच्छेदकभेदेन तदुपलक्षितभेदः, अन्यथा तत्पदं बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तमित्यत्राऽपि तथा स्यादित्याशयेनाऽऽह तत्तत्कार्यानुकूलत्वं चेति । शुद्धज्ञानं प्रति वा सम्यग्दर्शनस्य कारणत्वमिति द्वितीयपक्षस्य सदृष्टान्तं समर्थनमाह कार्यगते-

प्रति तृणारणिमणीनां कारणत्वं निर्वहति, तथा ज्ञानगतशुद्धिक्रियागतवैजात्याभ्युपगमेन तादृशशुद्धित्वस्यैव कार्यतावच्छेदकत्वाभ्युपगमेन वा सम्यग्दर्शनस्य करणत्वं निर्वहत्येव, न च तस्य नान्वयितावच्छेदकतया परिस्फुरणम्, किन्तु सामान्यतः शुद्धित्वस्यैव, तस्य च न सम्यग्दर्शनकार्यतावच्छेदकत्वमिति वाच्यम्, इन्द्रियसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं परामर्शजन्यं ज्ञानमनुमितिरित्यादौ ज्ञानत्वस्येन्द्रियादिजन्यतानवच्छेदकस्यैवान्वयितावच्छेदकत्वस्य परैरभ्युपगमात्, प्रत्युत प्रत्यक्षत्वानुमितित्वादेस्तत्तज्जन्यतावच्छेदकस्यैव तदन्वयितावच्छेदकत्वमदृष्टचरम् । यथा च परेषामिन्द्रियत्वस्य शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वरूपस्य गुरुभूतस्य जनकतानवच्छेदकत्वेन तदवच्छिन्नसन्निकर्षत्वस्यापि चाक्षुषादिप्रत्यक्षं प्रति चक्षुष्ट्वादिना विशेषत एव कार्यकारणभावे जनकतानवच्छेदकत्वेऽपि अन्वयितावच्छेदकत्वं तथा शक्तेः कारणतावच्छेदकत्वपक्षेऽतथाभूतस्यापि सम्यग्दर्शनत्वस्य तत्त्वमुपपन्नम्, शुद्ध-

त्यादिना । **तादृशशुद्धित्वस्यैव**—ज्ञानगतविजातीयशुद्धित्वस्यैव । **तस्य**—विजातीयशुद्धित्वस्य । **तस्य च न सम्यग्दर्शनकार्यतावच्छेदकत्वमिति**—देहशुद्धावपि शुद्धित्वस्य सद्भावेन कार्यतातिरिक्तवृत्तित्वादिति भावः । इन्द्रियसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणस्य परामर्शजन्यं ज्ञानमनुमितिरित्यनुमितिलक्षणस्य चाऽनुसारेणेन्द्रियसन्निकर्षत्वेन ज्ञानत्वेन, परामर्शत्वेन ज्ञानत्वेन च कार्यकारणभावो लभ्यते, न च तथापि तथाभ्युपगतः, तथा सति ज्ञानत्वावच्छिन्नं ज्ञानमात्रमिन्द्रियसन्निकर्षजन्यं परामर्शजन्यं वा स्यादिति सर्वस्मिन् ज्ञाने प्रत्यक्षत्वानुमितित्वापत्तिस्स्यादिति, इन्द्रियसन्निकर्षादिजन्यतानवच्छेदकेऽपि ज्ञानत्वे ज्ञाने स्वनिरूपितजन्यतासम्बन्धेनेन्द्रियसन्निकर्षादेरन्वयात्तदन्वयितावच्छेदकत्वस्य नैयायिकैरभ्युपगमाद् यदेव कार्यतावच्छेदकं तदेवाऽन्वयितावच्छेदकमिति न नियम इत्याशयेन निषेधे हेतुमाह—**इन्द्रियसन्निकर्षजन्यमित्यादि** । उक्तनियमे प्रत्यक्षबाधमप्याह—**प्रत्युतेत्यादिना**॥ इन्द्रियत्वस्य पृथिवीत्वादिना साङ्कर्याज्जातिरूपत्वासम्भवेन तल्लक्षणमाह—**शब्देतरेत्यादि** । अत्र सत्यन्तविशेषणान्नाऽऽत्मादावतिव्याप्तिः, विशेष्यदलोपादानाच्च कालादावतिव्याप्तिः, शब्दाख्यविशेषगुणाश्रयत्वाच्छ्रोत्रस्य तत्राऽव्याप्तिवारणाय **शब्देतरेति** । अनुद्भूतरूपादिविशेषगुणाश्रयत्वाच्चक्षुरादेस्तत्राऽव्याप्तिवारणायोद् **भूतेति**, उद्भूतत्वस्यैकस्य शुक्लत्वादिना साङ्कर्यान्न जातित्वं, शुक्लत्वादिव्याप्यनानोद्भूतत्वानां जातित्वसम्भवेऽपि बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षनिरूपितोद्भूतरूपनिष्ठकारणताया न्यूनवृत्तित्वान्न तन्मध्यादेकस्याप्यवच्छेदकत्वं संभवतीति न तेषां जातिरूपतया कल्पनं न्याय्यम्, किन्तु शुक्लत्वादिव्याप्यनानाऽनुद्भूतत्वजात्यभावकूटरूपमेवोद्भूतत्वं, तस्यैव निरुक्तकारणतावच्छेदकत्वमित्येवमुद्भूतत्वस्याऽनुद्भूतत्वाभावकूटरूपत्वपक्षे शब्देतरोद्भूतसंयोगगुणमादाय चक्षुरादावव्याप्तिरिति तन्निवृत्तये **विशेषेति** । इन्द्रियावयवविषयसंयोगस्य प्रत्यक्षजनकत्वपक्षे तमादायेन्द्रियावयवेऽतिव्याप्तिवारणाय **मनः पदमिति** । **अतथाभूतस्याऽपि** कारणतानवच्छेदकस्याऽपि । **शुद्धि-**

ज्ञानत्वस्य चार्थसमाजसिद्धस्य जन्यतानवच्छेदकत्वेऽपि तद्धर्म्मिणो विशिष्टस्य विशेषणगतजन्यतामादायापि सम्यग्दर्शनकरणकत्वस्योपपत्तिः, 'कारकं कृता' इति समासः, श्रेयसो दर्शनमूलत्वेन दर्शनपूर्वकस्य ज्ञानस्य शुद्धत्वम्, श्रेयसो दर्शनमूलकत्वञ्च "भ्रष्टेनापि चरित्राद् दर्शनमिह दृढतरं ग्रहीतव्यम् । सिद्धयन्ति चरणरहिता, दर्शनरहिता न सिद्धयन्ति" इत्यागमप्रामाण्यादवध्रियते, यद्यप्यधिगमसम्यग्दर्शनं श्रुताध्ययनादित उपजायत इति तस्यापि ज्ञानपूर्वकत्वम्, तथापि यावन्न सम्यग्दर्शनन्तावच्छुद्धिमनाप्नुवत्तज्ज्ञानमज्ञानमेवेति न ज्ञानशुद्धं सम्यग्दर्शनम्, संवदति चासुमर्थं "द्वादशाङ्गमपि तं विदर्शनस्य मिथ्या" इत्याद्यागमः, न च श्रुतस्याप्रमात्मकज्ञानजनकत्वे प्रामाण्याभ्युपगमो व्याहन्येतेति तदन्यथानुप-

निरूपितान्वयितावच्छेदकत्वमुपपन्नमित्यर्थः । नीलघटत्वस्येव शुद्धज्ञानत्वस्याऽप्यर्थसमाजसिद्धत्वात् सम्यग्दर्शनजन्यतावच्छेदकत्वासम्भव इति यदुक्तं तन्निरसनायाऽऽह—शुद्धज्ञानत्वस्येत्यादि । तद्धर्मिणः शुद्धज्ञानत्वाश्रयस्य । विशिष्टस्य—शुद्धिविशिष्टज्ञानस्य । विशेषणेति—शुद्धीत्यर्थः । कारकं कृतेति समास इति कारकवाचि तृतीयान्तं कृदन्तेन समस्यते, तथा च करणकारकवाचि तृतीयान्तसम्यग्दर्शनपदं कृदन्तेन शुद्धपदेन समस्यत इति भावः । दर्शनमूलत्वेनेति दर्शनपूर्वकमेव ज्ञानक्रियानुष्ठानं मोक्षोत्पादकं, न तदन्तरेण, तथा च दर्शननिष्ठकारणतानिरूपितकार्यताश्रयत्वेनेत्यर्थः, "भ्रष्टेनाऽपि चरित्राद्-दर्शनमिह दृढतरं ग्रहीतव्यम्" इत्यादि । अत्रैतदर्थसंवादकाः

"श्लाघ्यं हि ज्ञानचरण-वियुक्तमपि दर्शनम् ।
न पुनर्ज्ञानचारित्रे, मिथ्यात्वमलदूषिते ॥ १ ॥
ज्ञानचारित्रहीनोऽपि, श्रूयते श्रेणिकः किल ।
सम्यग्दर्शनमाहात्म्यात्, तीर्थकृत्त्वं प्रपत्स्यते ॥२॥" इत्यादिश्लोका ज्ञेयाः ।

सम्यग्दर्शनशुद्धं ज्ञानमित्यत्र करणे तृतीयास्वीकारे परशुना काष्ठं छिनत्ति काष्ठेनौदनं पचतीत्यादौ छिदापाकादिक्रियायाः परशुकाष्ठादेः करणस्य पूर्वसत्त्वमिति सम्यग्दर्शनेन शुद्धं ज्ञानमित्यत्र सम्यग्दर्शनस्य करणस्य शुद्धज्ञानात्पूर्वं सत्त्वमापद्येत, न चाऽत्र तथेत्याशङ्काऽधिगमसम्यग्दर्शनमादाय पूर्वपक्षे कृता, अधुना नैसर्गिकसम्यग्दर्शनमादाय तां समाधत्ते—यद्यप्यधिगमसम्यग्दर्शनं श्रुताध्ययनादित उपजायत इत्यादिना । विदर्शनस्येति । विगतं विरुद्धं वा दर्शनं यस्य स विदर्शनस्तस्य, सम्यग्दर्शनरहितस्येति यावत् । न च श्रुतस्याऽप्रमात्मकज्ञानजनकत्वे प्रामाण्याभ्युपगमो व्याहन्येतेति—मिथ्यादृष्टीनां सम्यक्श्रुतमपि मिथ्यारूपेण परिणमते सम्यग्दृष्टीनां मिथ्याश्रुतमपि सम्यक्श्रुतरूपेण परिणमत इति सिद्धान्तादर्हत्प्रणीतमपि श्रुतं तदध्ययनपराणां मिथ्यादृष्टीनां अप्रमात्मकज्ञानजनकं चेत्तदा तस्य भ्रान्तवचनस्येवाऽप्रामाण्यापत्त्या प्रामाण्याभ्युपगमो व्याहन्येतेत्यर्थः । न चेत्यस्य वाच्यमित्यनेनाऽन्वयः । तदन्यथाऽनुपपत्त्या—प्रामाण्याभ्युपगमान्यथानुपपत्त्या । सम्यक्श्रुतज्ञानवता सुगुरुणा सिद्धान्तोक्तविधिना यथार्थरूपेण पाठितानां मिथ्यादृष्टीनां प्रमात्मकमेव श्रौतज्ञानं जायते, न चैवं तर्हि तेषां ज्ञानस्य सज्ज्ञानत्वप्रसक्त्या सम्यग्दृष्टित्वप्रसङ्ग इति वाच्यम्,

पत्त्या दर्शनात्पूर्वमपि श्रुताध्ययनपराणां श्रौतं ज्ञानं प्रमात्मकमास्थेयम्, ज्ञाने च प्रमात्वमेव शुद्धिरियतस्तेषां पूर्वपूर्वभवीयमिथ्यावासनावासितानामेकान्तदृष्टीनां जिनोक्तमिदमित्थमेवेत्याकारकसम्यक्तत्त्वार्थश्रद्धानाऽभावान्मिथ्यात्वदपिप्राबल्यादेव प्रमात्मकेऽपि तस्मिन् श्रौतज्ञाने इदं ज्ञानं प्रमात्मकं न वेत्याकारक एतज्ज्ञानविशेष्यकप्रामाण्यतदभावप्रकारकोऽप्रामाण्यसंशयः, यद्वेदं ज्ञानमप्रमात्मकमेवेत्याकारकमेतज्ज्ञानविशेष्यकाप्रामाण्यप्रकारकं विपर्ययात्मकमप्रामाण्यज्ञानं तदानीं जायते, प्रमात्मकश्रौतज्ञानेऽप्रामाण्यसन्देहे तद्विषयेऽप्यसत्यत्वसन्देहाद्विपर्ययात्मकाप्रामाण्यज्ञाने वा तद्विषयेऽपि पश्चाद्विपरीतत्त्वज्ञानात्तज्ज्ञानमज्ञानमेवेति सम्यग्ज्ञानाभावान्न सम्यग्दृष्टित्वप्रसङ्गः। सद्गुरुभगवतस्सकाशाच्छ्रुतमधीयाना अपि मिथ्यादृष्टय एकान्ततत्त्वमेव सत्यं मन्यन्ते, न त्वनेकान्ततत्त्वमित्यनेकान्ततत्त्वप्रतिपादकश्रुतजन्यज्ञाने प्रमात्मकेऽपि प्रामाण्यं सन्दिहन्ति विपर्ययन्ति वा, न तु सम्यग्दृष्टय इव श्रुतस्य जिनप्रणीतत्वेन तज्जातं ज्ञानं प्रमात्मकमेवेति निश्चिन्वन्ति, तथा च प्रामाण्यवत्यपि श्रौतज्ञाने संशयविपर्ययान्यतरलक्षणं यदप्रामाण्यज्ञानं तद्विषयत्वलक्षणमलकालुष्येण न मिथ्यादृष्टिज्ञानं शुद्धं, ज्ञाने हि शुद्धिर्न केवलप्रमात्वलक्षणा, तथा सति मिथ्यादृष्टीनां परोपकारैकधुरीणसुगुरुणाऽध्यापितानां यथा श्रुतार्थज्ञाने जाते तत्र तथात्वप्रसक्त्या सम्यग्ज्ञानालिङ्गितत्वं स्यात्, किन्त्वप्रामाण्यज्ञानानास्कन्दितज्ञानविषयप्रामाण्यलक्षणा, सा च सम्यग्दृष्टीनां श्रौतज्ञाने स्वतः प्रामाण्यज्ञाने सति तदुत्तरं नैव तत्र संशयविपर्ययान्यतरलक्षणाऽप्रामाण्यज्ञानं भवतीति तत्र सङ्घटते, मिथ्यादृष्टीनां तु श्रौतज्ञाने स्वतः प्रामाण्यज्ञानमेव न भवति, अन्यथा प्रतिबन्धकेन तेन तदुत्तरमुक्तलक्षणाऽप्रामाण्यज्ञानमेव न भवेत्, भवति च तदिति तेषामप्रामाण्यज्ञानानास्कन्दितज्ञानस्यैव श्रौतज्ञाने स्वतः प्रामाण्यज्ञानात्मकस्याभावेन न तद्विषयप्रामाण्यलक्षणा शुद्धिस्सङ्गतेति तादृशशुद्ध्यभावान्मिथ्यादृष्टिज्ञानं न सम्यग्ज्ञानम्, तज्ज्ञानगतप्रामाण्यस्याप्रामाण्यज्ञानास्कंदितं श्रौतज्ञाने यत् स्वतः प्रामाण्यज्ञानं तद्विषयत्वात्। ननु राद्धान्ते स्वप्रकाशात्मकतयैवाभ्युपगते ज्ञाने प्रामाण्यं स्वतः परतश्च गृह्यत इति परतो ग्राह्यतायां यदा सम्यग्दृष्टेः श्रुतजन्यज्ञाने प्रामाण्यज्ञानं न जातं तदानीमप्रामाण्यज्ञानानास्कन्दितज्ञानविषयत्वस्य तज्ज्ञानगतप्रामाण्येऽभावात्तज्ज्ञानं शुद्धं न स्यादिति चेत्, मैवम्, यज्जिनैरुक्तं तत्तथ्यमेवेति श्रद्दधतः सम्यग्दृष्टेः श्रुताद्यज्ज्ञानं जायते तद्यथा स्वं गृह्णाति तथा स्वगतप्रामाण्यमपि गृह्णात्येव, तज्ज्ञानगतप्रामाण्यस्य नियमेन स्वतो ग्राह्यत्वात्, परतो ग्राह्यत्वं तु प्रामाण्यस्य तत्रैव यत्राऽप्रामाण्यशङ्काद्यवतारः, प्रकृते तु नैवम्, अत एव तादृशशुद्धिविशिष्टज्ञानजनने चेत्यादिग्रन्थोऽपि सङ्गच्छत इति बोध्यम्। भेषजस्य रोगप्रशमने पूर्वं रेचनकृतरोगिकोष्ठाशयशुद्धिर्यथा सहकारिणी तथोक्तशुद्धिविशिष्टज्ञानोत्पत्तौ श्रुतस्य सम्यग्दर्शनलक्षणाशयशुद्धिस्सहकारिणीति तदभावे सत्यऽप्रामाण्यज्ञानास्कन्दितश्रौतज्ञानार्जकत्वेऽपि तत्सत्त्वेऽप्रामाण्यज्ञानानास्कन्दितज्ञानविषयप्रामाण्यविशिष्टज्ञानार्जकत्वेन श्रुतस्य प्रामाण्यं

त्यल्पमिदमुच्यते दर्शनात्पूर्वं ज्ञानमज्ञानमेवेति वाच्यम्, 'अप्रामाण्यज्ञानानास्कन्दितज्ञानविषयप्रामाण्यस्यैव शुद्धित्वेन श्रुतमधीयानानामपि दर्शनविकलानां प्रामाण्यालिङ्गितेऽपि श्रौते ज्ञाने इदं प्रमा न वेत्यप्रामाण्यज्ञानविषयत्वलक्षणमलकालुष्येनोक्तलक्षणशुद्धेरभावात्, तादृशशुद्धिविशिष्टज्ञानजनने च श्रुतस्य सम्यग्दर्शनलक्षणाशयशुद्धिरपि भेषजस्येव दोषप्रशमने सहकारिणीति उक्तसहकारिवैकल्यात्पूर्वं तादृशज्ञानाजननेऽपि तत्सहकारिसम्पत्तौ तज्जननेन श्रुतस्य प्रामाण्यं निर्वहत्येव, न च श्रुताध्ययनान्यथानुपपत्त्या रुचिलक्षणदर्शनशुद्धेरपि पूर्वं सत्त्वमिति वाच्यम्, अभव्यानां तदन्तरेणाप्यध्ययनदर्शनात्, न च शुद्धस्याशुद्धस्य वा ज्ञानस्य दर्शनात्पूर्वमेव श्रुतेन जनितत्वात् कृतस्य करणायोगेन दर्शनापेक्षा तत्र श्रुतस्य व्यर्थेति वाच्यम्, जैनानां सदसत्कार्यवादराद्धान्तेऽशुद्धात्मना पूर्वं कृतस्यापि ज्ञानस्य सम्यग्ज्ञानात्मना परिणमनलक्षणकरणाभ्युपगमात्, अत एव सम्यग्दर्शनाच्छुद्धमिति पञ्चमीपक्षोऽप्युपपत्तिपद्धतिमियर्त्येव, निसर्गसम्यग्दर्शनाधिगमसम्यग्दर्शनयोरुभयसाधारणेन सम्यग्दर्शनत्वेनैकशक्तिमत्त्वेन वा शुद्धिं प्रति कारणत्वेन स्वयंसम्बुद्धादिषु निसर्गसम्यग्दर्शनस्य शुद्धज्ञानात्पूर्वं सत्त्वेन न व्यतिरेकव्यभिचारावकाशः, न च निसर्गसम्यग्दर्शनादधिगमसम्यग्दर्शनं विजातीयमेव, अन्यथा निसर्गाभावेऽधिगमसम्य-

---

नोत्तरयति—अप्रामाण्यज्ञानानास्कन्दितज्ञानेत्यादि । अत्रेदमवधेयम्—यच्च सुगुरुनिरपेक्षाणां मिथ्यादृष्टीनां केषांचित्स्वपक्षनिबद्धोद्धुरानुबन्धानां स्वतरसिद्धान्तावलोकनतो मिथ्याज्ञानं जायते, तदपि न सम्यक्श्रुतस्य प्रमात्मकज्ञानजननासामर्थ्यदोषबलादप्रामाण्यदोषबलाद्वा, किन्तु पूर्वभवीयमिथ्यावासनाजनिताऽयथार्थसङ्केतानुसन्धानसहितमिथ्यात्वदोषप्राबल्यादेवेति तज्ज्ञानमज्ञानमेव । उक्तदोषविगमेन सम्यग्दर्शनाशयशुद्धौ तत्सहकृतं श्रुतमप्रामाण्यज्ञानानास्कन्दितज्ञानविषयप्रामाण्यविशिष्टयथार्थज्ञानं जनयति, न च पश्चात्तत्र तद्गते स्वतः प्रामाण्यज्ञाने चेदं ज्ञानं प्रमा न वेति संशयो न वेदं ज्ञानमप्रमात्मकमेवेति विपर्ययज्ञानं भवतीति तत्राऽपि श्रुतस्य प्रामाण्यं निर्वहत्येवेति । तदन्तरेणेति । रुचिलक्षणसम्यग्दर्शनमन्तरेणेत्यर्थः । विजातीयकारणादेव विजातीयं कार्यं भवतीति निसर्गस्याऽधिगमस्य च वैजात्येन निसर्गोपजायमानात् सम्यग्दर्शनादधिगमोपजायमानं सम्यग्दर्शनं विजातीयमेवेति नोभयसम्यग्दर्शनगतं सम्यग्दर्शनत्वमनुगतमिति न तद्रूपेण शुद्धिं प्रति कारणत्वं किन्तु विभिन्नरूपेणैवेत्यधिगमसम्यग्दर्शनत्वेन कारणीभूतस्याऽधिगमसम्यग्दर्शनस्य स्वयं सम्बुद्धादावभावेऽपि शुद्धज्ञानरूपकार्यसद्भावेन व्यतिरेकव्यभिचार इत्यभिप्रायकं यदाऽऽशङ्कितं तत्परिहारायाऽऽह—निसर्गसम्यग्दर्शनाधिगमसम्यग्दर्शनयोरुभयसाधारणेनेति । ननु यदि सम्यग्दर्शनत्वमुभयसाधारणं स्यात्तदा तद्रूपेण शुद्धिं प्रति कारणत्वं स्यात् ? न चैवं, यतो निसर्गाधिगमसम्यग्दर्शनोभयस्य सम्यग्दर्शनत्वेन सजातीयत्वे तदवच्छिन्नं प्रति निसर्गाधिगमयोः कारणत्वं न स्यात्, निसर्गरूपकारणाभावेऽपि सम्यग्दर्शनत्वावच्छिन्नस्याऽधिगमसम्यग्दर्शनस्याऽधिगमरूपकारणाभावेऽपि च निसर्गसम्यग्दर्शनस्योत्पादेन व्यतिरेकव्यभिचारादि-

ग्दर्शनस्याध्ययनाद्यभावे निसर्गसम्यग्दर्शनस्य चोत्पादेन सम्यग्दर्शनत्वावच्छिन्नं प्रति तयोः कारणत्वासम्भवादिति वाच्यम्; उभयानुगतायाः शक्तेः कारणतावच्छेदकत्वस्य तत्रापि सम्भवात्, निसर्गाव्यवहितोत्तरजायमानसम्यग्दर्शनत्वावच्छिन्नं प्रति निसर्गत्वेन अध्ययनाद्यव्यवहितोत्तरजायमानसम्यग्दर्शनत्वावच्छिन्नं प्रति अध्ययनादित्वेन कारणत्वमिति तु सम्यग्दर्शनत्वस्य कार्यतावच्छेदककोटौ प्रवेशे प्रयोजनाभावापत्तिदोषकवलितत्वादुपेक्षणीयमेवेति । अधिगमसम्यग्दर्शनाभिप्रायेण सम्यग्दर्शनाय शुद्धमिति चतुर्थीपक्षोऽप्युपपन्नः, समासश्च ' हितादिभिः ॥ ३ । १ । ७१ ॥ ' इति सूत्रात् शुद्धपदस्याकृतिगणहितादिपाठात् साधुः, अधिगमसम्यग्दर्शनात्पूर्वमपि नैसर्गिकादवाप्तश्रद्धस्य पुंसो विहितकालेऽध्ययनादिप्रभवं ज्ञानं शुद्धं, तच्चाधिगमसम्यग्दर्शनार्थमिति न पूर्वोक्तार्थबाधावकाशः । न च शुद्धिरेव ज्ञानगता

---

त्याशङ्कते—न च निसर्गदर्शनादधिगमसम्यग्दर्शनमिति । अन्यथेति सजातीयं चेत्तदेत्यर्थः । तयोरिति—निसर्गाधिगमयोरित्यर्थः । उक्ताशङ्कां निराकरोति—उभयानुगताया इति—निसर्गाधिगमोभयानुगताया इत्यर्थः । उक्तदोषस्तदा स्याद्यदि निसर्गत्वेनाऽध्ययनत्वादिना च सम्यग्दर्शनत्वावच्छिन्नं प्रति कारणत्वमभ्युपगतं स्यात्, न चैवं, शक्तिमत्त्वेनैव निसर्गाध्ययनादीनां सम्यग्दर्शनत्वावच्छिन्नं प्रति कारणत्वाभ्युपगमात्, तथा च निसर्गाद्यैकैकसत्त्वकालेऽपि सम्यग्दर्शनानुकूलनिसर्गाध्ययनाद्युभयानुगतशक्तिमत्त्वावच्छिन्नकारणत्ववतो निसर्गाधिगमाद्यन्यतरस्य सद्भावादेव सम्यग्दर्शनोत्पादेन न व्यतिरेकव्यभिचारः, न च शक्तिमति यावन्ति कारणानि तावतां सर्वेषां सत्त्वेन भाव्यं, तथा सति न्यायमतेऽपि दण्डत्वादिरूपकारणतावच्छेदकविशिष्टानां सर्वेषां दण्डादीनां सत्त्वं कार्याव्यवहितपूर्वमापद्यतेति भावः । हितादिभिः ॥ ३ । १ । ७१ ॥ इति चतुर्थ्यन्तं नाम हितादिभिस्समस्यते, तत्पुरुषश्च समासो भवति, हितादिराकृतिगण इत्यर्थः । तद्धर्मावच्छिन्नोत्पादं प्रति तद्धर्मव्यापकाशेषधर्मावच्छिन्नोत्पादकसामग्री तद्धर्मव्याप्ययत्किञ्चिद्धर्मावच्छिन्नोत्पादकसामग्री च प्रयोजिका, यथाजन्यपृथिवीत्वावच्छिन्नोत्पादं प्रति जन्यपृथिवीत्वव्यापकजन्यसत्त्व जन्यद्रव्यत्वावच्छिन्नोत्पादकसामग्री जन्यपृथिवीत्वव्याप्यघटत्वादियत्किञ्चिद्धर्मावच्छिन्नोत्पादकसामग्री च प्रयोजिका, यद्धर्मव्यापकधर्मो न कार्यतावच्छेदको यद्धर्मव्याप्यधर्मो वा न कार्यतावच्छेदकस्तत्र नायं नियमः, यथा जन्यसत्त्वावच्छिन्नं प्रति तद्व्यापकसत्त्वादिधर्मावच्छिन्नसामग्री नापेक्षिता, अप्रसिद्धत्वात्तस्याः, एवं घटत्वाद्यवच्छिन्नं प्रति तद्व्याप्यतद्घटत्वाद्यवच्छिन्नसामग्र्यपि नाऽपेक्षिता, तद्घटत्वादीनां कार्यतानवच्छेदकत्वेन तदवच्छिन्नसामग्र्या अप्रसिद्धत्वात् किन्त्वन्यादृश एव, तथाऽत्रापि सम्यग्दर्शनत्वव्यापकगुणत्वावच्छिन्नोत्पादकसामग्रीसम्यग्दर्शनत्वव्याप्याधिगमसम्यग्दर्शनत्वावच्छिन्नोत्पादकसामग्री च सम्यग्दर्शनत्वावच्छिन्नोत्पादं प्रति प्रयोजिका, सा च शुद्धज्ञानघटितेति तज्जन्यत्वादधिगमसम्यग्दर्शनस्य तत्तदर्थमेवेत्यभिप्रायेणाह—अधिगमसम्यग्दर्शनात्पूर्वमपीति । न पूर्वोक्तार्थबाधावकाश इति—अर्थबाधरूपचतुर्थीपक्षे जागर्त्येवेत्यादिपूर्वोक्तदोषावकाशो नेत्यर्थः । न चेत्यस्य वाच्यमित्युत्त-

सम्यग्दर्शनार्थो न तु शुद्धं ज्ञानमिति स्वार्थान्वितचतुर्थ्यर्थस्य सम्यग्दर्शनपदबोध्यस्य शुद्धावेवान्वयो वाच्यः, स च पदार्थः पदार्थेनान्वेति न तु पदार्थकदेशेनेतिव्युत्पत्तिविरुद्धः; न चोक्तव्युत्पत्तौ मानाभावः, नित्यपदार्थस्याभेदेन घटत्वेऽन्वयबोधाभिप्रायेण प्रयुक्तस्य नित्यो घट इति वाक्यस्याप्रामाण्योपपत्तये वृत्तिज्ञानीयविषयत्वाप्रयोज्यसांसर्गिकविषयतानिरूपितविषयताविशिष्टविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितेः कारणत्वम्, वैशिष्ट्यञ्च स्वावच्छेद्यत्वस्वतादात्म्यान्यतरसम्बन्धेनेत्येवं क्लृप्तस्य कार्यकारणभावस्यैव प्रमाणत्वात्, अयञ्च दोषः समासान्तरेऽपि समान इति वाच्यम्, शक्तं पदमिति पक्षे शुद्धमित्यत्र शुधूधातोः पदत्वेन तज्जन्योपस्थितीयमुख्यविशेष्यत्वरूपपदार्थत्वस्य शुद्धौ सत्त्वेनोक्तव्युत्पत्तिविरोधाभावात्, यथा वा दर्शनं ज्ञानगतशुद्धिमन्तरापि भवत्येव किन्तु

रेण सह सम्बन्धः । शुद्धावेवेति—कृदन्तप्रत्ययनिष्पन्नशुद्धपदार्थशुद्ध्याश्रयैकदेशे शुद्धावेवेत्यर्थः । नित्यो घट इति वाक्यस्येति नन्वन्वयितावच्छेदकरूपेणोपस्थितपदार्थ एव पदार्थान्तरान्वयात् नित्यपदार्थस्य नित्यस्य स्वरूपत एव घटपदोपस्थिते घटत्वादावन्वयासम्भवेनोक्तप्रयोगस्याप्रामाण्योपपत्तिरस्त्यादेवेति चेत्, न, तथापि जातित्वविशिष्टजातिमत्तात्पर्यकतच्छब्दघटितस्य जातित्वावच्छिन्नेऽभेदेन नित्यान्वयबोधकस्य नित्यः स इति वाक्यस्य प्रामाण्यापत्तिस्स्यादिति भावः । सप्तम्यधिकरणे च । २–३–३६ । इति पाणिनीयसूत्रीयभाष्यव्याख्याने द्वीपिचर्मणोरण्डमृगयोश्च समवायः इतरयोस्तु संयोग इति नागेशेन शब्देन्दुशेखरे उक्तत्वात् तदनुसारेण रोमलाङ्गूलयोः संयोग एव सम्बन्धः पशुपदशक्यलोमवल्लाङ्गूलावच्छिन्नरूपार्थघटकः सम्पतः, तथा च वृत्तिभास्यसंयोगसम्बन्धनिष्ठविषयतानिरूपितरोमनिष्ठप्रकारतानिरूपिता या विशेष्यता स्वतादात्म्यसम्बन्धेन तद्विशिष्टविशेष्यतासम्बन्धेन या च लाङ्गूलावच्छिन्ननिष्ठविशेष्यतानिरूपितप्रकारता स्वावच्छेद्यत्वसम्बन्धेन तद्विशिष्टविशेष्यतासम्बन्धेन शाब्दबोधो लाङ्गूले वर्तते, न च तत्र मुख्यविशेष्यतासम्बन्धेनोपस्थितिर्वर्तत इति व्यतिरेकव्यभिचारवारणाय सांसर्गिकविषयताया विशेषणमाह वृत्तिज्ञानीयविषयत्वाप्रयोज्येति । तथा च सा विषयताऽऽकाङ्क्षाभास्याऽभेदादिसंसर्गनिष्ठैव, प्रकृते तु संयोगनिष्ठा विषयता वृत्तिभास्येति वृत्तिज्ञानीयविषयत्वाप्रयोज्या सा नेति नोक्तदोष इति भावः । अयञ्च दोषः समासान्तरेऽपि समान इतीति सम्यग्दर्शनेन शुद्धं सम्यग्दर्शनाच्छुद्धं सम्यग्दर्शने शुद्धमित्येवं समासेऽपि कृदन्तप्रत्ययनिष्पन्नशुद्धपदार्थशुद्ध्याश्रयैकदेशे शुद्धावेव सम्यग्दर्शनपदार्थस्याऽन्वयात्पदार्थः पदार्थेनाऽन्वेतीत्यादिव्युत्पत्तिविरोधदोषः समान एवेति भावः । उक्ताशङ्कां निराकरोति शक्तं पदमित्यादिना । ननु दर्शनविशेषवृत्तं सम्यक्त्वं ज्ञानगतशुद्ध्यपेक्षं भवतु, न च तथापि चतुर्थीपक्षीयं सम्यग्दर्शनफलकं शुद्धं ज्ञानमिति सिध्यतीत्यवस्तत्सिद्धिं शुद्धे ज्ञान एव सम्यग्दर्शनान्वयं च कृत्वोक्तव्युत्पत्तिविरोधपरिहारार्थ-

तद्गतं सम्यक्त्वमेव सकलदर्शनाननुगामि दर्शनविशेषवृत्ति ज्ञानगतशुद्ध्यपेक्षम्, एवमपि तद्विशिष्ट-दर्शनार्थता शुद्धेः विशेषणनिमित्तस्यापि विशिष्टं प्रति निमित्तत्वमित्युररीकृत्य तथा विशेषणस्य तदर्थत्वे कथञ्चित्तदभिन्नस्य विशिष्टस्यापि तदर्थत्वमित्युपेत्य शुद्धे ज्ञाने सम्यग्दर्शनार्थत्वस्यान्वये नोक्तव्युत्पत्ति-विरोधवार्त्ताऽपीति युक्तमुत्पश्यामः । सत्सप्तमीमाश्रित्य सप्तमीपक्षोऽप्युपपादनीयः सुधीभिः । मतिश्रुता-वधिमनःपर्यवकेवलेषु त्रयाणाम्मत्यादीनां ज्ञानानां व्यभिचारित्वाद्भवत्युक्तविशेषणमर्थवत्, अन्यत्र तु स्व-रूपोपरञ्जकन्तदिति बोध्यम् । सम्यग्दर्शनशुद्धमिति च लिङ्गविपरिणामेन विरतिमित्यत्राप्यन्वेति, तेन च विरतिर्नाम ज्ञात्वाऽभ्युपेत्याकरणमित्येवंलक्षणलक्षितैवात्र विरतिर्दर्शनज्ञानशुद्धाशयस्वामिनी, न त्वन्या मार्जारसंयमकल्पेत्यावेदितम्भवति । एवकारोपादानाद् दर्शनज्ञानविरतीनां त्रयाणामेव जन्मनः सुल-

माह **एवमपीति** । **तद्विशिष्टदर्शनार्थता** सम्यक्त्वविशिष्टदर्शनफलकता । शुद्धेरिति षष्ठ्या आधेयत्वार्थित्वेन शुद्धिनिष्ठेत्यर्थः, सम्यक्त्वं प्रति ज्ञानगतशुद्धेर्निमित्तत्वेऽपि तद्विशिष्ट-दर्शनं प्रति कथं तस्या निमित्तत्वम्, एवं सम्यग्दर्शनं प्रति ज्ञानगतशुद्धेर्निमित्तत्वेऽपि तद्विशिष्ट-ज्ञानस्याऽपि कथं निमित्तत्वमित्याशङ्कायां तन्निवृत्तये तदुभयत्र युक्तिमाह **विशेषणनि-मित्तस्याऽपीति** । सम्यक्त्वरूपं यद्विशेषणं तन्निमित्तस्यापीत्यर्थः । **विशिष्टं**—सम्यक्त्ववि-शिष्टदर्शनम् । **विशेषणस्य** शुद्धेः । **तदर्थत्वे** सम्यग्दर्शनार्थत्वे । **तदभिन्नस्य**—शुद्ध्यभि-न्नस्य । **विशिष्टस्याऽपि**—शुद्धिविशिष्टस्य ज्ञानस्याऽपि । **तदर्थत्वम्** सम्यग्दर्शनार्थत्वम् । सप्तमीपक्षे निमित्तसप्तमीपक्षमाश्रित्योक्तदोषस्तु न, यतस्स नाऽभ्युपगम्यते, अभ्युपगम्यते च सत्सप्तमीपक्षः, सोऽपि निसर्गसम्यग्दर्शनमादायोपपादनीय इत्याशयेनाऽऽह—**सत्सप्तमी-माश्रित्येति** । मतिज्ञानं श्रुतज्ञानमवधिज्ञानं च सविपक्षमिति तत्र सम्यग्दर्शनशुद्धमिति विशेषणं तद्विपक्षीभूतमत्यज्ञानश्रुताज्ञानविभङ्गज्ञानानि न ज्ञानानि किन्त्वज्ञानान्येवेत्येवम-ज्ञानव्यावृत्तिफलकत्वेन सार्थकं, मनःपर्यायज्ञानं केवलज्ञानं चाऽज्ञानरूपविपक्षशालि नेति तत्रोक्तविशेषणं स्वरूपोपरञ्जकमित्याशयेनाऽऽह **मतिश्रुतावधीति** । **व्यभिचारि-त्वात्**—अज्ञानरूपविपक्षशालित्वात् । **उक्तविशेषणम्** सम्यग्दर्शनशुद्धमिति विशेषणम् । **अन्यत्र** । मनःपर्यायकेवलज्ञानयोः । तेनेति सम्यग्दर्शनशुद्धां विरतिमित्येवमन्वयेनेत्यर्थः । **ज्ञात्वा**—प्राणातिपाताद्याश्रवा नरकायुरादिमहापापप्रकृतिबन्धकारितया नरकादिदुर्गतिप्रपाताद्य-शुभफलका इति ज्ञपरिज्ञया बुद्ध्वा, **अभ्युपेत्य** तथैव श्रद्धाय, अकरणं—प्रत्याख्यानपरिज्ञया त्रिकरणयोगेन तेभ्यो निवृत्तिरित्यर्थः । तद्विपक्षविरतेः । पापफलकत्वात्तन्निषेधमाह—**न त्वन्ये-ति** । सम्यग्दर्शनादित्रयाणां सम्यग्दर्शनत्वेन सम्यग्ज्ञानत्वेन सम्यग्विरतित्वेन च न प्रत्येकरूपेण विभिन्नं कारणत्वं, किन्तु मोक्षानुकूलशक्तिमत्त्वेनाऽनुगतरूपेण तदेकरूपमेव, तच्च मोक्षानुकूलश-क्तिमत्त्वावच्छिन्नं शक्तिरूपमतिरिक्तं वेत्यन्यदेतत्, तदेव च मोक्षमार्गपदार्थतावच्छेदकं, तत्रैव च विधेयबोधकमोक्षमार्गपदोत्तरसुब्विभक्त्यर्थैकत्वस्याऽन्वयो विवक्षित इति मोक्षमार्गेति विशेषण-

ध्यत्वे कारणत्वमित्यवधार्यते, तेन "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ । १ ॥" इति सूत्रे मोक्षमार्ग इति विधेयबोधकपदोत्तरविभक्त्यैकत्वसंख्या विवक्षितेति, "यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसङ्ख्याविरुद्धसङ्ख्याया अविवक्षितत्वं, तत्र विशेष्यविशेषणवाचकपदयोः समानवचनकत्वमिति" नियमस्य न भङ्ग इत्युट्टङ्कितम्भवति, न च स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपसजातीयद्वितीयराहित्यलक्षणस्यैकत्वस्यैकवचनार्थस्य मोक्षमार्गशब्दात्मकप्रकृत्यर्थतावच्छेदके मोक्षत्वावच्छिन्नजन्यतानिरूपितजनकत्वेऽन्वयो वाच्यः, स च तदोपपद्येत यदि सम्यग्दर्शनादिषु

---

पदस्य बहुवचनान्तविशेष्यवाचकसम्यग्दर्शनादिपदसमानवचनत्वप्रसङ्गो न, न वा यत्र विशेष्यवाचकपदेत्यादिनियमभङ्गप्रसङ्ग इत्याशयेनाऽऽह—**तेनेत्यादि** । **यत्र विशेषवाचकपदेत्यादि** । यत्रेति त्रल्प्रत्ययस्य घटकत्वमर्थः, तस्य विशेष्यवाचकपदेऽन्वयः । यदिति विशेष्यविशेषणवाचकपदघटितं वाक्यमाह वाचकशब्दो बोधकपरः, तेन लाक्षणिकविशेष्यपदस्थले न नियमहानिः, तथा च यत्र विशेष्यवाचकपदेत्यस्य विशेष्यविशेषणवाचकपदघटितवाक्यघटकविशेष्यबोधकपदेत्यर्थः । **उत्तरविभक्तीति** अव्यवहितोत्तरत्वेनाऽनुसन्धीयमानविभक्तीत्यर्थः, तेन सुन्दरं दधीत्यादौ दध्यादिविशेष्यबोधकपदोत्तरविभक्तेरश्रवणेऽपि न क्षतिः, तत्र तदनुसन्धानस्य सत्त्वात् । **अविवक्षितत्वमिति** विशेषणवाचकपदाऽव्यवहितोत्तरत्वेनाऽनुसन्धीयमानविभक्त्याऽविवक्षितत्वमित्यर्थः । तेनेदं दधीत्यादौ दधिरूपविशेषणपदानन्तरं विभक्त्यसत्त्वेऽपि न क्षतिः, तत्र विभक्तेरनुसन्धानं विना शाब्दबोधानुपगमात् । तत्रेत्यस्य तद्वाक्यघटकत्वमर्थः, तस्य च विशेष्यविशेषणपदयोरन्वयः । मोक्षमार्ग इत्यत्र सिप्रत्ययार्थ एकत्वम्, तच्च स्वसजातीयद्वितीयराहित्यलक्षणं, तस्य च सिप्रत्ययप्रकृतिभूतमोक्षमार्गपदशक्ये मोक्षत्वावच्छिन्नकार्यतानिरूपितकारणत्वाश्रये नाऽन्वयः कर्तुं शक्यः, तस्य सम्यग्दर्शनादित्रयात्मकत्वेनाऽनेकरूपत्वात्, स्वसजातीयद्वितीयस्य विद्यमानत्वेन तद्राहित्यलक्षणैकत्वस्याऽवर्तमानत्वात्, किन्तु तच्छक्यतावच्छेदके तादृशकारणत्वे, न च तत्राऽपि सम्भवति, अनुगतस्य कारणतावच्छेदकधर्मस्याऽभावेन कारणताया अनुगतत्वाभावेनैक्याभावादित्याशयेनाऽऽशङ्कामुद्भाव्य प्रतिक्षिपति—**न च स्वसजातीयनिष्ठेति** । न चेत्यस्य वाच्यमित्युत्तरेण सम्बन्धः, अत्र साजात्यं स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकधर्मरूपेण वाच्यम् । समुदायत्वेन सम्यग्दर्शनादीनां कारणत्वे साक्षादेव कारणत्वं स्यात्, न तु कस्यचिद् व्यापारिविधया, कस्यचिद् व्यापारविधया च, अभ्युपगम्यते च सम्यग्दर्शनं केवलज्ञानमनुत्पाद्य न मोक्षायाऽलमिति ज्ञानद्वारैव कारणत्वेन तद् व्यापारिविधया कारणम् । केवलज्ञानमपि सर्वसंवररूपचारित्रद्वारैव मोक्षं प्रति कारणत्वेन व्यापारिविधया कारणं, चारित्रमेव व्यापारविधया मुख्यकारणमिति पर्याप्तिसम्बन्धेन सम्यग्दर्शनादित्रयगतसमुदायत्वं मोक्षनिष्ठकार्यतानिरूपितकारणतावच्छेदकं रूपं न सम्भवतीत्युपदर्शना-

त्रिष्वेकं मोक्षजनकतावच्छेदकं रूपं भवेत्, न च तत्त्रितयपर्याप्तसमुदायत्वन्तथा, तथा सति तेषु कस्यचिद् व्यापारविधया कस्यचिन्न व्यापारविधया कारणत्वमिति न स्यात्, यस्य हि व्यापारविधया जनकत्वं तत्र परम्परासम्बन्धोऽवच्छेदकः, यस्य तु व्यापारविधया तत्र साक्षात्सम्बन्ध इत्यवच्छेदक-सम्बन्धभेदादपि नैकं कारणत्वम्, किञ्च समुदायत्वस्यैकविशिष्टापरत्वरूपस्य विशेष्यविशेषणभावे विनि-गमनाविरहतोऽनेकरूपतया तद्रूपेण कारणत्वे गुरुधर्मावच्छिन्नानेककारणत्वप्रसङ्गः, एतेनैव दण्डचक्रा-दीनां न समुदायत्वेन कारणत्वं, प्रत्येकरूपेण तेषां कारणत्वेऽपि परस्परसहकारिभावाभ्युपगमादेव नैक-विरहेऽन्यस्मात्कार्योपपत्तिरिति वाच्यम्, मोक्षोत्पादप्रयोजकतावच्छेदकसमुदायत्ववतो मोक्षमार्गपदलक्ष्य-स्यैकदेशे निरुक्तसमुदायत्वे एकवचनार्थैकत्वस्यान्वयोपगमात्, मोक्षोत्पादप्रयोजकत्वञ्च मोक्षोत्पत्तिव्य-तिरेकनियतव्यतिरेकप्रतियोगित्वं, तदवच्छेदकत्वञ्च सम्यग्ज्ञानादित्रितयसमुदायत्वे जनकतानवच्छेद-कत्वेऽपि त्रयाणां सहकारिभावाभ्युपगमादव्याहतमेव, शक्तिरूपस्य कारणत्वस्य शक्त्यवच्छिन्नस्यातिरिक्तस्यैव वा कारणत्वस्याभ्युपगमे तु तस्य न सम्बन्धभेदनियन्त्रितत्वमिति तत्रैकत्वान्वयोऽपि स्याद्वादिनां न नः प्रतिकूलतामञ्चतीति दिक्। विरतिमेव चेत्यत्र चकारस्सम्बन्धार्थः, विकल्पार्थस्तु सुलब्ध-मित्यस्य सुलब्धमिवेत्यर्थपरत्वे द्रष्टव्यः, उपासूत्रस्वारस्यात् त्रयाणां कारणत्वे सम्यग्दर्शनाद्येकैकान्वित-जन्मनोऽनन्तरमोक्षफलोपधानरूपसुलब्धत्वस्यासम्भवेऽपि सहकारिविरहप्रयुक्तमोक्षकार्यकारित्वाभाववत्व-लक्षणयोग्यत्वस्य सुलब्धसादृश्यस्य सम्यग्दर्शनाद्यन्यतमविनिर्मुक्तजन्मव्यावृत्तस्य सद्भावात्, आप्नो-

याऽऽह न च तत्त्रितयेति। तथेति–मोक्षजनकतावच्छेदकं रूपमित्यर्थः। कारणत्वस्य कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मव-त्त्वादिरूपत्वे तस्य सखण्डरूपतयाऽवच्छेदकसम्बन्धघटितत्वेन सम्बन्धभेदाद्भिन्नत्वं स्यात्, यदा च शक्तिमत्त्वावच्छिन्नशक्तिरूपं कारणत्वमतिरिक्तं वा तदा तस्य धर्मविधया सम्बन्धवि-धया वाऽवच्छेदकाऽघटितत्वेन न सम्बन्धभेदाद्भिन्नत्वं, यच्च सम्यग्दर्शनत्वस्य ज्ञानत्वस्य चारित्रत्वस्य च मोक्षनिष्ठकार्यतानिरूपितकारणतावच्छेदकत्वं तच्छक्तिरूपस्याऽतिरिक्तस्य वा कारणत्वस्याऽभिव्यञ्जकविधयैव। इदानीं तन्तौ न घट इदानीमिह कपाले न घट इत्यादिप्रती-तिसिद्धं देशे काले चाऽवच्छेदकत्वमिव तद् विलक्षणमेवेत्युक्तकारणत्व एकत्वान्वयो न दोषावहः स्याद्वादिनामित्याशयेनाऽऽह शक्तिरूपस्य कारणत्वस्येति। मूलश्लोकान्तर्गतस्य चशब्दस्य विकल्पार्थत्वे तु सम्यग्दर्शनं तच्छुद्धं ज्ञानं वा विरतिमेव वा य आप्नोति तेन दुःखनिमित्तमपीदं जन्म सुलब्धमिव भवतीति लाक्षणिकार्थे तात्पर्यं द्रष्टव्यमित्याह। विक-ल्पार्थस्त्विति। सम्यग्दर्शनाद्येकैकान्वितजन्मसुलब्धमिव कथमित्याशङ्कानिरासाय तत्र हेतु-माह–उपासूत्रस्वारस्यादिति। मिथ्यादृष्टिज॰॥ न सम्यग्दर्शनादित्रयान्वितं न वा तत्प्र-त्येकान्वितमिति सुलब्धं सुलब्धमिव वा न भवतीति तद्व्यावृत्त्यर्थं विशेषणमाह–सम्यग्दर्श-नाद्यन्यतमविनिर्मुक्तजन्मव्यावृत्तस्येति।

तीत्यनेनावस्थितं स्वतन्त्रं कर्तारमुपदर्शयता आलयविज्ञानसन्तानस्य क्षणिकविज्ञानवाद्यभ्युपगतस्य कर्तृत्वस्य प्रतिक्षेपः कृतः, दर्शनादित्रयावाप्तेः किं फलमित्याकाङ्क्षायामाह दुःखनिमित्तमपीदमिति, दुःखयतीति दुःखम्, अत्र दुःखानां निमित्तमिति विग्रहे शारीरमानसदुःखानां वर्त्तमानानां साक्षादनागतानाञ्च परम्परया निमित्तं जन्मेत्यावेदितम्भवति, अत एव "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति गौतमसूत्रे उत्तरोत्तरस्य पूर्वं पूर्वम्प्रति कारणत्वमवलम्ब्योत्तरोत्तराभावरूपकारणाभावप्रयोज्यपूर्वपूर्वाभावरूपकार्याभावोऽभिप्रेतः, "न ह्यशरीरं वाव सन्तं प्रियाप्रिये स्पृशतः" इति श्रुतिरप्येतदर्थानुग्राहिकैव, दुःखस्य निमित्तं दुःखं निमित्तमस्येति वा विग्रहे दुःखं संसारः, मूढस्यैकजन्मन्यनेकजन्मकारणकर्मसञ्चयतो जन्मनः संसारकारणत्वं, संसारस्य च जन्मकारणत्वं प्रतीतमेव, पूर्वसंसरणमन्तरेण जन्मासम्भवात्, नात्रापि न दुःखनिमित्तमिति विकल्पार्थोऽपिशब्दस्सङ्गतिमञ्चति, किन्तु दुःखानां निमित्तं दुःखस्य वा निमित्तमिति पक्षे, "इदमः प्रत्यक्षगतं, समीपतरवर्त्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं, तदिति परोक्षे विजानीयात् ॥ १ ॥" इत्यनुसारात् प्रत्यक्षवाचिन इदमः प्रत्यक्षस्य मानुषजन्मन एव बोधकत्वम्, नरकतिर्यग्देवगतिषु विरतेरभावात्, प्रत्यक्षत्वञ्चात्र

नसन्तानस्येति । दुःखयतीति परितापयतीत्यर्थः । अनागतानाञ्च परम्परया निमित्तं जन्मेति मूढमनस्का ह्यतिलोमप्रस्ता महापापारम्भमत्र कुर्वन्तीति तज्जन्याशुभकर्मनिगडनिगडितास्तदुदये आगामिनि भवेऽपि दुःखभागिनो भवन्तीत्येतज्जन्मानागतदुःखानां निमित्तमित्यर्थः । अत एवेति—जन्मनो दुःखनिष्ठकार्यतानिरूपितकारणत्वाश्रयत्वादेवेत्यर्थः । मिथ्याज्ञानाभावे दोषाभावः, दोषाभावे प्रवृत्त्यभावः, तस्माज्जन्माभावः, तस्माद्दुःखाभावः, तस्मादपवर्ग इति गौतमसूत्राभिप्रायं कार्यकारणभावप्रदर्शनपूर्वकमाह—उत्तरोत्तरस्येत्यादि । "न ह्यशरीरं वाव ! सन्तं प्रियाप्रिये स्पृशतः" इति । वावेति सम्बोधनं, अशरीरं शरीररहितं सन्तमात्मानं प्रियाप्रिये सुखदुःखे न स्पृशतो न सम्बध्नीतः, तत्त्वज्ञानिनो देहेन्द्रियाद्युपाधिविगमे संसारनिवृत्तेर्जन्माभावाद्दुःखाभाव इति भावः । आद्यविग्रहमाश्रित्याऽऽह मूढस्येत्यादि । संसारकारणत्वं संसारं प्रति कारणत्वम् । द्वितीयविग्रहमपेक्ष्याऽऽह संसारस्य चेति । जन्मकारणत्वम्—आद्यप्राणसंयोगलक्षणजन्मत्वावच्छिन्नकार्यतानिरूपितकारणत्वम् । तत्र हेतुमाह पूर्वसंसरणमन्तरेणेति । दुःखं निमित्तमस्येति पक्षे दुःखनिमित्तमपीत्यत्राऽपिशब्दो विकल्पार्थो न सम्भवति, तथा सति कस्यचित्पुरुषस्यैतज्जन्म संसारपूर्वकं स्यात् कस्यचित्तु न तथेति स्यात्, न चैतत्सम्भवति, वीतरागजन्मादर्शनमिति न्यायेन संसारस्याऽनादितयैव सिद्धेर्जन्ममात्रस्य सरागलक्षणसंसारपूर्वकत्वादेवेत्याशयेनाऽऽह—नात्रापि नेत्यादि । मूढमनस्कानामेतज्जन्म दुःखानां दुःखस्य संसारात्मकस्य वा निमित्तम्, नाऽवाप्तसम्यग्दर्शनादित्रयाणां तद्भवमोक्षगामिनामित्यपिशब्दो विकल्पार्थोऽस्मिन्पक्षे सङ्गतिमञ्चति, एतच्च पद्पूरणप्रयोजनेन वक्ष्यत इत्याह किन्तु दुःखानां

वक्तृप्रत्यक्षज्ञाननिरूपितलौकिकविषयतावत्त्वमेव, तच्च स्वजन्मन्येव सम्यग्दर्शनादित्रितयलाभोपायक्षमे, तेन देवकुर्वाद्यकर्मभूमिषु भोगभाजां कर्मभूमिषु म्लेच्छादीनां विरत्यभावेन तज्जन्मनो नियमतः सुलब्धत्वाभावेऽपि न क्षतिः, तेनेति, अत्र तत्पदं यत्पदजन्योपस्थितिविषयत्वेन वक्तृबुद्धिविषयतावच्छेदकावच्छिन्ने शक्तम्, यो ज्ञानमित्यत्र यत्पदञ्च तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तम्, एतदभिसन्धायैव यत्तदोर्नित्यसम्बन्ध इति गीयते, तेन स्वोच्चारकपुरुषकर्तृकपूर्वकालोच्चारितपदोपस्थापितशक्तस्य " यं सर्वशैलाः परिकल्प्य वत्सं, मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च, पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ १ ॥ " इत्यादौ यच्छब्दस्य स्वोच्चारक-

**निमित्तमित्यादि** । तेन प्रत्यक्षवाचिन इदंशब्दाद्वक्तृपुरुषीयचाक्षुषप्रत्यक्षगोचरसम्यग्दर्शनादित्रितयलाभोपायक्षमकर्मभूमिगतमनुष्यजन्मग्रहणेन । **तेनेति अत्र तत्पदमिति**— यत्पदं तत्पदञ्चाऽनेकविधं, ततः कयोश्चिद्यत्पदतत्पदयोर्नित्यसम्बन्धः, कयोश्चिच्च न, तत्र यादृशस्य तत्पदस्य यत्पदसापेक्षत्वं तादृशमेव तेनेत्यत्र तत्पदं, यादृशस्य च यच्छब्दस्य तत्पदसापेक्षत्वं तादृशमेव यो ज्ञानमित्यत्र यत्पदम्, यादृशयोर्यत्पदतत्पदयोः परस्परसापेक्षत्वं तादृशत्वं प्रकृतयच्छब्दतच्छब्दयोरवश्यमेव दर्शनीयमित्यभिसन्धाय प्रथमं प्रकृततच्छब्दस्य तत्त्वं दर्शयति, अत्रेति तेनेतितृतीयाविभक्त्यन्तशब्दघटकमित्यर्थः, अस्य तत्पदमित्यनेनाऽन्वयः, तत्पदमित्यस्य च शक्तमित्यनेन सम्बन्धः । **यत्पदेति** यत्पदं यो ज्ञानमिति पूर्ववाक्यघटकं यत्पदं, तज्जन्योपस्थितिः सम्यग्दर्शनशुद्धज्ञानविरत्याप्तिमतः पुरुषस्य वक्तृबुद्धिविषयतावच्छेदकेन धर्मेणोपस्थितिः, तद्विषयत्वेन वक्तृबुद्धिविषयस्स एव पुरुषः, तन्निष्ठविषयतावच्छेदकस्तत्पुरुषगतदेवदत्तत्वयज्ञदत्तत्वाद्यन्यतमात्मा धर्मविशेषः, तदवच्छिन्ने तत्पदं शक्तम् । तथा चोक्तधर्मविशेषावच्छिन्ने शक्तं तत्पदं तदेव स्यात् यदि यत्पदमपि भवेदिति तस्य यत्पदेन सह सम्बन्धः । इदानीं प्रकृतयच्छब्दस्य तत्त्वं दर्शयति—**यो ज्ञानमित्यत्रेति** यो ज्ञानमिति वाक्यघटकमित्यर्थः, अस्य यत्पदमित्यनेन सम्बन्धः, यत्पदमित्यस्य च शक्तमित्युत्तरेण सम्बन्धः । **तत्पदप्रतिपाद्यतयेति** तत्पदं तेनेत्येतद्घटकतत्पदं, तत्प्रतिपाद्यतया वक्तृबुद्धिविषयः सुलब्धैतज्जन्मसम्बन्धवान् पुरुषस्स देवदत्तत्वादिस्वगतासाधारणधर्मेणैव तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयः, तन्निष्ठवक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मो देवदत्तत्वादिः, तदवच्छिन्ने शक्तं यो ज्ञानमित्येतद्वाक्यघटकं यत्पदमित्यर्थः, उक्तधर्मावच्छिन्ने शक्तिर्यत्पदस्य तदा स्याद्यदि नियमेन तत्पदं स्यादिति तत्पदसापेक्षत्वं यत्पदस्येत्यर्थः । **एतदभिसन्धायैव**— एतादृशयत्पदतत्पदानुसन्धानादेव, उपदर्शितशक्तिमद्यच्छब्दतच्छब्दविलक्षणयोरन्यादृशयच्छब्दतच्छब्दयोर्न नित्यसम्बन्ध इत्युपदर्शनायाऽऽह तेनेति उक्तयत्पदतत्पदयोश्शक्तिविशेषोपदर्शनद्वारा नित्यसम्बन्धत्वोपदर्शनेनेत्यर्थः । अस्य न क्षतिरित्यनेनाऽन्वयः । **स्वोच्चारकेति** । स्वं " यं सर्वशैला " इति वाक्यघटकं यत्पदं तदुच्चारकः पुरुषः कालिदासः, तत्कर्तृकपूर्वकालो-

पुरुषकर्तृकपूर्वकालोच्चरितपदोपस्थापितशक्तस्य " तदन्वये शुद्धिमति, प्रसूतः शुद्धिमत्तरः । दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ १ ॥ इत्यादौ तच्छब्दस्य बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नशक्तस्य "तस्याप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी" इत्यादौ च तत्पदस्य नित्यसम्बन्धाभावेऽपि न क्षतिः । सुलब्धमिति, यद्यपि सम्यग्दर्शनादिलाभात्पूर्वमपि संसाराविनाभावि जन्म भवनाश्रय, तथापि सम्यग्दर्शनादित्रितयप्रभवमोक्षसाधनत्वेन सुलब्धं श्लाघ्यं सम्यग्दर्शनादित्रितयभाजा द्रव्यादिचतुर्विधसंसारदुःखोपनिपातभयहेतुकृत्स्नकर्मक्षयप्रभवात्यन्तिकदुःखनिवृत्तिसध्रीचीननिष्प्रतिद्वन्द्वाप्रतिपातिपरमसुखलाभाभिमुखीभूतेन पुरुषेणैव भवति, अन्यथा क्षुद्रजन्तूनामिव मरणायैवेति भावः । भवतीति यत्रान्यत्क्रियापदं न श्रूयते इत्याद्यभ्युपगन्तॄणां सर्वं हि वाक्यं क्रियायां परिसमाप्यत इति चोररीकुर्वतां नयमवलम्ब्यास्योक्तिरिति बोध्यम् ॥ १ ॥

---

चरितं पदं " अस्त्युत्तरस्यां दिशि देवतात्मा, हिमालयो नाम नगाधिराजः । " इत्येतद्घटकं हिमालयपदं तदुपस्थापितो हिमालयरूपोऽर्थस्तत्र शक्तस्य यं सर्वशैला इत्यादिवाक्यघटकस्य यच्छब्दस्य, अस्य नित्यसम्बन्धाभावेऽपीत्यनेनान्वयः । स्वोच्चारकेति स्वं तदन्वय इति वाक्यघटकं तत्पदं तदुच्चारकपुरुषः कालिदासस्तत्कर्तृकपूर्वकालोच्चारितपदं " वैवस्वतो मनुर्नाम " इति वाक्यघटकमनुपदं तदुपस्थापितो मनुरूपोऽर्थस्तत्र शक्तस्य " तदन्वये शुद्धिमति " इति वाक्यघटकस्य तच्छब्दस्य, अस्याऽपि नित्यसम्बन्धाभावेऽपीत्यनेनाऽन्वयः, " तस्याऽप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी " इत्येतद्वाक्यघटकस्य तु तत्पदस्य बुद्धिपदेन वक्तृबुद्धिर्गृह्यते, अस्य वक्ता रामचन्द्रस्तद्बुद्धिविषयो रावणस्तन्निष्ठबुद्धिविषयतावच्छेदकत्वोपलक्षितो धर्मो रावणत्वं तदवच्छिन्नशक्तस्य, एतेषु तत्तच्छक्तिप्रतिनियमेषु न यत्तदोः प्रवेश इति नित्यसम्बन्धाभावेऽपि न क्षतिरित्यर्थः । द्रव्यक्षेत्रकालभावभेदभिन्नसंसारदुःखोपनिपातभयं कस्माद्भवतीत्याशङ्कायां कर्मणस्तद्धेतुत्वमभिविशेषणमाह—**द्रव्यादिचतुर्विधसंसारदुःखोपनिपातभयहेतुकृत्स्नकर्मेति** । कारणोच्छेदे कार्योच्छेद इति नियममाश्रित्य कृत्स्नकर्मक्षयप्रभवात्यन्तिकदुःखनिवृत्तीत्युक्तम् । नैयायिका आत्यन्तिकदुःखोच्छेदरूपामेव मुक्तिमभिमन्वते इति तदानीं सुखलेशोऽपि न, आत्मविशेषगुणानामिन्द्रियाद्यधीनत्वेन तदभावे तदभावादिति तन्मतनिरासार्थमाह—**दुःखनिवृत्तिसध्रीचीनेत्यादि** । निरावृतसुखं ह्यात्ममात्रसमुत्थत्वेन स्वाधीनमेवेति शश्वद्भावेन पराधीनदुःखलेशाकलङ्कितत्वेन निष्प्रतिपक्षं, तस्य प्रतिविच्छेदकारणाभावादप्रतिपाति, प्रकर्षकाष्ठावस्थानादनुपममत एव परममिति तदर्थं प्रवृत्त्यैकतानमनसा पुरुषेण सुलब्धं मनुष्यजन्म भवतीत्यर्थः । **यत्राऽन्यत्क्रियापदं न श्रूयत इत्यादीति** । अत्राऽऽदिपदेन तत्राऽप्यस्तिर्भवन्तीवर्तमानापरः प्रयुज्यत इति ग्राह्यम् । **नयमवलम्ब्यास्योक्तिरिति**—अत्र न्यायनिष्णातास्तु धनुर्धरः पार्थ एव घटो नास्ति हंसीव निर्मलं जलं कपिकालेच्छाहतः कालात्यय इत्यादिप्रयोगदर्शनाद्वाक्यमात्रे क्रियापदस्य नैयत्याभाव एवेति प्राहुः । **इति प्रथमकारिकाटीकाव्याख्या समाप्ता ॥ १ ॥**

जन्मनो दुःखनिमित्तत्वसुलब्धत्वयोः कथम्भावाकाङ्क्षायामाह

**( भा० ) जन्मनि कर्मक्लेशै-रनुबद्धेऽस्मिंस्तथा प्रयतितव्यम् ।**
**कर्मक्लेशाभावो, यथा भवत्येव परमार्थः ॥ २ ॥**

( व्या० ) जन्मनीति० मिथ्यादर्शनाविरतिप्रमादकषाययोगाख्यैः स्वस्वहेतुभिः क्रियत इति

द्वितीयकारिकावतरणिकामाह—जन्मनि इत्यादिना। **मिथ्यादर्शनाविरतिप्रमादकषाययोगाख्यैरिति**—मिथ्यादर्शनमविरतिः प्रमादः कषायो योग इत्याख्या येषां ते तथा तैः। तत्र मिथ्या—अलीकमयथार्थं दर्शनं दृष्टिरुपलब्धिरिति मिथ्यादर्शनं, तच्च यद्यपि जीवादयस्तत्त्वमिति निश्चयाभावरूपानधिगमात्मकं, जीवादयो न तत्त्वमिति विपर्ययात्मकं चेति द्विविधं, तदुक्तं वाचकमुख्यैः "अनधिगमविपर्ययौ च मिथ्यात्वं" इति, तथाप्युपाधिभेदादाभिग्रहिकमनाभिग्रहिकमाभिनिवेशिकं सांशयिकमनाभोगं चेति पञ्चप्रकारम्। तत्राऽऽद्यमनाकलिततत्त्वस्याऽप्रज्ञापनीयताप्रयोजकस्वस्वाभ्युपगतार्थश्रद्धानलक्षणं, यथा बौद्धसाङ्ख्यादीनां इदमेव दर्शनं शोभनं नान्यदित्येवं स्वस्वदर्शनप्रक्रियावादिनां स्वाग्रहग्रहग्रहिलानां स्वस्वाभ्युपगतार्थश्रद्धानादनिवर्तनीयानामत एवाप्रज्ञापनीयानाम्। द्वितीयं च स्वपराभ्युपगतार्थयोरविशेषेण श्रद्धानलक्षणं, यथा "सर्वाणि दर्शनानि शोभनानि" इति प्रतिज्ञावतां मुग्धलोकानामीषन्माध्यस्थ्यभावनावताम्। तृतीयं च विदुषोऽपि स्वरसवाहिभगवत्प्रणीतशास्त्रबाधितार्थश्रद्धानलक्षणं, यथा शास्त्रतात्पर्यबाधं प्रतिसन्धायैवाऽन्यथाश्रद्धावतां गोष्ठामाहिलादीनाम्। चतुर्थं च भगवद्वचनप्रामाण्यसंशयप्रयुक्तः शास्त्रार्थसंशयः सांशयिकं, यथा काङ्क्षामोहनीयकर्मोदयाद्भगवद्वचने प्रामाण्यसंशये सति न जाने किमिदं निगोदधर्मास्तिकायादिकं सूक्ष्मतरं भगवत्प्रोक्तं सत्यं उतान्यथेति संशयवताम्, यतो निश्चितभगवद्वचनप्रामाण्यकानां नैवं संशयः, ते एवं तर्कयन्ति—कस्मिंश्चिद्गहनतत्त्वे मद्बुद्धिर्न प्रविशति तत्र गाढज्ञानावरणकर्मोदयप्रयोज्यमद्बुद्ध्यतिमान्द्यमेव कारणम्, न तु तत्तत्त्वाऽभावः, जिनैस्तथैव प्रज्ञप्तत्वादिति। पञ्चमञ्च साक्षात्परम्परया च संशयनिश्चयसाधारणतत्त्वज्ञानसामान्याभावलक्षणं, यथैकेन्द्रियादीनां तत्त्वातत्त्वानध्यवसायवतां मुग्धलोकानां चेति। अविरतिर्हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यः पापस्थानेभ्यो विरतिपरिणामाभावो हिंसादिषु प्रवृत्तिः, असंयम इति यावत्। प्रमादः स्मृत्यनवस्थानं कुशलेष्वनादरो योगदुष्प्रणिधानञ्च। कषायाः क्रोधमानमायालोभभेदाच्चतुर्विधाः, पुनरपि प्रत्येकं तेऽनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदाच्चतुःप्रकारा इति षोडश भेदाः। कषायसाहचर्यात्कषायोद्दीपनाद्वा हास्यरत्यरतिभयशोकजुगुप्सास्त्रीपुरुषनपुंसकवेदाख्यानां नवनोकषायाणामपि परिग्रहः कार्यः। योगश्च मनोयोगवचोयोगकाययोगभेदेन त्रिविधः। तत्प्रभेदतः पुनरपि पञ्चदशप्रकारः, तद्विस्तारस्तु विस्तारभयान्न तन्यते।

मिथ्यादर्शनहेतुको हि बन्धः प्रकृष्टतरोऽशुभानुबन्धरूपश्च, मिथ्यादर्शनपरिणामे

कर्म ज्ञानावरणाद्यष्टप्रकारम्, क्लेशयन्ति बाधयन्त्यात्मस्वरूपमिति क्लेशा मोहनीयभेदाः क्रोधादयः कषायाः, जन्मनि सति कायवाङ्मनोहेतुकं कर्म, ततः क्रोधलोभादयः क्लेशाः, ततो रागादिहेतुकं तीव्रकर्मबन्धनं, ततो जन्मवतः पुनरपि कर्म ततः क्लेशाः, तेभ्यश्च पुनरपि जन्मेत्येवं जन्मनः कर्मक्लेशैरनुबद्धत्वं सन्ततवेष्टनलक्षणं संसारस्यानादित्वं दुःखभूयस्त्वमादायैव पर्यवस्यति, उक्तदिशा कर्मक्लेशयोरप्यनुबद्धत्वे विशेष्यतया जन्मन एवोपादानं प्रत्यक्षत्वादाधारत्वात्पूर्वोक्तत्वाच्च, अनेन च दुःखनिमित्तत्वं जन्मन आवेदितं भवति, अस्मिन्निति प्रत्यक्षे मनुष्यजन्मनीत्यर्थः, तस्यैव सुलब्धत्वस्य प्रकान्तत्वात्, तथेतिशब्दः सम्यग्दर्शनाद्यासेविपूर्वकमित्यर्थको यथा भवतीत्युत्तरयथाशब्दापेक्षः, प्रयतितव्यमिति अत्र प्रकर्षार्थे आद्यर्थे वा प्रशब्दः, तथा च प्रकर्षेण सर्वात्मना सम्यग्दर्शनादिलाभानन्तरमादावेव वा तपःसंयमादिषु यतितव्यमित्यर्थः, प्रयत्नप्रयोजनमाह कर्मक्लेशाभावो यथा भवतीति, यथा येन

सत्यागान्न उक्तबन्धप्रमादादभावे च तदभावात्, उत्पन्नसम्यग्दर्शनस्याऽप्यात्मनस्सत्यामविरतावविरतिपरिणामहेतुको बन्धः प्रतीयत एवेति तद्धेतुकः सः । स च परिणाममान्द्यात्ततोऽपकृष्टबन्धः, अविरत्यभावेऽपि प्रमादहेतुकस्ततोऽप्यपकृष्टतरबन्धः, कस्यचिद् विरतस्य सति प्रमादे तदुपलब्धेः, मिथ्यादर्शनाविरतिप्रमादाऽभावेऽपि कषायहेतुकः ततोऽप्यपकृष्टतरबन्धः, सम्यग्दृष्टेर्विरतस्याऽप्रमत्तस्याऽपि संज्वलनकषायोदयसद्भावे तस्य सद्भावात्, ततोऽप्यपकृष्टतरो बन्धो केवलयोगहेतुकः, उपशान्तमोहक्षीणमोहसयोगिकेवलिलक्षणगुणस्थानत्रयवर्तिनो वीतरागस्याऽपि योगसद्भावे सति तस्य सद्भावात् । आशाम्बरास्तु सयोगिकेवलिनो योगसद्भावेऽपि न तन्निमित्तो बन्धः, तस्य जीवन्मुक्तत्वामोक्षप्रसिद्धेरित्याहुः, तन्न युक्तम्, योगरूपकारणसद्भावे तन्निमित्तद्विसामयिकसातवेदनीयबन्धरूपकार्यावश्यम्भावात्, अन्यथा तस्य कारणत्वमेव न स्यात्, न चाऽपसिद्धान्तः—"जाव चक्खुपम्हनिवायमवि वेमाया सुहुमा ईरियावहिया किरिया कज्जइ सा पढमसमयबद्धपुट्ठा बितियसमयवेतिया ततीयसमयनिज्जरिया सा बद्धा पुट्ठा उदीरिया वेदिया निज्जिण्णा सेयकाले अकम्मं वाऽवि भवति" इति श्रीपञ्चमाङ्गप्रवचनात् । न चैवमेकहेतुक एव बन्धः, पूर्वस्मिन् पूर्वस्मिन्नुत्तरोत्तरस्यापि बन्धहेतोस्सद्भावात्, तथाहि, कषायहेतुको हि बन्धो योगहेतुकोऽपि, प्रमादहेतुकश्च कषाययोगहेतुकोऽपि, अविरतिहेतुकश्च प्रमादकषाययोगहेतुकः प्रतीयते, मिथ्यादर्शनहेतुकश्चाऽविरतिप्रमादकषाययोगहेतुक इति सिद्ध इत्यलं पल्लवितेन, विस्तरभयान्नेह वितन्यते । संसारस्याऽनादित्वं दुःखभूयस्त्वमादायैव पर्यवस्यतीति अत्र संसारोऽनादिमान्, कर्मक्लेशानुबद्धजन्माऽन्यथानुपपत्तेरित्यनुमानं पर्यवस्यति । यथा जन्मनः कर्मक्लेशैरनुबद्धत्वं तथा कर्मक्लेशयोरपि जन्मानुबद्धत्वमविशिष्टमेवेति जन्मनि कर्मक्लेशैरनुबद्धेऽस्मिन्निति कथमुक्तमित्याशङ्कायां हेतुमाह— उभयविशेषेति "इदमः प्रत्यक्षगतं" इत्यादिपूर्वोक्तश्लोकमनुसृत्याऽस्मिन्नित्यस्यार्थमाह—प्रत्यक्ष इति । चक्षुर्दृष्टिगोचर इत्यर्थः । सर्वात्मनेति—मनोवचःकायहेतुकयोग-

प्रकारेण, स च प्रकारः " शङ्काद्यतिचारविप्रमुक्तवात्सद्दर्शनो हि शुद्धाशयस्त्रिभुवनमप्युपहितमोहमहेन्धनज्वलितकर्मदहनक्वाथ्यमानमशरणममलज्ञानागमचक्षुषाऽवलोक्य गर्भवासादिभयोद्विग्नः प्राणातिपातादिविरतिप्रतिज्ञामारुह्य, तद्दृढीकरणार्थं च पञ्चविंशतिभावनाभावितान्तरात्मा, द्वादशानुप्रेक्षास्थिरीकृताध्यवसायः संवृताश्रवत्वा

त्रयेणेत्यर्थः । गर्भवासादिभयोद्विग्न इति–जठरद्रव्यसमूहरूपकर्दमवदशुचीभूतोद्वेजनीयभयानके गर्भे यो वास स आदिर्यस्मिन् गर्भनिष्क्रमणादौ स गर्भवासादिस्तत्प्रयुक्ते उक्तरूपे गर्भे किमधोमुखेन वसनीयम् ? तत्र च प्रथमतया मातुरार्तवं पितुः शुक्रं तदुभयं संसृष्टमतिमलिनमप्रेक्षणीयं एवं लक्षणं आहारः किमाहर्तव्य इत्येवंरूपं यद्भयं तेनोद्वेगं संसारौदासीन्याधीनवैराग्यं प्राप्त इत्यर्थः । उक्तश्चैवं सिद्धान्ते गर्भवासदुःखम् "सूईहिं अग्गिवण्णाहिं, संभिन्नस्स निरंतरं । जावइअं गोयमा ! दुक्खं, गब्भे अट्ठगुणं तओ ॥ १ ॥ गब्भाओ नीहरंतस्स, जोणीजंतनिपीलणे । सयसाहस्सिअं दुक्खं, कोडाकोडीगुणंऽपि वा ॥ २ ॥" इत्यादि । आदिनाऽगर्भोत्पन्ननारकदेवनिगोदादिदुःखं ग्राह्यं, तच्चैवं सिद्धान्तेऽभिहितं परमर्षिणा। नरएसु जाइं अइकक्खडाइं दुक्खाइं परमतिक्खाइं । को वण्णेइ ताइं जीवंतो वि वासकोडीवि ? ॥ १ ॥ " अच्छिनिमीलणमित्तं, नत्थि सुहं दुक्खमेव पडिबद्धं । नरए नेरइयाणं, अहोनिसं पच्चमाणाणं ॥ २ ॥ देवाऽवि देवलोए, दिव्वाभरणाणुरंजियसरीरा । जं परिवडंति तत्तो, तं दुक्खं दारुणं तेसिं ॥ ३ ॥ तं सुरविमाणविभवं, चिंतियचवणं च देवलोगाओ । अइबलियं चिय जं न वि, फुट्टइ सयसक्करं हिययं ॥ ४ ॥ ईसाविसायमयकोहमायलोहेहिं एवमाईहिं । देवाऽवि समभिभूआ, तेसिं कत्तो सुहं नाम ॥ ५ ॥ " इत्यादि " जं नरए नेरइया, दुक्खं पावंति गोयमा ! तिक्खं । तं पुण निगोअमज्झे, अणंतगुणिअं मुणेयव्वं ॥ १ ॥" इत्यादि च । पञ्चविंशतिभावनाभावितान्तरात्मेति–प्राणातिपातादिनिवृत्तिलक्षणपञ्चमहाव्रतानां दार्ढ्योपादनार्थं भाव्यन्तेऽभ्यस्यन्त इति भावनाः, अनभ्यस्यमानाभिर्भावनाभिरनभ्यस्यमानविद्यावन्मलीमसीभवन्ति महाव्रतानीति तन्नैर्मल्यार्थं ताः प्रतिदिनं भावनीयाः, ताश्च प्रतिमहाव्रतं पञ्च पञ्च भवन्तीति पञ्चमहाव्रतानां पञ्चविंशतिर्या भावनास्ताभिर्भावितो वासितोऽन्तरात्मा यस्य स तथेत्यर्थः । पञ्चविंशतिर्भावनाः " इरियासमिए सया जए १, उवेह भुंजेज व पाणभोयणं २, आयाणनिक्खेवदुगुंछ ३, संजए, समाहिए संजयए मणो ४ वई ५ ॥ १ ॥ इत्यादि प्रवचनसारोद्धारोक्तपञ्चगाथाभिरवसेयाः । द्वादशानुप्रेक्षास्थिरीकृताध्यवसाय इति अनित्याशरणसंसारैकत्वान्यत्वाशुचित्वाश्रवसंवरनिर्जरालोकस्वभावबोधिदुर्लभत्वधर्मस्वाख्याततारूपाभिर्द्वादशभिरनुप्रेक्षाभिर्भावनाभिः स्थिरीकृतो दृढीकृतोऽध्यवसायः–शुभात्मपरिणतिर्येन दिव्यदृष्टिना स तथेत्यर्थः । संवृताश्रवत्वादिति अनेन संवरः प्रतिपादितः, अस्याऽऽश्रवसंवरणलक्षणत्वात्, संवरश्च द्विधा द्रव्यभावभेदतः, तत्र

दनाभिनवकर्मागमः तपःसंयमादिभिश्च पूर्वोपात्तक्षयशुद्धाशयो मोहादिमलप्रक्षयादवाप्तकेवलपरमैश्वर्यः फलबन्धनशेषचतुष्प्रकृतिक्षये कर्मक्लेशाभावावस्थामाप्नोतीति" टीकाकृदुक्तोऽवसेयः । जन्मादित्रयाणामन्योन्यं कारणभावेऽपि कर्मक्लेशौ प्रति जन्मनोऽन्वयो न नियतः, तीर्थङ्करादिजन्मसद्भावेऽपि कर्मक्लेशयोरनुत्पादात्, जन्म प्रति च तयोरन्वयो नियत इति कर्मक्लेशाभाव इत्युक्तं, न तु जन्माभाव इति, कर्मक्लेशाभावरूपकारणाभावे सति जन्माभावरूपः कार्याभावोऽप्ययत्नसिद्ध एव, यद्यपि नियतव्यतिरेकस्य जन्मन अभावे कर्मक्लेशाभावोऽप्ययत्नसिद्ध एव, तथापि यथा कर्मक्लेशेषु द्वेषादेव तदुच्छेदे प्रवृत्तिः, न तथा जन्मनि द्वेषः, मोक्षावन्ध्यकारणसम्यग्दर्शनादिसाधनत्वेनेष्टसाधनत्वप्रतिसन्धानस्य तत्प्रतिबन्धकस्य सद्भावात्, बन्धमोक्षनियतभावाभावककलेशाभावोपादानस्यावश्यकत्वे,

यदाश्रवत आत्मनि कर्मपुद्गलादानं तस्योच्छेदलक्षण आद्यः, यो भवहेतुक्रियात्यागः स द्वितीय इति, तदुक्तं प्रवचनसारोद्धारेऽष्टषष्टितमद्वारे "प्रत्येकमपि स द्वेधा, द्रव्यभावविभेदतः । यत्कर्मपुद्गलादान-मात्मन्याश्रवतो भवेत् ॥ १ ॥ एतस्य सर्वदेशाभ्यां, छेदनं द्रव्यसंवरः । भवहेतुक्रियायास्तु, त्यागोऽसौ भावसंवरः ॥ २ ॥" इति । नव्यकर्मबन्धाभावरूपं तत्फलमाह **अनभिनवकर्मागम इति**—अभिनवानि नव्यानि च तानि कर्माण्यभिनवकर्माणि, अभिनवकर्मणामागमः प्राप्तिःसम्बन्धो न विद्यते यस्य स तथेत्यर्थः । नन्वाश्रवनिरोधेनाऽऽधुनिककर्मसमागमाभावोऽस्तु, न च तपस्संयमादिभिश्चिरन्तनकालसञ्चितकर्मक्षयं विना तन्मात्रेण कर्मक्लेशाभावावस्थामाप्नोतीत्यतो विशेषणान्तरमाह—**तपस्संयमादिभिश्चेति** । तपस्संयमादिकरणकपूर्वकालोपात्तकर्मक्षयजन्यशुद्धाशयवानित्यर्थः । **अवाप्तकेवलपरमैश्वर्य इति** प्राप्तकेवलज्ञानकेवलदर्शनजगत्त्रयैश्वर्यादिलक्षणोत्कृष्टैश्वर्य इत्यर्थः । तत्र हेतुमाह—**मोहादिमलप्रक्षयादिति** । मोहनीयकर्मज्ञानावरणादिकर्मात्मकमलानामनन्तज्ञानाद्यात्मस्वभावद्रूपकाणां प्र—प्रकर्षेण क्षयः समूलकाषं कषणं तस्मादित्यर्थः । मोहमल्ले जिते तदन्यजयस्सुतरामेव भवतीति ज्ञापयितुमत्र मोहस्य प्रधानतया ग्रहणं कृतमिति । **फलबन्धनशेषचतुष्प्रकृतिक्षय इति** । मोक्षफलप्रतिबन्धकवेदनीयायुर्नामगोत्ररूपभवोपग्राहिकर्मप्रकृतिक्षय इत्यर्थः । **न नियत इति**—अनेन कुत्रचिदन्वयसद्भावेऽपि न तन्मात्रेण कारणत्वं निर्वहति, अन्यथा रासभसत्त्वेऽपि क्वचिद्घटोत्पादेन तस्याऽपि कारणत्वं स्यादिति सूचितम् । अन्वयव्यभिचारप्रदर्शनायाऽऽह—**तीर्थङ्करादीति** । **अन्वयो नियत इति** कर्मक्लेशसत्त्वे नियमेन जन्मसद्भावादिति भावः । नियतान्वयबलात्कर्मक्लेशयोर्जन्म प्रति कारणत्वे सिद्धे तदभावे तदभावोऽपि स्वतस्सिद्ध एवेत्याह—**कर्मक्लेशाभावरूपेति** । ननु मा भूदन्वयः, जन्माभावे कर्मक्लेशाभाव इति व्यतिरेकस्त्वस्त्येवेति तद्बलाज्जन्माभाव इत्येवं कथं नोक्तमित्याशङ्कायामाह—**यद्यपीत्यादिना** । **तत्प्रतिबन्धकस्य**—द्वेषप्रतिबन्धकस्य । **बन्धमोक्षनियतभावाभावकक्लेशाभावोपादानस्याऽऽवश्यकत्व इति** । क्लेशाः क्रोधादिकषाया एव, तैरुपात्ताः कर्मपुद्गला आत्मना सम्बध्यमाना बन्ध इत्यभिधीयते, यदाह तत्त्वार्थे—

कर्मक्षये मुक्तिरित्यापामरव्यवहारोपपत्तये प्रधाना कर्मसंज्ञा तदेकदेशाश्च क्लेशा इति ज्ञापनाय कर्मग्रहणम्। अथवा कर्मक्लेशैरित्यत्र कर्मक्लेशाभाव इत्यत्र च क्लेशपदेन सह समस्तस्यैव कर्मपदस्योपादानत. कर्मजन्यत्वं क्लेशेष्वभिमतं, तथा च क्लेशानां दुःखानां जन्यत्वेन विनाशित्वतस्तद्विनाशार्था प्रवृत्तिरुपपन्ना, अनपेक्ष्यत्वे तु जीवत्वादिस्वभावसमशीलत्वेन तेषां विनाशार्था प्रवृत्तिर्दुर्घटा स्यात्, अत एव च प्रधानेश्वरादिकृतत्वस्यापि व्यवच्छेदः, तत्त्वे तु प्रधानेश्वरादीनां कारणानामनाद्यनन्तत्वेन तत्कार्याणां तेषामविराम एव स्यादिति, एष इति अनन्तरमवधारणार्थक एवकारो द्रष्टव्यः, तेन च न्यूनाधिकयोः परमार्थत्वव्यवच्छेदः, एषः प्रत्यक्षबुद्धिविषयः कर्मक्लेशाभावः, परमार्थः परम उत्कृष्टः पूज्यमानो वाऽर्थः प्रयोजनम्, अनया चार्यया दर्शनादिलाभफलं मोक्षमावेदयन्त्या जन्मनः सुलब्धत्वं सङ्गमितमिति ॥ २ ॥

"सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते स बन्धः ॥ ८ । २ ॥ इति । तेषामेव कर्मपुद्गलानां सर्वथा क्षये सति केवलज्ञानं ततश्च मोक्षः, तथा च क्लेशभावे नियमेन बन्धस्तदभावे च मोक्ष इति बन्धनियतक्लेशभावो मोक्षनियतक्लेशाभाव इत्येवं सिद्धे सत्यत्रैवं विग्रहः कर्तव्यः बन्धमोक्षनियतौ भावाभावौ यस्य स तथेति । तथा च बन्धनियतो भावो यस्य मोक्षनियतोऽभावो यस्य क्लेशस्य स बन्धमोक्षनियतभावाभावकक्लेशः, तदभावोपादानस्य मोक्षोपायतयाऽऽवश्यकत्व इत्यर्थः । एवं तर्हि कर्मक्लेशाभाव इत्यत्र किमर्थं कर्मपदोपादानं कृतमित्याशङ्कानिवृत्त्यर्थमाह—**कर्मक्षय** इति । यो भावभूतः पदार्थः कारणाजन्यस्स न विनाश्य इति नियमेन क्लेशानां दुःखानां कारणाजन्यत्वे नित्यत्वप्रसक्त्या तद्विनाशार्था प्रवृत्तिर्दुर्घटा स्यादित्याह—**अनपेक्ष्यत्वे** त्विति—कारणापेक्षकत्वाभावे तु, कारणाजन्यत्वे त्विति यावत्, **अत एवेति** । क्लेशानां कर्मजन्यत्वादेवेत्यर्थः । तत्त्वे प्रधानेश्वरादिकृतत्वे ।

इति द्वितीयकारिकाव्याख्या समाप्ता ॥ २ ॥

ननु प्राप्तसम्यग्दर्शनादेर्मोक्षो मे शीघ्रं स्यात्तदा वरमित्येवं मोक्षमभिकाङ्क्षमाणस्याऽपि तस्मिन् भवे क्रियानुष्ठानेन जीवपरिणाममान्द्यान्मोक्षो न भवत्यपि, तथा च तत्क्रियानुष्ठानं मोक्षाभिलाषिणा नाऽऽदरणीयं मोक्षानुत्पादकत्वात् सावद्यक्रियावदिति चेत्, मैवं, इदानीन्तनकुशलानुबन्धिक्रियानुष्ठानं परम्परया मोक्षोत्पादकं प्रबुद्धसंस्कारद्वारा भवान्तरे प्रकर्षकाष्ठापन्नशुभभावोत्पादकत्वात्, मत्यादिज्ञानवदित्युक्तहेतोरसिद्धेः, तद्भवीयसम्यक्क्रियानुष्ठानमाराधनीयं साक्षात्परम्परया वा मोक्षोत्पादकत्वात् सम्यग्दर्शनादिवदिति सत्प्रतिपक्षानुमानेन बाधितत्वाच्च, किञ्च मत्यादिज्ञानमपि नैवेदानीं मोक्षोत्पादकमिति नैव तदप्यभ्यसनीयं स्यात्। नन्विदानीं तदभ्यस्तमुत्तरोत्तरभवे सुगुर्वादियोगादभ्यस्यमानमनन्ततः क्षायोपशमिकभावं परित्यज्य क्षायिकभावरूपेण परिणतं सत्तदेव परम्परया मोक्षोत्पादकं भवतीतीदानीमपि तदभ्यसनीयमेवेति चेत्, तत्तुल्यमत्राऽपि, तथा हि "जं अब्भसेइ, गुणं च दोसं च एत्थ जम्मम्मि । तं पावइ परलोए, तेण य अब्भासजोएण ॥ १ ॥" इति सिद्धान्तोक्तेः । "अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ।" इति भगवद्गीतोक्तेश्च, अत्रैव यः शुभकर्मा-

प्राप्तसम्यग्दर्शनादेरसम्यगीहमानस्यापि तस्मिन् भवे मोक्षो न भवत्यपीति तत्क्रियानुष्ठानादि-कमफलमिति विज्ञाय मा मोक्षमार्गेऽलसः स्यादप्रवर्त्तः इति तत्प्रश्वासनायाह

**( भा० ) परमार्थालाभे वा दोषेष्वारम्भकस्वभावेषु ।**
**कुशलानुबन्धमेव, स्यादनवद्यं यथा कर्म ॥ ३ ॥**

( व्या० ) परमार्थालाभे वेति, वा अथवा, परमार्थस्य कर्मक्लेशाभावस्य सञ्चितकर्मावस्था-वैचित्र्यतत्प्रभवदोषगतकर्मावहत्वस्वभावकालसंहननपरिहाण्यादितोऽनवाप्तावित्यर्थः, ' दोषेष्विति ' दूष-यन्त्यात्मानमिति दोषाः क्लेशाः तेषु सत्सु, कथम्भूतेषु ? आरम्भकस्वभावेषु, अशुभप्रवर्त्तनशीलेषु, तथा प्रयतितव्यमित्यत्र पूर्वपद्यादनुवर्त्तनीयम्, तथेत्यस्य यथापेक्षत्वादाह कुशलानुबन्धमित्यादि, कुश-लानुबन्धं कुशलप्रयोजनम्, अवधारणार्थकैवकारेणाकुशलकुशलाकुशलहेतुकर्मणोर्व्यवच्छेदः, स्यादिति सत्कारपूर्वकप्रेरणालक्षणेऽधीष्टे सप्तमी, तेन कुशलं मे स्यादित्यधीच्छतीत्यर्थः, कुशलानुबन्धं किमि-

---

सेवनभावितभावो भवेष्वनेकेष्विति वक्ष्यमाणोक्तेश्च । अभ्यासाद्ध्यभ्यासोऽभिवर्धेत इति न्या-याच्च मोक्षानुकूलक्रियानुष्ठानं पूर्वपूर्वभवेऽप्रमादभावेनाऽभ्यस्तमुत्तरोत्तरभवे सुगुर्वादियोगा-त्पूर्वसंस्कारजागृतिभावेन तद्द्वाराऽऽशंसादिदोषाऽविमिश्रशुद्धतरशुद्धतमक्रियानुष्ठानप्राप्त्या प्रक-र्षकाष्ठापन्नभावोत्पादनेन सर्वसंवरचारित्रं प्रापयत्तदेव परम्परया मोक्षरूपफलमुत्पादयतीति मत्वा कुशलानुबन्धिनिरवद्यक्रियानुष्ठानमल्पसामर्थ्यवताऽपि " थोवं वि अणुट्ठाणं, आण-प्पहाणं हणेइ पावभरं । लहुओ रविकरपसरो, दहदिसितिमिरं पणासेइ ॥ १ ॥ " इत्याद्यर्ह-न्मतैकनिष्ठेन ज्ञानदर्शनाढ्यतया धर्मार्थिनाऽऽदरणीयमेव, न तु कालाद्यनुभावात्मोक्षफलानु-त्पत्तावपि तत्राऽविश्वासं कृत्वाऽऽलस्यं विधेयमित्येवं प्रोत्साहकरणाशयेन तृतीयार्यावितरणमाह— **प्राप्तसम्यग्दर्शनादेरित्यादिना ।**

**सञ्चितकर्मावस्थेति ।** कर्म द्विविधं सञ्चितं प्रारब्धं च, यत्फलप्रदानोन्मुखं न तदा-द्यम्, यत्तदुन्मुखं तद्द्वितीयमिति, द्वितीयकर्मनिषेधार्थं कर्मणः सञ्चितेति विशेषणमुक्तम् । **कुश-लानुबन्धमित्यादीति—** " ज्ञानं क्रियेव निरुणद्धि ससंवरांशं, कर्म क्षिणोति च तपोंशमनुप्र-विश्य " ॥ इति महावीरस्तवप्रकरणोक्तेः विरतिसंवरान्तर्गतत्वेन क्रियाऽऽगच्छत्कर्म प्रति-रुणद्धि, ज्ञानञ्च सम्यक्त्वसंवरान्तर्गतत्वेनाऽऽगच्छत्कर्म प्रतिरुणद्धि, तपोंऽशत्वेन च सञ्चित-कर्म क्षिणोति तत उभाभ्यामनागतबन्धाभावात् प्राक्तनस्य च निश्शेषस्य परिक्षयाद्भवति योगिनो मोक्षप्राप्तिरित्यार्हततत्त्वश्रद्धानवता कुशलार्थिना मोक्षहेतुभूतं कुशलानुबन्धमेव ज्ञानक्रियात्मकं कर्म यथा स्यात्तथा प्रयतितव्यमिति भावः । निराशंसभावेनैव मोक्षार्थिना शुभक्रिया कर्तव्येत्युक्तं सिद्धान्ते, तत्र " नो इह लोगट्ठयाए आयारमहिट्ठेज्जा, नो परलोगट्ठ-याए आयारमहिट्ठेज्जा, नो कित्तिवण्णसद्दसिलोगट्ठयाए आयारमहिट्ठेज्जा, नन्नत्थ आरहंतेहिं हेऊहिं आयारमहिट्ठेज्जा " इत्याद्यागमेनैहिकपारत्रिकाशुभाशंसैव निषिद्धा, मोक्षफलत्वेन वक्ष्य-

त्याह—' अनवद्यमिति ' अनवद्यमगर्ह्यं निष्पापमिति यावत् यथा, कर्म शुद्धप्रयोगहेतुकं कल्याणप्राप्तिकारणं शुभं क्रियानुष्ठानं दया वैराग्यमित्यादि, न चैवं शुभाशंसाकृतं निदानत्वम्, भोगप्राप्तिफलस्यैव तस्य निदानत्वेन नियमितत्वात्, तस्यैव चागमे निषेधात्, " सल्लं कामा विसं कामा, कामा आसीविसोपमा । कामे पत्थेमाणा, अकामा जंति दोग्गई ॥ १ ॥ इत्यादिना ॥ ३ ॥

एवकारव्यवच्छेद्यस्याकुशलानुबन्धकर्मणोऽधमाधमविमध्यमाख्यतये स्वामिनः, कुशलाकुशलानुबन्धस्य च मध्यमः स्वामीति तानुपदर्शयन्नाह

( भा० ) कर्माहितमिह चामुत्र, चाधमतमो नरः समारभते ।
इह फलमेव त्वधमो, विमध्यमस्तूभयफलार्थम् ॥ ४ ॥

( व्या० ) एतत्प्रभृतितिसृभिः कारिकाभिः समानेऽपि सर्वसंसारिजीवानां जीवत्वे पूर्वोपार्जितशुभाशुभकर्मपरिणतिवशेन पुरुषार्थसाधनभेदादधमतमाधमविमध्यममध्यमोत्तमोत्तमोत्तमलक्षणं षड्विधत्वमावेदयत्याचार्यः । आर्षेऽपि महानिशीथसिद्धान्ते प्रत्यपादि-पुरुषषट्कस्वरूपं किञ्चिद्भङ्ग्यन्तरेण " गोयमा ! छव्विहे पुरिसे णेए तं जहा—अहमाहमे, अहमे, विमज्झिमे, उत्तमे, उत्तमुत्तमे, सव्वुत्तमुत्तमे इत्याद्यालापककदम्बकेन । अहितमकुशलं सापायम्, इह चामुत्र च इहलोकपरलोकयोः, आद्यश्च एवार्थे, अनेन च इहलोकपरलोकाहितमात्रानुबन्धिप्रवृत्तिमत्त्वमधमतमत्वलक्षणमावेदितं भवति । अधमतमः सर्वनिकृष्टः पापीयान्, नर इति पुरुषनिर्देशो व्यवहारप्राधान्यादिभिः । समारभते इत्यनेन द्वितीयावस्थावच्छिन्नत्वं कैमुतिकन्यायेन चाद्यतृतीयावस्थाविशिष्टत्वमपि सूचितम्, अवस्थात्रयी च संरम्भसमा-

तस्य निदानरूपत्वात्, न तु कुत्राऽप्यागमे शुभाशंसा, तत्कृतस्याऽनिदानरूपत्वात्, अत एव—" वारिज्जइ जइऽवि नियाणबंधणं वीयराय ! तुह समये । तहऽवि मम हुज सेवा, भवे भवे तुम्ह चलणाणं ॥ १ ॥ " इत्याद्यपि सङ्गच्छत इत्याशयेनाऽऽह न चैवं शुभाशंसाकृतमित्यादि । सल्लमित्यादि । अन्तःप्रविष्टं शल्यं कायभेदबलारोग्यपरिहाणिमिवाऽन्तःप्रविष्टः कामोऽपि संयमभेदात्मबलेशबलाऽऽरोग्यज्ञानादिपरिहाणिं विदधातीति सादृश्येन शल्यमिव शल्यं, कामाश्शब्दादयः । मरणापादकत्वसाधर्म्येण विषमिव विषं । आशीविषोपमाः—आशीस्तालुगता दंष्ट्रा तस्यां विषमस्य आशीविषः सर्पस्तदुपमाः, अपेयम्यत्वात् कामान् प्रार्थयमाना अपि अकामा इष्यमाणकामाननाप्नुवन्तः, इच्छाविषयकामकर्मकप्राप्त्यभाववन्त इति यावत् । यान्ति दुर्गतिम् नरकादिगत्याश्रया भवन्तीत्यर्थः । अत एव " भोगे अभुंजमाणा वि केई मोहा पडंति अहरगई " इत्युक्तमपि सङ्गच्छते ।

इति तृतीयकारिकाव्याख्या समाप्ता ।

चतुर्थ्याअवतरणिकामाह एवकारव्यवच्छेद्यस्येत्यादि ।

इहलोकपरलोकाहितमात्रानुबन्धिप्रवृत्तिमत्त्वमिति । ऐहिकपारत्रिकहितफलाननुबन्धित्वे सत्यैहिकपारत्रिकाहितफलानुबन्धित्वविशिष्टसंरम्भसमारम्भारम्भक्रियाऽयतमानुकूलकृत्याश्रयत्वमधमाधमत्वलक्षणमित्यर्थः । प्रत्येकं पुनः कषायादिभेदेनाऽने-

रम्भारम्भाख्या । प्रत्येकं पुनः कषायादिभेदेनानेकविधा । तत्र प्राणातिपातादिसंकल्पावेशः संरम्भः, तत्साधनसन्निपातजनितपरितापनादिलक्षणः समारम्भः, प्राणातिपातादिक्रियानिर्वृत्तिरारम्भः । तदुक्तं—संरम्भः सकषायः, परितापनया भवेत्समारम्भः । आरम्भः प्राणिवधः, त्रिविधो योगस्ततो ज्ञेयः ॥ १ ॥ अन्यत्र च । "संकप्पो संरंभो, परितावकरो भवे समारम्भो । आरम्भो उद्दवओ, सुद्धनयाणं च सव्वेसिं ॥ १ ॥" अन्ये च प्राणव्यपरोपणादिषु प्रमादवतः प्रयत्नावेशः संरम्भः, साधनसमभ्यासीकरणं समारम्भः, प्रक्रम आरम्भ इत्याचक्षते । एते चोभयभवविराधकाः सौकरिकमत्स्यबन्धादयोऽवसेयाः । ते हि प्रणष्टधर्मसंज्ञाः अज्ञातशुभलेश्या सर्वनिन्दिताचरणसादराः शिष्टजनतिरस्कृतजन्मानः स्फुटितकरचरणशिरोरुहा विकृतकरणाः क्षुत्पिपासाशीतोष्णझञ्झावाताभिभूता गिरिकन्दरारण्यनिर्झरादिसोपद्रुतस्थानपर्यटनशीला इहापि सापायं जिजीविषवोऽमुत्र च पापानुबन्धिपापकर्मेरिता नरकेषूत्कटयातनाभाजो भवन्ति ॥ द्वितीयं पुरुषमाह—'इहेत्यादि' इह अस्मिञ्जन्मनि फलं प्रयोजनं यस्येतीहफलं कर्मेत्यनुवर्तते । एवकारश्च परलोकफलव्यवच्छेदार्थः, तेन न विमध्यमेऽतिप्रसङ्गः । ततश्च इहफलमात्रोद्देश्यकप्रवृत्तिमत्त्वमधमत्वलक्षणं सूचितम् । कर्मण उभयभवफलत्वेऽपि इह फलकत्वमात्रगोचरा बुद्धिः पूर्वस्माद्विशेषं परलोकमनोरथनिवृत्तिं च तुशब्दो दर्शयति । एते ह्यधमाः बार्हस्पत्यमतानु-

क्रियेति । अयम्भावः कायवाङ्मनोभेदेन योगत्रैविध्यात्तद्विशिष्टसंरम्भोऽपि त्रिविधस्तद्यथा—कायसंरम्भो वाक्संरम्भो मनस्संरम्भ इति, एवं समारम्भोऽपि, आरम्भोऽपि च त्रिविध इति नव भेदाः । नवभेदेष्वप्येकैकभेदः कृतकारितानुमतविशेषात् त्रिविधो भवति, तद्यथा—कृतकायसंरम्भः कारितकायसंरम्भोऽनुमतकायसंरम्भ इति भेदत्रयं, एवं वाचा मनसा च त्रित्रिभेद इति संरम्भो नवविधः १ एवं समारम्भोऽप्यारम्भोऽपि च नवविधः, सम्मीलने सप्तविंशतिभेदाः । तन्मध्येऽप्येकैकभेदः कषायाणां चतुर्भेदात्तद्विशिष्टश्चतुर्विधस्तद्यथा क्रोधकृतकायसंरम्भो मानकृतकायसंरम्भो मायाकृतकायसंरम्भो लोभकृतकायसंरम्भ इति चत्वारः कृतविशिष्टभेदाः, एवं क्रोधकारितकायसंरम्भ इत्यादिकारितविशिष्टभेदाश्चत्वारः, एवं क्रोधानुमतकायसंरम्भ इत्याद्यनुमतविशिष्टभेदेन चत्वारः, सर्वसम्मीलने कायसंरम्भस्य द्वादश भेदाः, एवं वाङ्मनससंरम्भयोरपि द्वादश द्वादश भेदाः, द्वादशानां त्रिभिर्गुणने संरम्भसर्वभेदाः षट्त्रिंशत्, एवमेव समारम्भस्याऽऽरम्भस्य च षट्त्रिंशद् षट्त्रिंशद्भेदा ज्ञेयाः, सर्वसम्पिण्डीकरणे त्रयाणां भेदा अष्टोत्तरशतं भवतीत्याद्यनेकप्रकारेणानेकविधत्वं ज्ञेयमिति भावः । संकप्पः—पृथिवीकायादिविनाशानुकूलसंकल्पः—परितावकरो पृथिवीकायादिपरितापकरः । उद्दवओ—पृथिव्याद्युपद्रवलक्षणः । इह फलमात्रोद्देश्यकप्रवृत्तिमत्त्वमधमत्वलक्षणमिति । उभयभवफलकेऽपि कर्मणि अस्मिन्नेव भव एतत्कर्म मे फलप्रदं भवत्विति भ्रान्तबुद्धिजन्या या पारत्रिकफलानुद्देश्यकत्वविशिष्टैहिकफलोद्देश्यकसंरम्भसमारम्भारम्भान्यतमानुकूलप्रवृत्तिस्तद्वत्त्वमधमत्वलक्षणमित्यर्थः । उभयफलकमपि कर्मैतद्भवफलकमेवेत्याकारकोभयभवफलजनकत्वविशिष्टकर्मत्वावच्छिन्नविशेष्यताकैतद्भवभिन्नभवफलजनकत्वाभावनिष्ठप्रकारताकत्वे सत्येत-

यायिप्रभृतयः इहलोकमात्रप्रतिबद्धा कृच्छ्रोपलब्धविषयामिषानुषक्तमानसा अर्थकामैकदृष्टदृष्टयोऽसञ्जातसंसारभया मोहपटलावृतान्तरात्मानोऽविमृष्टदारुणकर्मविपाकाः 'कः पुनः परलोकादागतः' 'मूढप्रवादोऽयं' 'एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः' 'यावज्जीवेत्' इत्यादिभिर्मुग्धजनविप्रतारणसाधनैः परभवमपोह्येहलोकफलकर्मप्रयत्नवन्तः कथञ्चित्किञ्चिदिहलोकसुखमनुभूय यथाकर्मानुसारिणीर्नरकादिदुर्गतीः पर्यटन्ति ॥ तृतीयं पुरुषमाह 'विमध्यमस्त्वित्यादि' तुशब्दः कथमहमुभयलोकफलमुपभुञ्जीयेति बुद्धिरूपं पूर्वतो विशेषं दर्शयति–इहपरलोकफलोद्देश्यकप्रवृत्तिमत्त्वं विमध्यमत्वलक्षणं बोध्यम् । अधमेऽतिप्रसङ्गवारणाय परलोकेति । मध्यमेऽतिप्रसङ्गवारणाय चेहेति । ते च विमध्यमाः परस्परमबाधया धर्मार्थकामानासेवमाना जन्मान्तरेषु वयं धर्ममहिम्ना सकलभूवलयराजः पुत्रपौत्रादिपरिवारभाजो रूपसौभाग्यशालिनो विभवविलासभालिनो भविष्याम इति दानादिधर्मपरायणा दुष्करक्रियाः कुर्वाणाः परोपकारादिकं सारं मन्यमाना निसर्गभद्रमनस इहलोकसुखमनुभूय परलोकेऽपि तथाविधां सुगतिमाप्नुवन्ति ॥ ४ ॥

अकुशलानुबन्धस्वामिनोऽभिधाय कुशलाकुशलानुबन्धस्वामिनं चतुर्थं कुशलानुबन्धस्वामिनं च पञ्चमं पुरुषविशेषं कारिकयैकयाऽऽह

**( भा० ) परलोकहितायैव, प्रवर्त्तते मध्यमः क्रियासु सदा ।**
**मोक्षायैव तु घटते, विशिष्टमतिरुत्तमः पुरुषः ॥ ५ ॥**

ऽभिवफलजनकत्वनिष्ठप्रकारताकबुद्धिजन्यपारत्रिकफलानुद्देश्यकत्वविशिष्टैहिकफलोद्देश्यकसंरम्भसमारम्भारम्भान्यतमानुकूलप्रवृत्तिमत्त्वमधमत्वलक्षणमिति पर्यवसितोऽर्थः । यावज्जीवेदित्यादिभिरिति । "यावज्जीवेत् सुखं जीवे–दृणं कृत्वा घृतं पिबेत् । भस्मीभूतस्य देहस्य, पुनरागमनं कुतः ? ॥ १ ॥" इति सम्पूर्णश्लोकः । आदिपदेन अङ्गनालिङ्गनाजन्य सुखमेव पुमर्थता । कण्टकादिव्यथाजन्यं, दुःखं निरय उच्यते ॥ १ ॥ त्याज्यं सुखं विषयसङ्गमजन्म पुंसां, दुःखोपसृष्टमिति मूर्खविचारणैषा । व्रीहीञ्जिहासति सितोत्तमतण्डुलाढ्यान्, को नाम भोस्तुषकणोपहितान् हितार्थी ॥ २ ॥ लोकसिद्धो भवेद्राजा, परेशो नाऽपरः स्मृतः । देहस्य नाशो मुक्तिस्तु, न ज्ञानान्मुक्तिरिष्यते ॥ ३ ॥ इत्यादिश्लोका ग्राह्याः । इहपरलोकफलोद्देश्यकप्रवृत्तिमत्त्वमिति । परमार्थानभिज्ञत्वहेतुकमोक्षफलविषयकोपेक्षाबुद्धिपूर्वकोभयभवसुखेच्छाजन्यदानादिविषयकप्रवृत्तिमत्त्वं विमध्यमत्वलक्षणमिति भावः । विमध्यमपुरुषनिदर्शनञ्च महाभोगिकृषीवलवणिगादयः, ते हि परमार्थानभिज्ञत्वेन गजनिमीलिकान्यायेन मोक्षफलं भवतु मा वा, इत्येवमुपेक्ष्याऽनेन कर्मणेह भवे परभवे च सुखी भवेयमित्येवं मत्वा दानतीर्थयात्रापरोपकारादिविषयकप्रवृत्तिं कुर्वन्तीति भावः ।

॥ इति चतुर्थकारिकाव्याख्या समाप्ता ॥ ४ ॥

चतुर्थपञ्चमपुरुषविशेषाभिधानाय पञ्चमकारिकाऽवतरणिकामाह–अकुशलानुबन्धस्वामिनेन इत्यादि ।

( ७५।० ) **परलोकहितायेति**, परलोकस्य परलोकाय वा हितं सुखं तदर्थम्, एवकारश्चेह- लोकतृष्णाऽव्यवच्छेदपरः । तिसृष्वप्यवस्थासु सामान्यतः प्रवृत्त्युपदर्शनार्थं प्रवर्त्तत इति भिन्नक्रियो- पादानम् । **क्रियासु** आपाततो न्याय्यतयाऽऽभासमानासु । **सदा** यावज्जीवम् । परलोकहितमात्रोद्देश्य- कप्रवृत्तिमत्त्वं मध्यमत्वलक्षणं ख्यापितम् । एते चेहसुखनिरपेक्षा अभिषेचनोपवासब्रह्मचर्यगुरुकुलवास- भैक्ष्याद्यासेवमानाः परतीर्थिका लोकोत्तरमार्गप्रतिपन्ना अपि देवेन्द्रचक्रवर्तिमहामण्डलिकाद्यैश्वर्यसमाक्रा- ष्टमानसाः सौभाग्यादि वा प्रार्थयमाना निदानपरास्तपोविक्रयेण परलोकसुखमेव प्रधानीकुर्वन्तो मध्यमा अभिधीयन्ते । पञ्चमं पञ्चमगतिप्रसक्तमानसं पुरुषं दर्शयति—**मोक्षायैवेत्यादि**, मोक्षः अनेकान्तभाव- नाजनिततत्त्वज्ञानोपबृंहितशैलेशीकरणप्रयत्नजन्यः कृत्स्नकर्मक्षयः तज्जन्यपरमानन्दरूपो वा, तस्मै । एवकारो वैषयिकसुखं व्यवच्छिनत्ति । तुशब्दसमीचीनेन घटत इत्यनेन दर्शनमात्रमपि लब्ध्वाऽवास- परमार्थबीजोऽहमवश्यमुक्तमार्गोऽधिगमिष्यामि क्षेममिति बुद्ध्या शनैः शनैरपि यतत इत्यर्थ आवेदितः । **विशिष्टमतिरुत्तमः पुरुषः** पूर्वेभ्यो विशिष्टा प्रशस्ता मुक्त्येकताना मतिरस्येति विशिष्टमतिः । उत् ऊर्ध्वं तमसः वैषयिकसुखाभिलाषात्मकमोहादित्युत्तमः । नर इति वर्त्तमानेऽपि पुरुषग्रहात् पूर्वैरेकान्त- भेदविशेषमाह पुण्यवत्त्वं चास्य दर्शयति यावदयं न मुच्यते तावत्प्रायो विशिष्टपुरुषवेदादिपुण्यराशि- भागी, वक्ष्यति च पुरुषवेदादयः पुण्यमिति **टीकाकृतः** । उत्तमास्त्वेते यतिश्रावकप्रभृतयः, तीर्थकृता- मुत्तमत्वेऽपि विधिनिषेधातीतत्वेन पृथगुपादानम् । एवं चानेकान्तभावनाजनिततत्त्वज्ञानोपबृंहितशैलेशी-

**तिसृष्वपि**—संरम्भसमारम्भारम्भलक्षणास्वपि । परतीर्थिकाक्रिया मिथ्यारूपतया न वस्तुगत्या न्यायानपेता सद्रूपत्वाभावादित्यत आह—**आपातत इति** । **परलोकहित- मात्रोद्देश्यकप्रवृत्तिमत्त्वं मध्यमत्वलक्षणमिति** । पारलौकिकहितफलेतरफलानुद्देश्य- कत्वे सति पारलौकिकहितफलोद्देश्यकप्रवृत्तिमत्त्वं मध्यमत्वलक्षणमित्यर्थः । कुप्रावचनिका ज्ञानध्यानतपःकष्टकरणाद्युपसादय इवाऽर्हत्प्रवचनमार्गप्रतिपन्ना अपि यथार्थपरमार्थानभिज्ञ- त्वेन कृतनिदानास्सम्यग्दृष्टयो मध्यमपुरुषा एवाऽवगम्यन्तीत्याह—**लोकोत्तरमार्गप्रतिपन्ना अपीति** । **शैलेशीकरणप्रयत्नजन्य इति**—यावद्योगस्तावन्न मोक्षः, तस्य कर्मबन्ध- कारणत्वादिति मोक्षार्थं सम्पूर्णयोगनिरोधं सयोगिकेवलिचरमसमये कृत्वा ततः 'अ इ उ ऋ ऌ' इत्येतत्पञ्चह्रस्वाक्षरकालमानां आन्तर्मौहूर्तिकीं शैलेशीं करोति । शैलेशो मेरुस्तस्येवाऽचलता स्थिरता यस्यामवस्थायां सा शैलेशी, "सेलेसो किल मेरू सेलेसी होइ जा तदचलया" ॥३०६५॥ इति विशेषावश्यकवचनात् । यद्वा शीलं चारित्रं, तच्चेह निश्चयतः सर्वसंवररूपं ग्राह्यम्, तस्यैव सर्वोत्तमत्वात्, तस्येशः शीलेशः, तस्येयमवस्था शैलेशी । "सीलं व समाहाणं निच्छयओ सव्वसंवरो सो य । तस्सेसो सीलेसो सेलेसी होइ तदवत्था ॥ ३०६७ ॥" इति विशेषावश्यक- भाष्यवचनात् । तथा च शैलेशीकालीनसमुच्छिन्नक्रियाऽप्रतिपातिशुक्लध्यानजन्य इत्यर्थः । सकलशरीरबन्धसञ्चितकर्मक्षयजन्यबुद्ध्यादिनवगुणोच्छेदलक्षणो मोक्ष इति नैयायिकमतनिर- सनायाऽऽह—**तज्जन्यपरमानन्दरूपो वेति** । पञ्चमपुरुषलक्षणमाह एवञ्चेत्यादिना ।

॥ परमकारुणिकचातुर्विद्यविशारद–भव्यानुग्रहानेकतर्कव्याकरणादिग्रन्थप्रासाद-
सूत्रणसूत्रधार-तीर्थोद्धारैकबद्धकक्षशासनसम्राट् तपोगच्छाधिपति सकलसूरिशि-
रःशेखर–भट्टारकाचार्यश्रीविजयनेमिसूरिचरणकमलचञ्चरीकायमाणतत्प-
ट्टालङ्कारशिष्य-सिद्धान्तवाचस्पति-न्यायविशारद-श्रीविजयोदयसूरि-
प्रणीतं न्यायविशारद न्यायाचार्य महोपाध्यायश्रीयशोविजय-
गणिविनिर्मिततत्त्वार्थाधिगमप्रथमाध्यायविवरणसत्कगवेषि-
ताप्राप्तमङ्गलरूपाद्यभाष्यकारिकापञ्चतयीविवरणसन्धानैकप्र-
योजनं तद्विवरणमिदं समाप्तम् ॥

( यशोवि० टीका ) करणप्रयत्नजन्यमोक्षमात्रोद्देश्यकप्रवृत्तिमत्त्वमुत्तमत्वम्, विधिनिषेधातीतत्वे सत्युत्तमत्वमुत्तमोत्तमत्वम् । बालेऽतिव्याप्तिवारणाय विशेष्यभाग इत्येवं पञ्चमषष्ठविकल्पयोर्न सङ्कर इति तु तद्विवेकः ॥ ५ ॥

निरनुबन्धस्वामिनमुपदर्शयति

( भा० ) यस्तु कृतार्थोऽप्युत्तम–मवाप्य धर्मं परेभ्य उपदिशति ।
नित्यं स उत्तमेभ्यो–ऽप्युत्तम इति पूज्यतम एव ॥ ६ ॥

( व्या० ) यस्त्वित्यादि । यः पुनः, कृतार्थोऽपि केवलज्ञानप्राप्त्या सिद्धप्रयोजनोऽपि,

देवेन्द्रनरेन्द्रादिसमृद्धिजन्याशश्वदपरमार्थभूतदुःखसम्भिन्नसंसारसुखानुद्देश्यकत्वे सतीन्द्रियविषयाजन्यदुःखासम्भिन्नाखिलतत्त्वज्ञानजन्यशश्वन्मोक्षसुखोद्देश्यककुशलानुबन्धानवद्यकर्मानुकूलकृतिमत्त्वमुत्तमत्वमिति भावः, षष्ठपुरुषलक्षणं तु सुस्पष्टमेवेति न प्रतन्यते । लोकोत्तमेषु मोक्षैकार्थिष्वतिव्याप्तिवारणाय विशेषणमाह–विधिनिषेधातीतत्वे सतीति । शास्त्रोक्तविधिनिषेधविधानं ह्यस्मदादिसामान्यपुरुषानुद्दिश्यैव, न तु तीर्थङ्कररूपविशिष्टपुरुषानुद्दिश्य, तेषां कल्पातीतत्वादिति तत्र नोक्तविशेषणासम्भव इति तद्घटितोक्तलक्षणे नाऽव्याप्तिदोषः । विधिनिषेधातीतत्वमात्रस्य लक्षणत्वे बालोऽपि शास्त्रोक्तविधिनिषेधातीत एवेति तस्मिन्नलक्ष्ये लक्षणगमनादतिव्याप्तिस्स्यादिति तन्निवृत्तय उत्तमत्वमिति विशेष्यदलमित्याह–बाल इत्यादि । इति पञ्चमकारिकाव्याख्या समाप्ता ॥ ५ ॥

ननूत्तमकोटिं गता यतिश्रावकादयः कुशलानुबन्धस्वामिनः पूर्वमुक्तास्तर्हि निरनुबन्धस्वामिनः क इत्याशङ्कायां षष्ठश्लोकावतरणिकामाह–निरनुबन्धेति । देशतस्सर्वतश्चेति कृतार्थो द्विधा, तत्र योऽनन्तज्ञानादिगुणचतुष्टयाऽऽवारकज्ञानावरणादिघातिकर्मचतुष्टयक्षयोत्थकेवलज्ञानाद्यवाप्त्या देशकृतार्थः सोऽप्यवशिष्टभवोपग्राहिनामकर्मादिसमस्तकर्मक्षयोत्थमोक्षात्मकान्तिमफलावाप्तिलक्षणसम्पूर्णकृतार्थता यावन्न भवति तावदुपदिशतीत्याशयेनाऽऽह–कृतार्थोऽपीति।

उत्तमं धर्मं क्षमादिकम्, अवाप्य—अधिगम्य, परेभ्य उपदेशदानकर्मद्वारा स्वाभिप्रायविपर्येभ्यः श्रोतृभ्यः, उपदिशति, नित्यमाकर्मक्षयात् प्रथमचरमपौरुष्योः, स उत्तमेभ्योऽप्युत्तम इति पूज्यतम एवातिशयेन पूज्य एव । यद्वा स पूज्यतम एवेति हेतोरुत्तमेभ्योऽप्युत्तम इति व्याख्येयम् । तेन नाविमृष्टविधेयांशदोषः ॥ ६ ॥

कृतार्थेनाऽपि सता भगवता यद्युपदिष्टं प्रतिदिनं तर्ह्यस्मदादिनाऽकृतार्थेन प्रतिदिनं परेभ्य उपदेष्टव्यमित्यत्र किमु वक्तव्यमित्यपिना सूचितम् । उत्तमं धर्मं क्षमादिकमव्या-दयेति—एतेन वक्तुरर्हत उत्तमधर्मोपदेशदातृत्वगुणो व्यञ्जित इति । आकर्मक्षयादिति—अत्राऽऽङ् मर्यादायां न त्वभिविधौ, तथा च कर्मक्षयमवधिं कृत्वेत्यर्थो न तु तमभिव्याप्य, तदानीं कर्माभावप्रयुक्तशरीराभावेन फलाभावेन चोपदेशप्रवृत्त्यभावात्, एतेन "ज्ञानिनो धर्मतीर्थस्य, कर्तारः परमं पदम् । गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥ १ ॥" इत्येतन्मतं निरस्तम्, "दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाऽङ्कुरः । कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥" इत्युक्तेः कर्मात्मकबीजाभावेन पुनः संसाररूपाङ्कुरोत्थानाभावात् । "सूरुदये पच्छिमाए, ओगाहिन्तीए पुव्वओ एति (ऽईइ)" ॥ ११८२ ॥ इत्यावश्यकनिर्युक्तिपाठं बृहत्कल्पभाष्यपाठञ्चानुसृत्याह—प्रथमचरमपौरुष्योरिति । ननु यस्तु कृतार्थोऽप्युत्तमं धर्ममवाप्य नित्यं परेभ्य उपदिशति स उत्तमेभ्योऽप्युत्तम इति हेतोः पूज्यतम एवेत्यन्वयं कृत्वाऽर्थकरणेऽविमृष्टविधेयांशदोषः, तथाहि कृतार्थत्वे सत्युपदेशकत्वहेतुनोत्तमोत्तमत्वस्याऽर्हत्युद्देश्ये विधेयभूतस्य सिद्धौ सत्यां तदाकाङ्क्षानिवृत्तौ पुनः पूज्यतमत्वाकाङ्क्षामुत्थाप्य पूर्वरीत्या सिद्धेनोत्तमोत्तमत्वहेतुना पूज्यतमत्वस्य विधेयभूतस्य साधनेऽविमृष्टविधेयांशदोषः, अविमृष्टः प्राधान्येनाऽनिर्दिष्टो विधेयांशो यत्र स तथेत्यर्थः, प्रस्तुत उत्तमोत्तमत्वे उक्तहेतुना सिद्धे तं हेतूकृत्य पूज्यतमत्वसाधने तस्यैव प्राधान्यं स्यात्तेन च व्यवहितत्वादुत्तमोत्तमत्वस्याऽप्रधानत्वं स्यात्, न तु प्रधानत्वम्, अनुपसर्जनीभूतत्वे सत्युद्देश्याऽऽनन्तर्यमिति प्राधान्यलक्षणस्याऽघटमानत्वादित्याशङ्कां मनसि निधाय यस्तु कृतार्थोऽप्युत्तमं धर्ममवाप्य नित्यं परेभ्य उपदिशति स पूज्यतम एवेति हेतोरुत्तमेभ्योऽप्युत्तम इत्यन्वयं कृत्वा व्याख्यान्तरमाह यद्वेति । यद्वा पुरुष उत्तमोत्तम इति प्रस्तुतेऽर्हत्युत्तमोत्तमत्वस्यैव जिज्ञासितत्वेन तस्यैव पूज्यतमत्वहेतुना साधने तस्यैव प्राधान्यान्नोक्तदोष इत्याशयेनाऽऽह तेनेति ।

॥ इति षष्ठकारिकार्थः समाप्तः ॥ ६ ॥

यस्मिन् पुरुषे यदोत्तमोत्तमत्वं तस्मिन्नेव तदैव पूज्यतमत्वं, यस्मिंश्च पुरुषे यदा पूज्यतमत्वं तस्मिन्नेव तदैवोत्तमोत्तमत्वमित्येवं पुरुषकालापेक्षया समनियतयोरुभयोर्जिज्ञासितत्वेऽर्हति तदुभयस्यैव सिद्धिः कर्तव्येति तत्र कृतार्थत्वे सत्युपदेशकत्वमेव हेतुः प्रदर्शनीय इत्याशयेन सप्तमश्लोकावतरणिकामाह

उत्तमोत्तमत्वपूज्यतमत्वयोः समनियतयोः कृतार्थस्य सत उपदेशकत्वमेव हेतुरित्यभिप्रायेणाह

**( भा० ) तस्मादर्हति पूजामर्हन्नेवोत्तमोत्तमो लोके ।**
**देवर्षिनरेन्द्रेभ्यः, पूज्येभ्योऽप्यन्यसत्त्वानाम् ॥ ७ ॥**

( व्या० ) तस्मादित्यादि । यस्मात् कृतार्थोऽप्युपदिशति, तस्मादर्हन्नेव यथार्थनामा, उत्तमोत्तमो लोके जगति, नैकदेशे, पूजामर्हति अन्यसत्त्वानां पूज्येभ्योऽपि देवेभ्य ऋषिभ्यो नरेन्द्रेभ्यश्च । अन्यसत्त्वाना देवादयः पूज्यास्तेभ्योऽप्यर्हति पूजामर्हन्नित्यन्येभ्यः सुतरां पूजामर्हतीति व्याख्यातमेव । न हि राजनि समुत्तिष्ठति पर्षदुत्थानं प्रति वितर्कः । स तावदर्हतु पूजां, पूजकानां तु कृतार्थमकोपप्रसादमर्चयतां को गुण इति चेत्, नैवं शक्यम्, अग्नेरकोपप्रसादस्यापि सेवकानामीप्सितगुणहेतु-

उत्तमोत्तमत्वपूज्यतमत्वयोरिति । अर्हन्निति-अमरवरविनिर्मिताशोकादिमहाप्रातिहार्यरूपां पूजामर्हतीत्यर्हन्नित्यर्थः, अत एवाऽऽह-यथार्थनामेति । " अरिहंति वंदणनमं-सणाणि अरिहंति पूयसक्कारं । सिद्धिगमणं च अरहा, अरिहंता तेण वुच्चंति ॥ १ ॥ " इति सिद्धान्तोक्तेर्गुणनिष्पन्नान्वर्थनामेत्यर्थः । अर्हन्देवो हि न मनुष्यलोकमात्र एव पूज्यते किन्तूर्ध्वाधोमध्यलोकत्रय इत्यभिप्रायेणाऽऽह-लोके जगति, नैकदेश इति । अस्मत्पूज्यैरपि देवेन्द्रैर्मुनीन्द्रैर्नरेन्द्रैश्चार्हत्प्रभुर्हे भगवन् ! मत्तस्त्वमधिको गुणैरित्युपासनीय इति बुद्ध्या नित्यं पूज्यते तर्हि सुतरामस्माभिरपि पूज्य एव स इत्यभिप्रायवतां लोकानां पूजितपूजकत्वस्वभावं व्याख्याति अन्यसत्त्वानां देवादयः पूज्या इत्यादिना, पूजितपूजकत्वस्वभावदार्ढ्यार्थं दृष्टान्तमाह-न हि राजनीत्यादि । क्रुद्धः प्रतिकूलं प्रसन्नश्चाऽनुकूलमर्चयद्भ्यः फलं ददातीति प्रत्यक्षसिद्धं, भगवांस्तु नोभयस्वरूपः क्षीणरागद्वेषत्वादिति तदर्चयतां नैव किमपि फलं स्यात्, फलाभावे च तदर्चनविषयिका प्रेक्षावतां प्रवृत्तिरपि नैव युक्ता, इष्टसाधनताज्ञानाभावात्, तदभावेऽपि प्रवृत्तौ प्रेक्षावत्ताक्षतिरस्यादित्याशयेनाऽऽशङ्कते-स तावदर्हतु पूजामिति । अग्नेरिति उपलक्षणमेतच्चिन्तामणिरत्नदक्षिणावर्त्तशङ्खकल्पवृक्षादेरिति । सेवकानामीप्सितगुणहेतुत्वदर्शनादिति उक्तञ्च-" अप्रसन्नात्कथं प्राप्यं, फलमेतदसङ्गतम् । चिन्तामण्यादयः किं न, फलन्त्यपि विचेतनाः ? ॥ १ ॥ " इति । अग्निमविधिनाऽऽसेवमानस्तत्र हस्तक्षेपेण दग्धो भवेत्तत्र नैवाऽग्नेर्दोषः, वैद्योक्तपथ्यविधिमुत्सृज्याऽविधिनौषधसेवनेनाऽहितं स्यात्तत्र न वैद्यस्य दोषः, किन्तु कुवासनावासितस्वाशयस्यैव, एवं सकलजगज्जन्तुजाताहितावहस्याऽप्यनन्तगुणनिधेर्भगवतः शास्त्रोक्तविधिमुत्सृज्य निचितनिकाचितपापकर्मकलुषितान्तरात्मभिरविधिनाऽर्चनेऽहितप्राप्तिस्स्यात्तत्र न भगवतो दोषः, स्वीयदुष्टाशय एव कारणं, प्रभुशासने हि शुभाशुभात्मपरिणाम एव कर्मबन्धकारणं, निश्चयनयेन स्वाशयशुद्धौ गुणाप्तिस्तदशुद्धौ च

त्वदर्शनात् । अग्नेरिव दाहाद्यनीप्सितमपि तस्माद्भविष्यतीति चेत्, सत्यम्, अन्यायेनासेवमानानामग्नेरिव ततोऽनिष्टोत्पादस्य स्वाशयदोषनिमित्तकत्वात्, गुणदोषौ निश्चयतः सर्वस्य स्वाशयनिमित्तावेव । तदालम्बनत्वेन च भगवतः सेव्यासेव्योभयरूपतापत्तिरिति चेत्, न, भक्तिप्रयोजकसेव्यतावच्छेदकवीतरागत्वादिगुणवत्त्वं सेव्यत्वम्, अभक्तिप्रयोजकतद्विपरीतकुलालघटादिसाधारणकर्तृत्वनित्यमुक्तत्वादिधर्मवत्त्वं चासेव्यत्वमित्येवं व्यवहारासङ्करादिति दिग् ॥ ७ ॥

तरयति—अन्यायेनेत्यादिना । तदालम्बनत्वेन च भगवत इति । भवतु स्वाशयनिमित्तौ गुणदोषौ तथापि भगवन्तमवलम्ब्यैव स्वाशयशुद्ध्यशुद्धी तत्प्रयुक्तौ च गुणदोषाविति स्वाशयशुद्ध्यशुद्धिद्वारा भगवतो गुणदोषालम्बनत्वेनेत्यर्थः । भगवतो महावीरस्य सेव्यासेव्योभयरूपतापत्तिर्न सम्भवति, यतो भक्तिप्रयोजकसेव्यतावच्छेदकवीतरागत्वादिगुणवत्त्वलक्षणं सेव्यत्वमेव तत्र वर्तते, न त्वभक्तिप्रयोजकतद्विपरीतकुलालघटादिसाधारणकर्तृत्वनित्यमुक्तत्वादिधर्मवत्त्वलक्षणमसेव्यत्वम् । सङ्गमना चेत्थं कर्तव्या—भगवति महावीरे सेवकानां या भक्तिस्सा भगवद्गतवीतरागत्वादिगुणनिबन्धनेति वीतरागत्वादिगुणो भक्तिप्रयोजकः, यत एव वीतरागो भगवानत एव सेव्य इति. भगवन्निष्ठा या सेव्यता तदवच्छेदकोऽपि वीतरागत्वादिगुणः, तद्वत्त्वं भगवति वर्तत इति तद्रूपं सेव्यत्वं तत्र सम्भवति, कर्तृत्वनित्यमुक्तत्वादिधर्मयोगितया पराभिमते ईश्वरे तु शस्त्रादिधारणजायादिमत्त्वतरससरागत्वस्यैव प्रतीतेर्नो...लक्षणसेव्यत्वम्, अभक्तीत्याद्युक्तस्वरूपमसेव्यत्वं तु भगवति महावीरे न विद्यते, तथाहि—पराभिमत ईश्वरे या तत्सेवापराङ्मुखानामभक्तिस्सा कृतकृत्यस्य भगवतः किमिति विश्वसर्जनप्रवृत्तिः ?, सृजंश्च स सुखिन एवाङ्गिनः कथमिव सृजति ?, एकं सुखिनमेकञ्च तद्विपरीतं सृजन्नसौ विषमप्रवृत्तिमत्त्वेन रागादिमानेवेति कर्तृत्वान्न कुलालादिवन्माननीय इति कर्तृत्वादिनिबन्धना, तथा बद्ध एव मुक्तो भवति नाऽबद्ध इति नित्यमुक्तो न सम्भवत्येव, अथापि रागद्वेषादिलक्षणस्य धर्माधर्मलक्षणादृष्टस्य वा बन्धनिमित्तस्य सर्वदाऽभावान्नित्यमुक्तत्वमस्योपेयते तथा सति घटादिजडपदार्थस्याऽप्येतादृशनित्यमुक्तत्वं समस्तीति घटादिवदेव न माननीय इति नित्यमुक्तत्वादिनिबन्धनाऽप्यभक्तिरित्यऽभक्तिप्रयोजको भवति कर्तृत्वादिधर्मः, तथा कर्तृत्वादेव कुलालादिवन्नित्यमुक्तत्वादिमत्त्वादेव च घटादिवदसेव्यो भवति पराभिमत ईश्वर इति तद्गता याऽसेव्यता तदवच्छेदकोऽपि कर्तृत्वादिधर्मस्तद्वत्त्वलक्षणमसेव्यत्वं पराभिमते ईश्वर एव, न तु भगवन्महावीरे, तस्मिन् कर्तृत्वनित्यमुक्तत्वादिधर्मवत्त्वाभावात्, रथ्यापुरुषादिसाधारणकर्तृत्वादिधर्मस्य जडसाधारणस्य नित्यमुक्तत्वादिधर्मस्य चाऽभक्तिप्रयोजकत्वं स्फुटमेव, तत एव चाऽसेव्यतावच्छेदकत्वमपि, अन्यथा कुलालादिरपि भक्तिगोचरस्स्यात्परेषां सेव्यश्च भवेदित्याशयेन निषेधे हेतुमाह भक्तिप्रयोजकसेव्यतेत्यादि ।

॥ इति सप्तमकारिकार्थः ॥ ७ ॥

यद्येवमुच्यतां तर्हि तदर्चनात् किं हितमित्याह

**( भा० ) अभ्यर्चनादर्हतां, मनःप्रसादस्ततः समाधिश्च ।**
**तस्मादपि निःश्रेयस मतो हि तत्पूजनं न्याय्यम् ॥ ८ ॥**

( व्या० ) अभ्यर्चनादित्यादि । अभ्यर्चनात्पूजनाभिगमनस्तुतिवन्दनपर्युपासनादेः । अर्हतां भगवतां कर्मणि षष्ठी । अर्हतोऽभ्यर्च्य स्थितानामित्यर्थः । किं भवति ? मनसः प्रसादो मनसः परमनिर्मलता । ततः समाधिरेकाग्रता, चः समुच्चये । समाहितस्य सतः शुश्रूषाश्रवणग्रहणधारणोहापोहाः ततः संसारतत्त्वाधिगमस्ततस्माद्धिताहितप्राप्तिपरिहारावित्येवमादयो गुणा भवन्तीत्यर्थः, तस्मादपि समाध्यादिगुणावासितास्तस्मात्, निःश्रेयसमधिगम्यत इति शेषः । यत इयं कल्याणपरम्पराऽतो निश्चयेन तस्यार्हतः पूजनं न्याय्यं, न्यायानपेतम् ॥ ८ ॥ ननु सुष्ठूक्तमुक्तहेतोस्तत्पूजनं न्याय्यमिति प्रतिपद्यामहे वयमप्येतत् । यत्पुनरुक्तं कृतार्थोऽप्युपदिशति तद्विरुद्धम्, कृतार्थश्चेत् कथमुपदिशति ? । उपदिशति चेत् कथं कृतार्थ इति, न हि कश्चिन्निरभिवाञ्छः श्रममाद्रियमाणो दृष्ट इत्याशङ्कायामाह

**( भा० ) तीर्थप्रवर्तनफलं, यत्प्रोक्तं कर्म तीर्थकरनाम ।**
**तस्योदयात्कृतार्थो–ऽप्यर्हंस्तीर्थं प्रवर्तयति ॥ ९ ॥**

( व्या० ) तीर्थप्रवर्तनेत्यादि । तरन्त्यनेन भवसमुद्रमिति तीर्थं प्रवचनम् । तस्य प्रवर्तनं प्रणयनम्, तत्फलं प्रयोजनमस्य तत्तथा, तीर्थकरनामकर्म यत्प्रोक्तं तस्योदयात् कृतार्थोऽप्यर्हंस्तीर्थं

अष्टमकारिकावतरणिकामाह–यद्येवमिति । मनसः प्रसाद इति–चन्द्रं दृष्ट्वा यथा समुद्रतोयोल्लासस्तथाऽर्चनसमये प्रभुमुखचन्द्रं दृष्ट्वाऽर्चकभविजनचित्तोल्लास इत्यर्थः । तथा च अर्हत्पूजनं विधेयं मनःप्रसन्नतालक्षणस्वपरिणामविशुद्धिहेतुत्वात् दानादिवदिति सिद्धम् । मनःप्रसादफलमाह–समाधिरिति, तदर्थमाह एकाग्रतेति, असारभूतानित्यवाह्यवस्तुविषयकमलीमसमनोवृत्तिं निरुद्ध्य भगवत्पूजनादावेकलीनतागुणप्रयुक्तपरमात्मध्यानैकचित्ततेत्यर्थः । समाधिना ये गुणा अवाप्यन्ते तानाह–समाहितस्सत इत्यादिना । शुश्रूषाश्रवणग्रहणधारणोहापोहा इति–शुश्रूषा शास्त्रतत्त्वं श्रोतुमिच्छा, श्रवणं शास्त्रतत्त्वाकर्णनम्, ग्रहणं शास्त्रार्थोपादानम्, धारणं शास्त्रार्थाविस्मरणम्, ऊहो विज्ञातमर्थमवलम्ब्याऽन्येषु तथाविधेषु व्याप्त्या वितर्कणम्, अपोह उक्तियुक्तिभ्यां विरुद्धादर्थात् हिंसादिकात् प्रत्यवायसम्भावनया व्यावर्तनम् । अथवा युक्तिप्रयुक्तिभ्यां तत्त्वनिष्टङ्कनम् । अत्र शुश्रूषाश्रवणग्रहणधारणोहापोहानां यथाक्रमं हेतुहेतुमद्भावेन व्याख्यानं कर्तव्यमित्यर्थः । न्यायानपेतमिति न्यायप्रयोगश्चैवम्–अर्हत्पूजनं विधेयं मोक्षान्तकल्याणपरम्परासम्पादकत्वात् सद्धर्मोपदेशवत्, यन्नैवं तन्नैवम्, हिंसादिकुमार्गोपदेशवदिति ॥

॥ इत्यष्टमकारिकाव्याख्या समाप्ता ॥ ८ ॥

नवमकारिकावतरणिकामाह–नन्वित्यादिना । तस्योदयादिति । सिद्धिगमनभवाव्यवहितपूर्ववृतीयभवे नियमान्मनुष्यगत्यात्मके

प्रवर्तयति प्रवचनमुपदिशतीत्यर्थः ॥ ९ ॥ कथमस्य फलनिरपेक्षा प्रवृत्तिरित्याशङ्कां दृष्टान्तेन निरस्यति–

**( भा० ) तत्स्वाभाव्यादेव, प्रकाशयति भास्करो यथा लोकम् ।**
**तीर्थप्रवर्तनाय, प्रवर्तते तीर्थकर एवम् ॥ १० ॥**

( व्या० ) तत्स्वाभाव्यादेवेति स्पष्टेयम् । नन्वेवमपि तीर्थकरनामकर्मोदयपारतन्त्र्येणास्याऽकृतार्थतेति चेत्, मामूदेवमेकान्तकृतार्थता । घातिकर्मक्षयकृता तु सा निरपायैव । यद्भाष्यकारः ' णेगंतेण कयत्थो, जेणोदिन्नं जिणिंदणामं से ' इति ।

---

स्त्रिया वा तथाभूतया मन्त्राद्युपहतपुरुषवेदकृत्रिमनपुंसकेन वा तथाभूतेन तत्रापि संयतेनाऽसंयतेन संयतासंयतेन वोत्तमसंहननेनाऽऽसेवितसम्पूर्णविंशतिस्थानकेनाऽऽसेवितैकद्वित्र्याद्यन्यतरस्थानकेन वा यन्निकाचितरूपतया बद्धं तीर्थकरनामकर्म तस्योदयादित्यर्थः । उक्तञ्च विशेषावश्यके–तं च कहं वेइज्जइ, अगिलाए धम्मदेसणाईहिं । बज्झइ तं तु भगवओ, तइयभवोसकइत्ता णं ॥ २१२३ ॥ नियमा मणुयगईए, इत्थी पुरिसेयरो वा सुहलेसो । आसेवियबहुलेहिं वीसाए अन्नयरेहिं ॥ २१२४ ॥ " इति । ननु यत्तीर्थङ्करनामकर्म पूर्वभवबद्धं तदुदयस्तीर्थङ्करभवे कस्मिन् काले भवतीति चेत् केवलज्ञानोत्पत्तिकाल एव, अत एव तदानीं देवदानवनरेन्द्रगणैः पूज्यते भगवान्, उक्तञ्च " उदए जस्स सुरासुर नरनिवहेहिं च पूइओ होइ । तं तित्थयरनामं, तस्स विवागो हु केवलिणो ॥ १ ॥ " इति ।

॥ इति नवमकारिकाव्याख्यार्थः ॥ ९ ॥

दशमकारिकामवतारयति–कथमस्येत्यादिना । तत्स्वाभाव्यादेवेति । अनादिसंसिद्धानुपकृतप्रकाशकत्वस्वाभाव्यादेवेत्यर्थः । मूलस्थं एवमिति–परहितोपदेशकर्त्वलक्षणानुपकृतोपकारिस्वाभाव्यादेवेत्यर्थः । उक्तञ्च भाष्यकारैः " जं व कयत्थस्स वि से, अणुवकयपरोवगारि सामन्नं । परहियदेसयत्तं, भासयसामन्नमिव रविणो ॥ ११०४ ॥ " इति । ननु भगवतस्तत्स्वभावादेव तीर्थप्रवर्तकत्वेऽपि तत्प्रवृत्तेस्तीर्थकरनामकर्मोदयाधीनत्वेनाकृतार्थता स्यादित्याशङ्कते–नन्वेवमपीत्यादिना । घात्यघातिकर्मक्षयाऽक्षयप्रयोज्यकृतार्थाकृतार्थत्वोभयरूपत्वादत्रापि स्याद्वाद एवेति समाधत्ते–मा भूदित्यादिना । " णेगंतेण कयत्थो, जेणोदिन्नं जिणिंदनामं से । " इति ॥ अत्र " तदवंज्झफलं तस्स य खवणोवाओऽयमेव जओ " इत्युत्तरार्धगाथा ॥ ११०३ ॥ नैकान्तेन तीर्थकरः कृतार्थो, येन तीर्थकरनामकर्म ' से ' तस्योदीर्णं, तच्चाऽवन्ध्यफलं, वेदनफलमदत्त्वा क्षीणं न भवति, तस्य च क्षपणोपायो धर्मकथनादिरूप एवेत्यतः कथयतीत्यर्थः । अत्रेदमवधेयम् ननु देवनरतिरश्चां भिन्नभिन्नप्रभूतसंशयिनां व्याकरणं कुर्वन् भगवान् किमेकेनैव निर्वचनेन युगपदेव सर्वसंशयान् व्यवच्छिनत्ति किं वा क्रमेणेवेति चेत्, युगपदेकेनैव निर्वचनेनेति जानीहि । किं तत्र कारणमिति चेत्, उच्यते, असङ्ख्येयेनापि पल्योपमादिना कालेन सङ्ख्यातीतानां संशयिनां संशयव्यवच्छित्तिः क्रमव्याकरणदोषाद् न भवेद्, अत एतद् मा भूदिति भगवान् युगपद्व्याकृणा-

इच्छां विना कथमुपदेशादौ प्रवृत्तिस्तस्येति तीर्थान्तरीयाशङ्का तु न श्रेयसी, जीवनयोनियत्नादिव्यावृत्तस्येव भगवद्यत्नव्यावृत्तस्यैव वैजात्यस्य यत्नगतस्येच्छाजन्यतावच्छेदकत्वात्, एवं हि जन्यत्वविशेषणगौरवमपि

तीति । उक्तञ्च बृहत्कल्पभाष्ये प्रथमोद्देशके–" कालेण असंखेण वि, संखाईयाण संसइणं तु । मा संसयवोच्छित्ती, न होज्ज कमवागरणदोसा " । १२०२ । इति । ननु युगपद्व्याकरणे के गुणा इति चेत्, उच्यते, सर्वप्राणिषु युगपन्निर्वचनेन भगवतोऽविषमप्रवृत्तिः कृता स्यात्, अन्यथा तुल्यकालसंशयिनां युगपज्जिज्ञासूनां क्रमेण संशयोच्छेदने विषमप्रवृत्त्यापत्त्या भगवतो रागद्वेषापत्तिस्स्यात् । ऋद्धिविशेषश्चायं भगवतः, यत् युगपत् सर्वसंशयिनामशेषसंशयव्यवच्छित्तिं करोति, तथा क्रमेण व्याकरणे कस्यापि संशयिनोऽनिवृत्तसंशयस्यैव कालेन मृत्युना हरणं स्यात्, अतोऽकालहरणं युगपन्निर्वचने गुणः । युगपद् व्यवच्छिन्नसर्वसंशयानां श्रोतृणां सर्वज्ञप्रत्ययोऽपि भवतीत्यपि गुणः, अन्यथा कस्यचिदनपनीतसंशयस्य सोऽपि न स्यात्, तथाऽचिन्त्यगुणसंपदियं भगवतः, यदेकहेलयैव सर्वेषामपि स्वीयस्वीयसंदेहव्यवच्छित्तिः, एतैः कारणैर्भगवान् युगपद् व्यागृणातीति । उक्तञ्च बृहत्कल्पसूत्रप्रथमोद्देशके " सव्वत्थ अविसमत्तं, रिद्धिविसेसो अकालहरणं च । सव्वन्नुपच्चओ वि य, अचिंतगुणभूइओ जुगवं ॥ १२०३ ॥ " ननु स्वस्वभाषाभाषिणस्सर्वे श्रोतारो भगवद्भाषितामर्द्धमागधभाषां नैव जानन्तीति कथं तया भगवान् तेषामनेकविधान् संशयानुच्छिनत्तीति चेत्, उच्यते, यथा–मेघवारि एकविधमपि पात्रविशेषं प्राप्य शुक्तिकायां पतितं मौक्तिकरूपेण, नालिकेरफले पतितं माधुर्यरूपेण, सर्पमुखे पतितं विषरूपेण, कृष्ण–सुरभिमृत्तिकायां पतितं स्वच्छसुगन्धसरसरूपेणोषरभूमिकायां पतितं च तद्विपरीतरूपेण परिणमते तथा पारमेश्वरी वाणी सर्वेषां श्रोतृणां कर्णविवरपतिता स्वस्वभाषारूपेण परिणमते । उक्तञ्च बृहत्कल्पसूत्रप्रथमोद्देशके "वासोदगस्स व जहा, वन्नादी होंति भायणविसेसा । सव्वेसिं पि समासं, जिणभासा परिणमते एवं ॥१२०४॥" समवायाङ्गेऽप्युक्तम्–"सा वि य णं भगवओ अद्धमागहा भासा भासिज्जमाणी तेसिं सव्वेसिं आयरियमणायरियाणं दुपय चउप्पय–मिय–पसु–पक्खि–सिरिवाणं अप्पप्पणो भासत्ताए परिणमइ " ॥ इति ॥ ननु प्रवृत्तिं प्रति चिकीर्षा कारणम्, भगवतां तु भावमनोऽभावादुपदेशकरणविषयकमानसेच्छैव नास्तीत्युपदेशादौ प्रवृत्तिः कथमित्याशङ्कामुद्भाव्य तां निराकरोति इच्छां विनेति । निराकरणे हेतुमाह–जीवनयोनियत्नादिव्यावृत्तस्येवेत्यादि । यत्नत्वसामान्यधर्मावच्छिन्नं प्रति चिकीर्षायाः कारणत्वे जीवनयोनियत्नं प्रतीश्वरयत्नं प्रत्यपि च सा कारणं स्यात्, तथात्वे च तां विना तदुभयं नैव स्यात्, भवति च तदिति तद्दोषनिवृत्तये विजातीययत्नत्वावच्छिन्नं प्रत्येव चिकीर्षा कारणमित्यभ्युपगन्तव्यम्, वैजात्यञ्च जीवनयोनियत्न इव भगवद्यत्नेऽपि न वर्तत इति स चिकीर्षां विनापि स्यादेव, भगवत्त्वञ्च घातिकर्म-

परिहृतं भवति। पुद्गलग्रहणनिसर्गादिप्रवृत्तौ मोहोदयस्यैव हेतुत्वमिति क्षीणमोहस्योपदेशादिकं नैयतिकमेवेति नग्नाटवचनं तु न श्रद्धेयम्, मोहोदयस्याप्यन्वयव्यतिरेकाभ्यामारम्भादिप्रवृत्तिविशेष एव हेतुत्वात्,

क्षयोत्थकेवलज्ञानभाजि भगवतीव नित्येश्वरेऽप्यविशिष्टमिति तद्यत्नस्योक्तकार्यतावच्छेदकधर्मानाक्रान्तत्वाच्चिकीर्षा विनापि स स्यादेव, अत एवेश्वरयत्नव्यावृत्त्यर्थं कार्यकोट्युपादीयमानजन्यत्वविशेषणकृतगौरवदोषोऽपि परिहृतो भवतीत्यर्थः।

अथ यो वक्ता रागादिपरिणतस्स एव कायिकयोगेन भाषावर्गणापुद्गलान् गृहीत्वा भाषारूपेण परिणमय्य तां भाषां वाचिकयोगेन निसृजति, नेतर इत्यन्वयव्यतिरेकबलाच्छब्दपुद्गलानां ग्रहणानुकूलप्रवृत्तौ निसर्गानुकूलप्रवृत्तौ च रागादेर्हेतुत्वं सिद्धम्, अर्हद्भगवाँस्तु वीतराग इति रागादिरूपकारणस्याऽभावान्न काययोगेन शब्दद्रव्याणि गृहीत्वा वाग्योगेन भाषते, यतो भाषापुद्गलानां ग्रहणे मोचने च प्रवृत्तिश्चिकीर्षां विना न, सा च मोहं विना नेतीच्छायां सत्यां न क्षीणमोहत्वमिति क्षीणमोहस्य नोपदेशादौ प्रवृत्तिः। नन्वेवं तर्हि किं हेतुकमुपदेशादिकमिति चेत्, भगवतामव्यापृतानामेव ध्वन्यात्मकं तत् नियतिहेतुकमेव, अयं भावः–अक्षररूपाया वाचो यत्नजन्यत्वेनेच्छाजन्यत्वादिनियमावधारणेन रागनियतत्वान्नियत्यैव मुखाम्भूर्णा वा निरित्वरीं ध्वनिरूपामेव पारमेश्वरीं वाचं श्रोतॄणां स्वस्वभाषात्वेन परिणमय्यार्थविशेषं बोधयन्तीमुपयन्ति नग्नाटाः, यदाह समन्तभद्रः "अनात्मार्थं विना रागैः, शास्ता शास्ति सतो हितम्। ध्वनन् शिल्पिकरस्पर्शान्मुरजः किमपेक्षते ॥ १ ॥"

इत्याशयकं दिगम्बरीयमतमुपदर्श्य निराकरोति–पुद्गलग्रहणेत्यादिना, निराकरणे हेतुमाह–मोहोदयस्येत्यादिना, एवमभ्युपगमे स्थाननिषद्याविहारादयोऽपि तिष्ठासानिषित्साविजिहीर्षाद्यभावात्क्षीणमोहस्य न स्यात्, न स्याच्च श्रीगणधरदीक्षापूर्वकत्रिपदीप्रदानतीर्थगणानुज्ञाप्रदान–श्रीसङ्घस्थापनादिकं किमपि कार्यम्, कारणीभूतस्य मोहोदयस्याऽभावेन तत्तच्चिकीर्षाऽभावेन तत्तत्कार्यप्रवृत्त्यभावात्, तस्मान्मोहोदयस्याऽऽरम्भादिप्रवृत्तिं प्रत्येव हेतुत्वमभ्युपगन्तव्यम्, भगवत्प्रवृत्तिस्तु निरारम्भैवेति तां प्रति न मोहः कारणमिति तदभावेऽप्युपदेशादिप्रवृत्तिरुपपद्यत एव। ननु भगवतां प्रज्ञापनीयानां ग्रहीतुग्रहणयोग्यानामेव चार्थानामुपदेशप्रवृत्तौ न रागः कारणम्, किं तर्हि कारणमिति चेत्, रवेर्भासकस्वाभाव्यमिव भगवतोऽनुपकृतपरोपकारस्वाभाव्यमेव कारणमिति गृहाण। तादृशस्वाभाव्ये च तीर्थकरनामकर्मोदय एव प्रयोजकः, न तु रागद्वेषौ, भगवत्प्रवृत्तेर्निरीहत्वेन रागद्वेषौ विनाऽपि देशनादिप्रवृत्तिभावात्। अत एव "तो सुअई नाणवुट्ठिं भवियजणविबोहणट्ठाए" इत्यागमोक्तिरपि सङ्गच्छते। किञ्च भगवद्वाचो ध्वनिरूपत्वे तस्या अव्यक्तैकरूपतया व्यक्तात्मकसत्यासत्याऽमृषादलद्वयनिष्पादकवाग्योगद्वयवैयर्थ्यं स्यात्, "अद्धमागहीए भासाए भासंति" इति सूत्रविरोधश्च स्यात्, ध्वनेरपि पौरुषेयत्वेनाऽक्षरात्मकवाचातुल्ययोगक्षेमत्वेन तस्यापि

अन्यथा गुरुविनयस्वाध्यायाध्ययनदानादिप्रवृत्तीनामपि मोहजन्यत्वापत्तेः, नियतानियते सर्वत्र कार्ये व्यवस्थिते भगवच्चेष्टायाः केवलनियतत्ववचनस्यानागमिकत्वाच्च । इच्छां विना न प्रवृत्तिः, प्रवृत्तिं विना च न चेष्टेति निश्चेष्टत्वं तस्य प्रसज्येत, विलक्षणचेष्टायामेव प्रवृत्तिर्हेतुरित्यभ्युपगच्छंश्च विलक्षणकृतावेवेच्छा हेतुरिति निरीहप्रवृत्तिं भगवतः कुतो नाभ्युपगच्छेदिति, अधिकमस्मत्कृताध्यात्म-

रागनियतत्वप्रसङ्गाच्च । नियत्यैव प्रयत्नं विना ध्वनेरुपपत्तौ च तयैव तं विनाऽपि परानुग्रहोपपत्तिश्च स्यादिति । किञ्च भगवदुपदेशस्य शब्दरूपत्वे तस्यार्थानार्थीयशब्दाकाररूपेण परिणामित्वकल्पनस्य शब्दत्वेन सजातीयतया न्याय्यत्वेऽपि ध्वनिरूपत्वे तस्य विजातीयतया तत्कल्पनस्यातिशयतोऽपि न न्याय्यत्वम् । भगवद्देशनाया ध्वनिरूपत्वेऽपि वाग्योगापेक्षत्वेन तादृशशब्दमात्रे पुरुषप्रयत्नानुसरणं नियमेनाभ्युपगन्तव्यमेव, अन्यथाऽपौरुषेयमागमं वदतो मीमांसकस्य दुर्जयत्वापत्तिरस्यादिति भावः । अन्यथेति—प्रवृत्तिसामान्यं प्रति मोहोदयो हेतुरित्यभ्युपगम इत्यर्थः, तत्र दोषमाह—गुरुविनयेत्यादि । जैनमार्गे हि वस्तुत्वव्यापकत्वेन स्याद्वादस्य तद्व्याप्यवस्तुत्वाश्रयकार्यमात्रं भिन्नाभिन्नाद्युभयरूपत्वेनेव नियतानियतोभयरूपत्वेनाऽपि स्याद्वादाऽङ्कितमिति भगवदुपदेशादिप्रवृत्तिरूपकार्यमपि वस्तुत्वशालितया नियतानियतरूपतया स्याद्वादशाल्येवेत्यत्र नियतत्वैकान्तवचनं स्याद्वादानभिज्ञत्वसूचकमेव काल-स्वभावनियतिपूर्वकृतपुरुषरूपपञ्चकारणानां परस्पराजहद्वृत्तीनां कारणत्वेन केवलनियतिवादस्य मिथ्यारूपत्वात्, उक्तञ्च सम्मतितर्के—"कालो सहावणियई, पुव्वकयं पुरिसकारणेगंता । मिच्छत्तं ते चेव, समासओ होंति सम्मत्तं ॥१॥" इति । उक्ताशयेनाऽऽह—नियतानियते सर्वत्रेत्यादि । अस्मदादिष्विच्छाया मोहजन्यत्वेन दृष्टत्वात् क्षीणमोहस्य भगवतः प्रवृत्तिकारणीभूताया इच्छाया अभावान्न प्रवृत्तिः, तदभावाच्च न गमनागमनादिचेष्टेति तस्य भगवन्तो निश्चेष्टत्वं त्वन्मते प्रसज्येतेत्याह—इच्छां विना न प्रवृत्तिरिति । ननु केवलिनां पूर्वमुक्ता स्थानानिषद्याविहारादयो नैव भवन्ति, मोहसहकृतत्वात्तेषां, किं तर्हि यस्योपविष्टस्योर्ध्वंदमस्य वा यदा केवलज्ञानमुत्पन्नं ततः प्रभृति स केवल्युपविष्टः सन्नूर्ध्वं दमो वा स्वायुः परिसमाप्तिं यावद्वियति तूलवद्भ्राम्यन्नेवाऽवतिष्ठते, न चैवं तस्य काचिद्वेदना सम्भवति, मोहाभावेन वेदनीयोदयस्य निरसत्ताकत्वात्, तथा च तस्य चेष्टा मोहसहकृतप्रवृत्तिकारणमन्तरेणाऽपि स्वतोऽवश्यं भाविनी, अत एव नियतिकृतोच्यते, तच्चेष्टा विलक्षणाऽस्मदादिचेष्टायामेव प्रवृत्तेर्हेतुत्वादिति सर्वविसंवादिना दिगम्बरेण कुशकाशावलम्बनेन यदुच्यते, तन्न युक्तियुक्तम्, तथा सति भगवत्कृतिविलक्षणाऽस्मदादिकृतावेवेच्छाहेतुरभ्युपगम्यतां, येन भगवत्कृतेरिच्छाकार्यतावच्छेदकानाक्रान्तयेच्छां विनाऽपि सोपपद्येत, तथा च निरीहया तीर्थरचनादिकं सर्वं समञ्जसं सिध्येत्, किं कष्टकल्पनयेत्याशयेनाह—विलक्षणचेष्टायामेवेत्यादि । अधिकमस्मत्कृताध्यात्मपरीक्षादेरवगन्तव्यमिति । अथ योगजन्याऽपि क्रिया भगवतां न भवतीति शङ्कते-

परीक्षादेरवगन्तव्यम् ॥ १० ॥ तदेवं सर्वतीर्थकरोपदेशप्रयोजने व्याख्यातेऽधुना यस्य तीर्थे प्रवर्तमाने आचार्यः शास्त्रं कर्तुमिच्छति तस्य जन्मनः प्रभृत्युपदेशपर्यन्तं चरित्रं वर्णयितुकाम इदमाह

(भा०) यः शुभकर्मासेवन-भावितभावो भवेष्वनेकेषु ।
जज्ञे ज्ञातेक्ष्वाकुषु, सिद्धार्थनरेन्द्रकुलदीपः ॥ ११ ॥

(व्या) यः शुभकर्मेत्यादि । यः शुभं कर्मानुकम्पादर्शनविशुद्ध्यादिहेतुकं तस्यासेवनमभ्यासस्तेन भावितो भावोऽन्तरात्माऽस्य स तथा, कियत् कालम् ?, अनेकेषु भवेषु, अभ्यासोऽपि प्रायः प्रभूतजन्मानुगो भवति शुद्ध इत्याद्युक्तेरनेकभवाभ्यासस्यैव शुद्धिहेतुत्वात्, स च "पन्थं किर देसित्ता" इत्यादिग्रन्थेन वर्णितो भगवत आवश्यकनिर्युक्तौ, जज्ञे जातवान्, ज्ञातेषु प्रसिद्धेष्विक्ष्वाकुषु सिद्धार्थनरेन्द्रस्य कुले दीपसदृशः ॥ ११ ॥

"बन्धो परपरिणामा सो पुण नाणा न वीयमोहाणं । जोगकया वि हु किरिया तो तेसिं होइ णिव्वीया ॥ ९७ ॥ इत्याद्युग्रन्थपाठाधिक्यामात्रोल्लिख्यते सः । इति दशमकारिका व्याख्या समाप्ता ।

एकादशकारिकावतरणिकामाह-तदेवं तीर्थकरोपदेशेति ।

यत्तदोर्नित्यसम्बन्धाद् य इत्यस्यैकविंशतितमश्लोकान्तर्गतेन तरौ इति पदेन सहाऽन्वयः । न हि सकृन्निपातमात्रेणोदविन्दुर्ग्रावाणं घर्षणमादधातीति न्यायेन न ह्येकभव एव कृतोऽभ्यासो जलबिन्दुसमोऽनन्तभवकृतवर्ज्रीभूतानन्तपापकर्मपाषाणे घर्षणं शुद्धिलक्षणं कर्तुं शक्नोति, किन्त्वनेकभवेषु कृतो दृढावस्थापन्नोऽभ्यासरसततधारावद्धनिपतज्जलप्रवाहोपम एतत्याशयेनाह-अनेकेषु भवेष्विति-नैकस्मिन् भवे न द्वयोर्वा भवयोः, किन्त्वनेकेषु भवेष्वित्यर्थः । अथवा अनेकेषु भवेष्विति-नैकोऽनेक इति व्युत्पत्त्या द्वयोर्भवयोरित्यप्यर्थोऽत्र लभ्यते, तथापि बहुवचनसामर्थ्यबलाद् बहुषु भवेष्वित्यर्थः कर्तव्यः ।

अभ्यासोऽपि प्रायः प्रभूतजन्मानुगो भवति शुद्ध इतीति ।

यद्यपि शुभकर्मासेवनोपजातसंस्कारादपि प्रबलतरमधर्मप्रभेदरूपं कर्माशुभभावनया यदा कदापि कृतं स्यात्तदा तज्जातदुष्टसंस्कारेणोक्तसुसंस्कारोऽभिभूयत एवेति न स्वकार्यारम्भकत्वं तस्य तदानीं, तथाप्यधर्मसंस्कारक्षये सत्युद्बोधकोत्तमसुगुर्वादियोगात्स संस्कार उद्बुद्धस्सन् तत्र पुनस्सज्ज्ञानक्रियाभ्यासेन पुष्टिं नीतो भवान्तरानुयायी भवति, तेन चोत्तरभवेऽनिच्छतोऽपि पुंसः पूर्वभवकृतप्रबलतरसंस्कारमाहात्म्यवशादेव सज्ज्ञानक्रियायोगं प्रत्याकर्षणं भवति, अत एव "पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" इत्युक्तं गीतायामपि । एवं परतरभवेऽपीति दीर्घकालस्याऽपि तस्य न विनाशो भवतीति, अत एव प्रभूतजन्मानुगो भवतीति भावः । "पंथं किर देसित्ता" इत्यादि, अत्रावश्यकसूत्रोक्ता "पंथं किर देसित्ता, साहूणं अडविविप्पणट्ठाणं । सम्मत्तपढमलंभो, बोधव्वो वद्धमाणस्स ॥१४३॥" इति सम्पूर्णगाथा ।

इत्येकादशकारिकाव्याख्या प्रपूर्तिं गता ॥ ११ ॥ द्वादशकारिकामाह

( भा० ) ज्ञानैः पूर्वाधिगतै–रप्रतिपतितैर्मतिश्रुतावधिभिः ।
त्रिभिरपि शुद्धैर्युक्तः, शैत्यद्युतिकान्तिभिरिवेन्दुः ॥ १२ ॥

( व्या० ) ज्ञानैरित्यादि । पूर्वमेवाधिगतानि प्राप्तानि यानि मतिश्रुतावधयो ज्ञानानि, तैः, त्रिभिरपि अप्रतिपतितैरनावृतैः, अत एव शुद्धैः युक्तोऽनुगतो, युक्तग्रहणाच्च सलिलस्वच्छतावन्नान्यद् ज्ञानमात्मन इत्युक्तं भवति । कैः क इव, शैत्यद्युतिकान्तिभिरिन्दुरिव । यथेन्दुः शैत्यादिभिरविरहितः क्षेत्रात् क्षेत्रान्तरं याति एवमसावपि अप्रतिपतितज्ञानत्रयो देवभवादिहागत इत्यर्थः ॥ १२ ॥

( भा० ) शुभसारसत्त्वसंहनन–वीर्यमाहात्म्यरूपगुणयुक्तः ।
जगति महावीर इति, त्रिदशैर्गुणतः कृताभिख्यः ॥ १३ ॥

(व्या०) शुभसारेत्यादि–सारो बलं, सत्त्वमवैक्लव्यम्, संहननं शरीरदृढिमा, वीर्यमुत्साहः, माहात्म्यं महिमा कलादिप्राविण्यम्, रूपं चार्वङ्गावयवसंनिवेशः, गुणा दाक्षिण्यादयः । शुभान्येतानि यस्य स तथा । जगति सर्वत्र विश्वे, अयमेको महावीर इति हेतोः, त्रिदशैरन्तर्मुहूर्तमात्रेण बाल्य-

त्रिभिरप्यप्रतिपतितैरिति, तदुक्तमावश्यकभाष्ये–" तिहिं नाणेहिं समग्गा, तित्थयरा जाव हुंति गिहवासे " इति । " जाइस्सरो अ भयवं, अप्परिवडिएहिं तिहिं उ नाणेहिं । " इति च । आत्मनो भिन्नमेव ज्ञानमित्येवं गुणगुणिनोरेकान्तभेदस्य नैयायिकाभ्युपगतस्य खण्डनायाऽऽह–युक्तग्रहणाच्चेत्यादि, तद्गतखण्डनं स्याद्वादबिन्दौ विस्तरेण कृतमिति तत एवाऽवसेयम् ।

इति द्वादशकारिकार्थः समाप्तः ॥ १२ ॥

त्रयोदशकारिकामाह–शुभसारेत्यादि । शुभान्येतानीति शुभशब्दस्य नपुंसकत्वात्तद्विशेष्यवाचकतयोपदिष्टस्यैतच्छब्दस्याऽपि तल्लिङ्गतयैव निर्देशस्सामान्यतः कृतः, लोके चाऽशुभनिबन्धनानामप्येषां प्रायो दर्शनात्प्रत्येकं शुभेतिविशेषणम्, एभिश्शुभैर्निवृत्तैर्हितप्रयोजनैर्युक्तस्सम्पन्न इत्येवं तत्त्वार्थबृहट्टीकायामुक्तत्वादत्र सारश्च सत्त्वं च संहननं च वीर्यं च माहात्म्यं च रूपं च गुणाश्च सारसत्त्वसंहननवीर्यमाहात्म्यरूपगुणाः, शुभाश्च ते सारसत्त्वसंहननवीर्यमाहात्म्यरूपगुणाश्च शुभसारसत्त्वसंहननवीर्यमाहात्म्यरूपगुणाः, तैर्युक्तः स तथेति समासः कर्तव्यः, शुभान्येतानि यस्य स तथेत्येतत्तु तात्पर्यविवरणमात्रम् । तृतीयामवस्थां प्राप्ता इति त्रिदशा इत्येवं त्रिदशशब्दार्थमाह–त्रिदशैरित्यादि । अयम्भावः–देवो हि पूर्वभवीयदेहं मुक्त्वा विमले देवशयनीये उत्पत्तिकाल एवाऽन्तर्मुहूर्तकालमात्रेण देवभवप्रभावतः, न पुनर्मनुष्यवपुर्वत्क्रमिकाहारोपचयप्रयोज्योपचयतः, दिव्यं यौवनावस्थं शरीरं समुत्पाद्य सुरनिवहनयनानन्दो दिव्यं देवांशुकं परित्यजन् भासुरवरदिव्यशरीरं धारयन् सम्पूर्णशारदशशीवोत्तिष्ठते, उक्तञ्च–"जह मेहासणितियसिद्द चावविज्जूण संभवो होइ । गयणम्मि खणेण तहा, देवाण वि होइ उप्पत्ती ॥ १ ॥ सो पुण मोत्तूण इमं, देहं विमलम्मि

कौमारदशे व्यतीत्यावाप्तयौवनतृतीयदशैर्देवैः, गुणतो गुणमाश्रित्य, कृताभिख्यः कृतमहावीराभिधानः ॥१३॥

(भा०) स्वयमेव बुद्धतत्त्वः, सत्त्वहिताभ्युद्यता(तो) चलितसत्त्वः ।
अभिनन्दितशुभसत्त्वः, सेन्द्रैर्लोकान्तिकैर्देवैः ॥ १४ ॥

(व्या०) स्वयमेवेति । स्वयमेवानुपदेशात्, बुद्धतत्त्वोऽवगतपरमार्थः, सत्त्वहितार्थमभ्युद्यतोऽचलितं सत्त्वं यस्य स तथा, अभिनन्दितमभिष्टुतं शुभं सत्त्वं यस्य स तथा, कैः, सेन्द्रैरिन्द्रसहितैर्लोकान्तिकैर्देवैः ॥ १४ ॥

(भा०) जन्मजरामरणार्तं, जगदशरणमभिसमीक्ष्य निःसारम् ।
स्फीतमपहाय राज्यं, शमाय धीमान्प्रवव्राज ॥ १५ ॥

---

सूरीरं, दिव्वं अंतोमुहुत्तेण ॥ २ ॥ सुरयणनयणाणंदो, दिव्वं देवंसुयं अहिखिवंतो । भासुरवरबोंदिधरो, संपुण्णो सारयससिव्व ॥ ३ ॥ इति कृतमहावीराभिधान इति । उक्तञ्च "बालत्तणेऽवि सूरो, पयईए गुरुपरक्कमो भयवं । वीरुत्ति कयं नामं, सक्केणं तुट्ठचित्तेणं ॥१॥"

इति त्रयोदशकारिकार्थः समाप्तः ॥ १३ ॥

स्वयमेवेत्यस्यार्थमाह—अनुपदेशादिति परोपदेशमन्तरेणेत्यर्थः । बुद्धतत्त्व इत्यस्यार्थमाह—अवगतपरमार्थ इति । उक्तञ्चाऽऽवश्यकभाष्ये—"सव्वेऽवि सयंबुद्धा" इति । बुद्धतत्त्वो हि सकलस्यापि संसारस्याऽऽदिमध्यावसानेष्वत्यन्तं नैर्गुण्यमवधार्य महाशय एवं चिन्तयति—अहो ! चित्रमेतद्यत्सत्यपि पारमेश्वरे प्रवचने स्फुरत्तेजसि दुःखपरीतचेतसो जन्तवस्संसारगहने महामोहान्धकारविलुप्तसत्पथे मूढमनस्का उच्चैः परिभ्रमन्ति, तदहमेतान् जन्तूनतस्संसारादनेन प्रवचनेन यथायोगमुत्तारयामीति, एवं चिन्तयित्वा स महात्मा सदैव जगत्त्रयजन्तूद्धाराय करुणादिगुणोपेतः प्रतिक्षणं परार्थकरणप्रवर्द्धमानमहाशयो यथा यथा परेषामुपकारो भवति तथा तथाऽभ्युद्यतोऽचलितसत्त्वश्च भवतीत्याशयेनाऽऽह—सत्त्वहितार्थमभ्युद्यतोऽचलितं सत्त्वं यस्य स तथेति । तत्त्वार्थवृहट्टीकायां तु सत्त्वहितार्थमभ्युदितमचलितं सत्त्वमस्येति विग्रहकरणपूर्वकस्सत्त्वहिताभ्युद्यताचलितसत्त्व इति समस्तप्रयोग उक्तः । सेन्द्रैर्लोकान्तिकैर्देवैरिति । ननु सलोकान्तिकैरिन्द्रैरित्येव वक्तुं युक्तं किमिति सेन्द्रैर्लोकान्तिकैरित्युक्तमिति चेत्, लोकान्तिकदेवानां भगवत्सम्बोधने प्राधान्यख्यापनार्थमिति जानीहि, यद्यपि भगवानवधिज्ञानेन स्वदीक्षासमयं स्वयमेव जानाति तथापि लोकान्तिकदेवा निर्मलसम्यग्दृष्टयो भगवत्प्रतिबोधैकशीलाश्चेति स्वाचारप्रतिपालनार्थं भगवन्तं सम्बोधयन्ति । उक्तञ्चावश्यकभाष्ये "सारस्सय[1] माइच्चा[2], वण्ही[3] वरुणा[4] य गद्दतोया[5] य । तुसिआ[6] अव्वाबाहा[7], अग्गिच्चा[8] चेव रिट्ठा[9] य ॥ १ ॥ एए देवानिकाया, भयवं बोहिंति जिणवरिंदं तु । सव्वजगज्जीवहिअं, भयवं ! तित्थं पवत्तेहि ॥२॥ एवं अभिथुव्वंतो, बुद्धो बुद्धारविंदसरिसमुहो । लोकान्तिकदेवेहिं, कुंडग्गामे महावीरो ॥३॥" इति । इति चतुर्दशकारिकार्थः समाप्तः ॥१४॥

(व्या०) जन्मेत्यादि, जन्मना जरया मरणेन चार्तमभिभूतम्, जगत्त्रिभुवनम्, अशरणमपरित्राणम्, अभिसमीक्ष्य ज्ञानचक्षुषावलोक्य, निस्सारमपगतरामणीयकम्, स्फीतं समृद्धम्, राज्यमपहाय, शमाय मोक्षाय, धीमान्निष्क्रमणानन्तरमेव मनःपर्यायज्ञानोत्पत्तेः, प्रवव्राज दीक्षामादत्ते स्म ॥ १५ ॥ किं कृत्वेत्याह

(भा०) प्रतिपद्याशुभशमनं, निःश्रेयससाधकं श्रमणलिङ्गम्।
कृतसामायिककर्मा, व्रतानि विधिवत्समारोप्य ॥ १६ ॥

(व्या०) प्रतिपद्येत्यादि। प्रतिपद्य गृहीत्वा, अशुभशमनं अशुभकर्मक्षपणोपायभूतम्, न तु पुण्योपादानम्, अन्यभवानाकाङ्क्षत्वात्, अत एव निःश्रेयससाधकं मोक्षप्रापकम्, श्रमणलिङ्गं श्रमणत्वज्ञापकं पञ्चमुष्ट्यावतारितनिःशेषकेशादिलक्षणम्, कृतं "करोमि भदन्त! सामायिकं सर्वान् सावद्ययोगान् प्रत्याचक्षे" इत्येवं प्रतिज्ञातं सामायिकं येन स तथा, व्रतान्यहिंसादीनि विधिना वक्ष्यमाणानुपूर्व्या, समारोप्यात्मस्थानि कृत्वा ॥ १६ ॥

भगवतो निरनुबन्धं कर्मेति तत्प्रवृत्तिर्मोक्षायैव न तु परलोकायेत्यभिप्रायेण शमायेत्यस्यार्थमाह—मोक्षायेति। धीमत्त्वे हेतुमाह—निष्क्रमणानन्तरमेव मनःपर्यायज्ञानोत्पत्तेरिति। उक्तश्चाऽऽवश्यकभाष्ये "पडिवण्णमि चरित्ते, चउनाणी जाव छउमत्था" इति।

इति पञ्चदशकारिकार्थः समाप्तः ॥ १५ ॥

पञ्चदशकारिकाऽवतरणिकामाह—किं कृत्वेत्याहेति। पुण्योपादानमिति—पुण्यग्रहणकारणमित्यर्थः। निषेधे हेतुमाह—अन्यभवानाकाङ्क्षत्वादिति। भवे मोक्षे च सर्वत्र निःस्पृहो मुनिसत्तम इति वचनादिति भावः।

पञ्चमुष्ट्याऽवतारितनिःशेषकेशादिलक्षणमिति। अत्राऽऽदिपदेनाऽष्टादशशीलाङ्गसहस्रानुष्ठानाभ्युपगतप्रतिज्ञमभरोपहितासितैकदुकूलेकृतवैकक्ष्यमत्यन्तेसर्वसत्त्वानुद्वेजनमसज्ञपदप्रापकमिति ग्राह्यम्। शाक्यादयश्श्रमणलिङ्गधारिणोऽप्युपचारतश्चारित्रवन्तः, न तु परमार्थतः, अकृतसर्वसावद्ययोगप्रत्याख्यानादिलक्षणसामायिकत्वात् गृहस्थवत्, ये च कृतसामायिकास्ते परमार्थतश्चारित्रवन्तः, यथाऽर्हन्तो भगवन्त इत्युपदर्शनाय हेतुगर्भविशेषणमाचार्यमाह—कृतसामायिककर्मेति, तदर्थमाह—कृतमित्यादिना। करोमि भदन्त! सामायिकमिति। अत्र तत्त्वार्थबृहट्टीकायां न चाऽस्याऽन्यो भदन्तोऽन्यत्र सिद्धेभ्यः, आचारार्थं त्वेनत् सिद्धान्वा प्रत्युक्तमित्येवमुक्तं। आवश्यके तु—"काऊण नमोक्कारं, सिद्धाणमभिग्गहं तु सो गिण्हे। सव्वं मे अकरणिज्जं, पावंति चरिममारूढो ॥ १ ॥" इति भाष्यगाथाटीकायां स च भदन्तशब्दरहितं सामायिकमुच्चारयतीत्येवमुक्तमिति। आह च चूर्णिकारोऽपि—"भदंत त्ति न भणइ, जयिम्" इति। समारोप्येत्यस्यार्थमाह—आत्मस्थानि कृत्वेति। भाववृत्त्या प्रत्यात्मप्रदेशमोतप्रोतानि कृत्वेत्यर्थः, एतेन ये बाह्यवृत्त्या व्रतानि गृह्णन्ति पार्श्वस्थादि साधुवन्न ते परमार्थतश्चारित्रवन्त इति सूचितम्।

॥ इति षोडशकारिकार्थः

**(भा०) सम्यक्त्वज्ञानचारित्र-संवरतपःसमाधिबलयुक्तः।
मोहादीनि निहत्या-शुभानि चत्वारि कर्माणि ॥ १७ ॥**

(व्या०) सम्यक्त्वेत्यादि। **सम्यक्त्वं** क्षायिकम्, **ज्ञानं** केवलज्ञं, **चारित्रं** छेदोपस्थाप्य-परिहारविशुद्धिवर्जं, **संवरो** निरुद्धसर्वाश्रवत्वात् कृत्स्नः, **तपो** बाह्यमनेकविधमान्तरं तु विनयव्युत्सर्गौ यथासंभवम्। ध्यानं तु प्रधानकर्मक्षयकारणत्वात् कण्ठोक्तमेव, अनेन बलेन **मोहादीनि** मोहज्ञानदर्शना-वरणान्तरायाख्यानि, **चत्वार्यशुभानि** घातीनि **कर्माणि निहत्य** ॥ १७ ॥

**( भा० ) केवलमधिगम्य विभुः, स्वयमेव ज्ञानदर्शनमनन्तम्।
लोकहिताय कृतार्थो-ऽपि देशयामास तीर्थमिदम् ॥ १८ ॥**

(व्या०) केवलमित्यादि। **केवलं** निरावरणम्, **अधिगम्य** प्राप्य, **विभुः** सर्वगतज्ञानात्मा, **स्वयमेव** स्वशक्त्यैव, **ज्ञानदर्शनं** ज्ञानं च दर्शनं चेति समाहारद्वन्द्वः। **अनन्तं**

श्रीमहावीरप्रभुर्हि जगत्त्रयैकच्छत्रराज्यकृन्मोहमहाराजविजेता तद्बलाधिकसम्यक्त्वादिबल-समाश्रयणेनैवेत्यभिप्रायेण कारिकायां विशेषणमाह-**सम्यक्त्वज्ञानचारित्रसंवरतपःसमाधिबलयुक्तः** इति। सामायिकचारित्रं दीक्षादिनादेव, सूक्ष्मसम्परायचारित्रं दशमगुणस्थानके, यथाख्यातचारित्रं द्वादशगुणस्थानकादाविति भगवतां चारित्रत्रयं यथाकालं सम्भवति, न तु छेदोपस्थापनीयपरिहारविशुद्धिचारित्रे, इत्यतः **छेदोपस्थाप्यपरिहारविशुद्धिवर्जमित्यु-क्तम्**। ननु ध्यानस्याऽऽन्तरतपोभेदरूपत्वात्तपःपदेनैव गतार्थत्वात्किमिति पृथगुक्तमित्याशङ्का-निवृत्त्यर्थं हेतुमाह-**प्रधानकर्मक्षयकारणत्वादिति**। **कण्ठोक्तमेवेति** समाधिपदेनैवोक्त-मित्यर्थः। समाधेर्ध्यानरूपत्वादिति भावः। सर्वकर्मणां मध्ये मोहनीयस्यैव मुख्यत्वात्तत्क्षय-क्रमेणैव ज्ञानावरणीयादीनां घातिकर्मणां क्षय इति सूचनाय मोहं प्रधानीकृत्याऽऽह-**मोहज्ञान-दर्शनावरणान्तरायाख्यानीति**। **घातीनीति** सम्यग्दर्शनाद्यात्मिकगुणघातीनीत्यर्थः। **निहत्य**-आत्मप्रदेशेभ्यः पृथक्कृत्य विभक्तानि कृत्वेति यावत्। इति **सप्तदशकारिकार्थः समाप्तः** ॥ १७ ॥

सर्वमूर्त्तसंयुक्तार्थो हि विभुशब्दो नाऽत्र ग्राह्यो यतो नैयायिकवज्जैनैरात्मा नैव स्वरूप-तस्सर्वव्यापकोऽभ्युपगतः किन्तु जगत्त्रयगताशेषपर्यायोपेताखिलवस्तुविषयकज्ञानात्मनैवेत्य-भिप्रायेणाऽऽह-**विभुः सर्वगतज्ञानात्मेति**। **स्वशक्त्यैवेति** इतरसहायमनपेक्ष्यैवेत्यर्थः। **समाहारद्वन्द्व इति**। नन्वितरेतरद्वन्द्वे समाहारद्वन्द्वे च को विशेष इति चेत्, उच्यते, इतरे-तरयोगे साहित्यं विशेषणं, द्रव्यं तु विशेष्यं, समाहारे तु साहित्यं प्रधानं द्रव्यं विशेषणं, अत एवेतरेतरयोगे द्रव्यद्वयस्य द्रव्यत्रयादेर्वा प्राधान्यतया विवक्षायां द्विवचनं बहुवचनं वा, समाहारे तु प्रधानीभूतस्य साहित्यस्यैकत्वादेकवचनमिति। ज्ञानविषयीभूतानां जगत्त्रयवर्त्यखिलानन्ता-

प्रवाहविच्छेदकावरणहेत्वभावादन्तरहितम् । लोकहिताय लोकानामासन्नभव्यानां हितमभ्युदयनिःश्रेयसे तदर्थम्, कृतार्थोऽपि सिद्धप्रयोजनोऽपि, इदं तीर्थं वर्तमानप्रवचनं देशयामास ॥ १८ ॥

कीदृशमित्याह

(भा०) द्विविधमनेकद्वादशविधं, महाविषयममितगमयुक्तम् ।
संसारार्णवपारगमनाय दुःखक्षयायालम् ॥ १९ ॥

(व्या०) द्विविधमित्यादि । वक्ष्यमाणद्व्यादिभेदम्, महान् विषयः सर्वद्रव्याऽसर्वपर्यायलक्षणो यस्य तत्तथा, अमिता असङ्ख्येया गमाः पन्थानो नया इति यावत्, तैर्युक्तं, संसारार्णवस्य पारगमनं यस्मादेतादृशाय दुःखक्षयायालं पर्याप्तम् । एतेन मण्डूकचूर्णसदृशविलक्षणतद्भस्मसदृशक्लेशक्षयस्य

पदार्थानां द्रव्यार्थनयेन स्थिरीभूतानामपि पर्यायनयेन प्रतिक्षणं विशरारुतयोत्पादविनाशशालित्वेन तद्विषयकज्ञानमपि तथेति व्यक्त्यपेक्षया प्रतिक्षणं भिन्नभिन्नत्वेन पर्यायनयेन साऽन्तमपि प्रवाहापेक्षया द्रव्यनयेन केवलज्ञानमनन्तम्, तद्विनाशककारणाभावात्, समुद्रतरङ्गप्रवाहवदित्याशयेनाऽऽह–प्रवाहविच्छेदकावरणहेत्वभावादन्तरहितमिति । आसन्नभव्यानामिति । अपार्धपुद्गलपरावर्त्तान्तर्भाविमोक्षाणां शुक्लपाक्षिकाणामित्यर्थः । एतेन कृष्णपाक्षिकादिजीवलोकानां निषेधः कृत इति । न चैवं तर्हि भगवतां पक्षपातित्वेन वीतरागत्वक्षतिरिति वाच्यं, तत्र जीवविशेषस्यैव कारणत्वाद्, यतो न हि कालदष्टमनुज्जीवयन् समुज्जीवितेतरदष्टको विषभिषगुपालम्भनीयः, अतिप्रसङ्गात्, तथा च सूर्योदये उलूकादीनामिवाभव्यानामपि प्रकृत्या क्लिष्टकर्मणां भगवद्रूपभावसूर्योदयेऽपि न तथा प्रबोधस्तत्र तद्दुर्भाग्यमेव कारणम्, यदाह श्रीहरिभद्रसूरिः–“ अभव्येषु च भूतार्था, यदसौ नोपपद्यते । तत्तेषामेव दौर्गुण्यं, ज्ञेयं भगवतो न तु ॥ १ ॥ दृष्टश्चाभ्युदये भानोः, प्रकृत्या क्लिष्टकर्मणाम् । अप्रकाशो ह्युलूकानां, तद्वदत्रापि भाव्यताम् ॥२॥” इति । कादम्बर्यां बाणोऽपि बभाण “अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणाः, गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्येति । सिद्धप्रयोजनोऽपीति केवलज्ञानफलावाप्ताविति शेषः । देशयामासेति–अत्र सकलजगुभाषापरिणामिन्या भाषयेति शेषः । उक्तञ्च–” देवा दैवीं नरा नारीं, शबराश्चापि शाबरीम् । तिर्यञ्चोऽपि हि तैरश्चीं, मेनिरे भगवद्गिरम् ” ॥ १ ॥

॥ इत्यष्टादशकारिकार्थः समाप्तः ॥ १८ ॥

मण्डूकचूर्णसदृशविलक्षणतद्भस्मसदृशक्लेशक्षयस्य प्रवचनाधिगमप्रयोजनत्वमिति–मण्डूकचूर्णसदृशो यः क्लेशक्षयस्तद्विलक्षणस्तान् तद्भस्मसदृशो यः क्लेशक्षयस्तस्येत्यर्थः । अयमत्र भावः–मण्डूकचूर्णरूपो यो मण्डूकनाशस्तत्सदृशो न प्रकृते क्लेशक्षयः, तथा सति पुनरुत्पत्त्यनुकूलशक्त्यन्वितत्वाच्चूर्णीकृतमण्डूकशरीरावयवेभ्यो यथा वर्षासु पुनरपि मण्डूकप्रादुर्भावस्तथा विनष्टोऽपि क्लेशः पुनः स्यात्, न चैवम्, ततो मण्डूकचूर्णसदृशाद्विलक्षणः

प्रवचनाधिगमप्रयोजनत्वमुपदर्शितमाचार्येणेति विभावनीयं सुधीभिः ॥ १९ ॥

**( भा० ) ग्रन्थार्थवचनपटुभिः, प्रयत्नवद्भिरपि वादिभिर्निपुणैः ।**
**अनभिभवनीयमन्यै-र्भास्कर इव सर्वतेजोभिः ॥ २० ॥**

( व्या० ) ग्रन्थार्थेत्यादि ग्रन्थेऽर्थे वचने च पटुशब्दः प्रत्येकं योजनीयः, सन्ति हि केचिद् यथाधीतग्रन्थपटवो नार्थपटवः, केचिच्चानधीतग्रन्था अप्यर्थपटवः । अन्येऽनधिगतग्रन्थार्था अपि स्वविकल्पितवचनपटवोऽतो विशेषयति त्रिष्वपि ये पटवः, एवंविधा अपि नोदासीनाः प्रयत्नवन्तो विजिगीषोद्यताः, अथ च निपुणा न्यायकुशलाः, एतादृशैरपि अन्यैर्वादिभिस्तीर्थान्तरीयैरनभिभवनीयम्, कैः किमिव, सर्वतेजोभिर्मणिप्रदीपादिभिर्भास्कर इव । यद्यप्युपमानपदस्योपमेयपदसमानविभक्तिकत्वाद्भास्करमित्यस्य प्रसङ्गः, तथाप्यार्षत्वादित्थं प्रयोगः, यद्वा यदेतादृशं तीर्थं तद्देशयामास इति यत्तद्भ्यां संस्कारो विधेयः ॥ २० ॥

एतावता ग्रन्थेन सिद्धान्तोपोद्धातसङ्गत्या चिकीर्षितग्रन्थस्य सङ्गतिमत्त्वं महावीरस्य नमस्कर्तव्यतावच्छेदकगुणवत्त्वं चोपदर्शितम् । अथ विघ्नविघाताय कृत महावीरनमस्काररूपं मङ्गलं शिष्य-

---

क्लेशक्षयः, अत एव पुनरुत्पत्तिशक्त्यभावात्तद्भस्मसदृशः, यथा मण्डूके भस्मसाद्भूते सति न तस्य पुनः प्रादुर्भावः किन्त्वत्यन्तमण्डूकविनाश एव, तथा तद्भस्मसदृशक्लेशक्षये सर्वथा सञ्जाते सति न पुनः क्लेशप्रादुर्भाव इत्येवम्भूतक्लेशक्षयस्येति । विशेषार्थिना द्वात्रिंशद्द्वात्रिंशिकाऽन्तर्गतयोगद्वात्रिंशिकायां " मण्डूकचूर्णसदृशः, क्लेशध्वंसः क्रियाकृतः । तद्भस्मसदृशस्तु स्याद्, भावपूर्वक्रियाकृतः " ॥ २६ ॥ इत्यादि यदुक्तं तदवलोकनीयम् ॥

॥ इति एकोनविंशतिकारिकार्थः समाप्तः ॥

उपमानोपमेययोस्समानलिङ्गकत्वनियमो न, " मुखं तव तथा भाति, यथा राजति चन्द्रमाः ।" " हरिमिव हरिमिव हरिमिव, सुरसरिदम्भः पतन्नमत " इत्यादौ तयोर्भिन्नलिङ्गकत्वदर्शनात्, तथा चोपमेयभूततीर्थपदस्य नपुंसकत्वेऽप्युपमानभूतभास्करपदस्य न पुँल्लिङ्गत्वक्षतिरिति तदाशङ्का न कृता, उपमानोपमेययोरिवादिसमभिव्याहारे समानविभक्तिकत्वनियमस्त्वस्त्येव, अत एव काव्यप्रकाशे सपादशततमसूत्रटीकायां " हरितकीं भुङ्क्ष्व राजन्!, मातेव हितकारिणीम् । " इत्यादि त्वसाध्वेव, समानविभक्तिकत्वाभावादित्यप्युक्तं सङ्गच्छते, तथा–चात्रोपमेयतीर्थपदस्य दिशधातुकर्मत्वाद् द्वितीयाविभक्त्यन्तत्वेनोपमानभूतस्य भास्करपदस्य द्वितीयाविभक्त्यन्तत्वप्रसङ्ग इत्येवं यद्यपीत्यादिनाऽऽशङ्क्य समाधत्ते तथापीत्यादिना । समानविभक्तिकत्वनियमपरिपालनार्थं समाधानान्तरमाह यद्वेति–तथा चाऽत्र तीर्थपदस्य प्रथमाविभक्त्यन्तत्वेन तत्समानविभक्तिकमेव भास्करपदमिति न विभिन्नविभक्तिकत्वदोष इति भावः।

॥ इति विंशतितमकारिकार्थः समाप्तः ॥ २० ॥

एकविंशतितमकारिकावतरणमाह एतावता ग्रन्थेनेति–यः शुभकर्मासेवनेत्याद्येकादशश्लोकादारभ्य ग्रन्थार्थवचनपटुभिरित्यादिर्विंशतितमश्लोकपर्यन्तप्रबन्धेनेत्यर्थः ।

शिक्षायै निबध्नँस्तदवधानाय प्रतिजानीते

**(भा०) कृत्वा त्रिकरणशुद्धं, तस्मै परमर्षये नमस्कारम् ।**
**पूज्यतमाय भगवते, वीराय विलीनमोहाय ॥ २१ ॥**

(व्या०)कृत्वेत्यादि द्वाभ्यां । कायवाङ्मनांसि त्रीणि करणानि तैः, शुद्धमकलङ्कं, शुद्धानि वा त्रीणि करणान्यस्मिँस्तत्तथा । 'शांगरजग्धादि'ज्ञापकान्निष्ठापरानिपातः । तस्मै–प्रागुक्ताय, परमर्षये दर्शना दृष्टिर्यथादृष्टवर्णनाच्च परमत्वमिति परमधर्मोपदेशकायेत्यर्थः । पूज्यतमाय–पूज्येभ्योऽपि पूज्याय, भगवतेऽनुत्तरज्ञानशालिने, विलीनमोहाय–निर्दलितमोहनीयकर्मणे, वीराय महावीरनामधेयाय, नमस्कारं कृत्वा । अत्र परमर्षय इत्यनेन वचनातिशयः, पूज्यतमायेत्यनेन पूजातिशयः, भगवत इत्यनेन ज्ञानातिशयः, विलीनमोहायेत्यनेन चापायापगमातिशय उक्तः, तेनार्हत्यमूलातिशयचतुष्टयोक्तेर्भगवद्विषयकरतिभाव-

**शिष्यशिक्षायै निबध्नन्निति–मच्छिष्या अप्येवं कुर्युरित्यभिप्रायेण ग्रन्थघटकीभूतं कुर्वन्नित्यर्थः । तदवधानायेति–शिष्यश्रवणैकतानताकरणायेत्यर्थः ॥**

किं कृत्वेति कर्मापेक्षाप्रयुज्यमानकर्मभूतनमस्कारपदवाच्यस्य नमस्कारस्य विशुद्धद्रव्यभावनमस्काररूपताप्रतिपादनाय विशेषणतयोपात्तस्य त्रिकरणशुद्धमित्यस्याऽर्थमाह–कायवाङ्मनांसीत्यादि । ननु शुद्धानि त्रीणि करणान्यस्मिँस्तत्तथेति बहुव्रीहिकरणे क्तप्रत्ययान्तं सर्वं बहुव्रीहौ पूर्वं निपततीत्यर्थकात् "क्तः" । ३ । १ । १५१ । इति हैमसूत्राच्छुद्धपदस्य क्तप्रत्ययान्तत्वेन शुद्धत्रिकरणमित्येव प्रयोगस्स्यादित्याशङ्कायामाह–शाङ्गरजग्धादिज्ञापकान्निष्ठापरनिपात इति । जातिकालसुखादेर्न वा । ३ । १ । १५२ । इति सूत्राज्जातिवाचिभ्यः कालवाचिभ्यः सुखादिभ्यश्च शब्दरूपेभ्यो बहुव्रीहौ समासे क्तान्तं वा पूर्वं निपततीत्यर्थकात् क्तप्रत्ययान्तशुद्धपदस्य विकल्पपक्षे परानिपात इति भावः । "शाङ्गरजग्धादि" ज्ञापकादिति–शाङ्गरस्य वृक्षविशेषस्य विकारः फलं शाङ्गरं तज्जग्धमनेन स शाङ्गरजग्धः, स आदिर्यस्मिन् स शाङ्गरजग्धादिः, स चासौ ज्ञापकश्च शाङ्गरजग्धादिज्ञापकः, तस्मादित्यर्थः । प्रागुक्तायेति । यः शुभकर्मासेवन इत्यादि पूर्वोक्तेन सह सम्बद्धायेत्यर्थः । परमर्षय इत्यत्रर्षिगतपरमत्वस्य सर्वातिशायिवागाद्यतिशयरूपत्वेन भगवतोऽसाधारणसद्धर्मतीर्थोपदेशकत्वगुणं सूचयितुं तदर्थमाह **–दर्शना दृष्टिर्यथा दृष्टवर्णनाच्चेत्यादि** । ननु भगवतः सर्वान् प्रत्यविशेषेण परमोपदेशदातृत्वेऽपि कस्यचिद्धर्मावाप्तिः कस्यचिन्नेत्यत्र किं नियामकमिति चेत्तत्तदात्मनियतभव्याभव्यत्वसुलभबोधिदुर्लभबोधित्वादिपरिणामवैलक्षण्यमेवेति जानीहि । **अनुत्तरज्ञानशालिने**–भगवतो ज्ञानान्न किमपि ज्ञानं श्रेष्ठमित्यतोऽनुत्तरं प्रधानं सर्वज्ञानोत्तमं ज्ञानं केवलज्ञानं तच्छालिने । कृत्वेति–अस्य "समानकर्तृकयोर्धात्वर्थयोर्मध्ये पूर्वकालो यस्य धात्वर्थस्य तस्मिन् विद्यमानाद्धातोः क्त्वाप्रत्ययो वा भवतीत्यर्थकात् "प्राक्काले" ।५।४।४७। इति हैमसूत्रात् पूर्वकालभाविकरणक्रियार्थककृधातोः क्त्वाप्रत्ययेन सिद्धस्य कृत्वेत्यस्य तत्समानकर्तृकोत्तरकालभाव्युक्तिक्रियार्थकवक्ष्यामीत्यग्रेतनश्लोकान्तर्गतपदेन सह संटङ्कः तेनार्हत्यमूलाति

परिपोषादस्य भावध्वनित्वमावेदितं भवति ॥ २१ ॥

तत्त्वार्थाधिगमाख्यं, बह्वर्थं सङ्ग्रहं लघुग्रन्थम् ।
वक्ष्यामि शिष्यहितमिम-मर्हद्वचनैकदेशस्य ॥ २२ ॥

तत्त्वार्थेत्यादि । तत्त्वार्थोऽधिगम्यतेऽनेनास्मिन् वेति तत्त्वार्थाधिगमः, तम्, अभिधानाभिधेययोरभेदाश्रयणात्तदभिधानम्, अर्हद्वचनस्य द्वादशाङ्गगणिपिटकस्य य एकदेशस्तस्य, न तु सर्वस्य, महत्त्वेन संग्रहीतुमशक्यत्वात् । सङ्ग्रहं समासम्, लघुग्रन्थं श्लोकद्वयशतमात्रम्, बह्वर्थं विपुलविषयम्, शिष्यहितं विस्तरालसानां बीजमात्रज्ञापकत्वात् । इमं बुद्धिस्थम्, वक्ष्यामि । अत्र तत्त्वार्थसंग्रहो विषयः, तज्ज्ञानं प्रयोजनम्, तज्जिज्ञासुरधिकारी, तेन सह ग्रन्थस्य प्रतिपाद्यप्रतिपादकभावश्च सम्बन्ध इत्यनुबन्धचतुष्टय-

—अत्र मूलातिशयचतुष्टयमध्ये वचनातिशयपूजातिशयौ परार्थसम्पत्तिरूपौ, अपायापगमातिशयकेवलज्ञानातिशयौ स्वार्थसम्पत्तिरूपावित्यवधेयम् । वक्तुर्भगवद्विषयकानुरागात्मकरतिर्नायकनायिकयोरन्योन्यविषयकरतेभिन्नत्वाद्रसरूपतामनापद्यमाना भावशब्देन व्यवह्रियत इत्याशयेनाऽऽह भगवद्विषयकरतिभावपरिपोषादस्य भावध्वनित्वमावेदितमिति । अत्र वीतरागभगवानालम्बनविभावः, तदीयवीतरागत्वाद्युद्दीपनं, तद्विषयकस्तवादिरनुभावः, भगवद्गतधृतिमाहात्म्यादिस्मरणादयस्सञ्चारिभावः, एतैः पुष्टो वक्तृगतो रतिरूपस्थायिभाव इत्यवधेयम् ।

॥ एकविंशतितमकारिकार्थः समाप्तः ॥ २१ ॥

यं गुणमाश्रित्य तत्त्वार्थाधिगमेति गुणनिष्पन्नं नाम विहितं तं गुणं तत्त्वार्थप्रतिपत्तेः करणत्वलक्षणं निमित्तविधयाऽधिकरणत्वलक्षणं वा विग्रहमुखेनाऽऽह—तत्त्वार्थोऽधिगम्यतेऽनेनाऽस्मिन् वेति । बह्वर्थकाल्पाक्षरलक्षणं सूत्रम्, सूत्रसमूहात्मकोऽध्यायः, तत्समूहात्मकोऽयं ग्रन्थस्तत्त्वार्थप्रतिपादको न तु तत्त्वार्थाधिगमरूप इति कथमस्य तत्त्वार्थाधिगमेति नामेत्याशङ्कायामाह-अभिधानाभिधेययोरभेदाश्रयणात्तदभिधानमिति । प्रतिपाद्यप्रतिपादकभावसम्बन्धो हि नैकान्तभेदे किन्तु कथञ्चिद्भेदविशिष्टाभेद एवेत्यभेदस्याऽत्र प्राधान्यविवक्षया ग्रन्थेन सहाऽधिगमविषयतत्त्वार्थस्याऽभिधेयस्याऽभेदाश्रयणात्तथा नामोक्तमिति भावः । अर्हद्वचनस्येति-यद्यपि द्वादशाङ्गगणिपिटकं श्रीगणधरैरेव रचितं तथाप्यर्थरूपेणाऽर्हत्प्रणीतमिति तद्वचनस्येत्यर्थः । द्वादशाङ्गगणिपिटकस्येति । गणी भावाचार्यस्तस्य पिटकं रत्नकरण्डकमिव पिटकमिति गणिपिटकं, द्वादशाङ्गमेव गणिपिटकमिति द्वादशाङ्गगणिपिटकं तस्येत्यर्थः । कालानुभावमहिम्ना संक्षिप्तबुद्धिबलायुस्संहननादीनां सत्त्वानामलसायमानत्वेन नेदानीं सकलप्रवचनाधिगमः, तदनधिगमे दीर्घस्संसार इत्यतो बह्वर्थकाल्पग्रन्थमात्रमधीत्य स्वपरसमयादतव्यापारास्स्वसमयपरसमयतात्पर्यार्थमवगम्य यथावस्थितवस्तुतत्त्वावबोधबलेन निश्चयशुद्धं सम्यग्दर्शनबीजं लभन्तां शिष्या इत्याशयेनाऽऽह—शिष्यहितमिति । तेन सह । तत्त्वार्थसङ्ग्रहात्मकविषयेण सह । अनुबन्धचतुष्टयेन । अस्य लक्षणं प्रागेवोक्तमिति । इति द्वाविंशतितमकारिकार्थः ॥२२॥

लाभात्तत्त्वार्थेन सहापि ग्रन्थस्य सङ्गतिः स्पष्टीभवति, सफलः सम्बन्धकारिकोपदेश इति निर्व्यूढम् ॥ २२ ॥

एवं तीर्थमहिमाक्षिप्तबुद्धिराचार्यशक्तिमसंभावयन्नाचार्यदेशीयः प्रत्यवतिष्ठते

**(भा०)महतोऽतिमहाविषयस्य दुर्गमग्रन्थभाष्यपारस्य ।**
**कः शक्तः प्रत्यासं, जिनवचनमहोदधेः कर्तुम् ॥ २३ ॥**

(व्या०)महत इत्यादि। महतो भूयसः, अतिशयेन महाविषयस्य महार्थस्य, दुर्गमो ग्रन्थभाष्ययोः पारो निष्ठाऽस्य स तथा तस्य, तत्र विशिष्टानुपूर्वीकपदसन्ततिर्ग्रन्थः, तस्य महत्त्वादध्ययनमात्रेणापि दुर्गमः पारः, तस्यैवार्थविवरणं भाष्यम्, तस्यापि नयवादानुगमत्वादशक्यलाभः पारः। अयं ह्यागमो महतापि पुरुषायुषेणाशक्यो व्यावर्णयितुम्, तदित्थमस्य जिनवचनमहोदधेः प्रत्यासं–सङ्ग्रहं कर्तुं कः शक्तो न कोऽपीत्यभिप्रायः। किं तेऽहं धारयामीत्यत्रेव किमोऽत्रापलापे प्रयोगात् ॥ २३ ॥

यश्चात्र मनोरथं धारयेदसाविदमप्यध्यवस्येदित्याह

**(भा०) शिरसा गिरिं बिभित्से–दुच्चिक्षिप्सेच्च सक्षितिं दोर्भ्याम् ।**
**प्रतितीर्षेच्च समुद्रं, मित्सेच्च पुनः कुशाग्रेण ॥ २४ ॥**

(व्या०)शिरसेत्यादि। शिरसा गिरिं पर्वतम्, बिभित्सेत् भेत्तुमिच्छेत्, उच्चिक्षिप्सेदुत्क्षेप्तुमिच्छेच्च, सक्षितिं–पृथ्वीसहितं तमेव गिरिम्, दोर्भ्यां–बाहुभ्याम्, प्रतितीर्षेत्–तर्तुमिच्छेच्च समुद्रं दोर्भ्यामिति वर्तते। मित्सेत् मातुमिच्छेच्च कुशाग्रेण तमेव समुद्रम् उदबिन्दुपरिमाणाधिगमाय ॥ २४ ॥

त्रयोविंशतितमकारिकावतरणिकामाह

एवमित्यादि। प्रांशुत्ववैपुल्यपूजनभूयस्त्वप्राधान्यसंज्ञाप्रशस्यार्थकस्य महच्छब्दस्याऽत्र प्रस्तुतार्थमाह **महतो भूयस इति।** **अध्ययनमात्रेणाऽपीति**–अत्राऽपिना सुविनयार्द्रीभूतहृदयगुरूपादीयमानार्थरूपेणाऽतिदुर्गमः पार इत्यत्र किमु वक्तव्यमिति सूचितम्। किंशब्दस्य निषेधार्थमभिप्रेत्याह–**न कोऽपीत्यभिप्राय इति।** यद्यपि कः शक्त इत्यनेन काक्वा किंशब्दस्य निषेधोऽर्थो व्यज्यते तथापि व्यञ्जनावृत्तिर्नैयायिकैर्नाऽभ्युपगम्यत इति शक्तिग्राहके शब्दस्तोममहानिधिकोशे किम्–प्रश्ने, निषेधे, वितर्के, निन्दायाञ्चेत्यनेन किंशब्दस्य निषेधरूपार्थे शक्तत्वेनोक्तत्वादत्राऽपि किंशब्देन शक्त्यार्थ एव निषेधो ग्राह्यो न तु व्यङ्ग्यार्थ इति भावः। तदेव सदृष्टान्तमाह–**किं तेऽहं धारयामीत्यादि।**

॥ इति त्रयोविंशतितमकारिकार्थः समाप्तः ॥ २३ ॥

चतुर्विंशतितमकारिकावतरणिकामाह–**यश्चाऽत्रेत्यादि।** इयं कारिका सुस्पष्टतया विवृतेति नेह प्रतन्यते ॥

॥ इति चतुर्विंशतितमकारिकार्थः समाप्तः ॥ २४ ॥

(भा०)व्योम्नीन्दुं चिक्रमिषे-न्मेरुगिरिं पाणिना चिकम्पयिषेत् ।
गत्याऽनिलं जिगीषे-च्चरमसमुद्रं पिपासेच्च ॥ २५ ॥
(भा०)किं च खद्योतकप्रभाभिः, सोऽभिबुभूषेच्च भास्करं मोहात् ।
योऽतिमहाग्रन्थार्थं, जिनवचनं सञ्जिघृक्षेत ॥ २६ ॥

(व्या०)खद्योतकभि(के)त्यादि । खद्योतकस्य प्रभाभिः कान्तिभिः, सोऽभिबुभूषेत्, अभिभवितुमिच्छेच्च, भास्करं सूर्यं, मोहाद ज्ञानात्, यः अतिमहान्तौ ग्रन्थार्थौ यस्य तादृशं, जिनवचनं सञ्जिघृक्षेत-सङ्ग्रहीतुमिच्छेत् ॥ २५-२६ ॥

तथा चाशक्यानुष्ठाने जिनवचनसङ्ग्रहे भवतः प्रवृत्तिरनुचितेत्याचार्यदेशीयेनाशङ्किते, सर्वमेतदेवम् तथापि यथाशक्ति भगवद्वचनोपदेशप्रवृत्त्या ज्ञानविनियोगेन परोपकारशुभानुबन्धेन फलेग्रहितैवास्मन्मनोरथतरोरित्यनुज्ञापवादमाह

(भा०)एकमपि तु जिनवचना-द्यस्मान्निर्वाहकं पदं भवति ।
श्रूयन्ते चानन्ताः, सामायिकमात्रपदसिद्धाः ॥ २७ ॥

(व्या०) एकमपीत्यादि । एकमपि पदं किं पुनरियान् सप्तपदार्थसङ्ग्रह इति तुशब्दो विशेषयति । जिनवचनादित्यवच्छेदे पञ्चमी, यथा समूहाच्छुक्लं प्रकाशते । यस्मादिति कारणे पञ्चमी । यस्मात्कारणात्, निर्वाहकं भवोत्तारकं भवति । अभ्यस्यमानस्य तस्योत्तरज्ञानाधानद्वारा परमनिर्जराकार-

व्योम्नि गगने, इन्दुं चन्द्रं, चिक्रमिषेत् क्रमितुं स्वहस्तेन स्प्रष्टुमिच्छेत्, मेरुगिरिं मेरुनामशैलेशं, पाणिना हस्तेन, चिकम्पयिषेत् कम्पयितुमिच्छेत्, गत्याऽनिलं स्वगतिवेगेन वायुं, जिगीषेत्-जेतुमिच्छेत्, चरमसमुद्रं-स्वयम्भूरमणसमुद्रं, पिपासेत् पातुमिच्छेत् ॥ ॥ पंचविंशतितमकारिकार्थः समाप्तः ॥ २५ ॥

षड्विंशतितमकारिका विवृतैवेति किं पिष्टपेषणेन, नवरं मोहादिति पदं गिरिभेदादिषु सर्वत्र सम्बन्धनीयमिति ॥ ॥ षड्विंशतितमकारिकार्थः समाप्तः ॥२६॥

सप्तविंशतितमकारिकावतरणिकामाह तथा चेत्यादि । प्रवृत्तिरनुचितेति । प्रवृत्तिकारणीभूतेष्टसाधनताज्ञानसद्भावेऽपि तत्कारणभूतकृतिसाध्यताज्ञानस्य शेषनागरत्नवज्जिनवचनसङ्ग्रहेऽतिप्रयासेनाऽपि कर्तुमशक्येऽभावान्न चिकीर्षा ततो न प्रवृत्तिरुचितेति भावः ।

जिनवचनादित्यवच्छेदे पञ्चमीति । तथा च जिनवचनघटकीभूतमित्यर्थः । परमनिर्जराकारणत्वादिति । "कम्ममसंखेज्जभवं, खवेइ अणुसमयमेव उवउत्तो । अन्नयरम्मि वि जोगे, सज्झायम्मि य विसेसेण ॥ १ ॥ इति । बारसविहम्मि वि तवे, सब्भिंतरबाहिरे कुसलदिट्ठे । न वि अत्थि नवि अ होही, सज्झायसमं तवोकम्मं ॥ २ ॥" तथा "अपुव्वनाणगहणा, निच्चब्भासेण केवलुप्पत्ती । भणिया सुयम्मि तम्हा, एयम्मि महायरो जुत्तो ॥ ३ ॥ अत्थो जस्स जिणुत्तमेहिँ भणिओ जायम्मि मोहक्खए, भद्द

णत्वादित्यर्थः । न चेयं स्वमनीषिका । यतः—श्रूयन्तेऽनन्ताः, चशब्दो बीजपत्रप्रवालपुष्पफललाभ-समुच्चयार्थः । सामायिकमात्रपदेन 'करोमि भदन्त ! सामायिकम्', इत्येतावतैव भावतः सुगृहीतेन, सिद्धाः । उदाहरणमत्र 'माषतुषादयः' ॥ २७ ॥

**(भा०) तस्मात्तत्प्रामाण्यात्, समासतो व्यासतश्च जिनवचनम् । श्रेय इति निर्विचारं, ग्राह्यं धार्यं च वाच्यं च ॥ २८ ॥**

(व्या०) तस्मादित्यादि । तस्मादागमपदमात्रस्यापि निर्वाहकत्वात्, तस्यागमस्य प्रामाण्यात्,

गोयममाइएहिँ सुमहावुद्धीहिँ जं सुत्तओ । संवेगाइगुणाण वुड्ढिजणणं तित्थेसनामावहं, कायव्वं विहिणा सया नवनवं नाणस्स तस्सज्जणं ॥ ४ ॥" इति महर्षिवचनोपदेशं सुगुरुमुखाच्छ्रुत्वाऽतिशयसंवेगादिरसप्रसरपुरस्सरं श्रुतसमुद्रेऽवगाहमानस्य कृतकृत्योऽहमेतावतैवेत्येवंरूपया तृप्त्याऽतृप्तस्य श्रद्धायोगेन नवज्ञानरत्नोपार्जनोत्साहममुञ्चतो भव्यसत्त्वस्योपयुक्ततयाऽविच्छिन्नज्ञानाभ्यासं कुर्वतोऽपूर्वापूर्वतत्त्वज्ञानप्रवाहं प्रवर्धयतस्तत्कार्यभूतं विशुद्धविशुद्धतरसंयमस्थानावाप्तये सद्भावनासारमुपयुक्ततया सर्वमनुष्ठानं च कुर्वतोऽसंख्यभवीयकर्मसङ्घातनिर्जरावाप्तेरिति भावः। प्रभुशासने हि मोक्षप्रासादसोपानरूपा असंख्ययोगाः कथिताः, तत्रैकैकस्मिन्नपि योगेऽनन्तजीवाः सिद्धाः, तथा चाऽऽगमः—" जोगे जोगे जिणसासणम्मि दुक्खक्खया पउज्जन्ते । एक्केक्कम्मि अणंता वट्टंता केवली जाया ॥ १ ॥" इति सिद्धान्तमवलम्ब्याऽत्र समतायोगरूपसामायिकमधिकृत्याऽऽह—यतः श्रूयन्तेऽनन्ता इत्यादि । बीजपत्रप्रवालपुष्पफललाभसमुच्चयार्थ इति । एकेनापि पदेन सविधिसुविशुद्धभूम्युप्तबीजवत् सविधिसुविशुद्धभव्यात्महृदयभूम्युप्तं धर्मबीजमपि धर्मचिन्तादिलक्षणाङ्कुरादिक्रमेण मोक्षात्मकशस्यफलमुत्पादयति । यदाहुः—" वपनं धर्मबीजस्य, सत्प्रशंसादि तद्गतम् । तच्चिन्ताद्यङ्कुरादि स्यात्, फलसिद्धिस्तु निर्वृतिः ॥ १ ॥ चिन्तासच्छ्रुत्यनुष्ठान देवमानुषसम्पदः । क्रमेणाऽङ्कुरसत्काण्ड—नालपुष्पसमा मताः ॥ २ ॥" इति । सर्वयोगा भावपूर्वका एव मोक्षं प्रति कारणीभूता इति सर्वत्र भाव एव मोक्षप्रधानकारणमिति सूचयितुमाह—भावत इति । माषतुषादय इति—तत्कथानकं तु सम्प्रदायेऽतिप्रथां गतमिति नेहोच्यते । निर्वाहकत्वादिति—भवोत्तारकत्वादित्यर्थः ।

॥ इति सप्तविंशतितमकारिकार्थः समाप्तः ॥ २७ ॥

तस्याऽऽगमस्य प्रामाण्यादिति । पुरुषविश्वासे वचनविश्वास इति जगत्त्रयलोकविश्वसनीयवीतरागप्रभुप्रणीतत्वादेव हेत्वन्तरमन्तरेण स्वमहिम्नैवाऽऽगमस्य प्रामाण्यादेवेत्यर्थः । मोहान्धकारविलुप्तसत्पथे संसारे दिव्यालोकरूपं जिनवचनमेव श्रेयोमार्गप्रवर्तकं पापामयविनिवारणे दिव्यौषधं मलिनवस्त्रस्याऽत्यन्तशुद्धिकारकं जलमिवाऽतिमलिनतरभव्यसत्त्वचित्तवृत्तिशुद्धिकारकमपि तदेव, नाऽन्यदिति निश्शङ्कं मत्वा तच्चित्तैकाग्र्येण सङ्क्लेशाद्विरहाच्च भक्तिबहुमानाभ्यां यथाशक्ति ग्राह्यं धार्यं वाच्यं च न पुनरनादर्तव्यम्, श्रद्धादिगुणानां नैष्फल्यप्रसक्तेः । उक्तञ्च " यस्य त्वनादरः शास्त्रे, तस्य श्रद्धादयो गुणाः । उन्मत्तगुणातुल्यत्वा न

समासतः सङ्क्षेपाद्, व्यासतो-विस्तरतश्च, जिनवचनं-श्रेयः कल्याणावहमिति निर्विचारं ग्राह्यम्-अध्ययनश्रवणाभ्यां, धार्यमनुप्रेक्षणादिभिः, वाच्यमर्थविचारणादिभिः ॥ २८ ॥

ग्रहणधारणे तावदात्मोपकारिणी, किं पुनर्वाचनयेति चोदितोऽध्यापनस्यैव-गौरवख्यापनार्थं आत्मप्रयत्नदृढीकरणार्थं चाह

**( भा० ) न भवति धर्मः श्रोतुः, सर्वस्यैकान्ततो हितश्रवणात् ।**
**ब्रुवतोऽनुग्रहबुद्ध्या, वक्तुस्त्वेकान्ततो भवति ॥ २९ ॥**

(व्या०) न भवतीत्यादि । श्रोता हि कदाचिदन्यमनस्को दुष्टान्तरात्मा वा शृणुयादेवंविधस्य श्रोतुर्न हितश्रवणमात्रादेवैकान्तेन धर्मोऽस्ति । हितपदं साभिप्रायम्, हितमपि तावच्छृण्वता न सर्वेषां धर्मः, किं पुनरहितमिति, कथममी श्रोतारोऽनुगृहीता भवेयुरित्यनुग्रहबुद्ध्या हितं ब्रुवतो वक्तुः पुनरेकान्ततो भवति धर्मः । एवं च कृत्वा स्वपरिणामो नः प्रवचनेषु शुभाशुभोपचयं प्रति परं प्रमाणमिति दर्शितम् । न चात्रात्मनेपदाशङ्का, निराकृतं हि स्तुत्यादिक्रियाफलम्, निरनुबन्धाभिप्रायात्, न च धर्मोऽप्यभिप्रेतो ऽवश्यं भावी त्वसावित्युक्तम् ॥ २९ ॥ एवं विचिन्त्याह

प्रशंसास्पदं सताम् ॥१॥" इति, इत्याशयेनाऽऽह-**समासतः** सङ्क्षेपात्, **व्यासतो** विस्तराच्च जिनवचनं श्रेय इत्यादि । कैर्ग्राह्यं धार्यं च वाच्यश्चेत्याशङ्कायामाह ग्राह्यमध्ययनश्रवणाभ्यामित्यादि । ग्रहणादिभिः प्राप्तज्ञानादिप्रकर्षः पुमान्नाऽकल्याणभाग्भवतीति भावः ।

॥ इत्यष्टाविंशतितमकारिकार्थः समाप्तः ॥ २८ ॥

एकोनत्रिंशत्तमकारिकावतरणिकामाह-**ग्रहणधारणे तावदित्यादि** ।

यत्र परहितैककामनयाऽपि धर्मोपदेशस्तत्राऽपि नियमेन श्रोतुर्धर्मावाप्तिरेवेति न नियमः, व्यभिचारात्, व्यभिचारमेवाऽऽह-**श्रोता हि कदाचिदन्यमनस्क** इति-श्रोता हि मध्यस्थः बुद्धिस्तत्त्वजिज्ञासुस्सिद्धान्ततत्त्वश्रवणैकचित्तस्तल्लेश्यस्तदध्यवसित एव शुभपरिणामत्वात् सिद्धान्ततत्त्वाधिगमावाप्त्या लोकोत्तरगुणपात्रतामानीयते वक्त्रा, न त्वन्यरक्तो द्विष्टो वा मूढः पूर्वव्युद्ग्राहितश्च, अशुभपरिणामत्वादिति भावः । ननु तथाविधकर्मदोषान्नाऽवबोधश्श्रोतुरुत्पद्यते तर्हि तत्र धर्माख्यानं किं फलमित्याशङ्कायामाह-**कथममी श्रोतार** इत्यादि । **एकान्ततो भवति धर्म** इति । उक्तश्चाऽन्यत्राऽपि-" अबोधेऽपि फलं प्रोक्तं, श्रोतृणां मुनिसत्तमैः । कथकस्य विधानेन, नियमाच्छुद्धचेतसः ॥ १ ॥ " इति । ब्रूग्कृधातोः फलवति कर्तरि " ईगितः " । ३ । ३ । ९५ । इति हैमसूत्रेणाऽऽत्मनेपदं भवति, तथा च ब्रुवाणस्येति प्रयोगस्स्यान्न तु ब्रुवत इत्याशयेनाऽऽशङ्क्य निषेधति-न चाऽत्रेत्यादि । निषेधे हेतुमाह-**निराकृतं हि स्तुत्यादिक्रियाफलमिति** । उपदेष्टा हि न स्वगताक्रियाफलेच्छया प्रवर्तते, किन्तु " नोपकारो जगत्यस्मिं-स्तादृशो विद्यते क्वचित् । यादृशी दुःखविच्छेदा देहिनां धर्मदेशना ॥ १ ॥ " इत्युक्त्या परोपकारव्यासक्तान्ततया परफलेच्छयैवेत्यन्यगतफलविवक्षणाद्, यश्चाऽनेन पुण्यानुबन्धा सत्त्वित्तीच्छाम-परेणाऽनुग्रहबुद्ध्या प्रवृत्तावपि धर्मोपदेशरूपकुशलानुष्ठानेनाऽऽन्तर-

**(भा०) श्रममविचिन्त्यात्मगतं, तस्माच्छ्रेयः सदोपदेष्टव्यम् ।**
**आत्मानं च परं च हि, हितोपदेष्टानुगृह्णाति ॥ ३० ॥**

(व्या०) श्रममित्यादि । तस्मादनुग्रहबुद्ध्या हितोपदेशस्यैकान्तधर्मावहत्वात्, आत्मगतं श्रमं हृदयकण्ठशोषादिलक्षणम्, अविचिन्त्य नैतन्मम दुःखमिहैव चैतत्सूपयुक्तं शरीरमिति भावनयाऽवगणय्य, सदा श्रेयो–मोक्षवर्त्म, उपदेष्टव्यम् । नन्वनुग्रहहेतुत्वबुद्ध्या हितोपदेशो धर्मावह इत्युक्तं तत्रैव किं मानमित्यत्राह–हितोपदेष्टा–पुरुषः, आत्मानं च परं चानुगृह्णाति–कुशलप्रवृत्तेरुभयोरपि श्रेयोमूलत्वात् । तथा चात्र मलिनः स्नायादित्यत्रेव सिद्धसाध्यसमभिव्याहारे 'सिद्धं साध्यायोपकल्पत' इति न्यायाद्धितोपदेशस्यानुग्रहहेतुत्वं सिध्यतीति भावः । वस्तुतोऽप्रमत्तस्य साधोः सर्वस्या अपि क्रियायाः परार्थकरणत्वेनानुग्रहहेतुत्वं न्यायसिद्धमेव, तदाहुराचार्याः–"विहितानुष्ठानपरस्य तत्त्वतो योगशुद्धिसचिवस्य । भिक्षाटनादि सर्वं, परार्थकरणं यतेर्ज्ञेयम्" इति ॥ ३० ॥

स्वर्गफलजनकोऽवश्यंभावी पुण्यबन्धः सोऽप्यसन्निति विवक्षणात्तस्याऽप्रधानफलत्वाच्च "शेषात्परस्मै" । ३ । ३ । १०० । इति सूत्रेण परस्मैपदे सति शतृप्रत्ययभावाद्भवत इति प्रयोगो युक्त एवेति भावः । ॥ इत्येकोनत्रिंशत्तमकारिकार्थः ॥२९॥

**अनुग्रहबुद्ध्येति**–संवेगनिर्वेदादिरसपोषकधर्माख्यानेनाऽनेन कृच्छ्रेणाऽप्ययं प्रतिबुध्यतां संसारदुःखाच्च मुच्यतामिति बुद्ध्येत्यर्थः । **श्रेयोमूलत्वादिति**–निःशेषक्लेशाकलङ्कितमोक्षं प्रत्यवन्ध्यकारणत्वादित्यर्थः । **तथा चाऽत्र मलिनः स्नायादित्यत्रेव सिद्धसाध्यसमभिव्याहारे "सिद्धं साध्यायोपकल्पत" इति न्यायाद्धितोपदेशस्याऽनुग्रहहेतुत्वं सिध्यतीति**–मलिनस्स्नायादिति वाक्ये मालिन्यं स्नानविधानोद्देश्यं पुरुषगतं सिद्धं, स्नानं तु विधेयत्वात्साध्यम्, तथा च सिद्धसाध्यसमभिव्याहारलक्षणे मलिनस्स्नायादिति वाक्ये सिद्धं मालिन्यं साध्याय स्नानायोपकल्पते, स्नानार्थं भवति, स्नाननिमित्तत्वं मालिन्यस्य सिध्यतीति यावत्, तद्वदेवाऽऽत्मानं च परं च हितोपदेष्टाऽनुगृह्णातीति प्रकृतवाक्ये हितोपदेष्टृत्वं सिद्धं स्वपरानुग्रहः साध्यस्तत्प्रतिपादकवचनसमभिव्याहारे सिद्धं हितोपदेष्टृत्वं साध्याय स्वपरानुग्रहायोपकल्पते, स्वपरानुग्रहार्थं भवति, हितोपदेशः स्वपरानुग्रहहेतुर्भवतीति यावत्, एवञ्चोक्तन्यायाद्धितोपदेशस्याऽनुग्रहहेतुत्वं सिध्यतीत्यर्थः । यद्यप्यर्थकामैकपरायणानां संसारिजीवानामर्थकामैकसाधनविद्याशिल्पकलाकामकलाराजनीत्याद्युपदेशेष्वनाद्यर्थकामवासनाबलेन रुचिकरत्वाद्धितबुद्धिस्सम्भवति तथापि ते सावद्योपदेशरूपत्वेन कर्मक्लेशजनकत्वात्संसारमार्गपरिपोषकाः, तद्विपरीतस्सम्यग्दर्शनाद्युपदेश एवाऽस्मिन् कृत्स्ने जगति निरवद्योपदेशत्वेनाऽऽत्मविशुद्धिकारित्वान्मोक्षमार्गपरिपोषकः स एवात्मशुभभावोपकारकत्वात्परमहितोपदेशो नाऽन्य इति स एव संविग्नमुनिभिर्निरवद्यानुष्ठायिभिर्भवोद्विग्नप्राणिपरमहितानुग्रहबुद्ध्या विधातुं योग्यः । उक्तञ्च–"भवसयसहस्समहणो, विबोहओ भवियपुंडरीयाणं । धम्मो जिणपन्नत्तो. पकप्पजइणा कहेयव्वो ॥१॥" इति । प्रकल्पयतिना अधीतनिशीथाध्ययनेन,

विद्याशिल्पकलाद्युपदेशेऽप्यपि हितबुद्धिस्तदर्थिनामस्तीति तत्साधारण्यनिरासपूर्वं फलितमाह—

(मा०) नर्ते च मोक्षमार्गा—द्धितोपदेशोऽस्ति जगति कृत्स्नेऽस्मिन्।
तस्मात्परमिद(म)मेवे—ति मोक्षमार्गं प्रवक्ष्यामि ॥ ३१॥
॥ सम्बन्धकारिकाः समाप्ताः ॥

(व्या) नर्ते चेत्यादि। विगतद्वन्द्वसन्निपाताऽव्ययपदप्रापणहेतोर्मोक्षमार्गादृते नान्यो हितोपदेशः कृत्स्नेऽप्यस्मिन् जगति विद्यते, तस्मात्परमुत्कृष्टम्, इदमेव हितोपदेशनमिदमेवेति निश्चित्य, मोक्षमार्गमादौ वक्ष्यामि

तस्मादनेन शास्त्रेणाऽपि सम्यग्दर्शनादिमोक्षमार्गः प्रतिपाद्यत इति हेतोरिदमेव शास्त्रमासन्नभव्येन मतिमता श्रद्धाधनसमन्वितेन श्रेयोमार्गकाङ्क्षिणाऽपेक्षितव्यम्, उभयलोकहितावहत्वात्तदुक्तमार्गासेवनेनैतद्भवे भवान्तरे वा मोक्षफलकत्वात्, न तु विद्याशिल्पकलादिशास्त्रम्, इहलोकमात्र एवाऽऽपाततो हितावहत्वादित्यस्मिन्नेव शास्त्रे बहुमानोत्पादनद्वारा श्रोतृणामादृतिभावं प्रदर्शयितुं निष्टङ्कितार्थमन्तिमकारिकाकारिकयाऽऽह—नर्ते चेत्यादि। विगतद्वन्द्वसन्निपाताऽव्ययपदप्रापणहेतोरिति—व्यावहारिकसुखदुःखादिकं प्रति निमित्तीभूतस्य देहेन्द्रियादेरभावाद्विगतो नष्टो द्वन्द्वसन्निपातः सुखदुःखसन्निपातो दुःखसंमिश्रसुखभवनलक्षणो यस्मिन् तत्तथा एवम्भूतं अव्ययपदं न व्येतीत्यव्ययं पद्यते गम्यत इति पदं स्थानम्, अव्ययञ्च तत्पदञ्चाव्ययपदम्, निरावृतात्मस्वभावमात्रसमुत्थाऽक्षयाव्याबाधानिष्प्रतिद्वन्द्वशाश्वतानन्तसुखात्मकमोक्षस्थानं तादृशाव्ययपदस्य प्रापणं प्राप्तिः तस्य हेतोरित्यर्थः।

कृतकौघप्रौढाऽचलकुलिशसत्तर्कघटिताऽ—
तिगूढार्थाऽनल्पप्रमितिनयगर्मोक्तिविषमा।
महोपाध्यायश्रीसविजययशस्संज्ञमुनिना,
प्रणीताऽऽद्याध्याये विवृतिरसुगम्याऽल्पमतिभिः ॥ १ ॥
सुबोधार्थं तस्याः प्रियकरजयानन्दविजयाऽ
तिविज्ञप्तो ह्यार्याविवृतिविवृतेर्दर्शनमुनिः।
व्यधात्पूर्तिं सूरिर्गुरुचरणगोऽत्र श्रमभवां,
विशोध्याऽशुद्धिं मां कृतिन उपकुर्वन्तु गुणिनः ॥ २ ॥ युग्मम् ॥

न्यायाचार्य—न्यायविशारद महोपाध्याय श्रीयशोविजयगणिविनिर्मितस्य सम्बन्धकारिकाविवरणस्य तपागच्छाचार्यश्रीविजयदर्शनसूरिदृब्धा गूढार्थदीपिकाख्या व्याख्या समाप्ता ॥

॥ ॐ अर्हं नमः ॥

॥ अनेकलब्धिनिधानाय श्रीगौतमस्वामिने नमः ॥

॥ शासनसम्राट् सूरिचक्रचक्रवर्त्ति श्रीविजयनेमिसूरिसद्गुरुभ्यो नमः ॥

॥ श्रीतत्त्वार्थविवरणगूढार्थदीपिकामङ्गलाचरणम् ॥

ध्यानाग्निदग्धाखिलकर्मजालं, विज्ञातविश्वत्रयविश्वभावम् ।
शिवाय सर्वेन्द्रनरेन्द्रवन्द्यं, सर्वाप्तमुख्यं प्रभुवीरमीडे ॥ १ ॥
अनन्ततीर्थंकरभाषितं यं, निशम्य धृत्वा हृदि चोपसेव्य ।
कुशाग्रबुद्ध्या वरमोक्षमार्गं, सिद्धा नरास्सोऽस्तु भवे भवे मे ॥ २ ॥

अथ संसारकारागृहबन्धनबद्धानिखिलप्राणिनोऽतिदुःखसंव्याप्तस्वान्तास्तद्दुःखमुक्त्यर्थं तन्मुक्तिकारणान्वेषणतत्परा दरीदृश्यन्ते, न च ते मिथ्यात्वभ्रमजालव्याप्ताः परोपदेशमन्तरेण स्वयमेव मुक्तिमार्गमुपलभन्ते, परेऽपि तत्तत्कुनयाश्रिततत्तत्सिद्धान्तावलम्बिनो वादिनः केचिज्ज्ञानमात्रमेव केचिच्चाज्ञानमेव केचिच्चाग्निहोत्रादिक्रियामात्रमेव केचिच्च पञ्चाग्नितप एव केचिच्च वैराग्यमेव केचिच्च विनयमेव केचिच्च गङ्गादिमहातीर्थस्नानमहादानयमनियमादिकं विविधप्रकारं मोक्षमार्गमामनन्ति, समुपदिशन्ति च भद्रलोकम् ।

जैनाभासा अपि केचन सम्यग्दर्शनमात्रमेव सम्यग्ज्ञानमेव वा सम्यक्चारित्रमेव वा व्यस्तं मोक्षमार्गं प्रतिपादयन्ति, न चैकान्तिकं तत्सर्वं मोक्षमार्गरूपतां बिभर्ति, एकान्तिकात्यन्तिकानन्तसुखाद्यात्मकमोक्षफलस्याऽव्यवधानेनानुत्पादकत्वात् । किं तर्हि ? सम्यग्दर्शनसम्यग्ज्ञानसम्यक्चारित्रेतित्रितयं समस्तमेव, सामस्त्यञ्चात्र मिथः सापेक्षभावरूपमेव ग्राह्यम्, तथा च सम्यग्दर्शनादित्रयं मिथः सापेक्षतां गतमेव मोक्षैकमार्गरूपम्, मिथः सापेक्षभावमन्तरेण मोक्षफलानुत्पादकत्वात्, ये मिथः सापेक्षतामृते स्वकार्यानुत्पादकास्ते मिथः सापेक्षभावेनैव स्वकार्यसाधकाः, यथा मधुपुटकार्यकारिण्यो मक्षिकाः, यथा वा शिविकोद्वहनकारिणः पुरुषाः, तथा चायं तस्मात्तथा, तदेवं यथा तरणरुचिरपि तत्परिज्ञानमन्तरेण तत्परिज्ञानशाल्यपि तत्क्रियामृते च तत्तव्यसमुद्रमुत्तरितुं न शक्नोति तथा भवोदधितरणोत्कोऽपीत्यतस्सम्यग्दर्शनादित्रयमपि सापेक्षभावेनैव मोक्षैकहेतुः, मोक्षानुकूलफलोपधानसामर्थ्यवत्तत्सम्यग्दर्शनादित्रयस्य मोक्षानुकूलशक्तिमत्त्वेन रूपेणैककारणत्वशालिनः सत्त्वे मोक्षकार्यस्य सत्त्वम्, तदभावे तदभाव इत्येवमन्वयव्यतिरेकप्रमाणगोचरत्वात्, न तु निरपेक्षं सम्यग्दर्शनाद्येकैकम्, स्वरूपयोग्यस्य सम्यग्दर्शनादेरेकतरस्य सत्त्वेऽप्यव्यवधानेन मोक्षकार्याभावादिति सिद्धम् ।

ननु प्रत्येकं सम्यग्दर्शनादिषु त्रिषु मोक्षमार्गत्वापरपर्यायमोक्षानुकूलसामर्थ्यस्याभावे तत्समुदायेऽपि सिकतासमुदाये तैलस्याभाववत्तन्नैव स्यादिति चेत्, नैवम्, भावोऽयमिः

बोधात्, सम्यग्दर्शनत्वादिप्रत्येकधर्मावच्छेदेनाप्येकैकेषु सम्यग्दर्शनादिषु देशतो मोक्षानुकूलशक्तिसद्भावेन प्रत्येकावस्थायामपि देशोपकारित्वेन स्वल्पसामर्थ्यस्य सद्भावात्, दृष्टान्ते तु प्रत्येकरेणौ देशतोऽपि तैलानुकूलशक्त्यभावेन देशोपकारित्वस्याप्यभावेन स्वल्पसामर्थ्यस्याभावाद् दृष्टान्तवैषम्यम्, सम्पूर्णसामर्थ्यं तु सम्यग्दर्शनादित्रयपर्याप्तसमुदायत्वावच्छेदेन परस्परसापेक्षसमुदितसम्यग्दर्शनादिषु त्रिष्वेव पर्याप्तम् । उक्तञ्च विशेषावश्यकभाष्ये—

" वीसुं ण सव्वह च्चिय, सिकतातेल्लं व साहणाऽभावो ।
देसोवगारिया जा, सा समवायम्मि संपुण्णा ॥ ११६४ ॥ " इति ।

एतेन " ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ! " इति वचनात्सञ्चितकर्मनाशे ज्ञानमेव कारणं, प्रारब्धकर्मनाशस्तु भोगादेव, क्रियमाणं तु योगिकर्म मिथ्याज्ञानवासनाऽभावाभादृष्टोत्पादकमिति न क्वापि चारित्रोपयोग इति न चारित्रं मोक्षाङ्गमित्यपि निरस्तम्, ज्ञानाग्निरित्यादेर्ज्ञानस्तुतिमात्रपरत्वात्, ज्ञानचारित्रयोः स्वस्वजन्यकर्मनाशे पृथग्घेतुत्वावश्यकत्वात् विना चारित्रव्यापारमौपक्रमिकफलोपभोगस्य कथमप्यनुपपत्तेः । सङ्गतश्चायमर्थः

" तण्डुलस्य यथा चर्म, यथा ताम्रस्य कालिमा ।
नश्यति क्रियया पुंसः, पुरुषस्य तथा मलम् ॥ १ ॥ "

इत्यादिवाशिष्ठग्रन्थादिनाऽपि । न च मरुदेवीमाता केवलज्ञानावाप्तौ चारित्रं विनाऽपि मुक्तिमवाप्तेति व्यतिरेकव्यभिचाराच्चारित्रं न मोक्षहेतुरित्यपि वाच्यम्, यतो न द्रव्यचारित्रत्वेन मोक्षं प्रति चारित्रस्य हेतुत्वं, किन्तु सम्यक्चारित्रात्मकभावचारित्रत्वेनैव, तद्धर्मावच्छिन्नेनैव सह मोक्षस्यान्वयव्यतिरेकानुविधानात्, तस्य च परमकाष्ठापन्नस्य सर्वसंवररूपस्य शैलेश्यवस्थायां सद्भावादेव तस्या मुक्तिभावात्, तथा च तदा तस्या अवशिष्टान्तर्मुहूर्तायुष्काया आयुषोऽल्पकालतया द्रव्यचारित्रग्रहणकालाभावेन तदभावेऽपि नोक्तदोषः । न चैवं तर्हि द्रव्यचारित्रं नावलम्बनीयमिति वाच्यम्, प्रसन्नचन्द्रराजर्षेरिव द्रव्यलिङ्गस्यात्मविशुद्धिकारणत्वात्, केवलज्ञानोत्पत्तेः पश्चाच्छक्रेन्द्रप्रार्थितभरतचक्रिगृहीतदेवार्पितद्रव्यलिङ्गस्यैव प्रणामार्हतासम्पादकत्वाच्चास्यापि प्रमाणगोचरत्वेनावलम्बनीयत्वात् । उक्तञ्चावश्यकवन्दनकाध्ययननिर्युक्तौ-
" जदा वा दव्वलिंगं नत्थित्ति न कोइ तेण पणमति " इत्यादि ।

तदेवं सम्यग्दर्शनादित्रयसमुच्चयवादविशदीकरणेन भव्यसत्त्वप्रतिबोधार्थं सकलतत्त्वार्थशास्त्राभिधेयप्रतिपादकमाद्यसूत्रं भव्यात्मैकवत्सलतातपादोमास्वातिभगवानाह

॥ सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥ इति

अस्मिन् सूत्रे " उद्देश्यवचनं पूर्वं विधेयं च ततः परम् " इति वचनात् प्रमाणसिद्धानि सम्यग्दर्शनज्ञानचारित्राण्युद्दिश्याऽदग्धदहनन्यायेन तत्राऽप्राप्तं मोक्षमार्गत्वं

विधीयते, मोक्षमार्गत्वञ्च मोक्षकारणत्वम्, तच्च सम्यग्दर्शनत्वेन सम्यग्ज्ञानत्वेन सम्यक्चारित्रत्वेन च पृथग्रूपेण नैवाभ्युपगम्यते जैनैः, येन कारणतावच्छेदकभेदात् कारणताभेदप्रसक्त्या नानाकारणतायामेकवचनार्थस्यैकत्वस्य बाधेनैकवचनानुपपत्तिस्स्यात्, किन्तु मोक्षानुकूलशक्तिमत्त्वेन सम्यग्दर्शनादिषु त्रिष्वनुगतधर्मेणैव, सम्यग्दर्शनत्वं सम्यग्ज्ञानत्वं सम्यक्चारित्रत्वञ्च शक्तेरभिव्यञ्जकविधयैवाऽवच्छेदकं, तस्य च प्रत्येकवर्तिनस्सम्यग्दर्शनादित्रितयवर्त्यखण्डशक्तिरूपकारणत्वापेक्षया न्यूनवृत्तित्वेऽपि न क्षतिः । सखण्डकारणताया अवच्छेदकस्यैवाऽन्यूनानतिरिक्तवृत्तित्वनियमात् । सखण्डकारणताया व्यापकत्वगर्भतया व्यापकत्वलक्षणघटकावच्छेदकताया अन्यूनानतिरिक्तवृत्तिधर्मानिष्ठत्वनियमात् अखण्डकारणताया अतिरिक्तपदार्थतया व्यापकत्वाऽघटितत्वेन तदवच्छेदकतायास्तन्न्यूनवृत्तिधर्मे सत्त्वेऽपि न क्षतिरिति तात्पर्यम् ।

ननु शक्तिमत्त्वेन कारणत्वे कारणताज्ञाने तदवच्छेदकज्ञानस्याऽपेक्षितत्वेन कारणतावच्छेदिकायाश्शक्तेर्ज्ञानाच्छक्तिरूपकारणताज्ञानं, तज्ज्ञाने च तज्ज्ञानमित्यात्माश्रय इति चेत्, मैवम्, प्रतियोगिताज्ञाने प्रतियोगितावच्छेदकज्ञानस्य कारणत्वमित्यत्राऽपि घटाभावीयप्रतियोगितायाः प्रतियोगितावच्छेदकघटत्वरूपत्वपक्षे आत्माश्रयदोषपरिहाराय घटत्वत्वेन घटत्वात्मकावच्छेदकज्ञानं प्रतियोगितात्वेन घटत्वात्मकप्रतियोगिताज्ञानं प्रति कारणमिति यथा स्वीक्रियते तथा शक्तित्वेनाऽवच्छेदकीभूतशक्तिज्ञानं कारणतात्वेन शक्त्यात्मककारणताज्ञानम्प्रति कारणमित्यभ्युपगमेनोक्तदोषाभावात्, तथा च मोक्षानुकूलशक्तिमत्त्वावच्छिन्नशक्तिरूपं कारणत्वं परस्परसाकाङ्क्षसम्यग्दर्शनादिषु त्रिष्वेकमेवेति तस्मिन् सिप्रत्ययप्रकृत्यर्थतावच्छेदके सिप्रत्ययार्थस्यैकत्वस्याऽन्वयः ।

"वेदाः प्रमाणम्" इत्यत्र विशेषणीभूतप्रमाणपदोत्तरविभक्त्यर्थैकत्वस्य सिप्रत्ययप्रकृत्यर्थतावच्छेदकं प्रमितिकरणत्वं यावच्छब्दनिष्ठमेकमेवेति तत्राऽन्वयः, यद्वा "जात्याकृतिव्यक्तयः पदार्थः" इत्यत्र विशेषणीभूतपदार्थपदोत्तरविभक्त्यर्थैकत्वस्य सिप्रत्ययप्रकृत्यर्थतावच्छेदकं पदवाच्यत्वं जात्याकृतिव्यक्तिष्वेकमेवेति तत्रान्वयः, यद्वा "शक्तिर्निपुणता लोक-काव्यशास्त्राद्यवेक्षणात् । काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ।" इति कारिकाया इति त्रयः समुदिता हेतुरिति काव्यप्रकाशव्याख्या, तत्र हेतुपदोत्तरविभक्त्यर्थैकत्वस्य सिप्रत्ययप्रकृत्यर्थतावच्छेदके हेतुत्वेऽन्वयो यथा तथाऽत्रापीति न योग्यताक्षतिः, अत एव विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयबहुत्वसंख्याविरुद्धैकत्वसङ्ख्याया वेदाः प्रमाणमित्यत्रेवाऽत्रापि विवक्षितत्वान्न विशेष्यविशेषणपदयोः समानवचनकत्वप्रसङ्गः । यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्रैव विशेष्यविशेषणपदयोस्समानवचनकत्वमिति नियमात् ।

ननु मार्गपदार्थैकदेशे मार्गत्वे सिप्रत्ययार्थैकत्वान्वये कर्त्तव्ये सति पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तिविरोधप्रसङ्ग इति चेत्तर्ह्युक्तदृष्टान्तत्रये सम्पन्नो व्रीहिरित्यत्र च दर्शिता दृष्टिः, तत्रापि सम्पत्त्याश्रयानेकव्रीहिष्वेकत्वबाधेन व्रीहित्व एवान्वयस्वीकारात् ।

अथ तत्रापि स्वाश्रयवत्त्वसम्बन्धेन सिप्रत्ययार्थैकत्वस्य सिप्रत्ययप्रकृत्यर्थ एवान्वयस्वीकारान्नोक्तव्युत्पत्तिविरोधप्रसङ्ग इति चेत्तर्हि प्रकृतेऽपीदृश्येव गतिरिति विभाव्यताम् ।

तथा च बहुवचनान्तविशेष्यवाचकपदैकवचनान्तविशेषणवाचकपदसामर्थ्यबलादेव कवित्वबीजभूतसंस्कारविशेषलक्षणशक्तिः १ लोककाव्यशास्त्राद्यवेक्षणप्रयुक्तनिपुणता २ काव्यज्ञशिक्षाप्रयुक्तोऽभ्यासः ३ इति त्रयः समुदिताः काव्योद्भवे हेतुरितिवत् समुदितान्येव सम्यग्दर्शनज्ञानचारित्राणि मोक्षहेतुरिति सिद्ध्यति, एतेन तृणारणिमणिन्यायेन यवैर्व्रीहिभिर्वा यजेतेत्यादिवद्वा सम्यग्दर्शनं वा सम्यग्ज्ञानं वा सम्यक्चारित्रं वा मुक्तिकारणमित्येवं वैकल्पिकी कारणता प्रतिक्षिप्ता ।

तथा चाऽत्र मोक्षत्वावच्छिन्नकार्यतानिरूपितशक्तिमत्त्वावच्छिन्नशक्तिरूपैकत्वविशिष्टकारणत्ववन्ति त्रित्वात्मकबहुत्वविशिष्टसम्यग्दर्शनज्ञानचारित्राणीति सूत्रार्थसंक्षिप्तबोधः ।

अत्र त्रित्वात्मकबहुत्वनिष्ठप्रकारतानिरूपितसम्यग्दर्शनत्वावच्छिन्नविशेष्यत्वाभिन्नविशेष्यतानिरूपितत्वे सति तादृशबहुत्वनिष्ठप्रकारतानिरूपितसम्यग्ज्ञानत्वावच्छिन्नविशेष्यत्वाभिन्नविशेष्यतानिरूपितत्वे सति तादृशबहुत्वनिष्ठप्रकारतानिरूपितसम्यक्चारित्रत्वावच्छिन्नविशेष्यत्वाभिन्नविशेष्यतानिरूपिता यैकत्वनिष्ठप्रकारतानिरूपितमोक्षत्वावच्छिन्नकार्यतानिरूपितशक्तिमत्त्वावच्छिन्नशक्तिरूपकारणत्वनिष्ठविशेष्यत्वाभिन्ना स्वरूपसम्बन्धावच्छिन्ना प्रकारता तन्निरूपको बोध इति प्रकारविशेष्यमुद्रयोक्तसूत्रवाक्यार्थबोधः ।

यदैकत्वनिष्ठप्रकारतानिरूपिता या मोक्षत्वावच्छिन्नकार्यतानिरूपितशक्तिमत्त्वावच्छिन्नशक्तिरूपकारणत्वनिष्ठविशेष्यता तदभिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभिन्नाभेदसम्बन्धावच्छिन्नमुक्तिकारणनिष्ठप्रकारतानिरूपिता या बहुत्वनिष्ठप्रकारतानिरूपितसम्यग्दर्शनत्वावच्छिन्नविशेष्यत्वाभिन्ना विशेष्यता तन्निरूपकत्वे सति उक्तप्रकारतानिरूपिता या च बहुत्वनिष्ठप्रकारतानिरूपितसम्यग्ज्ञानत्वावच्छिन्नविशेष्यत्वाभिन्ना विशेष्यता तन्निरूपकत्वे सत्युक्तप्रकारतानिरूपिता या च बहुत्वनिष्ठप्रकारतानिरूपितसम्यक्चारित्रत्वावच्छिन्नविशेष्यत्वाभिन्ना विशेष्यता तन्निरूपको बोध इति प्रकारविशेष्यमुद्रया सूत्रविचारार्थाधिगतिरिति ।

नन्वनेन सूत्रेण सम्यग्दर्शनादित्रयस्य समुदितस्य मोक्षमार्गत्वं प्रतिपादितम्, "ज्ञानक्रियाभ्यां मोक्षः" इत्यनेन ज्ञानक्रिययोरपि समुदितयोः सिद्धान्ते मोक्षमार्गत्वं प्रतिपादितमित्यनयोः कथं न विरोध इति चेत्, मैवं वद, अभिप्रायाऽपरिज्ञानात्, यतो "ज्ञानक्रियाभ्यां मोक्षः" इत्यत्र ज्ञानग्रहणेन सम्यक्त्वमाक्षिप्यते, सम्यग्दर्शनमन्तरेण सम्यग्ज्ञानस्याप्यभावात्, मिथ्यादृष्टिज्ञानस्याज्ञानत्वेनैव प्रतिपादनादिति तत्त्वरुच्यात्मकमतिज्ञानापायांश एव सम्यक्त्वम्, तदाऽज्ज्ञानान्तर्गतमेव सम्यक्त्वमिति ज्ञानग्रहणेन तदपि गृहीतमेवेति न कोऽपि विरोधः ।

एतेन "नाणं पयासयं सोहओ तवो संजमो य गुत्तिकरो ।
तिण्हंपि समाओगे मोक्खो जिणसासणे भणिओ ॥११६९॥" इति ।

इति विशेषावश्यकभाष्योक्त्या ज्ञानतपःसंयमरूपत्रिकस्य समुदितस्य मोक्षमार्गत्वप्रतिपादनात्कथं न विरोध इत्यपि निरस्तम्, ज्ञानपदेन सम्यग्दर्शनस्याप्याक्षेपात् चारित्रस्य संयमतपोभेदद्वयात्मकत्वात्ताभ्यां भेदद्वयाभ्यां चारित्रस्यैव गृहीतत्वाच्च ।

एतेन "ज्ञानक्रियाभ्यां मोक्षः" इत्यनेनाप्युक्तविशेषावश्यकभाष्यविरोधोऽपि न, तपःसंयमयोः क्रियायामेवैकस्यामन्तर्भावाज्ज्ञानक्रियाभ्यामेव तेन भाष्येण मोक्षाप्तेः प्रतिपादनात् । तदुक्तं विशेषावश्यकभाष्ये

"संजमतवोमईं जं संवरनिज्जरफला मया किरिया ।
तो तिगसंजोगो वि हु ताऽ च्चिय नाणकिरियाओ ॥ ११७४ ॥" इति

ज्ञानक्रिययोरपि च वस्तुगत्या सम्यग्दर्शनादित्रयात्मकत्वात्तत्त्रयमेव मोक्षमार्ग इति सिद्धम् । एतेन "सम्यक्श्रद्धासंविच्चरणानि मुक्त्युपायाः" ।१। इति नव्यसूत्रं सूत्रयता प्रस्तुतभावाकलनमतिमता तत्र मुक्त्युपाया इति यद् बहुवचनं प्रोक्तं तदपि निरस्तम्, तथा सति जस्विभक्त्यर्थबहुत्वस्य मुक्त्युपायेऽन्वयात् सम्यक्श्रद्धात्वेन सम्यक्संवित्त्वेन सम्यक्चरणत्वेन प्रत्येकरूपेण मोक्षोपायत्वप्रसक्त्या व्यस्तानि त्रीणि सम्यक्श्रद्धादीनि मुक्त्युपायास्स्युः, न तु समुदितानि, मुक्त्युपाय इत्येकवचनोपादाने सत्येव विशेषणीभूतमुक्त्युपायपदोत्तरविभक्त्यर्थैकत्वस्य सिप्रत्ययप्रकृत्यर्थतावच्छेदकं मुक्त्युपायत्वं मुक्त्यनुकूलशक्तिमत्त्वेन रूपेण समुदितसम्यक्श्रद्धादित्रयनिष्ठमेकमेवेति तत्रान्वयात् प्रमाणसिद्धानि समुदितानि सम्यक्श्रद्धादीनि त्रीण्युद्दिश्य तत्राप्राप्तं मुक्त्यनुकूलशक्तिमत्त्वेन रूपेण मुक्त्येकोपायत्वं विधीयत इति सिध्यति, नान्यथेति ।

अत एव "अस्मात्कारणात् त्रीण्यपि मोक्षमार्गशब्दः समुदितान्यभिधेयीकृत्य प्रवृत्त इत्येकत्वात्तस्य समुदायस्यैकवचनमेव न्याय्यम्" इति तत्त्वार्थबृहट्टीकाकारवचनमपि सङ्गच्छते ।

नन्वेवं तर्हि एतानि समस्तानि मोक्षसाधनानीति भाष्ये कथं व्याख्यातमिति चेत्, उच्यते, तत्र समस्तानीति पदोपादानादेव समुदितान्येव सम्यग्दर्शनादीनि मोक्षानुकूलशक्तिमत्त्वेन रूपेणैककारणत्ववन्ति सिध्यन्तीति बहुवचनान्तविशेष्यानुरोधात् प्रकारवाचिसाधनपदेऽपि बहुवचनमेव न्याय्यम् ।

यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणपदयोस्समानवचनकत्वनियमात् । ननु प्रकृतसूत्रेऽपि समस्तपदप्रयोगादेव तथा सेत्स्यतीति चेत्, नैवम्, प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्यत्र यथा समस्तपदप्रयोगे-

ऽपि प्रमाकरणत्वं प्रत्यक्षेऽनुमाने उपमाने शब्दे च भिन्नमेव सिद्ध्यति तथा प्रकृते समस्तपदप्रयोगकरणेऽपि भिन्नमेव मोक्षसाधनत्वं सम्यक्श्रद्धानादिषु त्रिषु सिद्ध्येत्, न त्वेकमिति, तदन्यथानुपपत्त्यैकवचनमेव न्याय्यम् ।

ननु प्रत्यक्षादौ प्रत्यक्षादिकार्यभेदेन तत्करणत्वभेदान्नैकं प्रमाकरणत्वमिति तद्भिन्नमेव सिद्ध्यतु, सम्यक्श्रद्धादित्रयेषु त्वेकमेव मोक्षसाधनत्वमिति समस्तपदप्रयोगात्तत्सेत्स्यतीति चेत् तर्हि मुच्यतां समस्तपदप्रयोगाग्रहः, उक्तस्थले व्यभिचारात्, स्वीक्रियतां च समुदायस्यैकविशिष्टापरत्वरूपत्वेन विशेषणविशेष्यविनिमयेन कार्यकारणभावबाहुल्यप्रसङ्गतस्तत्त्वेन न कारणत्वं किन्त्वनुगतेन मोक्षानुकूलशक्तिमत्त्वेन, तच्च सम्यक्श्रद्धादित्रयेष्वेकमेवेत्यर्थद्योतकं तत्र कारणत्वे सविभक्त्यर्थैकत्वान्वयाभिप्रायेण मोक्षोपाय इत्येकवचनमेव युक्तमिति ?, एतेन चरणसत्त्वे ज्ञानदर्शनयोरवश्यम्भावित्वेनानन्यथासिद्धनियतपूर्ववृत्तिचरणेनैव कार्यनिर्वाहे श्रद्धासंविदोरन्यथासिद्धिप्रसङ्गपरिहाराय प्रत्येकमपि कारणताबोधकत्वस्यावश्यकत्वादित्युक्तं पूर्वोक्तसूत्रटीकायां तदपि प्रतिक्षिप्तम्, चारित्रस्य क्रियात्मकत्वेन व्यापाररूपतया तद्द्वारैव चक्रभ्रमणक्रियात्मकव्यापारद्वारा दण्डादेरिव सम्यग्दर्शनज्ञानयोः कारणत्वेन क्लृप्तत्वाच्चारित्रक्रियात्मकव्यापारेण तयोरन्यथासिद्ध्यभावात्, व्यापारिणः कारणत्वरक्षणायाभ्युपगतेन व्यापारेण व्यापारिणोऽन्यथासिद्धेः केनाप्यनभ्युपगमात्, अन्यथा व्यापारिकारणत्वग्राहकनयेन व्यापारस्याप्यन्यथासिद्ध्यभ्युपगमात् व्यापार्यात्मकसम्यक्श्रद्धासंविद्भ्यां व्यापाररूपस्य सम्यक्चरणस्यान्यथासिद्धिप्रसङ्गस्स्यात्, न चानन्यथासिद्धनियतपूर्ववर्तिना चरणेन मोक्षकार्यनिर्वाहे तद्व्यवहितयोश्श्रद्धासंविदोरन्यथासिद्धिरिति वाच्यम्, अनन्यथासिद्धनियतपूर्ववर्तिना शैलेश्यवस्थाभाविसर्वसंवरचारित्रेण मोक्षकार्योत्पत्तेस्तद्व्यवहितस्य केवलज्ञानस्याप्यन्यथासिद्धिप्रसङ्गस्स्यात्, स्याच्च सर्वथायोगनिरोधरूपत्वेन सर्वाश्रवत्यागलक्षणसर्वसंवररूपाऽलेश्यचारित्रेण तद्व्यवहितसलेश्यचारित्रमप्यन्यथासिद्धम् ।

अथ सलेश्यं क्षायोपशमिकचारित्रं क्षायोपशमिकभावं परित्यज्य क्षायिकभावेन परिणमितं सत् शैलेश्यवस्थायां परमनिवृत्तिलक्षणपरमस्थैर्यरूपं सञ्जातमिति तद्द्वारा तदपि मोक्षं प्रत्यव्यवहितकारणमिति चेत्तर्हि क्षायोपशमिकसम्यग्दर्शनज्ञाने क्षायोपशमिकभावपरित्यागेन क्षायिकभावेन परिणाममवाप्नुत इति क्षायिकभावद्वारा तदुभयमपि मोक्षं प्रत्यव्यवहितपूर्ववर्त्येवेति तदपि कारणं स्यादेव, तदेवं खण्डखाद्ये

"चिन्तारुतां परमभावनयात्त्वभिन्नरत्नत्रयीं गलितबाह्यकथां विधत्ते ॥९१॥"

इत्युक्तेस्सम्यग्दर्शनादित्रयाणां मोक्षानुकूलैकशक्तिमत्त्वेनैककारणत्वात्पूर्वोक्तमज्ञानविजृम्भितमेव । एतेन सम्पूर्णदर्शनस्यास्य मोक्षाऽसाधारणकारणे रत्नत्रये तात्पर्येण तत्र गुरुत्वाभिमानेन बहुवचनस्योक्तत्वाच्चेत्यपि तत्सूत्रटीकायामुक्तं निरस्तम्, यत्र मोक्षानुकूल-

(यशो० टीका) इदमाद्यमनवद्यमुक्तिपथोपदेशसूत्रं सकलतत्त्वार्थशास्त्राभिधेयमुररीकृत्य प्रवृत्तम्, द्वादशाङ्गप्रवचनार्थसङ्ग्राहिसामायिकसूत्रवत्, अथ कस्माद्धेतव एवादौ मोक्षस्योच्यन्ते, न तु मोक्ष एवेति चेत्, न, सुखदुःखाभावत्वाद्युद्देश्यतावच्छेदकरूपेण तत्र वादिनामविप्रतिपत्तेः, कार्यार्थिना कारणावत्तजन्मत्वेन तदुपादानस्यैवादौ न्याय्यत्वाच्च । अत्र सम्यक्शब्दस्य दर्शनसन्निधौ श्रूयमाणस्य तेनैव सहान्वयः स्यात्, न ज्ञानचारित्राभ्यामिति कस्यचिदाशङ्का स्यात्तन्निवारणार्थमाह भाष्यकारः

शक्तिमत्त्वावच्छिन्नैककारणत्वद्योतनरूपमूलतत्त्वहानिस्तत्र मानार्थे बहुवचनमित्यपि न युक्तियुक्तमित्यलं पल्लवितेन । सकलतत्त्वार्थशास्त्राभिधेयमुररीकृत्य प्रवृत्तमिति-अस्मिञ्छास्त्रे प्रसङ्गानुप्रसङ्गतस्सम्यग्दर्शनादित्रयाणां पदार्थानां मुक्तिकारणत्वेन निरूप्यमाणत्वादिति हेतुरूह्यः । तत्र दृष्टान्तमाह-द्वादशाङ्गेत्यादि । ननु सर्वेषु पुरुषार्थेषु मोक्षस्यैव प्रधानत्वादादौ तदुपदेशस्यैव विधानार्हत्वेऽपि किमिति न स कृतः ? किमिति स मोक्षमार्गोपदेश एव कृत इत्याशङ्कते अथेति । तन्निषेधे हेतुमाह सुखेत्यादि । ये मोक्षार्थिनस्ते सर्वे सुखं भूयाद् दुःखञ्च मा भूयादित्येवं सुखं दुःखाभावञ्चोद्दिश्यैव प्रवर्त्तन्त इत्युद्देश्यतावच्छेदकीभूतेन सुखत्वेन दुःखाभावत्वेन च रूपेण मोक्षं प्रति वादिनां विवादाभावादित्यर्थः । अयम्भावः-यद्यपि तत्तद्वादिनः स्वस्वकल्पनाभेदान्मोक्षलक्षणांशे मोक्षतत्तद्धेत्वंशे च विप्रतिपद्यन्ते, न च तथापि मोक्षे केऽपि वादिनो विवदन्ते, तस्य सर्वैरप्यभ्युपगम्यमानत्वात्, यतो नास्तिकोऽपि चार्वाको देहहानं मुक्तिरिति फूत्करोति । यथा गन्तव्यं पाटलिपुत्रनगरं प्रति न केऽप्यस्ति न वेति विप्रतिपद्यन्ते, किन्तु किं तन्नगरं महदमहद्वेति तत्स्वरूपांशे नानादिग्भागापेक्षिषु तन्मार्गेषु च विवदन्ते तथात्रापीति मन्यमानः परकल्पितमोक्षलक्षणांशमग्रे निरसनीयमिति कृत्वाऽऽदौ परपरिकल्पिततत्तद्धेतूनामन्वयव्यतिरेकव्यभिचाराभ्यामहेतुत्वं त्रिभुवनगुरुकेवलालोकालोकितमोक्षमार्गभावानां समुदितसम्यग्दर्शनादित्रयाणां प्रमाणयुक्त्युपपन्नं हेतुत्वञ्च पश्यन् सम्यग्दर्शनादित्रयात्मकमोक्षहेतूपदेशमनादिदुस्तरसंसारसागरनिमग्नानेकप्राणिगणोद्दिधीर्षुराचार्यः कृतवानिति । तत्र हेत्वन्तरमप्याह कार्यार्थिनेत्यादि । अत्रेदमवधेयम् स्यादारेका-प्राङ्मोक्षकारणनिर्देशाद् बन्धकारणनिर्देशो न्याय्यः, यतो बन्धपूर्वको मोक्ष इति, तन्न मनोरमम्, आश्वासनार्थत्वात्, कथमिति चेत्, उच्यते-कारागारबन्धनबद्धः प्राणी आदावेव बन्धकारणश्रवणादेतत्कारणवशादस्मिन्नेवातिदुःखमये कारागृहे बद्धात्मना मया किं चिरकालं स्थातव्यमिति बिभेति, मोक्षकारणश्रवणादेतत्कारणवशात्सत्वरं कारागृहस्य बन्धनमुत्क्रोट्य ततो मोक्ष्यामीत्याश्वसिति, तद्वदनादिसंसारकारावासाऽवरुद्ध आत्मा प्रथममेव बन्धकारणान्माऽभैषीत्, मोक्षकारणश्रवणाच्च भव्यात्माऽऽश्वासं यायादिति प्राग्बन्धकारणमनुक्त्वा मोक्षकारणोपदेशः कृत इति । सम्यग्दर्शनज्ञानचारि-

(भा०) सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रमित्येष त्रिविधो मोक्षमार्गः । तं पुरस्ताल्लक्षणतो विधानतश्च विस्तरेणोपदेक्ष्यामः । शास्त्रानुपूर्वीविन्यासार्थं तूद्देशमात्रमिदमुच्यते । एतानि च समस्तानि मोक्षसाधनानि । एकतराभावेऽप्यसाधनानीत्यतस्त्रयाणां ग्रहणम् । एषां च पूर्वलाभे भजनीयमुत्तरम् । उत्तरलाभे तु नियतः पूर्वलाभः ॥

(यशो० टीका) सम्यग्दर्शनमित्यादि । तथा च सम्यक्शब्दस्त्रिष्वपि योजनीय इति भावः । अनन्तानुबन्ध्यादिक्षयाद्युत्था रुचिः सम्यग्दर्शनं, लक्ष्यलक्षणव्यवहाराव्यभिचारात्मकं मत्यादि सम्यग्ज्ञानम् ।

त्राणीति सूत्रे समिति सम्यक् अवैपरीत्येनाञ्चति प्रवर्तत इति सम्यक्, दर्शनञ्च ज्ञानञ्च चारित्रञ्च एतेषामितरेतरयोगद्वन्द्वसमासे दर्शनज्ञानचारित्राणि, सम्यञ्चि च तानि दर्शनज्ञानचारित्राणीति सम्यग्दर्शनज्ञानचारित्राणीति द्वन्द्वगर्भकर्मधारयसमासस्यैव कर्त्तव्यत्वेन द्वन्द्वघटकसकलपदार्थानां समप्राधान्यात्तत्समासघटकसकलपदार्थैस्सह तत्समासाघटकपदार्थस्यान्वयो युक्त इत्येतन्मूलकेन द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत इति न्यायेन द्वन्द्वसमासाघटकसम्यक्पदस्य द्वन्द्वसमासघटकदर्शनादिपदत्रयेण सहान्वयः कर्त्तव्यः, न तु केवलं दर्शनपदेन सहेत्याशयेन भावार्थमाह–तथा च सम्यक्शब्दस्त्रिष्वपि योजनीय इति । अत्राह–दर्शनशब्दापेक्षया ज्ञानशब्दस्याल्पाच्तरत्वात् पूर्वनिपातः प्राप्नोति, नैष दोषः, यतोऽभ्यर्हितत्वाद्दर्शनस्य ज्ञानात्पूर्वनिपातः, अभ्यर्हितानभ्यर्हितयोर्मध्येऽभ्यर्हितस्यैव बलीयस्त्वमिति न्यायात् अभ्यर्हितञ्च सर्वतो बलीयः ।

ननु कुतोऽभ्यर्हितत्वं दर्शनस्य, न पुनर्ज्ञानस्य पुरुषार्थचतुष्टयसिद्धिनिबन्धनस्येति चेत्, उच्यते–सम्यग्दर्शनात्प्राग् ज्ञानमज्ञानमेव मिथ्यादृष्टेः, न हि मिथ्यात्वसहचरितं तत् दूरभव्यादेरिव तस्य सकलपुरुषार्थसाधनम्, सम्यग्दर्शनोत्पत्तौ च सत्यां तत् सम्यग्ज्ञानम्, तत्काले मिथ्याज्ञानस्यैव सम्यग्ज्ञानरूपेण परिणमनात्, तदेव च मोक्षरूपपरमपुरुषार्थस्यापि साधकम्, तथा च ज्ञानगतसम्यक्त्वहेतुत्वात् चारित्रगतसम्यक्त्वापादकत्वाच्च सम्यग्दर्शनमेवाभ्यर्हितमिति सिद्धम् । ननु यदैव सम्यग्दर्शनमुत्पद्यते तदैव मतिज्ञानावरणीयश्रुतज्ञानावरणीयकर्मक्षयोपशमतो मत्यज्ञानश्रुताज्ञाननिवृत्तिपूर्वकं शक्त्यपेक्षया मतिज्ञानं श्रुतज्ञानञ्चाविर्भवत इति सम्यग्दर्शनसम्यग्ज्ञानयोर्युगपद्भावाद्धेतुहेतुमद्भावाभावेन नोक्तं युक्तमिति चेत्, मैवम्, निश्चयनयतः प्रतापप्रकाशयोरिव युगपद्भाविनोरपि तयोर्हेतुहेतुमद्भावाभ्युपगमात् । न च तथापि निश्चयतो ज्ञानी सम्यग्दर्शनमवाप्नोतीति ज्ञानस्यैव प्राधान्येनाभ्यर्हितत्वमिति वाच्यम्, ज्ञान्यपि सम्यग्दर्शनोत्पत्तेरेव, अन्यथा तत्पूर्वमपि ज्ञानीति व्यपदेशः कुतो नेत्यत्रापि दीयतां दृष्टिरित्यलं प्रसङ्गेन । सम्यग्दर्शनलक्षणमाह अनन्तानुबन्ध्यादिक्षयाद्युत्था रुचिरिति–अनन्तानुबन्धिक्रोधमानमायालोभसम्यक्त्वमोहनीयमिश्रमोहनीयमिथ्यात्वमोहनीयसप्तप्रकृत्युपशमक्षयोपशमक्षयान्यतमोत्था यज्जिनैः प्रज्ञप्तं तदेव तथ्यं निश्शङ्कमित्याकारा तत्त्वार्थश्रद्धालक्षणा रुचिरित्यर्थः । सम्यग्ज्ञानलक्षणमाह–लक्ष्य-

ज्ञानपूर्वकं सदसत्क्रियाप्रवृत्तिनिवृत्तिलक्षणं सम्यक्चारित्रम् ।

अथ किमर्थं प्रत्येकं सम्यक्शब्दप्रयोगः, सम्यग्दर्शने सति ज्ञानचरणयोः सम्यक्त्वाव्यभिचारादिति चेत्, देशज्ञानदेशचारित्रनिवृत्त्यर्थमिति प्राञ्चः। वस्तुतः सति पारमार्थिके चारित्रपरिणामे शुभौघसंज्ञानुगतगुरुपारतन्त्र्यलक्षणज्ञानतद्रुचिरूपदर्शनाभ्यामपि माषतुषादीनां कार्यसिद्धिप्रदर्शनात् समीच एकतरस्यापीतरोभयसम्यक्त्वाक्षेपकत्वादविनिगमादेव सर्वत्र तत्प्रयोग इति स्मर्तव्यम् । इतीयानिति शब्द इयत्तादर्शकः, एष बुद्धिप्रत्यक्षः, त्रिविधस्त्रिप्रकारो मोक्षस्य स्वभावसमवस्थानरूपस्य, मार्गः शुद्धिरित्येके ।

**लक्षणाव्यवहाराव्यभिचारात्मकं मत्यादि सम्यग्ज्ञानमिति**—उपयोगलक्षण आत्मेत्यादौ यथार्थज्ञाने सत्येव आत्मा लक्ष्यः, उपयोगो लक्षणमिति व्यवहारः कर्त्तुं शक्यते, नाऽन्यथा, तथा चेदं लक्ष्यमिदञ्च लक्षणमिति यथार्थव्यवहारप्रयोजनकं यथार्थावगाहिमत्यादिज्ञानं सम्यग्ज्ञानमित्यर्थः । तत्र ज्ञाने सम्यक्त्वमप्रामाण्यज्ञानानास्कन्दितज्ञानग्राह्यं यदर्थाव्यभिचारित्वं तल्लक्षणमेव ज्ञेयम् । अतोऽर्थाव्यभिचारिणि ज्ञानेऽप्रामाण्यशङ्कायामपि न शुद्धत्वम् । सम्यक्चारित्रलक्षणमाह—**ज्ञानपूर्वकं सदसत्क्रियाप्रवृत्तिनिवृत्तिलक्षणं सम्यक्चारित्रमिति** । द्वादशभावनादढीकृतसंसारासारताज्ञानगर्भितवैराग्यादिपूर्विका निष्प्रतिद्वन्द्वशश्वत्सुखात्मकमोक्षफलोत्पादकत्वेनेष्टसाधनत्वज्ञानहेतुका शास्त्रविहितपञ्चमहाव्रतादिसदनुष्ठानक्रियाप्रवृत्तिः, या च संसारपरिभ्रमणहेतुत्वेनानन्तदुःखप्रदानप्रत्यलतयाऽनिष्टसाधनत्वज्ञानाच्छास्त्रनिषिद्धाया आरम्भादिक्रियाया निवृत्तिस्तल्लक्षणं सम्यक्चारित्रमित्यर्थः । **देशज्ञानदेशचारित्रनिवृत्त्यर्थमिति प्राञ्चः**- न कतिपयदार्थज्ञान देशविरतिरूपदेशचारित्रयोस्साक्षान्मोक्षमार्गत्वम्, अपि तु समग्रार्थविषयकज्ञानसर्वचारित्रयोरेवेति तत्सम्यक्त्वपरिज्ञानार्थं प्रत्येकं सम्यक्शब्दप्रयोग इत्यर्थः । **शुभौघसंज्ञानुगतगुरुपारतन्त्र्यलक्षणज्ञानतद्रुचिरूपदर्शनाभ्यामपीति** सामान्यावबोधक्रियालक्षणा सामान्यप्रवृत्तिलक्षणा वा शुभा यौघसंज्ञा तदनुगतं गुरुपारतन्त्र्यं ज्ञानाधिकाचार्याधीनत्वं यत्तज्ज्ञानं बोधो गुरुपारतन्त्र्यज्ञानानुरूपश्रद्धारूपं च यद्दर्शनं ताभ्यामपीत्यर्थः । अथवा शुभमविपर्यस्तम्, ओघेन—सामान्येन सुबहुविशेषावधारणाऽक्षमं यत्संज्ञानं वस्तुतत्त्वसंवेदनरूपं तल्लक्षणा या संज्ञा तदनुगतं गुरुपारतन्त्र्यं ज्ञानाधिकाचार्याधीनत्वं यत्तज्ज्ञानं बोधो गुरुपारतन्त्र्यरूपज्ञानोचिता या रुचिश्श्रद्धानं तद्रूपदर्शनञ्च ताभ्यामपीत्यर्थः । **माषतुषादीनां कार्यसिद्धिदर्शनादिति**—विशिष्टश्रुतवर्जितानामपि माषतुषादीनां सामायिकपदस्यार्थेऽप्यशक्तानामत एवातिजडबुद्धीनां गुर्वाज्ञावशवर्त्तित्वेन केवलज्ञानलक्षणकार्यसिद्धिदर्शनादित्यर्थः । उक्तञ्च—"एवं सामायिकाद्यर्थेऽप्यशक्तो गुरुभक्तितः । ज्ञानकार्यमसौ लेभे, कालतः केवलश्रियम् ॥१॥" इति । **अविनिगमादेव**—एकपक्षस्थापकयुक्तिविरहादेव । **इयत्तादर्शक इति**—सम्यग्ज्ञानदर्शनचारित्रैतत्त्रयापेक्षया न न्यूनोऽधिको वा मोक्षमार्ग इत्यर्थसूचक इत्यर्थः । एतत्तदोः प्रत्यक्षग्राह्ये पुरोवर्त्तिन्येवार्थे प्रयोगादेष इत्यस्यार्थमाह—**बुद्धिप्रत्यक्ष इति** ग्रन्थकृद्बुद्धिस्थतया

मोक्षस्य सिद्धिस्थानस्य मार्गः पन्था इत्यपरे, मोक्षस्य कर्माष्टकक्षयलक्षणस्य मार्ग उपधायको हेतुरिति वयम् । किमेतावदेव मोक्षमार्गोपदेशनमुतास्त्यन्यदित्यत आह तं पुरस्तादित्यादि । तं मोक्षमार्गम्, पुरस्तादुपरितनसूत्रेषु, लक्षणत इति लक्ष्यतेऽनेनेति लक्षणम् । तद् द्विधाऽन्तर्बहिर्भेदेन, रुचिपरिच्छेदानुष्ठानाख्याः पौरुषेय्यः शक्तयोऽन्तर्लक्षणं सम्यग्दर्शनादेः । बाह्यं तु तद्व्युत्पादकः शब्दराशिः, ततस्तमाश्रित्य, तथा विधानं भेदस्ततो, विस्तरेण व्यासेन, वक्ष्यामः । विस्तरस्य पुरस्तादवश्यवाच्यत्वे सामान्याभिधानस्यास्य किं प्रयोजनमित्यत आह शास्त्रानुपूर्वीत्यादि । शास्त्रस्यानुपूर्वी परिपाटी तस्या विन्यासो रचना, तत्प्रयोजनार्थम्, तुशब्दाल्लाभक्रमप्रदर्शनार्थं, शुश्रूषूणामादरप्रतिपादनार्थं चेत्यूह्यम् । उद्देशमात्रम्—अविशिष्टपदार्थाभिधानमात्रम्, इदमुच्यते—उद्देशवाक्यलक्षणमेतावता यद्यपि विशेषाभिधानप्रयोजकजिज्ञासाजनकसामान्याभिधानत्वं पर्यवस्यति, तथापि तत्र न तात्पर्यम्, लक्षित-

प्रत्यक्षग्राह्य इत्यर्थः । स्वभावसमवस्थानरूपस्येति—द्रव्यक्षेत्रकालभावभेदेन विशुद्धात्मस्वरूपावस्थानरूपस्येत्यर्थः । आत्मा कर्माष्टकान्मुक्तः सन्निर्लेपालाबुकवदूर्ध्वगमनस्वभावत्वादऽपुनरागत्या यत्स्थानं गत्वा सिध्यति संपूर्णकृतकृत्यो भवति तत्स्थानमप्याधारभूतं लोकाग्राख्यमुपचारान्मोक्ष इत्यभिप्रायेणाह—मोक्षस्य सिद्धिस्थानस्येति—तिष्ठन्ति सकलकर्मक्षयावाप्तानन्तज्ञानसुखस्वरूपाध्यासिताः शुद्धात्मानोऽस्मिन्निति स्थानम्, सिद्धेरस्थानं सिद्धिस्थानं लोकाग्रं विशिष्टक्षेत्रं तस्येत्यर्थः । तदुक्तं विशेषावश्यकभाष्ये लोगग्गमोमागो सिद्धिखेत्तं जिणक्खायं ॥३१६२॥ इति । यद्वा सिद्धिगतिनामस्थानस्येत्यर्थः । मोक्षणं मोक्ष इति व्युत्पत्तिमवलम्ब्य टीकाकारस्स्वाभिप्रायेण मोक्षपदार्थमाह—मोक्षस्य कर्माष्टकक्षयलक्षणस्येति । उपधायको हेतुरिति—मोक्षाव्यवहितपूर्ववर्त्ती हेतुः, नियमेन मोक्षोत्पादको हेतुः, न त्वरण्यस्थदण्डवत्केवलस्वरूपयोग्यो हेतुः, तथा सत्यरण्यस्थदण्डेन घटानुत्पत्तिवत्केनाऽपि सम्यग्दर्शनादित्रयेण मुक्त्यनुत्पत्तिरपि स्यादिति भावः । लक्ष्यतेऽनेनेति लक्षणमिति लक्ष्यतावच्छेदकसमनियतधर्मो हि लक्षणम्, सामनैयत्यञ्च तद्व्याप्यत्वे सति तद्व्यापकत्वमित्यर्थः । तदिति—लक्षणमित्यर्थः । तद्व्युत्पादकः शब्दराशिरिति रुच्याद्यात्मकसम्यग्दर्शनाद्यन्तर्लक्षणज्ञानजनकस्तत्त्वार्थश्रद्धानं सम्यग्दर्शनमित्यादिसूत्रशब्दराशिरित्यर्थः । तत्प्रयोजनार्थमिति—प्रथमं सम्यग्दर्शनं तदनु ज्ञानं ततश्च चारित्रमित्येवमनुक्रमेण लक्षणविधानाभ्यां विवरणार्थमित्यर्थः । लाभक्रमप्रदर्शनार्थमिति—"सुहायपरिणामरूवं सम्मत्तं पाउणइ, तल्लाहसमकालं दुवे नाणाणि, तं जहा—मइनाणं च सुअनाणं च" इति वचनात् लब्ध्यपेक्षया सम्यग्दर्शनज्ञाने युगपज्जायेते, ततश्च चारित्रमिति यद्वा पूर्वं निसर्गसम्यग्दर्शनं पश्चादप्रामाण्यज्ञानानास्कंदितज्ञानग्राह्यप्रामाण्यविशिष्टागमार्थविषयकशाब्दप्रमारूपविशिष्टज्ञानं, तदनन्तरं सम्यक्चारित्रमिति प्राप्तिक्रमप्रदर्शनायेत्यर्थः । शुश्रूषूणामादरप्रतिपादनार्थमिति—शास्त्रीयसंक्षिप्तविषयाभिधाय्युद्देशवाक्यमन्तरेणैतच्छास्त्रे मदभिलषित एव विषयः प्रतिपादनीय इति नाऽभिधेयज्ञानं, तदन्तरेण तदर्थिनामपि न तच्छास्त्रश्रवणैकतानचित्ततालक्षणादरतः प्रवृत्ति-

विभागोत्थापके लक्षणवाक्येऽतिप्रसक्तेः, नापि लक्ष्यतावच्छेदकातिरिक्तासाधारणधर्मानुपरागेण वस्तुप्रतिपादकं वचनमुद्देश इत्यपि सम्यक्, लक्षणवाक्यस्थलक्ष्यभागेऽतिव्याप्तेः, तथापि लक्षणवाक्याद्यसमभिव्याहृतं सामान्याभिधानमुद्देश इत्यत्र भाष्यकृतस्तात्पर्यम्। न च सामान्यं लक्षणपरीक्षावाक्यविषयीभूते ग्राह्यम्, अन्यथा घट इत्यादिलौकिकवाक्येऽतिव्याप्तेरित्यन्योन्याश्रयापत्तिरिति शङ्कनीयम्। शास्त्रविषयीभूतसामान्योपादाने तद्दोषाभावादिति दिक्। उद्देशवाक्यस्य सावधारणत्वादाह—एतानि चेति। समस्तानि मिलितानि, मोक्षसाधनानि, एकतराभावेऽप्यसाधनानि, स्वरूपयोग्यत्वेऽपि फलोपधानाभावादिति तत्प्रवृत्त्युपपादनार्थमित्यर्थः। **विशेषाभिधानप्रयोजकजिज्ञासाजनकसामान्याभिधानत्वमिति**—अस्य चैवं सङ्गमनं, नाममात्रेण वस्तुसंकीर्तनलक्षणोद्देशेन सामान्याभिधाने सति किमस्योद्दिष्टस्य लक्षणं के वा भेदा इत्यादि विशेषजिज्ञासा शिष्यस्य समुद्भवति, तया च शिष्येण प्रश्ने कृते गुरुणा लक्षणाद्यभिधानं क्रियत इति हेतोर्लक्षणभेदादिरूपविशेषाभिधानप्रयोजकलक्षणभेदादिजिज्ञासाजनकत्वमुद्देशवाक्ये इति। तत्र न तात्पर्यमित्यत्र हेतुमाह—**लक्षितविभागोत्थापके लक्षणवाक्येऽतिप्रसक्तेरिति**—लक्षितं यत्सम्यग्दर्शनं तद्विभागस्तद्भेदो निसर्गसम्यग्दर्शनमधिगमसम्यग्दर्शनञ्चेति भेदद्वयात्मकः, तदुत्थापके तत्त्वार्थश्रद्धानमिति लक्षणवाक्येऽतिव्याप्तेरित्यर्थः, तथाहि विशेषाभिधानं 'तन्निसर्गादधिगमाद्वा' इति सूत्रेण निसर्गसम्यग्दर्शनाधिगमसम्यग्दर्शनभेदद्वयाभिधानं, तत्प्रयोजकजिज्ञासा तत्सम्यग्दर्शनं कतिविधमित्याकारा जिज्ञासा, तज्जनकं सामान्याभिधानं तत्त्वार्थश्रद्धानमिति सम्यग्दर्शनलक्षणाभिधानमिति तत्राऽलक्ष्ये लक्षणस्य गतत्वादतिव्याप्तिरिति भावः। **नापीत्यस्येत्यपि सम्यगित्यनेनान्वयः**। निषेधे हेतुमाह **लक्षणवाक्यस्थलक्ष्यभागेऽतिव्याप्तेरिति**—तत्त्वार्थश्रद्धानं सम्यग्दर्शनमिति लक्षणवाक्यघटकीभूते सम्यग्दर्शनमिति लक्ष्यांशेऽतिव्याप्तेरित्यर्थः। **न चेत्यस्य शङ्कनीयमित्यनेनान्वयः**। **अन्यथा**—लक्षणपरीक्षावाक्यविषयस्य सामान्यस्याऽग्रहणे। **अतिव्याप्तेरिति** उक्तवाक्यमपि घटत्वसामान्याभिधानरूपमिति तस्योद्देशत्वापत्तिस्स्यादित्यर्थः। **अन्योन्याश्रयापत्तिरिति** विशिष्टबुद्धौ विशेषणज्ञानं कारणमिति न्यायेनोद्देशविशेषणीभूतलक्षणपरीक्षाज्ञाने सति तद्घटितोद्देशज्ञानमुद्देशे कृते सति लक्षणं परीक्षा च क्रियत इति हेतोस्तदनु लक्षणपरीक्षाज्ञानम्, तथा चोद्देशज्ञाने लक्षणपरीक्षाज्ञानस्य लक्षणपरीक्षाज्ञाने चोद्देशज्ञानस्यापेक्षणादन्योन्याश्रयापत्तिरित्यर्थः। न च शङ्कनीयमित्यत्र हेतुमाह **शास्त्रविषयीभूतसामान्योपादाने तद्दोषाभावादिति**। यदि सम्यग्दर्शनादावेकैकस्मिन् स्वरूपयोग्यत्वं न स्यात्तर्हि तदितरसकलसामग्रीसमवधानेऽपि तेन मोक्षकार्योत्पत्तिर्न स्यादित्यत आह **स्वरूपयोग्यत्वेऽपीति** मोक्षत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकधर्मवत्त्वेऽपीत्यर्थः। **फलोपधानाभावात्** मोक्षात्मककार्याव्यवहितप्राक्क्षणावच्छेदेन मोक्षात्मककार्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वलक्षणमोक्षकारणत्वाभावात्। आशङ्कते—नन्वित्यादिना चेदित्यन्तेनेति। अत एवेत्यस्येत्यपि वार्त्तमित्यनेनान्वयः।

भावात्, इत्यतस्त्रयाणां ग्रहणम् । ननु तथाप्यवधारणानुपपत्तिः, मिलितेष्वपि सम्यग्दर्शनादिषु मुमुक्षोः सम्यग्यतमानस्यापि निःश्रेयसमनवाप्योपरतेर्बहुशः श्रवणात्, उक्तं च ग्रन्थकृतैव "संहननायुर्बलवीर्यसम्पत्समाधिवैकल्यात् । कर्मातिगौरवाद्वा, स्वार्थमकृत्वोपरममेति ॥ १ ॥" इत्यादि, अत एव संहननादिस्वेतरसकलकारणाक्षेपकत्वमेव सम्यक्त्वमित्यपि वार्तम्, द्रव्यदेवसाधौ व्यभिचारात्, स्वेतरसकलकारणाक्षेपकत्वरूपं सम्यक्त्वं च तथाभव्यत्वव्यपदेशभाजि भव्यत्व एव प्रसिद्धम्, 'ण य सव्वहेउतुल्लं, भव्वत्तं हंदि सव्वजीवाणं । जं तेणेवक्खित्ता, णो तुल्ला दंसणाईआ' इत्यादि हारिभद्रवचनादिति का वार्ता तादृशसम्यक्त्वस्य दर्शनादाविति चेत्, सत्यम्, मोक्षोपधायकतावच्छेदकधर्मविशेषस्यैव सम्यक्त्वस्येह ग्रहणेन दोषाभावात् । स च धर्मः प्रमाणार्पणया समूहे, समूहान्वयव्यतिरेकाभ्यां समूह एव कारणता-

वार्तम् तुच्छम् । **संहननादिस्वेतरसकलकारणाक्षेपकत्वमेवेति**–संहननादीनि यानि स्वेतरसकलकारणानि तदाक्षेपकत्वमेव तत्समवधाननियतसमवधानकत्वमेवेत्यर्थः । **द्रव्यदेवसाधाविति**–देवभवोपपातयोग्ये साधावित्यर्थः । उक्तञ्च–"मिउपिंडो दव्वघडो, सुसावगो तह य दव्वसाहुत्ति । साहू अ दव्वदेवो, एमाइ सुए जओ भणिअं ॥१॥" इति । उक्तञ्चोपदेशपदेऽपि–"वेमाणिओववाउत्ति दव्वदेवो जहा साहू" २५५ । इति । 'वेमाणिओववाउत्ति' वैमानिकेषु देवेषूपपातो यस्य स तथेत्येवं कृत्वा द्रव्यदेवसाधुर्देवत्वकारणभावापन्न इत्यर्थः । **व्यभिचारादिति** संहननादिस्वेतरकारणसमवधाननियतसमवधानकत्वलक्षणसम्यक्त्वशालिनि दर्शने ज्ञाने चारित्रे च सत्यपि द्रव्यदेवसाधौ मोक्षकार्याऽभावेनाऽन्वयव्यभिचारादित्यर्थः । **स्वेतरसकलकारणाक्षेपकत्वरूपमिति** स्वेतरसकलकारणसमवधाननियतसमवधानकत्वमित्यर्थः, इत्युक्तं नयामृततरङ्गिण्याम् । **तथाभव्यत्वव्यपदेशभाजीति**–कालनैयत्यादिना प्रकारेण वैचित्र्यमापन्नं तथाभव्यत्वं तद्व्यवहारशालिनीत्यर्थः । **भव्यत्व इति**–सिद्धिगमनयोग्यतावच्छेदकधर्मवत्त्वलक्षणेऽनादिपारिणामिकभावे । चरिमपरियट्टविंशिकाख्यचतुर्थविंशिकागतसप्तदश्या गाथायास्साक्षित्वमाह–ण य सव्वहेउतुल्लमित्यादि । उत्तरयति–सत्यमित्यादिना । समूहे–सम्यग्दर्शनज्ञानचारित्रैतत्त्रयसमूहे । तत्र हेतुमाह–**समूहान्वयव्यतिरेकाभ्यां समूह एव कारणताग्रहादिति**–न सम्यग्दर्शनमात्रेण न वा सम्यग्ज्ञानमात्रेण न वा सम्यक्चारित्रमात्रेण मोक्षकार्यं भवति, किन्तु सामग्री वै जनिकेति न्यायात्परस्परसापेक्षसम्यग्दर्शनादित्रयसमूहे सति मोक्षः, तदभावे तदभाव एवेत्यन्वयव्यतिरेकाभ्यां समूह एव कारणताग्रहादित्यर्थः । न च घटत्वावच्छिन्नं प्रति दण्डत्वेन मृत्त्वादिना च प्रत्येकरूपेण दण्डमृदादीनां कारणत्वे सिद्धे तत्समूहोऽन्यथासिद्धः तद्वत्प्रकृतेऽपीति वाच्यम्, प्रमाणविवक्षया परस्परनिरपेक्षप्रत्येककारणमात्रेण कार्यसिद्ध्यभावेन तं प्रति परस्परसापेक्षतत्तत्कारणसमूहस्यैव कारणत्वात्, अत एव सामग्री वै जनिकेति सिद्धान्तस्सङ्गच्छते, यद्यपि क्षायिकसम्यग्दर्शने सति केवलज्ञानमुत्पद्यते तेन च सर्वसंवराख्यचारित्रमिति तेषां व्यापार-

र्हात्, नयार्पणया त्वावापोद्वापाभ्यां प्रत्येकं, चरमकारणेऽपि द्वारद्वार्यन्तरस्य विनिगन्तुमशक्यत्वात्, आधुनिकदर्शनादिष्वपि मोक्षानुकूलनिर्जराविशेषप्रयोजकविशेषाश्रयत्वं सम्यक्त्वं प्रत्येकमव्याहतमिति त्रयाणां तुल्यत्वकारणत्वं नयार्पणया नानुपपन्नम् । एतेन सम्यग्दर्शनादित्रयसिद्धावपि मोक्षप्राप्तेरनेकान्तान्नृसुरसुखाशंसायाश्च प्रतिषेधात्प्रयासवैफल्यापत्तिरिति परास्तम्, हेतुत्रयमिलनसाध्यविशिष्टनिर्जरारूपद्वारसम्पत्तौ विशिष्टप्रवृत्तिसाफल्यस्यानपायत्वात् । नन्वेवं मानुषत्वसंहननविशेषादीनामपि मोक्षोपायत्वात्त्रयाणामेवावधारणं कुत इति चेत्, सत्यम्, तेषां दर्शनादिविशेषाधानेनैवोपक्षीणत्वाद्दर्शनाद्युत्कर्षेण च निर्जरोत्कर्षात्त्रयाणामेव मोक्षहेतुत्वव्यवस्थितेः । एतेन दानादिक्रियाणां मोक्षहेतुत्वं व्याख्यातं, सम्यक्त्वसाहित्येन घृतं दहतीतिव-

व्यापारिभावेनैव मोक्षकारणत्वं न साक्षादिति तत्समूहस्याऽपि न तत्, तथापि व्यापारकाले व्यापारिणो नाशो नाऽऽवश्यको व्यापारलक्षणे द्वारिनाशविशिष्टत्वाप्रवेशादिति सर्वसंवराख्यचारित्रकाले समुदितैतत्त्रितयस्यैव मोक्षफलोपयोगितया व्यापारान्मुख्यत्वाविशेषात्प्रमाणविवक्षया तत्समूहस्यैव मोक्षकारणत्वमिति समूह एवोक्तलक्षणसम्यक्त्वमिति भावः । नयविवक्षया त्वन्वयव्यतिरेकाभ्यामेकैकमपि सम्यग्दर्शनादिकं कारणमित्यत्र हेतुमाह चरमकारणेऽपीति । न च चरमकारणमात्रेणैव कार्ये सिद्धे तत्पूर्ववर्त्तिनोऽन्यथासिद्धिरिति वाच्यम्, चरमकारणस्य तत्पूर्ववर्त्तिनः कारणत्वरक्षणार्थमेव यत्र व्यापारविधया कल्पनं न च तत्र व्यापारेण व्यापारिणोऽन्यथासिद्धिः, अन्यथा दण्डादेरपि चक्रभ्रमणक्रिययाऽन्यथासिद्धिः स्यादिति तस्य कारणत्वे सिद्धे व्यापार एव कारणं न व्यापारी व्यापार्येव कारणं न व्यापार इति विनिगंतुमशक्यत्वादित्यर्थः । मोक्षोपधायकतावच्छेदकधर्मविशेषलक्षणसम्यक्त्वस्याऽऽधुनिकसम्यग्दर्शनादिष्ववर्तमानत्वेन लक्षणान्तरमाह—मोक्षानुकूलनिर्जरेत्यादि । ननु सम्यग्दर्शनादित्रयात्मककारणप्राप्तावपि तेन तद्भवे मोक्षफलं भवत्येवेति नैव नियमः, तत्सद्भावेऽपि तदानीं जीवपरिणाममान्द्यात् केषाञ्चिन्मोक्षफलाभावात् । अथ नृसुरवैभवसुखार्थं सम्यग्दर्शनादित्रये प्रवर्त्ततामित्यपि न च वाच्यम्, "नो इहलोगट्ठयाए आयारमहिट्ठिज्जा, नो परलोगट्ठयाए आयारमहिट्ठिज्जा, नो कित्तिवन्नसद्दसिलोगट्ठयाए आयारमहिट्ठिज्जा, नन्नत्थ अरिहंतेहिं हेऊहिं आयारमहिट्ठिज्जा" इत्यादिनैहिकपारभविकभोगफलाशंसाया निषेधात्, तथा च सम्यग्दर्शनादित्रयप्राप्त्यर्थं प्रवृत्तिर्निष्फलैवेत्याशङ्क्य निषेधति—एतेनेत्यादिना । निषेधे हेतुमाह—हेतुत्रयमिलनसाध्येत्यादिना । हेतुत्रयं सम्यग्दर्शनज्ञानचारित्ररूपम्, तन्मिलनं तत्समुदायः, तत्साध्या तज्जन्या, या विशिष्टनिर्जरा तद्रूपद्वारसम्पत्तावित्यर्थः । दर्शनादिविशेषाधानेनैवोपक्षीणत्वादिति—मनुष्यत्ववज्रर्षभनाराचसंहननादीनां विशिष्टसम्यग्दर्शनाद्युत्पादन एवोपक्षीणत्वादित्यर्थः । तेनैव तेषामन्यथासिद्धत्वादिति भावः । सम्यग्दर्शनादित्रयाणामेव मोक्षहेतुत्वमित्यत्र हेत्वन्तरमाह—दर्शनाद्युत्कर्षेणेत्यादिना । एतेनेत्यस्य व्याख्यातमित्यनेनान्वयः । व्याख्यातम्—निरस्तम् । तन्निराकरणे हेतुमाह

दुपचरितनयेनैव तासु तथात्वव्यवस्थितेः । तदिदमभिप्रेत्योक्तं हरिभद्राचार्यैः-"दाणाईआउ एयं-मि चेव सुद्धाउ हुंति किरिआउ । एआओ वि हु जम्हा, मोक्खफलाओ पराओत्ति" । यदि च व्यवहारनयप्राधान्येन प्रणिधानादिभावसाम्राज्यलब्धातिशयानां तासामेव प्रतिपदविध्युक्तमोक्षफलत्वं स्वीक्रियते, श्रेणिवृद्धयप्रतिपातव्यापारेण चक्रभ्रमणदृष्टान्तेन द्रव्यक्रियाया एव भावहेतुत्वस्य तत्र तत्र व्यवस्थापितत्वान्मोक्षे जननीये यावन्ति चान्तरालकानि तावन्ति तद्द्वाराणीति च विभाव्यते, तथापि दर्शनाद्यङ्गत्वेन दर्शनादावेवान्तर्भावान्नाधिक्या शङ्का । न हि दर्शनादीन्यत्र स्वरूपत एव ग्राह्याणि, किन्तु हेतुतः फलत इति न दुरधिगममिदं नयामृततरङ्गिणीसम्पल्वव्यसनिना । आरोग्यार्थिनो यथा भेषजविषयरुचिस्तद्विषयं परिज्ञानमपथ्यपरिहारेण विधिना तदासेवनक्रिया चेति समुदितं यथारोग्यहेतुस्तथा भवारोग्यार्थिनः क्रियाभेषजे । अत एवोद्देश्यबहुवचनापेक्षामपोद्य समुदायस्य विधेयत्वान्मोक्षमार्ग इत्यत्र विधेयैकत्वापे-

हित्येनेत्यादि । अग्निर्दहतीति मुख्यप्रयोगो न तु घृतं दहतीति, स त्वौपचारिक एव, तथा चोक्तमुख्यप्रयोगादग्नेर्दहनक्रियायां मुख्यकारणत्वे सिद्धे केवलं घृतं न दहति किन्त्वग्निसहकृतमेवेत्यग्निसाहित्येन यथा तत्र घृतस्यौपचारिकमेव कारणत्वं सिध्यति तथाऽत्रापि सम्यग्दर्शनादिना विना कृता दानशीलतपःक्रिया न मोक्षहेतुः किन्तु तत्सहकृता एवेति तासु न मुख्यं मोक्षकारणत्वं, किन्तु सम्यक्त्वसाहित्येनैवेत्यौपचारिकमेव तदिति भावः । तदिदमभिप्रेत्योक्तमिति-सद्धर्मविंशिकायां षष्ठयामिति शेषः। तत्र चोक्तगाथा विंशतितमा । क्रियाभेषजेति दीर्घकालीनान्तररोगनिवृत्तिकारितया श्रीतीर्थकरभगवद्रूपभाववैद्योपदिष्टे क्रियात्मकभेषजे पूर्वं श्रद्धा तदनु चेदमेव क्रियौषधं भवरोगनिवृत्तौ समीचीनतयाऽऽसेवनयोग्यमिति परिज्ञानं, ततश्च भवरोगवृद्धिकारिपापारम्भाद्यपथ्यत्यागप्रतिज्ञापुरस्सरं दुष्टमनोवचःकायसंलीनतया जायमानशुभात्मपरिणत्याऽनन्यचित्तेन तदासेवनाक्रियेत्येतत्त्रयं समुदितं भवरोगाऽऽरोग्यहेतुरित्यर्थः । अत एवेति-श्रीभगवत्प्रोक्तक्रियौषधविषयकरुचितत्परिज्ञानसिद्धान्ताविहितरूपापथ्याऽऽसेवनपरिहारपूर्वकतदासेवनात्मकत्रितयसमुदायस्यैव भवरोगनिवृत्तिहेतुत्वादेवेत्यर्थः। उद्देश्यबहुवचनापेक्षामपोद्येति-उक्तसूत्रे बहुवचनावरुद्धे एकवचनावरुद्धस्योद्देश्यविधेयभावेनान्वय इति नियमेनोद्देश्यानि सम्यग्दर्शनज्ञानचारित्राणि तत्पदोत्तरं यद्बहुवचनं तदपेक्षामपोद्य परित्यज्येत्यर्थः । अस्य चैकवचनमित्यनेनान्वयः । अयम्भावः-सम्यग्दर्शनज्ञानचारित्राण्युद्दिश्य मोक्षमार्ग इति विधीयते, अत्र सम्यग्दर्शनादीनामुद्देश्यानां बहुत्वात्तद्वाचकपदोत्तरबहुवचने सति विशेष्यविशेषणयोस्समानवचनकत्वनियमाद् विधेयवाचकमोक्षमार्गपदादपि यद्यपि बहुवचनेन भाव्यं तथापि मोक्षमार्गस्य विधेयस्य सम्यग्दर्शनादिसमुदायरूपतयैकत्वेन तदपेक्षं तत्पदोत्तरमेकवचनमेव न्याय्यम्, विशेष्यवाचकपदोत्तरविभक्तितात्पर्यसङ्ख्याविरुद्धैकत्वसङ्ख्याया यत्राविवक्षितत्वं तत्र विशेष्यविशेषणवाचकपदयोस्समानवचनकत्वनियमः, अत्र चैकत्वसङ्ख्याया विवक्षितत्वान्न विशेष्यविशेषणवाचकपदयोरसमा-

क्षमेकवचनमित्यपि वदन्ति। दर्शनादीनां स(सा)मनैयत्ये एकतरग्रहणेनैव चरितार्थता स्यादित्यतस्तल्लाभे भजनामुपदर्शयति–एषां चेत्यादि। एषां दर्शनादीनां, चः पूर्वोक्तसमुच्चये, पूर्वस्य सूत्रोक्तक्रमात् सम्यग्दर्शनस्य, लाभे प्राप्तौ, भजनीयं विकल्पनीयं स्याद्वा न वेत्येवम्। उत्तरं ज्ञानं चारित्रं च। यतो देवनरकतिरश्चां मनुष्याणां च केषाचिद्दाविर्भूतेऽपि सम्यग्दर्शने न भवत्याचारादिकमङ्गानङ्गप्रविष्टं ज्ञानम्, तथा देशसर्वचारित्रमपि, तथा प्राप्तेऽपि ज्ञाने केनचिन्न चारित्रं नियमत एव प्राप्तव्यम्। अत्र ज्ञानं शाब्दप्रमाविशेषरूपं गृहीतम्। उत्तरयोः सम्यग्ज्ञानचारित्रयोः, लाभे तु, नियतो निश्चितः, पूर्वस्य सम्यग्दर्शनस्य, लाभः, एतच्च व्याख्यानं सम्यग्दर्शनज्ञानयोः पारमार्थिकभेदपक्षे युज्यते। स च कारणभेदात् स्वभावभेदाद्विषयभेदाच्च, कारणभेदस्तावदयम्, सम्यग्दर्शनस्य त्रितयं कारणमुत्पत्तौ क्षयोपशमः क्षयः उपशमश्चेति। ज्ञानस्य तु क्षयः क्षयोपशमो वा। यदि च न तयोर्भेदः किमिति दर्शनस्य त्रिविधं कारणमितरस्य द्विविधमिति। स्वभावभेदोऽप्यस्ति, ज्ञानस्य परिच्छेदमात्रं स्वभावो, दर्शनस्य तु 'तदेव सत्यं निःशङ्कं यज्जिनैः प्रवेदितम्' इत्येवं जैनेषु पदार्थेषु स्वतः परतो वा रुचिः। विषयभेदोऽप्यस्ति सर्वद्रव्यभावविषया रुचिः सम्यक्त्वं 'सव्वगयं सम्मत्तं' इति वचनात्, श्रुतज्ञानं तु सकलद्रव्यगोचरं

नवचनत्वमिति, देशसर्वचारित्रमपीति–अत्र न भवतीत्यनुकर्षणीयामिति। न चारित्रं नियमत एव प्राप्तव्यमिति–तदावरणीयकर्मोदयादिति हेतुरत्र ग्राह्यः। यदा जीवस्सम्यग्दर्शनमवाप्नोति तदैव तन्माहात्म्यान्मिथ्याज्ञानमेव सम्यग्ज्ञानरूपेण परिणमत इति सम्यग्दर्शनकाल एव लब्धिरूपतया सम्यग्ज्ञानस्य प्राप्तिः शास्त्रे श्रूयते, अत्र च सम्यग्दर्शनलाभे चारित्रवत्सम्यग्ज्ञानस्यापि लाभे भजनोक्तेति कथं न विरोध इत्याशङ्कायामाह–अत्र ज्ञानं शाब्दप्रमाविशेषरूपं गृहीतमिति। श्रीगुरुभगवत्पार्श्वे विनयादिना शास्त्रमधीत्य यदागमार्थज्ञानं जायते तदत्र गृहीतमित्यर्थः। एतदभिप्रायेणैव द्रव्यलोकप्रकाशेऽपि–"प्राप्तं निसर्गसम्यक्त्वं, येन स्यात्तस्य केवलम्। मतिज्ञानमनवाप्त–श्रुतस्यापि शरीरिणः ॥६१॥ अत एव मतिर्यत्र, श्रुतं तत्र न निश्चितम्। श्रुतं यत्र मतिज्ञानं, तत्र निश्चितमेव हि ॥६२॥" इत्युक्तम्। एतच्च "एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः। १। ३१॥ इति सूत्रव्याख्यायां स्पष्टीभविष्यति। २। च–पारमार्थिकभेदः। परिच्छेदमात्रं तदर्थविषयकनिश्चयमात्रम्। सर्वद्रव्यभावविषया रुचिरिति–ननु जिनैर्यत्प्ररूपितं तदेव सत्यं निश्शङ्कमित्याकारैव रुचिः, न चाऽप्रज्ञापनीयभावानामनन्तानां वचनगोचरातीतत्वेन जिनैरपि प्ररूपणा कृतेति तदविषयकत्वाद्रुच्याः कथं सर्वद्रव्यभावविषया सेति चेत्, न, यतो जिनेन्द्रैः केवलज्ञानेन यदुपलब्धं तत्सर्वं सत्यमेवेत्येवं जिनोपलब्धनिखिलभावविषयकश्रद्धाभावात्तद्विषयाऽपि सेति नोक्तदोषः। तत्र स्वमतिकल्पनाव्युदासाय विशेषावश्यकनिर्युक्तिसंवादमाह–"सव्वगयं सम्मत्तं" इति।

सव्वगयं सम्मत्तं, सुए चरित्ते न पज्जवा सव्वे।
देसविरइं पडुच्चा, दोण्ह वि पडिसेहणं कुज्जा ॥३२१॥ (२७५१) इति संपूर्णगाथा।

कतिपयपर्यायावलम्बि चेति। अपरे तु ज्ञानदर्शनयोः समीचोर्भेदमप्रेक्षमाणा इत्थं व्याचक्षते—एषां पूर्वद्वयस्य सम्यग्दर्शनज्ञानलक्षणस्य लाभे प्राप्तौ भजनीयमुत्तरं चारित्रम्, उत्तरस्य सम्यक्चारित्रस्य लाभे नियतः पूर्वयोः सम्यग्दर्शनसम्यग्ज्ञानयोर्लाभ इति, यदि ताभ्यां चारित्रमनुगतं न स्यात्तदा सम्यगेव न स्यादिति। कथं पुनस्तैः कारणादिभेदो न दृष्ट इति चेत्, इत्थं, मतिज्ञानस्यैव रुचिरूपो योऽपायांशस्तत् सम्यग्दर्शनम्, न ज्ञानादृतेऽन्यद्दर्शनमस्ति। कारणादिभेदस्त्वन्यथोपपादनीयः, तथाहि—योऽसावुपशमोऽ-

कतिपयपर्यायावलम्बीति एकैकद्रव्यमात्रस्यानन्ताभिलाप्यानभिलाप्यानभिलाप्यपर्याययुक्तत्वेऽपि न तत्सर्वपर्यायविषयकं श्रुतज्ञानं किन्त्वनभिलाप्यपर्यायानन्तभागवर्त्यभिलाप्यपर्यायविषयकमेवेति हेतोः कतिपयपर्यायावलम्बीत्यर्थः। सम्यग्दर्शनज्ञानयोर्भेदविषये उत्तराध्ययनसूत्राष्टाविंशाध्ययनटीकायामपि श्रीशान्तिसूरिकृतायामेवमेवोक्तम्। तथाहि "श्रद्धानं सम्यक्त्वमोहनीयकर्माणुक्षयक्षयोप(शमोप)शमसमुत्थात्मपरिणामरूपम्। उक्तं हि—'से य सम्मत्ते पसत्थसम्मत्तमोहणीयकम्माणुवेअणोवसमखयसमुत्थे पसमसंवेगाइलिंगे सुहे आयपरिणामे पन्नत्ते' इति। अवश्यं हि स कश्चिदात्मनः परिणामोऽस्ति, येन सत्यपि जीवादिस्वरूपाववोधे कस्यचिदेव सम्यक्प्रतिपत्तिर्भवति, न पुनः सर्वस्य, यथाहि "सत्यपि दर्शने कश्चित् शङ्खे श्वेतिमानं प्रतिपद्यते, अन्यस्त्वन्यथाभावमिति तत्र कारणविशेषोऽनुमीयते, एवमिहाऽपि, ततश्च जीवादिस्वरूपपरिज्ञानस्य सम्यग्भावहेतुरात्मपरिणामविशेषः सम्यक्त्वम्, न तु ज्ञानस्वरूपमेव, अत एव हि ज्ञानादावावरणभेदो विषयभेदः कारणभेदः, ज्ञानकारणत्वञ्च सम्यक्त्वस्य श्रुतकेवलिनोक्तम्, यत्तु तत्त्वार्थश्रद्धानं सम्यग्दर्शनमपायसद्द्रव्यतया सम्यग्दर्शनम्, अपायो मतिज्ञानतृतीयांश इत्यादि तत्कारणे कार्योपचारं कृत्वाऽभ्युद्घृतमित्यादिवदिति गुरवो व्याचक्षत इति।" चारित्रमोहनीयकर्मोदयाच्चारित्रलाभाभावेऽपि केषांचिद्भव्यात्मनां सम्यग्दर्शनसम्यग्ज्ञानयोर्लाभो भवतीति तदुभयलाभे तदुत्तरं चारित्रं भजनीयं स्याद्वा न वेति। सम्यक्चारित्रलाभे तु नियमेन तत्पूर्ववर्त्तिसम्यग्दर्शनसम्यग्ज्ञानोभयलाभः, यतो न ह्यविज्ञायाश्रद्धाय वा तच्चारित्रं ग्रहीतुं शक्यम्, ग्रहणे वा तन्मिथ्यारूपमेव स्यादित्याह—एषाञ्च पूर्वद्वयस्येति॥ उक्तञ्चैकादशपञ्चाशके—"सति एयम्मि उ णियमा, नाणं तह दंसणं च विण्णेयं। एएहिं विणा एयं, ण जातु केसिं वि सद्धेयं॥१॥" इति। सम्यगेव न स्यादिति—भावरूपमेव तन्न स्यादिति भावः। "केवलियनाणलंभो नन्नत्थ खए कसायाणं" ११८० इति विशेषावश्यकभाष्यवचनात्कषायाणां केवलज्ञानस्यानावारकत्वेऽपि कषायक्षयः केवलज्ञानस्य निमित्तं, तदितरसकलसामग्रीसत्त्वे सति तत्सत्त्व एव तद्भावात् तदभावे च तदभावात्, एवमनन्तानुबन्धिनां सम्यग्दर्शनसहभाविक्षमादिस्वरूपोपशमादिचरणप्रतिबन्धकानां सम्यक्त्वस्यानावारकत्वेऽपि तदुपशमादिः सम्यक्त्वोत्पत्तौ निमित्तम्, तस्मिन् सति तदुत्पद्यते तेन विना तन्नोत्पद्यत इत्यन्वयव्यतिरेकबलात्, यत उदयमागतेषु कषायेषु न ज्ञानावरणादिक्षयतामवाप्नोति, तदनवाप्तौ च न केवलज्ञानोत्पत्तिरुद्गतानन्तानुबन्धिषूदितेषु मिथ्यात्वमुपशमादिभावमुपयाति, तदभावाच्च न सम्य-

नेन्तानुबन्ध्यादीनां सम्यग्दर्शनस्योत्पत्तौ केवलज्ञानस्य मोहनीयक्षय इव निमित्तम् नासावावरणापायविधया प्राधान्येन, किन्तूदासीनतया, अत एव केवलज्ञानस्य मोहनीयमिव सम्यग्दर्शनस्यानन्तानुबन्ध्यादि नावरणम्, किन्तु ज्ञानावरणमेव, तत्, क्षयोपशमनान्तरीयकत्वाच्चानन्तानुबन्ध्याद्युपशमस्य परत एवोपशमव्यपदेशः, स्वतस्तु क्षयोपशमजमेव तदिति नास्ति कारणभेदः। स्वभावभेदोऽपि नास्ति मत्याद्यपायांशं विरहय्य रुचिस्वभावस्यैवानुपलब्धेः। विषयभेदोऽपि नास्ति, ज्ञाने सर्वपर्यायांशे निरवच्छिन्नप्रकारत्वाभावेनाऽसर्वविषयत्वस्य, दर्शने च सर्वपर्यायांशे जिनोक्ततत्त्वातिरिक्तधर्मानवच्छिन्नप्रकारताकत्वेन सर्वविषयत्वस्य परिभाषणात्, न च परिभाषाकृतो भेदो वास्तवमभेदं व्याहन्तीति। अत्रेदमवधेयम्, न ह्यपायमात्रे रुचित्वं वक्तुं शक्यं घटाद्यपाये तदननुभवात्, किन्तु जीवाजीवादिसमूहालम्बनज्ञानविशेष एव, अत एव श्रद्धात्वं ज्ञानत्वव्याप्यो जातिविशेष इति परेऽपि वदन्ति, तदवच्छिन्ने च दर्शनावरणक्षयोपशमानामेकशक्तिमत्त्वादिना हेतुत्वमिति ज्ञानावरणविशेष एव दर्शनावरणम्, पृथग्विभागादिप्रक्रिया तु गोवृषन्यायात्, तदिदमभिप्रेत्योक्तं सम्मतौ " एवं जिणपण्णत्ते, सद्दहमाणस्स

क्त्वोत्पत्तिरित्याशयेनाह—**योऽसावुपशमोऽनन्तानुबन्ध्यादीनामित्यादि**। ननु सम्यग्दर्शनस्यावरणं नानन्तानुबन्धि, चारित्रमोहनीयप्रकृतित्वात्तस्य, अत एव त्रिविधं दर्शनमोहनीयं पंचविंशतिविधं चारित्रमोहनीयमित्युक्तं सङ्गच्छते, चारित्रावारकस्य च सम्यक्त्वावारकत्वानुपपत्तेः, अन्यथाऽनन्तानुबन्धिभिरेव सम्यक्त्वस्यावृतत्वात् किमपरेण मिथ्यात्वेन प्रयोजनम्, आवृतस्याप्यावरणेऽनवस्थाप्रसङ्गात्, किन्तु ज्ञानावरणमेवेति चेत्तर्हि तत्क्षयोपशमे ज्ञानावरणक्षयोपशमजं सम्यग्दर्शनमित्येव व्यपदेशस्स्यात्, न त्वनन्तानुबन्ध्याद्युपशमजमिति व्यवहारस्स्यादित्याशङ्कायां तन्निवृत्त्यर्थमाह—**तत्क्षयोपशमनान्तरीयकत्वाच्चेत्यादि**, अनन्तानुबन्ध्यादीनामुपशमे सत्येव ज्ञानावरणक्षयोपशमो भवतीत्येतावता स्वावरणभिन्नानन्तानुबन्ध्याद्युपशमात्मकपरनिमित्तविधयाऽनन्तानुबन्ध्याद्युपशमजं सम्यग्दर्शनमुच्यते, स्वावरणापेक्षया तु ज्ञानावरणक्षयोपशमजमेव तत्, तथा च ज्ञानवत् सम्यग्दर्शनस्यापि स्वतो ज्ञानावरणक्षयोपशमकारणकत्वान्नास्ति कारणभेद इति भावः। **जीवाजीवादिसमूहालम्बनज्ञानविशेष एवेति**—जीवाजीवादिपदार्थनवकाविषयकसमूहालम्बनज्ञानविशेषस्यैव रुचिरूपतयाऽऽम्नातत्वादिति भावः। **श्रद्धात्वं ज्ञानत्वव्याप्यो जातिविशेष इति**—अत एवैतट्टीकाकारकृतज्ञानबिन्दौ—एवम्भूतवस्तुतत्त्वश्रद्धानरूपं सम्यग्दर्शनमपि सम्यग्ज्ञानविशेष एव, सम्यग्दर्शनत्वस्यापि सम्यग्ज्ञानत्वव्याप्यजातिविशेषरूपत्वाद्विषयताविशेषरूपत्वाद्वेत्युक्तमपि सङ्गच्छते। ननु ज्ञानत्वव्याप्यजात्यवच्छिन्नं प्रति सम्यग्दर्शनावरणोपशमक्षयोपशमक्षयानां ज्ञानावरणक्षयोपशमसाधारणज्ञानानुकूलैकशक्तिमत्त्वेन हेतुत्वात्तज्जन्यं सम्यग्दर्शनमपि ज्ञानमेवेति तदावारकं ज्ञानावरणमेव न दर्शनावरणं (दर्शनमोहनीयं) यदि तदा ज्ञानस्याऽऽवारकं ज्ञानावरणं दर्शनस्याऽऽवारकं दर्शनावरणमिति पृथग्व्यपदेशः किं निबन्धन इत्याशङ्कायामाह—**पृथग्विभागादिप्रक्रियेति**। **गोवृषन्यायादिति** यथा गोवृषयोर्गोत्वरूपैकजातिमत्त्वेने-

भावओ भावे। पुरिस्साभिणिबोहे, दंसणसद्दो हवइ जुत्तो ॥ १ ॥ त्ति" 'श्रद्दधतः' समूहालम्बनतयाऽवगृह्णतो 'भावतो' रुचिरूपतया। तथा च पूर्वद्वयलाभे भजनीयमुत्तरमिति केयं वाचो युक्तिः, द्वितीयलाभे प्रथमस्यापि भजनीयत्वावकाशात्। यदि च मुख्यं सम्यग्दर्शनं रुचिरूपोक्तज्ञानविशेष एव, भावत्वं चानेकान्तागमवासनोपनीतसर्वानैकान्त्यावगाहिघटाद्यपायोऽपीति तदुभयसामान्यं सङ्गृह्यते तदा भवति सम्यग्ज्ञानेन समं स(सा)मनैयत्यम्, तदिदमाह—सम्मन्नाणे णियमेण दंसणं दंसणे उ भइअव्वं। सम्मन्नाणं च इमं, ति अत्थओ होइ उववन्नं ॥ १ ॥ दर्शने तु भक्तव्यम्, इति, एकान्तरुचौ न भवत्यनेकान्तरुचौ तु भवत्येवेति, अविशेषितदर्शनेन सह भजनोक्तावपि सम्यक्पदविशेषणे, नेयमित्याशयेनाह—'इदं सम्यग्दृष्टिप्रत्यक्षं सम्यग्ज्ञानं, चशब्दात् सम्यग्दर्शनमित्यर्थत उपपन्नम्' अर्थापत्तिसिद्धमित्यर्थ इति। इदं पुनरन्यदवधेयम्। एवं सति चारित्रमपि ज्ञानविशेष एव, विषयप्रतिभासात्मज्ञानतत्त्वसंवेदनेषु बुद्धिज्ञानाऽसम्मोहेषु च तृतीयस्य तत्स्थानेऽभिषेचनीयत्वात्, तदावरणस्य च चारित्रमोहत्वेन पृथगभिधानं प्राग्वदेव, ज्ञानैकशेषे विनिगमकं चात्मगुणानामात्मनो ज्ञत्वाभाव्यमेव। तदिदमुक्तम्—

त्रयेऽपि यथा स्त्रियां गवि गोत्वं पुंसि बलीवर्दे वृषभत्वमिति कल्पनाभेदकृतो भेदस्तथाऽत्रापीति भावः। एवं जिणपण्णत्ते इत्यादि इयं गाथा सम्मतौ।२-३२। द्वितीयकाण्डे द्वात्रिंशत्तमा। एवमनन्तरोक्तविधिना जिनप्रज्ञप्तान् भावान् भावतस्सम्यग्रुचिरूपतया श्रद्दधानस्य समूहालम्बनतया रुच्याऽवगृह्णतः पुरुषस्य यदाऽऽभिनिबोधिकं मतिज्ञानापायांशरूपं तदेव सम्यग्दर्शनम्, जिनप्रज्ञप्तनिखिलभावविषयकसमूहालम्बनज्ञानविशेषरूपाया रुचेस्सम्यग्दर्शनशब्दवाच्यत्वादिति भावः। द्वितीयलाभे न प्रथमं भजनीयं किन्तु तन्नियतमेवेति पक्षान्तरमाह—**यदि च मुख्यं सम्यग्दर्शनमित्यादिना**। सम्यग्ज्ञानेन समं सम्यग्दर्शनस्य सामनैयत्ये सम्मतिद्वितीयकाण्डत्रयस्त्रिंशत्तमगाथां साक्षितयोपदिशति—**सम्मन्नाणे नियमेणेत्यादि**। ननु सम्यग्ज्ञाने सम्यग्दर्शननियमवद्दर्शनेऽपि सम्यग्ज्ञाननियमः कथं न स्यादित्याशङ्कायामाह—**दर्शने तु भक्तव्यमिति** सम्यग्ज्ञानमिति शेषः। भजनामेवाह एकान्तरुचाविति। **इयमिति**—भजनेत्यर्थः। इदंशब्दप्रयोगः प्रत्यक्षविषय एवार्थे भवतीत्यत आह—**इदं सम्यग्दृष्टिप्रत्यक्षमिति**। इदमित्यस्य सम्यग्ज्ञानमित्यनेनान्वयः, **सम्यग्दृष्टिप्रत्यक्षमिति** सम्यग्दृष्टिप्रत्यक्षविषयभूतमित्यर्थः। **अर्थत उपपन्नमिति** अर्थतः सामर्थ्यादेकमेवोपपन्नं भवति, तदेवाह—**अर्थापत्तिसिद्धमित्यर्थ इति**। **एवं सति** विशिष्टरुचिस्वभावस्य सम्यग्दर्शनस्य मतिज्ञानापायांशतया ज्ञानविशेषरूपत्वे सति। **तृतीयस्य** चारित्रस्य। **तत्स्थाने** ज्ञानविशेषस्थाने। **तदावरणस्य** चारित्रावरणस्य **चारित्रमोहत्वेन** चारित्रमोहनीयकर्मत्वेन। **प्राग्वदेव** गोवृषन्यायादेव। ननूक्तदिशा सम्यग्दर्शनादित्रयाणामेकरूपत्वे ज्ञानमेव दर्शनचारित्रे इतिवद्दर्शनमेव ज्ञानचारित्रे चारित्रमेव ज्ञानदर्शने इत्येवमपि किमिति नोच्यत इत्यत आह—**ज्ञानैकशेष इति**—आत्मगुणानां ज्ञानदर्शनचारित्राणां ज्ञानैकशेषे ज्ञानमात्ररूपतयाऽवधारणे आत्मनो ज्ञत्वाभाव्यमेव विनिगम-

" आत्मानमात्मना वेत्ति, मोहत्यागाद्यदात्मनि । तदेव तस्य चारित्रं, तज्ज्ञानं तच्च दर्शनम् ॥१॥" तथा च उत्तरलाभे पूर्वद्वयनैयत्यं स्वरूपतो, न तु भेदगर्भतयेति दिग् । अथ सूत्रोक्तन्यस्तसम्यग्दर्शनाद्यवयवार्थं प्रतिपादयति तत्रेत्यादिना ।

**(भाष्यम्) तत्र सम्यगिति प्रशंसार्थो निपातः, समञ्चतेर्वा, भावो दर्शनमिति । दृशे(शि)-रव्यभिचारिणी सर्वेन्द्रियानिन्द्रियार्थप्राप्तिरेतत्सम्यग्दर्शनम् । प्रशस्तं दर्शनं सम्यग्दर्शनम् । सङ्गतं वा दर्शनं सम्यग्दर्शनम् । एवं ज्ञानचारित्रयोरपि ॥**

(यशो० टीका) सम्यगिति निपातः प्रशंसार्थः । तथा च सम्यक् प्रशंसनीयं पूजनीयमित्यर्थः । अव्युत्पत्तिपक्षाश्रयमेतत् । व्युत्पत्तिपक्षे त्वाह–समञ्चतेर्वा सम्पूर्वादञ्चतेर्वा रूपमेतदिति शेषः । तदर्थश्च गतिः पूजा वा । तत्र पूजायाः प्रागुक्तत्वाद्गतिरर्थोऽत्र ग्राह्यः । समञ्चति गच्छति व्याप्नोति सर्वद्रव्यभावानिति सम्यगित्यर्थः । भावो दर्शनमिति भावल्युटो रूपमिदमित्यर्थः । फलितार्थमाह–दृशिरित्यादि । दृशिः । स्ववाच्यवाच्यलक्षणया दृष्टिर्ज्ञानपरिणतिः, अव्यभिचारिणी यथार्था, सामान्यविशेषान्यतराप्रतिक्षेपात्, सर्वाणि निरवशेषाणीन्द्रियाणिश्रोत्रादीनि । अनिन्द्रियं मनोवृत्तिरोघज्ञानं च, तदर्थाः

कमित्यर्थः । ज्ञानैकशेषे सम्मतिमाह–तदिदमुक्तमिति । आत्मानमिति–मोहत्यागादात्मनि आत्मानमात्मना यद्वेत्ति तदेव तद्वेदनमेव तस्य पुंसः चारित्रं ज्ञानं दर्शनञ्चेत्यर्थः । अनेन च ज्ञानमेवावशेषितम्, स्वरूपतः–तादात्म्यात्, न तु भेदगर्भतयेति–दर्शनज्ञानाभ्यां चारित्रं भिन्नमेव अथापि तत्काले नियमेन तयोर्भावान्नैयत्यमिति नेत्यर्थः ।

सम्यगितीति सम्यगितिशब्द इत्यर्थः । निपात इति–प्रकृतिप्रत्ययानिष्पन्नत्वेनार्थद्योतको, न तु नामादिपदवदर्थवाचकः, प्रकृतिप्रत्ययमनालोच्य निपात्यतेऽर्थद्योतकतयेति निपात इति व्युत्पत्तेरित्यर्थः । तदर्थमाह–प्रशंसार्थ इति–सम्पूर्वादञ्चतेरिति क्विप्प्रत्ययान्तस्येति शेषः । व्याप्नोतीति–विषयीकरोतीत्यर्थः । सर्वद्रव्यभावानिति–सर्वद्रव्यसर्वपर्यायानित्यर्थः । स्ववाच्यवाच्यलक्षणया स्वं दृशिपदं तद्वाच्यं दर्शनं तत्पदवाच्यज्ञानपरिणतौ लक्षणया । ज्ञानपरिणतिरिति–सम्यग्दर्शनं हि मुख्यवृत्त्या मतिज्ञानापायांशरूपमेवेति पक्षाश्रयेणैतदुक्तम् । यथार्था–अनन्तपर्यायावलीढधर्मास्तिकायादिनिखिलद्रव्यरूपानर्थाननतिक्रम्य प्रवृत्ता, एवंविधा केति चेत्, उच्यते, एकैकनयविषयस्य सामान्यस्य विशेषस्य वा द्रव्यस्य पर्यायस्य वा स्वान्यतत्तन्नयैरप्रतिक्षेप एव सत्यता भवतीति या द्रव्यार्थिकपर्यायार्थिकनयविषययोर्या परस्परसाकाङ्क्षता तत्सम्पन्नतत्तद्विषयावगाहिनी, तत्र हेतुमाह–सामान्यविशेषान्यतराप्रतिक्षेपादिति । ओघज्ञानञ्चेति–इन्द्रियानिन्द्रियव्यापारानाहितविलक्षणक्षयोपशमजन्यं ज्ञानञ्चेत्यर्थः, यथाक्रमं तद्विषयानाह–तदर्थाः शब्दादय इति । ननु अव्यभिचारिणी सर्वेन्द्रियानिन्द्रियार्थप्राप्तिः सम्यग्दर्शनमुच्यते, सर्वपदमिन्द्रियपदसमभिव्याहृतमाश्रित्य निरवशेषेन्द्रियजन्यशब्दादिविषयज्ञानानां सम्यग्दर्शनत्वम्, स्वप्नज्ञानस्याऽपि मनोजन्यस्य तत्त्वं, नीत्राद्यभिसर्पणज्ञानस्याऽपि तत्त्वं ततो लभ्यते, तत्कथं सङ्गतं मिथ्या-

शब्दादयः स्वप्नादयो वल्ल्यादीनां नीत्राद्यभिसर्पणञ्च तत्प्राप्तिस्तदुपलब्धिः, एतत्सम्यग्दर्शनम् । शब्दादिनयव्याख्यानमेतत्, तन्मतेऽज्ञानाद्यभावात्, याथार्थ्यमात्रे वा सम्यक्त्वं चरितार्थम् । अर्थद्वयं निगमयति । प्रशस्तमित्यादि । प्रशस्तं मुक्तिहेतुत्वात्, सङ्गतं सर्वनयालम्बनेन प्रवृत्तम् । अतिदिशति एवं ज्ञानचारित्रयोरपि । द्विधा सम्यक्त्वं व्याख्येयमित्यर्थः ॥१॥ अथ 'यथोद्देशं निर्देशः' इति न्यायात् प्रथममुद्दिष्टस्य सम्यग्दर्शनस्य लक्षणमाह

## सूत्रम् तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ २ ॥

तदेतद्भाष्यकारः समासभेदेन व्याचष्टे

(भा०) तत्त्वानामर्थानां श्रद्धानं तत्त्वेन वार्थानां तत्त्वार्थश्रद्धानम्, तत् सम्यग्दर्शनम् । तत्त्वेन भावतो निश्चितमित्यर्थः । तत्त्वादीनि जीवादीनि वक्ष्यन्ते । त एव चार्थास्तेषां श्रद्धानं तेषु प्रत्ययावधारणम् । तदेवं प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं तत्त्वार्थश्रद्धानं सम्यग्दर्शनमिति ॥

(यशो० टीका) तत्त्वानामित्यादि । तत्त्वानां स्याद्वादमनतिक्रम्य स्थितानाम्, अर्थानां श्रद्धानम्, 'इदमित्थमेव' इति रुचिलक्षणम् । परमतोन्नीतपदार्थश्रद्धानेऽतिव्याप्तिवारणाय तत्त्वानामिति ।

दृष्टीनामपि श्रोत्रादीन्द्रियार्थोपलब्धिर्भवति, न च तज्ज्ञानस्य शब्दत्वादिमति शब्दादौ शब्दत्वादिप्रकारकस्यापि सम्यक्त्वं, तस्यैकान्तत्वावगाहितया मत्यज्ञानरूपतयैवोपगमात्, स्वप्नादयो मनोविषयाः प्रायोऽसत्या एव, तज्ज्ञानमप्यज्ञानरूपत्वान्न सम्यग्दर्शनं, नीत्राद्यभिसर्पणज्ञानमपि विशेषपरिच्छेदविधुरत्वात्तथेत्याह शब्दादिनयव्याख्यानमेतदिति । शब्दपदेन साम्प्रताख्यो नयो ग्राह्यः, आदिपदात्समभिरूढैवम्भूतयोर्ग्रहणम् । तन्मते– शब्दादिनयमते । अज्ञानाद्यभावादिति–अत्रादिपदान्मिथ्यादर्शनोपग्रहः, एवञ्च तन्मते मिथ्यादृष्टेरज्ञस्य जीवस्याभावात्सर्वं ज्ञानं यथार्थमेव, तत्र तन्मते अज्ञानाद्यभावादिति हेतुरूह्य इति । एतच्चैतदध्यायपञ्चत्रिंशत्सूत्रभाष्ये 'मिथ्यादृष्ट्यज्ञाने, न श्रयते नास्य कश्चिदज्ञोऽस्ति । ज्ञस्वाभाव्याज्जीवो, मिथ्यादृष्टिर्न चाप्यज्ञः' ॥ ४ ॥ इत्यनेन स्पष्टीभविष्यति । अथवा तद्वति तत्प्रकारकत्वलक्षणं सांव्यवहारिकयथार्थत्वं तज्ज्ञानेऽप्यनुमतं तदेवैतद्व्याख्याने सम्यक्त्वमभिमतमित्याह–याथार्थ्यमात्रे वेति । अर्थविषयकत्वमपि याथार्थ्यं तच्च नीत्राद्यभिसर्पणज्ञानेऽपीति भावः । अर्थद्वयमिति सम्यक्शब्दस्याव्युत्पत्तिपक्षं व्युत्पत्तिपक्षञ्चाश्रित्य यो द्विविधोऽर्थः प्राक्कृतस्तमित्यर्थः ।

इति प्रथमसूत्रार्थः परिसमाप्तिमगात् ॥ १ ॥

अथ द्वितीयसूत्रावतरणिकामाह–अथ "यथोद्देशं निर्देश इति न्यायादित्यादि । तत्त्वानामर्थानामित्यत्र तत्त्वानामित्यस्य सार्थक्यमाह–परमतोन्नीतेत्यादिना । यस्तत्त्वरूपस्सोऽर्थ एवेति तत्त्वमर्थरूपतां परिहृत्य नैवास्तीत्यर्थपदोपादानं व्यर्थमेव, यदि तत्त्वभूतोऽर्थवद-

अर्थपदवैयर्थ्यमियाऽऽह—तत्त्वेन वार्थानां श्रद्धानं तत्त्वार्थश्रद्धानम्, तत्सम्यग्दर्शनमिति । तत्त्वेनेत्यस्य विवरणं भावत इति । श्रद्धानमित्यस्य विवरणं निश्चितमिति, भावे क्तप्रत्ययान्निश्चय इत्यर्थः । "मातापित्रादिदाक्षिण्यानुरोधाद्यतिरिक्तस्वारसिकभावेन भगवदुक्तयावदर्थविषयकरुचिः सम्यग्दर्शनम्" इति निर्गलितोऽर्थः । अतिरिक्तान्ते स्वारसिकत्वपरिचायकम्, न तु लक्षणप्रविष्टम्, यावदिति चार्थानामिति बहुवचनमर्यादया लभ्यते । शठभावेन श्रद्धानेऽतिव्याप्तिवारणाय प्रथमं विशेषणं तृतीयान्तम्, सकलशिष्टैकवाक्यताप्रयुक्तातारादिदृष्टिसाधारणरुचावप्तिव्याप्तिवारणाय भगवदुक्तेति, आंशिकप्रवचनार्थस्वारसिकरुचावतिव्याप्तिवारणाय यावदिति, तत्त्वानामर्थानामिति पूर्वकल्पे षष्ठ्या विषयत्वालाभात् सिंहावलोकितन्यायेनाह तत्त्वादीत्यादि । तत्त्वानि जीवादीनि वक्ष्यन्ते, त एव चार्था इत्यर्थापेक्षया पुल्लिङ्गनिर्देशः । तेषां श्रद्धानं नाम तेषु प्रत्ययावधारणम् । तथा च षष्ठीसप्तम्योरर्थे प्रत्ययभेद इति व्युत्पादितं

नर्थोऽपि स्यात्तदा तन्निवृत्तिफलकत्वादर्थपदं सार्थकं स्यात्, न चैवमित्यतो विग्रहान्तरमाह—तत्त्वेन वाऽर्थानां श्रद्धानमिति । इदमप्यर्थकथनं न तु त्रिपदतृतीयातत्पुरुषः । विग्रहश्चेत्कर्त्तव्यस्तदाऽर्थश्रद्धानपदयोर्बहुवचनान्तषष्ठीतत्पुरुषं कृत्वा तत्त्वपदेन सहार्थश्रद्धानपदस्य तृतीयातत्पुरुषः कर्त्तव्य इति । स्वारसिकभावेनेति—प्रशस्तसम्यक्त्वमोहनीयकर्मानुवेदनोपशमक्षयान्यतमसमुत्थशुभात्मपरिणामभावेनेत्यर्थः । परिचायकं—स्वरूपोपरञ्जकम्, न त्वितरव्यावर्त्तकम्, अत एवाह—न तु लक्षणप्रविष्टमिति । प्रथमं विशेषणं स्वारसिकभावेनेति विशेषणम् । तारादृष्टौ स्थितो जीवस्स्वप्रज्ञाकल्पिते विसंवाददर्शनान्नानाविधमुमुक्षुप्रवृत्तेः कार्त्स्न्येन ज्ञातुमशक्यत्वाच्च शिष्टाचरितमेव पुरस्कृत्य प्रवर्त्तते । उक्तञ्च— " नास्माकं महती प्रज्ञा, सुमहान् शास्त्रविस्तरः । शिष्टाः प्रमाणमिह त,—दित्यस्यां मन्यते सदा ॥१॥ " इति । तथा च मिथ्यादृष्टीनां परमार्थगवेषणपराणां मोक्षैकप्रयोजनानां पक्षपातं परित्यज्याऽद्वेषादिगुणस्थानां तारादिदृष्टौ सकलशिष्टोक्तयावदर्थविषयकस्वारसिकरुचिस्सम्भवतीति तत्साधारणरुचौ मिथ्यारूपत्वेनालक्ष्यभूतायां लक्षणगमनादतिव्याप्तिरिति तन्निवृत्तये भगवदुक्तेति विशेषणमुक्तमित्याह—सकलशिष्टेत्यादि । पयमक्खरंपि इक्कंपि जो न रोएइ सुत्तनिद्दिट्ठं । सेसं रोयंतो वि हु, मिच्छद्दिट्ठी जमालिव्व ॥ १ ॥ इति वचनाद् भगवत्प्रोक्तप्रवचनस्य सर्वार्थानभिरोचयमानोऽपि यः कोऽपि पुरुष एकमपि पदमक्षरं तदर्थं वा यथार्थं विप्रतिपत्त्या न रोचयति तद्रुचौ " सव्वगयं सम्मत्तं " इतिसिद्धान्तोक्तेर्लक्ष्यतावच्छेदकस्य सम्यग्दर्शनत्वस्याभावेनाऽलक्ष्यभूतायां लक्षणगमनादतिव्याप्तिस्स्यादिति तन्निवृत्त्यर्थं यावत्पदोपादानमित्याह आंशिकप्रवचनार्थेति । उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनाम पर्यायेण तत्तल्लिङ्गभागिति नियमः, यथा शैत्यं हि यत् सा प्रकृतिर्जलस्येत्यादौ प्रकृतिरूपविधेयापेक्षया तच्छब्दस्य स्त्रीलिङ्गता, शैत्यरूपोद्देश्यापेक्षया यच्छब्दस्य क्लीबता, प्रकृते तथैवार्थरूपोद्देश्यापेक्षया त एवेत्यत्र तच्छब्दस्य पुल्लिङ्गतेत्याशयेनाह—त एव चार्था इत्यर्थापेक्षया पुल्लिङ्गनिर्देश इति । तेषां श्रद्धानमित्यस्य तेषु प्रत्ययावधारणमिति सप्तमीघटितार्थकरणेन ।

भवति, प्रत्ययावधारणमित्यत्र प्रत्ययेन, प्रत्ययात्ः प्रत्यये प्रत्ययस्य वाऽवधारणमिति व्याचक्षते। आद्ये प्रत्ययेनालोचनाज्ञानेनालोच्येत्यर्थः। यद्वा प्रत्ययेन क्षयोपशमादिना कारणेन, प्रत्ययात्तस्मात्, प्रत्यये सति तस्मिन्। षष्ठीपक्षे प्रत्ययस्य विज्ञानस्यावधारणं प्रामाण्यादिप्रकारको निश्चय इति यावत्, अयमेव निष्कम्पप्रवृत्तिहेतुः, अत एव सम्यग्दर्शनवान् सुमेरुनिश्चल इति गीयते। एतत्पुनः सम्यग्दर्शनं कथमुत्पन्नं सत्परेण ज्ञायेतेत्याकाङ्क्षायां लिङ्गान्युपदर्शयति

प्रशमेत्यादि। प्रशमः सुपरीक्षितप्रवक्तृप्रवाच्यप्रवचनतत्त्वाभिनिवेशाद्दोषाणामुपशमः, इन्द्रियार्थपरिभोगनिवृत्तिर्वा, संवेगः संसारभीतिः, निर्वेदो विषयानभिष्वङ्गः। परे तु व्यत्ययमाहुः। अनुकम्पा

रवौ गिरौ तरव इत्यादिवत् षष्ठीसप्तम्योरर्थे प्रत्ययभेद एवेति ज्ञापितं भवतीत्याह तथा चेत्यादि। "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु रन्ध्रे शब्दे" इत्यमरकोशवचनात् यद्यपि प्रत्ययशब्दस्सप्तस्वर्थेषु वर्त्तते तथाप्यत्र ज्ञानहेतुरूपार्थद्वयमेवोपयुक्तम्, तत्र प्रत्ययनं प्रत्यय इति व्युत्पत्त्या प्रतीत्यर्थकेन प्रत्ययशब्देन ज्ञानरूपमर्थमाश्रित्याह—आद्ये प्रत्ययेनाऽऽलोचनाज्ञानेनेत्यादि—आलोचनाज्ञानेन श्रुताद्यालोच्यैवमेव जीवादितत्त्वं, नाऽन्यथारूपमित्येवं यथावस्थितजीवादितत्त्वावगाहिरुचिरूपो निश्चयः प्रत्ययावधारणमित्यर्थः। प्रतीयतेऽनेनाऽस्मादस्मिन्निति प्रत्यय इति व्युत्पत्त्या प्रत्ययशब्देन कारणं ग्राह्यम्, तच्चानेकविधत्वात्प्रकृते दर्शनमोहनीयकर्मक्षयोपशमादिकमेवेत्याभिप्रायेणाऽऽह—यद्वेति। तस्मात् क्षयोपशमादेः, तस्मिन् क्षयोपशमादौ, एतत्सर्वस्याऽवधारणमित्यनेनान्वयः। ये भगवदुक्ततयावजीवाद्यर्थाः सर्वनयविषयताऽव्यापकाविषयताकप्रमाणगोचरत्वात्त एव सर्वे सत्या इति विज्ञानं प्रमात्मकमेवेति तादृशः विज्ञानविशेष्यकप्रामाण्यप्रकारकनिश्चय एव यद् यथाभूतं वस्तु तत्तथैव प्रतिपत्तॄणां मुमुक्षूणां श्रुतप्रमाणजन्येष्टसाधनत्वग्रहद्वारा भगवदुक्तसदनुष्ठानविषयिका या निष्कम्पप्रवृत्तिस्तद्धेतुरित्याशयेनाह—षष्ठीपक्षे प्रत्ययस्येत्यादि। नन्वेवं तर्हि यस्य पुंस उक्तविज्ञानं संजातं, न च तथापि इदं विज्ञानं प्रमात्मकमिति प्रामाण्यप्रकारको निश्चयो जातस्तस्य निष्कम्पप्रवृत्तिर्न स्यादिति चेत्, मैवम्, पूर्वोक्तं विज्ञानमप्रामाण्यज्ञानानास्कन्दितं सत्प्रवर्त्तकमित्याशयात्। यद्वा दृढस्याद्वादसंस्कारापन्नस्य पुंसोऽभ्यासादेव स्वत एव प्रामाण्यप्रकारकनिश्चयालिङ्गितमेवोक्तविज्ञानं सञ्जायत इति न कोऽपि दोष इति भावः। प्रशमलक्षणमाह—सुपरीक्षितप्रवक्तृप्रवाच्येत्यादि सुपरीक्षितो यः प्रवक्ता प्रकर्षेण संशयविपर्ययानध्यवसायनिरासपूर्वकयथार्थभावेन वक्ता तेन प्रवाच्यं यत् प्रवचनं तत्तत्त्वाभिनिवेशात्प्रमाणाबाधितत्वेनेदं प्रवचनतत्त्वमित्थमेवेत्येवं निश्चयरूपादन्यत्रादिप्रकल्पिततत्त्वविषयकामिथ्याभिनिवेशादिदोषाणामुपशमः, यो ह्यतत्त्वं विहायात्मना तत्त्वं प्रतिपन्नस्सोऽनेन लिङ्गेन लक्ष्यते सम्यग्दर्शनवानिति। यद्वा दोषाणामुपशमोऽनन्तानुबन्धिकषायदोषाणामुपशम इत्यर्थः। उक्तलक्षणप्रशमलिङ्गेनानेनानुमीयते—अयं जीवस्सम्यग्दर्शनवानीति। पक्षान्तरेण प्रशमलक्षणमाह—इन्द्रियार्थेत्यादि। संवेगलक्षणमाह-

निरुपधिपरदुःखप्रहाणेच्छा, अस्त्यात्मादिपदार्थकदम्बकमित्येषा मतिर्यस्य स आस्तिकः, तद्भाव आस्तिक्यं 'तदेव सत्यं निःशङ्कं यज्जिनेन्द्रैः प्रवेदितम्, इत्येवं स्वारसिकः परिणामः, एतेषां याऽभिव्यक्तिः स्पष्टता सा लक्षणं लिङ्गं यस्य तत्तथा, स्पष्टान्येतानि समस्तानि व्यस्तानि वा प्रतीयमानान्येकत्र धर्मिणि सम्यग्दर्शनमनुमापयन्तीत्यर्थः । स्पष्टता चात्र व्यभिचारवारकविशेषणसाहित्यरूपा ग्राह्या । तथा च जैनप्रवचनानुसारिप्रशमादीनामेव लिङ्गत्वेनाश्रयणादविदितपरमार्थानां मिथ्याशास्त्रवासनोपनीतमोहगर्भवैराग्यवतां मिथ्यादृष्टीनां प्रशमादिभिर्न व्यभिचार इति टीकाकृतः । तथापि निसर्गसम्यग्दृष्टौ श्रेणिकादौ चैतल्लक्षणागतेरनन्तानुबन्ध्यादिक्षयोपशमादिजनिता एव प्रशमादयो लिङ्गत्वेन ग्राह्या इत्याचार्याः, तदुक्तं

**संसारभीतिरिति**–जिनप्रवचनानुसारिणो नरकेषु शीतोष्णादिक्षेत्रवेदनोत्थं सङ्क्लिष्टाऽसुरादिनिर्मितं च परस्परोदीरितं च, तिर्यक्षु भारारोपणाद्यनेकविधम्, मनुजेषु दारिद्र्यदौर्भाग्यादि, देवेष्वपीर्ष्याविषादपरप्रेष्यत्वादि च दुःखमवलोकयतस्तद्भीरुतया तत्प्रशमोपायभूतं धर्मं कुर्वतोऽस्य विद्यते सम्यग्दर्शनमित्यनुमीयते संसारभयलिङ्गेनेति । **निर्वेदलक्षणमाह–विषयानभिष्वङ्ग इति**–इहलोक एव न केवलं प्राणिनां दुरन्तकामभोगाभिष्वङ्गोऽनेकोपद्रवफलकः, किन्तु परलोकेऽप्यतिकटुकनरकाऽऽदिदुःखफलप्रदः, अतो न किञ्चित्प्रयोजनमनेन निर्गुणेन, उज्झितव्य एवाऽयमिति, एवंविधनिर्वेदलिङ्गेनाऽपि लक्ष्यतेऽस्याऽस्ति सम्यग्दर्शनमिति । **अनुकम्पालक्षणमाह–निरुपधिपरदुःखप्रहाणेच्छेति**–आत्मवत्सर्वजीवेषु सुखदुःखयोः प्रियाप्रियत्वदर्शनेनाऽपक्षपातेन परपीडापरिहारेच्छा, पक्षपाते तु करुणा स्वपुत्रादौ व्याघ्रादीनामप्यस्त्येव, सा च द्रव्यतो भावतश्च भवति, द्रव्यतः सत्यां शक्तौ दुःखप्रतिकारेण, भावत आर्द्रहृदयत्वेन, उक्तञ्च–" दट्ठुण पाणिणिवहं भीमे भवसायरम्मि दुक्खंतं । अविसेसओऽणुकंपं दुहा वि समत्थओ कुणइ ॥ १ ॥" इति । अनयाऽपि लक्ष्यतेऽस्त्यस्य सम्यग्दर्शनमिति । **आस्तिक्यलक्षणमाह–अस्त्यात्मादीत्यादिना**, अनेनाऽपि लक्ष्यते सम्यग्दर्शनयुक्तोऽयमिति । **न व्यभिचार इति**–अयं सम्यग्दर्शनवान् समस्तप्रशमसंवेगनिर्वेदानुकम्पास्तिक्यान्यथानुपपत्तेः, तदन्यतरान्यथानुपपत्तेर्वेत्यनुमाने परमार्थतत्त्वानभिज्ञेषु परशास्त्रश्रवणमनननिदिध्यासनोत्थाज्ञानगर्भितवैराग्यशालिषु मिथ्यादृष्टिषु सम्यग्दर्शनवत्त्वाभावेऽपि प्रशमादिहेतोस्सद्भावेन व्यभिचारस्स्यात्, तन्निवृत्तय उक्तहेतौ जैनप्रवचनानुसारित्वविशेषणोपादानात्तादृशिष्टप्रशमादिहेतोर्मिथ्यादृष्टिष्वभावान्न व्यभिचार इति भावः । **निसर्गसम्यग्दृष्टौ श्रेणिकादौ चैतल्लक्षणागतेरिति**–निसर्गसम्यग्दर्शनं प्रवचनमनुसृत्य स्याच्चर्हि परतस्स्यात्, न च तत् परतः, अन्यथा स्वसंज्ञामेव जह्यात्, तस्मात्तदन्तरेण स्वभावादेव भवतीति तत्र प्रवचनानुसारिप्रशमादिलक्षणाऽसंघटनादव्याप्तिः, एवं श्रेणिककृष्णादौ च सापराधे निरपराधेऽपि च परस्मिन् क्रोधशालिनि विषयतृष्णातरलितमनसि च प्रशमाद्यभावेनोक्तलक्षणासङ्घटनादव्याप्तिर्दोष इति तन्निवारणायाह–**अनन्तानुबन्ध्यादिक्षयोपशमादिजनिता एव प्रशमादयो लिङ्ग-**

विंशिकायाम्—" पढमाणुदयाभावो, एयस्स जओ भवे कसायाणं । ता कह एसो एवं, भण्णइ तव्विसयवेक्खाए त्ति ॥ १ ॥ " प्रथमकषायोदयाभावमात्रात्कथमुपशमादिलिङ्गानि सम्यग्दृष्टेः प्रादुर्भवन्तीति पूर्वपक्षः । अनन्तानुबन्ध्यादिविषयापेक्षा एवोपशमादयस्तल्लिङ्गानि, न तु चारित्रपरिपाकजनितेच्छाप्रवृत्तिस्थिरसिद्धियोगानुभावा अनुकम्पानिर्वेदसंवेगप्रशमा इति नानुपपत्तिरिति सिद्धान्ताशयः । नन्वेवं लैङ्गिकवल्लिङ्गस्यापि दुर्ग्रहत्वादज्ञानाऽसिद्धिः स्यादिति चेत्, न । कुशलप्रवृत्तिभवा(द्, व)

त्वेन ग्राह्या इति–तथा च निसर्गसम्यग्दर्शनस्थले तल्लिङ्गभूताः प्रशमादयोऽनन्तानुबन्धिकषायादिक्षयोपशमादिजनिता विवक्षिता एवेति न पूर्वोक्ताऽव्याप्तिः । श्रेणिककृष्णादौ चाऽनन्तानुबन्धिसदृशविपाकप्रदर्शिसंज्वलनकषायोदयात्क्रोधकण्डूविषयतृष्णासद्भावेन तत्क्षयोपशमजनितप्रशमाभावेऽपि अनन्तानुबन्धिकषायक्षयजनितप्रशमादीनां लिङ्गभूतानां तत्रापि सद्भावान्न पूर्वोक्ताऽव्याप्तिरिति भावः । सद्धर्मविंशिकाख्यविंशतिग्रन्थगतायाः षोडश्या गाथायास्साक्षित्वमाह–'पढमाणुदयाभावो' इत्यादि । चारित्रपरिपाकजनितेच्छाप्रवृत्तिस्थिरसिद्धियोगानुभावा इति इच्छा च प्रवृत्तिश्च स्थिरश्च सिद्धिश्चेच्छाप्रवृत्तिस्थिरसिद्धयः, ताश्च योगाश्चेच्छाप्रवृत्तिस्थिरसिद्धियोगाः, द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमन्वेतीति न्यायाद्योगपदस्य प्रत्येकमन्वयादिच्छायोगप्रवृत्तियोगस्थिरयोगसिद्धियोगा इत्यर्थः । स्थानादियोगवत्तत्प्रत्येकमेदरूपाश्चत्वारोऽपीच्छादियोगाः परिशुद्धचारित्रवत एव नियमेन भवन्तीति विशुद्धचारित्रस्य तान् प्रति कारणत्वात्तेषां विशेषणमाह–चारित्रपरिपाकजनितेति । चारित्रस्य परिपाको विशुद्धिस्तेन जनिता य इच्छाप्रवृत्तिस्थिरसिद्धियोगास्ते चारित्रपरिपाकजनितेच्छाप्रवृत्तिस्थिरसिद्धियोगाः, तेषां यथाक्रममनु पश्चाद्भावा अनुभावाः कार्यभूता भवन्ति, तत्कार्यभूताः के त इत्यपेक्षायामाह–अनुकम्पानिर्वेदसंवेगप्रशमा इति । यद्यपि सम्यक्त्वस्यैवैते कार्यात्मका लिङ्गभूताः प्रवचने प्रसिद्धास्तथापि योगानुभावसिद्धानां विशिष्टानामेतेषामनुकम्पादीनामिहेच्छायोगादिकार्यत्वमभिधीयमानं न विरुध्यते, ननु लैङ्गिकस्य सम्यग्दर्शनस्येव प्रशमादिलिङ्गस्याऽप्यात्मपरिणामरूपत्वेनाऽभ्यन्तरवर्त्तिनस्तस्याऽतीन्द्रियतया परपुरुषेण ज्ञातुमशक्यत्वात्तेन समं साध्यस्य व्याप्त्यग्रहाद् व्याप्यत्वासिद्धिस्स्यादित्याशङ्कते नन्वेवमित्यादिना । निषेधे हेतुमाह कुशलप्रवृत्तिभावादिति–जिनेन्द्रोक्तनिरवद्यसत्क्रियानुष्ठानसततसोपयोगसविधिप्रवृत्तिभावादित्यर्थः । नन्वनुत्तरवासिदेवानां पङ्ग्वादीनां च कुशलप्रवृत्तिं कर्तुमशक्तत्वेन तत्रोक्तहेतुना नैव प्रशमादिहेतुग्रहस्स्यादित्याशङ्कायामाह बहुमानादितिजिनोक्तक्रियां विना नैव मोक्षावाप्तिरिति तां कर्तुकामोऽपि नैव कर्तुं शक्तः चारित्रमोहनीयोदयात् शरीरमान्द्याद्वेत्यधन्योऽहम्, ते धन्या ये सदा निर्मायया निरवद्यकुशलानुष्ठानं कुर्वन्तीत्येवं जिनोक्तक्रियाविषयकतत्कर्तृविषयकान्तरप्रीतिलक्षणबहुमानप्रशंसादिभावादित्यर्थः । यदि कुशलप्रवृत्तिभवादिति पाठस्तदा बहुमानादित्यस्य तद्विशेषणम् । यदि च कुशलप्रवृत्तिभव-

बहुमानादिता ( तः, ना. ) तदुपष्टसम्भवात् । यथा प्रशमादयो निश्चयसम्यक्त्वस्यैव लिङ्गम्, समुदितानां तेषां तदनुभावत्वात्कार्येण कारणानुमानस्य विपक्षबाधकतर्कसहकारेण बलवत्त्वात्, तदाहुः— "णिच्छयसम्मत्तं वा—हिगिच्च सुत्तभणियनिउणरूवं तु। एवंविहो णिओगो, होइ इमो हंत वन्नुत्ति ॥" तथा चास्तिक्यमेव सर्वत्राप्यव्यभिचरितमनौपाधिकसदुपदेशादिपरिणामेन सुहं (शुभं शुद्धं) लिङ्गमिति युक्तं पश्यामः । अथेदं लक्षणशास्त्रं, तस्य च किं लक्षणमिति चेत्, असाधारणधर्मवचनत्वमिति बहवः, असाधारणत्वं च लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वम्, प्रत्यक्षप्रमाकरणत्वं प्रमाणधर्म इत्यादिवाक्यातिं-

बहुमानादित इत्येव पाठस्तदा कुशलप्रवृत्तौ सत्यां मव उत्पद्यमानो यो बहुमानस्स आदिर्यस्मिन् प्रशंसादौ तस्मादित्यर्थः । कुशलप्रवृत्तिभवबहुमानादिनेति पाठे तु तृतीया पूर्वोक्तोऽर्थः कर्त्तव्य इति । अत्र कुशलप्रवृत्तिभवबहुमानादितः कुशलप्रवृत्तिभवबहुमानादिनेत्यनयोः पाठयोर्नार्थे कश्चिद्विशेषः । सम्भवन्ति सर्वेऽपि पाठास्तथाप्यत्र यथाकाममेको ग्राह्यः सुधीभिरिति । तेषां—प्रशमादीनाम् । तदनुभावत्वात् सम्यग्दर्शनकार्यत्वात् । विपक्षबाधकतर्कसहकारेणेति—विपक्षे सम्यग्दर्शनलक्षणसाध्यस्याऽभाववत्यस्मिन्पुरुषे प्रशमादिहेतोर्यत्सत्त्वं तद्बाधकस्तन्निवर्त्तको यदि कारणीभूतं सम्यग्दर्शनं न स्यात्तदा तत्कार्यभूताः प्रशमादयोऽपि न स्युः, न हि कारणमन्तरेण कार्यं भवितुमर्हति, तथा सति कार्यस्य नित्यत्वमाकस्मिकत्वं वा स्यादित्याकारको यस्तर्कस्तत्सहकारेण तद्बलेनेत्यर्थः । यद्वा कस्मिंश्चित्पुरुषे प्रशमादिहेतुरस्तु सम्यग्दर्शनलक्षणसाध्यं मास्त्वित्येवं यद्विपक्षे हेतोस्सत्त्वं तद्बाधको यदि सम्यग्दर्शनमन्तरेण प्रशमादयस्स्युस्तर्हि तज्जन्या एव ते न स्युरित्याकारको यस्तर्कस्तत्सहकारेण तद्बलेनेत्यर्थः । सद्धर्मविंशिकाख्यषष्ठीविंशिकागतसप्तदश्या गाथायाः साक्षित्वमाह—णिच्छयसम्मत्तं वा हिगिच्चेत्यादि । इदं लक्षणशास्त्रमिति—इदं " तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् " इति सूत्रं, सम्यग्दर्शनलक्षणस्य शासनाच्छास्त्रमित्यर्थः । तस्य—लक्षणशास्त्रस्य । कपिलत्वं गोधर्म इति वाक्यं यथा न गोर्लक्षणवाक्यं गवात्मकलक्ष्यैकदेशे रक्तगवादौ तस्यावृत्तित्वेनाव्याप्तेः, तथा प्रत्यक्षप्रमाकरणत्वं प्रमाणधर्म इति वाक्यमपि न प्रमाणलक्षणवाक्यम्, लक्ष्यीभूतप्रमाणैकदेशेऽनुमितिकरणादाववृत्तित्वेन तस्याऽव्याप्तिदोषग्रस्तत्वादिति प्रमाणधर्मलक्षणवाक्यलक्षणाऽलक्ष्ये प्रत्यक्षप्रमाकरणत्वं प्रमाणधर्म इति वाक्ये लक्ष्यतावच्छेदकीभूतप्रमाणत्वस्याऽभाववति न प्रत्यक्षप्रमाकरणत्वं वर्त्तत इति तस्य तद्व्याप्यत्वात्तत्प्रतिपादकत्वसत्त्वेन लक्ष्यतावच्छेदकव्याप्यधर्मवचनत्वस्वरूपलक्षणवाक्यलक्षणस्य गमनादतिव्याप्तिस्तन्निवारणाय सत्यन्तम्, तदभिधाने च लक्ष्यतावच्छेदकप्रमाणत्वमनुमितिकरणादौ वर्त्तते, न च तत्र प्रत्यक्षप्रमाकरणत्वमस्तीति तस्य तद्व्यापकत्वाभावान्न तत्प्रतिपादकवाक्ये प्रमाणलक्षणवाक्यलक्षणातिव्याप्तिरित्याशयेनाह—प्रत्यक्षप्रमाकरणत्वं प्रमाणधर्म इत्यादीति । शृङ्गित्वं गोधर्म इति वाक्यं यथा गोर्न लक्षणवाक्यं लक्ष्यतावच्छेदकगोत्वाभाववति महिषादौ शृङ्गित्वस्य सत्त्वेन तस्याऽलक्ष्यवृत्तित्वेनाऽतिव्याप्ति-

व्याप्तिवारणाय सत्यन्तम्, पदार्थत्वं प्रमाणधर्म इत्यादिवाक्यातिव्याप्तिवारणाय व्याप्यदलम्, धर्मपदं च येन सम्बन्धेन लक्षणता तेन व्यापकत्वादिलाभार्थम्, तेन कालिकसम्बन्धेन घटत्वव्याप्यद्रव्यत्वादेर्न घटलक्षणत्वम् । यत्तु व्यतिरेकिधर्मत्वमसाधारणत्वमिति गोवर्धनाद्युक्तं तदसत् । प्रमेयलक्षणे प्रमाविषयत्वे आचार्याद्युक्तेऽव्याप्तेः । न च प्रमाकरणत्वादिरूपाऽसाधारणवचनेषूद्देशपरीक्षावाक्येष्वतिव्याप्तिः । तद्धर्मावच्छिन्नोद्देश्यताकतद्धर्मसमव्यापकधर्मावच्छिन्नविधेयताकशाब्दबोधजनकं वचनं तत्र तस्य लक्षणवाक्यमित्यत्र तात्पर्यात् । अत एव पृथिवीत्वेन घटमुद्दिश्य कम्बुग्रीवादिमती पृथिवीति प्रयोगे न लक्षणशास्त्रत्वमिति गौरीकान्तस्तदपि न युक्तम् । पृथिव्या गन्धो लक्षणमित्यादिलक्षणशास्त्रेऽव्याप्तेः, न ह्यत्र पृथिवीमुद्दिश्य गन्धो विधीयते, किन्तु गन्धमुद्दिश्य पृथिवीलक्षणत्वमिति । तस्मान्नायं पन्थाः । किन्तु तत्र तद्धर्मस्य लक्षणत्वेन प्रतिपादकं वचनं तत्र तल्लक्षणशास्त्रमिति व्याख्यानं युक्तम् । लक्षणत्वं चेतरभेदव्याप्यत्वं वा लक्ष्यतावच्छेदकसमव्यापकत्वं वेत्यन्यदेतत्, तद्बोधश्च लक्षणादिपदोपसन्धाने प्रकार-

दोषग्रस्ततया तत्प्रतिपादकगोलक्षणवाक्यस्य गोलक्षणवाक्यत्वाऽसम्भवात्, तथा पदार्थत्वं प्रमाणधर्म इति वाक्यमपि न प्रमाणलक्षणवाक्यं, तस्य लक्ष्यतावच्छेदकीभूतप्रमाणत्वाभाववद्घटपटादिवृत्तित्वेनाऽतिव्याप्तस्य पदार्थत्वस्य प्रमाणलक्षणाऽनात्मकस्य प्रतिपादकत्वेन प्रमाणलक्षणवाक्यत्वाऽसम्भवादित्यलक्ष्ये तस्मिन् वाक्ये लक्ष्यतावच्छेदकप्रमाणत्वव्यापकपदार्थत्वधर्मप्रतिपादकवचनत्वमस्त्यात् प्रमाणलक्षणवाक्यलक्षणातिव्याप्तिरस्यात्तन्निवृत्तये व्याप्यदलमित्याह—पदार्थत्वं प्रमाणधर्म इत्यादीति । असाधारणधर्मवचनत्वलक्षणघटकधर्मपदफलमाह—धर्मपदञ्चेत्यादि । न घटलक्षणत्वमिति—समवायसम्बन्धेन द्रव्यत्वस्य घटत्वव्याप्यत्वाभावादिति भावः । अत्र घटत्वस्य पृथिवीत्वस्य च समवायेन द्रव्यत्वव्याप्यत्ववत्कालिकसम्बन्धेन द्रव्यत्वव्यापकत्वेऽपि न तद् द्रव्यलक्षणं, समवायसम्बन्धेन द्रव्यत्वव्यापकत्वाभावादित्यपि ज्ञेयम् । व्यतिरेकिधर्मत्वमिति इतरभेदानुमापकधर्मत्वमित्यर्थः । अव्याप्तेरिति प्रमाविषयत्वस्य केवलान्वयित्वेन तत्र लक्ष्यस्य प्रमेयस्येतराप्रसिद्ध्या तद्भेदस्याऽप्यप्रसिद्धत्वेन तदनुमापकत्वलक्षणव्यतिरेकिधर्मत्वासङ्गतेरिति भावः । ननु प्रमाणमित्युद्देशवचनमपि प्रमाकरणत्वविशिष्टार्थकं लक्षणशास्त्रं स्यात्, प्रमाकरणत्वस्य प्रमाकरणत्वरूपलक्ष्यतावच्छेदकसमनियतधर्मत्वेन तत्प्रतिपादकत्वस्य तत्र भावात्, एवं प्रमाणपरीक्षावाक्यमपि प्रमाणपदघटितमिति तत्राप्युक्तदिशोक्तलक्षणगमनादिति तयोरतिव्याप्तिरित्याशङ्क्य प्रतिक्षिपति—न चेति न चेत्यस्यातिव्याप्तिरित्यनेनान्वयः । तत्र हेतुमाह—तद्धर्मावच्छिन्नेत्यादि । अत एवेति तद्धर्मावच्छिन्नोद्देश्यताकेत्याद्यर्थे असाधारणधर्मवचनत्वमिति लक्षणवाक्यलक्षणस्य तात्पर्यादेवेत्यर्थः । न लक्षणशास्त्रत्वमिति—कम्बुग्रीवादिमत्त्वस्य पृथिवीत्वव्याप्यत्वेऽपि तद्व्यापकत्वाभावेन तत्समव्यापकधर्मत्वाभावादुक्तप्रयोगे पृथिवीत्वावच्छिन्नोद्देश्यताकपृथिवीत्वसमव्यापकधर्मावच्छिन्नविधेयताकशाब्दबोधजनकत्वाभावादिति भावः । तद्बोधश्चेति लक्षणबोधश्चेत्यर्थः । लक्षणादिपदोपसन्धाने

तथाऽन्यत्र च लक्षणशास्त्रव्युत्पत्तिविशेषमहिम्ना संसर्गतयेति न कश्चिद्दोषः । अत एव पृथिवी गन्धवती, गन्धवत्त्वप्रकारकप्रमाविशेष्यत्वात्, इत्यादिन्यायवाक्यैकदेशप्रतिज्ञायामलक्षणायां नातिव्याप्तिरित्यस्मदेकपरिशीलितः पन्थाः ॥२॥

तदेवं लक्षितस्य सम्यग्दर्शनस्य हेतुद्वारा भेदजिज्ञासायामाह

## सूत्रम् तन्निसर्गादधिगमाद्वा ॥ १ ॥ ३ ॥

तच्छब्दोऽव्यवहितपूर्वोक्तपदार्थपरामर्शकः । स च मानसप्रत्यक्षविषयः सम्यग्दर्शनमेवेत्याह भाष्यकारः—

**(भा०) तदेतत्सम्यग्दर्शनं द्विविधं भवति । निसर्गसम्यग्दर्शनमधिगमसम्यग्दर्शनञ्च । निसर्गादधिगमाद्वोत्पद्यत इति द्विहेतुकं द्विविधम् ॥ निसर्गः परिणामः स्वभावः अपरोपदेश इत्यनर्थान्तरम् । ज्ञानदर्शनोपयोगलक्षणो जीव इति वक्ष्यते, तस्यानादौ संसारे परिभ्रमतः कर्मत एव कर्मणः स्वकृतस्य बन्धनिकाचनोदयनिर्जरापेक्षं नारकतिर्यग्योनिमनुष्यामरभवग्रहणेषु विविधं पुण्यपापफलमनुभवतो ज्ञानदर्शनोपयोगस्वाभाव्यात् तानि तानि परिणामाध्यवसायस्थानान्तराणि गच्छतोऽनादिमिथ्यादृष्टेरपि सतः परिणामविशेषादपूर्वकरणं तादृग्भवति येनास्यानुपदेशात्सम्यग्दर्शनमुत्पद्यत इत्येतन्निसर्गसम्यग्दर्शनम् ॥ अधिगमः अभिगमः आगमो निमित्तं श्रवणं शिक्षा उपदेश इत्यनर्थान्तरम् । तदेवं परोपदेशाद्यत्तत्त्वार्थश्रद्धानं भवति तदधिगमसम्यग्दर्शनमिति ॥**

(यशो० टीका) तदेतदित्यादि । निसर्गाद् गुर्वाद्युपदेशरहितस्वभावात्, अधिगमाद् गुर्वाद्युपदेशाद्वोत्पद्यत इति हेतोर्द्विहेतुकं द्विविधं हेतुभेदप्रयुक्तभेदद्वयप्रतियोगीत्यर्थः,

प्रकारतयेति—पृथिव्या गन्धो लक्षणमित्यादौ गन्धमुद्दिश्य लक्षणत्वविधानाद्धेयत्वसम्बन्धावच्छिन्नपृथिवीत्वावच्छिन्नप्रकारतानिरूपितगन्धत्वावच्छिन्नविशेष्यत्वाभिन्नविशेष्यतानिरूपितलक्षणत्वनिष्ठप्रकारतानिरूपकबोधात्तत्र प्रकारतयेत्यर्थः । अन्यत्र च लक्षणशास्त्रव्युत्पत्तिविशेषमहिम्ना संसर्गतयेति न कश्चिद्दोष इति गन्धवती पृथिवीत्यत्र स्ववृत्तिलक्ष्यतावच्छेदकसमानियतधर्मवत्तादात्म्यसम्बन्धेन गन्धवतः प्रकारत्वम्, अथवा गन्धवतस्तादात्म्यसम्बन्धेन प्रकारत्वे धर्मिपारतन्त्र्येण गन्धस्यापि पृथिव्यां प्रकारत्वं, तत्र च तद्धर्मविशिष्टे भासमानं सत्तत्राऽपि भासत इति न्यायात्पृथिवीत्वेऽपि सामानैयत्यसम्बन्धेन गन्धस्य भानमिति भावः । नाऽतिव्याप्तिरिति—पृथिवी गन्धवतीति प्रतिज्ञायां गन्धवत्त्वस्य लक्षणत्वेन प्रतिपादनाभावादिति भावः ॥ इति द्वितीयसूत्रवृत्तिस्सम्पूर्णा ॥

अथ तृतीयसूत्रावतरणिकामाह—तदेवं लक्षितस्येत्यादिना । द्विहेतुकमिति उत्पत्तौ न तु स्वभेदे द्वौ हेतू यस्य तद्द्विहेतुकमित्यर्थः । यथाऽङ्कुरत्वेन यवाङ्कुरशाल्यङ्कुरयोरैक्येऽपि स्वोत्पत्तौ यवशालिरूपकारणभेदादेव यवाङ्कुरशाल्यङ्कुररूपकार्यभेदस्तथाऽत्रापि निसर्गसम्यग्दर्शनाधिगमसम्यग्दर्शनयोर्मुख्यवृत्त्याऽऽत्मपरिणामरूपत्वेनैक्येऽपि स्वोत्पत्तौ यौ निसर्गाधिगमरूपकारणभेदौ तदधीनमेव निसर्गसम्यग्दर्शनाधिगमसम्यग्दर्शनरूपकार्यभेदद्वयं तत्प्रतियोगि सम्यग्दर्शनमित्याह हेतुभेदप्रयुक्तभेदद्वयप्रतियोगी-

तेन न निर्देशस्वामित्वेत्यादिसूत्रे भेदस्याग्रेऽवश्यवक्ष्यमाणत्वादस्य सूत्रस्य पृथक्करणे निर्बीजत्वम्, हेतुभेदप्रयुक्तभेदजिज्ञासाया एतत्सूत्रपृथक्करणबीजस्य जागरूकत्वात् । अत एवोत्पद्यत इति क्रियाऽत्र न पूरणीया, हेतुभेदप्राधान्यबुद्ध्यापत्तेः । अत्र सूत्रस्थो वाशब्दस्तृणारणिमणिन्यायेन वैकल्पिकीं कारणतां सूचयति । तेन निसर्गजन्यं सम्यग्दर्शनमन्यदेव, अधिगमजन्यं चान्यदिति लभ्यते । उभयजन्यं तर्हि किञ्चिद्भिन्नं स्याद् धूमालोकोभयपरामर्शजन्यानुमितिवत्, अन्यथा प्रत्येकजन्यतावच्छेदकजात्योरेकत्र साङ्कर्यापातादित्यार्थ इति । तेनेति—कारणभेदप्रयुक्तकार्यभेदस्यैव प्रश्नविषयतया हेतुभेदप्रयुक्तकार्यभेदस्यैव प्रतिपादयितुमिष्टत्वेनेत्यर्थः, हेतुभेदप्रयुक्तसम्यग्दर्शनभेदजिज्ञासानिवृत्त्यर्थमेव "तन्निसर्गादधिगमाद्वा" इति सूत्रं प्रवृत्तमतोऽस्य हेतुभेदप्रयुक्तसम्यग्दर्शनभेद एव मुख्योऽर्थो न तु हेतुभेदस्तथा, हेतुभेदस्य मुख्यतयैतत्सूत्रार्थत्वं तदा लभ्येत, यदि "तदेवं लक्षितस्य सम्यग्दर्शनस्य हेतुभेदजिज्ञासायामाह" इत्येवमवतरणिकयोक्तसूत्रमवतारितं स्यात्, मुख्यहेतुभेदार्थकत्वोपपादनाय च तन्निसर्गादधिगमाद्वोत्पद्यत इत्येवमुत्पद्यत इति क्रियाध्याहारतः समभिव्यवहारविशेषमाश्रित्यैव सूत्रार्थः करणीयः स्यात्, उत्पद्यत इति क्रियाध्याहारमन्तरेण निसर्गाधिगमयोः पञ्चमीविभक्त्युपदप्रतिपाद्यत्वमात्रेण तं प्रति कारणत्वावगमासम्भवात् । ज्ञायत इत्यादिक्रियासमभिव्याहृतात्पञ्चमीविभक्त्यन्तात् स्वार्थज्ञानजन्यज्ञानविषयत्वाद्यर्थबोधस्यापि सम्भवात्, न चैवमवतारितं सूत्रम्, किन्तु तदेवं लक्षितस्य सम्यग्दर्शनस्य हेतुद्वारा भेदजिज्ञासायामाहेत्येवमेवाऽवतारितम्; ततो हेतुभेदप्रयुक्तभेदजिज्ञासानिवृत्त्यर्थं प्रवृत्तस्य सूत्रस्य जिज्ञासितहेतुभेदप्रयुक्तभेदरूपमुख्यार्थकत्वात्तस्योत्पद्यत इति क्रियाध्याहारमन्तरेणैवोपपत्तेरुक्तक्रियाध्याहारस्यानावश्यकत्वाच्च न हेतुभेदप्राधान्यबुद्धिः, द्विभेदत्वोपपादकद्विहेतुकत्वोपपत्तये च भाष्ये निसर्गादधिगमाद्वोत्पद्यत इत्युक्तिः, न तु स्वातन्त्र्येण हेतुभेदः प्रतिपाद्यत इत्याशयेनाह—अत एवोत्पद्यत इति क्रियाऽत्र न पूरणीयेति—अत एव हेतुभेदप्रयुक्तभेदस्यैव जिज्ञासितत्वादेव । उत्पद्यत इति क्रियापूरणे दोषमाह—हेतुभेदप्राधान्यबुद्ध्यापत्तेरिति । तृणारणिमणिन्यायेनेति—तृणारणिमणीनधिकृत्य प्रवृत्तो न्यायः स च तृणत्वेनारणित्वेन मणित्वेन वह्नित्वावच्छिन्नम्प्रति कारणत्वे एकैकाभावेऽपि तदन्यैकमात्रेणाऽपि वह्न्युत्पत्तेर्व्यतिरेकव्यभिचारेण नोक्तरूपेण कारणत्वं, किन्तु वह्निगतवैजात्यमभ्युपगम्य त्रिजातीयवह्नित्वावच्छिन्नम्प्रति तृणत्वेन विजातीयवह्नित्वावच्छिन्नम्प्रत्यरणित्वेनैवं मणित्वेन परस्परानिरपेक्षेण प्रत्येकधर्मपुरस्कारेण कारणत्वमित्येवं वैकल्पिककारणत्वसाधकयुक्तिलक्षणस्तेनेत्यर्थः । अन्यदिति—विजातीयमित्यर्थः । सम्यग्दर्शनत्वव्याप्यजातिशालीति यावत्, धूमालोकोभयपरामर्शजन्यानुमितिवदिति वह्निव्याप्यधूमवान्पर्वत इत्येकः परामर्शो वह्निव्याप्यालोकवान् पर्वत इत्यपरः परामर्शः, तदुभयपरामर्शजन्या या वह्न्यनुमितिस्तद्वदित्यर्थः । अन्यथेति—निसर्गाधिगमोभयजन्यमेकं सम्यग्दर्शनं भिन्नं न स्यात्तदेत्यर्थः । साङ्कर्यापातादिति—परस्परात्यन्ताभावसमानाधिकरणयोरेकाधिकरणवृत्तित्वं साङ्कर्यं, तथा चाधिगमसम्य-

शङ्कानिवृत्त्यर्थमसमासकरणम् । अन्यथा निसर्गाधिगमादिति समाहारद्वन्द्वेन लघुप्रक्रममेव कुर्याल्लाघवप्रियत्वात् सूत्रकाराणाम्, तथा च तृणारणिमणीनां वह्नौ यथा एकशक्तिमत्त्वेन हेतुत्वं तथा ग्दर्शने निसर्गसम्यग्दर्शनत्वाभावसमानाधिकरणमधिगमसम्यग्दर्शनत्वं, निसर्गसम्यग्दर्शनेऽधिगमसम्यग्दर्शनत्वाभावसमानाधिकरणं निसर्गसम्यग्दर्शनत्वं, तयोश्च निसर्गाधिगमोभयजन्यसम्यग्दर्शने सामानाधिकरण्यमित्येवं साङ्कर्यस्य जातिबाधकस्य सद्भावेन निसर्गसम्यग्दर्शनत्वाधिगमसम्यग्दर्शनत्वयोर्जातित्वं न स्यादित्यर्थः । अन्यथेति–निसर्गाधिगमोभयजन्यमेकं सम्यग्दर्शनं यद्यभ्युपगतं स्यात्तदेत्यर्थः । लघुप्रक्रममेव कुर्यादिति–निसर्गश्चाधिगमश्च निसर्गाधिगमौ अनयोस्समाहारो निसर्गाधिगमं तस्मादित्येवं समाहारद्वन्द्वे कृते सम्यग्दर्शनत्वावच्छिन्नैककार्यतानिरूपितकारणतायां निसर्गाधिगमोभयस्मिन् सिद्धत्वाल्लघुसूत्रमेव कुर्यादिति भावः । तत्र हेतुमाह–लाघवप्रियत्वात् सूत्रकाराणामिति । यथा तृणादित्रयाणां वह्न्यनुकूलशक्तिमत्त्वेन कारणत्वमिति नाऽनुगतवह्नित्वावच्छिन्नकार्यम्प्रति तृणत्वादितत्तत्प्रत्येकधर्मावच्छिन्नकारणत्वपक्षीयव्यतिरेकव्यभिचारदोषः, अभिव्यञ्जकविधयाऽवच्छेदकीभूततृणत्वावच्छिन्नतृणजन्यत्वात्तार्णो वह्निः, अभिव्यञ्जकविधयाऽवच्छेदकीभूतारणित्वावच्छिन्नारणिजन्यत्वादारणेयो वह्निरित्यादिव्यपदेशः, येन यो जन्यते तेन तद्व्यपदेश इति हेतोः । तथा सम्यग्दर्शनानुकूलैकशक्तिमत्त्वेन निसर्गाधिगमयोः कारणत्वं, तत्राऽभिव्यञ्जकविधयाऽवच्छेदकीभूतनिसर्गत्वावच्छिन्ननिसर्गजन्यत्वान्नैसर्गिकसम्यग्दर्शनमिति, अभिव्यञ्जकविधयाऽवच्छेदकीभूताधिगमत्वावच्छिन्नाधिगमजन्यत्वादाधिगमिकसम्यग्दर्शनमिति च व्यपदेश इत्याशयेनाह–**तथा च तृणारणिमणीनामित्यादि** । ननु पूर्वं निसर्गाधिगमयोर्वैकल्पिकी कारणतोक्ता, इदानीं तयोरेकधर्मावच्छिन्नं प्रत्येकधर्मावच्छिन्नैका कारणतोच्यत इति पूर्वापरग्रन्थसन्दर्भविरोध इति चेत्, न, यवैर्यजेत व्रीहिभिर्वेत्यादौ नैयायिकैर्मीमांसकादिभिश्च वैकल्पिकी कारणता व्रीहिकरणकयागयवकरणकयागयोः स्वर्गत्वावान्तरैकवैजात्यविशेषावच्छिन्नस्वर्गविशेषम्प्रत्यभ्युपेयते, तत्र नैयायिकमते स्वर्गविशेषनिष्ठकार्यतैकधर्मावच्छिन्नैव, कारणता तु व्रीहिकरणकयागनिष्ठा व्रीहिकरणकयागत्वावच्छिन्नैका, यवकरणकयागनिष्ठा यवकरणकयागत्वावच्छिन्नाऽन्या, वैकल्पिककार्यकारणभावस्थले कारणत्वग्राहकमन्वयमात्रमेव, अन्वयमात्रादेव तत्र कारणताग्रहो भवतीति नियमः, धर्मिग्राहकप्रमाणादप्यात्मादीनां ज्ञानादिविशेषगुणम्प्रति कारणत्वस्याऽभ्युपगमात्, तथा च तन्नयाश्रयेण पूर्वं वैकल्पिकी कारणतोक्ता टीकाकृता, नन्वेवं यवकरणकयागादिस्थलवत्तृणारणिमणीनां वह्नित्वैकधर्मावच्छिन्नम्प्रति एकशक्तिमत्त्वेन कारणत्वस्याऽन्वयमात्रगम्यस्य सम्भवेन वह्निगतवैजात्यत्रयस्य कार्यतावच्छेदकतयाऽभ्युपगमोऽनुचित एवेति चेत्, न, यथाहि–प्रदीपः प्रासादोदरव्यापकमालोकमारभते न तथा ज्वालाजालजटिलोऽपि तृणकाष्ठादिप्रसवोऽनलः, नतरां च कारीष इत्यादितस्तृणादिजन्यवह्निगतवह्नित्वावान्तरवैजात्यानां प्रत्यक्षासिद्धाया तदवच्छिन्नकार्यतानिरूपितकारणत्वस्यान्वयव्यतिरेकोभयगम्यस्य सम्भवेन तत्राऽन्वय-

निसर्गाधिगमयोः सम्यग्दर्शनेऽपीति न दोषः । परामर्शस्थलेऽपि स्वाव्यवहितोत्तरत्वं कार्यतावच्छेदककोटौ देयम्, न तूभयपरामर्शजन्यतावच्छेदिका जातिः स्वीकर्तव्या, तदवच्छिन्नोत्पादकसामग्र्ये प्रत्येकजन्यतावच्छेदकजात्यवच्छिन्नोत्पत्त्यापत्तेः, तत्रेतरपरामर्शाद्यभावहेतुत्वकल्पने च महागौरवादित्यन्यत्र विस्तरः । अत्रापि निसर्गाधिगमयोः स्वाव्यवहितोत्तरसम्यग्दर्शनत्वं पृथग्जन्यतावच्छेदकमितिकल्पनायामपि न दोषः,

मात्रस्य कारणत्वग्राहकत्वे बलवत्तरप्रमाणाभावेनैकधर्मावच्छिन्नकार्यत्वानुपगमादित्यतो वैजात्यत्रयस्य कार्यतावच्छेदकतयोपगमस्य सामञ्जस्यात्, कारणे कार्यानुकूलशक्त्यभ्युपगन्तृमीमांसकमते तु वैकल्पिककारणतास्थले यथैकधर्मावच्छिन्ना स्वर्गविशेषनिष्ठा कार्यता एका तथा यवकरणकयागव्रीहिकरणकयागयोरपि कार्यानुकूलैकशक्तिमत्त्वसम्भवात्तदवच्छिन्ना कारणतापि तदुभयनिष्ठैका सम्भवतीति तत्र यथा कार्यतैकधर्मावच्छिन्नैका, कारणताऽपि यागद्वयनिष्ठैकैव तदुभयानुगतशक्तिमत्त्वावच्छिन्ना, तथा तृणादिस्थलेऽप्येकशक्तिमत्त्वावच्छिन्नैकैव कारणता, एतट्टीकाकृदपि शक्तिपदार्थाभ्युपगन्तृमीमांसकमतमेव न्याय्यमित्युररीकृत्य वैकल्पिककारणतायामेव निसर्गाऽधिगमतायामेकशक्तिमत्त्वधर्मावच्छिन्नत्वेनैकत्वमभ्युपगच्छतीति न सन्दर्भविरोधः । एवञ्च शक्तिमत्त्वेन कारणत्वपक्षे शक्तिमतां यावतां कार्यनियतपूर्ववर्तित्वं नावश्यकम्, किन्तु तन्मध्याद् यस्य कस्यचिदेकस्य, न च व्यतिरेकव्यभिचारः, एकशक्तिमत्त्वेन कारणत्वाभ्युपगमात्, तथा च यवकरणकव्रीहिकरणकयागयोश्शक्तिमतोरन्यतरस्य सत्त्वे स्वर्गविशेषत्वावच्छिन्नोत्पत्तिस्तथा निसर्गाधिगमयोश्शक्तिमतोरन्यतरस्य सत्त्वे सम्यग्दर्शनत्वावच्छिन्नोत्पत्तिः, शक्तिमतो निसर्गाद् यदुत्पद्यते तन्नैसर्गिकसम्यग्दर्शनम्, यच्च शक्तिमतोऽधिगमादुत्पद्यते तदाधिगमिकसम्यग्दर्शनामिति व्यवह्रियत इति बोध्यम् । उभयपरामर्शजन्यानुमितिवदिति यदुक्तं तदपि न युक्तं, यतो द्विविधयोरपि परामर्शयोरेकानुमितिम्प्रति कारणत्वे धूमलिङ्गकपरामर्शाभावेऽप्यालोकलिङ्गकपरामर्शादनुमित्युत्पत्तेर्व्यतिरेकव्यभिचारस्स्यादिति तन्निवृत्तये धूमलिङ्गकपरामर्शाव्यवहितोत्तरजायमानवह्न्यनुमितिं प्रति धूमपरामर्शत्वेन एवमालोकलिङ्गकपरामर्शाव्यवहितोत्तरजायमानवह्न्यनुमितिं प्रति आलोकपरामर्शत्वेन कारणत्वं वाच्यमित्याह—परामर्शस्थलेऽपीत्यादि । उक्तापत्तिदोषवारणायैकपरामर्शजन्यानुमितिम्प्रति तदन्यपरामर्शाऽभावोऽपि कारणमित्यभ्युपगम्यत इत्युभयपरामर्शादिस्थले न प्रत्येकपरामर्शजन्यानुमितिप्रसङ्ग इति कल्पनायां दोषमाह—तत्रेतरेत्यादि । निसर्गाव्यवहितोत्तरजायमानसम्यग्दर्शनत्वावच्छिन्नम्प्रति निसर्गत्वेनाधिगमाव्यवहितोत्तरजायमानसम्यग्दर्शनत्वावच्छिन्नं प्रत्यधिगमत्वेन च कारणत्वमिति कल्पनायामपि न दोषः, "जावइया नयवाया, तावइया चेव वयणवाया । जावइया वयणवाया, तावइआ चेव नयवाया ॥ १ ॥" इत्युक्तेर्नयवादानामनेकविधत्वादित्याह—अत्रापि निसर्गाधिगमयोरिति । तस्य—निसर्गस्य । स्याद्वादसिद्धान्ते वस्तुनः पूर्वानेकस्वैभोतिस्तदीस्याकृपेण परिणमते, न तु बौद्धानामिव सर्वथा विलयः, न चान्य-

विचित्रत्वान्नयवादानामित्यवधेयम्। कोऽसौ निसर्ग इत्याकाङ्क्षायामाह **निसर्गः परिणाम** इत्यादि। निसृज्यते त्यज्यते कार्यनिवृत्तौ सत्यामिति निसर्गः परिणामः। उत्पन्ने सम्यग्दर्शनेऽनिवृत्तिकरणनाम्नस्तस्य स्वत एवोपरतिलक्षणस्य त्यागस्यावर्जनीयत्वात्, न चायमत्यन्तं त्यागः, अनिवृत्तिकरणपरिणतस्यैवात्मनोऽनन्तरं सम्यग्दर्शनपरिणतेरभ्युपगमात्, उत्फणविफणप्रसारिताकुण्डलितभुजङ्गवदुत्थितासीनशयितपुरुषवदङ्कुरितकिशलयितपत्रितपुष्पितफलिततरुवद्वा, अवस्थाभेदेऽपि तद्वतोऽभेदात्। तत्किमनिवृत्तिकरणपरिणामः सम्यग्दर्शनस्योपादानकारणं तत्परिणतमात्मद्रव्यं वेति चेत्, पर्यायद्रव्यनयभेदेनोभयमिति गृहाण। आद्यनये यद्ध्वंसात्मिका यदुत्पत्तिस्तत्तस्योपादानकारणम्। द्वितीयनये च यद्रूपावच्छिन्नयद्ध्वंसात्मिका यद्रूपावच्छिन्नयदुत्पत्तिस्तद्रूपावच्छिन्नं तत्तद्रूपावच्छिन्नतदुपादानकारणमिति विवेकः। सजेः परिणामेऽप्रतीतत्वादाह **स्वभाव** इति। परिणामो द्विधा दृष्टः, प्रयोगेण घटादीनाम्,

---

स्थानाशे तद्वतोऽपि सर्वथा विनाशः, अवस्थातद्वतोः कथञ्चिद्भेदाभ्युपगमात्, अन्यथोत्पादव्ययध्रौव्ययुक्तं सदिति सल्लक्षणस्यैवाऽनुपपत्तिस्स्यात्, परिणामवादाभ्युपगमे च पूर्वावस्थारूपेण विनाश उत्तरावस्थारूपेणोत्पत्तिः, पूर्वापरावस्थानुगामिरूपेण ध्रौव्यमिति त्रिलक्षणोपपत्तिस्स्यादेव, तदेव सदृष्टान्तत्रयमुपपादयितुमाह—**न चे**त्यादिना। न चेत्यस्य त्याग इत्यनेनान्वयः। तत्र हेतुमाह—**अनिवृत्तिकरणे**त्यादि। परिणामवादे दृष्टान्तत्रयमाह—**उत्फणविफणे**त्यादिना। **तत्परिणतमिति**—अनिवृत्तिकरणपरिणामेन परिणतमित्यर्थः, **आद्यनये यद्ध्वंसात्मिका यदुत्पत्तिस्तत्तस्योपादानकारणमिति**—पर्यायनयेऽनिवृत्तिकरणपरिणामपर्यायध्वंसात्मिका सम्यग्दर्शनोत्पत्तिरिति स पर्यायस्तस्य सम्यग्दर्शनस्योपादानकारणमित्यर्थः। ननु ध्वंसस्याभावरूपत्वेनाऽतिरिक्तत्वान्न तदात्मिका तदुत्पत्तिः किन्तु तेनोत्पत्तिः, यथा घटविनाशेन कपालिकोत्पत्तिरिति यद्ध्वंसात्मिका यदुत्पत्तिरित्युक्तं कथं सङ्गच्छत इति चेत्, मैवम्, पर्यायनये हि ध्वंसो नातिरिक्ताभावात्मकः, तस्याऽर्थक्रियाकारित्वाभावेन तुच्छरूपत्वात्, न हि घटविनाशे तत्तत्कपालिकां मुक्त्वाऽन्यदुपलभ्यत इत्यनुपलभ्यमानत्वाच्च, किन्तूत्तरपर्यायात्मक एवेति नोक्तदोषः। **द्वितीयनये च यद्रूपावच्छिन्नयद्ध्वंसात्मिके**त्यादि—द्रव्यनये चाऽनिवृत्तिकरणपरिणामरूपेण पूर्वं परिणत आत्मा सम्यग्दर्शनरूपेणोत्तरकालं परिणमत इत्येवं परिणाम्यात्माऽनिवृत्तिकरणपरिणामेन विनश्योत्तरकालं सम्यग्दर्शनरूपेणोत्पद्यते, तथा चाऽनिवृत्तिकरणपरिणामावच्छिन्नात्मध्वंसात्मिका सम्यग्दर्शनावच्छिन्नात्मोत्पत्तिरित्यनिवृत्तिकरणपरिणामावच्छिन्नात्मद्रव्यं सम्यग्दर्शनाच्छिन्नात्मन उपादानकारणमित्यर्थः। स्वावच्छिन्नोत्पत्तिकत्वसम्बन्धावच्छिन्नकार्यतानिरूपितस्वावच्छिन्नध्वंसत्वसम्बन्धावच्छिन्नकारणताशालित्वमुपादानकारणत्वमिति भावः। न्यायनिष्णातास्तु यत्र द्रव्ये यद् द्रव्यं समवायेनोत्पद्यते तद्द्रव्यं तद्द्रव्यस्योपादानकारणमिति प्राहुस्तदपि जैनानुगानां न विरुद्धम्, इयांस्तु विशेषः—तेषां समवायसम्ब-

विश्रसातश्चाभ्रेन्द्रधनुरादीनाम्। तत्रायं वैस्रसिकः परिणाम इत्युक्तं भवति, नासावन्येन प्राणिना तस्य क्रियते, किन्तु स्वेनैवात्मनाऽसौ भावो जनित इति स्वभाव इत्युच्यते। ननु सर्वस्य कार्यस्य सिद्धान्ते दैवपुरुषकारोभयजन्यत्वात् कथमत्र स्वभावत्वोपवर्णनमत आह—अपरोपदेश इति। परोपदेशानपेक्षः परिणामो निसर्ग इत्येतन्नाऽर्थान्तरम्। तथा च परोपदेशस्थले यादृशः पुरुषकारव्यापारस्तादृशो निसर्गस्थले नास्तीत्युत्कटपुरुषकारव्यापाराजन्यत्वादत्र स्वभावव्यपदेश इति भावः, उभयजन्ये एकैकजन्यत्वव्यवहारस्योत्कटस्वस्वव्यापारापेक्षयैवोपदेशपदादावुक्तत्वात्,

---

न्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताशालित्वमुपादानकारणत्वम्। अस्माकं तु तादात्म्यसम्बन्धावच्छिन्नकार्यतानिरूपितस्वध्वंसत्वसम्बन्धावच्छिन्नकारणताशालित्वमुपादानकारणत्वमिति। अत एव जन्यपृथिवीत्वावच्छिन्ने पृथिवीत्वादिना समवायिकारणत्वं नैयायिकेनाभ्युपगतम्, स्याद्वादिना तु तादात्म्येन पृथिवीत्वाद्यवच्छिन्ने स्वध्वंसत्वसम्बन्धेन पृथिवीत्वादिना हेतुत्वं वाच्यम्, विभागजातोत्पत्तिस्थलेऽपि द्व्यणुकादिध्वंसरूपाया एव परमाणूत्पत्तेः स्वीकारादित्यष्टसहस्रीटीकायामुक्तं सङ्गच्छते। इयांस्तु विशेषः—द्रव्यार्थिकेनाऽत्र देवादिपर्यायध्वंसविशिष्टात्मत्वेन तदव्यवहितोत्तरपर्यायत्वेनोपादानोपादेयभावः। पर्यायार्थिकनयेन तु स्वध्वंसत्वसम्बन्धेन देवादिपर्यायस्योपादानत्वं मनुष्यादिपर्यायत्वावच्छिन्ने च तादात्म्येन सम्बन्धेनोपादेयत्वमित्युक्तं तत्रैवेति। विवेचयिष्यते चान्यत्र। **प्रयोगेणेति।** आत्मप्रयत्नादिव्यापारेणेत्यर्थः। **विस्रसात इति**—स्वभावत इत्यर्थः, पुरुषव्यापारमन्तरेणेति यावत्। अत्र कालादिहेतुपञ्चकसामग्र्याः कार्योत्पत्तिमात्रनियतत्वभङ्गेनाऽपसिद्धान्तभीस्तु गौणमुख्यभावेन तद्भङ्गाद्वारणीया, उक्तद्वैविध्यस्य प्रयोगविस्रसाप्राधान्येनैव व्यवस्थितेरिति भावः। **दैवपुरुषकारोभयजन्यत्वादिति** दैवम्—पुराकृतकर्म, पुरुषकारो—जीवव्यापारः, तदुभयजन्यत्वादित्यर्थः। अयम्भावः—अतर्कितोपस्थितमनुकूलं प्रतिकूलं वा दैवकृतं, तत्र पुरुषकारस्याऽप्रधानत्वात्, दैवस्य च प्रधानत्वात्, तद्विपरीतं पौरुषापादितं, तत्र दैवस्य गुणभावात् पौरुषस्य च प्रधानभावात्, न पुनरन्यतरस्याऽभावात्, परस्परं सहायत्वेनैव दैवपुरुषकाराभ्यामर्थसिद्धेः, न हि किञ्चित्कार्यं दैवं पुरुषकारं वा विना जायत इति सामान्यतो हेतुत्वमनयोरिति। **उपदेशपदादावुक्तत्वादिति**—दैवपुरुषकारविषये उपदेशपदग्रन्थे चैवमुक्तम्—"ववहारो वि हु दोण्ह वि इय पाहण्णाइनिप्फण्णो ॥३४९॥" इति। दैवकृतमिदं पुरुषकारकृतमिदमिति विभागेन प्रवर्त्तमानो व्यवहारोऽपि द्वयोरपि दैवपुरुषकारयोः प्राधान्यादिनिष्पन्नः, प्रधानगुणभावनिष्पन्नो वर्त्तत इत्यर्थः। प्रधानगुणभावमेव भावयन्नाह—"जमुदग्गं थेवेणं, कम्मं परिणमइ इह पयासेण। तं दइवं विवरीयं, तु पुरिसगारो मुणेयव्वो ॥ ३५० ॥" इति यदुदग्रमुत्कटरसतया प्राक्समुपार्जितं स्तोकेनाऽपि कालेन परिमितेन कर्म सद्वेद्यादि परिणमति फलप्रदानम्प्रति प्रह्वीभवति, इह जने प्रयासेनाल्पप्रयत्नेन राजसेवादिना पुरुषका-

उपदेशरहस्यादौ चास्माभिर्विवेचितत्वात्। स पुनरनिवृत्तिकरणस्वरूपः परिणामः कस्य भवति ? कथं वा प्राप्यत इत्याकाङ्क्षायामाह–ज्ञानदर्शनेत्यादि येनास्यानुपदेशात्सम्यग्दर्शनमुत्पद्यत इत्यन्तम्, कस्येति यत्पृष्टं तत्रोत्तरम् जीवस्य, किं लक्षणोऽसावित्यत्र वक्ष्यमाणं लक्षणं स्मारयति। ज्ञानं साकारम्, दर्शनं निराकारम् त एव मिलिते उपयोगस्तत्तदात्मकार्यजननशक्तिसहस्रप्रवाहमार्गिलक्षणो

रेण तद्दैवं लोके समुद्घुष्यते। विपरीतं तु यदनुदग्रं वहुना प्रयासेन परिणमति पुनरस्तत्पुरुषकारो मन्तव्य इति। "अहवप्पकम्महेऊ, ववसाओ होइ पुरिसगारोत्ति। वहुकम्म-णिमित्तो पुण, अज्झवसाओ उ दइवोत्ति ॥ ३५१ ॥" अथवा पक्षान्तरद्योतनार्थः, अल्पं तुच्छं कर्म दैवं पुरुषकारापेक्षया हेतुर्निमित्तं फलसिद्धौ यत्र स तथाविधो व्यवसायः पुरुषप्रयत्नो भवति पुरुषकार इति, वहु प्रभूतं पुरुषकारमाश्रित्य कर्म निमित्तं यत्र स पुनरध्यवसायः, इह नञोऽल्पार्थत्वादल्पो व्यवसायः पुनर्दैवमिति। यत्र हि कार्यसिद्धावल्पः कर्मणो भावो वहुश्च पुरुषप्रयासस्तोत्कार्यं पुरुषकारसाध्यमुच्यते, यत्र पुनरेतद्विपर्ययस्तत्कर्मकृतमिति। पूर्वगाथायामल्प-प्रयाससाहाय्येन फलमुपनयमानं कर्म दैवमुपदिष्टं विपर्ययेण पुरुषकारः, इह तु पुरुषकार एवाऽल्पकर्मसाहाय्योपेतः पुरुषकारः प्रज्ञप्तो वहुकर्मसाहाय्योपगृहीतस्तु स एव पुरुषकारोऽदृष्ट-मित्यनयोः प्रज्ञापनयोर्भेद इति। उपदेशरहस्यादौ चाऽस्माभिर्विवेचितत्वादिति। "ववहारो पुण एत्थ, गुणपहाणत्तणेण पविभत्तो। कज्जमिणं दइवकयं, एयं पुण पुरिसजणियंति ॥५२॥" इति गाथयेति शेषः। इदं कार्यं दैवकृतमेतत्पुनः पुरुषजनितं पुरुषकारकृतमिति व्यवहारः, पुनरत्र विषये गुणप्रधानत्वेनाऽन्यतराल्पत्वबहुत्वलक्षणेन प्रविभक्तो भिन्नविषयतया व्यवस्थित इत्यर्थः। भावार्थस्तु पूर्ववदेव भावनीयः। विशेषार्थिनोपदेशरहस्यादवसेयमिति। न्यायाचार्यश्रीयशोविजयोपाध्यायैरेवकृतायां दैवपुरुषकारद्वात्रिंशिकायामपि व्यवहारनयमा-श्रित्येत्थमुक्तम् "अन्वयव्यतिरेकाभ्यां, व्यवहारस्तु मन्यते। द्वयोः सर्वत्र हेतुत्वं, गौण-मुख्यत्वशालिनोः ॥५॥" सर्वत्रेति कार्य इति शेषः। ननु गौणत्वं मुख्यत्वञ्च किं लक्षणमित्याश-ङ्कायामाह–"अनुत्कटत्वं गौणत्व–मुत्कटत्वं च मुख्यता। द्वयं प्रत्येकजन्यत्व व्यपदेशनिया-मकम्॥६॥" अत्रानुत्कटत्वं गौणत्वं न त्वल्पत्वमेव, अल्पस्यापि वलीयसो गौणत्वाऽव्यपदेशात्–एवं मुख्यता चोत्कटत्वम्, एतद्द्वयं प्रत्येकजन्यत्वव्यपदेशे नियामकम्, अन्यथा सर्वस्य कार्य-स्योभयजन्यत्वात् प्रत्येकजन्यत्वव्यवहारोऽप्रामाणिकस्स्यादिति भावः। एतदेव भावयति "उत्कटेन हि दैवेन, कृतं दैवकृतं विदुः। तादृशेन च यत्नेन, कृतं यत्नकृतं जनाः ॥७॥"

तादृशेनेति उत्कटेनेत्यर्थः। ननु यदि सर्वस्मिन्कार्ये गौणमुख्यभावेन दैवपुरुषकारोभयस्यैव हेतुत्वं तर्हि दैवकृतमिदं न पुरुषकारकृतमिति कथं व्यवहार इति चेत्, उच्यते, तत्रोत्कटपुरुषकार-कृतत्वाभाव एव विषय इति न कश्चिद्दोष इति॥ "सामन्नगहणं दंसणं विसेसियं तु नाणं" इति सिद्धान्तवचनमनुसृत्याऽऽह ज्ञानं साकारं दर्शनं निराकारमिति। ते एव मिलिते उप-योग इति–तदुभयात्मोपयोग इत्यर्थः। यस्य कस्यापि कार्यस्य यः कश्चन कर्त्ता स शरीराद्युपकरण-

यस्य स तथा, जीव इति वक्ष्यत इति, कथं प्राप्यत इत्यत्राह तस्येत्यादि । तस्य जीवस्य, अनादावविच्छिन्नप्रवाहे, संसारे नरकादिस्थानोत्पत्तिपर्यायलक्षणे, द्रव्यतस्त्वनादावनन्ते संसारे नरकाद्युत्पत्तिस्थानलक्षणे, अनादौ संसार इति वदन् भाष्यकारः सृष्टिवादं निराचष्टे । युक्तं चैतत्, शरीराद्युपकरणनिरपेक्षस्य कार्योत्पादफलेनासंयुज्यमानस्य जगत्कर्तुरभ्युपगन्तुमयुक्तत्वात् । सर्वं कार्यं सकर्तृकं कार्यत्वाद् घटादिवदिति पुनरप्रयोजकमनुमानं, कार्यत्वावच्छिन्ने कर्तृत्वेन हेतुत्वे प्रमाणाभावात् । "यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि" इति न्यायस्याव्यापकत्वात् ।

निमित्तमवलम्ब्यैव दृष्टः, न ह्यशरीरस्य मुक्तस्येव कार्यकर्तृत्वं दृष्टिगोचरम्, दृष्टानुसारिणी कल्पना प्रामाणिकी न त्वदृष्टानुसारिणीति शरीराद्युपकरणनिमित्तनिरपेक्षस्येश्वरस्य जगत्कर्तृत्वं नाऽभ्युपगन्तुं युक्तम्, अन्यथा मुक्तस्याऽपि तत्त्वं स्यादित्याशयेनाह—युक्तं चैतदिति । तत्र हेतुमाह—शरीराद्युपकरणनिरपेक्षस्येत्यादि । सर्वं कार्यं सकर्तृकं कार्यत्वादिति—अत्र पक्षतावच्छेदकं स्वरूपसम्बन्धविशेषरूपकार्यत्वं, न तु कृतिसाध्यत्वादिकम्, अन्यथा साध्यस्याऽपि तद्रूपत्वेन सिद्धसाधनं स्यात्, पक्षरूपस्य साध्यस्य सिद्धस्य साधनात् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वाच्च पटादिरूपकार्यस्य सकर्तृकत्वसिद्धावपि न क्षतिः, पक्षतावच्छेदकावच्छेदेनाऽनुमितिम्प्रति पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वात्, हेतुभूतं कार्यत्वमपि प्रागभावप्रतियोगित्वरूपं, नाऽतः पक्षतावच्छेदकहेत्वोरैक्यप्रसङ्गः । ननु तयोरैक्ये को दोष इति चेत्, उच्यते, उद्देश्यतावच्छेदकविधेययोरैक्येन प्राचीनमते हेतुमान् पक्ष इत्यर्थकात् तथा चायमित्युपनयवाक्याच्छाब्दबोधानुपपत्तिरेव दोष इति । अप्रयोजकमनुमानमिति—व्यभिचारशङ्कानिवर्तकतर्काभावादिति भावः, न च कार्यत्वं यदि कर्तृजन्यत्वव्यभिचारि स्यात्तदा कर्तृजन्यतावच्छेदकं न स्यादित्यनुकूलतर्कस्य सत्त्वान्नाऽप्रयोजकमिति वाच्यम्, कर्तृत्वेन कार्यत्वेन कार्यकारणभावे मानाभावेनोक्ततर्कानवतारादित्याशयेनाऽऽह कार्यत्वावच्छिन्ने कर्तृत्वेन हेतुत्वे प्रमाणाभावादिति । न च कुलालत्वेन घटत्वेनैवं तन्तुवायत्वेन पटत्वेन विशेषधर्मेण कार्यकारणभावबलादेव कर्तृत्वेन कार्यत्वेन सामान्यधर्मेण कार्यकारणभावो भविष्यति, कुलालतन्तुवाययोः कर्तृविशेषत्वाद्, घटपटयोः कार्यविशेषत्वाद्, यद्विशेषयोरित्यादिन्यायस्याऽत्रावतारादिति चेत्, न, उक्तन्यायस्याऽसार्वत्रिकत्वादित्याह—यद्विशेषयोः कार्यकारणभाव इत्यादि । किञ्च यदि क्षित्यादौ कार्यत्वसामान्यहेतुरसिद्धस्स्यात्तदा स्यात्तेन सकर्तृत्वस्य सिद्धिः, न च स सिद्धः, तथाहि—यादृग्भूतं कर्तृजन्यत्वेन देवकुलादिष्वन्वयव्यतिरेकाभ्यां व्याप्तं कार्यत्वमुपलब्धं यदक्रियादर्शिनोऽपि जीर्णदेवकुलादावुपलभ्यमानं लौकिकपरीक्षकादेस्तत्र वपुष्मता केनापीदं कृतमित्याकारिकां कृतत्वबुद्धिमुत्पादयति तादृग्भूतस्य क्षित्यादिषु कार्यत्वस्यानुपलब्धेरसिद्धः कार्यत्वलक्षणो हेतुः, उपलम्भे वा तत्र ततो जीर्णदेवकुलादिष्विवाऽक्रियादर्शिनोऽपि कृतत्वबुद्धिस्स्यात्, न ह्यन्वयव्यतिरेकाभ्यां सुविवेचितं कार्यं कारणं व्यभिचरति, तस्याऽहेतुकत्वप्रसङ्गात्, अतः क्षित्यादिषु कार्यत्वदर्शनादक्रियादर्शिनः कृतत्वबुद्ध्यनुत्पत्तेः,

अन्यथा कार्यत्वावच्छिन्ने करणत्वेन हेतुतयैकस्य कर्तुरिवैकस्य करणस्यापि सिद्ध्यापत्तेः, न च कार्यत्वावच्छिन्ने उपादानप्रत्यक्षत्वेन हेतुत्वाद् द्व्यणुकाद्युपादानप्रत्यक्षाश्रयतयेश्वरसिद्धिः, तत्तत्पुरुषीयघटाद्यर्थिप्रवृत्ति प्रत्येव तत्तत्पुरुषीयघटादिमत्त्वप्रकारकोपादानप्रत्यक्षत्वेन हेतुत्वात् । न च प्रवृत्ताविव घटादावपि प्रत्यक्षेच्छयो-

यत्कर्तृजन्यत्वेन व्याप्तं कार्यत्वं देवकुलादिषु निश्चितं तत्तत्र नास्तीत्यसिद्धो हेतुः, केवलं कार्यत्वमात्रं प्रसिद्धं तत्र, न च प्रकृत्या परस्परमर्थान्तरत्वेन व्यवस्थितो धर्मश्शब्दमात्रेणाऽभेदी हेतुत्वेनोपादीयमानोऽभिमतसाध्यसिद्धये पर्याप्तो भवति, साध्यविपर्ययेऽपि तस्य भावाऽविरोधात्, यथा घटदृष्टान्तेन वल्मीके धर्मिणि कुम्भकारकृतत्वसिद्धये मृद्विकारत्वमात्रं हेतुत्वेनोपादीयमानमिति । यत्कर्तृजन्यत्वेन व्याप्तं देवकुलादौ कार्यत्वं प्रमाणतः प्रसिद्धं तत्क्षित्यादावसिद्धं, यच्च क्षित्यादौ कार्यत्वमात्रं हेतुत्वेनोपन्यस्यमानं सिद्धं तत्साध्यविपर्यये बाधकप्रमाणाभावात् सन्दिग्धव्यतिरेकत्वेनानैकान्तिकं न ततोऽभिमतसाध्यसिद्धिः । नन्वेतत्कार्यसमं नाम जात्युत्तरं, तथाहि—कार्यत्वादनित्यश्शब्द इत्युक्ते जातिवाद्यत्राऽपि प्रेरयति—किमिदं घटादिगतं कार्यत्वं हेतुत्वेनोपन्यस्तं किं वा शब्दगतमथोभयगतमिति ? आद्ये पक्षे हेतोरसिद्धिः, न ह्यन्यधर्मोऽन्यत्र वर्त्तते, तथा च हेतुस्स्वरूपासिद्धः, द्वितीयेऽपि साधनविकलो घटादिदृष्टान्तः, तृतीयेऽपि एतावेव दोषाविति, एतच्च कार्यसमं नाम जात्युत्तरम्, तदुक्तम्—" कार्यत्वान्यत्वलेशेन यत्साध्यासिद्धिदर्शनं तत्कार्यसममिति " कार्यत्वसामान्यस्याऽनित्यत्वसाधकत्वेनोपन्यासेऽभ्युपगते धर्मिभेदेन विकल्पनवत् कर्तृजन्यत्वे क्षित्यादेः कार्यत्वमात्रेण साध्येऽभीष्टे धर्मिभेदेन कार्यत्वादेर्विकल्पनात्, असदेतत्, यतः सामान्येन कार्यत्वानित्यत्वयोर्विपर्यये बाधकप्रमाणबलाद् व्याप्तिसिद्धौ कार्यत्वसामान्यं शब्दादौ धर्मिण्युपलभ्यमानमनित्यत्वं साधयतीति कार्यत्वमात्रस्यैव तत्र हेतुत्वोपन्यासे धर्मिविकल्पनं यत्तत्र क्रियते तत्सर्वानुमानोच्छेदकत्वेन कार्यसमजात्युत्तरतामासादयति, न त्वेवं क्षित्यादेः कर्तृजन्यत्वे साध्ये कार्यत्वसामान्यं सर्वोपसंहारेण व्याप्त्या हेतुस्सिद्धः, तस्य विपर्यये बाधकप्रमाणाभावात्, सन्दिग्धविपक्षव्यावृत्तिकत्वेनाऽनैकान्तिकत्वात्, तथा च कार्यत्वसामान्यमात्रस्य हेतोस्सर्वोपसंहारेण व्याप्त्यसिद्धेस्तेन न क्षित्यादेः कर्तृजन्यत्वसिद्धिः, अन्यथा मृद्विकारत्वहेतुना घटवद्वल्मीकस्यापि कुम्भकारजन्यत्वं सिद्धं स्यात्, तथा चोक्तम्—"अन्यथा कुम्भकारेण, मृद्विकारस्य कस्यचित् । घटादेः कारणात् सिद्ध्येद्वल्मीकस्यापि तत्कृतिः ॥१॥ " इति । यच्च कर्तृजन्यत्वेन व्याप्तं देवकुलादौ कार्यत्वं प्रतिपन्नं यदक्रियादर्शिनोऽपि जीर्णप्रासादादौ कृतत्वबुद्धिमुत्पादयति तत्तत्राऽसिद्धमिति प्रतिपादितं प्राक्, तथा च कर्तृजन्यत्वव्याप्तं न कार्यत्वसामान्यं, किन्तु कार्यविशेषत्वमेव, तच्च प्रायोगिकत्वरूपमेवेति तदेव शैलादिव्यावृत्तं देवकुलाद्यनुवृत्तं सकलजनव्यवहारसिद्धं कर्तृजन्यतावच्छेदकमस्त्विति नोक्तानुमानेनेश्वरसिद्धिरिति भावः । तथाऽनभ्युपगमेऽतिप्रसङ्गदोषमाह—अन्यथेति । सिद्ध्यापत्तेरिति—तथा च दृष्टहानिरदृष्टकल्पनापत्तिस्स्यादिति भावः । न चेत्यस्येश्वरसिद्धिरित्यनेनान्वयः, निषेधे हेतुमाह—तत्तत्पुरुषीयेति । न चेत्यस्य साम्प्रतमित्यनेनान्वयः । प्रत्यक्षेच्छयोरिति—उपादानप्रत्यक्षचिकीर्षयोरित्यर्थः ।

रन्वयव्यतिरेकाभ्यां हेतुत्वे सिद्धे तत्कार्यतावच्छेदकं कार्यत्वमेव लाघवात् कल्प्यते, घटत्वपटत्वादीनामानन्त्यात्, शरीरलाघवमपेक्ष्य सङ्ग्राहकत्वलाघवस्य बलवत्त्वादित्यपि साम्प्रतम् । एवं सति शरीरजन्यतावच्छेदकमपि न घटत्वपटत्वादिकम्, किन्तु कार्यत्वमितीश्वरवच्छरीरस्याप्येकस्य कार्यमात्रजनकस्य सिद्ध्यापत्तेः । यत्तु घटत्वाद्यवच्छिन्ने कृतित्वेन हेतुत्वेऽपि खण्डघटाद्युत्पत्तिकाले कुलालादिकृतेरसत्त्वादीश्वरकृतिसिद्धिरिति दीधितिकृतोक्तम्, तत्तु तदीयैरेव दूषितम्, कुलालादिकृतेः स्वप्रयोज्यविजातीय-

तत्कार्यतावच्छेदकमिति—प्रत्यक्षेच्छाकार्यतावच्छेदकमित्यर्थः, शरीरलाघवमिति—प्रागभावप्रतियोगित्वादिरूपस्य कार्यत्वस्य सखण्डतया तदपेक्षया घटत्वपटत्वादीनां जातिरूपतयाऽखण्डत्वेन शरीरलाघवमित्यर्थः । सङ्ग्राहकत्वलाघवस्येति—कार्यमात्रम्प्रति उपादानप्रत्यक्षस्योपादानप्रत्यक्षत्वेन चिकीर्षाया इच्छात्वेन हेतुत्वस्वीकारे तत्कार्यतावच्छेदकीभूतकार्यत्वरूपेण कार्यमात्रस्य सङ्ग्रहसम्भवेन सङ्ग्राहकत्वलाघवस्येत्यर्थः । घटत्वपटत्वाद्यवच्छिन्नस्य शरीरमन्तरेणाऽनुत्पत्तेस्तम्प्रति शरीरत्वेनाऽपि हेतुत्वाद् घटत्वाद्यपेक्षया कार्यत्वस्य तत्कार्यतावच्छेदकत्वे सङ्ग्राहकत्वलाघव इत्यैकनित्येश्वरवदेकनित्यशरीरमपि कार्यमात्रजनकतया सिद्ध्येदित्युत्तरयति—एवं सति शरीरजन्यतावच्छेदकमपीत्यादि । अत्र घटत्वाद्यवच्छिन्नम्प्रति चेष्टात्वेनाऽपि हेतुत्वात्पूर्ववल्लाघवात् तत्कार्यतावच्छेदकं कार्यत्वमेवाऽभ्युपगन्तव्यमिति कार्यमात्रजनकतया नित्यचेष्टाऽपि सिद्ध्येदित्यपि ज्ञेयम् । ननु परमाणव एव प्रयत्नवदीश्वरात्मसंयोगजन्यचेष्टावन्त ईश्वरस्य नित्यानि शरीराणि, चेष्टाया नित्यत्वे तु मानाभावः, अनित्यचेष्टाया अपि सर्गादौ सम्भवात्, ईश्वरप्रयत्नाधीनचेष्टावतां सर्वेषामेव वेश्वरशरीरत्वम्, अत एव सर्वविशपरा सर्वाभेदपरा श्रुतिरिति चेत्, मैवम्, परमाणूनां नित्येश्वरशरीरत्वे तद्गतक्रियाया अपि नित्यायाश्चेष्टारूपत्वेन कल्पनापत्तेः, ईश्वरसम्बन्धस्य सर्वत्राऽविशेषेण सत्त्वादिदमेवेश्वरशरीरमिति नियमायोगात्, सर्वावेशे च सर्वत्र क्रियामात्रस्य चेष्टात्वपर्यवसाने विलक्षणचेष्टात्वजात्युच्छेदापत्तेश्च, सर्वशरीरावच्छिन्नविलक्षणमनःसंयोगजनकप्रयत्नवदात्मसंयोगरूपसर्वावेशस्वीकारे च प्रत्यात्मनियतमनोभिन्नमनःप्रवेशेन सर्वेषामुन्मादजनकताया ईश्वरस्यापत्तेः, अन्यथाऽऽवेशपदार्थाघटनादिति ध्येयम् । तत्तु तदीयैरेव दूषितमिति—जैनानुगैस्तु तत्र घट खण्डत्वपर्यायस्यैवाऽभ्युपगमात्, कथमन्यथा स एव घट इति प्रत्यभिज्ञानोपपत्तिः, न च सादृश्यादिदोषमूलकत्वेन भ्रमरूपत्वान्न तत्त्वव्यवस्थापिका सेति वाच्यम्, तथाकल्पनायां मानाभावात्, अत एव पाकेनाऽपि नान्यघटोत्पत्तिः, विशिष्टसामग्रीवशादेव विशिष्टवर्णस्य घटादिद्रव्यस्य कथञ्चिदविनाशेऽप्युत्पत्तिसम्भवादिति व्यक्तं सम्मतिटीकायामिति । ननु वैशेषिकमते वह्निना नोदनाख्यसंयोगाद् द्व्यणुकारम्भके परमाणौ कर्म ततो विभागस्ततो द्रव्यारम्भकपूर्वसंयोगनाशस्ततो द्व्यणुकनाशः, नष्टे च द्व्यणुके परमाणावग्निसंयोगाच्छ्यामादिनिवृत्तिः, द्व्यणुकनाशे च त्रसरेणुनाशक्रमेण महाऽवयविनाशः, श्यामादिनिवृत्तावन्यस्मादग्निसंयोगात्पर-

संयोगसम्बन्धेन तत्कालेऽपि सत्त्वात्। न च वैशेषिकनये श्यामघटादिनाशोत्तरं रक्तघटाद्युत्पत्तिकाले प्राक्तनपरमाणुद्वयसंयोगद्व्यणुकादेर्नाशान्नैवं सम्भवतीति वाच्यम् । पूर्वसंयोगादिध्वंसपूर्वद्व्यणुकादिध्वंसानामुत्तरसंयोगद्व्यणुकादावन्ततः कालोपाधितयापि जनकत्वात्तत्कालेऽपि कुलालादिकृतेः स्वप्रयोज्यविजातीयसंयोग-

माणौ रक्ताद्युत्पत्तिः, रक्तोत्पत्तौ परमाणुक्रियानिवृत्तिः, तदनन्तरमदृष्टवदात्मसंयोगात्परमाणौ कर्म ततो विभागस्ततः पूर्वसंयोगनिवृत्तिः, ततो द्रव्यारम्भकसंयोगोत्पत्तिस्ततो द्व्यणुकोत्पत्तिः, तदुत्पत्तौ च तत्र कारणगुणपूर्विका रक्ताद्युत्पत्तिः, तदुक्तम्–वैशेषिकोपस्कारे–" कारणगुणपूर्वकः कार्यगुणो दृष्टः " इति । ततो द्व्यणुकत्रयात् त्रसरेणुरुत्पद्यते तद्गुणात्तद्गुण इत्यादिक्रमेणोत्पन्ने महावयविनि तद्गुणोत्पत्तिः, तथा च प्राक्तनपरमाणुद्वयसंयोगरूपासमवायिकारणनाशाद्द्व्यणुकनाशः, तेन च समवायिकारणनाशेन त्रसरेणुनाशः, तत्क्रमेण च यत्र घटादिमहावयविनाशस्तत्र न घटान्तरं प्रति स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन कुलालादिकृतेः कारणत्वं सम्भवति, पूर्वघटावयवसंयोगस्यैवाऽभावादित्याशङ्क्य निषेधति–न च वैशेषिकनय इत्यादिना, निषेधे हेतुमाह–पूर्वसंयोगादिध्वंसपूर्वद्व्यणुकादिध्वंसानामित्यादि । पूर्वसंयोगात्मकपूर्वद्व्यणुकासमवायिकारणनाशाद्द्व्यणुकनाशे सत्युत्तरद्व्यणुकासमवायिकारणसंयोगानुगुणपरमाणुक्रियाविभागपूर्वसंयोगनाशक्रमेणोत्तरसंयोगलक्षणासमवायिकारणोत्पत्तितो द्व्यणुकोत्पत्तिस्ततो द्व्यणुकत्रयसंयोगतस्त्र्यणुकोत्पत्तिरित्येवं क्रमेण महावयविघटोत्पत्तिर्भवेदिति पूर्वसंयोगनाशद्व्यणुकनाशौ मध्यकालभाविनश्चान्येऽपि विभागाद्याः परम्परयोत्तरमहावयविघटोत्पत्तौ हेतवः स्युः, परम्परया कारणञ्च प्रयोजकमिति गीयते, परम्परया कार्यञ्च प्रयोज्यमिति व्यवह्रियते, पूर्वसंयोगध्वंसे पूर्वसंयोगः, पूर्वद्व्यणुकध्वंसे च पूर्वद्व्यणुकं प्रतियोगितासम्बन्धेन ध्वंसम्प्रति तादात्म्यसम्बन्धेन प्रतियोगिनः कारणत्वमिति नियमतः कारणं भवति, पूर्वसंयोगादौ च कुलालादिकृतेः कारणत्वं, तथा चोत्तरघटादिमहावयव्यारम्भकसंयोगोऽपि परम्परया कुलालादिकृतिप्रयोज्य इति स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन कुलालादिकृतिः तादृशसंयोगकाले घटाद्यव्यवहितपूर्वक्षणरूपे वर्त्तते इत्युत्तरघटादिकम्प्रति तस्यां निरुक्तसम्बन्धेन कारणत्वस्य सम्भवात्, एवं कालस्य कार्यमात्रम्प्रति कारणत्वं वैशेषिकस्याऽप्यनुमतं, नित्यस्यैकस्य व्यापकस्य तस्य सर्वान्प्रत्यविशिष्टस्य सर्वत्राऽन्वयस्यैव सद्भावाद्, व्यतिरेकासम्भवेन स्वरूपतो जनकत्वं नेति प्रतिनियतोपाधिविशिष्टत्वेन प्रतिनियतक्षणरूपतामाभेजानस्य प्रतिनियतोपाधिविशिष्टत्वेन कारणत्वं स्यादित्यवच्छेदकीभूतस्योपाधेरपि कालोपाधितया कारणत्वम्, उपाधित्वञ्च पूर्वसंयोगादिध्वंसपूर्वद्व्यणुकादीनामपि सम्भवत्येवेति कालोपाधितया पूर्वसंयोगादिध्वंसपूर्वद्व्यणुकादिध्वंसानामुत्तरसंयोगादिकम्प्रति कारणत्वे व्यवस्थिते पूर्वसंयोगादीनाञ्च प्रतियोगिविधया स्वध्वंसम्प्रति कारणत्वक्लृप्तौ पूर्वसंयोगादीन् प्रति च कुलालादिकृतेः कारणत्वे सत्युत्तरसंयोगम्प्रति परम्परया कुलालादिकृतेः प्रयोजकत्वसम्भवादित्यतोऽपि स्वप्रयोज्यविजातीयसंयोगवत्त्वसम्बन्धेन तादृशसंयोगकालवर्त्तिन्याः कुलालादिकृतेरुत्तरघटादिकम्प्रति कारणत्वसम्भवादि-

सम्बन्धेन सत्त्वात् । अन्यथा घटत्वाद्यवच्छिन्ने दण्डादिहेतुत्वमपि दुर्वचं स्यात् । अथ दण्डादेः स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन हेतुत्वम्, कृतेस्तु लाघवाद्विशेष्यतयैव तत्त्वम्, न च कुलालकृतिस्तया तत्कालेऽस्तीति चेत्, न, तथापि घटत्वाद्यवच्छिन्ने विजातीयकृतित्वेनैव हेतुत्वात्, कृतित्वेन व्यापकधर्मेणान्यथासिद्धेरिति । किञ्चोपादानप्रत्यक्षं लौकिकमेव जनकम्, प्रणिधानाद्यर्थं मनोवहनाड्यादौ प्रवृत्तिस्वीकारे

त्यर्थः । अन्यथा—उक्तदिशा स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन कुलालादिकृतेरुत्तरघटादिकं प्रति कारणत्वानभ्युपगमे । दण्डेति स्वजन्यचक्रभ्रमिजन्यत्वसम्बन्धेन घटम्प्रति कारणत्वे पूर्वघटम्प्रत्येव तेन सम्बन्धेन पूर्वघटावयवकपालवर्तिनस्तस्य कारणत्वं स्यात्, उत्तरघटावयवकपालादिकन्तु न चक्रभ्रमिजन्यमिति तेन सम्बन्धेन तस्योत्तरघटावयवे कपालेऽभावान्न तस्य तम्प्रति कारणत्वमिति घटत्वावच्छिन्ने व्यतिरेकव्यभिचारात्तस्य कारणत्वं न युक्तियुक्तं स्यात्, स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन दण्डस्य कारणत्वे तूत्तरघटाव्यवहितपूर्वकालेऽप्युक्तसम्बन्धेन दण्डस्य सत्त्वाद् घटत्वाद्यवच्छिन्नम्प्रति दण्डादीनां हेतुत्वं निर्वहतीत्यर्थः । नैयायिक आशङ्कते—अस्त्वित्यादिना, तत्त्वम्—हेतुत्वम्, तथा च कार्यत्वावच्छिन्नकारणीभूतकृत्याश्रयतयेश्वरसिद्धिरिति भावः । ननु विशेष्यतासम्बन्धेन कुलालकृतिरेव कारणम्, नेश्वरकृतिरिति न तदाश्रयतयेश्वरसिद्धिरित्याशङ्कायामाह—न चेति । अस्त्यास्तीत्यनेनान्वयः, तयेति—विशेष्यतासम्बन्धेनेत्यर्थः । तत्काले—उत्तरघटोत्पत्तिकाले, विजातीयकृतित्वेनैव हेतुत्वादिति—तन्तुवायकृतिकाले घटोत्पत्तिवारणाय कुलालकृतित्वेनैव हेतुत्वस्याऽऽवश्यकत्वादित्यर्थः । अन्यथासिद्धेरिति—तथा च कृत्याश्रयतया नेश्वरसिद्धिरिति भावः, न च कृतित्वेन कार्यत्वेन कार्यकारणभावे कारणतावच्छेदकधर्मावच्छिन्नाभावस्य कार्यतावच्छेदकधर्मावच्छिन्नाभावप्रयोजकत्वात् कार्यसामान्याभावे कृतित्वावच्छिन्नसामान्याभावस्य प्रयोजकत्वं सिद्ध्यति, भवतां तु कुलालादिकृत्यभावकूटस्य प्रयोजकत्वमभ्युपगन्तव्यं स्यादिति गौरवमिति वाच्यं, कारणतावच्छेदकधर्मावच्छिन्नाऽभाव एव कार्याभावे प्रयोजक इति न नियमः, किन्तु स्वरूपसम्बन्धरूपप्रयोजकत्वं प्रतीत्यनुरोधेन लघ्वनतिप्रसक्तधर्मावच्छेदेन कल्प्यत इति नियमः, तथा च कारणतानवच्छेदककृतित्वावच्छिन्नसामान्याभावस्यैकस्य कार्यसामान्याभावप्रयोजकत्वं कृतित्वेन कार्यत्वेन कार्यकारणभावमन्तराऽपि सूपपादमेवेति भावः । किञ्चोपादानप्रत्यक्षमिति—कुलालादेः सामान्यलक्षणाद्यलौकिकप्रत्यासत्त्या यद् घटाद्युपादानगोचरप्रत्यक्षज्ञानमलौकिकं तेन घटादिकार्यं नैव जायत इति तस्य कारणतावच्छेदकधर्मानाक्रान्तत्वसम्पादनाय सामान्यलक्षणाद्यलौकिकत्रितयप्रत्यासत्त्यजन्योपादानप्रत्यक्षत्वेनेश्वरप्रत्यक्षसाधारणेन गुरुभूतेन कारणत्वं तदा वक्तव्यं स्याद्यदीश्वरप्रत्यक्षस्य कारणत्वं सिद्धं भवेत्, न चाऽद्यापि तत्सिद्धमिति लौकिकसन्निकर्षजन्योपादानप्रत्यक्षत्वेनैव तत् कारणम्, न चेश्वरप्रत्यक्षन्तथेति कुतस्तदाश्रयेश्वरसिद्धिः, एवं प्रणिधानाद्यर्थं चित्तस्य प्रतिनियतध्येयविष-

त्वनुमित्यादिसाधारणमिति कथं तदाश्रयतयेश्वरसिद्धिः । अपि चाभोगवीर्यजन्येऽन्वयव्यतिरेकाभ्यामाभोगस्येवानाभोगवीर्यजन्ये भुक्ताहारखलरसपरिणामादावनाभोगस्यापि तथात्वे सामान्यपक्षपाते आभोगानाभोगाश्रयो भवदभिमत ईश्वरः स्यादिति महत् सङ्कटमापतितम् । किञ्च, सृष्टेः प्राग् जीवाना शरीरेन्द्रियविषयाद्यसम्बन्धे मुक्तकल्पत्वात्पुनः सृष्टौ तेषामीश्वरेण संसारित्वापादने मुक्तावप्यनाश्वासप्रसङ्गात्, कर्मबीजसम्बन्धात् सृष्टेः प्राग्जीवाना न मुक्तकल्पतेति चेत्, न, प्राक् सृष्टिकालभोग्याना कर्मणां भोगेन क्षये प्रलये तदवस्थित्यसम्भवात्, अक्षये च भोगकालानुपरमे प्रलयायोगात्, न चानियतविपाकानि कर्माणि जीवाना युगपन्निरोधमनुभवितुमुत्सहन्ते, तथाऽदर्शनात् । सुषुप्तौ तथा दृष्टमिति चेत्, तर्हि यथादर्शनं कालविपाकिषु कर्मसु तत्कल्पनं क्रियतां, न तु जीवविपाक्यादिषु, अन्यथा प्राच्यसृष्टिचरमकाल-

कज्ञानधाराऽव्यवच्छित्तये एकाग्रीकरणाद्यर्थं मनोवहनाड्यादिगोचराऽपि प्रवृत्तिरुपेया, न च मनोवहनाडीक्रियोपादानतादृशनाड्यादिलौकिकप्रत्यक्षसम्भव इति तद्विषयकानुमितेरेव तत्कारणत्वं, तदुभयसाधारणैकशक्तिमत्त्वेन कारणत्वमत्र वाच्यम्, न चेश्वरस्य प्रत्यक्षं जन्यमिति नेन्द्रियलौकिकसन्निकर्षजन्यम्, न च नित्यं तल्लिङ्गजन्यानुमित्यात्मकपरोक्षमुपेयते भवद्भिरिति तदुभयसाधारणधर्मात्मककारणतावच्छेदकस्य तत्प्रत्यक्षेऽभावादेवमपि तत्प्रत्यक्षस्य कारणतयाऽसिद्धेः कथं तदाश्रयतयेश्वरसिद्धिरित्यर्थः । **आभोगवीर्यजन्य इति**–आभोगवीर्यं नाम अभिसन्धिपूर्वकवीर्यान्तरायकर्मक्षयक्षयोपशमान्यतरसमुत्थाऽऽत्मपरिणामविशेषरूपं, वीर्यान्तरायक्षयक्षयोपशमान्यतरोत्पन्नवीर्यलब्धेस्सकाशादुपजायमानं यत्सलेश्यस्य वीर्यं बुद्धिपूर्वकं धावनवल्गनादिक्रियासु नियुज्यमानं तदाभोगवीर्यमिति यावत्, तेन जन्य इत्यर्थः । **अनाभोगवीर्यजन्य इति**–अनभिसन्धिजं भुक्ताहारस्य धातुमलत्वादिपरिणामापादकं यद्वीर्यं तज्जन्य इत्यर्थः । **तथात्वे** कारणत्वे । **सामान्यपक्षपाते**–यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपीति न्यायानुसरणे । ब्रह्मदिनमाना सृष्टिरिति ब्रह्मदिनानामनेकत्वात्सृष्टिरप्यनेका, ब्रह्मरात्रिमानः खण्डप्रलय इति ब्रह्मरात्रीणामनेकत्वात् खण्डप्रलयोऽप्यनेकः, तथा च सृष्टिकालभोग्यानां कर्मणां खण्डप्रलयप्राक्कालरूपसृष्टिकालावच्छेदेन क्षयो भवति न वा ?, आद्ये सृष्टिकाल एव कर्मक्षयात्खण्डप्रलये कर्मसम्बन्धाभावाज्जीवानां मुक्तकल्पता स्यात्, द्वितीये भोगकालानुपरमे खण्डप्रलयाभाव इति समाधत्ते **प्राक्सृष्टिकालभोग्यानामिति** । **प्रागिति** खण्डप्रलयप्राक्कालरूपसृष्टिकाले इत्यर्थः । प्रलय इति खण्डप्रलय इत्यर्थः । न च जीवानां खण्डप्रलयकाले विद्यमानानामपि कर्मणां खण्डप्रलयकाले युगपन्निरोधादनुदयभावात्कार्याऽक्षमतेति तद्विपाकरूपफलविपाको नाऽनुभूयत इति वाच्यम्, युगपन्निरोधादर्शनादित्याह **न चानियतविपाकानीत्यादि** । न चेत्यस्योत्सहन्त इत्यनेनान्वयः । **जीवविपाक्यादिष्विति**–जीव एव न पुनः शरीरपुद्गलादिषु विपाकस्स्वशक्तिदर्शनलक्षणो विद्यते येषां कर्मणां तानि जीवविपाकीनि तान्यादिर्येषु त्र

बद्धान्यायूंषि कुत्र भुञ्जेरन्, तस्मात् कालत्वस्य भोगव्याप्यत्वभावात्प्रलयाभावे कुतः सृष्टिः ? । किञ्च कर्मनिरपेक्षस्येश्वरस्य सृष्टिकर्तृत्वे सुखदुःखादिप्रतिनियमानुपपत्तिः, कर्मसापेक्षस्य तु तथात्वे कालादिवन्नेश्वरत्वम्, किञ्चेश्वरसिसृक्षया कर्मवदणुद्वयसंयोगादिना द्व्युत्पत्तिक्रमेण सृष्टिवर्णने सिसृक्षायाः सर्गप्राक्कालवृत्तित्वविशिष्टेच्छात्वेन हेतुत्वे लाघवात् सर्गप्राक्कालत्वेनैव हेतुत्वं युक्तम् । तथा च तत्क्षणोत्तरकार्ये तत्क्षणत्वेन तद्देशवृत्तिकार्ये च तद्देशत्वेन हेतुत्वं न्यायप्राप्तमित्यवश्याश्रयणीयया तथाभव्यतयैव सर्वोपपत्तौ किं शिखण्डिकल्पनाक्लेशेन । एतेन तत्कार्याणां देशकालादिनियम ईश्वरज्ञानेच्छादित एवेत्यप्यपास्तम् । अवच्छेदकतासम्बन्धेन तन्निरूपितभवितव्यताया एव तद्देशकालादिनियामकत्वात् । वदन्ति हि पामरा अपि भवितव्यतैव नियामिकेत्यलमियता, विशेषार्थिनाऽस्मत्कृतलतादिकमभ्यसनीयम् । तदेवमनादौ संसारे, परिसमन्ताद् भ्रमतः कर्मत एवोदयप्राप्तकर्मणः सकाशादेव, कर्मणो ज्ञानावरणीयादेः,

विपाकिषु तानि जीवविपाक्यादीनि तेष्वित्यर्थः । कालत्वस्य भोगव्याप्यत्वभावादिति- यत्र यत्र कालत्वं तत्र तत्र भोग इति व्याप्तेः प्रलयकालत्वेनाभिमते कालेऽपि कालत्वस्य भावे भोगस्य व्यापकस्याप्यवश्यम्भावादित्यर्थः । प्रलयाभाव इति-अहोरात्रस्याऽहोरात्रपूर्वकत्वेन सह व्याप्तेरहोरात्रमहोरात्रपूर्वकं, अहोरात्रत्वादित्यनुमानमप्यत्र प्रमाणम् । सुखदुःखादिप्रतिनियमानुपपत्तिरिति ईश्वरस्सकृपश्चेत्तदाऽविशेषेण सर्वेषां सुखमेव कुर्यात्, अन्यथा पक्षपाताऽऽपत्त्याऽनीश्वरत्वं स्यात्, निष्कृपश्चेत्तदा सर्वेषां दुःखमेव कुर्यात्, तथा चोदितपुण्यभाजः सुखिन उदितप्रपशालिनो दुःखिन इति परिदृश्यमानप्रतिनियतसुखदुःखव्यवस्था न स्यादित्यर्थः । नेश्वरत्वमिति-निरपेक्षस्यैवेश्वरत्वादिति भावः । ननु सर्वसत्ताधीशोऽपि नृपश्चौर्यादिकर्मसापेक्ष एव तस्करादेः फलदाता यथा तथेश्वरोऽपि तत्तत्पुरुषीयतत्तत्कर्मसापेक्ष एव तत्तत्पुरुषेभ्यः शुभाशुभफलं ददातीति नानीश्वरत्वप्रसङ्ग इति चेत्, तर्हि नृपवदीश्वरोऽपि पुरुषाणां चौर्याद्यशुभकर्मानुकूलप्रेरणामपि नैव कुर्यात्, न करोत्येवेति चेत्, न, कार्यमात्रस्यैवेश्वरकर्तृकताऽभ्युपगमादिति भावः । कर्मवदणुद्वयसंयोगादिनेति परमाणुद्वये क्रिया ततो विभागस्ततः पूर्वसंयोगनाशः, ततः परमाणुद्वयसंयोग इत्यादिनेत्यर्थः । सर्गप्राक्कालत्वेनैवेति-अत्रैवकारेण यदि सृष्टिप्राक्कालवृत्तित्वविशिष्टेच्छात्वस्य व्यवच्छेदः क्रियेत तदापि सिसृक्षायाः कारणत्वमव्यवच्छिन्नं स्यादतः सर्गप्राक्कालत्वेन सर्गप्राक्कालस्य कारणत्वं न तु सृष्टिप्राक्कालवृत्तित्वविशिष्टेच्छात्वेन सिसृक्षायाः कारणत्वमित्येव व्यवच्छेदार्थो बोध्यः । अधिकतरमस्मद्दृब्धस्याद्वादतर्कप्रथमगाथाटीकातोऽवसेयम् । अनादौ संसार इति- अनात्मन्यात्मत्वग्रहरूपमिथ्याज्ञानस्य तत्प्रभवसंस्कारस्य च प्रवाहतोऽनादित्वात्तन्मूलकसंसारोऽप्यनादिः, यतो मिथ्याज्ञानसहायं हि कर्म नैव पूर्वं नासीदिति, पूर्वं शुद्धस्याऽऽत्मनः पश्चात्कर्मयोगेनाऽशुद्धत्वायोगात्, अन्यथा मुक्तात्मनोऽपि तथात्वप्रसङ्गस्स्यादित्यनाद्यविच्छिन्नप्रवाहेण प्रवर्त्तमानं कर्म शुभाशुभं कर्माऽर्जयति, तेन च भवपरम्परा, तदात्मके संसारे इत्यर्थः । परिसमन्ताद्भ्रमत इति चतुर्दशरज्ज्वात्मकलोके सर्वत्रेतस्ततः एकेन्द्रियादिपञ्चेन्द्रियान्तरूपेण नानाप्रि-

धकर्मविचित्रपरिणतिवशेन शरीरपरिमाणानियतपरिमाणवतोऽसंख्येयप्रदेशमयस्य प्रतिप्रदेशमनन्तानन्तकर्मस्कन्धैस्सहैकलोलीभूतस्याऽऽत्मनश्चतुर्गतिषु परिभ्रमणं कुर्वत इत्यर्थः। अनेनात्मनः सक्रियत्वप्रतिपादनेन नैयायिकाद्यभ्युपगत आत्मविभुत्ववादो निरस्तः। तन्निरासश्चास्मद्दृब्धसम्मतितर्कमहार्णवावतारिकातो बोद्धव्यः। नन्वेतच्छरीरावच्छेदेनाऽऽद्यप्राणसंयोगो जन्म, एतच्छरीरावच्छेदेनान्तिमप्राणवियोगो मरणमित्यात्मविभुत्ववादेऽपि तस्यात्मनो जन्ममरणादिलक्षणपरिभ्रमणक्रियोत्पत्तिस्स्यादेवेति चेत्, मैवम्, आत्मनो विभुत्वेऽभ्युपगम्यमाने एकत्र जन्मनि शतधा छिन्नानां गृहगोधिकादीनां शतावयवेषु युगपत्कम्पोपलम्भेन तदनुमेयदुःखोपभोगार्थं चित्तान्तरप्रवेशोपगमतो भोगायतनत्वस्य प्रसङ्गात्, भोगायतनशतसम्बन्धाच्छतं जन्मानि तावदवच्छिन्नापूर्वजनकमनःसंयोगविगमात्तावन्ति मरणानि च स्युरित्यलम्प्रसङ्गानुप्रसङ्गेन। कर्मणो ज्ञानावरणीयादेरिति—स्वपरज्ञस्वभावस्याऽऽत्मनो हीनमातृगर्भस्थानप्रवेशः स्वातिरिक्तद्रव्यसम्बन्धपूर्वकः पुरुषान्तराप्रयोज्यत्वे सति हीनस्थानप्रवेशत्वात्, मदिरोन्मादोन्मत्तपुरुषस्याऽशुचिस्थानप्रवेशवादित्यनुमानेन तथा जगदन्तर्गताऽशेषपर्यायविशिष्टाऽपरिशेषद्रव्यग्रहणक्षमज्ञाननिष्ठस्वविषयाग्राहकत्वं विशिष्टद्रव्यसम्बन्धपूर्वकं तद्व्यतिरेकेणाऽनुपपद्यमानस्वविषयग्राहकत्वत्वात्, तदभावप्रयुक्ताभावप्रतियोगित्वाच्च, पीतमद्यादिपुरुषज्ञाननिष्ठस्वविषयाग्राहकत्ववदित्यनुमानेन विशिष्टद्रव्यसम्बन्धपूर्वकत्वसिद्धौ धूमात्पर्वते वह्नित्वेन वह्निसिद्धौ महानसीयादिवह्निबाधात् पक्षधर्मतावलाद्वा पर्वतीयवह्निसिद्धिवत्प्रकृतेऽन्यद्रव्यस्य बाधात् पक्षधर्मतावलाद्वा द्रव्यविशेषस्यैव सिद्धिः, स एव च कर्मसंज्ञां भजत इति। ननु नेदं युक्तमुक्तं कर्मणोऽदृष्टाऽपरनामकस्याऽऽत्मगुणत्वादिति चेत्, मैवम्, तथा सति कर्मण आत्मपारतन्त्र्यनिमित्तत्वं न स्यात्, यो हि यस्य गुणः स न तस्य पारतन्त्र्यनिमित्तं, यथा रूपादिः पृथिव्यादेः, आत्मगुणश्च धर्माधर्मसंज्ञकं कर्माऽभ्युपगम्यते परैरिति न तत् आत्मनः पारतन्त्र्यनिमित्तं स्यादिति प्रसङ्गः, आत्मनः पारतन्त्र्यनिमित्तञ्च कर्म, तस्मान्न तद्गुण इति विपर्ययः। नन्वात्मनः पारतन्त्र्ये किं मानमिति चेत्, उच्यते, परतन्त्रोऽसौ हीनस्थानपरिग्रहवत्त्वात्, यथा पीतमदिरोन्मत्तपुरुषोऽशुचिस्थानपरिग्रहवत्त्ववानिति परतन्त्रस्तथाऽयमात्मापीत्यनुमानमेव मानम्, शरीरस्य हीनस्थानत्वं तु कारागारवदात्मनो दुःखहेतुत्वाद् ज्ञेयम्, संसार्यात्मनश्च तत्परिग्रहवत्त्वं सुप्रतीतमेवेति नाऽसिद्धो हेतुः, कर्मणः पारतन्त्र्यनिमित्तत्वे सिद्धे कर्म पौद्गलिकम्, आत्मनः पारतन्त्र्यनिमित्तत्वात्, निगडादिवदित्यनुमानं प्रभवति पौद्गलिकत्वसाधनायेति। अन्ने उ अमुत्तं चिय, कम्मं मन्नंति वामणारूवं। तं तु न जुज्जइ तत्तो, उवघायाणुग्गहाऽभावा ॥ १ ॥ नाऽऽगासं उवघायं, अणुग्गहं वावि कुणइ सत्ताणं ॥ १ ॥" इत्यादिसिद्धान्तोक्तयुक्तिभिरपि कर्मणः पौद्गलिकत्वे सिद्धे तस्य ज्ञानावरणतया सिद्धाविदमनुमानं, संसारिज्ञानमशेषार्थात्मके स्वविषये सावरणं तत्राऽप्रवृत्तिमत्त्वात्, यज्ज्ञानं स्वविषयेऽप्रवृत्तिमत्तत्सावरणं, यथा तैमिरिकस्य लोचनविज्ञानमेकचन्द्रमसि, स्वविषयेऽशेषार्थलक्षणेऽप्रवृत्तिमच्च ज्ञानं, तस्मात् सावरणमिति त्रिजगदखिलार्थानां

स्वकृतस्य स्वेनैव मिथ्यात्वादिपरिणतेनाभिनवोत्पादितस्य, पुण्यपापफलमनुभवत इत्यनेन सम्बन्धः। पुण्यपापफलं पुण्यं पापं च यत्फलं सुखदुःखादिलक्षणम् तदिति व्याख्येयम्, पुण्यपापप्रकृतिग्रहणे कर्मण इत्यनेनानन्वयापत्तेः। अथ कर्मोदयादेव कर्मबन्धः, कर्मबन्धाच्च तदुदय इत्यन्योऽन्याश्रय इति चेत्, न, बीजाङ्कुरन्यायेनादोषत्वात्। इदानीन्तनकर्मबन्धे कर्मोदयपूर्वकत्वदर्शनेऽपि सर्वत्र कथं तन्निश्चय इति चेत्। सर्वं कर्म कर्मोदयाद्बध्यते, कर्मत्वात्, इदानीन्तनकर्मवदित्यनुमानादित्यवेहि। कीदृशं तत्पुण्यपापफलमित्याह–बन्धनिकाचनोदयनिर्जरापेक्षम्। बन्धो नामैकक्षेत्रावस्थितानां कर्मयोग्यस्कन्धानां रागद्वेषस्नेहावलीढसकलात्मप्रदेशेष्वाहारपुद्गलानामिव परिणामकः सम्बन्धः। निकाचना तु

सामान्यविशेषोभयांशरूपत्वेन "सामन्नग्गहणं दंसणं विसेसियं तु नाणं" इति वचनात्तेषां विशेषरूपेण यज्ज्ञानं तत्तदंशे सावरणमित्युक्तलिङ्गेन सिद्धे तेषामेवार्थानां सामान्यरूपेण यद्दर्शनं तदप्युक्तलिङ्गेनैव तदंशे सावरणं, यथा दर्शनाभिलाषुकस्यापि पुंसो राजदर्शनं स्वाविषयेऽप्रवृत्तिमत्त्वाद् द्वारपालरूपावरणेन सावरणं तथा प्रकृतेऽपि, यच्चात्रावरणं, तदेव कर्म, एवं प्रकारेण सिद्धस्य कर्मणो ज्ञानावरणीयदर्शनावरणीयादेरित्यर्थः। स्वेनैवेति–आत्मनैव। अत्रैवकारस्याऽन्ययोगव्यवच्छेदार्थकतया न तु ब्रह्मणा प्रकृत्या वेत्यर्थः। अनेन निखिलकर्मकर्त्ता आत्मैव, न तु ब्रह्मप्रकृत्यादिरिति ज्ञापितम्। सोऽपि मिथ्यात्वादिसहकृत एव कर्मकर्तेति प्रतिपादनाय विशेषणमाह–मिथ्यात्वादिपरिणतेनेति–अत्रादिपदेनाऽविरतिकषाययोगानां ग्रहणमिति। पुण्यपापफलमिति–पुण्यञ्च पापञ्च पुण्यपापे तयोर्यत् सुखदुःखादिरूपं फलं तत्पुण्यपापफलमित्यर्थः। तदेवाऽऽह–पुण्यं पापञ्चेत्यादिना। अत्र पुण्यञ्च पापञ्च तत्फलमिति यदुक्तं तत्कार्ये कारणोपचारं कृत्वेति ज्ञेयम्। सर्वत्रेति–एतद्भव इव भवान्तरेऽपीत्यर्थः। सकषायत्वादाऽऽत्मा। येष्वाकाशप्रदेशेष्ववगाढस्तत्प्रदेशावगाढान् कर्मयोग्यपुद्गलानादत्ते, न त्वनन्तरावगाढान् परम्परावगाढान् वा, न वा तत्र स्थितानप्यनन्तानन्तान् कर्माऽयोग्यानन्यपुद्गलानिति सूचनार्थमाह–एकक्षेत्रावस्थितानां कर्मयोग्यस्कन्धानामिति। तथा चोक्तं पञ्चसङ्ग्रहे–"एगपएसोगाढे, सव्वपएसेहिं कम्मणो जोगे। जीवो पोग्गलदव्वे, गिण्हइ साई अणाई व ॥७७॥" इति। एकप्रदेशावगाढानीति–अत्रैकशब्दोऽभिन्नार्थवाची, यथा द्वयोरप्यावयोरेकं कुटुम्बम्, ततोऽयमर्थः–येष्वाकाशप्रदेशेष्ववगाढा जीवप्रदेशास्तेष्वेव समवगाढानि कर्मयोग्यानि पुद्गलद्रव्याणि जीवो गृह्णातीति। भित्तौ घृतादिस्नेहवशाद्दीर्घकालस्थायिरजस्सम्बन्धवदात्मनि रागद्वेषस्नेहवशादेव दीर्घकालस्थायिकर्मपुद्गलसम्बन्ध इति ज्ञापनार्थं विशेषणमाह–रागद्वेषस्नेहावलीढेति। हस्तादिप्रत्येकावयवावच्छेदेनात्मना शुभाशुभक्रियाकरणेऽपि न तद्द्वारा हस्तावच्छिन्नात्मप्रदेशैरेवात्मा कर्मपुद्गलानवगृह्णाति; किन्तु स्वीयसर्वप्रदेशैरेव, शृङ्खलावद्धन्यायेन पद्मनालतन्तुवद्वा सर्वात्मप्रदेशानां मिथस्सम्बन्धसद्भावाद्, हस्ताद्यवच्छिन्नात्मप्रदेशानां प्राधान्येन व्यापारेऽपि तदितरप्रदेशानामपि गौणवृत्त्या व्यापारभावादित्याशयेन विशेषणमाह–

स्पृष्टतानन्तरभाविनी बद्धस्य कर्मणः सकलकरणायोग्यतावस्था । स्पृष्टता तु निकाचनाभेद एवेति पृथग् नोक्तेति टीकाकृतः । बद्धं नाम कर्मात्मप्रदेशैः सह श्लिष्टं, यथा सूचयः कलापीकृताः परस्परेण बद्धाः कथ्यन्ते । ता एवाग्नौ प्रक्षिप्तास्ताडिताः समभिव्यज्यमानान्तराः स्पृष्टा इति व्यपदिश्यन्ते, ता एव पुनः प्रताप्य यदा घनेन ताडिताः प्रणष्टस्वविभागा एकपिण्डतामितास्तदा निकाचिता इति व्यपदेशमश्नुवते । एवं कर्माप्यात्मप्रदेशेषु योजनीयम् । तस्यैवं निकाचितस्य प्रकृत्यादिबन्धरूपेणावस्थितस्योदयावलिकाप्रविष्टस्य प्रतिक्षणं यो विपाकानुभवः स उदयः । उदयानुभवसमनन्तरमेवापेतस्नेहलेशं परिशटत्प्रतिसमयं कर्म निर्जराव्यपदेशमङ्गीकरोति । बन्धादय. कृतद्वन्द्वास्ता अपेक्षत इति कर्मण्यण् । कथं पुनस्तत्फलं बन्धाद्यपेक्षत इति चेत्, उच्यते, यतो बन्धादिष्वसत्सु न तत्सम्भव इति टीकाकृतः । बन्धनिकाचनयोरुदयद्वारा फलनिष्पत्तौ, निर्जरायास्तु धाराऽविच्छेदेन तत्परिपुष्टौ हेतुतेत्यपि सम्यगाभाति । यथानुभव इत्यत आह—नारकतिर्यग्योनिरुत्पत्तिस्थानम्, मनुष्याश्चामराश्च तेषा भवग्रहणानि शरीरादानानि तेषु । विविधमनेकविधं प्रकृतिभेदेन फलभेदात् । कथमनुभवत इत्याह—ज्ञानदर्शनोपयोगस्वाभाव्यात् । यदा यदोपयु(यु)ङ्क्ते तदा तदा सुख्यहं दु खितोऽहमिति साकारानाकारोपयोगबलाच्चेतयते तेनास्यानुभव इत्यर्थः । उत्तरग्रन्थेनाप्यस्य सम्बन्धः । तानि तानीत्यादि ज्ञानदर्शनोपयोगस्याशुसञ्चारस्वाभाव्यादेव तानि तानि परिणामान्तराणि याति । तानि तानीति मुहूर्ताभ्यन्तरेऽपि मनसश्चलत्वाद् बहूनि गच्छन्ति । तानि चेह शुभानि ग्राह्याणि । सम्यग्दर्शनप्राप्त्यधिकारात् । बहुत्वद्योतिका वीप्सा । अथवा यान्येव पूर्वाण्यध्यवसायान्तराणि तान्येव पराध्यवसायतया वर्तन्त इत्यन्वयप्रदर्शनार्था वीप्सा । परिणामस्य चेतनाचेतनसाधारणत्वादजीवपरिणामव्यावृत्त्यर्थमध्यवसायस्थानग्रहणम् । स खलु जीवस्तानि शुभाध्यवसायान्तराण्याक्रन्दत्वनाभोगनिर्वर्तितेन यथाप्रवृत्तकरणेन

सकलेति । परिणामक इति—परिणामानुकूल इत्यर्थः । निकाचनेति—निकाच्यते सकलकरणाऽयोग्यत्वेनाऽवश्यवेद्यतया व्यवस्थाप्यते कर्म जीवेन यया सा निकाचनेत्यर्थः । बन्धादयः कृतद्वन्द्वा इति—बन्धश्च निकाचना चोदयश्च निर्जरा च बन्धनिकाचनोदयनिर्जरा इत्यर्थः । तत्परिपुष्टौ—फलपरिपुष्टौ । चेतनाचेतनसाधारणत्वादिति—चेतनपरिणामाचेतनपरिणामभेदेन द्विविधत्वादित्यर्थः । अनाभोगनिर्वर्तितेनेति—अनभिसन्धिजनितेनेत्यर्थः । यथाप्रवृत्तकरणेनेति यथाप्रवृत्तकरणापूर्वकरणानिवर्त्तिकरणभेदेन करणानि त्रिविधानि, तत्राऽनादिसंसिद्धप्रकारेण प्रवृत्तं यथाप्रवृत्तम्, क्रियते कर्मक्षपणमनेनेति करणम्, सर्वत्र जीवपरिणामविशेष एवोच्यते, यथाप्रवृत्तं च तत्करणञ्च यथाप्रवृत्तकरणम्, एवमुत्तरत्रापि करणशब्देन कर्मधारयः, अनादिकालात्कर्मक्षपणप्रवृत्तोऽध्यवसायविशेषो यथाप्रवृत्तकरणमित्यर्थः, अप्राप्तपूर्वमपूर्वम्, स्थितिघातरसघाताद्यपूर्वार्थनिर्वर्तकं वाऽपूर्वम्, निवर्त्तनशीलं निवर्त्ति, न निवर्त्ति अनिवर्त्ति, आसम्यग्दर्शनलाभान्न निवर्तत इत्यर्थः । एतानि त्रिण्यपि यथोत्तरं विशुद्धविशुद्धतरविशुद्धतमाध्यवसायरूपाणि भव्यानां करणानि भवन्ति, अभव्यानां तु प्रथममेव यथाप्रवृत्तकरणं, नेतरे द्वे, उक्तञ्च भाष्ये—करणं अहापवत्तं अपुव्वमनियट्टियमेव भव्वाणं । २

तां तामुत्कृष्टां कर्मस्थितिमवह्रास्य कोटीकोट्याः सागरोपमानामन्तः क्षपयंस्तावत् प्रयाति यावत्तस्या

पढमं चिय भन्नइ करणं ति परिणामो ॥१२०२॥" तत्रानादिकालादारभ्य यावद् ग्रन्थिस्थानं तावत्प्रथमं यथाप्रवृत्तकरणं भवति, कर्मक्षपणनिबन्धनस्याध्यवसायविशेषस्य सर्वदैव भावात्, अष्टानां कर्मप्रकृतीनामुदयप्राप्तानां सर्वदैव क्षपणादिति । ननु यदि ग्रन्थिभेदात्पूर्वं सम्यक्त्वादिगुणविकलोऽपि जीवः सुदीर्घां कर्मस्थितिं क्षपयति तर्हि तदनन्तरं शेषमपि कर्मासौ सम्यक्त्वादिगुणान् विनैव क्षपयतु, ततः मोक्षमप्यनपेक्षितसम्यक्त्वादिगुण एव जीव आसादयतु किमन्यर्गडुभिस्तद्धेतुभूतसम्यक्त्वादिगुणैरिति चेत्, उच्यते, सिसाधयिषितमहाविद्यायाः पूर्वसेवेव पूर्वे कर्मस्थितिक्षपणे या यथाप्रवृत्तकरणक्रिया सा नातिगुर्वी, किन्तु परिमृढी भवति, महाविद्यासाधनकालावच्छिन्नक्रियेव या पुनर्ग्रन्थिभेदादारभ्य मोक्षसाधने सम्यग्दर्शनज्ञानसम्वलितचारित्रक्रिया साऽतीवगुर्वी दुष्प्रापा सविघ्ना च भवति, न चात्युल्लासपूर्वकमहाप्रयाससाध्योत्तरक्रियामन्तरेण महाविद्यासिद्धिर्न भवति तद्वदेतां सम्यग्दर्शनज्ञानान्वितचारित्रक्रियामन्तरेण कस्यापि कदाचिदपि मोक्षो भवति, तदेवं सम्यक्त्वादिगुणवैकल्यावस्थायां क्षपितबहुकर्मत्वादपचितबहुदोषस्य जीवस्य ग्रन्थिभेदादूर्ध्वं स्वयमेव कारणसामग्रीसद्भावात् सम्यक्त्वादिगुणावाप्तेस्तत्सहकृत एव जीवो मोक्षमवाप्नोतीति सिद्धम् । उक्तञ्च भाष्ये—"पाएण पुव्वसेवा, परिमउई साहणम्मि गुरुतरिया । होइ महाविज्जाए, किरिया पायं सविग्घा य ॥११९९॥ तह कम्मट्ठिइखवणे, परिमउई मोक्खसाहणे गुरुई । इह दंसणाइकिरिया, दुलहा पायं सविग्घा य ॥ १२०० ॥ अहव जओ च्चिय सुबहुं, खवियं तो निग्गुणो न सेसंपि । स खवेइ जओ लभए, सम्मत्त सुयाइगुणलाभं ॥१२०१॥ " इति । ग्रन्थिभिन्दानस्य द्वितीयम्, प्राक्तनाद्विशुद्धतराध्यवसायरूपेण तेनैव ग्रन्थेर्भेदात् । अभिमुखसम्यक्त्वस्य तृतीयम्, तस्मादेव विशुद्धतमाध्यवसायरूपादनन्तरं सम्यक्त्वलाभात् । उक्तञ्च विशेषावश्यकभाष्ये—"जा गंठी ता पढमं, गंठि समइच्छओ अपुव्वं तु । अनियट्टिकरणं पुण, सम्मत्तपुरक्खडे जीवे ॥१२०३॥" इति । मिथ्यादृष्टिरपि जीवो गिरिसरित्प्रस्तरमिथोघर्षणघोलनान्यायेन यथाप्रवृत्तकरणेनाऽनाभोगतो बन्धहेतूनामपकर्षात् कर्मक्षयहेतूनां प्रकर्षाद्बहुतरं कर्म चिरबद्धं क्षपयन् स्तोकतरं नव्यं बध्नन् किंविधां कर्मस्थितिमवह्रास्य कियद्भागान् यावत्प्रयातीत्याशङ्कायामाह तां तामुत्कृष्टां कर्मस्थितिमित्यादि । उत्कृष्टा कर्मस्थितिश्चैवम्—त्रिंशत्कोटाकोटिसागरोपममाना ज्ञानावरणदर्शनावरणवेदनीयान्तरायरूपकर्मचतुष्टयानां नामगोत्रयोर्विंशतिसागरोपमकोटाकोटीमाना सप्ततिसागरोपमकोटाकोटीमाना मोहनीयकर्मणः स्थितिः । उक्तञ्च विशेषावश्यके—"वीससयरोवमाणं, कोडाकोडी उ नामगोआणं । सयरी मोहस्स ट्ठिई, सेसाणं तीसमुक्कोसा ॥१॥ ११८७ ॥ " तत्र सर्वेषां कर्मणामुत्कृष्टस्थितौ वर्तमानः प्रबलमोहाच्छादितत्वान्न किमपि सम्यग्दर्शनं लभते, उक्तञ्च—" अट्ठण्हं वि पयडीणं, उक्कोसठिईए वट्टमाणो उ । ण लभति सम्मद्दंसण, मिच्छत्तेणं विमोहाओ ॥ १ ॥ " इति ।

अपि पल्योपमासंख्येयभागः क्षपितो भवति, तस्मिन्स्थाने प्राप्तस्यातिप्रकृष्टघनरागद्वेषपरिणामजनितः वज्राश्मवद्दुर्भेदः कठिनरूढगूढग्रन्थिरुपतिष्ठते, तत्र कश्चिद्भव्यसत्त्वस्तं भित्त्वाऽपूर्वकरणबलेन प्राप्तानिवृत्तिकरणस्तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनमासादयति,

ननु तावत्पर्यन्तकर्मणि क्षपिते किमाविर्भवतीत्याशङ्कायामाह–तस्मिन्स्थाने इत्यादि। उक्तञ्च– "अंतिमकोडाकोडीए सव्वकम्माणमाउवज्जाणं। पलियासंखिज्जइमे भागे, खीणे भवइ गंठी ।।११९४" इति। कठिनरूढगूढग्रन्थिरिति कर्कशघनरूढगूढवल्कलग्रन्थिरिव ग्रन्थिरित्यर्थः। उक्तञ्च–"गंठित्ति सुदुब्भेओ, कक्खडघणरूढगूढगंठिव्व। जीवस्स कम्मजणिओ, घणरागद्दोसपरिणामो ।।११९५" इति। नन्वमुं ग्रन्थिं यावद्भव्य एव समागच्छति किं वाऽभव्योऽपीति चेत्, उच्यते, अभव्योऽपीति, तथाहि–अमुं ग्रन्थिं यावद्भव्यजीवोऽप्यनन्तशो यथाप्रवृत्तकरणेन कर्म क्षपयित्वा समागच्छति, तत्राऽऽगतस्य तस्य श्रुतसामायिकस्याऽवाप्तिरपि, उक्तञ्च–विशेषावश्यके– "तित्थकराइपूअं, दट्ठूणण्णेण वाऽवि कज्जेण। सुअसामाइअलाभो, होइ अभव्वस्स गंठिम्मि ।।१२१९।" इति। अयमर्थः–अर्हदादिविभूतिमतिशयवतीं दृष्ट्वा अहो! कीदृशं तपसः फलम्? धर्मादेवंविधसत्कारो देवराज्यादयो वा प्राप्यन्त इत्येवमुत्पन्नबुद्धेरभव्यस्याऽपि ग्रन्थिस्थानं प्राप्तस्य तद्विभूतिनिमित्तमिति शेषः। देवत्वनरेन्द्रत्वसौभाग्यबलादिलक्षणेनाऽन्येन वा प्रयोजनेन सर्वथा निर्वाणश्रद्धानरहितस्याऽभव्यस्याऽपि संयमतप आदि कष्टानुष्ठानं किञ्चिदङ्गीकुर्वतो मिथ्याज्ञानरूपस्य श्रुतसामायिकमात्रस्य लाभो भवेत्, तस्याप्येकादशाङ्गपाठानुज्ञानात्, न पुनस्सम्यक्त्वादेर्लाभः, अभव्यत्वहानिप्रसङ्गात्। ननु तत्राभव्यात्मा भव्यात्मेव कियत्कालं तिष्ठतीति चेत्, उच्यते, संख्येयमसंख्येयं वा कालमिति। उक्तञ्च धर्मसङ्ग्रहे–"ग्रन्थिप्रदेशं यावत्त्वभव्योऽपि संख्येयमसंख्येयं वा कालं तिष्ठति, तत्र स्थितश्चाभव्यो द्रव्यश्रुतं भिन्नानि दशपूर्वाणि यावल्लभते जिनर्द्धिदर्शनात्, स्वर्गसुखार्थित्वादेव दीक्षाग्रहणे तत्सम्भवादिति। ग्रन्थिस्थाने चैवं पूर्वप्रदर्शितकालं यावत्स्थित्वा पुनः पश्चात् प्रतिनिवर्त्तते इति। नन्वभव्यसिद्धिकः किमभिन्नानि दश पूर्वाणि चतुर्दश पूर्वाणि वा नैव लभते, ओमिति चेत्, तत्रास्ति किमपि कारणम्? अस्तीति ब्रूमः, तथाहि–यस्य चतुर्दश पूर्वाणि यावद्दश च पूर्वाणि परिपूर्णानि सन्ति तस्य पुंसः नियमात्सम्यक्त्वम्, यस्य च किञ्चिदूनदशपूर्वादियावत्सामायिकपर्यन्तश्रुतं तस्य सम्यक्त्वं भवेत् मिथ्यात्वं वा। उक्तञ्च–" चोद्दश दश य अभिन्ने, नियमा सम्मं तु सेसए भयणा " इति। तथा चाभव्यात्मनः सम्यग्दर्शनाभावप्रयुक्तभिन्नदशपूर्वाधिकपठनयोग्यत्वाभाव एव कारणमिति। ननु भव्याभव्ययोर्जीवत्वेन साम्यान्नोक्तविशेषो युक्तियुक्त इति चेत्, मैवम्, जात्याजात्यरत्नयो रत्नत्वेनेव तयोर्जीवत्वेन साम्येऽपि स्वभावसाम्यासिद्धेर्नोक्तविशेषोऽयुक्तः, तत्र मुक्तत्वप्रयोजिका सामान्यतोऽभव्यावृत्ता जातिर्भव्यत्वमिति गीयते, तद्विपरीता जातिरभव्यत्वमात्मनोऽनादिपरिणामभावलक्षणमिति। ननु भव्यजीवो ग्रन्थिस्थाने भिन्ने किं लभत इत्याशङ्कायामाह तत्र कश्चिदित्यादि। सम्यग्दर्शनमासादयतीति–उक्तञ्च–"भिन्नंमि तंमि

कश्चिद् ग्रन्थिस्थानादधो निवर्त्तते, कश्चित्तत्रैवावतिष्ठते, न परतो नाधःप्रसर्पतीति । अत्र चोपदेष्टारमन्तरेण यत् सम्यक्त्वं तन्नैसर्गिकम् । तदाह–अनादीत्यादि । नास्या(आ)दिरस्तीत्यनादिः, अनादिर्मिथ्या दृष्टिर्यस्य स तथा, अप्राप्तपूर्वसम्यक्त्वलाभस्येत्यर्थः । अपिशब्दात् सादिमिथ्यादृष्टेरपि, सतो भवतः, परिणामविशेषादध्यवसायविशेषात्, स चेह यथाप्रवृत्तकरणाख्यो गृह्यते । ततः परमपूर्वकरणम् । अप्राप्तपूर्वं तादृशमध्यवसायान्तरं जीवेनेत्यपूर्वकरणमुच्यते । तच्च ग्रन्थिं विदारयतः । ततश्च ग्रन्थिभेदोत्तरकालभाव्यनिवर्त्तिकरणमासादयति, यतस्तावन्न निवर्तते यावत्सम्यक्त्वं न लब्धमित्यतोऽनिवृत्तिकरणम्, तद् ग्रन्थान्तरसिद्धत्वाद्भाष्यकारेण नोक्तं, कार्यसहभाविकारणत्वेन तस्यावश्यं लाभ इत्यभिप्रायाद्वा । निगमयति यदेवमुपजातमेतत् (निसर्ग)सम्यग्दर्शनमिति । एवं जीवस्योपयोगस्वाभाव्यात् तदधिगमादपि प्राप्यते । तत्र कोऽधिगम इति निर्णयार्थमाह–अधिगम इत्यादि । अधिकं ज्ञानमधिगमः । गुर्वाभिमुख्येनालम्ब्य यद् ज्ञानं सोऽभिगमः, आगमः सिद्धान्तः, कारणे कार्योपचारः, निमित्तं सम्यग्दर्शनोत्पादकं बाह्यं वस्तु प्रतिमादि । श्रवणं विचारसहितवाक्यश्रुतिजनितं

सम्मत्ताईणं मोक्खहेऊणं" इति । कश्चिद्ग्रन्थिस्थानादधो निवर्त्तत इति–ग्रन्थिं भेत्तुमसमर्थः, रागादिभिर्जितात्मा पुनरपि ग्रन्थिस्थानात् व्यावृत्य संक्लेशवशादुत्कृष्टस्थितीनि कर्माणि बध्नातीति भावः । उक्तञ्च "ग्रन्थिप्रदेशं तु सम्प्राप्ता, रागादिप्रेरिता पुनः । उत्कृष्टबन्धयोग्याः स्युश्चतुर्गतिजुषोऽपि ते ॥ १ ॥" इति । कश्चित्तत्रैवावतिष्ठत इति–कश्चित्पुनरसंख्येयं संख्येयं वा कालं तदवस्थपरिणामः कर्म्मणस्स्थितिं वर्धयितुं ह्रापयितुं वाऽसमर्थस्तत्रैवावतिष्ठत इत्यर्थः । नष्टपथः कोऽपि पुरुषोऽटव्यामितस्ततः परिभ्रमन् कालान्तरे मार्गानुसारिप्रज्ञतया स्वयमेवोहापोहं कृत्वा मार्गं लभते, कश्चित्तु मार्गज्ञपरोपदेशात्सम्प्राप्नोति एवं कोऽपि सर्वथा नष्टसत्पथो भव्यात्मा संसाराटव्यां पर्यटन् ग्रन्थिस्थानम्प्राप्तवान् ग्रंथिं भित्त्वा स्वयमेव सम्यक्त्वादिसत्पथं लभते, कोऽपि मोक्षमार्गज्ञपरोपदेशात्, तत्राद्यभेदमाधिकृत्याह–अत्र चोपदेष्टारमन्तरेणेत्यादि । द्वितीयभेदञ्चाश्रित्य प्रतिपादयिष्यति, एवं जीवस्योपयोगस्वाभाव्यात् तत् अधिगमादपि प्राप्यत इत्यादिना । सादिमिथ्यादृष्टेरपीति–पूर्वं यत्सम्यक्त्वं प्राप्तं पश्चादनन्तानुबन्धिकषायोदयात्तद्वमित्वा पुनरपि मिथ्याभावं गतस्यापीत्यर्थः, मिथ्यादृष्टित्वे प्राप्ते तस्य सादित्वभावादिति भावः । ननु कियत्कालं मिथ्याभावे स जीवस्तिष्ठतीति चेत्, उच्यते, जघन्येन कश्चिद् भव्योऽन्तर्मुहूर्त्तं, कश्चिच्चोत्कर्षेणाऽपार्धपुद्गलपरावर्तं यावत्, तदनन्तरं पुनरपि सम्यक्त्वावाप्तिरिति । अधिगमसम्यग्दर्शनं यथाऽवाप्यते तथा चाह–जीवस्येत्यादि । ये धातवो गत्यर्थास्ते ज्ञानार्था इति गमेर्गत्यर्थत्वाज्ज्ञानार्थत्वमित्यभिप्रायेणाह–अधिकं ज्ञानमधिगम इति–आगमस्य वर्णपदवाक्यराशिरूपत्वेऽपि यदधिगमसम्यग्दर्शनरूपत्वमुक्तं तत्र कारणमाह–कारणे कार्योपचार इति । यथा नड्वलोदकस्य पादरोगकारणत्वात्तत्र पादरोगकार्योपचारेण नड्वलोदकं पादरोग इत्युच्यते तथाऽऽगमस्य तत्त्वपर्यालोचनद्वाराऽधिगमसम्यग्दर्शनजनकत्वात्तत्राधिगमसम्यग्दर्शनकार्योपचारं कृत्वाऽऽगमस्याप्यधिगमत्वमुक्तमिति भावः । बाह्यं वस्तु प्रतिमादीति–प्रतिमादिर्

ज्ञानम्। शिक्षाग्रन्थाभ्यासजनितं विलक्षणम्, एते पदार्थाः किञ्चिद्भेदं प्रतिपद्यमाना निसर्गसम्यक्त्वाद्-भेदमुपलक्षयन्तोऽनर्थान्तरमेकप्रयोजनाः। सम्पिण्ड्याह–तदेवमित्यादिना, परोपदेशादिति–प्रतिमादि-निमित्तोपलक्षणमेतत्। परोपदेशाच्छब्दादित्येव निर्द्धारणेऽव्याप्त्यापत्तेः। भवति हि कस्यचिद् भव्यस्य प्रतिमाद्यालोक्यापि सम्यक्त्वप्राप्तिरिति। स्वासन्निहितनिमित्तापेक्षत्वेनैतन्निष्ठो जातिभेदो व्यज्यत इति व्याख्योऽर्थः॥ ३॥ उत्तरसूत्रं स्वयमेव लगयन्नाह

(भा०) अत्राह तत्त्वार्थश्रद्धानं सम्यग्दर्शनमित्युक्तम्। तत्र किं तत्त्वमिति?। अत्रोच्यते

(यशो०टीका)–अत्राहेत्यादि–नन्वयुक्तोऽयं प्रश्न.। तत्त्वादीनि जीवादीनि वक्ष्यन्त इति भाष्य एवोक्तत्वात्, न, ततः स्वरूपज्ञानेऽपीयत्ताया अज्ञानादिति टीकाकृतः। एवं सति कतिविधं तत्त्वमिति प्रष्टव्यं स्यात्, इति चेत्, अत्रेदमाभाति, विभागजिज्ञासाया फलीभूतविभागज्ञानविषयोद्देश्यस्यापि प्रष्ट-व्यत्वादित्थमुक्तिः। किमे(मै)व च (क) किं कतिविधं वेत्यनयोर्लभो बुद्धिस्थत्वात्॥

कादु बाह्यनिमित्ताद् यत्सम्यग्दर्शनमुपजायते तन्निमित्तसम्यग्दर्शनमिति गीयते। मूले उपदेश इति–उपदिशतीत्युपदेशो गुरुरेव, देववच्छब्दसंस्कारः, ततो यत्प्रादुरस्ति। परोपदेशादित्यत्रो-पलक्षणन्यायेन प्रतिमादिनिमित्ताऽननुसरणे यत्स्यात्तदाह–परोपदेशाच्छब्दादित्यादि। अव्याप्तिमेवाह–भवति हीति। स्वासन्निहितनिमित्तापेक्षत्वेनैतन्निष्ठो जातिभेदो व्य-ज्यत इति–स्वं सम्यग्दर्शनं तदसन्निहितं तदनधिकरणं यन्निमित्तं तदपेक्षत्वेनाऽधिगमसम्य-ग्दर्शननिष्ठो निसर्गसम्यग्दर्शनाव्यावृत्तियो जातिविशेषस्स व्यज्यत इत्यर्थः। ३।

॥ तृतीयसूत्रटीका समाप्तिमगात्॥

चतुर्थसूत्रावतरणिकामाह–उत्तरसूत्रं स्वयमेवेत्यादि। तत्र किं? तत्त्वमिति भाष्यम्, अस्य तत्त्वार्थश्रद्धानवाक्यघटकीभूतं तत्त्वं किं, तत्त्वशब्दवाच्यं किमिति प्रश्नः? इत्यर्थः। प्रश्नस्यायुक्तत्वे हेतुमाह–तत्त्वानीत्यादि। भाष्ये द्वितीयसूत्रभाष्ये। एवं सतीति-कियत्संख्यकं तत्त्वमिति नियतसंख्याज्ञानार्थं प्रश्ने सतीत्यर्थः। फलीभूतेति–विभागजिज्ञासा विभागज्ञानं मे जायतामित्याकारिका, प्रकृते पदार्थत्वलक्षणतत्त्वरूपसामान्यधर्मव्याप्यपरस्पर-विरुद्धनानाधर्मप्रकारकधर्मिविशेष्यकप्रतिपत्तिजनकज्ञानविषयिणीच्छा, तस्याः फलीभूतं निरुक्तेच्छया प्रश्नयितुरन्येच्छाया उत्तरविधातृपुरुषे ज्ञानोत्पत्तये प्रश्नवाक्यं, तत उत्तरयितु-र्निरुक्तेच्छाज्ञानं, तत इच्छाविषयीभूतोक्तविभागज्ञानायोत्तरवाक्यं, तत उक्तविभागज्ञानमित्येवं विभागज्ञानं, तद्विषयो य उद्देश्यस्सामान्यधर्मवान्, विभागज्ञाने सामान्यधर्मव्याप्यपरस्पर-विरुद्धनानाधर्माणां विधेयतया विषयत्वं, सामान्यधर्मवतश्चोद्देश्यतया विषयत्वमिति तस्यापि प्रष्टव्यत्वात्प्रश्नविषयत्वात्, उद्देश्यस्य सामान्यधर्मवतः प्रश्नाविषयत्वे तदुद्देश्यकविशेषप्रकार-कज्ञानविषयकेच्छावबोधकप्रश्नाऽसम्भवात्, इत्थमुक्तिः–किन्तत्त्वमित्येवमुक्तिः, ननु सामान्य-धर्मवत उद्देश्यस्य वाचकं तत्त्वपदमस्तीति तस्य किंपदसमभिव्याहारतस्तद्बोध्यस्य टव्पर

पद्यतां, तद्विशेषप्रकाराभिधायि पदं तु न प्रश्नघटकमिति कथं तथोक्तितो विभागजिज्ञासावगति-रित्यत आह–किमेव चेति–अयमेवाऽत्र पाठो युक्तः, न तु किमेव चेति, किमा किंशब्देन, एवकारोऽन्यशब्दव्यवच्छेदकः, किं तत्त्वमित्येतद्घटककिंशब्देनैव च किं कतिविधं वेत्यनयो-र्लाभः, क इति पाठस्त्वत्र नोपयुक्तः । तथा च किं कतिविधं वा तत्त्वमिति प्रश्नाकारः, कथं लाभ इत्यपेक्षायामाह बुद्धिस्थत्वादिति–प्रश्नयितृबुद्धिविषयत्वादित्यर्थः ।

## सूत्रम् जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥ १ ॥ ४ ॥

(भा०) जीवा अजीवा आस्रवा बन्धः संवरो निर्जरा मोक्ष इत्येषः सप्तविधोऽर्थस्तत्त्वम् । एते वा सप्त पदार्थास्तत्त्वानि । ताँल्लक्षणतो विधानतश्च पुरस्ताद्विस्तरेणोपदेक्ष्यामः ॥

(यशो०टीका) जीवा अजीवेत्यादि–जीवा उपयोगवन्तः, अजीवास्तद्विपरीताः । आश्रव आत्मधर्मत्वे सति कर्मबन्धासाधारणकारणम् । बन्धोऽभिनवकर्मग्रहणम्, अभिनवपदेन संक्रमव्यवच्छेदः । संवर आश्रवविपरीतः । विपाकात्तपसा वा कर्मपरिशाटो निर्जरा, कर्मपरिशाटः कर्मात्मसंयोगध्वंसः,

---

यद्यपि "स आश्रवः" ६–२–इति सूत्रेण त्रिविधोऽपि कायवचोमनोयोगश्शुभाशुभयोः कर्म-णोरास्रवणादास्रव इति षष्ठाध्याये वक्ष्यते, योगश्चात्मकायाद्याश्रयत्वेनोभयाश्रयत्वादुभयधर्म इति तल्लक्षणास्रवोऽप्युभयधर्मस्तथापि तस्य कायादिसहकृतात्मव्यापाररूपत्वेन तत्र चात्मन एव प्राधान्यादात्मधर्मं तद्व्यतिरेकेण कर्मबन्धाभावात् शुभाशुभकर्मबन्धाऽसाधारणहेतुश्च स इत्यभि-प्रेत्य तद्घटिततल्लक्षणमाह–आश्रव आत्मधर्मत्वे सतीत्यादि, मिथ्यादर्शनादिपरिणाम-लक्षणाश्रवपक्षे तूक्तलक्षणं सुसङ्गतमेव, मिथ्यादर्शनादेरात्मधर्मत्वादिति । संसारानादित्वान्यथा-नुपपत्त्यैकैकाऽऽत्मनस्सन्तत्या कर्मबन्धोऽप्यनादिरेवेति पूर्वपूर्वबद्धकर्मप्रेरित आत्मा प्रतिक्षणम-भिनवं कर्म बध्नाति, यतः कर्मणैव कर्म बध्यते, नान्यथा, सिद्धात्मनोऽपि कर्मबन्धापत्तेरित्या-शयेन बन्धलक्षणमाह–बन्धोऽभिनवकर्मग्रहणमिति । सङ्क्रमेति–"मूलप्रकृत्यभिन्नाः सङ्क्रमयति गुणत उत्तराः प्रकृतीः । नन्वात्माऽमूर्तत्वादध्यवसायप्रयोगेण ॥ १ ॥" इत्युक्तस्या तत्स्वरूपं ज्ञेयम्, तस्याभिनवकर्मग्रहणरूपत्वाभावादभिनवपदेन तद्व्यवच्छेदः कृत इत्यर्थः । संवर आश्रवविपरीत इति–काययोगादेराश्रवस्य द्व्यधिकचत्वारिंशद्भेदस्य यो निरोधस्तद्धे-तुस्संवर इत्यर्थः । विपाकादिति–अबाधाकालपरिपूर्त्या यत्कर्मोदयावलिकायां प्रविष्टं तद्रसानु-भावादित्यर्थः । नैवायं नियमो यदबाधाकालपरिपूर्त्यैव कर्म विपाकेन क्षीयत इति, किन्तु चिर-तरकालपरिभोग्यं निकाचितमपि कर्म प्रागपि तपसा क्षीयत एव "तवसा उ निकाइयाणं वि" इति वचनादिति ज्ञापनायाह–तपसेति । ननु कर्मपरिशाटो निर्जरेत्येव लक्षणमुच्यताम्, किं हेतुघटिततल्लक्षणाभिधानेनेत्याशङ्कानिवृत्त्यर्थमाह–कर्मपरिशाट इत्यादि वेत्यन्तग्रन्थमिति । अयम्भावः–विपाकात्तपसा वेति विशेषणोपादानाद् विपाकतपोऽन्यतरजन्यो यः प्रायोगिकनि-र्जरात्मकः कर्मपरिशाटः सोऽत्र ग्राह्यः, नातः सिद्धात्मवैस्रसिककर्मद्रव्यसंयोगध्वंसलक्षणपरि-

तथा च सिद्धात्मकर्मद्रव्यसंयोगध्वंसेऽतिव्याप्तिवारणाय वेत्यन्तम्, विपाकतपोऽन्यतरजन्यत्वं तदर्थः। आत्मनः स्वभावसमवस्थानं मोक्षः। तत्त्वशब्दस्य व्युत्पत्तिपक्षे जीवादीनां या स्वसत्ता सैव तत्त्वम्। तस्याश्च प्रतिविशेषं यो वस्तुभेदस्तमनादृत्यैकवचनम्, सामान्यस्य विशेषानतिरिक्तत्वात्तमादृत्य च बहुवचनम्, इत्येष सप्तविधोऽर्थस्तत्त्वम्। एते वा सप्तपदार्थास्तत्त्वमि(त्त्वानी)ति व्याचष्टे भाष्यकारः। वस्तुतस्तत्पदं स्वाभिमतमोक्षजनकसमूहालम्बनज्ञानविषये रूढम्, तादृशज्ञानविषयत्वमेव चैकत्वं भाक्तम्। तच्च बहुत्वावच्छेदेन पर्याप्तमिति, करितुरगरथाः सेनेतिवज्जीवादयस्तत्त्वमिति निरवद्यः सौत्रप्रयोग.। एवं च जीवादीनुद्दिश्य तत्त्वविधानात्, तत्त्वमुद्दिश्य पुनरावृत्त्या जीवादिविधानं कर्तव्यम्।

शाटेऽतिव्याप्तिः, तस्य स्वाभाविकपुद्गलक्रिययैव जन्यत्वादिति। निखिलकर्मावरणापगमेन सर्वथाऽऽविर्भूतेऽनन्तज्ञानदर्शनाद्यात्मके स्वस्वभावे आत्मनो नित्यावस्थानं मोक्ष इत्याह—**आत्मनः स्वभावसमवस्थानं मोक्ष** इति। तत्त्वशब्दो व्युत्पत्तिसिद्धोऽव्युत्पत्तिसिद्धश्चेति द्विधा, तत्राऽव्युत्पत्तिपक्षे परमार्थरूपार्थे रूढस्य तत्त्वशब्दस्य नादृतिरत्र कृता, किन्तु तस्य भावस्तत्त्वमिति यौगिकतत्त्वशब्दस्यैवेति व्युत्पत्तिपक्षमाश्रित्याह—**तत्त्वशब्दस्य व्युत्पत्तिपक्ष इत्यादि**। जैनमते सत्ता जीवादिभ्यः कथञ्चिद्भिन्नाऽभिन्ना च, न तु नैयायिकवद्भिन्नैव, तथा चाद्यपक्षे तस्याः प्रतिव्यक्ति यो भेदस्तमनङ्गीकृत्य तस्या एकरूपत्वात्, "इत्येष सप्तविधोऽर्थस्तत्त्वम्" इत्येकवचनम्। द्वितीयपक्षे च नैयायिकवत्तस्या अतिरिक्तत्वानभ्युपगमेन वस्तुधर्मतया तत्तद्व्यक्तिभेदापेक्षया भेदमङ्गीकृत्याऽनेकरूपत्वाद् "एते वा सप्त पदार्थास्तत्त्वानि" इति बहुवचनमित्याशयेनाह—**तस्याश्च प्रतिविशेषमित्यादि**। **तमादृत्येति**—भेदमङ्गीकृत्येत्यर्थः। **बहुत्वावच्छेदेनेति**—बहुत्वञ्चात्र लक्षणभेदज्ञानजनितपरस्परभेदज्ञानविषयत्वरूपं तदवच्छेदेनेत्यर्थः। **करितुरगरथाः सेनेतिवदित्यादि**—जीवादिषु जस्प्रत्ययार्थबहुत्वावच्छेदेन पर्याप्तिसम्बन्धेन सिप्रत्ययार्थस्य तादृशभाक्तैकत्वस्य क्लृप्तत्वात्, करितुरगरथाः सेनेत्यादाविव बहुवचनावरुद्ध एकवचनाऽवरुद्धस्योद्देश्यविधेयभावेनान्वयो नाऽनुपपन्न इति भावः। अथवा करितुरगरथाः सेनेत्यत्र सेनापदस्य करितुरगरथसमुदायत्वावच्छिन्नार्थकत्वेन तदेकदेशे समुदायत्वे सेनापदोत्तरैकवचनार्थैकत्वस्याऽन्वयः। करितुरगरथा इत्यत्र बहुवचनार्थबहुत्वावच्छेदेन करितुरगरथेषु समुदायत्वावच्छिन्नात्मकसेनाविधानं तद्वदत्राऽप्युक्तज्ञानविषयत्वमेव तत्त्वं तदेकदेशे ज्ञाने तत्त्वपदोत्तरैकवचनार्थस्यैकत्वस्याऽन्वयः, उक्तलक्षणतत्त्वस्य च बहुवचनार्थबहुत्वावच्छेदेन सप्तपदार्थेऽन्वय इति। अदग्धदहनन्यायेन यावदप्राप्तं तावद्विधेयम्, अत एव दध्ना जुहोतीत्यत्र दध्नः प्रत्यक्षसिद्धत्वात्करणत्वमात्रं विधेयमिति प्राहुर्मीमांसकाः। अतो जीवादिपदार्थाभिज्ञं जीवादिपदार्थानुद्दिश्य तत्त्वविधानं, सामान्यतस्तत्त्वाभिज्ञं तमुद्दिश्य च जीवादिपदार्थविधानमित्युद्देश्यविधेयभावे प्रतिपाद्यपुरुषापेक्षेत्यभिप्रायेणाह **एवञ्च जीवादीनुद्दिश्येत्यादि**। अथवा प्रश्नवाक्य उद्देश्यस्योत्तरवाक्ये विधेयत्वमिति नियमः, एवञ्च किं तत्त्वमिति प्रश्ने

तत्र च चरमपदे तावदन्यतमत्वेन लक्षणा कर्तव्या । एवं चोद्देश्यविधेयभावस्थले विधेयतावच्छेदकरूपेण विधेयस्य लाभादाधिक्यव्यवच्छेदोऽन्यतमत्वबलादेव च न्यूनत्वव्यवच्छेदो लभ्यत इति प्रतिपत्तव्यम् । अथ सप्तैव पदार्था इति कुत. पुण्यपापयोरप्यन्यत्र श्रवणात्, इति चेत्, तयोर्बन्ध एवान्तर्भावेन भेदेनानुपादानात्, यद्येवमाश्रवादयोऽपि पञ्च तर्हि जीवाजीवाभ्यां न भिद्यन्ते । तथा हि—आश्रवो

फलीभूतविभागज्ञानविषयाणां जीवादिपदार्थानामेवोद्देश्यत्वात्तेषामेवोत्तरवाक्ये विधेयत्वं, प्रश्नानुरोधेनैवोद्देश्यविधेयभावव्यवस्थितेरित्याह तत्त्वमुद्दिश्यपुनरावृत्त्येत्यादि । तत्त्वमुद्दिश्य जीवादिविधानपक्षे चरमपदस्य सूत्रक्रमप्रामाण्याद्मोक्षपदस्य जीवादिसप्तपदार्थान्यतमे निरूढलक्षणा, जीवादिपदञ्च तात्पर्यग्राहकं, तेन न प्रत्येकजीवादिपदार्थे तत्त्वस्वरूपताया अलाभ इत्याह—तत्र च चरमपद इत्यादि । विधेयतावच्छेदकरूपेणेति—विधेयतावच्छेदकरूपञ्चात्रान्यतमत्वं तद्रूपेणेत्यर्थः । विधेयस्य लाभादिति—विधेयस्य जीवाजीवादिसप्तपदार्थान्यतमस्य तत्त्वव्यापकत्वलाभादित्यर्थः । आधिक्यव्यवच्छेद इति—सप्तत्वसंख्याधिकसंख्याव्यवच्छेद इत्यर्थः । न्यूनत्वव्यवच्छेद इति सप्तत्वसंख्यान्यूनसंख्याव्यवच्छेद इत्यर्थः । ननु सामान्यधर्मव्याप्यपरस्परविरुद्धनानाधर्मेण धर्मिप्रतिपादनमेव विभागः, स च जीवाजीवेत्यादिसूत्रे न सम्भवति, आश्रवत्वादीनां जीवाजीवत्वविरुद्धत्वाभावादिति चेत्, मैवम्, सव्यभिचारादीनां दुष्टानां हेतूनां सङ्कीर्णानां परस्पराभिन्नानामपि विभागस्य प्रतिपादितत्वेनोपधेयसाङ्कर्यं न विभागव्याघातकं, किन्तूपाधिसाङ्कर्यमेव, उपधेयसाङ्कर्येऽप्युपाध्यसाङ्कर्यादिति वचनात्, तच्च प्रकृतेऽपि नास्ति, सव्यभिचारत्वबाधितत्वविरुद्धत्वादीनामिव जीवत्वाजीवत्वादीनामुपाधीनां स्वस्वासाधारणलक्षणलक्षितानां केषाञ्चित्साङ्कर्येऽपि परम्परया विभाजकतावच्छेदकत्वेनाभिमतानां जीवत्वत्वाजीवत्वत्वाश्रवत्वत्वादीनां परम्परोपाधीनां परस्परविरुद्धत्वेनाऽसाङ्कर्यात्तेन रूपेण जीवाजीवाश्रवादीनां विभागो नानुपपन्नः । दुष्टहेतुविभागकरणे सव्यभिचारत्वबाधितत्वादीनामेकस्मिन् कस्मिंश्चिद्धेतौ साङ्कर्येऽपि परम्परया सव्यभिचारत्वत्वबाधितत्वत्वादीनामसाङ्कर्यात्तत्तद्रूपेण दुष्टहेतुविभागो भवति तद्वत्प्रकृतेऽपीति भावः । अन्यत्रेति—"जीवाजीवा पुण्णं, पावासवसंवरो य निज्जरणा । बंधो मुक्खो य तहा, नव तत्ता हुंति नायव्वा ॥ १ ॥" इति नवतत्त्वप्रकरणादावित्यर्थः । न हि कस्यापि पुंसो मिथ्यात्वमोहनीयादिकर्मोदयं विना मिथ्यादर्शनादिपरिणामलक्षणभावाश्रव इति तज्जनकस्योदितमिथ्यात्वमोहनीयकर्मादिपुद्गललक्षणद्रव्याश्रवस्याऽजीवपरिणामत्वात्परिणामपरिणामिनोश्चाभेदादजीवे, उदितमिथ्यात्वमोहनीयादिकर्मजन्यातत्त्वतत्त्वबुद्ध्यात्मकविपरीतपरिणामलक्षणभावाश्रवस्य च जीवधर्मत्वेन जीवेऽन्तर्भाव इत्यभिप्रेत्याह—आश्रवो मिथ्यादर्शनादिपरिणाम इति । अत्र भावनिमित्तकारणत्वं द्रव्यत्वमिति द्रव्यलक्षणमुपगम्य मिथ्यादर्शनादिपरिणामलक्षणात्मीयभावम्प्रति निमित्तविधया जनकत्वादुदितमिथ्यात्वमोहनीयपुद्गला द्रव्याश्रव इति तज्जन्यमिथ्याद-

मिथ्यादर्शनादिपरिणामो द्रव्यभावविवेचनेन जीवाजीवयोः परिणाम एव। बन्धस्तु कर्मपुद्गलजीवसंयोगः, सोऽपि निरन्तरोत्पाद उभयस्वभाव एव। संवरोऽपि कर्मपुद्गलादानच्छेदभवहेतुक्रियात्यागलक्षणो जीवाजीवात्मक एव। निर्जरापि निर्जर्यनिर्जरकोभयस्वभावैव। मोक्षोऽपि सर्वनिर्जरारूपः सुतरां तथा। आत्मनिष्ठफलजनकत्वे चाश्रवादयः सन्त्वात्मधर्मा एव। तथा च जीवा अजीवाश्चेत्युभे एव तत्त्वे इति चेत्, सत्यम्। मोक्षार्थिनः खल्वत्र तत्त्वज्ञाने प्रवर्तयितव्याः, तत्र च हेयस्य संसारस्याश्रवबन्धलक्षणं कारणद्वयम्, उपादेयस्य च मोक्षस्य च संवरनिर्जरालक्षणम्, मोक्षश्च परमप्रयोजनतयाऽवश्यवक्तव्य इति मोक्षार्थितयाऽवश्यवक्तव्याना सप्तानामपि तत्त्वानामुपादानस्य न्याय्यत्वात्, न च कारणजिज्ञासया एकमेव वक्तव्यमन्यथा बहून्यपि वक्तव्यानि स्युरित्यपि कुचोद्यमाशङ्कनीयम्। एककारणे ज्ञाते कारणान्तरजिज्ञासाया औत्सर्गिकत्वात्, न च परतोऽपि तदनिवृत्तिर्मध्यमरुचेस्तावतैव चरितार्थत्वादिति दिक् ॥ ४ ॥

---

र्शनादिपरिणामो भावाश्रव इत्युक्तम्। अग्रे तु भावसमवायिकारणत्वं द्रव्यत्वमिति द्रव्यलक्षणमभिप्रेत्य द्रव्याश्रव आत्मसमवेताः पुद्गला अनुदिता रागादिपरिणामेन। भावाश्रवस्तु त एवोदिता इत्युक्तमित्यनयोर्न विरोध इति सुधिया भाव्यम्। **बन्धस्तु कर्मपुद्गलजीवसंयोग इति**—बन्धो नामाश्रवात्तकर्मण आत्मप्रदेशैस्सह वह्नितप्तायोगोलकन्यायेनैकलोलीभावेन प्रकृत्यादिविशेषप्रकारात्मकः संयोग इत्यर्थः। **उभयस्वभाव एवेति**—प्रतियोग्यनुयोग्युभयात्मैवेत्यर्थः। "यः कर्मपुद्गलादानच्छेदः स द्रव्यसंवरः। भवहेतुक्रियात्यागः, स पुनर्भावसंवरः ॥ १ ॥" इति पारमर्षवचनमनुसृत्याह—**कर्मपुद्गलादानच्छेदभवहेतुक्रियात्यागलक्षण इति**। विपाकात्तपसो वा कर्मणां यः परिशाटस्तल्लक्षणा निर्जराऽपि पार्थक्यापन्नजीवपुद्गलोभयस्वभावैवेत्याह—**निर्जरापीति**। **तथेति**—निर्जर्यनिर्जरकोभयस्वभाव एवेत्यर्थः। यद्वा मोक्षस्य समस्तकर्मनिर्मुक्तशुद्धात्मलक्षणत्वेन सोऽप्यात्मैवेत्यप्यत्र ज्ञेयम्। हेयोपादेययोस्संसारमोक्षयोः कारणजिज्ञासयैककारणाभिधानेनैव जिज्ञासापरिपूर्तेः किं कारणद्वयाभिधानेनेत्याशङ्कते—**न च कारणजिज्ञासयेति**—न चेत्यस्याशङ्कनीयमित्यनेनान्वयः। निषेधे हेतुमाह—**एककारण इति**—संसारस्य मोक्षस्य चैकस्मिन् कारणे ज्ञाते किं संसारस्य मोक्षस्य च कारणान्तरमिति जिज्ञासायास्स्वत उत्पद्यमानत्वेन तन्निवृत्तये संसारकारणान्तरं मुक्तिकारणान्तरञ्च वक्तव्यमेवेत्यर्थः। **मध्यमरुचेस्तावतैव चरितार्थत्वादिति** कारणद्वयज्ञानमात्रेण विषयनिष्पत्त्या मध्यमप्रमातुर्जिज्ञासापरिपूर्तेरित्यर्थः, ननु तथापि मोक्षस्योपादेयतयेव हेयतया संसारस्यापि पृथगभिधानं कार्यं स्यादित्यष्टतत्त्वापत्तिरिति चेत्, न, अनागतजन्माद्यभावरूपसंसारहानेः स्वातन्त्र्येणाऽसाध्यतया संसारहेतूच्छेदे पुरुषव्यापाराभ्युपगमेन तद्धेतोरेवाऽभिधानात्, संसारहानेर्मोक्षस्वरूप एवानुप्रवेशात्, मोक्षोपस्थितौ संसारस्य प्रतिपक्षत्वेनाऽवश्योपस्थितिकतया पृथगभिधानस्याऽनतिप्रयोजनत्वाच्चेति सम्प्रदायपरिष्कारः। वस्तुतस्संवरनिर्जरयोर्मोक्षे दण्डचक्रादिन्यायेन हेतुता, न तु तृणारणिमणिन्यायेनेति बोधयितुं

नन्वेते सप्त पदार्थास्तत्त्वानीत्युक्तम्, पदार्थत्वं च पदशक्तिविषयत्वं, तथा च जीवादिपदशक्तिग्रह एव कथमिष्यत इत्यत आह

## सूत्रम् नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ १ ॥ ५ ॥

(यशो० टीका०) तृतीयार्थे तसिः, एवं च नामस्थापनाद्रव्यभावैस्तेषां जीवादीनां न्यासः स्वस्वपद-

द्वयाभिधानम्, बन्धपदेन संसारस्याश्रवस्य च तत्कारणतयाऽभिधानमित्ययं संसारनिवृत्ति-मोक्षप्रवृत्तिप्रगुणः प्रवर्त्तक इत्यपि युक्तं पश्यामः, न चैवं सम्प्रदायातिक्रमः, अनेकनयसमूहात्मकत्वाद्भगवत्प्रवचनस्येति सूक्ष्ममीक्षणीयमिति तातपादश्रीयशोविजयोपाध्याया अनेकान्ततत्त्वव्यवस्थायां प्राहुरिति । तदेवं जीवाजीवादीनि सप्तैव तत्त्वानीति व्यवस्थितम् । यदि चाभ्युदयहेतुतया पुण्यस्य तत्प्रतिपक्षतया पापस्यापि च पृथग् निरूपणमावश्यकम्, तदाऽभ्युदयनिःश्रेयसहेतुप्रवृत्त्यनुकूलज्ञानविषयतया जीवाजीवादयो नवैव पदार्था निरूपणीया इति परममुनिसिद्धान्तसरणिः । तदेवं चतुर्थसूत्रटीका परिपूर्त्तिं गतेति ।

पञ्चमसूत्रावतरणिकामाह–**नन्वेते** इत्यादिना । **पदशक्तिविषयत्वमिति**–वाच्यवाचकभावसम्बन्धरूपशक्तिग्रहद्वारा पदजन्यबोधविशेष्यत्वमित्यर्थः । ननु **नामस्थापनाद्रव्यभावतस्तन्न्यास इति** सूत्रमयुक्तमुक्तम् । "जत्थ य जं जाणिज्जा, निक्खेवं निक्खिवे णिरवसेसं" इत्यनेन यथापरिज्ञानं निक्षेपान्तरकल्पनाया अप्यनुमतत्वेन तमाश्रित्य–" णामं ठवणा दविए, खित्ते काले तहेव भावे अ । एसो खलु निक्खेवो, दसगस्स उ छव्विहो होइ ॥ १ ॥ इति । णामं ठवणा दविए, माउ य पयसंगहे क्कए चेव । पज्जव भावे य तहा, सत्तेए एक्कगा होंति ॥ २ ॥ इति च । नामं ठवणा दविए, ओहे भवे तब्भवे य भोगे य । संजम जस कित्ती जीवियं च भण्णाती दसहा ॥ ३ ॥ इति च । नामं ठवणा दविए, खेत्तं द्धा उड्ढ उवरती वसही । संजमप्पग्गहे जोहे, अचल गणण संधणा भावे ॥ ४ ॥ " इति च तत्तत्सूत्र उक्तत्वान्निक्षेपाणां षड्विधत्वं सप्तविधत्वं दशविधत्वं पञ्चदशविधत्वादिकञ्चेति नामादिचतुष्टयाधिकनिक्षेपसम्भवादिति चेत्, उच्यते, यद्यपि सम्भवन्ति कतिपयाश्रितपदार्थेऽधिका अपि निक्षेपास्तथापि न ते सर्ववस्तुषु नियताः, नियतास्तु नामस्थापनाद्रव्यभावनिक्षेपा एव, तेषामेव वस्तुत्वव्यापकत्वात्, न हि किमपि तद्वस्त्वस्ति यन्नामादिचतुष्टयव्यभिचारि स्यात् । उक्तञ्च भाष्ये–" नामादि भेदसद्दत्थ–बुद्धिपरिणामभावओ णिययं । जं वत्थु अत्थि लोए, चउपज्जायं तयं सव्वं ॥ १ ॥ " इति । नियतनिक्षेपाभिप्रायेणैतत्सूत्रं तातपादोमास्वातिभगवता सिद्धान्तोपनिषद्वेदिना प्रणायीति नायुक्तमुक्तमिति । एतत्तत्त्वमग्रे स्पष्टीभविष्यति । यत्र निक्षेपचतुष्टय एव तत्त्वविद्भिस्तदधिकनिक्षेपान्तर्भावः कर्त्तव्यः । उक्तञ्च–" चतुष्काभ्यधिकस्येह, न्यासो योऽन्यस्य दर्श्यते । एतदन्तर्गतः सोऽपि, ज्ञातव्यो धीधनान्वितैः ॥ १ ॥ " इति । **जीवपदशक्तिग्रह इति**–ननु सर्वे शब्दास्सर्वार्थवाचका इत्यभ्युपगमाज्जिनानुगैस्सर्ववस्तु-

वाचकस्वभावत्वेन शब्दानां विचित्रार्थबोधानुकूलशक्तिमत्त्वात्, अर्थानाञ्चाऽनेकशब्दवाच्यत्व-स्वभावेनाऽनेकप्रतीतिनिबन्धनानेकशक्तिमत्त्वाजीवपदशक्तिर्जीव इवाऽजीवादावपि, अजीवपदश-क्तिरजीव इव जीवादावपि, एवमन्यपदादावपि ज्ञेयम्, तथा च सर्वेषां पदानां सर्वार्थवाचकत्वेन सर्वार्थानाञ्च सर्वशब्दवाच्यत्वेन जीवादिपदार्थेषु जीवादिपदानां नियताः शक्तयो नेति जीव-पदाज्जीव एव शक्तिग्रहाज्जीवस्यैव बोध इत्यस्याजीवपदादजीव एव शक्तिग्रहादजीवस्यैव बोध इत्यस्य चाभावात्कथं नियतशक्त्युपपादनेन स्वस्वपदशक्तिग्रहो जैनानां सङ्गच्छते इति चेत्, सत्यम्, तथापि शब्दार्थवाच्यवाचकभावसम्बन्धरूपशक्तिग्रहो हि न तदावरणीयकर्मक्षयोपशमं विना, उक्तक्षयोपशमोऽपि न सङ्केतग्रहं विनेति सङ्केतस्याऽभिव्यञ्जकत्वेन यस्य पुरुषस्य यस्मिन्नर्थे सङ्केतग्रहस्तदपेक्ष्य यदर्थशक्तिग्रहाद्यस्य यस्याऽर्थस्य येन येन पदेन बोधस्स एव तत्तत्पदवाच्य इति नियमात्तत्तत्पदस्य सङ्केतसहकृतशक्तेस्तत्तदर्थ एव सत्त्वेन तथा तत्रैव तद्ग्रहभावात्स्व-स्वपदशक्तिग्रहो भवत्येव, नियतसङ्केतसहकृतस्य शब्दस्य सर्वार्थान् प्रत्यविशिष्टत्वासिद्धेर्जीवादि-शब्दादजीवादिबोधप्रसङ्गाभावात्। न चैवं शक्तिव्यञ्जकत्वेनाऽभिमतो यस्सङ्केतस्तद्ग्रहस्यैव शाब्दबोधहेतुत्वमस्तु किमन्तर्गडुशक्त्येति वाच्यम्, पदव्युत्पत्तौ सङ्केतमननुसृत्याऽपि वाच्य-ताज्ञानेन शाब्दबोधोदयेन व्यभिचारात्। नन्वेवं सङ्केतस्य शब्दार्थशक्तिग्रहानुकूलक्षयोपशम-निमित्तत्वे क्षीणाशेषज्ञानावरणकर्मणां योगिनां वाचकप्रयोगार्थं सङ्केतप्रतिसन्धानान्वयव्यति-रेकानुविधानं न स्यादिति चेत्, नैवम्, इष्टत्वात्, तेषां सङ्केतापेक्षां विनाऽपि स्वयमेव वाच्य-वाचकभावं ज्ञात्वा तत्तच्छब्दप्रयोगादिति। न चैवं तत्र व्यतिरेकव्यभिचारः, क्षायोपशमिकभाव-स्थल एवोक्तहेतुहेतुमद्भावाभ्युपगमात्। न चैवं त्वन्मते गङ्गापदस्यापि गङ्गातीररूपशक्यार्थत्वेन शक्त्यैव निर्वाहे शक्यसम्बन्धलक्षणलक्षणोच्छेदप्रसङ्ग इति वाच्यम्, गङ्गापदस्य गङ्गाप्रवाहरूप-शक्यार्थे सङ्केतवद्गङ्गातीररूपार्थान्तरेऽपि शक्तिग्रहनियामकतया सङ्केतान्तराऽऽवश्यकतया तत्रैव तद्व्यपदेशाद्, वस्तुतो लक्षणा नास्त्येव, युक्तञ्चैतत्, शाब्दबोधे शक्तिलक्षणान्यतरत्वेन प्रयोजक-त्वापेक्षया शक्तित्वेनैव तत्त्वौचित्यादित्युक्तं शास्त्रवार्तासमुच्चयटीकायां पूज्यपादश्रीयशोविजयो-पाध्यायैरिति। वाच्यवाचकभावसम्बन्धरूपशक्तिरपि न मीमांसकानामिव जैनानां धर्मितो भिन्नैव, किन्तु धर्मधर्मिणोः कथञ्चिदऽभेदात्कथञ्चिदभिन्नाऽपि, एतेन तत्तत्पदजन्यबोधविषयत्वनिष्ठ-प्रकारतानिरूपितेश्वरेच्छानिरूपितविशेष्यतावत्त्वं तादृशप्रकारतानिरूपितविशेष्यतासम्बन्धेन तदि-च्छावत्त्वं वा तत्तत्पदवाच्यत्वमिति नैयायिकमतमप्यपास्तम्, लक्ष्यार्थादावतिप्रसक्तत्वात्, ईश्वरमनङ्गीकुर्वतामपि वाच्यत्वव्यवहाराल्लाघवाच्च तत्पदबोध्यत्वरूपस्यार्थधर्मस्यैव तत्त्वादिति। नन्वनुगतधर्मावच्छिन्ना शक्तिरेका भिन्नभिन्नधर्मावच्छिन्ना च शक्तिर्भिन्ना, तथा चाऽत्र निक्षे-पचतुष्टयानुगतधर्माभावान्नैका शक्तिश्चतुर्षु, किन्तु नामेन्द्रत्वस्य स्थापनेन्द्रत्वस्य द्रव्येन्द्रत्व-स्य भावेन्द्रत्वस्य च प्रवृत्तिनिमित्तस्य भेदाद्भिन्नैव, तथा च शक्यतावच्छेदकभेदेनैकस्य शब्दस्याऽनेकशक्तिप्रदर्शकं वचनं निक्षेप इति निक्षेपसामान्यलक्षणं पर्यवसितम्, तच्च

नामस्थापनाद्रव्यभावेन्द्रा इन्द्रपदवाच्या इति निक्षेपसामान्यवचने वर्तत इति लक्षणसामान्यसम्भवेऽपि नामादिप्रत्येकनिक्षेपवचने न च वर्तत इति नोक्तलक्षणस्य सम्भवः, नामेन्द्र इन्द्रपदवाच्य इति नामनिक्षेपवचनस्य स्थापनेन्द्र इन्द्रपदवाच्य इति स्थापनानिक्षेपवचनस्य च द्रव्येन्द्र इन्द्रपदवाच्य इति द्रव्यनिक्षेपवचनस्य च भावेन्द्र इन्द्रपदवाच्य इति भावनिक्षेपवचनस्य च प्रत्येकं नामेन्द्रत्वस्थापनेन्द्रत्वादिप्रतिनियतधर्मावच्छिन्ननिरूपितप्रतिनियतशक्तिबोधकत्वेनैकपदस्याऽनेकशक्तिबोधकत्वाभावादिति चेत्, मैवम्, शक्यतावच्छेदकभेदे नैकस्य शब्दस्याऽनेकशक्तिप्रदर्शकवचनविषयताव्यापकविषयताकवचनत्वस्य निक्षेपलक्षणत्वे दोषाभावात्, अत्र चोत्तरवचने किञ्चिद्धर्मावच्छिन्ननिरूपितशक्तिप्रतिपादकत्वं विशेषणं देयम्, तेन नामघट इत्यस्य घटपदस्येत्यस्य वाच्य इत्यादेश्च विशकलितस्य न निक्षेपत्वप्रसङ्ग इति । अथवा नामनिक्षेपादयः स्वरूपेणाऽपि निरुक्तलक्षणयोगिनो भवन्त्येव, तथाहि—नामेन्द्र इन्द्रपदवाच्य इति नामनिक्षेपे नामेन्द्रत्वस्य प्रवृत्तिनिमित्तत्वं प्रतीयेत, तच्च नैकम्, यत इन्द्र इति इकारोत्तरनकारोत्तरदकारोत्तररकारोत्तरात्वरूपानुपूर्वीविशिष्टं नामस्वरूपं नामेन्द्रो, गोपालदारकोऽपि चेन्द्रनाम्ना सङ्केतितस्तथा, तयोश्च नैकासाधारणधर्मयोग इति शक्यतावच्छेदकभेद आवश्यक इति । स्थापनायास्सद्भूतासद्भूतभेदेन द्विविधत्वात् सद्भूतेन्द्रस्थापनागतो धर्मोऽसद्भूतेन्द्रस्थापनागतश्च धर्मो भिन्न एवेति तल्लक्षणशक्यतावच्छेदकभेदाद्भवत्येव सामान्यलक्षणसङ्गतिः, यो जीवो मनुष्यस्सन्निन्द्रोऽभूद् भविष्यति चेति भूतभविष्यदिन्द्रपर्यायकारणत्वाद् यथा द्रव्येन्द्रस्तथेन्द्रपदार्थज्ञस्तत्राऽनुपयुक्तोऽपि द्रव्येन्द्रः, तथैव योऽपि इन्द्रस्य गुणान् परस्मै परिकथयति, परमनुपयुक्तः सोऽपि द्रव्येन्द्रः । "अणुवओगो दव्वं" इति वचनात्, एतदभिप्रायेणैव बृहत्कल्पभाष्येऽप्युक्तम्—"दव्वे पुण तल्लद्धी, जस्सातीता भविस्सते वा वि । जो वा वि अणुवउत्ता, इंदस्स गुणे परिकहइ ॥१४॥" इति, तथेन्द्रस्योत्तरोत्तरभावेन्द्रपर्यायकारणत्वात्पूर्वपूर्वो द्रव्येन्द्रस्तदनुगामीन्द्रव्यक्तिरपि द्रव्येन्द्रः, द्रवति तांस्तान् पर्यायान् गच्छतीति द्रव्यमिति व्युत्पत्त्या पर्यायपरम्परानुगता व्यक्तिर्द्रव्यम्, तदेवोर्ध्वतासामान्यमित्यूर्ध्वतासामान्यरूपत्वेनानुगामिन्या द्रव्यव्यक्तेर्द्रव्येन्द्रत्वात् । तत्र सर्वत्र नैकं द्रव्येन्द्रत्वमित्यत्राऽपि प्रवृत्तिनिमित्तभेदादुक्तसामान्यलक्षणसङ्गतिः, भावेन्द्रोऽप्यागमतो नोआगमत इति द्विविधः, तत्राऽऽगमत इन्द्रपदार्थज्ञस्तत्रोपयुक्तो भावेन्द्रः, उपयोगो भावनिक्षेप इति वचनात् । "जहिंदनाणोवओगओ तम्मयत्तणं होइ" ॥ ३२५ ॥ इति महाभाष्यवचनाच्च । तत्र तन्मयत्वमित्यस्य परमैश्वर्याधिमात्रेऽपीन्द्रमयत्वं भवति, भावेन्द्र एवायं व्यपदिश्यत इत्यर्थः । नोआगमतश्च "इदि परमैश्वर्ये" इति वचनात् परमैश्वर्यादिगुणगणालङ्कृतः पुरन्दरो भावेन्द्रः, परमैश्वर्यवान् साक्षादिन्द्रनामगोत्राणि कर्माणि वेदयन् इन्द्रपदवाच्यो भावेन्द्र इति भावः । न च तदुभयसाधारणं भावेन्द्रत्वमेकं प्रवृत्तिनिमित्तं सम्भवतीति प्रवृत्तिनिमित्तभेदादत्राऽप्युक्तसामान्यलक्षणसङ्गतिरिति । न च घटपटादिवस्तुमात्रस्य निक्षेपचतुष्टयरूपत्वे तद्वाचकघटपटादिशब्दस्य नामघटस्यो-

शक्तिग्रहः कार्य इत्यर्थः। 'व्यक्त्याकृतिजातयस्तु पदार्थाः' इति तावन्नैयायिकादिभिरपि प्रतिपन्नमेव। तत्र 'व्यक्ति'र्द्रव्यम्, 'आकृतिः' स्थापना, 'जाति'र्भाव इति निक्षेपत्रयमागतम्। नाम च वैयाकरणैः पदार्थ इष्यते। यद्वा 'सर्वे भावाः स्वेनार्थेन भवन्ति स तेषां भाव' इति वार्तिकोक्तेः, 'भवन्ति'वाचक-

पनाघटादिनामपटस्थापनापटादिनिक्षेपचतुष्टयार्थकत्वेनैकार्थकस्यापि तस्य नानार्थत्वापत्तिरित्येकार्थकशब्दोच्छेदप्रसक्तिरिति वाच्यम्, नामस्थापनाद्रव्यनिक्षेपाणामप्रस्तुतार्थनिराकरणमात्रफलकतया व्यवहारे गौणतया भावनिक्षेपस्यैव च मुख्यत्वेन भावघटत्वभावपटत्वादेरेकार्थकसामान्यस्यानुगतस्य प्रवृत्तिनिमित्तस्यैकत्वेन तदवच्छिन्नार्थकतया घटपटादिशब्दस्याऽप्येकार्थकत्वेन व्यवहारादिति। अष्टसहस्र्यां पूज्यपादश्रीयशोविजयोपाध्यायैस्तु "तथा च गोपदशक्यतावच्छेदकं निक्षेपचतुष्टयानुगतगोत्वमेकं तद्व्याप्यानि च भावगोत्वादीनि नानेति निष्कर्ष इत्युक्तम्" तथा च गोपदशक्यतावच्छेदकस्य गोत्वस्य नामादिचतुर्निक्षेपेष्वेकत्वेन तदवच्छिन्नशक्तिकं गोपदमेकार्थकमेव, एवं घटपटादिसर्वपदेष्वेकार्थकत्वं ज्ञेयम्, तदेवं शक्यतावच्छेदकीभूतेनैकधर्मेणैक्यापन्ने निक्षेपचतुष्टये तद्रूपेणैकपदस्यैकशक्तिप्रदर्शकं वचनं निक्षेप इति निक्षेपसामान्यलक्षणं सिद्धम्। तादृशं वचनञ्च गोपदं नाम स्थापना द्रव्य—भावभेदेन चतुर्षु गोषु गोत्वेन शक्तमित्याकारकम्, एवमिन्द्रपदं नामेन्द्रस्थापनेन्द्रद्रव्येन्द्रभावेन्द्रेष्विन्द्रत्वेन शक्तमित्याकारकम्, एवं घटपदपटपदादिष्वपि ज्ञेयम्। गोपदनामनिक्षेपस्य गोपदस्थापनानिक्षेपस्य गोपदद्रव्यनिक्षेपस्य गोपदभावनिक्षेपस्य च पृथग्लक्षणे कर्त्तव्ये तु नामगोपदशक्यतावच्छेदकं नामगोत्वं गोत्वव्याप्यं सर्वेषु नामात्मकेषु गोष्वेकम्, तद्भिन्नं स्थापनागोपदशक्यतावच्छेदकं स्थापनागोत्वं गोत्वव्याप्यं सर्वेषु स्थापनात्मकेषु गोष्वेकम्, द्रव्यात्मकेषु गोषु द्रव्यगोत्वमेकं गोत्वव्याप्यम्, भावात्मकेषु गोषु भावगोत्वमेकं गोत्वव्याप्यमिति मिथो भिन्नानि गोत्वव्याप्यानि नामगोत्वादीन्यभ्युपगतानीत्यतो नामगोत्वेनैकशक्यतावच्छेदकेन नामात्मकेषु गोष्वेकशक्तिप्रदर्शकं वचनं गोपदनामनिक्षेपः, स्थापनागोत्वेनैकशक्यतावच्छेदकेन स्थापनात्मकेषु गोष्वेकशक्तिप्रदर्शकं वचनं गोपदस्थापनानिक्षेपः, द्रव्यगोत्वेनैकशक्यतावच्छेदकेन द्रव्यात्मकेषु गोष्वेकशक्तिप्रदर्शकं वचनं गोपदद्रव्यनिक्षेपः, भावगोत्वेन भावगोगतासाधारणधर्मलक्षणप्रतिनियतशक्यतावच्छेदकेन भावात्मकेषु गोष्वेकशक्तिप्रदर्शकं वचनं गोपदभावनिक्षेप इति लक्षणं कर्त्तव्यमिति दिक्। नाम च वैयाकरणैः पदार्थ इष्यत इति—घटमुच्चारयतीत्यादावर्थस्योच्चारणाऽसम्भवेन घटशब्दस्य घटपदार्थत्वमिष्यते, घटार्थकघटशब्दे घटपदस्य लक्षणां विनाऽपि शक्त्यैव निर्वाहे तत्र लक्षणायां मानाभावात्, "न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं, सर्वं शब्देन भासते" इति हरिकारिकया सर्वत्र शब्दस्य पदार्थता सिध्यति, अत एव स्वार्थद्रव्यलिङ्गसङ्ख्याकारकरूपपञ्चप्रातिपदिकार्थतोऽपरं नामाऽपि षष्ठः प्रातिपदिकार्थ इति स्वीकृतं शाब्दिकैरिति सङ्क्षेपः। घट इति नामाऽपि घट एव, अर्थाभिधानप्रत्ययास्तुल्यनामधेया इत्यभिधानात्, वाच्यवाचकयोर-

त्वेन प्रवर्तन्त इति 'भावाः' शब्दाः । स्वेन स्वरूपेणार्थेन भवन्ति प्रवर्तन्तेऽतः स तेषां भावः प्रवृत्तिनिमित्तमिति तदर्थः । युक्तं चैतत् हरिहरनलेक्ष्वाकुयुधिष्ठिरवशिष्ठादिशब्देभ्यस्तत्तत्पदवाच्यः कश्चिदासीदिति शब्दप्रकारकबोधस्य सर्वानुभवसिद्धत्वात्; अन्यथा वनौपधिवर्गादेर्नागरिकान् प्रति शब्दस्याबोधकत्वापत्तेः, न च प्रमेयत्वादिना हरित्वादिविशिष्टे शक्तिग्रहाद्धर्मादिपदात्प्रमेयत्वांशे उद्बोधकविरहे शुद्धहरित्वादिनोपस्थितेस्तथा शाब्दबोधोपपत्तिरिति वाच्यम् । घटादिपदेऽप्येवं कल्पनया 'सर्वे सर्वार्थवाचकाः' इति नये प्रवेशापत्तेः, प्रसिद्धाप्रसिद्धपदविभागानुपपत्तेश्च, अतः सर्वनयसङ्ग्राहिणि भगवत्प्रवचने जघन्यतोऽपि निक्षेपचतुष्टयमभिमतम्; उत्कर्षतस्तु यस्मात्पदात् यावन्तोऽर्थाः सम्प्रदायाविरोधेनोपतिष्ठन्ते तावत्सु निक्षेपप्रवृत्तिरिष्टैव, शक्तिसङ्कोचविकासयोस्तत्समासव्यासबीजत्वात् । न चैवं लक्षणोच्छेदो, यदंशे

स्य तभेदे प्रतिनियतपदशक्त्यनुपपत्तेश्चेति । **स्वेन स्वरूपेणार्थेनेति**—शब्दस्वरूपात्मकेनार्थेनेत्यर्थः । **सः** शब्दस्वरूपात्मार्थः । **शब्दप्रकारकबोधस्येति**—वाच्यत्वसम्बन्धेनेति शेषः । **सर्वानुभवसिद्धत्वादिति**—अदृष्टार्थकहरिहरादिपदेषु तत्तच्छब्दवाच्यत्वेनैव बोधस्य सर्वसिद्धत्वात्, हरित्वादिना शाब्दबोधस्योपपादयितुमशक्यत्वात्, अदृष्टहरिहरादीनां हरित्वादिप्रकारकबोधाभावेन विशेषणग्रहाभावात् हरित्वविशिष्टादौ शक्तिग्रहासम्भवेन पदजन्यहरित्वादिविशिष्टपदार्थोपस्थितेरभावादिति भावः । **एवं कल्पनया**—प्रमेयत्वोपलक्षितधर्मावच्छिन्ने शक्तिकल्पनया, अत्र प्रमेयत्वस्य प्रवृत्तिनिमित्तोपलक्षकस्यैक्येन घटादिपदस्य न नानार्थत्वापत्तिः, यथा तत्पदस्य बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्ने शक्तस्य प्रवृत्तिनिमित्तोपलक्षकस्य बुद्धिस्थत्वस्यैक्यान्न नानार्थत्वमिति यदि कोऽपि ब्रूयात्तदाऽप्याह—**प्रसिद्धाप्रसिद्धपदविभागानुपपत्तेश्चेति** । **जघन्यतोऽपि निक्षेपचतुष्टयमभिमतमिति**—जघन्यतोऽपि नामस्थापनाद्रव्यभावरूपचतुष्टयपर्यायात्मकमेव वस्तुमात्रम्; न हि किमपि वस्तु नामादिचतुष्टयपर्यायातिक्रमेण वर्तते । उक्तञ्च विशेषावश्यकभाष्ये—'नियर्यं जं वत्थुमत्थि लोए चउपज्जायं तयं सव्वं ।७३।' इति । **नियममिति**—नियतं निश्चितमित्यर्थः । चतुःपर्यायमिति चत्वारः पर्याया नामाकारद्रव्यभावलक्षणा यत्र तच्चतुष्पर्यायमित्यर्थः । "जत्थ य जं जाणिज्जा निक्खिवे निरवसेसं" इत्यागमोक्तिमनुसरन्नाह—**उत्कर्षतस्तु यस्मात्पदादित्यादि** । नन्वङ्गपदस्येव कस्यचित्पदस्य चतुर्षु निक्षेपेषु, दशपदस्येव कस्यचित्पदस्य षट्सु निक्षेपेषु, एकपदस्येव कस्यचित्पदस्य दशसु निक्षेपेषु, स्थानपदस्येव कस्यचित्पदस्य पञ्चदशसु निक्षेपेषु शक्तिरित्यत्र किं नियामकमित्याशङ्कायामाह—**शक्तिसङ्कोचविकासयोरिति**—यत्र तावन्नामस्थापनाद्रव्यक्षेत्रकालभवभावादिलक्षणा निक्षेपा न ज्ञायन्ते तत्रापि नामादिचतुष्टयेन वस्तु निक्षेपणीयमेव, सर्वव्यापकत्वात्तस्य, न ह्यस्ति किमपि वस्तु यन्नामादिचतुष्टयं व्यभिचरतीति यत्र यत्र निक्षेपचतुष्टयं तत्र तत्र तत्तत्पदशक्तिसङ्कोचः; यत्र यत्र च निक्षेपचतुष्टयाधिकनिक्षेपास्तत्र तत्र तत्तत्पदशक्तिविकास इति तल्लक्षणयोस्तयोरित्यर्थः । **तत्समासव्यासबीजत्वादिति**—निक्षेपचतुष्टयलक्षणतत्संक्षेपतदधिकनिक्षेपलक्षणविस्तारहेतुत्वादित्यर्थः । **केवलं विहितनिक्षेपविस्तारस्थले सा निरूढेति**—

शक्तिनियन्त्रणं तदंशस्य मुख्यत्वेन मुख्यार्थबाधादिस्थले तस्या अपि सावकाशत्वात्, केवलं विहितनिक्षेपान्तरस्थले सा निरूढा, अन्यत्र तु प्रयोजनवती, तच्छून्या च निषिद्धा इति विवेकः । ननु यदि निक्षेपचतुष्टयं शक्तिसङ्कोचेनोच्यते तर्हि ततोऽपि न्यूनं क्रियतामिति चेत्, सत्यम्, तदिदं नयार्पणया भविष्यति । न तु प्रमाणार्पणया, उभयनयावलम्बनेन तस्याः प्रवृत्तेः, तदिदमभिप्रेत्याह भाष्यकारः

( भा० ) एभिर्नामादिभिश्चतुर्भिरनुयोगद्वारैस्तेषां जीवादीनां तत्त्वानां न्यासो भवति । विस्तरेण लक्षणतो विधानतश्चाधिगमार्थं न्यासो निक्षेप इत्यर्थः । तद्यथा-नामजीवः स्थापनाजीवो द्रव्यजीवो भावजीव इति । नाम संज्ञा कर्म इत्यनर्थान्तरम् । चेतनावतोऽचेतनस्य वा द्रव्यस्य जीव इति नाम क्रियते स नामजीवः ॥ यः काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते जीव इति स स्थापनाजीवो देवताप्रतिकृतिवदिन्द्रो रुद्रः स्कन्दो विष्णुरिति ॥ द्रव्यजीव इति गुणपर्यायवियुक्तः प्रज्ञास्थापितोऽनादिपारिणामिकभावयुक्तो जीव उच्यते । अथवा शून्योऽयं भङ्गः । यस्य ह्यजीवस्य सतो भव्यं जीवत्वं स्यात् स द्रव्यजीवः स्यादनिष्टं चैतत् ॥ भावतो जीवा औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकभावयुक्ता उपयोगलक्षणाः संसारिणो मुक्ताश्च द्विविधा वक्ष्यन्ते ॥ एवमजीवादिषु सर्वेष्वनुगन्तव्यम् ॥ पर्यायान्तरेणापि नामद्रव्यं स्थापनाद्रव्यं द्रव्यद्रव्यं भावतो द्रव्यमिति । यस्य जीवस्य वा अजीवस्य वा नाम क्रियते द्रव्यमिति तन्नामद्रव्यम् । यत्काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते द्रव्यमिति तत्स्थापनाद्रव्यं, देवताप्रतिकृतिवदिन्द्रो रुद्रः स्कन्दो विष्णुरिति । द्रव्यद्रव्यं नाम गुणपर्यायवियुक्तं प्रज्ञास्थापितं धर्मादीनामन्यतमत् । केचिदप्याहुर्यद्द्रव्यतो द्रव्यं भवति तच्च पुद्गलद्रव्यमेवेति प्रत्येतव्यम् । अणवः स्कन्धाश्च सङ्घातभेदेभ्य उत्पद्यन्त इति वक्ष्यामः । भावतो द्रव्याणि धर्मादीनि सगुणपर्यायाणि प्राप्तिलक्षणानि वक्ष्यन्ते । आगमतश्च प्राभृतज्ञो द्रव्यमिति भव्यमाह । द्रव्यं च भव्ये । भव्यमिति प्राप्यमाह । भू प्राप्तावात्मनेपदी । तदेवं प्राप्यन्ते प्राप्नुवन्ति वा द्रव्याणि ॥ एवं सर्वेषामनादीनामादिमतां च जीवादीनां भावानां मोक्षान्तानां तत्त्वाधिगमार्थं न्यासः कार्य इति ॥

(यशो०टीका) एभिरित्यादि । एभिः सूत्रोक्तैः, नामादिभिरित्यादिशब्देनेयत्तानवधारणादाह-चतुर्भिः। उपलक्षणमेतत् सम्भवतामन्येषाम्, अनुयोगः सकलगणिपिटकार्थः, तस्य द्वाराण्यधिगमोपायाः, तत्वं च स्वजनकशक्तिग्रहविशेष्यत्वेन, तैरिति, धान्येन धनमितिवदभेदे तृतीया । तदभिन्नानां तेषां जीवादीनां तत्त्वानां न्यासो जीवादिपदशक्तिग्रहो भवति । नामादिप्रकारकशाब्दबोधार्थमयमुपायः, तदाह-विस्तरेणेत्यादि । नामादिचतुष्टयं लक्ष्येऽवतारयन्नाह-तद्यथा, नामजीव इत्यादि । नाम संज्ञा कर्मेत्यनर्थान्तरमिति, नाम संज्ञा कर्म चेत्येतत् पर्यायद्वयमित्यर्थः । चेतनावतोऽचेतनावतो वा यद् जीव इति नाम क्रियते स नामैव जीवो नामजीवः, चेतनावति तत् स्ववाच्यार्थयुक्तम्, अन्यत्र तु तदयुक्तमित्यर्थः । द्रव्यस्येति गुणक्रिययोरप्युपलक्षणम् । तयोरपि नामादिचतुष्टयप्रवृत्तेः । द्रव्यमेव गुणक्रियाकारेण परिणमते, नट इव नानावेषैर्न ततोऽन्ये ते स्त इत्यभिप्रायेण वा द्रव्यस्येत्यवधार्योक्तम् यत्र जीवपदाज्जीवनामप्रकारेणैव शाब्दबोधः, तत्र तदुपाधिकैव शक्तिस्तादृशसङ्केताभिव्यङ्ग्या स्वीकर्तव्या नामजीवत्वेन

थरिमन्नर्थेऽनादितात्पर्यं तत्र निरूढलक्षणा, यथा निपुणरूपार्थे कुशलशब्दस्य, तस्य कुशं लातीति व्युत्पत्त्या कुशछेदनरूपार्थे विहितत्वेन तत्रैव मुख्यत्वाच्छक्तिरपि तस्मिन्नेवाऽर्थे, लक्षणा त्वनादितात्पर्यमूलिका निपुणार्थे इति भावः, वस्तुतो लक्षणा नास्त्येव, एतच्च प्रागेव विवृतम् । तदिदं नयार्पणाया भविष्यतीति–द्रव्यास्तिकनय एव नामादिनिक्षेपत्रयमुररीकरोति, न पुनः पर्यायास्तिकनयः, भावनिक्षेपमात्रं तु पर्यायास्तिकनय एवाभ्युपगच्छति भावमात्रग्राहित्वात्तस्य, न पुनर्द्रव्यास्तिकनयः, तस्य द्रव्यमात्रग्राहित्वेन भावानवलम्बित्वादेव । उक्तञ्च सम्मतितर्के–"नामं ठवणा दविएत्ति एस दव्वट्ठियस्स निक्खेवो । भावो उ पज्जवट्ठियस्स, परूवणा एस परमत्थो । ६ ।" इति । प्रमाणार्पणयेति द्रव्यपर्यायद्वयात्मकं चार्थमनुभवद्विज्ञानं प्रमाणं तद्विवक्षयेत्यर्थः । तस्या इति प्रमाणार्पणाया इत्यर्थः । अत्रायम्भावः नन्वेवं तत्तन्नयेन निक्षेपाणां सङ्कोचविकासकरणे जैनप्रवचने कः परमार्थ इति चेत्, उच्यते, द्रव्यार्थिकपर्यायार्थिकनयद्वयेनैव प्रविभाग एव परमहृदयमागमस्य, एतदुभयनयाऽव्यतिरिक्तविषयत्वात् सर्वनयवादानां, न हि परमात्मागमपरमहृदयनयद्वयव्यतिरिक्तः कश्चिन्नयोऽस्ति, जैनप्रवचनस्य नयसमूहात्मकत्वेन नयविषयताव्यापकविषयताकप्रमाणेनैवानेकान्तगर्भतत्तद्वस्तुव्यवस्थोपपत्तेरुभयनयविषयावगाहिप्रमाणार्पणया वस्तुमात्रस्य निक्षेपचतुष्टयात्मकत्वेन सर्वस्मिन्नर्थे चत्वार एव निक्षेपा निक्षेप्तव्या न तु न्यूनाः, निक्षेपचतुष्टयस्य सार्वत्रिकत्वेन पदार्थत्वव्यापकत्वात्, तदधिकनिक्षेपाणां तद्विपरीतत्वाच्चतुर्निक्षेपानुयोग एव जैनप्रवचनमूलभूतः, एतदभिप्रेत्याह सम्मतितर्कीयपूर्वोक्तगाथायां "एस परमत्थो" इति ।

अन्यनिक्षेपसम्भवेन न्यूनतापरिहारायाह–उपलक्षणमेतदिति । सकलगणिपिटकार्थे इति गणो गच्छो गुणगणो वाऽस्यास्तीति गणी, भावाचार्यः, तस्य पिटकमिव पिटकं गणिपिटकं द्वादशाङ्गं सकलं च तद्गणिपिटकं च सकलगणिपिटकं तस्यार्थस्य तथेत्यर्थः । तत्त्वम् अधिगमोपायत्वम् । स्वजनकशक्तिग्रहविशेष्यत्वेनेति–स्वमधिगमस्तज्जनको यश्शक्तिप्रकारकग्रहो जीवपदशक्तिमजीवनामादिचतुष्टयमित्याकारकस्तद्विशेष्यत्वेनेत्यर्थः । पर्यवसितार्थमाह तदभिन्नानां तेषामिति । नामादिप्रकारकशाब्दबोधार्थमिति नामादिचतुष्टयवान् जीव इत्याकारको नामादिप्रकारकजीवविशेष्यको यश्शाब्दबोधस्तदर्थमित्यर्थः । चेतनावतोऽचेतनावतो वा यद् जीव इति नाम क्रियत इति । यस्मिन् सचेतनेऽचेतने वा द्रव्ये स्वेच्छया जीव इति या संज्ञा क्रियते इत्यर्थः । उक्तञ्च–"अत्ताभिप्पायकया, सन्ना चेयणमचेयणे वा वि" इति । जीवनामप्रकारेणेति स्ववाच्यत्वसंसर्गेणेति शेषः । तदुपाधिकैव शक्तिरिति–जीवनामविशिष्टेऽर्थे शक्तिरित्यर्थः । तादृशसङ्केताभिव्यञ्जयेति–जीवपदसङ्केताभिव्यञ्जयेत्यर्थः । ननु जीवनाम्ना यदि जीवनामविशिष्टोऽर्थ उच्यते तदा तस्य नामस्वरूपत्वाभावान्नामजीवत्वेन नामजीव इति व्यपदेशो न स्यादिति चेत्, मैवम्, नामनामवतोरभेदोपचारेण तथा व्यपदेश-

च तद्व्यपदेशः कर्तव्यो नामनामवतोरभेदोपचारात् । नाम्ना जीव इति पक्ष एव नामप्रकारको बोधः-प्रकृते तु वस्तूपाधिको नामविशेष्यक इति पर्यालोचने तु जीवपदस्य जीवनाम्न्येव शक्तिः स्वीकार्या, स नामजीव इत्यत्र च सशब्दो यो यदृच्छया चेतनावत्यचेतने वा नियुक्त इति व्याख्येयः, तृतीयासमास-गर्भनामजीवनिक्षेपविषयतावच्छेदकं तु जीवान्यत्वविशिष्टजीवनाम, तत्प्रकारेणैव ततः शाब्दबोधात् । अत एवोक्तमन्यत्र । " यद्वस्तुनोऽभिधानं, स्थितमन्यार्थे तदर्थनिरपेक्षम् । पर्यायानभिधेयं, च नाम यादृच्छिकं

दित्याह—नामनामवतोरभेदोपचारादिति—नाम्ना जीवो नामजीव इति तृतीयातत्पुरुषा-श्रयणपक्ष एव जीवपदस्य जीवनामविशिष्टेऽर्थे शक्तत्वेन जीवनाम्नः शक्यतावच्छेदकत्वात्तद्वि-शिष्टार्थस्य नामजीवत्वेन नामजीवात् जीवनामप्रकारको जीवनामविशिष्टार्थविशेष्यको बोधः, प्रकृते तु पूर्वं स्वीकृते नामैव जीवो नामजीव इति कर्मधारयसमासपक्षे तु नामनिक्षेपतो यस्य सचे-तनस्याऽचेतनस्य वा जीवेति नाम कृतं तद्वस्तुप्रकारको जीवनामविशेष्यक एव बोधो न तु पूर्वो-क्तबोध इति पर्यालोचने तु जीवपदस्य जीवनाम्न्येव शक्तिस्स्वीकार्येति नाम्नश्शक्यत्वमेवाऽत्र, न तु पूर्ववच्छक्यतावच्छेदकत्वमिति जीव इति यन्नाम तन्नामजीव इत्याशयेनाह नाम्ना जीव इति पक्ष एवेत्यादि । अत्र चेति स नामजीव इति भाष्ये चेत्यर्थः । तृतीयासमासग-र्भनामजीवनिक्षेपेत्यादि—नाम चासौ जीवश्च नामजीव इति कर्मधारये जीवपदस्य स्ववाचकत्व-संसर्गेण जीवात्मकार्थविशिष्टं नाम वाच्यम्, नाम्ना नाममात्रेण जीवो नामजीव इति तृतीया-तत्पुरुषे तु जीवपदस्य जीवान्यत्वविशिष्टजीवनामवान् वाच्यः, अत्र जीवपदव्युत्पत्तिसिद्धार्थरूपे जीवे नाम्ना जीवो नामजीव इति नामजीवनिक्षेपाविषयत्वमुरीकृत्य जीवान्यत्वविशेषणमुपात्त-मिति भावः । ननु कस्मिंश्चिदऽचेतनपदार्थे जीव इति नामकरणे स नाममात्रेण जीवो न वस्तुग-त्येति, तत्र जीवति प्राणान्धारयतीति जीव इति व्युत्पत्तिसिद्धद्रव्यभावप्राणधारणलक्षणजीवत्वा-भावेनाऽऽरोपितजीवत्वान्नाम्ना जीवो नामजीव इति निक्षेपस्य जीवान्यत्वविशिष्टजीवनामवान् विवक्षितोऽचेतनपदार्थो जीवपदवाच्य इत्यर्थस्सङ्गतिमङ्गति, परन्तु चेतनावति कस्मिंश्चिद् जीवे जीव इति नामकरणे जीवान्यत्वविशिष्टजीवनामवान् जीवपदवाच्य इति कथं सङ्घटत इति चेत्, नैव सङ्घटत इति सत्यमेतत्, तत्र नाम चासौ जीवश्च इति नामजीव इति विग्रहापेक्षयैव जीव इति नामकरणेन नामजीवनिक्षेपस्य साफल्यादिति । स्वसिद्धान्ताविरो-धपरिहारायात्र सम्मतिमुपदर्शयति "वस्तुनोऽभिधानं, स्थितमन्यार्थे तदर्थनिर-पेक्षम् । पर्यायानभिधेयं च नाम यादृच्छिकं च तथा ॥१॥" इति । "पज्जायाऽ-णभिधेयं, ठियमन्नत्थे तयत्थनिरवेक्खं । जाइच्छियं च नाम, जावदव्वं च पाएण ॥ २५ ॥" इत्युक्तं विशेषावश्यकेऽपि, तदर्थश्चायम् यद्वस्तुनो जीवादेर्नाम यथा यो गोपालदार-कादिर्जीवस्तस्येन्द्र इति नाम, तत्कथम्भूतमित्याह—स्थितमन्यार्थ इति । इन्द्र इति नाम्नो वाच्यत्वसम्बन्धेन परमार्थतो देवेन्द्रेऽवस्थानात्, अन्यस्मिन्निन्द्रादावर्थे परमैश्वर्यवति यथार्थत्वेन प्रसिद्धं सदन्यस्मिन् गोपालदारकादौ आधुनिकसङ्केतमात्रेण यदारोपितमित्यर्थः । अत एवाह—

तदर्थनिरपेक्षमिति, इन्द्रनाम्नो यः प्रधानार्थस्तन्निरपेक्षम्, इदि परमैश्वर्ये इति धात्वर्थस्य परमैश्वर्यस्य गोपालदारकेऽभावात्, पुनः किम्भूतं तदित्याह–पर्यायानभिधेयमिति–पर्यायैस्तत्त्वाचकशब्दान्तरैःशक्रपुरन्दरादिभिरवाच्यम्, एवम्भूतं नाम, इह नामनामवतोरभेदोपचाराद् गोपालदारकवस्त्वेव नामोच्यते। लक्षणान्तरमाह–यादृच्छिकमिति–अन्यार्थावाचकं सत्स्वकल्पनानिर्मितं तथाविधव्युत्पत्तिशून्यं डित्थडवित्थादिनाम नामपदशक्तिग्राह्यमित्यर्थः। अयम्भावः–अन्यार्थाऽवाचकमपि यदृच्छया केनचित्पुंसा काष्ठमयहस्त्यादौ डित्थोऽयं डवित्थोऽमित्येवं नाम क्रियते तदपि नामपदशक्तिग्राह्यमिति। नन्वन्यस्मिन्नर्थे यदारोपितं स्वप्रधानार्थनिरपेक्षं स्वपर्यायाऽवाच्यं यच्च यादृच्छिकं तदुभयानुगतं किं लक्षणमिति चेत्, उच्यते, कल्पस्वार्थभिन्नत्वे सति स्वपर्यायानभिधेयत्वे सति स्वव्युत्पत्तिनिमित्तानालिङ्गितेऽर्थे शब्दस्य वाच्यताबोधकं यद्वचनं यच्चाऽन्यार्थाऽवलक्षशक्तिकस्य यादृच्छिकस्य शब्दस्य क्वचिदप्यर्थे वाच्यताबोधकं वचनं तदन्यतरत्वं नामनिक्षेपत्वमित्यनुगतं नामनिक्षेपलक्षणम्, यथा गोपालदारकेऽयमिन्द्र इति, अत्रेन्द्रपदमिन्द्रपदवाच्यपरमिति लक्षणसङ्गतिः, एवं काष्ठमयहस्त्यादौ डित्थडवित्थादिशब्दवाच्यताबोधकं यद्वचनं तत्राऽप्युक्तलक्षणं वर्तत इति। पद्यस्थचशब्दादित्वरं यावद्द्रव्यभावि च नाम ग्राह्यम्, तत्र इत्वरं नामाल्पकालभावि, यथा किञ्चित्कालभावि देवदत्तादिनाम, देवदत्तादिशब्दवाच्यानां द्रव्याणां विद्यमानानामप्यपरापरनामपरावर्तनस्य लोके दर्शनादित्युक्तं विशेषावश्यकटीकायां। यावद्द्रव्यभावि नाम यावदेतद्वाच्यं द्रव्यमवतिष्ठते तावत्कालस्थायि, यथा मेरु–द्वीप समुद्रादिनाम। यत्तु "णामं आवकहियं होज्जा ठवणा इत्तरिआ वा होज्जा आवकहिया वा होज्जा" इत्यनुयोगद्वारसूत्रे "णामं आवकहियं" इति यत्प्रोक्तं तत् प्रतिनियतजनपदसंज्ञामाश्रित्यैव, यथोत्तराः कुरव इत्यादीति ध्येयम्, नामनामवतोरभेदोपचारान्नाम चाऽसाविन्द्रश्चेति विग्रहेण इन्द्रार्थशून्यत्वान्नाम्ना नाममात्रेणेन्द्रश्चेति विग्रहेण वा यथा गोपालदारको नामेन्द्रस्तथा नामैवेन्द्रो नामे- इत्यत इन्द्रस्यात्मीयं इन्द्र इति नामाऽपि इन्द्रेत्यक्षरात्मकं नामेन्द्रः, तत्रापि चेन्द्रपदस्य शक्तिर्नामनिक्षेपेण बोध्यतेऽतोऽपि च नामनिक्षेपः फलवान्, एतत् सङ्ग्रहाय च स्वस्मिन्नाम्नि स्वस्य नाम्नो वाच्यताबोधकञ्च यद्वचनमिति विशिष्योपादाय तदन्यतमत्वं निरुक्तनामलक्षणमुपादेयं तेन न तत्राऽव्याप्तिरिति भावः। अत्र पुस्तकपत्रचित्रादिलिखितस्य वस्त्वभिधानभूतेन्द्राऽऽदिवर्णावलीमात्रस्याप्यन्यत्र नामत्वेनोक्तत्वात्तदप्यत्रान्यतमत्वेन सङ्ग्राह्यमिति न तत्राप्यव्याप्तिः। यद्वा पूर्वोक्तश्लोकस्यैवानुयोगद्वारटीकामनुसृत्यैवमर्थः कर्त्तव्यः, यद्वस्तुन इन्द्रादेः 'अभिधानम्' इन्द्र इति नाम इन्द्र इति वर्णावलीमात्रं इन्द्रेत्यक्षरात्मकमिति यावत्, यत्तदोर्नित्यसम्बन्धात्तन्नामेति सण्टङ्कः। अथ प्रकारान्तरेण नाम्नो लक्षणमाह–स्थितमन्यार्थे तदर्थनिरपेक्षं पर्यायानभिधेयं चेति तदपि नाम। तदर्थश्च पूर्ववत्, तृतीयप्रकारेणापि लक्षणमाह–यादृच्छिकमिति। तथा च त्रिविधस्याप्युक्तनामनिक्षेपलक्षणस्योक्तान्यतमत्वेन सङ्ग्रहान्नाननुगमः, न वा कुत्राप्यव्याप्तिरिति।

च तथा ॥ १ ॥" इति । स्थापनाजीवं कथयति यः काष्ठेत्यादिना, यः स्थाप्यते जीव इति सम्बन्धः । पर्वेत्याह काष्ठं दारु, पुस्तं दुहितृकादि सूत्रचीवरादिविरचितम्, चित्रं चित्रकराद्यालिखितम्, कर्मशब्दो रचनावचनः प्रत्येकमभिसम्बध्यते । अक्षेति सामयिकसंज्ञा चन्दनकानाम्, तेषा

स्थापनानिक्षेपनिरूपणमाह स्थापनाजीवं कथयतीत्यादिना । यः स्थाप्यते जीव इति यः स्थाप्यते प्रतिनिधीयते जीवोऽयमिन्द्रोऽयमित्याद्यभिप्रायेणेति स स्थापनाजीवः स्थापनेन्द्र इत्यर्थः । काष्ठमिति–अस्य कर्मपदेन सहाऽभिसम्बन्धात्काष्ठकर्म काष्ठनिकुट्टितं रूपकमित्यर्थः, स्थापनालक्षणञ्चैवमामनन्ति महर्षयः, "यत्तु तदर्थवियुक्तं, तदभिप्रायेण यच्च तत्करणि । लेप्यादिकर्म तत्स्था–पनेति क्रियतेऽल्पकालञ्च ॥१॥" इति । अयमर्थः–तुशब्दो नामलक्षणात्स्थापनालक्षणस्य भेदसूचकः, यद्वस्तु तदर्थवियुक्तं–भावेन्द्राद्यर्थरहितं सद्भूतेन्द्रादिलक्षणशून्यं, तदभिप्रायेण भावेन्द्रादिबुध्ध्या क्रियते स्थाप्यते तद्वस्तु स्थापनेति सम्बन्धः, किं विशिष्टं तदित्याह–'यच्च तत्करणि' तेन भावेन्द्रादिना सह करणिः सादृश्यं यस्य तत्करणि–तत्सदृशमित्यर्थः, यद्वा करणम्–अनुकरणं सादृश्यमिति यावत् तद् यस्यास्तीति करणि सदृशं, तेन करणि तत्करणि तत्सदृशमित्यर्थः । सद्भूतेन्द्रादिसमानाकारमिति पर्यवसितोऽर्थः । चशब्दात्तदकरणि चाऽक्षादि वस्तु गृह्यते सद्भूतेन्द्राद्याकारशून्यमित्यर्थः । किं पुनस्तदेवम्भूतं वास्त्वित्याह–लेप्यादिकर्मेति लेप्यपुत्तलिकादीत्यर्थः, आदिशब्दात्काष्ठपुत्तलिकादि साकारं गृह्यते, अक्षादि चाऽनाकारम् । इयमत्र भावना सब्भावमसब्भावे ठवणा इत्यार्षवचनाद् भावेन्द्रस्य या सद्भूताकृतिस्तदाकारवत्यां सद्भावरूपायां काष्ठलेप्यादिमयेन्द्रप्रतिमायामिन्द्रोऽयमिति बुध्ध्या येन्द्रस्य स्थापना क्रियते स सद्भूतस्थापनेन्द्रः । अत्रेदमुक्तं भवति–स्थाप्यमानस्येन्द्रादेरनुरूपाङ्गोपाङ्गचिह्नवाहनप्रहरणादिपरिकरो य आकारविशेषो यद्दर्शनात्साक्षाद्विद्यमान इवेन्द्रादिर्लक्ष्यते स सद्भावस्थापनेन्द्रः, भावेन्द्राकृतिविनिर्मुक्ते अत एवासद्भावरूपेऽक्षवराटकादिके इन्द्रोऽयमिति बुध्ध्या येन्द्रस्य स्थापना क्रियते सोऽसद्भूतस्थापनेन्द्र इति । उक्तञ्च–"लेप्पगहत्थी हत्थित्ति एस सब्भाविया भवे ठवणा । होइ असब्भावे पुण हत्थित्ति निरागिई अक्खो ॥१॥" इति । कियन्तं कालं तत्क्रियत इत्याशङ्कायामाह–अल्पकालञ्चेति–अल्पः कालो यस्य तदल्पकालमित्यर्थः । चशब्दाद्यावत्कथिकञ्च, उक्तञ्च "इत्तरमणित्तरा वा ठवणा" इति, तत्रेत्वरं चित्राक्षादिगतम्, इन्द्रत्वेन यद्वस्तु स्थापितं तत्क्षणान्तरे पुनरपि तथाविधप्रयोजनसम्भवे राजादित्वेनाऽपि स्थाप्यते, यद्वा स्वाश्रयद्रव्ये विद्यमानेऽपि काचिदन्तराऽपि निवर्त्तत इत्यतोऽल्पकालभाविनी, यावत्कथिका स्थापना तु शाश्वतप्रतिमादिरूपा, तस्याश्चार्हदादिरूपेण सर्वदा तिष्ठतीति स्थापनेति व्युत्पत्तेः स्थापनात्वमवसेयं, न तु स्थाप्यत इति स्थापना, शाश्वतत्वेन केनाऽपि स्थाप्यमानत्वाभावादिति । एवं "जे चित्तभित्तिविहिया, उ घडादी ते य हुंति सब्भावे, तत्थ पुण आवकहिया, हवंति जे देवलोगेसु ॥ ८ ॥" इति बृहत्कल्पभाष्यो-

निक्षेपो रचना । एते काष्ठपुस्तचित्रकर्माक्षनिक्षेपा आदिर्येषां ते तथा । आदिशब्द उभाभ्यां सम्बन्ध-नीयः । काष्ठपुस्तचित्रकर्मादयो ये सद्भावस्थापनारूपाः, तथाऽक्षनिक्षेपादयो येऽसद्भावस्थापनारूपाः तेषु यः स्थाप्यते जीव इत्यभिप्रायेण स स्थापनाजीवः । एतदुक्तं भवति–शरीरानुगतस्यात्मनो य आकारो दृष्टः स तत्रापि हस्तादिको दृश्यत इति कृत्वा स्थापना, अक्षनिक्षेपे नास्त्यसावाकार इति चेत्, न, बही-रूपतया नास्ति बुद्ध्याकारेण त्वस्त्येवेति । सद्भावासद्भावाभ्यां विध्यनुसारेण यत्र जीवाभेदप्रत्ययस्तत्र जीवपदशक्तिव्यपदेशौ युक्तावेवेति भावः । दृष्टान्तमाह इन्द्रो रुद्रः स्कन्दो विष्णुरिति देवताप्रति-

...यादेर्देवलोकेषु चित्रभित्तौ मङ्गलस्थापनारूपेण स्थिता घटादयोऽपि यावत्कथिकस्थापनारूपा ज्ञेयाः, देवलोकनियतभावानां तत्त्वानां शाश्वतत्वादिति । यद्वस्तु सद्भूतार्थशून्यं सत्तद्बुद्ध्या तादृशाकारं निराकारं वा स्तोककालं यावत्कथिकं वा स्थाप्यते सा स्थापनेति पर्यवसितोऽर्थः । एतदभिप्रायेणैव विशेषावश्यकेऽप्युक्तम्–" जं पुण तयत्थसुन्नं, तयभिप्पाएण तारिसागारं । कीरइ व निरागारं, इत्तरमियरं व सा ठवणा ॥ २६ ॥ " इति । उक्तपद्यानुसारेण तद्भावार्थशू-न्यत्वे सति तद्भावार्थाभेदाध्यवसायप्रयोज्यकृतिविषयत्वे सति तदाकृतिसमानाकृतितच्छून्या-न्यतरत्वलक्षणस्थापनात्वालिङ्गितेऽर्थे तच्छक्तिग्राहकवचनत्वं स्थापनानिक्षेपत्वमिति स्थापनाल-क्षणमनुगतं पर्यवस्यति । अत्र प्रथमसत्यन्तं स्वरूपोपरञ्जकमेव, भावार्थस्याऽपि द्वितीयसत्यन्तेनैव वारणात्, द्वितीयसत्यन्तं तु नामादिव्यावृत्तये देयमेव, तदाकृतिसमानाकृतीत्यादिकं तु स्थाप-नास्वरूपभेदावगतिसौलभ्यफलकमेव, न त्वव्याप्त्यादिलक्षणदोषव्यावर्तकमिति । सूक्ष्मेक्षिकायां तद्भावार्थाभेदाध्यवसायप्रयोज्यकृतिविषयतालक्षणस्थापनात्वालिङ्गितेऽर्थे तच्छक्तिग्राहकवचनत्वं स्थापनानिक्षेपत्वमित्येव सम्यक् । यद्यपि लेप्यादिकर्मभूतायामिन्द्रादिप्रतिकृतौ प्रयत्नसाध्यायां कृतेः साध्यत्वाख्यविषयत्वमादायोक्तस्थापनालक्षणसम्पत्तिरस्ति, अक्षनिक्षेपादौ त्वयत्नोपनते न तथा कृतिविषयत्वं तथापि तादृशाध्यवसायप्रयोज्या मानसी कृतिरस्त्येव, यदि चेन्द्राभेदा-ध्यवसायेनेन्द्रप्रतिकृतिर्निर्मातुमारब्धा, सा निर्मातृपुरुषगतचित्तविक्षेपादिदोषतो "विनायकं प्रकु-र्वाणो, रचयामास वानरम्" इति न्यायेनाऽन्यस्यैवोपेन्द्रादेः प्रतिकृतिर्निष्पन्ना, सा च प्रतिकृतिर्ने-न्द्रस्थापना, अथ चाऽनुपदोक्तं लक्षणं तत्र गतमित्यतिव्याप्तिः, न च तत्र सद्भूतेन्द्रस्थापनात्व-स्याभावेऽप्यक्षनिक्षेपादिवदसद्भूतेन्द्रस्थापनात्वमस्त्येवेति लक्ष्यतयैव नाऽतिव्याप्तिरिति वाच्यम्, इन्द्रेतरस्थापनात्वप्रमितिविषयत्वविरहसहकृतस्यैवोक्तविषयत्वस्याऽक्षनिक्षेपादाविन्द्रस्थापनात्वप्र-योजकत्वात् । प्रकृते चोपेन्द्रादेः प्रतिकृतिरिति बुद्धिसद्भावेन तस्यासम्भवात्, इन्द्रप्रतिकृतावपि कस्यचित्तदन्यप्रतिकृतित्वबुद्धिसम्भवात्तद्वारणाय प्रमितान्तेत्येवं विभाव्यते तदा तद्भावार्थाभे-दाध्यवसायप्रयोज्यकृतिविषयत्वतदन्यभावप्रतिकृतित्वप्रमितिबुद्धिविषयतास्वरूपयोग्यत्वाभावोभ-याालिङ्गितेऽर्थे तच्छक्तिग्राहकवचनत्वं स्थापनानिक्षेपत्वम्, तदा चान्यगतचित्तत्वादिदोषतोऽ-न्यादृशप्रतिकृतौ जातायां तत्र तदन्यभावप्रतिकृतित्वप्रमितिबुद्धिविषयत्वस्वरूपयोग्यत्वस्यैव

कृतिवदिति । यथेन्द्रादीनां प्रतिकृती रचितेन्द्रादिव्यपदेशं लभते, एवं जीवस्य काष्ठादिषु प्रतिकृतिः कृता स्थापनाजीव इत्यभिधीयत इत्यर्थः ॥ द्रव्यजीवनिक्षेपमाह–द्रव्यजीव इति उच्यत इत्यनेन सम्बन्धः । अनादिपारिणामिकभावोऽर्थाज्जीवत्वं तेन युक्तो गुणपर्यायैर्वियुतः ( क्तः ), वास्तवतथात्वासम्भवादाह–प्रज्ञास्थापितः–प्रज्ञया बुद्धया कल्पितः । वैज्ञानिकसम्बन्धेन गुणपर्यायवियोगवान् गुणपर्यायवियुक्तत्वप्रकारकबुद्धिविषयो वेति यावत्, तादृशो जीवो द्रव्यजीव इत्युच्यत इति वाच्यार्थः । इतिरवास्तवत्वद्योतकः । द्रव्यजीवादिनिक्षेपस्थले द्रव्यपदप्रवृत्तिनिमित्तं गुणपर्यायवियुक्तत्वप्रकारकबुद्धिविषयत्वं वैज्ञानिकसम्बन्धेन तद्वियोगवत्त्वं चेति निर्गलितोऽर्थः । ननु सता गुणपर्यायाणां बुद्धया नापनयः शक्यः कर्तुम् । यतो न ज्ञानायत्ताऽर्थपरिणतिः, ' अर्थो यथा यथा विपरिणमते तथा तथा ज्ञानं प्रादुरस्ति' इतिवस्तुस्थितिमभिप्रेत्याह–शून्योऽयं भङ्गः । शून्य इति न

सद्भावान्नातिव्याप्तिरिति । निक्षेपभेदप्रस्तावे द्रव्यजीव इति यः प्राक्तृतीयभेद उपन्यस्तस्तन्निरूपणायाह–द्रव्यजीवनिक्षेपलक्षणमाहेति । गुणपर्यायैरिति–स्वानुगतस्वभावसिद्धचैतन्यसुखादिभिस्सहभाविभिर्गुणैस्स्वानुगततत्तत्कालोत्पन्नतत्तज्ज्ञानवैषयिकसुखदुःखहर्षशोकादिभिः क्रमभाविभिः पर्यायैश्चेत्यर्थः । ननु न कोऽपि कदाऽप्यात्मा ज्ञानाद्यशेषगुणपर्यायविनिर्मुक्तो दृश्यते, निगोदजीवानामप्यक्षरानन्ततमो ज्ञानभागो नित्योद्घाटित इति सिद्धान्ते प्रतिपादनात् । यदाह–"सव्वजीवाणं पि य णं अक्खरस्स अणंतमो भागो, निच्चुग्घाडिओ चिट्ठइ, सो वि अ जइ आवरिज्जा तेणं जीवो अजीवत्तणं पाविज्जा " इति । अन्यथा गुणपर्यायवद् द्रव्यमिति लक्षणे सर्वकालनियतसत्त्वलक्षणनित्ययोगे मतुब्विधानादुक्तलक्षणस्यैवाऽनुपपत्तिस्स्यादित्याशङ्कायामाह–वास्तवतथात्वासम्भवादाह–प्रज्ञास्थापित इति । तदर्थमाह–प्रज्ञयेति । तस्यापि तात्पर्यार्थमाह–वैज्ञानिकसम्बन्धेनेत्यादि । अर्थो यथा यथा विपरिणमते तथा तथा ज्ञानं प्रादुरस्ति' इति–अर्थो जीवादिवस्तु येन येन पर्यायेण विपरिणमते यं यं पर्यायपरिणाममासादयति तत्तत्पर्यायविशिष्टतयैवार्थज्ञानं भवति, तथा च गुणपर्यायानुगामितयैवात्मद्रव्यस्य सर्वदा प्रतीतेर्गुणपर्यायवियुक्तस्यात्मनोऽभावात्तथा बुद्धिरेवासम्भविनीति न तया द्रव्यजीवस्थापना युक्तेत्यर्थः । यद्वस्तु भूतकाले विवक्षितपर्यायरूपेण परिणतं तद्वस्तु भूतपर्यायकारणत्वाद्वर्तमानकाले द्रव्यरूपमुच्यते, अनुभूतदेवत्वपर्यायमनुष्यो द्रव्येन्द्रवदनुभूतघृताधारत्वपर्यायरिक्तघृतघटवच्च, यच्च वस्तु भविष्यत्काले विवक्षितपर्यायरूपेण परिणंस्यति तद्वस्तु भविष्यत्पर्यायकारणत्वाद्वर्तमानकालविद्यमानं सद्भविष्यत्पर्यायापेक्षया द्रव्यरूपमुच्यते " मिउपिंडो दव्वघडो सुसावगो तह य दव्वसाहुत्ति । साहू य दव्वदेवो एमाइ सुए जओ भणिअं ॥१॥" इति सिद्धान्तवचनादनुभविष्यत्साधुत्वपर्यायार्हे श्राद्धे द्रव्यसाधुत्ववत्, अनुभविष्यद्देवेन्द्रत्वपर्यायार्हे साधौ द्रव्येन्द्रत्ववदनुभविष्यद्घृताधारत्वपर्यायघृतघटवच्च, यद्वस्तु भूतभावस्य

सम्भवति । अयं भङ्गो द्रव्यजीवविकल्पः । मृत्पिण्डो द्रव्यघट इत्यादौ भावकारणतायामेव द्रव्यपदप्रवृत्तिनिमित्तत्वदर्शनादुक्तप्रकारेण प्रयोगाभावात्तत्र निषिद्धलक्षणापत्तेः । तदाह—यस्य ह्यजीवस्येति । यस्य वस्तुनः । हिशब्दो यस्मादर्थे, अजीवस्य चेतनारहितस्य, सतः सम्प्रत्यचेतनावस्थायाम्, भव्यं प्रागभावप्रतियोगि, जीवत्वं स्यात्स आगामिन्या जीवनायाः कारणं द्रव्यजीवः स्यात्, अनिष्टं चैतदभ्युपगन्तुं, जीवत्वस्यानाद्यनिधनपारिणामिकभावस्य सिद्धान्ते प्रतिपादनात् । नन्वेवं सति नामादिचतुष्टयस्याव्यापिता प्राप्ता, द्रव्यजीवविकल्पाभावात् । अभ्युपगतं च सिद्धान्ते व्यापित्वेन नामादिचतुष्टयम् । तदाह भगवान् भद्रबाहुः—" जत्थ य जं जाणिज्जा, णिक्खेवं णिक्खिवे णिरवसेसं । जत्थ वि य न जाणिज्जा, चउक्कयं णिक्खिवे तत्थात्ति ॥ १ ॥ " अत्र यत्र निक्षेपान्तरं न जानीयात्तत्र चतुष्टयं निक्षिपेदित्यनेन चतुष्टयस्य व्यापिता स्फुटीकृतैव । यत्तत्पदाभ्यां निर्देशे यो धूमवान् स वह्निमानित्यत्रेव व्याप्तेर्लाभावश्यकत्वादिति चेत्, अत्र वदन्ति प्राय सर्वपदार्थेष्वन्येषु सम्भवति, यद्यत्रैकस्मिन्न सम्भवति, नैतावता भवत्यव्यापितेति, तत्र व्यभिचारस्थानान्यत्वविशेषणदानान्न दोषः, इयमेव प्रायिकी व्याप्तिरित्येतत्प-

भाविभावस्य च कारणं तत् पूर्वोत्तरपर्यायापेक्षयाद्रव्यरूपं—"भूतस्य भाविनो वा, भावस्य हि कारणं तु यल्लोके । तद् द्रव्यं तत्त्वज्ञैः, सचेतनाचेतनं कथितम् ॥१॥ " इत्यादिना सिद्धान्तेऽभिहितम्, तथा च भावकारणत्वमेव द्रव्यपदप्रवृत्तिनिमित्तमिति सोदाहरणमाह—**मृत्पिण्डो द्रव्यघट इत्यादौ भावकारणतायामेव द्रव्यपदप्रवृत्तिनिमित्तत्वदर्शनादिति** । अस्तु भावकारणतायां द्रव्यपदप्रवृत्तिनिमित्तत्वम्, प्रकृते तेन किम् ? । अत आह—**उक्तप्रकारेण प्रयोगाभावात्तत्र निषिद्धलक्षणापत्तेरिति**— बुद्धिकल्पितगुणपर्यायवियुक्तत्वविशिष्टद्रव्यजीवपदप्रयोगाभावात् प्रयोजनाभावाच्च तत्र येयं द्रव्यपदलक्षणा सा निषिद्धेति तस्या आपत्तिः प्राप्तिस्स्यात्, न च निषिद्धलक्षणाऽऽश्रयणं युक्तमिति भावः । भव्यमित्यस्यार्थमाह—**प्रागभावप्रतियोगीति**—भविष्यत्काले उत्पादार्हमुत्पत्स्यमानमिति यावत्, यो वर्त्तमानकालीनाऽजीवो भविष्यत्कालेऽजीवत्वं चेतनारहितत्वलक्षणं परिहाय जीवत्वं चेतनावत्त्वलक्षणं प्राप्स्यति स एवाऽऽगामिजीवभावकारणत्वाद् द्रव्यजीवस्स्यात्, न चैतदिष्टमित्याह **अनिष्टं चैतदभ्युपगन्तुमिति** । तत्र हेतुमाह—**जीवत्वस्येत्यादि** । **सिद्धान्ते प्रतिपादनादिति**—"दव्वेणेगं दव्वं संखाईयप्पएसओगाढं । कालेऽणाइ अनिहणो भावे नाणाइयाणंता । १३९४ ।" इति विशेषावश्यकभाष्येऽभिहितत्वादित्यर्थः । **जत्थ य जं जाणिज्जेति**—एतदेव वीरसेनाचार्यकृतधवलटीकायामप्युक्तं " जत्थ बहुं जाणिज्जा अवरिमिदं तत्थ णिक्खिवे णियमा । जत्थ बहुवं ण जाणदि चउक्कयं णिक्खिवे तत्थ ॥१४॥" इति । **व्यभिचारस्थानान्यत्वविशेषणदानान्न दोष इति**—यो यः पृथिवीविकारः स स लोहलेख्य इति व्याप्तौ वज्रात्मकं यद्व्यभिचारस्थानं तदन्यत्वविशेषणदानवदत्राऽपि द्रव्यजीवद्रव्याजीवात्मकमनभिलाप्यभावेषु नामनिक्षेपाप्रवृत्तेरनभिलाप्यपदार्थात्मकञ्च यद्यद्व्यभिचारस्थानं तत्तदन्यत्वविशेषणदानान्नाऽव्यापितादोषः, न च यत्र यत्र व्याप्तौ व्यभिचारस्तत्तदन्यत्वविशेषणदानेन व्याप्यत्वासिद्धिदोषनिवारणे

रिष्कारः । अपरे त्वव्यापिताढोषभयादेवं वर्णयन्ति—अहमेव मनुष्यजीवो द्रव्यजीवोऽभिधातव्यः । अहं हि तस्योत्पित्सोर्देवजीवस्य कारणं भवामि । यतश्चाहमेव तेन देवजीवभावेन भविष्याम्यतोऽहमधुना द्रव्यजीव इति । एतत्तैरुक्तं भवति, पूर्वः पूर्वो जीवः परस्य परस्योत्पित्सोः कारणमिति । अस्मिंश्च पक्षे सिद्ध एव भावजीवः स्यात्, नान्यः कश्चित्, प्रथमाप्रथमाद्यादेशाश्रयणे च सोऽपि न स्यात्, प्रथमसिद्धद्रव्याणामप्रथमसिद्धद्रव्यकारणत्वात्, कारणत्वानालिङ्गितबुद्धिविषयस्य भावजीवत्वाश्रयणे च किमपराद्धं वा गुणपर्यायवियुतबुद्धिविषयस्यात्मनो द्रव्यजीवत्ववादिना, येन तत्पक्षे प्रद्वेषः । दण्डादेर्यथा द्रव्यत्वादिनाऽन्यथासिद्धत्वं दण्डत्वादिना च हेतुत्वम्, तथा जीवे द्रव्यत्वं भावत्वं च स्यादिति चेत्, न, तयोरुभयोरुपाध्योः सप्रतियोगिकत्वेनाविरोधात्, अत्र चादिष्टजीवद्रव्यहेतुत्वं द्रव्यजीवत्वं तदहेतुत्वं च भावजीवत्वमित्यनयोर्विरोधात् ।

न किमप्यनुमानं दुष्टं स्यादिति वाच्यं, यतो यत्र नानुकूलतर्कस्तत्र व्यभिचारसन्देहस्य व्याप्तिनिश्चयप्रतिबन्धकत्वेन तत्राऽनुमानस्य दुष्टत्वम्, नाऽन्यत्रेति भावः । सर्वोपसंहारेण व्याप्तिवादिनां मतमाह—**अपरे त्वव्यापितादोषभयादेवमित्यादि । सिद्ध एव भावजीवस्स्यात्, नान्यः कश्चिदिति**—सिद्धस्य कर्मसम्बन्धाभावेन सदावस्थितस्वरूपतया न गत्यन्तरगमनमिति गत्यन्तरभाविजीवपर्यायकारणत्वाभावात् स एव भावजीवस्स्यात्, न संसारिजीवः कश्चित्, न हि तस्य कस्यापि कर्मप्रयोज्यस्य गत्यन्तरगमनस्याभाव इति तेषां सर्वेषां गत्यन्तरभाविजीवपर्यायकारणत्वाद् द्रव्यजीवत्वस्यैव भावात् । **सोऽपि न स्यादिति**—सिद्धजीवोऽपि भावजीवो न स्यादित्यर्थः । तत्र हेतुमाह—**प्रथमसिद्धद्रव्याणामप्रथमसिद्धद्रव्यकारणत्वादिति**—पूर्वपूर्वसिद्धपर्यायाणामुत्तरोत्तरस्वीयसिद्धपर्यायान् प्रति कारणत्वेन द्रव्यजीवत्वमेव स्यात्, न तु भावजीवत्वमिति भावः । **कारणत्वानालिङ्गितबुद्धिविषयस्येति**—सिद्धजीवस्योत्तरोत्तरस्वीयपर्यायकारणत्वे सत्यपि कारणत्वाभावविषयकबुद्धिविषयत्वेन तस्येत्यर्थः । **गुणपर्यायवियुतबुद्धिविषयस्येति**—गुणपर्यायसहितस्यापि तद्वियुक्तत्वेन बुद्धिविषयत्वतस्तस्येत्यर्थः । ननु जीवे गुणपर्यायवत्यपि तद्वियुक्तत्वप्रकारकबुद्धिविशेष्यत्वं चेदभ्युपगम्येत तदा तस्मिन् युक्तबुद्धिविषयत्वाद् द्रव्यत्वमुपयोगरूपत्वाद् भावत्वञ्च स्यादिति दण्डदृष्टान्तपुरस्सरमाशङ्कते—**दण्डादेर्यथेत्यादिना । जीवे द्रव्यत्वं भावत्वञ्च स्यादिति**—तथा च तयोर्विरोधेनैकस्यैवाऽऽत्मनो विरुद्धनानाधर्माध्यासाद् भेदस्स्यादिति भावः । **सप्रतियोगिकत्वेनेति**—सापेक्षकत्वेनेत्यर्थः, सापेक्षधर्मयोर्विरोधाऽभावेन भेदाप्रयोजकत्वादिति भावः । **आदिष्टजीवद्रव्यहेतुत्वं द्रव्यजीवत्वमिति**—यद्यपि जीवद्रव्यं कालत्रयवर्त्येकमेव तथापि मनुष्यगतिलक्षणप्रथमभवे वर्तमानस्य प्रथमतया ऽऽदिश्यते तदनन्तरदेवभवलक्षणाऽप्रथमभवे भविष्यन् अप्रथमतया विवक्ष्यते तत्रोत्तरदेवभवलक्षणेऽप्रथमभवे उत्तरोत्तरस्वपर्यायकारणत्वादादिष्टं विवक्षितं यद्देवजीवद्रव्यं तद्धेतुत्वं मनुष्यजीवस्य द्रव्यजीवत्वं तस्यैव मनुष्यजीवस्य अप्रथ... य... भावजीवत्वमित्यनयोर्द्रव्यजीवत्वभावजीवत्वयोर्विरोधात्, यस्यैव

द्रव्यजीवत्वं सप्रतियोगिकं भावजीवत्वं तूपयोगवत्वमप्रतियोगिकमित्यनयोरविरोध इति चेत्, तथाप्ययमुपाधिसङ्करपरिहार उपधेयसङ्करपरिहारार्थश्च यत्न इति न किञ्चिदेतत्।

तत्प्रत्यहेतुत्वमित्यस्याघटमानत्वादित्यर्थः। अप्रथमतया विवक्षितदेवजीवद्रव्यनिरूपितहेतुत्वलक्षणं द्रव्यजीवत्वं सप्रतियोगिकं, तदहेतुत्वलक्षणन्न भावजीवत्वम्, येन सप्रतियोगिकस्य तस्य तेन विरोधः स्यात्, तदभावरूपत्वात्, किन्तूपयोगवत्त्वलक्षणमेव भावजीवत्वमिति परस्परविरहरूपत्वाभावान्नः पक्षेऽपि नास्ति विरोधगन्धोऽपीति शङ्कते–द्रव्यजीवत्वमिति। एतावतोपाध्योर्द्रव्यजीवत्वभावजीवत्वयोरसङ्कीर्णस्वरूपतोपपादिता भवति, उपधेयद्रव्यजीवभावजीवाऽसङ्कीर्णस्वरूपसिद्धये त्वयं यत्नो निष्फल एव, तावताऽप्येकस्यैव जीवस्य द्रव्यजीवभावजीवोभयस्वरूपानुपङ्गात्, न चैकस्य द्रव्यभावोभयरूपताऽन्यत्र दृष्टेत्यदृष्टचरीयं कल्पना न न्याय्या इत्याशयेन समाधत्ते–तथाप्ययमुपाधिसङ्करपरिहार इति। द्रव्यरूपं जीवादिकं वस्तुमात्रं तावद् द्विधा, आगमतो नोआगमतश्च, उक्तञ्चाऽऽवश्यकमुद्दिश्यानुयोगद्वारसूत्रे–" से किं तं दव्वावस्सयं ? दव्वावस्सयं दुविहं पण्णत्तं, तं जहा–आगमओ अ नोआगमओ अ " इत्यादि, द्रवति गच्छति ताँस्तान् पर्यायानिति द्रव्यं–विवक्षितातीतभविष्यद्भावकारणम्, अनुभूतविवक्षितभावमनुभविष्यद्विवक्षितभावं वा वस्त्वित्यर्थः, द्रव्यञ्च तदावश्यकञ्च द्रव्यावश्यकम्, अनुभूतावश्यकपरिणाममनुभविष्यदावश्यकपरिणामं वा साधुदेहादीत्यर्थः। तस्यागमतो नोआगमतश्चेति भेदद्वयम्, तत्रावश्यकसूत्रे वाचनाप्रच्छनापरावर्त्तनाधर्मकथाभिर्वर्त्तमानोऽप्यावश्यकसूत्रार्थचिन्तनाऽदत्तोपयोगो जीवः " आगमतः " आगममाश्रित्य द्रव्यावश्यकम् " अणुवओगो दव्वं " इति वचनात्। न तु ग्रन्थार्थानुचिन्तनलक्षणानुप्रेक्षावर्त्तमानः, अनुप्रेक्षाया उपयोगमन्तरेणाभावात्, उपयुक्तस्य च द्रव्यावश्यकत्वाऽयोगादिति। अत्राह–नन्वागममाश्रित्य द्रव्यावश्यकमित्यागमरूपमिदं द्रव्यावश्यकमित्युक्तं भवति, एतच्चाऽयुक्तम्, यत आगमो ज्ञानं, ज्ञानञ्च भाव एवेति कथमस्य द्रव्यत्वमुपपद्यते ?, सत्यमेतत्, किन्त्वागमस्य कारणमात्मा तदधिष्ठितो देहः, शब्दश्चोपयोगशून्यसूत्रोच्चारणरूप इह विवक्षितोऽस्ति, न तु साक्षादागमः, एतच्च त्रितयमागमकारणत्वात्कारणे कार्योपचारादागम उच्यते, कारणञ्च विवक्षितभावस्य द्रव्यमेव भवतीत्युक्तमेवेत्यदोषः। नोआगमतो नोआगममाश्रित्य द्रव्यावश्यकं ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदैस्त्रिविधम्। तत्र नोआगमशब्दघटकनोशब्द आगमस्यावश्यकादिज्ञानस्य सर्वनिषेधे देशनिषेधे वा वर्त्तते। उक्तञ्च–" आगमसव्वनिसेहे, नोसद्दो अहव देसपडिसेहे। सव्वे जह णसरीरं, भव्वस्स य आगमाभावो ॥१॥ " इति। अस्यां गाथायां 'सव्वे' इत्यस्य नोशब्दस्य सर्वनिषेधार्थत्वपक्ष इत्यर्थः, तत्रोदाहरणमाह–जह णसरीरमिति–ज्ञस्य जानतोऽतीतकालीनावश्यकपदार्थज्ञानवतोऽतीतमध्वाद्याधारत्वपर्यायमधुघटदृष्टान्तेनातीतभावावश्यककारणत्वाच्छय्यादिगतं निर्जीवं भूतपूर्वगत्योपचरितजीवाभेदं शरीरं ज्ञशरीरं नोआगमत इह द्रव्यावश्यकम्। 'भव्वस्स य' इति–भव्यस्य च योग्यस्याऽनागतकालोत्पत्स्यमाना–

जीवशब्दार्थज्ञस्तत्रानुपयुक्तो द्रव्यजीवो, जीवशब्दार्थज्ञस्य वा यच्छरीरं जीवरहितं स द्रव्यजीवोऽत्र विवक्षित इत्येवं नाऽव्याप्तिरित्यपरे ॥ भावनिक्षेपं दर्शयति–

वश्यकपदार्थज्ञानवतो बालादेरुपचरितभविष्यत्पर्यायगतवर्त्तमानाऽस्तित्वाभ्युपगमपरनयानुवृत्त्या भविष्यन्मध्वाद्याधारत्वपर्यायमधुघटदृष्टान्तेन यच्छरीरं तदपि नोआगमत इह द्रव्यावश्यकं, तत्र हेतुमाह **आगमाभावा** इति–आगमस्याऽऽवश्यकादिज्ञानलक्षणस्य वर्त्तमानकाले सर्वथाऽभावादित्यर्थः। नोशब्दस्य देशप्रतिषेधार्थत्वं "किरियाऽऽगमुच्चरंतो, आवासं कुणइ भावसुन्नो उ। किरियाऽऽगमो न होई, तस्स निसेहो भवे देसे ॥ १ ॥" इति गाथोक्तोदाहरणतोऽवसेयम्। तत्र क्रियाम्–आवर्त्तादिकां कुर्वन्नित्यध्याहारः। आगमञ्च वन्दनकसूत्रादिकमुच्चारयन् भावशून्यो य आवश्यकं करोति सोऽपि नोआगमत इह द्रव्यावश्यकमिति शेषः। अयम्भावः आवर्त्तादिलक्षणक्रियायां जडरूपायां ज्ञानरूपागमरूपत्वाभावेनागमस्य निषेधो भवति, क्रिया आगमो न भवतीत्यर्थः, अतो नोआगमत इति। इह किमुक्तं भवति? आगमप्रतिपाद्यत्वेनागमैकदेशे क्रियालक्षणे आगमाभावमाश्रित्य द्रव्यावश्यकमिदमिति गाथार्थः। ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यावश्यकं लौकिककुप्रावचनिकलोकोत्तरिकभेदत्रयलक्षणमनुयोगद्वारसूत्रतोऽवसेयमिति। पूर्वोक्तनीत्या द्रव्यजीवपदार्थोऽप्यागमतो नोआगमतश्चेति द्विविधः, तत्राद्यभेदमाश्रित्याह–**जीवशब्दार्थज्ञस्तत्राऽनुपयुक्तो द्रव्यजीव** इति। द्वितीयभेदञ्चाश्रित्य–**जीवशब्दार्थज्ञस्य** वेत्याद्युक्तम्। जैनप्रवचनस्य नयसमूहात्मकत्वात्सिद्धान्ते तत्तत्सूत्रेषु तत्तन्नयप्रवृत्तिदर्शनादुक्तप्रकारेण नामादिचतुष्टयस्य वस्तुत्वव्यापकत्वमुपगच्छतामाचार्याणामेतदपि मतं नयान्तराभिप्रायेण प्रवृत्तमिति सूचयितुमपरे इत्युक्तमिति। द्रव्यपदं कुत्रचिदप्रधानेऽप्यर्थे मुख्यपदार्थभिन्ने वर्त्तते यथाऽङ्गारमर्दको मुख्याचार्यलक्षणाभाववत्त्वाद् द्रव्याचार्य इति व्यपदिश्यते अप्रधानाचार्य इत्यर्थः। उक्तञ्च–"अप्पाहन्ने वि इहं, कत्थइ दिट्ठो उ दव्वसद्दोत्ति। अंगारमद्दगो जह, दव्वायरिओ सयाऽभव्वो ॥१॥" इति। तथा च द्रव्यनिक्षेपस्याऽनुगतलक्षणमेवं पर्यवसितम्–भूतस्य भाविनो वा भावस्य यत्कारणं यश्च तच्छब्दाध्येता तदर्थोपयोगशून्यः, यच्च ज्ञाततत्पदार्थस्य ज्ञस्य शरीरं जीवविप्रमुक्तं, यच्च कालान्तरभाविभावज्ञानावच्छेदकं सत्तत्पूर्वकालीनं शरीरमप्रधानं च तदन्यतमत्वलक्षणद्रव्यत्वालिङ्गितेऽर्थे शब्दसङ्केतप्रतिपादकवचनत्वं द्रव्यनिक्षेपत्वमिति, एतादृशलक्षणपरिज्ञानञ्च सिद्धान्ताभ्याससंस्कारितमानसानां न दुरवगमिति। **भावनिक्षेपं दर्शयती**ति–ननु भावनिक्षेपस्य सामान्यलक्षणे प्रकारे च ज्ञाते सत्येव जीवादौ तमुपदर्शयितुं शक्यत इति तस्य सिद्धान्तोक्तं किं सामान्यलक्षणमिति चेत्, उच्यते–"भावो विवक्षितक्रिया–नुभूतियुक्तो हि वै समाख्यातः। सर्वज्ञैरिन्द्रादिव–दिहेन्दनादिक्रियानुभवात् ॥१॥" इत्येनेनोक्तं जानीहि। अस्यायमर्थः वक्तुर्विवक्षितक्रियाया विवक्षितपरिणामस्येन्दनादेः परमैश्वर्यादिरूपस्याऽनुभवनमनुभूतिस्तया युक्तो योऽर्थः स भावतद्वतोरभेदोपचाराद् भावस्समाख्यातः। निदर्शनमाह **इन्द्रादिवदित्यादि**। यथेन्दनादिक्रियानुभवात्परमैश्वर्यादिपरिणामेन परिणतत्वादिन्द्रादिर्भाव

ऽच्यत इति । "आगमतो अ नोआगमतो अ" इत्यनुयोगद्वारवचनाद्भावोऽपि द्विविधः, तत्राऽऽगममाश्रित्य "जाणए उवउत्ते" इत्याद्यनुयोगद्वारोक्तेर्भावेन्द्र इन्द्रपदार्थज्ञस्तत्र चोपयुक्तः, इन्द्रपदार्थोपयोगलक्षणस्याऽऽगमस्य तत्र सद्भावात् । एतदभिप्रायेणैव बृहत्कल्पभाष्येऽप्युक्तम्- "जो पुण जहत्थजुत्तो, सुद्धनयाणं तु एस भाविंदो । इंदस्स व अहिगारं, वियाणमाणो तदुवउत्तो ॥ १५ ॥" इति, अत्राह—नन्विन्द्रशब्दार्थं जानन्निन्द्रशब्दार्थे उपयुक्तश्च भावेन्द्र इत्युक्तं कथं सङ्गच्छते, यतो न हि यो घटं विजानाति स घटीभवति, प्रत्यक्षविरोधादिति चेत्, मैवम्, यतो न हि सर्वथा भिन्नयोरभिन्नयोर्वा सम्बन्धः, किन्तु कथञ्चिद्भिन्नाभिन्नयोरेवेतीन्द्रतज्ज्ञानयोर्घट-तज्ज्ञानयोश्च कथञ्चिद्भेदविशिष्टाभेदाभ्युपगम एव विषयविषयिभावसम्बन्धोऽप्युपपद्यत इत्युक्त-सम्बन्धद्वारेन्द्रतज्ज्ञानयोरभेदः, इन्द्रोपयोगरूपेण परिणाम्यात्मनश्चेन्द्रविषयकोपयोगपरिणामानन्यत्वादिन्द्रज्ञानाभेदः, तथा च तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमादिन्द्राभिन्नज्ञानाभिन्नात्मन इन्द्राभिन्नत्वादिन्द्रज्ञस्तत्र चोपयुक्तश्चैवाद्यात्मा भावेन्द्रः । यद्वा "अर्थाऽभिधानप्रत्ययास्तुल्यनामधेयाः, तथाहि—इन्द्रासनस्थोऽपीन्द्र इन्द्रशब्देनोच्यते, इन्द्रशब्दोऽपीन्द्रशब्देन, इन्द्रज्ञानमपीन्द्रशब्देनेति, तथा चेन्द्रार्थेन्द्रशब्देन्द्रज्ञानानामेकेन्द्रशब्दवाच्यत्वेनाऽभेदः, ज्ञानञ्च ज्ञानिनोऽपृथग्भूतम्, तथा च तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमबलत इन्द्रज्ञान्यपीन्द्र इत्युच्यते, एवं घटज्ञानवानपि घटः, अन्यथा तज्ज्ञाने सत्यपि नोपलभ्येत, अतन्मयत्वात्, प्रदीपहस्तान्धवत्, पुरुषान्तरवद्वेति । तस्मात्सुष्ठूक्तमिन्द्रार्थं जानंस्तत्रोपयुक्तो भावेन्द्र इति । उक्तञ्चाशङ्कोत्तराभ्यां बृहत्कल्पभाष्ये—"न हि जो घडं वियाणइ, सो उ घडीभवइ नेय वा अग्गी । नाणं ति य भावो त्ति य, एगट्ठमतो अदोसोत्ति ॥ १७ ॥ जमिदं नाणं इंदो, न वतिरिच्चति ततो उ तन्नाणी । तम्हा खलु तब्भावं, वयंति जो जत्थ उवउत्तो ॥१८॥" इति । नन्विन्द्रार्थोपयोगवतो भावेन्द्रत्वे तद्वदग्न्युपयुक्तस्य माणवकस्य भावाग्नित्वं स्यात्, तथाऽस्तु का नाम नो हानिः, दहनपचनप्रकाशनादितत्कार्यापत्तिरिति चेत्, मैवम्, यतो न ह्यनलस्सर्व एव दहनादिकार्यप्रसाधकः, भस्मच्छन्नाग्निना व्यभिचारात् । ननु ज्ञानाद्वैतनयमतमेतदिति तत्र भवतां प्रवेशस्स्यादिति चेत्, किं ततः, सर्वनयमये भगवत्प्रवचने यथाधिकारं यथेष्टतयाऽऽश्रयणे दोषाभावादिति । नोआगमतश्च "इदि परमैश्वर्ये" इति परमैश्वर्यविभूतिविभूषितस्स्वर्गाधिपो भावेन्द्रः, इन्दनादिन्द्र इति व्युत्पत्तिसिद्धेन्दनादिक्रियानुभूतेः । अयम्भावः—नोआगमतो भावेन्द्र इन्द्रनामगोत्रे कर्मणी वेदयन् परमैश्वर्यभाजनम्, सर्वनिषेधवचनत्वान्नोशब्दस्य, यतस्तत्र नेन्द्रपदार्थज्ञानमिन्द्रव्यपदेशनिबन्धनतया विवक्षितम्, किन्तु इन्दनक्रियैव, तच्छालित्वान्नोआगमतो भावेन्द्रः । आगमतो भावघटो घटज्ञानोपयुक्तः, नोआगमतो भावघटश्च रक्ततादिपरिणामपरिणतः, घटचेष्टायां घटते चेष्टत इति घट इति व्युत्पत्तिसिद्धजलाहरणादिक्रियावांश्च । ननु नोशब्दस्य सर्वनिषेधार्थत्वे उक्तदृष्टान्तप्रदर्शनं युक्तियुक्तमेव, देशनिषेधार्थकत्वे को दृष्टान्त इति चेत्, उच्यते—तत्त्वदर्शिभावनाभावितान्तःकरणो यथोचितव्यापारार्पितदेहरजोहरणमुखवस्त्रिकादिरावश्यकक्रियां कुर्वन्

भावतो जीवा इत्यादि। ननु भावजीव इत्येकवचनेन पूर्वं विन्यस्य व्याख्यावसरे बहुवचनान्तप्रदर्शनमयुक्तं भावतो जीवा इति, उच्यते, मैवं कश्चिद् ज्ञासीत् यदुत एक एव भावजीवो न भूयास इति। यथाहुः "पुरुषकारणिनः पुरुष एवेदं सर्वमित्यादि"। औपशमिकेत्यादि। औपशमिकादयो भावा वक्ष्यन्ते, तैर्युक्ता उपयोगलक्षणाः संसारिमुक्तभेदाः, अत्रोपयोग एव लक्षणम्, अन्यत्स्वरूपकथनं, औपशमिकादिभावपञ्चकस्य क्षायिकसम्यक्त्ववत उपशमश्रेण्यां मनुष्यस्यैव सम्भवादन्यजीवेष्वव्याप्तेरन्यतमभाववत्त्वस्य चाजीवेऽतिव्याप्तेः। यद्वा भावजीवपदप्रवृत्तिनिमित्तोपवर्णनस्यात्राधिकृतत्वाज्जीवत्वमुप-

साधुश्श्रावको वा भावावश्यक इति। अत्र "किरियाऽऽगमो न होइत्ति" वचनात् क्रियालक्षणे देशे आगमस्याभावान्नोआगमत्वं, नोशब्दस्य देशनिषेधवचनत्वात्, देशे त्वागमोऽस्ति क्रियासूत्राणामागमरूपत्वादिति। यद्वा तथाविधज्ञानक्रियारूपो यः परिणामः स नागम एव केवलो न चानागम इत्यतो मिश्रवचनत्वान्नोशब्दस्य नोआगमत इत्याख्यायत इति। नन्वागमनोआगमाश्रितभावद्वयानुगतं भावनिक्षेपलक्षणं किमिति चेत्, उच्यते—तत्तत्पदवाच्यतत्तदर्थोपयोगोपयुक्तजिनोक्तक्रियातत्तत्क्रियासूत्रार्थोपयुक्ततत्तच्छब्दव्युत्पत्तिनिमित्तालिङ्गिततत्तत्परिणामसमुच्चयान्यतमत्वलक्षणभावत्वालिङ्गितेऽर्थे तत्तच्छब्दवाच्यताबोधकवचनत्वं भावनिक्षेपत्वमिति भावनिक्षेपलक्षणं पर्यवसितं जानीहि। भावतो जीवा इत्यादीति—पूर्वं यद्वचना[?]ं पदं प्रोक्तं तद्वचनान्तपदमेव व्याख्यातुं योग्यमित्यत्र तत्परावर्तने बीजपरिज्ञानायाशङ्कते—नन्विति। समाधत्ते, उच्यते, मैवमित्यादिना। पुरुष एवेदं सर्वमित्यादि—अत्र पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति यदेजति यन्नैजति यद्दूरे यदु अन्तिके यदन्तरस्य सर्वस्य यदु सर्वस्यास्य बाह्यत इत्यादि ग्राह्यम्, एतच्च ब्रह्मवादिमतं, तन्मते ब्रह्मैव तेन तेन घटाद्यात्मनाऽवभासते। यथा चायं सर्प इयं मालेत्यादाविदं स्वरूपमनुगामि तथा सन् घटः सन् पट इत्यादौ सर्वत्र सद्रूपमनुगामि, एवं च घटपटादिरूपस्य जगतस्सत्ता ब्रह्मसत्तैव, अतस्सर्वं यद् भूतं यच्च भाव्यं तत्सर्वं जगद् ब्रह्मैवेति। ननु भावजीवानां नानात्वे किं मानमिति चेत्, उच्यते—कश्चित् सुखी कश्चिद् दुःखी कश्चिद्रङ्कः कश्चिद्धनाढ्यः कश्चिदुच्चाभिजनः कश्चिन्नीचाभिजनः कश्चिद्विद्वान् कश्चिज्जाल्म इत्यादिव्यवस्थाऽऽत्मभेदमन्तरेणाऽनुपपद्यमाना साधयत्यात्मभेदम्, अत्र बहु वक्तव्यं तथापि ग्रन्थगौरवभयान्नोच्यते। अन्यत्स्वरूपकथनमिति—औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकभावयुक्ता इति तु जीवस्वरूपपरिचायकम्, न तु लक्षणप्रविष्टम्, लक्षणप्रविष्टत्वाभ्युपगमे को दोष इत्याशङ्कायामव्याप्तिदोषमाह—औपशमिकादिभावपञ्चकस्येत्यादिना। अथौपशमिकादिभावपञ्चकान्यतमभाववत्त्वमेव लक्षणं कक्षीक्रियते, न चोक्ताव्याप्तिः, भावपञ्चकान्यतमान्तर्गतस्य कस्यचिद्भावस्याऽन्यजीवेष्वपि सद्भावादिति चेत्, तर्ह्यजीवत्वलक्षणपारिणामिकभावमादायाऽन्यतमभाववत्त्वस्य लक्षणस्याऽजीवे गमनादतिव्याप्तिस्स्यादित्याह—अन्यतमभाववत्त्वस्य चाऽजीवेऽतिव्याप्तेरिति। अन्यतरत्वस्य

योगवत्त्वं सिद्धमुक्तान्यतरत्वं भावपञ्चकवद् वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्याद्यखिलमाश्रयणीयम्। व्युत्पन्नस्य यत्पदात् यावद्धर्मावच्छिन्नमस्खलद्वृत्त्योपतिष्ठते तावद्धर्माणा तत्पदप्रवृत्तिनिमित्तत्वस्य न्याय्यत्वात्, लक्ष्यतावच्छेदकत्वस्येव शक्यतावच्छेदकत्वस्य गुरुण्यपि स्वीकारात्, अत एव च प्रकृतिजन्यबोधप्रकार-

भेदद्वयघटितत्वेन गौरवाल्लक्षणान्तरमाह—**भावपञ्चकवद् वृत्तीत्यादि**। अत्र भावपञ्चकवद्वृत्तिजातिमत्त्वमित्युक्तौ द्रव्यत्वजातिमादायाऽजीवेऽतिव्याप्तिः, तन्निवृत्तये द्रव्यत्व**व्याप्येति**। द्रव्यत्वव्याप्यजातिमत्त्वमित्युक्तावजीवत्वमादायाजीवे तदवस्थातिव्याप्तिरिति भावपञ्चकवद्वृत्तीति। ननु तथाऽपि द्रव्यत्वस्याऽपि तदभाववद्वृत्तित्वेन द्रव्यत्वव्याप्यत्वात्तदादाय पूर्वोक्ताऽतिव्याप्तिरिति चेत्, न, द्रव्यत्वाऽन्यत्वेनाऽपि जातेर्विशेषणीयत्वात्, वस्तुतस्तु द्रव्यत्वव्याप्यत्वं प्रकृते द्रव्यत्वन्यूनवृत्तित्वमेव लाघवात्, तच्च द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपं न द्रव्यत्व इति तदादाय नाऽतिव्याप्तिसम्भवः। ननु यद्धर्मेण यदर्थे यत्पदस्य शक्तिग्रहस्तत्पदस्य तद्धर्मः प्रवृत्तिनिमित्तं, यथा घटपटादिपदस्य घटत्वपटत्वादिधर्मेण घटपटादिरूपार्थे घटत्वपटत्वाद्यवच्छिन्ने घटपटादिपदस्य शक्तिरित्याकारकशक्तिग्रहाद् घटादिपदस्य घटत्वादिरेक एव लघुभूतोऽनुगतो धर्मश्शक्यतावच्छेदक इति कथं भावजीवपदस्याऽनेकधर्माणां प्रवृत्तिनिमित्तत्वमत्रोक्तं सङ्गच्छत इत्याशङ्कायां तन्निवृत्त्यर्थं न्याययुक्तिमाह व्युत्पन्नस्य यत्पदादित्यादि। अस्खलद्वृत्त्योपतिष्ठत इति। सङ्केतसहकृतप्रमात्मकशक्तिग्रहद्वारा शाब्दबोधविषयीभूतमित्यर्थः। यत्र विवक्षितशब्दप्रतिपाद्य एक एव भावरूपोऽर्थस्तत्र तद्गतो लघुभूत एक एव धर्मः शक्यतावच्छेदक इति नास्ति नियमः, किन्तु विवक्षितपदेन कस्यापि भावात्मकार्थस्य येन येन धर्मेण स्वगतेन शाब्दबोधस्सम्भवति ते ते धर्मा अन्यतमत्वेन संगृह्य तत्पदप्रवृत्तिनिमित्तत्वेन वाच्या इति भावः। **लक्ष्यतावच्छेदकत्वस्येव शक्यतावच्छेदकत्वस्य गुरुण्यपि स्वीकारादिति**। गङ्गायां घोष इत्यादौ गङ्गापदस्य गङ्गातीरत्वेन तीरे यदा लक्षणाग्रहस्तदा गङ्गातीरे घोष इति बोधः, यदा पुनस्तीरत्वेन तीरे लक्षणाग्रहस्तदा तीरे घोष इति बोधः, तदर्थं गङ्गातीरत्वमपि गङ्गापदस्य लक्ष्यतावच्छेदकं तीरत्वमपि तथा, एवञ्च तीरत्वापेक्षया गङ्गातीरत्वस्य गुरुत्वेऽपि यथा लक्ष्यतावच्छेदकत्वं तथा यद्धर्मविशिष्टे यत्पदस्य शक्तिग्रहस्तद्धर्मस्तत्पदशक्यतावच्छेदक इति नियमेन यदा गुरुधर्मविशिष्टे शक्तिग्रहस्तदा गुरुधर्मः शक्यतावच्छेदकः, यथा कम्बुग्रीवादिमत्त्वविशिष्टे घटपदशक्तिग्रहे कम्बुग्रीवादिमत्त्वं घटपदशक्यतावच्छेदकं, यदा तु घटत्वविशिष्टे घटपदशक्तिग्रहस्तदा घटत्वेन घटबोधाद् घटत्वं शक्यतावच्छेदकमिति दिशा गुरुधर्मेऽपि लक्ष्यतावच्छेदकत्वस्येव शक्यतावच्छेदकत्वस्य स्वीकरणीयत्वादित्यर्थः। उक्तार्थे वैयाकरणानामनुमतिमुपदर्शयति—**अत एवेति** गुरुधर्मे शक्यतावच्छेदकत्वस्य स्वीकारादेवेत्यर्थः। **प्रकृतिजन्येति**—प्रकृतिजन्यबोधे प्रकारीभूतो भावस्त्वतलादिप्रत्ययाभिधेय इत्येवं वैयाकरणैरभ्युपगम्यते, प्रकृतिजन्यबोधप्रकारीभूतो यो भावस्तत्त्वलक्षणगुरुधर्म एव त्वतलादिप्रत्ययशक्यता

त्वाद्यर्थे वैयाकरणा व्याचक्षते, स एव च भावः, तत्र च न लघुगुरुविचारः, तत्तद्धर्मविशिष्टब्रह्मसत्ताया एव तत्तद्धर्मरूपत्वेन गौरवानिरीक्षणात्, तथा च वाक्यपदीयं "सम्बन्धिभेदात् सत्तैव, भिद्यमाना गवादिषु । जातिरित्युच्यते तस्यां, सर्वे शब्दा व्यवस्थिताः ॥ १ ॥ तां प्रातिपदिकार्थं च, धात्वर्थं च प्रचक्षते । सा नित्या सा महानात्मा, तामाहुस्त्वतलादयः ॥ २ ॥" इति । एवं जीवपदार्थे नामादिन्यासमुपदर्शयित्वा एकत्र दर्शितोऽन्यत्र सुज्ञान एव भवतीत्यतिदिशति–एवमजीवादिष्वि-त्यादि । तत्राजीव इति नाम यस्य क्रियते स नामाजीवः । स्थापनाऽजीवः काष्ठादिन्यस्तः, धर्मास्तिकाया-देरपि स्थापना स्मारकलिप्याकारेणाभिप्रायिकी भवत्येव । द्रव्याजीवो गुणादिवियुतो बुद्धिस्थापितः । भावाजीवो गत्याद्युपग्रहकारी धर्मादिः । द्रव्यास्रव आत्मसमवेताः पुद्गला अनुदिता रागादिपरिणामेन । भावास्रवस्तु त एवोदिताः । द्रव्यबन्धो निगडादिः, भावबन्धः प्रकृत्यादिः । द्रव्यसंवरोऽपिधानम्,

तावच्छेदक उररीकृतः, स एव च–प्रकृतिजन्यबोधप्रकार एव च । भावः–भाव इत्यभिधीयते । तत्र च–भावे च । भावो घटत्वपटत्वादिजातिरूपो लघुर्गुर्वेत्यपि न च विचारार्हम्, घटत्वपटत्वादि-तत्तद्धर्मविशिष्टब्रह्मसत्ताया एव घटत्वपटत्वादिधर्मरूपत्वेन तस्या गुरुभूताया अपि घटपटादि-पदप्रवृत्तिनिमित्तत्वेनोररीकारादित्याह–तत्तद्धर्मेति । उक्तार्थे वैयाकरणप्रकाण्डभर्तृहरिसम्मति-मुपदर्शयति–तथा चेति–सम्बन्धिभेदात् गवादिलक्षणसम्बन्धिभेदात्, सत्तैव ब्रह्मस्व-रूपसत्तैव, भिद्यमाना गवादिषु गोवृत्तित्वविशिष्टब्रह्मसत्ता गोत्वं घटवृत्तित्वविशिष्टब्रह्मसत्ता घटत्वं पटवृत्तित्वविशिष्टब्रह्मसत्ता पटत्वमित्येवं भिद्यमाना ब्रह्मसत्तैव, जातिरित्युच्यते–जाति-सामान्यादिशब्देनाभिधीयते, तस्यां–उक्तप्रकारेण व्यक्तिभेदेन विभिन्नतया व्यवस्थितायां ब्रह्मसत्तायां, सर्वे शब्दा व्यवस्थिताः–तत्प्रवृत्तिनिमित्तकत्वेन सर्वे शब्दा व्यवस्थिताः, ताम्–उक्तस्वरूपां सत्तां, प्रचक्षते–वैयाकरणाः कथयन्ति, सा सत्ता, एवमग्रेऽपि, तां–सत्ताम्, आहुः–प्रतिपादयन्ति । ननु यथैवं भिन्नवस्तुनि निक्षेपचतुष्टयमवतारितं तथैकस्मिन्नेव वस्तुनि तदवतीर्यते न वेति चेत्, अवतीर्यत एवेति जानीहि, यतो न हि किमपि वस्तु स्वनाम स्वाकृतिं भाविकार्यकारणत्वसम्भृत्नां भवनञ्च परिहाय स्वस्वरूपतां बिभर्तीत्यन्यार्थ-स्थितनामचित्रकर्माद्यक्षादिस्थापनाद्यपेक्षयैव स्वस्वनामनिजानिजाकारभाविकार्यजननशक्तिलक्ष-णकारणत्वतद्व्याभिव्यक्तिलक्षणस्वस्वरूपलाभापेक्षयाऽपि वस्तुत्वस्य नामनिक्षेपादिचतूरू-पाविनाभूतत्वाद्वस्तुमात्रं चतुर्भेदमिति, उक्तञ्च महाभाष्ये पक्षान्तराश्रयणेन–"अहवा वत्थु-मिहाणं, नामं ठवणा य जो तयागारो । कारणया से दव्वं, कज्जावन्नं तयं भावो ॥ ६० ॥" इति । अस्मिन् पक्षे "जात्याकृतिव्यक्तयः पदार्थः" इति गौतमीयसूत्रे जात्याकृतिव्यक्त्या-त्मकत्रिषु पदवाच्यता पर्याप्तिसम्बन्धेन वर्तत इति यथा व्याख्यायते तथा नामस्थापना-द्रव्यभावात्मकचतुर्षु निक्षेपपदवाच्यता पर्याप्तिसम्बन्धेन वर्तत इति व्याख्येयम् । एवम-जीवादिष्वित्याद्युत्तरग्रन्थमवतारयति– एवं जीवपदार्थे इत्यादिना । भावनिमित्तकारणत्वं न

भावसंवरो गुप्त्यादिपरिणाममापन्नो जीवः । द्रव्यनिर्जरा मोक्षाधिकारशून्या व्रीह्यादीनाम्, भावनिर्जरा कर्मपरिशाटः सम्यग्ज्ञानाद्युपदेशानुष्ठानपूर्वकः । द्रव्यमोक्षो निगडादिविप्रयोगः, भावमोक्षः समस्तकर्मक्षयलाञ्छन इति । तथा द्रव्यसम्यग्दर्शनं ये मिथ्यादर्शनपुद्गला भव्यस्य सम्यग्दर्शनतया शुद्धिं प्रतिपत्स्यन्ते, त एव विशुद्धा आत्मपरिणाममापन्ना भावसम्यग्दर्शनम् । तथा द्रव्यज्ञानमनुपयुक्तावस्था, भावज्ञानमुपयोगपरिणतिविशेषावस्था । द्रव्यचारित्रमभव्यस्य भव्यस्य वानुपयुक्तस्य क्रियानुष्ठानम्, आगमपूर्वकं भावचारित्रमिति टीकाकृतः । अत्रास्रवादीनां द्रव्यभावनिक्षेपौ पुद्गलाश्रितावेव वदन् भावसमवायिकारणतामेव द्रव्यपदार्थमभिप्रैति स्म टीकाकारः, न हि भवति मृत्पिण्डो द्रव्यघट इतिवद्दण्डो द्रव्यघट इत्ययमपि प्रयोग इति । एवं च कर्मोदयस्य द्रव्यास्रवत्वं तन्निष्पन्नात्मपरिणामस्य च यद् भावास्रवत्वमुपवर्ण्यते तदात्मकर्मणोरेकद्रव्यत्वमुपचर्योपचरितनयेनेति द्रष्टव्यम् । हन्तैवं कर्मणामुदयो भावास्रवस्तज्जनक आत्मपरिणामश्च द्रव्यास्रव इत्यपि वक्तव्यं स्यादिति चेत्, स्यादेव यद्यात्मविभावप्राधान्यं नाश्रीयते, वस्तुतः पूर्वपूर्वस्वकीयभावस्यैवोत्तरोत्तरस्वोपादेयभावापेक्षया द्रव्यत्वम् । अत एव निश्चयनये दानहरणादिकमपि स्वात्मनिष्ठमेव, न तु परनिष्ठमिति प्रपञ्चितमन्यत्र । न चैवमशैलेश्यन्त्यक्षणं द्रव्यधर्मानुच्छेदः । आपेक्षिकतदनुच्छेदस्य दोषानावहत्वात्, भावधर्मत्वावच्छिन्नप्रतियोगिकद्रव्यत्वस्य चापुनर्बन्धकादिधर्म एव सत्त्वात्, अत एवापुनर्बन्धकादीनां

द्रव्यत्वं किन्तु भावसमवायिकारणत्वमेव द्रव्यत्वमित्यत्र युक्तिमाह—न हि भवति मृत्पिण्ड इत्यादिना । तन्निष्पन्नात्मपरिणामस्येति—कर्मोदयनिष्पन्नमिथ्यादर्शनादिरूपात्मपरिणामस्येत्यर्थः । स्यादेव यद्यात्मविभावप्राधान्यं नाश्रीयते इति—कर्मविभावस्य प्राधान्यं यद्याश्रीयते तदा स्यादेव, यतस्तस्योदितकर्मपुद्गलरूपत्वेन भावास्रवत्वात् तत्कारणत्वेनात्मपरिणामो द्रव्यास्रवः, यदि चात्मविभावप्राधान्यं विवक्ष्यते तदा तस्योदितकर्मपुद्गलस्य भावास्रवरूपत्वाभावेन तस्यैव द्रव्यास्रवरूपतया नाऽऽत्मपरिणामो द्रव्यास्रवः, किन्तु भावास्रव इति भावः । यदा च कर्मविभावप्राधान्यं विवक्ष्यते तदाप्यात्मपरिणामस्य न द्रव्यास्रवत्वं, यतस्तस्य तं प्रति निमित्तविधयैव कारणत्वं नोपादानविधया, उपादानविधया कारणत्वं तु पूर्वपूर्वपरिणामस्योत्तरोत्तरस्वोपादेयपरिणामं प्रत्येवेति तस्यैव तदपेक्षया द्रव्यत्वमित्याशयेनाऽऽह—वस्तुत इत्यादि । स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनानुकूलव्यापारो दानं, व्यापारश्च दातुरेवेति तल्लक्षणदानमपि तन्निष्ठमेव, स्वाम्यसमर्पितद्रव्यस्वस्वत्वोत्पादनानुकूलव्यापारो हरणं, तादृशव्यापारश्च हर्तुरेवेति तल्लक्षणहरणं तन्निष्ठमेवेत्याशयेनाऽऽह—दानहरणादिकमपि स्वात्मनिष्ठमेव न तु परनिष्ठमिति । यदि च स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छैव स्वस्वत्वध्वंसानुकूला परस्वत्वप्रकारिकेच्छैव वा दानं तदपि तस्या दातृधर्मत्वात्तन्निष्ठैव, एवं परस्वत्वनिवृत्तिविशिष्टस्वाम्यसमर्पितद्रव्यस्वस्वत्वोत्पादनेच्छा हरणं तदापि हर्तृनिष्ठैवेत्याशयः । अपुनर्बन्धादीनामिति—न पुनरपि बन्धो मोहनीयकर्मोत्कृष्टस्थितिबन्धनं यस्य सोऽपुनर्बन्धकः, यो जीवो मोहनीयस्योत्कृष्टां सागरोपमकोटाकोटिसप्ततिलक्षणां स्थितिं यथाप्रवृत्तकरणेन क्षपयन् ग्रन्थिप्रदेशमागतः पुनर्न तां भन्त्स्यति भेत्स्यति च ग्रन्थिं सोऽपुनर्बन्धकः

द्रव्याज्ञा, सम्यग्दृष्ट्यादीनां च भावाज्ञेत्युपदेशपदादौ स्थितम् । इदं हि योग्यत्वलक्षणं प्रस्थकन्यायेन नयभेदतश्चित्रं द्रष्टव्यम् । अप्राधान्येऽपि क्वचिद् द्रव्यशब्दः सिद्धान्ते प्रयुज्यते । यदाह—"अप्पाहन्नेवि इह, कत्थइ दिट्ठो उ दव्वसद्दो त्ति । अंगारमद्दगो जह, दव्वायरिओ सयाऽभव्वो ॥ १ ॥ त्ति "। इत्थं च द्रव्यचारित्रमभव्यस्य भव्यस्य वाऽनुपयुक्तस्येति यदुक्तं तदप्राधान्यापेक्षया, तदपि द्विविधं विपरीतफलप्रयोजकतयेष्टफलाऽप्रयोजकतया च, आद्यं मातृस्थानबहुलानाम्, द्वितीयमपि द्विविधं अधिकारसम्पत्तिविरहात् प्रणिधानाद्युपयोगपूर्वकत्वरूपेष्टप्रयोजकतावच्छेदकरूपविरहाच्च, आद्यं ग्रन्थिकसत्त्वानामभव्यानां दूरभव्यानां तीर्थङ्करादिपूजादर्शनेन लब्धश्रुतसामायिकलाभबुद्धीनां, तेषामुपयुक्तक्रियावत्त्वेऽप्यनधिकारित्वेनैवेष्टफलासिद्धेः । द्वितीयमनुष्ठानपराणां शून्यक्रियावताम् । तदुक्तं प्रणिधानादीन्यधिकृत्य, " आशयभेदा एते सर्वेऽपि हि तत्त्वतोऽनुगन्तव्याः । भावोऽयमनेन विना, चेष्टा द्रव्यक्रिया तुच्छा ॥ १ ॥ " इति । तुच्छा इष्टफलाप्रयोजिका । एवमन्येऽपि विशेषा ऊह्याः । येऽपि येषां जीवादीना सामान्यशब्दास्तेष्वप्यस्य नामादिचतुष्टयस्यावतार इति कथयन्नाह—**पर्यायान्तरेणापीति**—पर्यायान्तरं सामान्यशब्दः, **नामद्रव्यमित्यादि धर्मादीनामन्यतमदित्यन्तं** व्याख्यातप्रायम् । द्रव्यद्रव्ये पक्षान्तरमाह **केचिदप्याहुरित्यादिना, अपिः**—सम्भावनायाम्, **केचिदाचार्या** इति सम्भाव्य वदन्ति—**यद् द्रव्यतो द्रव्यं भवति**—द्रव्यैः सम्भूय द्रव्यं क्रियत इत्यर्थः । यथा बहुभिः परमाणुभिः सम्भूय स्कन्धस्त्रिप्रदेशिकादिरारभ्यते । अथवा यद्द्रव्यात्तस्मादेव स्कन्धात्त्रिप्रदेशिकादेर्यदैकः परमाणुः पृथग्भूतो भवति स परमाणुरपि द्रव्यद्रव्यम् । द्विप्रदेशिकोऽपि च द्रव्यद्रव्यं भवति । तच्चैतद् द्रव्यद्रव्यं पुद्गलद्रव्यमेव भवतीति **प्रतिपत्तव्यम्** । न हि जीवादिद्रव्यमन्यैः सम्भूयारभ्यते, न चान्यस्माद्भिद्यमानात्तन्निष्पद्यते, परमाणवस्तु सम्भूयान्यदारभन्ते ततश्च निष्पद्यन्त इति । यतः **पञ्चमेऽध्यायेऽभिधास्यते**—" **अणवः स्कन्धाः** " इत्यादि, स्कन्धात् स्कन्धा भेदादणवो निष्पद्यन्त इति तत्रैव व्याख्यास्यते, अणुपदं भिद्यमाना-

उच्यते, स आदिर्येषां तेऽपुनर्बन्धकादयस्तेषामित्यर्थः । अपुनर्बन्धकस्य लक्षणम्—" पावं ण तिव्वभावा, कुणइ न बहु मण्णई भवं घोरं । उचियट्ठिइं च सेवइ, सव्वत्थ वि अपुणबंधोत्ति ॥ ३४ ॥ " इत्येवं पञ्चाशके प्रोक्तम् । **द्रव्याज्ञेति**—भावाज्ञायाः कारणत्वाद् द्रव्याज्ञा ज्ञेया, **उपदेशपदादौ स्थितमिति** "गंठिगसत्ताऽपुणबंधगाइयाणं पि दव्वतो आणा ॥ २५३ ॥ इति । "भावाणा पुण एसा, सम्मद्दिट्ठिस्स होति नियमेण । पसमादिहेउभावा निव्वाणपसाहणी चेव ॥ २५९ ॥ " इति च तत्रोक्तमिति । अपुनर्बन्धकादीनां द्रव्याज्ञेत्यत्र द्रव्यशब्दस्सङ्ग्रहव्यवहारनयविशेषतो नानारूपे योग्यत्वे वर्तत इत्यभिप्रेत्याह—**इदं हि योग्यत्वलक्षणमित्यादि** । " तित्थकराइपूयं दट्ठूणण्णेण वाऽवि कज्जेण । सुयसामाइयलंभो होज्जाऽभव्वस्स गंठिम्मि ॥ १ ॥ " इति पारमर्षोक्तिमनुसृत्याह—**तीर्थङ्करादिपूजादर्शनेन लब्धश्रुतसामायिकलाभबुद्धीनामिति** ॥ '**आशयभेदा एते सर्वेऽपि**' इत्यादिश्लोकोऽयं तृतीयषोडशके, तदर्थस्तु तत एवावसेयः । **पर्यायान्तरं सामान्यशब्द इति**-विशेषशब्दवाच्यार्थगतसाधारणधर्मावच्छिन्नवाचकशब्द इत्यर्थः । **अणवः स्कन्धा इत्यादि**,

पेक्षयाऽपकृष्टपरिणामद्रव्यपरम्, त्रिप्रदेशिके भिद्यमाने एकतः परमाणुरेकतो द्विप्रदेशिकद्रव्यमुत्पद्यत इत्यभिधानात् । अथ सङ्घाताद् द्रव्यमुत्पद्यत इति युक्तम्, भेदात्तु कथमुत्पद्यते, जन्यद्रव्यत्वावच्छिन्नं प्रति विजातीयसंयोगत्वेनावयवसंयोगस्यैव हेतुत्वादिति चेत्, न, सङ्घातभेदयोर्द्वयोरप्येकशक्तिमत्त्वेन जन्यद्रव्यत्वावच्छिन्ने हेतुत्वौचित्यात्, अन्यथा त्रिप्रदेशिकभेदे द्विप्रदेशिकस्याकस्मिकतापत्तेः, तत्का-

"अणवः स्कन्धाश्च" ५–२५ । इति तत्त्वार्थपञ्चमाध्याये पञ्चविंशतितमं सूत्रम् ॥ तत्र परस्परेणासंयुक्ताः परमाणव इति संयुक्तास्तु स्कन्धा इति चोच्यन्ते, उक्तञ्च तत्र भाष्ये– "तत्राणवोऽबद्धाः स्कन्धास्तु बद्धा एवेति" तथा च परमाणुस्कन्धभेदेन पुद्गलद्वैविध्यप्रतिपादनायैतत्सूत्रप्रवृत्तिरिति । कथं स्कन्धास्समुत्पद्यन्त इत्याशङ्कायां "सङ्घातभेदेभ्य उत्पद्यन्ते" ५–२६ । इति षड्विंशतितमसूत्रं सङ्घाताद् भेदात्सङ्घातभेदादित्येभ्यस्त्रिभ्यः कारणेभ्यः स्कन्धा उत्पद्यन्ते द्विप्रदेशादय इत्येवं त्रिविधस्कन्धोत्पत्तिप्रदर्शनाय प्रवृत्तमिति । तत्र सङ्घातात् तत्तत्परमाणुसंयोगात्, भेदात् सङ्घातसंयुक्ततत्तत्परमाणुविश्लेषात्, सङ्घातभेदात् स्कन्धेन सह विभिन्नदेशस्थतत्तत्परमाणुसंयोगात् तस्मिन्नेव समये स्कन्धसंयुक्ततत्तत्परमाणुविभागाच्चेत्यर्थः । ननु स्कन्धवदेव परमाणवस्समुत्पद्यन्ते किं वाऽन्यथेत्याशङ्कायां "भेदादणुः ।" ५–२७ । इति सप्तविंशतितमं सूत्रं भेदादेव परमाणुरुत्पद्यते, न तु सङ्घातात् सङ्घातभेदाच्चेत्येवमेकविधपरमाणूत्पत्तिप्रतिपादनाय प्रवृत्तमिति । द्रव्यार्थनयापेक्षया परमाणोर्नित्यत्वेन प्रागसतः सत्तालक्षणोत्पत्तिरस्वरूपतो न सङ्घटते किन्तु स्कन्धसंयुक्तस्य तस्य पृथग्भावलक्षणभेदादेव विभक्तत्वेन रूपेणेति तद्रूपेणैव परमाणुरुत्पन्न इति गीयते पर्यायनयेन, तन्मते तस्यानित्यत्वादिति भावः । द्व्यणुकादिमहावयविपर्यन्तजन्यद्रव्ये कतिपयभागावच्छेदेन यावद् भागावच्छेदेन वा क्रिया ततो विभागः, ततः पूर्वसंयोगनाशः, ततो द्रव्यनाशः, पुनस्तदवयवा विशकलिता एव केवलाः, तदनन्तरमेकस्मिन् परमाणौ परमाणुद्वये वा क्रियाविभागादिक्रमेण परमाणुद्वयसंयोगादसमवायिकारणाद् द्व्यणुकोत्पत्तिः, एवमेव तत्तद्द्व्यणुकान्तरोत्पत्तिस्ततो द्व्यणुकत्रयसंयोगात् त्र्यणुकं ततोऽपि चतस्रेणुक्रमेण महती पृथिवी महत्य आपो महत्तेजो महान्वायुरुत्पद्यते, इत्येवं तत्तदवयवसंयोगादेव कार्यद्रव्यमुत्पद्यते न तु विभागादित्याशयवान् नैयायिकश्शङ्कते–अथ सङ्घाताद् द्रव्यमुत्पद्यत इति युक्तमित्यादि । अन्यथेति–जन्यद्रव्यत्वावच्छिन्नं प्रत्येकशक्तिमत्त्वेन संघातभेदयोः कारणत्वानभ्युपगम इत्यर्थः । त्रिप्रदेशिकभेदे इति–त्रिप्रदेशिकस्कन्धादेकाणुभेद इत्यर्थः । पुद्गलानां नवपुराणभावस्वभावतया जन्यद्रव्यमात्रे कतिपयावयवविश्लेषेऽवयवविभागपूर्वकद्रव्यारम्भकसंयोगनाशात् द्व्यणुकादिनाशक्रमेण महावयविपर्यन्तनाशः, तदनन्तरं स्वतन्त्रेषु परमाणुषु कर्मविभागादिप्रक्रियया परमाणुद्वयादिसंयोगाद् द्व्यणुकाद्युत्पत्तिद्वारा महावयविपर्यन्तोत्पत्तिकल्पनायां महागौरवात्, नैवोक्तप्रकारेण साऽभ्युपगमार्हा, किन्तु तत्राशेषावयवविशिष्टपर्यायनाशेनावशिष्टावयवविशिष्टपर्यायतयैव पूर्वद्रव्यस्योत्पत्तिः, विश्लिष्टप्रदेशतयाऽन्यद्रव्यस्य चोत्पत्तिरित्येव प्रक्रिया

रणसङ्ख्यातविशेषाभावात्, सर्वत्र परमाणुपर्यन्तभेदेन परमाणुद्वयादिसंयोगाद् द्व्यणुकाद्युत्पत्तिकल्पने महागौरवात् । उत्पत्तेः प्राक् भेदाश्रयस्य सिद्ध्यसिद्धिव्याघाताद्भेदस्य न द्रव्यजनकत्वमिति चेत्, न, भेदस्य स्वाश्रये तादात्म्येन विशिष्टद्रव्योत्पादहेतुत्वे दोषाभावात् । शुद्धद्रव्योत्पादस्य च त्रैलक्षण्यवादिना कुत्राप्यस्वीकारात्, भिद्यमाने हि त्रिप्रदेशिके त्रिप्रदेशिकदेशत्वेन द्विप्रदेशिकं विनश्यति, द्विप्रदेशिकस्कन्धत्वेनोत्पद्यते, पुद्गलद्रव्यत्वेन च ध्रुवमिति क्व विरोधावकाशोऽपि । एतेन निराश्रयस्य परमाणुद्रव्यस्य नोत्पत्तिरित्यपि निरस्तम् । द्रव्यसामान्यस्याश्रयस्य तत्रापि जागरूकत्वात्, आश्रितैकस्वभावस्य सामा-

प्रमाणार्हो, अत एव सुवर्णकारव्यापारात्कटकस्य केयूरभावेऽर्थान्तरभावगमनलक्षणविनाश एवानुभूयते, न तु तत्र कटकस्य केषुचिद्भागेषु क्रिया ततो विभागः, तदनु पूर्वसंयोगनाशस्तत्पश्चाद् द्रव्यनाशः, पुनस्तदवयवा विशकलिता एव केवलाः, तदनन्तरमेकस्मिन् परमाणौ परमाणुद्वये वा क्रियाविभागपूर्वसंयोगनाशपरमाणुद्वयसंयोगप्रक्रियया द्व्यणुकोत्पत्तिः, तदनु त्र्यणुकाद्युत्पत्तिक्रमेण केयूरभावः प्रमीयते, तथाऽपि तथा कल्पनायां गौरवदोषमाह–**सर्वत्र परमाणुपर्यन्तभेदेनेति** । विभागो हि विद्यमानद्रव्ययोर्भवतीति त्रिप्रदेशिकस्कन्धे द्विप्रदेशिकस्कन्धः परमाणुश्चोत्पत्तेः पूर्वमस्ति, न वा, अस्ति चेत्, कथमुत्पादः, पूर्वमेव सत्त्वादिति भेदस्य न द्रव्यजनकत्वम्, नास्ति चेत्तर्हि न तयोर्विभागः, तथा च कथं ततस्समुत्पत्तिरित्याशङ्कते यौगिकः **उत्पत्तेः प्रागिति** । तन्निषेधति–**नेति** । निषेधे हेतुमाह–**भेदस्य स्वाश्रय इत्यादि** । त्रिप्रदेशिके द्विप्रदेशिकस्कन्धस्तदवयवत्वेनास्ति, एवं परमाणुरपि, तयोर्विभागे च सति तदवयवत्वेन विनश्यति द्विप्रदेशिकस्कन्धत्वेनैवं विविक्तपरमाणुत्वेन चोत्पद्यत इति कथञ्चिदुत्पाद एवेष्ट इति स्कन्धात्परमाणोर्द्व्यणुकस्य वा भेदे सति तस्य विभागपर्यायविशिष्टपरमाणुद्व्यणुकद्रव्योत्पादहेतुत्वं न दोषावहम् । अत एव परमाणोरपि पूर्वद्रव्येण सह संयुक्ततया विनाशः, वियुक्ततयोत्पत्तिश्च, परमाणुस्वरूपत्वेन पुद्गलद्रव्यत्वेन वा ध्रौव्यमिति त्रैलक्षण्यमार्हतैर्गीयते, कुत्रापि कदापि केनचिद्रूपेण कस्यापि पूर्वमसतो नव्यद्रव्यस्योत्पत्तिमत्त्वाऽननुभवेन स्याद्वादिभिरस्वीकारादिति भावः । एतदेव विवृणोति– **भिद्यमाने हीत्यादिना** । **एतेन निराश्रयस्य परमाणुद्रव्यस्य नोत्पत्तिरित्यपि निरस्तमिति**–अवयवी स्वावयवे समवायिकारणे उत्पद्यत इति द्व्यणुकस्यावयविनः परमाणुरूपे स्वाश्रयेऽवयवे उत्पत्तिस्सम्भवति, परमाणोस्तु निरवयवत्वादाश्रयरहितस्य नोत्पत्तिस्सम्भवतीत्यप्येतेन निरस्तमित्यर्थः । निरसने हेतुमाह–**द्रव्यसामान्यस्याश्रयस्येत्यादि** । एकप्रदेशत्वेन यः परमाणुरुत्पन्नस्तस्यैव द्रव्यरूपेणावस्थितस्य सत आश्रयस्य तत्रापि विद्यमानत्वादित्यर्थः । एतेन सामान्यं कस्मिंश्चिदाश्रितमेव, न तु कस्याप्याश्रय इत्याश्रितैकस्वभावं तदिति द्रव्यरूपेणावस्थितत्वात् सामान्यरूपस्य परमाणोरेकप्रदेशत्वेन यः परमाणुरुत्पन्नस्तदाश्रयत्वं नेत्यपि निरस्तम्, पूर्वोत्तरकटककेयूरादिपर्यायानुगामितयोर्ध्वतासामान्येऽपि सुवर्णे कुण्डलमुत्पन्नमिति प्रतीत्या कुण्डलपर्यायाश्रयत्वस्यानुभूयमानत्वादित्याशयेनाह –**आश्रितैकस्वभावस्य सामान्यस्येत्यादि** । ननु

न्यस्य नाश्रयत्वमिति तु सुवर्णे कुण्डलमुत्पन्नमित्यादिप्रतीत्या परास्तं कर्तव्यम् । अथ परमाणुत्रयेण द्विप्रदेशिकद्वयमेवोत्पद्यते, एकपरमाणुविगमे च तत् द्विप्रदेशिकविगमादेकद्विप्रदेशिकस्याभिव्यक्तिर्न तु भेदादुत्पत्तिरिति चेत्, न, युगपत्त्रिषु परमाणुषु त्रिप्रदेशिकजनकस्यैव संघातविशेषस्य स्वीकारात्, अन्यथा त्रिषु कपालेषु द्वयोर्द्वयोर्घटान्तरोत्पत्त्यापत्तेः, एतेन दशतन्तुकादेश्चरमतन्तुसंयोगवियोगक्रमेण नाशे नवतन्तुकादेरभिव्यक्तिरेव, न तूत्पत्तिः, प्रथमतन्तुसंयोगक्रमेण नाशे चास्तु तदेव दशतन्तुकनाशानन्तरं नवतन्तुकोत्पत्तिः, अस्तु वा दशतन्तुकोत्पत्तिकाल एव चरमतन्तुपर्यन्तं द्वितीयमादाय नवतन्तुकोत्पत्तिः । न चैवं प्रतिलोमक्रमेणानन्तपटकल्पनापत्तिः, द्वितीयमादाय नवतन्तुकस्येव तृतीयमादायाष्टतन्तुकस्यापि स्वीकर्तुमुचितत्वादिति वाच्यम् । यस्त्वयाऽग्रे स्वीक्रियते तस्यैव मया प्रथमत स्वीकारान्नवतन्तुकादौ दशतन्तुकादिध्वंसस्य हेतुत्वे मानाभावात्, अन्यत्र प्रागभावाभावेनैव तद्विरहोपपत्तेरित्यादिकमपास्तम् ।

---

परमाणुत्रयेण द्विद्विप्रदेशिकं द्रव्यद्वयमुत्पद्यते, तत्रैकपरमाणोः क्रियाविभागादिना संयुक्तावस्थारूपेण विगमे सति द्विद्विप्रदेशिकयोर्मध्यादेकं द्विप्रदेशिकं द्रव्यं विनष्टम्, अन्यच्च व्यवस्थितमेवाभिव्यज्यते, न त्वेकपरमाणुभेदादुत्पद्यत इत्याशङ्कते अथ परमाणुत्रयेणेत्यादि । समाधत्ते–नेति, तथाऽनभ्युपगमेऽतिप्रसङ्गदण्डमाह–अन्यथेति । अथ दशतन्तुकपटस्थले चरमतन्तुसंयोगस्य दशतन्तुकपटं प्रत्येव कारणत्वेन तन्नाशात्तस्यैव नाशः, न तु नवतन्तुकपटस्य, तस्य दशमतन्तुसंयोगात्प्रागेवोत्पन्नत्वेन चरमतन्तुसंयोगाऽसमवायिकारणकत्वाभावेन तन्नाशेन तन्नाशाऽसम्भवात्, किन्तु तदानीमवस्थितस्यैव तस्याभिव्यक्तिरेव, न तूत्पत्तिः, आद्यसंयोगनाशे तु भवत्येव दशतन्तुकपटनाश इव नवतन्तुकपटनाशः, आद्यतन्तुसंयोगस्य द्वितन्तुकपटादारभ्य दशतन्तुकपटपर्यन्तं प्रत्यसमवायिकारणत्वात्, असमवायिकारणनाशे च समवेतकार्यं नश्यत्येव, अनन्तरं चान्यस्यैव नवतन्तुकपटस्योत्पत्तिरित्यप्येतेन खण्डितमित्याह–एतेन दशतन्तुकादेरित्यादिना । एतेनेत्यस्यापास्तमित्यनेनान्वयः । तदेवेत्यस्य विशिष्यार्थोपदर्शनं–दशतन्तुकनाशानन्तरमिति । द्वितीयमादायेति–द्वितीयतन्तुमादायेत्यर्थः । एतेनाद्यतन्तुपरिहारात्तत्संयोगनाशेन दशतन्तुकपटनाशेऽपि न नवतन्तुकपटनाश आद्यतन्तोस्तत्समवायिकारणत्वाभावादिति सूचितम् । अपरा शङ्कते–न चैवमित्यादि । न चेत्यस्य वाच्यमित्यनेनान्वयः । एवमिति–द्वितीयमादाय नवतन्तुकोत्पत्तिरित्यभ्युपगम इत्यर्थः । निषेधे हेतुमाह–यस्त्वयाऽग्रे स्वीक्रियते तस्यैव मया प्रथमतः स्वीकारादितियस्य दशतन्तुकपटनाशानन्तरं नवतन्तुकपटस्य नवतन्तुकपटादिनाशानन्तरमष्टतन्तुकपटादेश्चोत्पत्तिस्त्वया स्वीक्रियते तस्यैव मया दशतन्तुकपटोत्पत्तिकाल एव स्वीकारादित्यर्थः । न च नवतन्तुकपटत्वाद्यवच्छिन्नम्प्रति दशतन्तुकपटादिध्वंसस्य हेतुत्वात् कथमेतत्सङ्गच्छत इति वाच्यम्, उक्तकार्यकारणभावे मानाभावादित्याह–नवतन्तुकादाविति, तत्र हेतुमाह अन्यत्रेत्यादि दशतन्तुकपटध्वंसस्य यत्र सत्त्वं तत्रैव नवतन्तुकपटस्योत्पत्तिर्नान्यत्र तन्तु-

परमाणुत्रयजनितत्रिप्रदेशिकभेदे द्विप्रदेशिकं (द्विप्रदेशिकस्य) विना भेदहेतुत्वमसम्भवात्, अन्वयव्यतिरेकाभ्यां नवतन्तुकादौ दशतन्तुकादिध्वंसस्य हेतुताया एव युक्तत्वात्, एकैकतन्तुद्वयसंयोगेन द्वितन्तुकादिक्रमेण दशतन्तुकोत्पत्तावपि द्वितन्तुकादीनामर्थान्तरभावगमनलक्षणस्य विनाशस्यावर्जनीयत्वेन पुनर्नवतन्तुकोत्पत्तये दशतन्तुकोपादाने नवतन्तुकत्वावच्छिन्नोत्पत्तौ दशतन्तुकत्वावच्छिन्नध्वंसस्य हेतुतयैव बाल्ययुवादिभावेन ध्वस्तोत्पन्नानुगतदेवदत्तवत्तत्पटानुगतस्य त्रैलक्षण्यस्य सिद्धेरित्यधिकमुपरिष्टाद्वक्ष्यामः ।

ष्वित्येतदर्थमेव नवतन्तुकपटम्प्रति दशतन्तुकपटध्वंसस्य कारणत्वमभ्युपगम्यते भवता, परं तदनभ्युपगमेऽपि प्रतियोगिनम्प्रति प्रागभावस्य कारणत्वेन नवतन्तुकपटप्रागभावो नवतन्तुष्वेव वर्तत इति तेष्वेव नवतन्तुकपटोत्पत्तिः, तद्भिन्ने च तत्प्रागभावस्याभावादेव न तस्योत्पत्तिरित्यत एवान्यतन्तुषु तद्विरहोपपत्तेरित्यर्थः । अपासने हेतुमाह–**परमाणुत्रयजनितत्रिप्रदेशिकभेद इति**–द्विप्रदेशिकमिति स्थाने द्विप्रदेशिकस्येति पाठो युक्तः । परमाणुत्रयजनितं द्विद्विप्रदेशिकं द्रव्यद्वयमुत्पद्यते इति यत्पूर्वमुक्तं तदयुक्तमुक्तम्, एकस्यैव त्रिप्रदेशिकस्कन्धद्रव्यस्योत्पन्नत्वात्, तस्मादेकपरमाणोः पृथक्त्वलक्षणभेदे च विभक्ततथैकपरमाणोर्द्विप्रदेशिकस्कन्धस्य चोत्पत्तेः भेदहेतुत्वमन्तरेण तदुत्पत्त्यसम्भवादित्यर्थः । नवतन्तुकादौ दशतन्तुकादिध्वंसस्य हेतुत्वे मानाभावादित्येतन्निरासे हेतुमाह–**अन्वयव्यतिरेकाभ्यामित्यादि** । एतदेव विवृणोति–**एकैकतन्तुद्वयसंयोगेनेत्यादिना** । **द्वितन्तुकादीनामिति**–अत्रादिपदेन नवतन्तुकान्तपटपरिग्रहः । "विगमस्स वि एस विही, समुदयजणियम्मि सो उ दुवियप्पो । समुदयविभागमेत्तं, अत्थंतरभावगमणं च ॥१॥" इति सम्मतितर्के उक्तत्वाद् विनाशो द्विविधः, तत्रैकः समुदायविभागरूपः, यथा पटादेः कार्यस्य तत्कारणतन्तुपृथक्करणे तन्तुविभागात्मा विनाशः, अर्थान्तरभावगमनं विनाशो द्वितीयो यथा मृत्पिण्डस्य घटरूपार्थान्तरभावेन परिणमनात्मा विनाशः, न च मृत्पिण्डावस्थाया यो घटात्मकोऽर्थान्तररूपविनाशस्तद्विनाशे मृत्पिण्डप्रादुर्भावप्रसक्तिरिति वाच्यम्, पूर्वोत्तरकालावस्थयोरसङ्कीर्णत्वात्, अतीततरत्वेन मृत्पिण्डलक्षणप्राक्तनावस्थाया उत्पत्तेः, अतीतस्य वर्त्तमानत्वायोगात्, तयोस्स्वस्वभावाऽपरित्यागतस्तथानियतत्वात् । तथा च प्रकृते न विभागलक्षणो विनाशः, किन्त्वर्थान्तरभावलक्षणः, द्वित्रियावन्नवतन्तुकपटानामेकैकतन्तुसंयोगे त्रिचतुःपञ्चयावद्दशतन्तुकपटरूपेण परिणमनादिति तस्य विनाशस्यावश्यंभावित्वेन दशतन्तुकपटविनाशे सति तदनन्तरं पुनर्नवतन्तुकोत्पत्तये दशतन्तुकपटसमवायिकारणतन्तुषु नवतन्तुकपटत्वावच्छिन्नोत्पत्तौ दशतन्तुकपटत्वावच्छिन्नध्वंसस्य हेतुतयैव प्राक्कालीनबालाद्यवस्थाविनाशमन्तरेण पुरुषो नैव युवादिरूपेणोत्पद्यत इति तस्य बालादिरूपपूर्वावस्थारूपेण विनाशो युवादिरूपेणोत्पत्तिः पुरुषत्वेनाऽऽत्मत्वेन वा पुरुषस्वरूपस्यानुगतत्वाद् ध्रौव्यं यथा तथाऽत्रापि दशतन्तुकपटत्वेन नाशः नवतन्तुकपटत्वेनोत्पत्तिः पटत्वेन च ध्रौव्यमिति तत्पटानुगतं त्रैलक्षण्यं सिद्धमित्याशयेनाह **अर्थान्तरभावगमनलक्षणस्य विनाशस्यावर्जनीयत्वेनेत्यादि** ।

भावतो द्रव्यमित्येकत्वेनोद्दिश्य भावतो द्रव्याणीति बहुत्वेन निर्दिशतोऽयमभिप्रायः, बहून्येतानि स्वत एव सत्तां दधति, न त्वेकमधिष्ठानं परमार्थसत्यमन्यानि च संवृतिसन्तीति, सगुणपर्यायाणीति गत्याद्यगुरुलघुप्रभृतिपर्यायभाञ्जि। स्यादेतद् यद् येन धर्मेण समन्वितं तत्तं धर्मं न जातु जहाति तेनैव सदान्वितमास्ते इत्येतदपि नास्तीत्याह—प्राप्तिलक्षणानि परिणामलक्षणानि अन्यान्यान् धर्मान् प्रतिपद्यन्त इति, जीवास्तावद्देवमनुजादीन्, पुद्गलाः कृष्णादीन्, धर्मादयः पुनस्त्रयः परतोऽन्यान्यधर्मान् प्राप्नुवन्त्येव। यतोऽन्यस्मिन् गच्छति तिष्ठत्यवगाहमाने वा जीवे पुद्गले वा गमनादिपरिणामस्तेषामुपचर्यत इति। स्यादत्राशङ्का यद्येवं धर्मादीनामुपचरिता प्राप्तिः, जीवपुद्गलयोश्चानुपचरिता, तदा पुद्गलवज्जीवस्यापि कथं न द्रव्यद्रव्यत्वम्, विजातीयद्रव्यपर्यायप्राप्तेस्तस्यापि भावादिति, नैवम्, मनुष्यादिपर्याये जीवपुद्गलयोरुभयोर्व्यापारेऽपि द्रव्यभावनिबन्धनस्नेहप्रत्ययपरिणामाभावेनाकाशवदात्मन उदासीनत्वादिति।

---

स्वत एवेति—अनेन न त्वतिरिक्तसत्तायोगात्सत्तां द्रव्याणि दधतीत्युक्तं भवति, यतस्सत्तायास्स्वरूपात्मकसत्तायोगात् सद्रूपत्वे भावानामपि तथैवास्तु, अतिरिक्तसत्तायोगात् सद्रूपत्वेऽनवस्थादोषप्रसङ्ग इति भावः। पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यमित्यादिश्रुतिमवलम्बमानानां वेदान्तिनां ब्रह्मैव सद्रूपं मायाद्वारा निमित्तकारणं सदुपादानकारणं जगतः, न तु नैयायिकानामिवेश्वराभिन्नं ब्रह्म निमित्तकारणमात्रम्, तत्कार्यन्तु घटपटादिकमसद्रूपम्, अविद्योपकल्पितत्वादित्यादि यन्मतं तन्निरसनायाह—न त्वेकमधिष्ठानमित्यादि। तन्निरासश्चैवम्—अविद्योपकल्पितत्वहेतुस्सन् असन् वा, आद्ये द्वैतापातो द्वितीये न ह्यसता हेतुना जगतोऽसत्त्वसिद्धिः, अधिकं गौरवभीत्या यदत्र नोक्तं तदस्मद्ग्रन्थसम्मतितर्कमहार्णवावतारिकातोऽवसेयम्। भाष्योक्तस्य सगुणपर्यायाणीत्यस्यार्थमाह—गत्याद्येत्यादि। प्राप्तिलक्षणानीत्यस्यार्थमाह—परिणामलक्षणानीति। तस्याप्यर्थमाह—अन्यान्यानिति। तेषामुपचर्यत इति जीवपुद्गलयोरेव मुख्यवृत्त्या गमनादिपरिणामः, स एव धर्मास्तिकायादिषूपचर्यत इत्यर्थः। तत्तज्जीवतत्तत्पुद्गलगतो यो गमनपरिणामस्तदुपग्रहकारित्वस्वभावो धर्मास्तिकाये स्थितिपरिणामस्तदुपग्रहकारित्वस्वभावोऽधर्मास्तिकायेऽवगाहनापरिणामस्तदुपग्रहकारित्वस्वभाव आकाशास्तिकाये परापेक्ष इत्यत उपचर्यत इत्युच्यत इति भावः। कथं न द्रव्यद्रव्यत्वमिति—द्रव्यात्मककार्योपादानकारणत्वं जीवनिष्ठं कथं नेत्यर्थः। तत्र हेतुमाह विजातीयद्रव्यपर्यायप्राप्तेस्तस्यापि भावादिति द्रव्यविजातीयपर्यायप्राप्तेः पूर्वदेवादिपर्यायत्यागेनोत्पद्यमानोत्तरमनुष्यादिपर्यायपरिणामरूपाया जीवस्यापि भावादित्यर्थः। द्रव्यभावनिबन्धनस्नेहप्रत्ययपरिणामाभावेनेति—द्रव्यभावो द्रव्यात्मककार्यता तन्निबन्धनं तत्कारणं स्नेहप्रत्ययपरिणामः स्नेहाधीनपरिणामः, तस्याभावेनेत्यर्थः। द्रव्यरूपकार्यकारणीभूतस्नेहाधीनपरिणामः पुद्गलद्रव्य एव वर्त्तते, न तु जीवद्रव्य इति तस्याकाशवदुदासीनत्वान्न द्रव्यद्रव्यत्वमिति भावः। कर्मसाधनत्वपक्षे भू प्राप्ताविति चौरादिकभूधातोर्वैकल्पिकणिच्प्रकृतितया

प्राप्तिलक्षणानीति यदुक्तम्—सा न स्वमनीषिकेत्याह—**आगमतश्चे**त्यादि, तसिः सप्तम्यर्थे । **आगमत** आगमे पूर्वाख्ये, **प्राभृतज्ञो** व्याकरणोत्पत्तिमूलशब्दप्राभृतनिष्णातो गुरुः, **द्रव्यमिति भव्यमाह**—द्रव्यमिति भव्यमिति पर्यायशब्देन च व्याचष्टे इत्यर्थः । तावतापि प्राप्त्यर्थता कथमत आह—**भव्यमिति प्राप्यमाह**—अतो न स्वमनीषिकेयमित्यर्थः । नन्विदमसङ्गतं भवतेरकर्मकस्य सत्ताभिधायित्वेऽपि प्राप्त्यनभिधायित्वादत आह—**भू प्राप्तावात्मनेपदीति**, चुरादिगणपठितोऽयं प्राप्त्यर्थः, न तु भ्वादिगणपठितः सत्तार्थ इत्यर्थः । निगमयति **तदेवमिति**, भव्यशब्दस्य कर्मसाधनत्वपक्षे प्राप्यन्ते स्वधर्मैर्यानि तानि भव्यान्युच्यन्ते । कर्तृसाधनत्वपक्षे तु प्राप्नुवन्ति तान्येव धर्मादीनीति व्याख्येयमिति भावः । उक्तं जीवादीना न्यासमन्यत्रातिदिशन्नाह—**एवं सर्वेषामित्यादि** । एवं यथा जीवादीनां द्रव्यशब्दस्य, तथा **सर्वेषां** गुणक्रियादिशब्दानाम्, **अनादीनां** भव्याभव्यादीनाम् **आदिमतां च** मनुष्यादीनां पर्यायाणाम्, **जीवादीनां भावानां**, जीवादिभ्योऽनन्यवृत्तीनाम्, **तत्त्वाधिगमार्थं** तत्त्वस्य भावस्य परिज्ञानाय, न तु नामस्थापनाद्रव्याणा, तेषामनुपयुक्तत्वात्, **न्यासो** निक्षेपः **कार्यः** । भावनिक्षेपे कार्ये त्रयमप्यायातीति चेत्, आयातु प्रस्तुतार्थव्याकरणादप्रस्तु-

तदभावपक्षे भूयन्ते प्राप्यन्ते स्वधर्मैर्गत्यादिभिस्सम्बध्यन्ते यानि तानि भव्यानि, द्रव्याणीत्यर्थः, इत्याशयेनाह—**भव्यस्य कर्मसाधनत्वपक्ष इत्यादि** । कर्तृव्युत्पत्तिपक्षे तु णिच्सन्निधानाभावे भवन्ते प्राप्नुवन्ति तान्येव स्वधर्मादीनि गत्यादिरूपाणीति भव्यानि, द्रव्याणीत्यर्थः, एतत्तात्पर्येणाह—**कर्तृसाधनत्वपक्षे त्विति** "भव्यगेयप्रवचनीये"त्यादि (३।४।६८) पाणिनीयसूत्रे निपातनात् भव्यशब्दसिद्धिः । **भावस्य परिज्ञानायेति**—नामादिचतुष्टयप्रकारेण वस्तुनि निक्षिप्ते सत्येव भाववस्तुनाऽत्राधिकार इति ज्ञातुं शक्यते, नान्यथेत्येवं भावस्य परिज्ञानायेत्यर्थः । अयम्भावः—विवक्षितस्याङ्गस्यानङ्गस्य वा श्रुतस्य वा स्कन्धादेर्वा निक्षेपचतुष्टये प्रदर्शिते सति प्रकान्तप्रकरणे भावाङ्गेन भावानङ्गेन वा भावश्रुतेन वा भावस्कन्धादिना वाऽधिकारः, तस्यैव प्रस्तुतप्रकरणेऽधिकारत्वात्, न तु नामाङ्गादिस्थापनाङ्गादिद्रव्याङ्गादिभिः, तेषामनधिकृतत्वादत्रेत्येवं प्रकरणवशेन भावस्य परिज्ञानाय निक्षेपो विधेयो, न तु नामस्थापनाद्रव्याणां परिज्ञानाय, तत्र हेतुमाह—**तेषामनुपयुक्तत्वादिति**, प्रस्तुतप्रकरण इति शेषः । अत्र वाद्याशङ्कते—**भावनिक्षेप इत्यादि** । उत्तरयति—**आयात्वित्यादिना** । **प्रस्तुतार्थव्याकरणादप्रस्तुतार्थापाकरणाच्चेति** कस्यचिदेकस्य जीवादेर्वस्तुनश्चतुर्धा निक्षेपेऽवगते सति भावनिक्षेपोऽत्रोपयुक्तः, तत्त्वाधिगमफलकत्वात्, नामादित्रयन्तु न, प्रस्तुतेऽनुपयुक्तत्वेन हेयत्वादित्येवं प्रस्तुतस्य भावनिक्षेपस्य व्युत्पादनात्, तदन्यस्य नामादित्रयस्य च परिहरणादित्यर्थः । अत एव "इदमेव च नामादिभेदोपन्यासेन व्याख्यायाः फलं यदुत यावन्तो विवक्षितशब्दवाच्याः पदार्था घटन्ते तान् सर्वानपि यथा स्वरूपं वैविक्त्येनोपदर्श्य येन केनचिन्नामाद्यन्यतमेन प्रयोजनं स युक्तिपूर्वकमधिक्रियते, शेषास्त्वपाक्रियन्ते, तथा चोक्तं अप्रस्तुतार्थापाकरणात् प्रस्तुतार्थव्याकरणाच्च निक्षेपः फलवानिति" पिण्डनिर्युक्तिप्रोक्तं सङ्गच्छत इति ।

तार्थापाकरणाच्च निक्षेपस्य फलवत्त्वेन प्रधानाङ्गत्वात्तन्निक्षेपस्त्वनिष्ठा(ष्ठा)वहत्वात् प्रतिषिध्यते, लक्षणलक्षणादिवत् क्लेशमात्रफलत्वादित्याशयात् ॥ ५ ॥

निक्षेपस्य फलवत्त्वेन प्रधानाङ्गत्वादिति–प्रकरणवशेनाऽप्रकृतनिराकरणद्वारा यथास्थानविनियोजनेन तत्त्वभूतप्रकृतार्थनिश्चयफलकत्वेन भावनिक्षेपस्य तत्त्वाधिगमे प्रधानाङ्गत्वात् सोऽभ्युपगन्तव्य इत्यर्थः । ननु भावनिक्षेपस्य भावस्वभावतत्त्वाधिगमोपायत्वेन प्रधानत्वमतो भावनिक्षेपः कार्यो भवति, निक्षिप्यमाणो भाव एवोपादेयो, न तु निक्षिप्यमाणा नामादयस्तत्त्वय इत्यप्रस्तुतार्थापाकरणाय नामनिक्षेपादयोऽपि निरूपणीया भवन्ति, एवं तत्तत्स्वरूपनिष्टङ्कनं तत्तन्निक्षेपत इति भावस्वरूपनिष्टङ्कनाय यथा भावनिक्षेपः क्रियते एवं नामादिस्वरूपनिष्टङ्कनाय नामनिक्षेपादयो यथा क्रियन्ते तथा भावनिक्षेपस्वरूपनिष्टङ्कनाय भावनिक्षेपनिक्षेपोऽपि नामनिक्षेपादिचतुष्टयरूपेण सम्भवीति करणीयः स्यात्, एवं नामनिक्षेपनिक्षेपादयोऽपि करणीयाः स्युः, यथा चानिक्षिप्ते भावादौ तत्स्वरूपपरिज्ञानं न सम्यक् सम्भवति, तथाऽनिक्षिप्ते भावनिक्षेपादौ भावनिक्षेपादिस्वरूपपरिज्ञानमपि न सम्भवत्येव, तन्निक्षेपमन्तरेण तत्परिज्ञाने वा भावनिक्षेपादिकमन्तरेणापि भावादिपरिज्ञानसम्भवाद् भावनिक्षेपादयोऽप्यकरणीयास्स्युरित्यत आह तन्निक्षेपस्त्विति–भावनिक्षेपनिक्षेपः पुनरित्यर्थः, अस्य प्रतिषिध्यते इत्यनेनान्वयः, तत्र हेतुः अनिष्ठावहत्वादिति–निष्ठा–विश्रान्तिस्तदभावोऽनिष्ठा, अविश्रान्तिः, अनवस्थेति यावत्, तदावहत्वात् अनवस्थापादकत्वादित्यर्थः । यदि भावनिक्षेपस्य निक्षेपः क्रियते तर्ह्युक्तयुक्त्या भावनिक्षेपनिक्षेपस्याऽपि निक्षेपः करणीयः, एवं तन्निक्षेपोऽपि करणीयस्स्यादित्येवमनवस्थानान्निक्षेपनिक्षेपो निषिध्यत इत्यर्थः । अत्राऽनुरूपं दृष्टान्तमाह–लक्षणलक्षणादिवदिति । यथा पृथिव्यादिलक्ष्यस्वरूपविज्ञानाय तल्लक्षणं क्रियते तल्लक्षणस्यापि लक्ष्यत्वेन तत्स्वरूपविज्ञानाय लक्षणलक्षणमपि करणीयम्, एवं तल्लक्षणमपीत्येवमनवस्थानाद्यथा लक्षणलक्षणादिकं न करणीयं तथेत्यर्थः, भवत्वनवस्था तथापि लक्षणलक्षणं किमिति न क्रियते इत्यत आह क्लेशमात्रेति । अनिष्टावहत्वादिति पाठे त्वनवस्थारूपानिष्टापादकत्वादित्यर्थः । अत्रेदमप्यवधेयम्–नानार्थकशब्दस्थले प्रकरणमपि शक्तिग्राहकम्, यथाहि–सैन्धवपदं लवणेऽश्वे चेति कोशेन लवणाश्वात्मकार्थद्वये तस्य शक्तिर्व्युत्पादिताऽस्तीति सैन्धवमानयेत्यादौ सैन्धवपदाद् भोजनप्रकरणे सति तत्सहकारादश्वात्मकाप्रस्तुतार्थनिराकरणेन लवणात्मकप्रस्तुतार्थावगतिः, तथा प्रशस्तभावसम्बन्धिनां सर्वेषां निक्षेपाणां तु प्रशस्तत्वमेव निर्व्यूढमित्युक्तेरर्हतां भगवतां भावनिक्षेपस्य प्रशस्ततया तन्नामादिनिक्षेपचतुष्टयमपि प्रशस्तमिति प्रणिधानाच्छुभभावजननद्वारा निर्जराकारणत्वेन परमश्रेयोर्थिभिस्स्तुत्यर्हमिति नामार्हत्–स्थापनार्हत्–द्रव्यार्हत्–भावार्हन्निक्षेपार्थकार्हत्पदात्तच्छब्दार्थोपस्थितिद्वारा नामस्तवाधिकारप्रकरणवशात् प्रधानतया नामार्हन्निक्षेपावगतिरिति प्रस्तुतं नामार्हन्तमुद्दिश्यैव "लोगस्स उज्जोअगरे" इत्यादौ तत्स्तुतिर्विधीयते, "चोवीसत्थएणं दंसणविसोहिं जणयइ" इति सिद्धान्तोक्त्या चतुर्विंशतिस्तवाराध्यतावि॰

अथैतेषामुद्दिष्टनिक्षिप्तानां तत्त्वानां कार्त्स्न्यदेशाभ्यां केन हेतुना विस्तराधिगमो भवतीति जिज्ञासायामाह

## सूत्रम् प्रमाणनयैरधिगमः ॥ १ ॥ ६ ॥

( भाष्यम् ) एषां च जीवादीनां तत्त्वानां यथोद्दिष्टानां नामादिभिर्न्यस्तानां प्रमाणनयैर्विस्तराधिगमो भवति ॥ तत्र प्रमाणं द्विविधं प्रत्यक्षं परोक्षं च वक्ष्यते, चतुर्विधमित्येके नयवादान्तरेण ॥ नयाश्च ( पञ्च ) नैगमादयो वक्ष्यन्ते ॥ किञ्चान्यत् ॥

(यशो०टी०) प्रमाणे प्रत्यक्षपरोक्षे। नयाः पञ्च वक्ष्यमाणाः, तैः करणैः, अधिगमो ज्ञानं भवति। अत्र करणे तृतीया, न कर्तरि । ' कर्तृकर्मणोः कृती 'त्यनेन षष्ठीप्रसङ्गात् । भाष्ये, एषां जीवादीनां,

मोक्षफलेच्छया भव्यव्रतैः । स्थापनास्तवाधिकारप्रकरणे सति तद्वशात् स्थापनार्हन्निक्षेपावगतिरिति स्थापनार्हन्तमुद्दिश्यैव "अरिहंतचेइआणं करेमि काउस्सग्गं" "जं किंचि नामतित्थं" इत्यादौ तत्स्तुतिः क्रियते, द्रव्यस्तवाधिकारप्रकरणे सति तेन द्रव्यार्हन्निक्षेपबोध इति द्रव्यार्हन्तमुद्दिश्यैव " जे अ अइआसिद्धा, जे अ भविस्संति णागए काले " इत्यादौ तत्स्तुतिराद्रियते, अत एव " ण वि ते पारिव्वज्जं, वंदामि अहं ण ते इहं जम्मं । जं होहिसि तित्थयरो, अपच्छिमो तेण वंदामि । " ४२८ ॥ इत्यावश्यकसूत्रोक्तेर्भरताधिपतिभरतचक्रिणा मरीचिः प्रोक्तः, मरीचे ! तव पारिव्राज्यं न वन्दे किन्तु भावितीर्थकरस्त्वामिति वन्द इति सङ्गच्छते । भावस्तवप्रकरणे सति तत्प्रयोज्यभावार्हन्निक्षेपावबोध इति भावार्हन्तमुद्दिश्यैव-" नमोत्थु णं अरिहंताणं भगवंताणं " इत्यादौ तत्स्तुतिर्मोक्षार्थिना विधीयते इति तद्रूपयथास्थानविनियोगफलवत्त्वेन फलवन्तो निक्षेपा इति ॥ ५ ॥ अथ सूक्ष्मेक्षिकया निक्षेपनयप्रमाणैरभिसमीक्षामन्तरेणाऽर्थानामविचारितरमणीयतया युक्तायुक्तत्वविभागो न च कस्यापि पुंसो भवति, अन्यथा प्रतिपत्तेः, उक्तञ्च-प्रमाणनयनिक्षेपै-र्योऽर्थो नाभिसमीक्ष्यते । युक्तञ्चायुक्तवद्भाति, तस्यायुक्तञ्च युक्तवत् ॥१॥ " इति । भाष्यकारोऽप्याह-"अत्थं जो न समिक्खइ, निक्खेवनयप्पमाणओ विहिणा । तस्साजुत्तं जुत्तं जुत्तमजुत्तं व पडिहाइ ॥२२७३॥" इति-तदेवं यथार्थतत्त्वनिश्चयार्थं निक्षेपनयप्रमाणतः सूक्ष्मपरिभावनाया आवश्यकत्वे सति जीवादीनां चतुर्भेदनिक्षेपेण समीक्षायां पञ्चमसूत्रेण कृतायामधुना तेषां नयप्रमाणैस्समीक्षाया अवसर इति तत्करणार्थं षष्ठसूत्रावतरणिकामाह-अथैतेषामित्यादिना । प्रमाणनयैरधिगम इति-न चास्मिन् सूत्रे प्रमाणञ्च नयाश्चेति द्वन्द्वे प्रमाणापेक्षया नयस्याऽल्पाच्तरत्वात् पूर्वं निपातः कुतो नेत्याशङ्कनीयम्, वस्तुगतसकलांशग्राहित्वेन प्रमाणस्य वस्त्वेकांशग्राहिनयापेक्षयाऽभ्यर्हितत्वेन प्रमाणप्रतिपन्नेष्वेवार्थेषु नयप्रवृत्तिर्व्यवहारहेतुरित्यतोऽपि च प्रमाणस्याभ्यर्हितत्वेन "अभ्यर्हितं पूर्वं निपतति" इति न्यायेन लक्षणहेत्वोरिव पूर्वनिपातादिति । करणे तृतीया न कर्तरि " कर्तृकर्मणोः कृति "-त्यनेन षष्ठीप्रसङ्गात् प्रमाणनयैरधिगम इत्यत्राधिगमपदस्य भावप्रत्ययान्तत्वेन कृदन्तत्वात् प्रमाणनयैरित्यत्र कर्तृत्वार्थे तृतीयास्वीकारे " कर्तृकर्मणो-

च शब्दान्नामादीनाञ्च, तत्त्वानामित्युभयत्र सम्बन्धः । यथोद्दिष्टानामित्यादि, उद्देशनिक्षेपादिना संक्षेपतः शाब्दबोधमात्रसम्भवे विस्तारेण सामान्यविशेषादियावत्प्रकारेण विशदाविशदादिस्वभावेन चाधिगमः प्रमाणाभ्यां नयैश्च भवति । संख्यानियममाह तत्रेति, तत्र प्रसिद्धे नन्द्यादौ सिद्धान्ते, द्विविधं प्रमाणमुक्तम् । द्वैविध्यं च न प्रत्यक्षमनुमानं चेत्येवम्, मायासूनवीयवैशेषिकाणामिव,

कृद्योगे कर्तृकर्मवाचकपदयोष्षष्ठी स्यादित्यर्थकेन षष्ठीप्रसङ्गात्, देवदत्तस्य कृतिः, तण्डुलस्य पाक इत्यादिवदिति भावः । उभयत्र सम्बन्ध इति–तथा च जीवादीनां तत्त्वानां नामादीनां च तत्त्वानामिति भावः । जीवाजीवाश्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वमित्युद्देशसूत्रेण १–४ तत्त्वत्वव्याप्यजीवत्वाजीवत्वादिस्वस्वासाधारणधर्मेण जीवाजीवादीनां ज्ञाने जाते जीवादिशब्दवाच्य एकोऽर्थः किं वाऽनेक इत्याशङ्कानिवृत्त्यर्थं निक्षेपसूत्रम्, तेनापि च जीवादिशब्दवाच्यो नैकोऽर्थः, किन्तु नामादिचतुर्विध इत्येतावन्मात्रमेव संक्षिप्तज्ञानं जातं, न तु जीवादिगता येऽनन्तधर्मास्तदखिलधर्मविशिष्टजीवादिज्ञानं विस्तृतं प्रतिनियतधर्मविशिष्टजीवादिज्ञानं च संक्षिप्ततरम्, नन्वेवं तर्हि तज्ज्ञानं विशदाविशदरूपं कैः करणैर्भवतीति चेत् प्रत्यक्षपरोक्षरूपप्रमाणाभ्यां सङ्ग्रहादिनयैश्चेति जानीहीत्याशयेनाह उद्देशनिक्षेपादिनेत्यादि । नन्द्यादौ सिद्धान्ते द्विविधं प्रमाणमुक्तमिति तं समासओ दुविहं पण्णत्तं, तं जहा–पच्चक्खं च परोक्खं चेत्यादिनेति शेषः । मायासूनवीयवैशेषिकाणामिवेति बौद्धकणादानामिवेत्यर्थः । बौद्धा हि प्रत्यक्षमनुमानं चेति प्रमाणद्वयमभ्युपगच्छन्ति, न शब्दादिभेदेनाधिकप्रमाणानि, यतश्शब्दस्य स्वलक्षणेनार्थेन सह सम्बन्धस्यैवाऽभावः "विकल्पयोनयश्शब्दाः विकल्पाः शब्दयोनयः । कार्यकारणता तेषां नार्थं शब्दाः स्पृशन्त्यपि ॥ १ ॥" इति तेषामुद्गारः । शब्दार्थयोर्वाच्यवाचकसम्बन्धानभ्युपगमे सति गवयो गवयपदवाच्य इत्युपमितिकरणमुपमानं प्रमाणमित्यपि तन्मते नेति । वैशेषिका अपि "शब्दोपमानयोर्नैव, पृथक्प्रामाण्यमिष्यते । अनुमानगतार्थत्वा–दिति वैशेषिकं मतम् ॥ १ ॥" इति कारिकावल्यां "एतेन शाब्दं व्याख्यातम्" ९ । २ । ३ । इति वैशेषिकसूत्रोपस्कारे नवमाध्याये द्वितीयाह्निके तृतीयसूत्रे चोक्तत्वात् प्रत्यक्षमनुमानं चेति प्रमाणद्वयमेवाभ्युपगच्छन्ति, शब्दोपमानादीनामप्यनुमानविधयैव प्रामाण्यस्वीकारात्, तथाहि–एते पदार्था मिथस्संसर्गवन्त आकाङ्क्षादिमत्पदकदम्बस्मारितत्वात् गामानयेति पदार्थसार्थवत्, तत्र हि आकाङ्क्षादिमत्पदकदम्बस्मारितत्वं पदार्थानां मिथस्संसर्गत्वव्याप्यं गृहीत्वैव मिथस्संसर्गवत्त्वमनुमिनोतीति किं कल्पनीयप्रमाणभावेन शब्देन । तत्र हेतावाप्तोक्तत्वमपि विशेषणं देयम्, तेन नदीतीरे पञ्चफलानि सन्तीत्यनाप्तवाक्ये न व्यभिचारः । एवमुपमानमप्यनुमान एवान्तर्भूतं, तथाहि गवयशब्दो गवयवाचकः असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्, असति वृत्त्यन्तरे यश्शब्दो यत्र शिष्टैः प्रयुज्यते स तस्य वाचकः, यथा गोशब्दो गोरित्यनुमानादेव गवयसंज्ञागवयरूपार्थश-

किन्तु प्रत्यक्षं परोक्षं चेत्येवमिति वक्ष्यते । एवं हि संभवदखिलप्रमाणान्तर्भावान्न न्यूनता । यद्येवं तर्हि कथमनुयोगद्वारग्रन्थे चतुर्विधमुपन्यस्तम् । तत्राह—चतुर्विधमित्येके आचार्या वदन्ति । प्रत्यक्षानुमानोपमानागमभेदात् । नयवादान्तरेण नैगमादिनयभेदेन, यथा चैतच्चातुर्विध्यं दुःस्थितं तथा भाष्यकार एवोपरत्र दर्शयिष्यति । नयाश्च पञ्च नैगमादय इति । शब्दसमभिरूढैवंभूतानामेकस्यैव शब्दसंज्ञया सङ्ग्रहादिति भावः । अथ प्रमाणनययोर्ज्ञानात्मकत्वात्सामान्यविशेषात्मकवस्तुपरिच्छेदित्वाच्च कः प्रतिविशेष इति चेत्, अत्र टीकाकृतः सर्वनयांशावलम्बिज्ञानं प्रमाणम् । अनेकधर्मात्मके वस्तुन्येकधर्मावधारणं च नयः । स च मिथ्या, द्वयोरेकत्वबुद्धिवत् । यदाह—' एवं सव्वे वि णया, मिच्छद्दिट्ठी सपक्खपडिवन्नत्ति । ' अपरे त्वाहुः—परस्परापेक्षा नैगमादयो नयाः, तैः परस्परापेक्षैर्यद् ज्ञानं समस्तवस्तुस्वरूपालम्बनं जन्यते तदनवग-

-

क्तिपरिज्ञानात्तत्रैव क्लृप्तप्रमाणभावेऽन्तर्भाव इति किं कल्पनीयप्रमाणभावोपमानेनेति । दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यते इत्यदृष्टकल्पनाऽर्थापत्तिरपि देवदत्तो बहिस्सन् जीवित्वे सति गृहाऽसत्त्वाऽन्यथाऽनुपपत्तेः, पीनो देवदत्तो रात्रीभोजी दिनाभोजित्वे सति पीनत्वाख्यकार्यान्यथानुपपत्तेरित्याद्यनुमानरूपत्वान्नातिरिक्तप्रमाणभावं भजते । एवं भूतलादावभावग्राहकमनुपलम्भाख्यं प्रमाणमपि भट्टाभ्युपगतं नातिरिक्तप्रमाणम्, चक्षुरादिनाऽभावग्रहात्, न चेन्द्रियमधिकरणग्रह एवोपक्षीणमिति वाच्यम्, अभावग्रहपर्यन्तं तद्व्यापारसत्त्वात् । एवं सम्भवैतिह्ये अपि पौराणिकाभ्युपगते नातिरिक्तप्रमाणरूपे, सम्भवति खार्यां द्रोणमित्याद्युदाहरणसिद्धस्य सम्भवस्यानुमानेनैव चरितार्थत्वात्, खारी द्रोणवती तद्घटितत्वात् यद्येन घटितं तत्तेन तद्वत्, यथाऽवयववान् घट इत्यनुमानरूपत्वात्तस्य । अविज्ञातप्रवक्तृकप्रवादपारम्पर्यलक्षणस्यैतिह्यस्य त्वनाप्तोक्तत्वादेव न प्रामाण्यम्, आप्तोक्तत्वेऽपि तस्य शब्दप्रमाणवदनुमान एवान्तर्भाव इति सङ्क्षेपः । यथा च बौद्धवैशेषिकाः प्रत्यक्षमनुमानञ्चेत्येवंप्रकारेण प्रमाणद्वयमभ्युपगच्छन्ति न तथा स्याद्वादिनः किन्तु प्रकारान्तरेण, तदेवाह किन्त्वित्यादि । अजन्यं जन्यं वस्तुमात्रं नित्यत्वानित्यत्वाद्यनन्तधर्मात्मकं न त्वेकान्तैकधर्मात्मकमिति गगनं नित्यमेव आत्मा नित्य एव घटपटादिरनित्य एवेत्येवमेकांशाऽवधारणात्मको नयो मिथ्या, तत्रैवकारस्यान्ययोगव्यवच्छेदपरत्वेन स्वविपर्ययेतरधर्मनिराकरणपरत्वादित्याह स च मिथ्येति । दृष्टान्तमाह द्वयोरेकत्वबुद्धिवदिति—उभयत्वावच्छेदेन घटपटोभयस्मिन् उभयत्वं वर्त्तते न त्वेकत्वमित्युभयत्वावच्छेदेनैकत्वाभाववति तत्रैकत्वबुद्धिर्यथा मिथ्यात्मिका तथा वस्तुमात्रेऽनन्तधर्मात्मकत्वं वर्त्तते न त्वेकान्तैकधर्मात्मकत्वमिति सामानाधिकरण्यसम्बन्धेन स्वेतरधर्माभावविशिष्टतद्धर्मस्याभाववति तादृशतद्धर्मप्रकारकत्वान्नयोऽपि मिथ्यात्मक इति भावः । अत्र सम्मतितर्कप्रथमकाण्डैकविंशतितमगाथापूर्वार्द्धसंवादमाह—एवं सव्वे वि णया, मिच्छद्दिट्ठी सपक्खपडिवन्नत्तीति । अत्र "अण्णुण्णनिस्सिया पुण, हवंति सम्मत्तसब्भावा ।" गा० १ । २१ । इत्युत्तरार्द्धम् । अस्योत्तरार्द्धस्य विवेचनमग्रे वक्ष्ये, एवमित्यत्र तम्हा इत्यपि—पडिवन्ना इत्यत्र पडिबद्धा इत्यपि

तवस्तुपरिच्छेदाभ्युपायत्वात् प्रमाणम्, ये पुनर्नैगमादयो निरपेक्षाः परस्परेण, ते नयाभासा इति । अत्र प्रथमपक्षे सर्वेषां धर्माणां सर्वावच्छेदेन धर्मिणि न पर्याप्तिः, किन्तु प्रत्येकमित्यनन्तधर्मात्मकेऽप्येकधर्मावधारणस्य द्वयोरेकत्वबुद्धिवन्नाप्रामाण्यम् ।

द्वितीयपक्षे च सकलनयघटितसप्तभङ्ग्यात्मकमहावाक्यैकदेशस्य नयत्वसिद्धावप्युदासीनतयाऽसङ्ग्रह इति सप्तधर्मात्मकत्वबोधकतापर्याप्त्यधिकरणं वाक्यं प्रमाणम्,

च पाठान्तरम् । एवं सव्वे वि नया मिच्छदिट्ठीत्ति–उक्तनीत्या सर्वेऽपि नया मिथ्यादृष्टयः, तत्र हेतुगर्भविशेषणमाह–" सपक्खपडिबद्धा " इति, स्व आत्मीयः पक्षोऽभ्युपगमः स्वपक्षस्तं प्रतिपन्ना अभ्युपगन्तारः, नान्यं पक्षं यतस्ततः, स्वपक्षान्यपक्षविषयव्यवच्छेदनपरत्वादित्यर्थः, पाठान्तरे तेन स्वपक्षेण प्रतिबद्धाः प्रतिहता यतस्तत इति, तेषामेकान्तधारणलक्षणनयानां मिथ्यात्वे च तत्तन्नयविषयस्यासत्यत्वं तदभिधानस्य च मिथ्यात्वमेव, ज्ञानाप्रामाण्ये सति विषयाऽसत्यत्वस्य वाक्यरचनां प्रति वाक्यार्थज्ञानस्य कारणत्वेन तत्राप्रामाण्ये सति वाक्यरूपे तत्तन्नयविषयाभिधानेऽप्रामाण्यस्य चानुभवसिद्धत्वात्, अनुमानमुद्रा चैवम्–सर्वनयवादा मिथ्यात्मकाः स्वपक्षेणैव प्रतिहतत्वात् चौरवाक्यवदिति । उक्तपक्षद्वयेऽपि यथाश्रुतार्थे दोषोद्भावनपुरस्सरं स्वाभिप्रायं ग्रन्थकारः प्रकटयति–अत्रेत्यादिना । प्रथमपक्षे इति–प्रमाणं सम्यग्ज्ञानं नयश्च मिथ्याज्ञानमिति पक्ष इत्यर्थः, किन्तु प्रत्येकमिति–किन्तु स्वीयावच्छेदकावच्छेदेनेत्यर्थः । द्वयोरेकत्वबुद्धिवन्नाप्रामाण्यमिति–द्वयोरेकत्वबुद्धेर्व्यतिरेकदृष्टान्तत्वपक्षे तस्या यथा पूर्वोक्तनीत्याऽप्रामाण्यं तथा नाऽप्रामाण्यम्, अन्वयदृष्टान्तत्वपक्षे तु यथा घटपटयोरुभयत्वधर्मावच्छेदेन द्वित्वमिवैकत्वमपि प्रत्येकधर्मावच्छेदेन वर्तत एवेति तदेकत्वबुद्धेर्नाप्रामाण्यं किन्तु प्रामाण्यमेव तथाऽनन्तधर्मात्मके वस्तुनि अनन्तधर्मवत्त्वं समुदायत्वावच्छेदेन वर्तत इति तदवगाहित्वात् प्रमाणस्य प्रामाण्यमिव स्वद्रव्यक्षेत्रकालभावरूपावच्छेदकावच्छेदेन सत्त्वादिधर्मस्य परद्रव्यक्षेत्रकालभावरूपावच्छेदकावच्छेदेन तदभावरूपासत्त्वादिधर्मस्यैकैकस्य विद्यमानत्वेनेतरांशसापेक्षतत्तदेकधर्मनिश्चयात्मकस्यापि नयस्य नाप्रामाण्यम्, किन्तु तद्वति तत्प्रकारकत्वेन प्रामाण्यमुपपन्नमेवेति नये सुनयत्वस्यापि व्यवस्थितौ प्रथमपक्षे स च मिथ्येत्येकान्तोक्तिर्न युक्तेति, तथा चैतत् पक्षे नयो दुर्नयः प्रमाणमिति त्रिविधविभागो न स्यात्, अस्ति च स सिद्धान्त इति सिद्धान्तव्याकोपोऽप्यत्र दोषः । द्वितीयपक्षे परस्परापेक्षा नैगमादयो नया इत्युक्त्या यत्र नयान्तरेण सह नयान्तरवाक्यस्य सङ्घटना तत्रैव परस्परापेक्षसत्त्वान्नयत्वमिति सप्तभङ्गीघटकीभूतैकैकधर्मप्रतिपादकभङ्गानां नयवाक्यत्वं स्यात्, सप्तभङ्गीबहिर्भूतैकैकधर्मप्रतिपादकानामितरधर्माप्रतिषेधकानामपि परस्परापेक्षत्वाभावेन नयवाक्यत्वं न स्यादिति नयत्वेन सम्मते सप्तभङ्ग्यघटकवाक्यरूप उदासीननयेऽव्याप्तिस्स्यादतः प्रमाणनयदुर्नयानां नोक्तप्रकारेण लक्षणविभागो यथाश्रुतसङ्गत इत्याह–द्वितीयपक्षे च सकलनयेत्यादि । पक्षद्वयं निराकृत्य द्वितीयपक्षं परिष्कृत्य तत्र स्वाभिमतं प्रदर्शयति–सप्तधर्मात्मकत्वबोधकतेत्यादिना ।

तदेकदेशबोधकतापर्याप्त्यधिकरणं तदितरादूषकं नयः, तदितरदूषकं तु दुर्णय इत्ययमेव लक्षणविभागो युक्तः । लौकिकलोकोत्तरप्रामाण्याप्रामाण्याभ्यां च नयस्योभयरूपत्वमभिप्रेत्य " णियवयणिज्जसच्चा " इत्यादि

अत्रोक्तप्रमाणलक्षणे पर्याप्तिनिवेशात् सप्तभङ्ग्यात्मकमहावाक्यैकदेशे प्रत्येकभङ्गे नाऽतिव्याप्तिः, पर्याप्तिसम्बन्धेन तादृशबोधकतावत्त्वाभावात् । तदेकदेशेत्यादि-सप्तधर्मात्मकवस्त्वेकदेशबोधकतापर्याप्त्यधिकरणत्वे सति तदितराऽदूषकं वाक्यं नय इत्यर्थः । अत्रापि पर्याप्तिनिवेशात् प्रमाणवाक्ये नाऽतिव्याप्तिः, तत्र पर्याप्तिसम्बन्धेन सप्तधर्मात्मकवस्त्वेकदेशबोधकताधिकरणत्वाभावात् । तदितरादूषकत्वविशेषणोपादानाच्च दुर्नये नातिव्याप्तिः । निरुक्तलक्षण एव तदितराऽदूषकमिति स्थाने तदितरदूषकमित्यस्योपादाने दुर्नयलक्षणमित्याशयेनाह-तदितरदूषकमित्यादि । उक्ते दुर्नयलक्षणे सत्यन्तमात्रन्तु सुनयेऽतिव्याप्तमिति विशेष्यविधया तदितरदूषकमित्युक्तमिति । अत्र पूर्वोक्तसुनयलक्षणे तदेकदेशबोधकतेत्युक्त्या स्यादस्तीत्यादिसप्तभङ्गा यत्र नोच्चार्यन्ते तत्र स्यादस्तीत्याद्येकैकवाक्येऽपि नयरूपे उक्तनयलक्षणसङ्गमनान्नोक्ताव्याप्तिरिति सूचितम् । अत एवेत्थञ्च तदन्तर्भूतस्य तद्बहिर्भूतस्य वाऽन्यतरभङ्गस्य प्रदेशपरमाणुदृष्टान्तेन नयवाक्यत्वमेवेत्यर्थतो लभ्यत इति नयोपदेशवृत्तौ तातपादन्यायाचार्यश्रीयशोविजयोपाध्यायैरुक्तं सङ्गच्छत इति । लौकिकलोकोत्तरप्रामाण्याप्रामाण्याभ्यामिति-सुनयात्मकबोधस्य लौकिकप्रवृत्तिमात्रौपयिकं लौकिकप्रामाण्यम्, इतरांशसापेक्षस्य तद्ग्राह्यवस्त्वेकांशस्य सत्यरूपतया तद्वति धर्मिणि तत्प्रकारकज्ञानरूपत्वात्, सिद्धान्तविचारौपयिकस्य लोकोत्तरप्रामाण्यस्याभावश्च, प्रमाणरूपसप्तभङ्ग्यात्मकमहावाक्यजन्यसप्तधर्मप्रकारकाखण्डसमूहालम्बनशाब्दबोधरूपत्वाभावात्, ताभ्यामित्यर्थः । उभयरूपत्वमिति प्रामाण्याप्रामाण्योभयरूपत्वमित्यर्थः । णियवयणिज्जसच्चा इत्यादि, "णियवयणिज्जसच्चा, सव्वणया परवियालणे मोहा । ते पुण ण दिट्ठसमओ, विभयइ सच्चे व अलिए वा ।।१।।" गा० १-२८। इति सम्मतिगता सम्पूर्णगाथा । अस्या अयमर्थः-निजकवचनीये स्वांशे परिच्छेद्ये सत्याः सम्यग्ज्ञानरूपा सर्वे एव नयाः सङ्ग्रहादयः, गजनिमीलिकान्यायेन तेषां नयानां स्वांशेतरांशाऽप्रतिक्षेपित्वेन स्वविषयस्य सत्यरूपत्वेन तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपकत्वात्तेषाम्, ननु किमेकान्ततः सङ्ग्रहादयस्सर्वे नया उक्तरूपा एवेत्याशङ्कायां तत्रानेकान्तत्वप्रतिपादनायाह-'परवियालणे मोहा' इति परविचालने परविषयोत्खनने, स्वविषयमात्रस्यैव सत्यरूपतया व्यवस्थापनेन परनयविषयस्याऽसत्यत्वेन ज्ञापने सतीति यावत्, मुह्यन्तीति मोहा मिथ्याप्रत्यया विपरीतज्ञानरूपाः, परनयविषयस्यापि सत्यत्वेनोन्मूलयितुमशक्यत्वात्, परस्पराऽविनाभावित्वेन तदभावे स्वविषयस्यापि सत्यत्वेनाऽव्यवस्थितेः, तस्मात् तानेव नयान् पुनश्शब्दस्यावधारणार्थत्वाद् नेति प्रतिषेधो विभजनक्रियायाः, दृष्टसमयः साधिगतगुरुसम्प्रदायाहितसिद्धान्ततया निर्णीतानेकान्ततत्त्वः, सत्यान् वाऽलीकान् वा न विभजते, अपि त्वितरनयविषयसव्यपेक्षतया 'अस्त्येव द्रव्यार्थतः' इत्येवं भजनया

प्रतिपाद्यते, अनुभवरूपत्वं चाभिप्रेत्याभ्यधिष्महि, "अयं न संशयः कोटे-रैक्यान्न च समुच्चयः । न विभ्रमो यथार्थत्वा-दपूर्णत्वाच्च न प्रमा ॥ १ ॥ न समुद्रोऽसमुद्रो वा, समुद्रांशो यथोच्यते । नाप्रमाणं प्रमाणं वा,

---

स्वनयाभिप्रेतमर्थं सत्यमेवावधारयति, अयम्भावः-नयप्रामाण्याप्रामाण्ययोर्नैकान्तत्वमवधारयति किन्त्वितरांशसापेक्षो यदंशो यदपेक्षया यत्र तत्र तस्य तदपेक्षया ग्राहकत्वे तत्र नयानां प्रामाण्यम्, अन्यथा ग्राहकत्वे चाऽप्रमाण्यमित्येवमनेकान्तत्वमेव निश्चिनोति, अत एव सुनयत्वं दुर्नयत्वं च तत्र गीयते सैद्धान्तिकैरिति । अभ्यधिष्महीति-नयोपदेश इति देशः । " अयमिति " अयं नयात्मको बोधः संशयो न, तत्र हेतुमाह-कोटेरैक्यादिति-एककोटिकत्वादित्यर्थः-एकप्रकारतामात्रनिरूपकत्वादिति भावः । संशयो हि विरुद्धकोटिद्वयप्रकारकः, तन्निष्ठप्रकारता-निरूपिता सती तद्विरुद्धकोटिनिष्ठप्रकारतानिरूपिता या धर्मिनिष्ठैकविशेष्यता तन्निरूपक इति पर्यवसितोऽर्थः, न चायं तथेति न तदात्मकः, अत्रानुमानप्रयोगश्चैवम्-नयात्मको बोधः संशयो न भवति, एकप्रकारतामात्रनिरूपकत्वात्, उभयसम्प्रतिपन्ननिश्चयवदिति । चकार-स्याप्यर्थकत्वात् समुच्चयोऽपि न, यद्यपि सकृदुच्चरितश्शब्दस्सकृदेवार्थं गमयतीति न्या-यात् कोटेरैक्यादित्यस्य नात्र पुनरन्वयस्तथाप्यावृत्त्याऽस्य हेतुविधयाऽन्वयः, समुच्चयो ह्येकस्मिन् धर्मिण्यविरुद्धनानाधर्मप्रकारकनिश्चयरूपः, अर्थात् भिन्नप्रकारतानिरूपितैकधर्मिनिष्ठ-भिन्नविशेष्यतानिरूपकनिश्चयात्मकस्स, न चायं तथा, एकप्रकारतामात्रनिरूपकत्वादिति न तदात्मकः । विभ्रमो न, तत्र हेतुमाह-यथार्थत्वादिति-जीवादिधर्मिणस्सत्त्वासत्त्वाद्यनन्तधर्म-शालित्वेन सत्त्वस्यासत्त्वस्यापि च जीवधर्मत्वेन जीवस्सन्निति द्रव्यार्थिकनयस्यापि सत्त्ववति जीवे सत्त्वप्रकारकत्वलक्षणयथार्थत्वात्, एवं जीवोऽसन्निति पर्यायार्थिकनयस्याप्यसत्त्ववति जीवे-ऽसत्त्वप्रकारकत्वलक्षणयथार्थत्वादित्यर्थः । नयः प्रमात्मकोऽपि न, तत्र हेतुः-अपूर्णत्वादिति-एकधर्मिविशेष्यकसत्त्वासत्त्वादिसकलधर्मप्रकारकाखण्डसम्पूर्णबोधरूपत्वाभावात्, अनेनाऽलौकिक-प्रामाण्याभाव आवेदितः, लौकिकं तु प्रामाण्यं तद्वति तत्प्रकारकत्वरूपं न बाधितमिति न व्यवहारविरोध इत्यर्थः । उक्तमेवार्थं लौकिकदृष्टान्तेन समर्थयति **न समुद्र इति** । समुद्रांशो यदि समुद्रस्तर्हि तदन्यांशा अपि तद्वत्समुद्रास्स्युः, तथा च सत्येकस्यापि समुद्रस्य यावन्तोऽशास्तावत्सङ्ख्याकत्वं स्यादिति भावः । **असमुद्रो वेति**-समुद्रांशो यदि न समुद्रस्तर्हि तदेकांशवत्तदन्यांशानामप्यन्त्यांशान्तानामसमुद्रत्वापत्त्या क्वचि-दपि समुद्रत्वव्यवहारो न स्यात्, पूर्वपूर्वांशविशिष्टान्त्यांशस्यैव समुद्रत्वमित्यपि न, प्रत्येकां-शानामसमुद्रत्वे तस्यापि समुद्रत्वाभावादिति भावः । नाप्रमाणमिति-प्रधानतया वस्त्वेक-देशग्राही घटोऽस्तीत्याद्याकारो नयो ह्येकदेशेन संवादिप्रवृत्तिजनकत्वेन यथार्थत्वान्नाप्रमाण-मित्यर्थः । न प्रमाणमिति-अत्र कार्त्स्न्येन संवादिप्रवृत्तिजनकत्वाभावादिति हेतुरूह्यः, सा च प्रवृत्तिरशेषधर्माणामस्तित्वाभिन्नत्वेनास्तित्वरूपेण वस्तुगतसकलधर्मावगाहिघटस्स्यादस्तीत्या-

प्रमाणांशस्तथा नयः ॥ २ ॥ ” इत्यादि । यद्येवं भ्रमप्रमासंशयसमुच्चयव्यावृत्तं नयज्ञानं तदा कथं तत्र शब्दप्रमाणान्वयव्यतिरेकानुविधायित्वमिति चेत्, न, तथात्वेऽपि तत्त्वमस्यादिवाक्यजन्यज्ञाने वेदान्तिनामिव व्यञ्जनावृत्तिजन्यज्ञाने चालङ्कारिकाणामिव तात्पर्यवैचित्र्येण वैचित्र्यस्याप्रत्यूहत्वात्, शाब्दत्वजात्यनतिक्रमेऽपि च श्रुतचिन्ताभावनाज्ञानानां शब्दस्य दीर्घदीर्घतरव्यापारेणावान्तरजातिवैचित्र्यं शास्त्रसिद्धमेव, शब्दजप्रत्यक्ष इव वा शब्दजन्यज्ञाने वैचित्र्यं भावनीयम् । अनन्तधर्मात्मकत्वप्रतिपत्तिविशिष्टे एकधर्मा-

कारकज्ञाने सत्येव भवति, न च कोऽपि नयस्तथाकारः, येन प्रमाणं स्यादिति भावः । नन्वप्रमाणनिषेधे नयः प्रमाणमेव स्यात्, “द्वौ नञौ प्रकृतं गमयतः” इति न्यायात्, प्रमाणनिषेधे नयोऽप्रमाणं स्यात्, परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायाद्, गत्यन्तराभावात्; सकृदेकस्य प्रमाणत्वाप्रमाणत्वोभयनिषेधाऽसम्भवादित्याशङ्कायां गत्यन्तरमाह–**प्रमाणांशस्तथा नय इति** । एतच्चाग्रे विवेचयिष्यते । ननूक्तदिशा प्रमाद्यनात्मकस्य नयस्य प्रमाणतो भेदाभ्युपगमे शब्दजन्यशाब्दबोधात्मकप्रमाणभिन्नत्वमपि तस्येति शाब्दप्रमाणभिन्नस्य तस्य शब्दान्वयव्यतिरेकानुविधायित्वमपि न स्यात्, तज्जन्यतावच्छेदकवैजात्याभाववति तदन्वयव्यतिरेकानुविधायित्वस्यान्यत्रादृष्टेरित्याशयेन शङ्कते–**यद्येवमिति**, लौकिकवाक्यतः परोक्षात्मकमेवोपजायते शाब्दज्ञानमिति तादृशज्ञानवृत्तिवैजात्यशून्यमपि निर्विकल्पकब्रह्मसाक्षात्कारस्वरूपं ज्ञानं तत्त्वमस्यादिवाक्यतो यथा वेदान्तिनाम्मते जायते यथा वाऽलङ्कारिकाणां मते विभावानुभावसञ्चारिभिरभिव्यञ्जकैस्सहकृतेन शब्देन व्यञ्जनावृत्त्याऽखण्डानन्दब्रह्माकारवृत्तिसहोदरः स्थायिभावावबोधो लौकिकप्रमाणादिव्यतिरिक्त एव जायते, शब्दजन्यत्वेऽपि तत्र यथा विचित्रतात्पर्यादिघटितसामग्रीप्रयोज्यं वैजात्यं, तथा प्रमाणनययोः शाब्दत्वाऽविशेषेऽपि तदवान्तरवैजात्यं स्यादेवेति समाधत्ते **नेति** । **तथात्वेऽपि** भ्रमप्रमासंशयादिभिन्नत्वेऽपि । ननु प्रमाणनययोः शाब्दत्वाविशेषे कथमुक्तवैचित्र्यमन्यत्रादृष्टमभ्युपेयमित्यत आह **शाब्दत्वजात्यनतिक्रमेऽपि चेति** । शब्दात्प्रथमतश्श्रुतज्ञानं यथा श्रुतार्थानुसारि समुत्पद्यते तदनन्तरं चिन्ताज्ञानं ततो विशिष्टभावनया भावनाज्ञानं तेषां यथा शाब्दत्वाऽविशेषेऽपि तदवान्तरवैचित्र्यं शास्त्रप्रसिद्धं नापलपितुं शक्यं, शृणोमि चिन्तयामि भावयामीति विचित्रानुभवात्, तथा प्रकृतेऽपीत्याशयः । यथा वेदान्तिमते इन्द्रियजप्रत्यक्षे घटमहं जानामीत्यादौ घटत्वादिवैशिष्ट्यावगाहित्वेन सविकल्पकत्वमेव, तत्त्वमसीत्यादिशब्दजप्रत्यक्षे च सर्वज्ञत्वादिविशिष्टचैतन्यवाचकतत्पदस्याल्पज्ञत्वादिविशिष्टचैतन्यवाचकत्वंपदस्योक्तविशेषणविनिर्मुक्ते चैतन्यमात्रे तात्पर्यसत्त्वेन लक्षणया तन्मात्रस्यैवोक्तवाक्येन संसर्गानवगाहिबोधान्निर्विकल्पकत्वमेवेति वैचित्र्यं तथा शब्दजज्ञानेऽपि विभिन्नसामग्रीप्रयोज्यं नयत्वप्रमाणत्ववैचित्र्यं नानुपपन्नमित्याह–**शब्दजप्रत्यक्ष इव वेति** । स्वनिमित्तापेक्षयैकधर्मावधारण एव नयत्वं न त्वेकधर्मावधारणमात्रे, अपेक्षामन्तरेणैकधर्मावधारणे दुर्नयत्वस्यैव भावादित्याह

त्मकत्वावधारणं नय इति मतेऽप्यनेकान्तप्रतिपत्तिमत आसत्तिपाटवाभ्यासप्रयोजनार्थित्वान्यतरेणैकधर्मावधारणे न नयत्वम्, किन्त्वपेक्षयैकधर्मावधारण इति प्रमिणोमि नयामीत्यनुभवसाक्षिको विषयताविशेषः प्रमाणनयभेदकोऽवश्यमभ्युपगन्तव्य इति दिक् ॥ ६ ॥

इति–प्रमातरीति शेषः, एतेनैकान्तप्रतिपत्तिमतः पुंसो यदेकधर्मावधारणं तद् दुर्नय एवेत्यावेदितम्, अपेक्षयैकधर्मावधारणं स्याद्वादिन एवेति नयलक्षणे स्वनिमित्तापेक्षाप्रवेशस्याऽऽवश्यकत्वे अनन्तधर्मात्मकत्वप्रतिपत्तिविशिष्टे इत्यस्य लक्षणे प्रवेशस्य नावश्यकतेत्याशयेन मतेऽपीत्युक्तम्, आसत्तिपाटवाभ्यासेति तत्र पदद्वयादीनामव्यवधानमासत्तिः । कर्मक्षयोपशमविशेषजन्यनिपुणताविशेषः पाटवम्, अभ्यासः पुनः पुनरावर्त्तनमित्यर्थः । अपि च प्रमिणोमि नयामीत्यनुभवसिद्धविषयताविशेषस्यावश्यकत्वे स एव प्रमाणनयभेदकः, लाघवादित्याह प्रमिणोमीति–प्रमिणोमीत्यनुभवसिद्धो विषयताविशेषो प्रमाणस्य लक्षणम्, नयामीत्यनुभवसिद्धो विषयताविशेषो नयस्य लक्षणं, तल्लक्षणभेदाल्लक्ष्यीभूतप्रमाणनयभेद इति भावः ॥ ६ ॥

किं चान्यदित्यनेनोत्तरसूत्रं सम्बन्धयति । नैतावतैव विस्तराधिगमस्तत्त्वाना, यतोऽन्यदपि विस्तराधिगतौ कारणमस्ति, किं तत् ? निर्देशादि, के पुनर्निर्देशादय इत्यत आह

## सूत्रम्- निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ १ ॥ ७ ॥

(भाष्यम्) एभिश्च निर्देशादिभिः षड्भिरनुयोगद्वारैः सर्वेषां भावानां जीवादीनां विकल्पशो विस्तरेणाधिगमो भवति । तद्यथा–निर्देशः को जीवः ? औपशमिकादिभावयुक्तो द्रव्यं जीवः । सम्यग्दर्शनपरीक्षायां किं सम्यग्दर्शनं द्रव्यम्, सम्यग्दृष्टिजीवोऽरूपी नो स्कन्धो नो ग्रामः ॥ स्वामित्वं–कस्य सम्यग्दर्शनमित्येतदात्मसंयोगेन परसंयोगेनोभयसंयोगेन चेति वाच्यम् । आत्मसंयोगेन जीवस्य सम्यग्दर्शनम् । परसंयोगेन जीवस्याजीवस्य जीवयोरजीवयोर्जीवानामजीवानामिति विकल्पाः । उभयसंयोगेन जीवस्य नोजीवस्य जीवयोरजीवयोर्जीवानामजीवानामिति विकल्पा न सन्ति, शेषाः सन्ति । साधनं–सम्यग्दर्शनं केन भवति ? । निसर्गादधिगमाद्वा भवतीत्युक्तम् । तत्र निसर्गः पूर्वोक्तः । अधिगमस्तु सम्यग्व्यायामः । उभयमपि तदावरणीयस्य कर्मणः क्षयेणोपशमेन क्षयोपशमाभ्यामिति ॥ अधिकरणं त्रिविधं आत्मसन्निधानेन परसन्निधानेनोभयसन्निधानेनेति वाच्यम् । आत्मसन्निधानमभ्यन्तरसन्निधानमित्यर्थः । परसन्निधानं बाह्यसन्निधानमित्यर्थः । उभयसन्निधानं बाह्याभ्यन्तरसन्निधानमित्यर्थः । कस्मिन्सम्यग्दर्शनं–आत्मसन्निधाने तावत् जीवे सम्यग्दर्शनं जीवे ज्ञानं जीवे चारित्रमित्येतदादि । बाह्यसन्निधाने जीवे सम्यग्दर्शनं नोजीवे सम्यग्दर्शनमिति यथोक्ता विकल्पाः । उभयसन्निधाने चाप्यभूताः सद्भूताश्च यथोक्ता भङ्गविकल्पा इति ॥ स्थितिः–सम्यग्दर्शनं कियन्तं कालम् । सम्यग्दृष्टिर्द्विविधा–सादिः सपर्यवसाना सादिरपर्यवसाना च । सादिसपर्यवसानमेव च सम्यग्दर्शनम् । तज्जघन्येनान्तर्मुहूर्तं उत्कृष्टेन षट्षष्टिः सागरोपमाणि साधिकानि । सम्यग्दृष्टिः सादिरपर्यवसाना । सयोगः शैलेशीप्राप्तश्च केवली सिद्धश्चेति ॥ विधानं हेतुत्रैविध्यात् क्षयादित्रिविधं सम्यग्दर्शनम् । तदावरणीयस्य कर्मणो दर्शनमोहनीयस्य च क्षयादिभ्यः । तद्यथा–क्षयसम्यग्दर्शनम्, उपशमसम्यग्दर्शनम्, क्षयोपशमसम्यग्दर्शनमिति । अत्र चौपशमिकक्षायोपशमिकक्षायिकाणां परतः परतो विशुद्धिप्रकर्षः ॥ किञ्चान्यत् ।

(यशो० टीका) निर्देशस्वामित्वेत्यादि । पूर्वं सम्बन्धवाक्यमेव समर्थयति—एभिश्चेत्यादिना । एभिर्निर्देशादिभिः षड्भिरनुयोगद्वारैर्व्याख्याङ्गैः, सर्वेषामित्यनेन व्यापितामाह—भावानां प्रमाणबोधितानां, तेन सांख्याद्यभिमतनिरासः । जीवादीनां तत्त्वानां श्रुतज्ञानप्रयुक्तश्रद्धाविषयाणां, तेनाप्रज्ञाप्यभावनिरासः । विकल्पशो विविधप्रकारैः, विस्तरेण शब्दव्यासेन, अधिगमो भवतीत्यनुवर्त्य व्याख्येयम् । सम्बन्धं लगयित्वा सूत्रं व्याचष्टे तद्यथेत्यादि । यथैते भाव्यन्ते निर्देशादयस्तथा कथ्यन्ते, निर्देशमुपक्रम्य को जीव इत्युद्देशवाक्यमुच्चारयतो नाप्रस्तुतोपन्यासः, उद्देशवाक्यमन्तरेण निर्देशवाक्यस्य कर्तुमशक्यत्वात् । सामान्यार्थाभिधानमुद्देशः, तद्विशेषप्रतिपिपादयिषापूर्वकं वचनं निर्देशः । 'अविसेसियमुद्देसो विसेसिओ होइ निद्देसो' त्ति भगवद्भद्रबाहुवचनात् । तत्र को जीव इति द्रव्यगुणान्यतरनिष्ठलक्षणविधेयताकजिज्ञासया प्रश्ने औपशमिकादिभावयुक्तो द्रव्यं जीव

सप्तमसूत्रमवतारयति किं चान्यदित्यनेनेत्यादिना । नैतावतैवेति—न प्रमाणनयमात्रेणैव, न केवलं प्रमाणनयैरेवेति यावत् । निर्देशस्वामित्वेत्यादिसूत्रे निर्देशादीनामितरेतरयोगे द्वन्द्वसमासः, एषां कारणत्वं तु करणार्थकतृतीयाबहुवचनार्थे तसिविधानाद् ज्ञेयम् । अत्र निर्देशपूर्वकत्वात्स्वामित्वादिनिरूपणस्य पूर्वं निर्देशग्रहणं, स्वामित्वादीनां तु सम्यग्दर्शनादिकं वस्तु कस्य स्वामिनः केन साध्यते कस्मिन् तिष्ठति कियच्चिरमवतिष्ठते कतिविधं चेति प्रश्नवशात्क्रम इति । षड्भिरिति—अनेन निर्देशादित्वव्यापकषट्त्वसङ्ख्याविधानेनाधिकसङ्ख्याव्यवच्छेदः कृत इति । ननु किं कतिपयानां भावभूतजीवादितत्त्वानां निर्देशादिभिर्व्याख्याप्रकारैरधिगमो भवति किंवा निरशेषाणामिति चेत्, उच्यते—निरशेषाणामिति । तदेवाह—सर्वेषामित्यनेन व्यापितामाहेति । भावानामित्यस्य प्रमाणबोधितानामिति विशेषणोपादानस्य फलमाह तेनेत्यादि । साङ्ख्यवैशेषिकनैयायिकाद्यभ्युपगतपञ्चविंशतिसप्तषोडशादितत्त्वानामप्रामाण्यं ज्ञापितमित्यर्थः । जीवादीनां तत्त्वानां कथम्भूतानामित्यत आह—श्रुतज्ञानप्रयुक्तश्रद्धाविषयाणामिति । एतद्विशेषणोपादानफलमाह—तेनाप्रज्ञाप्यभावनिरास इति—कृत इति शेषः, अप्रज्ञापनीयास्सद्भूता अप्यनन्ता भावाः श्रुतज्ञानेन प्रतिपादयितुं न शक्यन्त इति तेषां श्रुतज्ञानाप्रतिपाद्यानां निर्देशादिभिरधिगमोऽपि श्रोतृजनानां कर्तुमशक्य एव परमोपकारिभिस्सूत्रकारैर्भगवद्भिरिति तेन तन्निषेधः कृत इति भावः । अधिगमो भवतीत्यनुवर्त्य व्याख्येयमिति—अनुवर्तनं पूर्वसूत्रोक्तस्यैवेत्यधिगमपदस्य षष्ठसूत्रोक्तत्वादनुवर्त्य तद् व्याख्येयम्, पूर्वसूत्रानुक्तस्य भवतीत्यस्य तु सर्वं हि वाक्यं क्रियायां परिसमाप्यत इति भाष्यवचनानुसारि "यत्रान्यत् क्रियापदं न श्रूयते तत्राप्यस्तिर्भवन्ती वर्तमानापरः प्रयुज्यते" इति वार्त्तिकवचनमनुसृत्य अत्राध्याहारः कर्त्तव्य इति भावः । "अविसेसियमुद्देसो विसेसिओ होइ निद्देसो" "त्ति । एमेव य निद्देसो अट्ठविहो सो वि होइ णायव्वो । अविसेसियमुद्देसो विसेसिओ होइ निद्देसो । १४२ ।" इत्यावश्यकनिर्युक्तिसम्पूर्णगाथा । तत्र को जीव इति द्रव्यगुणान्यतरनिष्ठलक्षणविधेयताकजिज्ञासयेति—अ

इति द्रव्यार्थिनये उत्तरं, द्रव्यमिति क्तप्रत्ययार्थाश्रयविवरणम्, अन्यथा विधेयप्राधान्येन युक्तमित्यापत्तेः, न च धर्मस्यैव विधेयता युक्ता, वह्निमानित्यत्र तादात्म्येन वह्निमत इव प्रकृते औपशमिकादिभावादिष्ट-द्रव्यस्य विधेयताया युक्तत्वात्, पर्यायार्थिकनये तु कर्तृप्रत्ययस्य भावपरत्वादौपशमिकादिभावयोगो जीव इत्येवोत्तरं द्रष्टव्यम् । तन्मते पर्यायातिरिक्तजीवस्य बौद्धस्यैवानूद्यत्वात् । उभयनयावलम्बने तु न केवलं द्रव्यम्, नापि केवला भावाः, किन्तूभयात्मकं जीववस्तु प्रतिपत्तव्यम् । तथा च प्रकृतानुपूर्वी-ज्ञानस्य नियमत उभयविधविधेयताकशाब्दबोधहेतुत्वं कल्पनीयम् । इत्थं च प्रमाणं लक्ष्यं प्रमाकरणत्वं लक्षणमित्येकान्तानिर्धारणमयुक्तम्, प्रमाकरणं लक्षणमित्यस्यापि वक्तुं युक्तत्वात्, सङ्करपरिहारप्रकारश्च

त्वस्यौपशमिकादिभावात्मकगुणत्वस्य वा जीवलक्षणत्वसामान्यधर्मव्याप्यावान्तरधर्मरूपत्वेन तत्प्रकारकज्ञानविषयिणी जीवस्य किमुक्तद्रव्यरूपं किं वोक्तगुणरूपं लक्षणमित्याकारिका या जिज्ञासा तया को जीव इति प्रश्न इत्यर्थः । **औपशमिकादिभावयुक्तो द्रव्यं जीव इति**—अत्रौपशमिकादिभावयुक्तो जीव इति लक्षणवाक्यम्, तत्रौपशमिकादिभावयुक्त इति लक्षणनिर्देशः, जीव इति च लक्ष्यनिर्देश इति बोध्यम् । युक्त इत्यत्र क्तप्रत्ययार्थ आश्रयः, स च द्रव्यमेवेति प्रतिपादयितुं द्रव्यमित्युक्तं, न तु तल्लक्षणघटकं, तथा सति तस्य विधेयत्वेन तद्विशेषणतया युक्तमिति स्यात्, विशेष्ये यल्लिङ्गं तद्विशेषणेऽपीति न्यायात्, न तु युक्त इति स्यादित्याशयेनाह—**द्रव्यमिति क्तप्रत्ययार्थाश्रयविवरणमिति** । न चेत्यस्य युक्तेत्यनेनान्वयः, **धर्मस्यैवेति**—औपशमिकादिभावस्यैवेत्यर्थः । निषेधे हेतुमाह **वह्निमानित्यत्रेत्यादिना**, **कर्तृप्रत्ययस्य भावपरत्वादिति**—युक्त इत्यत्र कर्त्तरि क्तप्रत्ययस्य भावरूपार्थे विहितत्वादित्यर्थः । ननु पर्यायनये जीवस्यैवाऽभावेन कथमुद्देश्यत्वमित्याशङ्कायामाह **तन्मत इत्यादि** । **बौद्धस्यैवानूद्यत्वादिति**—बुद्ध्या कल्पितस्यालयविज्ञानसञ्ज्ञकस्य पूर्वापरज्ञानसन्तानरूपस्योद्देश्यत्वादित्यर्थः । **उभयनयावलम्बने इति**—प्रमाणपर्यालोचनायामित्यर्थः । **उभयात्मकमिति** द्रव्यौपशमिकादिभावरूपोभयात्मकमित्यर्थः । प्रमाणार्पणया द्रव्यौपशमिकादिभावोभयात्मकं जीवाख्यवस्त्विति सिद्धौ को जीव इति प्रश्नोत्तरस्वरूपौपशमिकादिभावयुक्तो द्रव्यं जीव इति भाष्यवाक्यज्ञानस्योभयत्वनिष्ठप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यत्वाभिन्नप्रकारतानिरूपिता योभयत्वनिष्ठप्रकारतानिरूपितौपशमिकादिभावत्वावच्छिन्नविशेष्यत्वाऽभिन्नप्रकारतानिरूपिता जीवत्वावच्छिन्नविशेष्यता तन्निरूपकशाब्दबोधहेतुत्वं पर्यवस्यति, तत उक्तानुपूर्वीज्ञानेन द्रव्यनिष्ठप्रकारतानिरूपितत्वे सत्यौपशमिकादिभावनिष्ठप्रकारतानिरूपिता या जीवनिष्ठविशेष्यता तन्निरूपकशाब्दबोधो भवतीत्याशयेनाह **तथा च प्रकृतानुपूर्वीज्ञानस्येत्यादि** । **इत्थं चेति**—अभेदेऽप्युद्देश्यविधेयभावस्वीकारे चेत्यर्थः । **वक्तुं युक्तत्वादिति**—प्रमाकरणत्वधर्मस्य स्वरूपसम्बन्धेन प्रमाणरूपलक्ष्यगतत्वाद्यथा लक्षणत्वं तथा प्रमाकरणरूपधर्मिणोऽप्यभेदसम्बन्धेन प्रमाणरूपलक्ष्यमात्रे सत्त्वाल्लक्षणत्वं सम्भवतीति भावः । **सङ्करपरिहारप्रकारश्चेत्यादि**, यथा पृथिव्याः पृथिवीत्व-

य एव लक्ष्यतावच्छेदकलक्षणयोः स एव लक्ष्यलक्षणयोरिति विभावनीयं **नैगमनयनिष्णातैः** । अत्र यो नयाभ्यन्तरस्वसमयविचारः स प्रपञ्चितो "जीवो गुणपडिवन्नो" इत्याद्यावश्यकग्रन्थमुपन्यस्य **महाभाष्यतर्कोपबृंहिताभिर्युक्तिभिरनेकान्तव्यवस्थायामस्माभिरिति** तत एवावधारणीयः। स्वामित्वादयो जीवेऽप्यूह्या अनया दिशेति न दर्शितवान् **भाष्यकारः**, वयं तु दर्शयामः । स्वामी प्रभुः, तद्भावः स्वामित्वम् । तत्र जीवः कस्य प्रभुः, जीवस्य वा के प्रभव इति प्रश्ने उत्तरं–जीव एको धर्मादीनामस्तिकायानां स्वामी, यतः सर्वेषु मूर्च्छां याति, सर्वानुपलभते, कांश्चित्परिभुङ्क्ते, शरीरतया चादत्ते । जीवस्याप्यधिकृतस्य सर्वे जीवा अन्ये तन्मूर्च्छादिकारिणः स्वामिनो भवन्ति । साध्यते येन तत्साधनम् । केनात्मा साध्यते ? उच्यते–नान्येनासौ, सततं समव-

वत्त्वमित्यस्य गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमित्यस्य वा लक्षणत्वे परार्थानुमानस्थले उपनयवाक्ये उद्देश्यताऽवच्छेदकविधेययोरैक्यापत्त्या विरूपोपस्थितिरूपकारणाभावात् ततश्शाब्दबोधानुपपत्तिस्स्यादिति तन्निवारणं स्वरूपतः पृथिवीत्वे लक्ष्यतावच्छेदकत्वम्, उक्तलक्षणे जातेरुल्लिख्यमानत्वेन आद्ये लक्षणे पृथिवीत्वत्वेन द्वितीये च तादृशजातित्वेन लक्षणत्वं स्वीकृत्य कृतं तथाऽस्मन्मतेऽपि प्रमाणे स्वरूपतो लक्ष्यत्वं प्रमाकरणे लक्षणत्वं प्रमाकरणत्वेनेत्येवं लक्ष्यलक्षणयोरभेदपरिहारप्रकारस्समान एवेति भावः ॥ "जीवो गुणपडिवन्नो" इति जीवो गुणपडिवन्नो, णयस्स दव्वट्ठियस्स सामइयं । सो चेव पज्जवट्ठिय नयस्स जीवस्स एस गुणो ॥ २६४३ ॥ इति सम्पूर्णगाथा । अस्या अयमर्थः द्रव्यार्थिकनयस्याऽभेदवादितयाऽनुगतद्रव्यमात्रस्यैवाभ्युपगन्तृत्वेन तन्मते आत्मनि ज्ञानं पटे रूपमित्यादिप्रतीतिश्चित्रे निम्नोन्नतत्वप्रतीतिवद् भ्रान्तैवाऽभ्युपगतेति परमार्थतो द्रव्यव्यतिरिक्तगुणा न सन्त्येवेति गुणानामौपचारिकत्वेन द्रव्यस्यैव प्राधान्येन गुणविशिष्ट आत्मा सामायिकम्, न तु समभावगुणलक्षणपर्यायात्मकं तत् । पर्यायार्थिकनयस्य तु भेदवादित्वेनातीतस्य विनष्टत्वेनाऽनागतस्य चाऽनुत्पन्नत्वेनार्थक्रियाकारित्वाऽभावेनासद्रूपतयाऽभ्युपगमात्, तन्मते न नित्यं द्रव्यं किञ्चित्परमार्थतोऽस्ति, किन्तु तत्तत्क्षणवर्तिपर्यायात्मकमेव वस्तु सत् अर्थक्रियाकारित्वात्, नन्वेवं तर्हि कथमात्मनो ज्ञानादिगुणो घटस्य रूपादिगुण इत्यादि प्रतीतिरिति चेत्, उच्यते समाधिः, तैलस्य धारा राहोश्शिर इत्यादिप्रतीतिवत्सा भ्रान्तैव, यतः तैलधारातिरिक्तं किमपि न तैलम्, राह्वतिरिक्तं न शिर इतिवज्ज्ञानातिरिक्तं नात्मद्रव्यं किमप्यस्ति, षष्ठीविभक्तिस्त्वभेद एव, तथा च द्रव्यस्यौपचारिकत्वात्पर्यायस्य च प्राधान्यात्पर्यायार्थिकनयमते समभावगुणात्मकमेव सामायिकमिति भावः । यद्विषयकमूर्च्छावान् यः स तत्स्वामी यथा धनस्वामी पुमान्, सर्वद्रव्यविषयकमूर्च्छावाँश्चात्मा, तस्मात्तत्स्वामीत्याह यतः सर्वेष्वित्यादि । धर्माधर्माकाशकालात्मनाममूर्तित्वात्परिभोगाऽसम्भवादाह कांश्चित्परिभुङ्क्ते इति कांश्चित् पुद्गलान् परिभुङ्क्ते इत्यर्थः । तथा च सर्वेषां जीवः स्वामीति भावः । सततं समवस्थितत्वादिति–यो नित्य-

स्थितत्वात्, बाह्यान् वा पुद्गलानपेक्ष्य देवादिजीवः साध्यते, तैस्तत् स्थानं नीयत इति यावत्। अधिकरणमाधारः। कस्मिन्नात्मा, निश्चयनये सर्वस्य स्वात्मप्रतिष्ठत्वात् स्वात्मनि, व्यवहारनये शरीराकाशादौ। स्थितिरात्मरूपादनपगमः। कियन्तं कालमेष जीवभावेनावतिष्ठते। भवानननङ्गीकृत्य सर्वस्मिन् काले। देवादीस्तु भवानङ्गीकृत्य यावती यत्र स्थितिस्तावन्तं कालं तत्रावतिष्ठते, विशेषरूपेण सामान्यसत्तेयं। विधानं प्रकारः, कति प्रकारा जीवाः, त्रसस्थावरादिभेदाः। एवं शेषा अपि सिद्धान्तानुसारेण वाच्याः। अथ यदर्थं शास्त्रप्रवृत्तिस्तत्रापि योजनां निर्देशादीनां कुर्वन्नाह- सम्यग्दर्शनपरीक्षायामित्यादि। यदा सम्यग्दर्शनं परीक्ष्यते, तदा सम्यग्दर्शनं किं द्रव्यं गुण इति प्रश्ने, निर्देशोऽयं द्रव्यं तत्, ये जीवेन शुभाध्यवसायेन विशोध्य पुद्गलाः प्रतिसमयमुपभुज्यन्ते, मुख्यया तु वृत्त्या रुचिरात्मपरिणामो ज्ञानलक्षणः श्रद्धासंवेगादिरूपः सम्य-

तया सदा समवस्थितः स न केनापि साध्यत इति भावः। अनुयोगद्वारसूत्रे वसतिदृष्टान्ते "तिण्हं सद्दणयाणं आयभावे वसइ" इत्युक्तेश्शब्दादिनयत्रयाणां मते सर्वोऽपि स्वस्वरूपे वसति, अन्यस्यान्यत्र वृत्त्ययोगादित्येवं स्वस्वरूपस्यैव स्वाधारत्वात् स्वस्मिन्नात्मा तिष्ठतीत्यभिप्रायेणाह- निश्चयनये सर्वस्येत्यादि, शरीराकाशादाविति- स्वशरीरे येषु चाकाशप्रदेशेष्ववगाढस्तेष्वित्यर्थः। जीवो जीवत्वेन कियन्तं कालमवतिष्ठत इति प्रश्ने देवादिभवापेक्षयोत्तरदानं नोचितमित्यत आह- विशेषरूपेण सामान्यसत्तेयमिति देवादिभवविशिष्टजीवत्वेन रूपेण जीवसामान्यस्य स्वस्वरूपादप्रच्युतिर्देवादिभवस्थैकजीवायुःकालमाननियतेति तत्तद्भवविशिष्टजीवत्वेन रूपेण जीवसामान्यस्य सत्तेयं तत्तद्भवायुःकालमाननियता प्रदर्शितेत्यर्थः। आयुर्वै घृतं, नड्वलोदकं पादरोग इत्यादाविव कारणे कार्योपचारं कृत्वाह- द्रव्यं तदिति। द्रव्यस्याप्यनेकविधत्वान्नान्यरूपं तद् ग्राह्यम्, किन्तु ये जीवकर्तृकशुभाध्यवसायकरणकविशोधनाक्रियोत्तरकालभाविवेदनाक्रियाकर्मसम्यक्त्वमोहनीयपुद्गलास्तल्लक्षणमित्याशयेनाह- ये जीवेनेत्यादि। अयम्भावः- शोधिता हि मिथ्यात्वपुद्गला यथावस्थिततत्त्वरुच्यध्यवसायरूपस्य सम्यक्त्वस्यावारका न भवन्ति, यथा स्वच्छाभ्रपटलगृहं प्रदीपस्य रवेरपि च काञ्चिदावृतिं न करोति, उक्तञ्च- "तद्यथेह प्रदीपस्य, स्वच्छाभ्रपटलैर्गृहम्। न करोत्यावृतिं काञ्चि देवमेतद्रवेरपि ॥ १ ॥" इति। तद्वत्प्रकृतेऽपि, अतस्ते सम्यग्दर्शनस्य निमित्तभूताः, तदुपष्टम्भजन्यत्वात्तस्येति कारणे कार्योपचारात्तदात्मकं द्रव्यं सम्यग्दर्शनमुच्यते। परमार्थतस्तु जिनप्रज्ञप्तसर्वद्रव्यसर्वपर्यायविषयकश्रद्धानलक्षणं सम्यग्दर्शनम्, नयविचारणया पुनर्द्रव्यार्थिकनयस्य मते श्रद्धासंवेगनिर्वेदादिगुणपरिणत आत्मैव सम्यग्दर्शनं, तस्यैव कालत्रयानुगतत्वेन तात्त्विकरूपत्वात्, न तूक्तगुणरूपं, तन्मते गुणानामौपचारिकत्वात्, "आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा" इत्यादि न्यायात्तेषामुत्पादव्ययशालित्वेन पूर्वोत्तरकालयोरनुपलम्भेन न सत्त्वमिति वर्तमानकालेऽप्यसद्रूपत्वात्। ननु यदि द्रव्यभिन्ना गुणा न सन्त्येव तर्हि रूपवान्घटो ज्ञानवानात्मेत्यादि भेदप्रतीतिः कथमिति चेत्, सा भ्रान्तैव, चित्रे

ग्दर्शनम्, तदप्यात्मद्रव्यमेव द्रव्यनयस्य, पर्यायनयस्य गुणमात्रम् । यदि रुच्यापादकाः कर्मपुद्गलाः सम्यग्दर्शनमिति भण्यन्ते तदा क्षीणमोहस्य तन्न स्यादित्याशङ्कायामिष्टापत्तिं पुरस्कुर्वन्नाह **सम्यग्दृष्टिर्जीव** इति । **सम्यक्** शोभना दृष्टिर्यस्य स तथा, जीव एव, न पुद्गलः, तथा च क्षीणमोहः सम्यग्दृष्टिर्भण्यते, न सम्यग्दर्शनीति सिद्धसाध्यतैव, स किं रूपी ? । नेत्याह—**अरूपी**, अविद्यमानरूपमस्येत्यरूपी सर्वधना(र्मा)दिषु क्षेपः, नासौ रूपादिधर्मसमन्वितः, किन्त्वमूर्त आत्मेति, छद्मस्थकेवलिनोर्यद्यपि कर्मपटलोपरागः, तथाप्यात्मा न स्वभावमुपजहाति, आगन्तुकं हि कर्मरजो मलिनयत्यात्मानमभ्रादीव चन्द्रमसम्, सिद्धः सर्वथाप्यरूप एव सम्यग्दृष्टिः । स किं स्कन्धो ग्रामो वेति शङ्कायामाह **नोस्कन्धः**, पञ्चास्तिकायसमुदितः स्कन्धपदाभिधेयत्वात्, अस्य च तदेकदेशत्वात्, एवं **नोग्रामः** चतुर्दशभूतग्रामैकदेशत्वात् । स्वामित्वं परीक्ष्यते तदा **कस्य** स्वामिनः, **सम्यग्दर्शन**मित्युद्देशवाक्यं प्रवर्तते । तत्र स्वामित्वं समवायेन सम्बन्धान्तरेण वा, उच्यते—निश्चयतः समवायेन, व्यवहारतः सम्बन्धान्तरेणापि, तदिदमभिप्रेत्याह—**आत्मसंयोगे**नेत्यादि । संयोगशब्दोऽत्र सम्बन्धसामान्याभिधायी, बाह्यनिमित्तानपेक्षयोत्पद्यमानं सम्यग्दर्शनमात्मनि समवायसम्बन्धस्योत्कटस्य विवक्षयाऽऽत्मस्वामिकं भण्यते । साधुप्रतिमादिबाह्यनिमित्तापेक्षया चोत्पद्यमानं तत् सम्बन्धस्योत्कटस्य विवक्षया परस्वामिकम् । उभयसम्बन्धसमप्राधान्यविवक्षया चोभयस्वामिकमिति । तत्र परसंयोगे षड् विकल्पा **जीवस्येत्यादयः**, यदा जन्तोः परमेकं मुनिमालम्ब्य क्रियानुष्ठानयुक्तं सा

निम्नोन्नतादिप्रतीतिवदित्याह—**तदप्यात्मद्रव्यमेव द्रव्यनयस्ये**ति । पर्यायार्थिकमते च सम्यक्श्रद्धानसंवेगादिगुण एव सम्यग्दर्शनं, न जीवद्रव्यम्, तन्मते तत्त्वश्रद्धानादिगुणव्यतिरिक्तस्य जीवद्रव्यस्यानुपलब्धेरसत्त्वात्, धाराव्यतिरिक्तानुपलभ्यमानतैलस्येव । ननु यदि गुणव्यतिरिक्तं द्रव्यं नास्त्येव तर्हि जीवस्य ज्ञानं तैलस्य धारेत्यादिप्रतीतिर्नोपपद्येतेति चेत्, मैवम्, राहोश्शिर इति प्रतीताविवात्राप्यभेदार्थिकैव षष्ठीत्युक्तदोषाभावादित्याशयेनाह **पर्यायनयस्य गुणमात्रमिति । क्षीणमोहस्येति** क्षीणः सर्वथा विलीनो मोहो यस्य तस्येत्यर्थः, क्षीणमोहछद्मस्थकेवलिसिद्धजीवस्येति भावः । **क्षीणमोहः सम्यग्दृष्टिर्भण्यत** इति "भण्णइ सम्मदिट्ठी" इति वचनाद् दर्शनत्रिके क्षीणे विशुद्धसम्यग्दृष्टिर्भण्यतेऽसाविन्यर्थः । **अस्य च तदेकदेशत्वादिति** "अमानोनी निषेधे" इति वचनान्नोस्कन्ध इत्यत्र न सर्वनिषेधवाचको नोशब्दः, किन्तु "नोसद्दो अहव देसपडिसेहे" इति वचनाद् देशप्रतिषेधेऽपि तस्यागमे उक्तत्वेन स्कन्धदेशविशेषार्थपरः, एकाङ्गुल्याः पञ्चाङ्गुलिसमुदितरूपहस्तैकदेशत्ववद् जीवस्य पञ्चास्तिकायसमुदायरूपस्कन्धैकदेशत्वाज्जीवो नोस्कन्ध इति भावः । **नोग्राम** इति—अत्रैतद्घटकग्रामशब्दवाच्यः चतुर्दशभूतग्रामसमुदायः, यथोक्तम्—"एगिंदियसुहुमियरा, सन्नियरपणिंदिया य सबितिचऊ । पज्जत्तापज्जत्ता भेएणं चोद्दसग्गामा ॥१॥" इति । नोग्राम इत्यत्र हेतुमाह—चतुर्दशेत्यादि । द्रव्यद्वयस्यैव संयोग इति जीवेनाजीवेन च द्रव्येण सह गुणात्मकसम्यग्दर्शनस्य संयोगसम्बन्धाभावादाह **संयोगशब्दोऽत्रेति** ।

रुचिरुपजायते; क्षयोपशमस्य द्रव्यादिपञ्चकसव्यपेक्षत्वात्, तदा तस्य बहिरवस्थितस्य साधोरुत्पादयितुः सा रुचिः, कुम्भ इव कुम्भकारस्य । न च यथेष्टविनियोक्तृनिष्ठमेव स्वामित्वमिति कथमेतदेवमिति शङ्कनीयम्, भुक्तिस्वामित्वाधिकार एव तथोक्तेः, अयं तूत्पत्तिस्वामित्वविचार इति । एवमेकमजीवाख्यं पदार्थं प्रतिमादिकं प्रतीत्य यदा क्षयोपशमः सञ्जायते, तदा तस्यैवाजीवस्य सम्यग्दर्शनं नात्मन इति । न चाजीवे स्वामित्वव्यवहारो बुद्धिरचितत्वादपारमार्थिकः,

---

**द्रव्यादिपञ्चकसव्यपेक्षत्वादिति**–द्रव्यक्षेत्रकालभावभवनिमित्तत्वादित्यर्थः । उक्तञ्च–'उदयक्खयक्खओवसमोवसमा इत्थ कम्मुणो भणिया । दव्वं खित्तं कालं, भावं य भवं च संपप्प ।१।' इति । **कुम्भ इव कुम्भकारस्येति**–यद्यपि घटो मृद एव, तस्या एवोपादानकारणत्वात्, तथापि कुम्भकारस्य निमित्तकारणत्वात्तस्यापि स तद्वदित्यर्थः । यथेष्टान्नविनियोगकर्तृनिष्ठमेवेष्टान्नस्वामित्वं, न तु पाचकनिष्ठं, यो यस्येष्टस्य विनियोगकर्त्ता स एव तस्य स्वामी यथेष्टान्नस्य चैत्र इति व्याप्तेः, तथैव प्रकृतेऽपि भाव्यमित्याशङ्क्य निषेधति–**न च यथेष्टविनियोक्तृनिष्ठमेवेत्यादि** । निषेधे हेतुमाह–**भुक्तिस्वामित्वेत्यादि** । **अयं तूत्पत्तिस्वामित्वविचार इति**–यदि साधुसमालम्बनं न स्यात्तदा जन्तोस्सम्यग्दर्शनं नोत्पन्नं स्यादिति साधुमालम्ब्यैव सम्यग्दर्शनस्योत्पत्तेरुत्पादनिमित्तकारणविधया साधोरेव सम्यग्दर्शनस्वामित्वमिति भावः । सम्यग्दर्शनं च यस्मिन्नात्मनि कथञ्चित्तादात्म्यसम्बन्धेनोत्पन्नं सद्वर्त्तते स एव आत्मा तत्स्वामीत्यजीवे स्वामित्वव्यवहारः काल्पनिकत्वान्न पारमार्थिक इति न च वाच्यमित्याह –**न चाजीवे स्वामित्वव्यवहार इत्यादि**–यद्यपि निश्चयनये जीवस्सम्यग्दर्शनज्ञानचारित्रस्वरूप इति गुणगुणिनोरभेद एव, स यद्यपि सर्वदा तथा नोपलभ्यते तथापि विवेकसमाधिकाले तथोपलभ्यत एव, तदानीञ्च जीवस्य सम्यग्दर्शनं स्वस्वरूपमेव, न चाभेदे स्वस्वामिभावः, न हि भवति राजा राज्ञ एव स्वामी, किन्तु स्वभिन्नानां पुरुषादीनामेव स इति स्वाऽभिन्नस्य सम्यग्दर्शनस्य न भवति जीवस्स्वामीति, यदा यस्मिन् जीवे सम्यग्दर्शनमभिमतं सोऽपि जीवो द्रव्यत्वादाधारस्सम्यग्दर्शनञ्च गुणत्वादाधेय इति व्यवहारनयसमाश्रयणाद्भेद आश्रीयते तदैव तस्य भिन्नं सम्यग्दर्शनम्प्रति स्वामित्वमुपचर्यत इति व्यवहारोपरचितभेदबुद्धिपरिकल्पितमेव समवायिकारणतयाऽभिमतस्य जीवस्याऽपि सम्यग्दर्शनस्वामित्वम् । भेदकल्पना चेत्थं–सम्यग्दर्शनज्ञानचारित्रैतत्त्रितयस्वरूपे जीवे यदा व्यवहारतो ज्ञानचारित्राभ्यां सम्यग्दर्शनस्य भेदो विवक्ष्यते तदा ज्ञानचारित्रस्वरूप आत्माऽऽधारः स्वामी च, सम्यग्दर्शनञ्चाधेयम्, स्वञ्चेति, एवं सम्यग्दर्शनचारित्राभ्यां ज्ञानस्य यदा भेदो विवक्ष्यते तदा सम्यग्दर्शनचारित्रस्वरूप आत्मा आधारः–स्वामी च, ज्ञानमाधेयं स्वञ्चेति । एवं सम्यग्दर्शनज्ञानाभ्यां चारित्रस्य यदा भेदो विवक्ष्यते तदा सम्यग्दर्शनज्ञानस्वरूप आत्मा आधारः स्वामी च, चारित्रं चाधेयं स्वञ्चेति । विवक्षा च पुरुषपरतन्त्रा

जीवेऽपि विवेकसमाधिदशायां तदभावेन तस्य व्यवहारसत्यत्वाविरोधात् । यदा पुनर्द्वौ साधू निमित्तं क्षयोपशमस्य विवक्षितौ, नात्मा, तदा जीवयोः सम्यग्दर्शनम् । यदा पुनरजीवौ प्रतिमाख्यावुभौ निमित्तीकृतौ, तदा तयोस्तत् सम्यग्दर्शनम् । यदा च बहवो जीवाः साधवस्तस्योत्पत्तौ निमित्तानि, तदा जीवानां सम्यग्दर्शनम् । यदा च बह्वीः प्रतिमा भगवतो दृष्ट्वा तत्त्वार्थश्रद्धानमाविर्भवति, तदा तासामेव, तत्तत्कर्तृकत्वात्, नात्मन इति । उभयसंयोगेन जीवस्येत्यादयो ये त्याज्या विकल्पा उक्तास्ते एकस्योभयसंयोगानिर्वाहकत्वाद् द्वित्वबहुत्वयोश्च प्रकृतबहिर्भावाद् द्रष्टव्याः, उभयसंयोगस्यात्र प्रकृताप्रकृतोभयनिरूपितत्वात्, नोजीवस्येत्यत्र नोजीवशब्दोऽजीवपरः । ये च प्रकृतमविरहय्य प्रवर्तन्ते ते षडपि भवन्त्येव । यथा जीवस्य स्वस्य जीवस्य साधोः १ । यस्य स्वस्य याभ्यां च साधुभ्यामुत्पन्नं तयोश्च २ । यस्य स्वस्य यैश्च साधुभिरुत्पादितं तेषाम् ३ । एते जीवाश्रिताः । तथा जीवस्य स्वस्याजीवस्य च प्रतिमादेः ४ । जीवस्य स्वस्याजीवयोश्च प्रतिमयोः ५ । जीवस्य स्वस्याजीवानां च प्रतिमानाम् ६ । एतेऽजीवाश्रिता इति । तृतीयद्वारं परामृशन्नाह साधनमिति—साध्यते निर्वर्त्यते येन तत्साधनं । तत्र पृच्छा सम्यग्दर्शनं केन भवति, यासौ रुचिः सुविशुद्धसम्यक्त्वदलिकोपेता सा केन भवतीत्यर्थः । उत्तरं निसर्गादधिगमाद्वा भवतीत्युक्तमिति । अयमाशयः—न तावेव निस-

न वस्तुपरतन्त्रा इति व्यवहारात् सोपचारबहुलाद्भवतीति व्यवहारनयकल्पितत्वमुक्तस्वस्वामिभावस्येति न पारमार्थिकत्वम्, किन्तु व्यवहारसत्यत्वमेवेति । अत एव "न च ज्ञानदर्शनचारित्राणि विरहय्यान्यो जीवोऽस्तीति काल्पनिकमपदिशति । कथम् ? यदा तावज्जीवे सम्यग्दर्शनं तदा ज्ञानचारित्रे आधारभावं प्रतिपद्येते, ज्ञानचारित्रात्मनि जीवे सम्यग्दर्शनम् । यदा जीवे ज्ञानं तदा दर्शनचरणयोराधारता । यदा जीवे चारित्रं तदा ज्ञानदर्शनयोराधारता चारित्रमाधेयं" इत्यपि तत्त्वार्थवृहट्टीकोक्तं सङ्गच्छते । अत्र समुदायेषु एकस्य समुदायिन आधारत्वमन्यस्य चाधेयत्वं परिकल्प्याधाराधेयभावेन व्यपदेशो भवतीत्येवं काल्पनिकमपदिशतीत्यस्यार्थः । तथाऽजीवेऽपि प्रतिमादौ निमित्ते वौद्धं सम्यग्दर्शनस्वामित्वं स्यादेवेत्याशयेन निषेधे हेतुमाह—जीवेऽपि विवेकसमाधिदशायामित्यादि । जीवेऽपीति—समवायिकारणीभूत इति शेषः । तदभावेन—स्वामित्वव्यवहारस्य पारमार्थिकत्वाभावेनेत्यर्थः । तस्येति स्वामित्वव्यवहारस्येत्यर्थः । केवलसमवायिकारणीभूतयोः केवलनिमित्तकारणीभूतयोश्च द्वयोः केवलसमवायिकारणीभूतानां केवलनिमित्तकारणीभूतानाञ्च बहूनां सिद्धान्तकारैरविवक्षणादाह—द्वित्वबहुत्वयोश्च प्रकृतबहिर्भावादिति । तत्र हेतुमाह—उभयसंयोगस्येति । प्रकृताप्रकृतोभयनिरूपितत्वादिति—समवायिकारणनिमित्तकारणोभयनिमित्तत्वादित्यर्थः । प्रकृतमविरहय्येति—उपादानकारणं परिगृह्यैवेत्यर्थः । स्वस्येति—एतत्पदं सर्वत्र यस्मिन् समवायसम्बन्धेन सम्यग्दर्शनमुत्पन्नं तत्परमित्यर्थः । जीवस्य साधोरिति यं निमित्तहेतुं साधुमालम्ब्योत्पन्नं तस्येत्यर्थः । एवमग्रेऽपि ।

र्गाधिगमौ तादृशीं रुचिं जनयतः, किन्तु निसर्गाधिगमाभ्यां क्षयोपशमादयः कर्मणां जन्यन्ते, ततः क्षयोपशमादेः सम्यग्दर्शनं सम्भवति, तावपि च निसर्गाधिगमौ कर्मणां क्षयोपशमादेरेव भवतः, ततस्ताभ्यामुत्तरोत्तरक्षयोपशमं विशुद्धं विशुद्धतरमापादयमानाभ्यां यदा प्रतिविशिष्टः क्षयोपशम आपादितो भवति तदा तस्मात् सम्यग्दर्शनमुत्पद्यत इति । तत्र **निसर्गः पूर्वोक्तः** पर्यायशब्देनेत्यर्थः । अधिगमं त्वस्यार्हितत्वात्पुनर्लक्षयति—**अधिगमस्तु सम्यग् व्यायाम** इति, गुरूपदिष्टा दर्शनाचारक्रियेत्यर्थः । **उभयमपीति**—उभयं निसर्गाधिगमसम्यक्त्वलक्षणम्, **तदावरणीयस्य**, रुचिरूपज्ञानावरणीयस्य नान्तरीयकतयाऽनन्तानुबन्ध्यादेरिति भावितं प्राक्, **तस्यैव क्षयादित्रयं** सञ्जच्छते, **तेनैतत्त्रिहेतुकमुत्पद्यते**। तुर्यद्वारं परामृशति—**अधिकरणं त्रिविधमित्यादि** । एतच्च प्रायः स्वामित्वद्वारवद् व्याख्येयम् ॥ तत्र 'यदात्मसंयोगेनेत्याद्युक्तं तत्स्थानेऽत्रात्मसन्निधानेनेत्यादि वक्तव्यम् । **संयोगः** सम्बन्धः, **सन्निधान**माधारतेति विवेकः । ननु **यद्युत्पादकत्वेनाजीवे** प्रतिमादौ सम्यग्दर्शनज्ञानचारित्राण्युच्यन्ते तदा दण्डे घट इत्याद्यपि स्यादिति चेत्, न, **असाधारण्येन परिहारा**दधिकरणानुयोगद्वारव्युत्पन्नं प्रतीत्यापत्तेर्वा ॥ पञ्चमद्वारं परामृशति—**स्थितिरिति** । सम्यग्दर्शनमुत्पन्नं सत्कियन्तं कालमवतिष्ठत इति प्रश्नः । उत्पत्तिमत् किञ्चित् सादि सपर्यवसानं दृष्टम्, मनुष्यत्वादिवत्, किञ्चित् साद्यपर्यवसानं दृष्टं, सिद्धत्वादिवत् । तदिदं कथं स्यादिति प्रष्टुर्गूढः संशयः । आचार्योऽपि तदभिप्रायानुरूपमुत्तरमाह—**सम्यग्दृष्टिर्द्विविधेत्यादि** । **सम्यग्दृष्टिः शोभना दृष्टिः । सा चैकापायसद्द्रव्यवर्तिनी,**

तदा तस्मात् सम्यग्दर्शनमुत्पद्यत इति । उक्तश्चाऽऽवश्यकसूत्रे—"सत्तण्हं पयडीणं, अब्भितरओ उ कोडिकोडीणं । काऊण सागराणं, जइ लहइ चउण्हमण्णयरं ॥११९३॥" इति, एतच्च प्रागेव विवेचितमिति । **तस्यैवेति**—अनन्तानुबन्ध्यादेरेवेत्यर्थः, **तेनैतत्त्रिहेतुकमुत्पद्यत** इति । अत्रानन्तानुबन्ध्यादिसप्तप्रकृतिक्षयक्षयोपशमोपशमरूपत्रिविधपरनिमित्तविधया सम्यग्दर्शनस्योत्पादात् क्षायिकादित्रिविधत्वं ज्ञेयम्, न तु स्वनिमित्तापेक्षया, एतच्च प्रागेव भावितमिति । **यद्युत्पादकत्वेनेति**—निमित्तकारणविधयेति शेषः । निषेधे हेतुमाह—**असाधारण्येन परिहारादिति**—यदसाधारणमुत्पादकं तदेवाऽऽधारतया विवक्षितं भवतीति प्रतिमादिकं दृष्ट्वैव केषाञ्चित्सम्यग्दर्शनोत्पत्तेः सम्यग्दर्शनम्प्रति प्रतिमादिकम्भवत्यसाधारणमिति तत्र सम्यग्दर्शनमिति व्यपदेशः सम्भवति, न तु दण्डे घट इति, तत्र हेतुरसाधारण्येन परिहारादिति । भवतु वा दण्डे घट इति प्रयोगः, का नो हानिरित्याशयेन समाधानान्तरमाह—**अधिकरणेति** । **शोभनेति**—अविपरीतेत्यर्थः, अर्थानामिति गम्यते । **अपायसद्द्रव्यवर्त्तिनीति**—अपायो निश्चयज्ञानं मतिज्ञानांशः, सद्द्रव्याणि पुनः शोभनानि प्रशस्तत्वात् विद्यमानानि वा द्रव्याणि मिथ्यादर्शनदलिकानि अध्यवसायविशोधितानि सम्यग्दर्शनतयाऽऽपादितपरिणामानि, अपायश्च सद्द्रव्याणि च अपायसद्द्रव्याणि ताभ्यां सह वर्त्तिनीत्यर्थः, यावत्कालं तदुभयं तावत्कालवर्तिनीति यावत् । अयंभावः—मतिज्ञानस्यैव निश्चयज्ञानात्मको योऽपायांशः, यानि च विशुद्धाध्यवसायकृत-

अपरा त्वशुद्धदलिकरूपसद्द्रव्यापगमे क्षीणदर्शनमोहानां श्रेणिकादीनाम्। **द्विविधापीयं सादिः सपर्यवसाना** उत्पत्तिकाले आदिमत्त्वात्, आद्याया मिथ्यात्वपुञ्जोदये द्वितीयायाश्च केवलज्ञानोत्पत्तौ मतिज्ञान-तृतीयांशापायापगमेनापगमात्। या तु भवस्थकेवलिनो द्विविधस्य सिद्धस्य वा दर्शनमोहनीयसप्तकक्षयादपायक्षयाच्चोदपादि सा सादिरपर्यवसानेति। **सादिसपर्यवसानमेव च सम्यग्दर्शनमिति** सादिसपर्यवसानमेवेति यदुक्तं तद्व्याख्यानमेतत्—यदपायसद्द्रव्यवर्ति यच्च सद्द्रव्यविगमेऽपायसहचारि तत्र सम्यग्दर्शनशब्द एव रूढः। सम्यग्दृष्टिशब्दस्तु योगाश्रयणेन प्रवर्तित इति भावः। शुद्धदलिकसहवर्तिनी च रुचिः कियन्तं कालं भवतीति भावयन्नाह—**तज्जघन्येनेत्यादि**। तत् सम्यग्दर्शनं जघन्येनान्तर्मुहूर्तम्। मुहूर्तो घटिकाद्वयं तस्य मध्यमन्तर्मुहूर्तमवतिष्ठते। तथाहि सम्यग्दर्शनं कश्चिज्जन्तुर्द्विघटिकान्तरनुभूय मिथ्यादृष्टिर्भवति केवली वा परतः। **उत्कर्षेणे(त्कृष्टेने)त्यादि**। उत्कर्षेण कियन्तं कालमास्ते। **षट्षष्टिः सागरोपमाणि साधिकानि**। तथाहि—कश्चिदष्टवर्षः सम्यग्दर्शनमधिगम्य समासादितदीक्षः पूर्वकोटीमष्टवर्षोना विहृत्यापरिच्युतसम्यग्दर्शनो विजयादिचतुरन्यतमविमाने उत्पन्नस्त्रयस्त्रिंशत्सागरोपमस्थितिमनुभूय ततश्च्युतः सहदर्शनो मनुजभवं प्राप्य तेनैव प्रकारेण संयममनुष्ठाय तदेव विमानं तावत्स्थितिं प्राप्याप्रच्युतसम्यग्दर्शनो मनुजभवं संयमं च प्राप्यावश्यन्तया सिद्ध्यति, तस्य यथोक्ता स्थितिर्लक्ष्यत इति। एवमच्युतत्रयप्राप्तिक्रमेणापि

मिथ्यात्वस्वभावापगमप्रयुक्तनिर्मलीभूतसम्यक्त्वमोहनीयदलिकानि ताभ्यां सहवर्तिनी तदुभयकालावधिनियतसत्ताकेति यावत्। **अपरा त्वशुद्धदलिकरूपसद्द्रव्यापगमे** इति। अपायसहचारिणीति शेषः। अपरा त्वशुद्धेति पाठस्थाने अपरा तु शुद्धेति पाठस्सम्भवति। **क्षीणदर्शनमोहानामिति**—क्षीणदर्शनमोहनीयानन्तानुबन्ध्यादिसप्तप्रकृतीनामित्यर्थः। **केवलज्ञानोत्पत्तौ मतिज्ञानतृतीयांशापायापगमेनापगमादिति**—मतिज्ञानादिचतुष्कस्य स्वस्वावरणीयकर्मक्षयोपशमापेक्षस्य ज्ञानावरणीयादिघातिकर्मचतुष्टयक्षयापेक्षकेवलज्ञानोत्पत्तावभावे सति मतिज्ञानस्येव तत्तृतीयभेदरुचिरूपापायांशस्याप्यपगमेनापगमादित्यर्थः। **द्विविधस्येति**—सयोगाऽयोगभेदस्येत्यर्थः। **तत्सम्यग्दर्शनं जघन्येनान्तर्मुहूर्तमिति**, यदाह—भाष्यसुधाम्भोधिः—"अन्तोमुहुत्तमित्तं जहन्नयं" २७६३। इति। **षट्षष्टिः सागरोपमाणि साधिकानीति**। यदाह भाष्यकारः—"दो वारे विजयाईसु, गयस्स तिन्नच्चुए अहव ताइं। अइरेगं नरभवियं, नाणाजीवाण सव्वद्धं ॥४३६॥ इति॥ दो वारे विजयाईसु, गयस्स तिण्णच्चुए य छावट्ठी। नरजम्मपुव्वकोडी–पुहुत्तमुक्कोसओ अहियं ॥२७६२॥" इति च। **विजयादीति**—अत्रादिना वैजयन्त—जयन्ताऽपराजितविमानानि ग्राह्याणि। ननु पञ्चमस्यानुत्तरविमानस्य सर्वार्थसिद्धनामकस्यात्र परिहारे किमप्यस्ति कारणम्, अस्तीति ब्रूमः, किमिति चेत्, उच्यते, तद्गतानां जीवानामेकावतारित्वमेवेति। एतच्चोत्कृष्टतस्सम्यक्त्वकालमानं लब्ध्यपेक्षयैव, न तूपयोगापेक्षया, "उवओगंतमुहुत्तं" इत्युक्तेस्तदपेक्षयाऽन्तर्मुहूर्तकालमानत्वादिति ज्ञेयम्। **तेनैव प्रकारेणेति**—उत्कृष्टतोऽष्टवर्षोनपूर्वकोटिप्रकारेणेत्यर्थः, एवमच्युतदेवलोके द्वाविंशतिसागरोपमस्थितिकेषु देवेषु त्रीन् वारान् गतस्य साधिकषट्षष्टिसागरोपमकालमाना स्थितिर्ज्ञेयेत्याह—**एवमच्युतत्रयप्राप्तिक्रमेणापि**

आवनीयम् । सम्यग्दृष्टिः सम्यग्दृष्टिपदरूढिविषया या रुचिः सा सादिरपर्यवसाना सयोगः शैलेशीप्राप्तः केवली सिद्धश्चेत्याश्रयभेदेन त्रिविधा, स्त्रीलिङ्गपुल्लिङ्गाभ्यां निर्देशो रुचिरुचिमतोरभेदख्यापनार्थः । सम्यग्दृष्टिर्याऽभिहिता तामनुभवति सयोगादिरिति वा नेयम् । विधानद्वारं परामृशति— विधानमिति । विधीयत इति विधानं—भेदः प्रकार इति पर्यायाः । ननु साधनद्वारेऽभिहित एव भेदः किं पुनरिह भेदाख्यानेन, मैवं, तत्र क्षयादिहेतुभेदस्यैव प्रतिपिपादयिषितत्वात्, अत्र तु तज्जन्यरुचिभेदस्य तथात्वात्, अत एव वक्ष्यमाणसंख्याद्वारादप्यस्य भेदः । अत्र विधानं क्षयाद्युपाधिरूपं सम्यग्दर्शनस्य भेदकं विचार्यम्, संख्याद्वारे तु तदाश्रयस्य भेद इति स्पष्टमेव भेदात् । तत्र कियत् सम्यग्दर्शनमिति प्रश्ने कियन्तः सम्यग्दर्शनिन इत्यर्थः, निर्णयवाक्येऽप्यसंख्येयानि सम्यग्दर्शनानीत्यसिन्न-संख्येयाः सम्यग्दर्शनिन इत्यर्थोऽभेदोपचारात्, मतुब्लोपार्श आदिपाठान्यतराश्रयणे तु विधेयानुरोधेन क्लीबत्वं न स्यात्, प्रश्नवाक्येऽव्यक्तत्वेन तत्सम्भवेऽपि निर्णयवाक्ये तदयोगादिति विचारणीयम् । तस्मात्त्रयाणां साधनविधानसंख्याद्वाराणां सिद्धो भेदः । ननु तन्निसर्गादधिगमाद्वेति सूत्रेण हेतुभेदप्रयुक्तभेदाभिधानाद्रुचिभेदोऽप्यर्थादुक्त एवेति किमत्राभिधेयमिति चेत्, सत्यं, तत्र निसर्गाधिग-

आवनीयमिति । अधिकं चेहानुत्तरविमानपक्षे नरभवसम्बन्धि देशोनं पूर्वकोटित्रयम्, अच्युतदेवलोकपक्षे देशोनं पूर्वकोटिचतुष्टयं द्रष्टव्यम् । सम्यग्दृष्टेर्या सादिरपर्यवसाना स्थितिः प्राक् प्रोक्ता तां प्रतिपादयितुमाह सम्यग्दृष्टिः सम्यग्दृष्टिपदरूढिविषयेति । स्त्रीलिङ्गपुल्लिङ्गाभ्यां निर्देश इति सम्यग्दृष्टिः सादिसपर्यवसानेति स्त्रीलिङ्गतया सयोगः शैलेशीप्राप्तश्च केवली सिद्धश्चेति च पुल्लिङ्गतया निर्देश इत्यर्थः । भेदविवक्षणेन प्रकारान्तरमाह सम्यग्दृष्टिर्याऽभिहितेत्यादि । तत्रेति—साधनद्वार इत्यर्थः । तत्रेति सङ्ख्याद्वार इत्यर्थः । अत्र तत्त्वार्थबृहट्टीकाकारैर्मतुब्लोपादभेदोपचारात् अर्श आदि पाठाद्वेत्यनेन समाधानं यत्कृतं तत्सम्यग्न वेति केनचित्प्रश्ने कृते तदुत्तरमाह—मतुब्लोपार्श आदिपाठान्यतराश्रयणे त्विति । विधेयानुरोधेन क्लीबत्वं न स्यादिति सम्यग्दर्शनरूपविधेयानुरोधेन नपुंसकत्वं यद्भवति तन्न स्यादित्यर्थः । यथा आनन्दपदस्य नित्यपुल्लिङ्गत्वेऽपि 'आनन्दं ब्रह्म' इत्यत्र विशेष्यस्य ब्रह्मणो नित्यनपुंसकत्वेनार्श आदिपाठात् "अर्श आदिभ्योऽच्" इति सूत्रविहितमत्वर्थीयाच्प्रत्ययान्तस्यानन्दस्य नपुंसकत्वं तथा प्रकृतेऽपि सम्यग्दर्शनशब्दस्य नित्यनपुंसकत्वेऽप्यर्श आदिपाठे पुल्लिङ्गत्वं स्यात्, विशेष्यस्य सम्यग्दर्शनवतः पुरुषस्य पुल्लिङ्गत्वात्, तस्मादभेदोपचाराश्रयणमेव युक्तमिति भावः । प्रश्नवाक्येऽव्यक्तत्वेन तत्सम्भवेऽपि निर्णयवाक्ये तदयोगादितीति । किमिदं प्रश्नवाक्यं सम्यग्दर्शनमुद्दिश्य प्रवृत्तं किं वा सम्यग्दर्शनिनः पुंसः उद्दिश्येति पूर्वं न ज्ञायते, तथा च यावदुत्तरं न प्रतिसन्धीयते तावत्सम्यग्दर्शनमुद्दिश्यापि सामान्यतो नपुंसकत्वसम्भवेऽप्युत्तरवाक्योपसन्धाने सम्यग्दर्शनिन उद्दिश्यैवोत्तरो दत्त इति सम्यग्दर्शनविशिष्टानां पुंसां पुल्लिङ्गत्वेन तत्रार्शादित्वादच्प्रत्ययान्तत्वमाश्रित्याऽसङ्ख्येयानि सम्यग्दर्शनानीति नपुंसकनिर्देशो न युक्तः, विशेष्यस्य

मयोर्व्यवहितकारणत्वेन रुचिभेदानाक्षेपकत्वात्, अत्र च क्षयादीनामव्यवहितकारणत्वेन रुचिभेदाक्षेपकत्वमिति विशेषात् । **हेतुत्रैविध्यात् क्षयादित्रिविधं सम्यग्दर्शनमिति** । हेतुत्रैविध्यात्त्रिविधं **सम्यग्दर्शनमित्यन्वयः** । क्षयादीति विशेषणं कारणे कार्योपचारेण क्षयादिप्रत्येकजन्यतावच्छेदकजातित्रयोत्कीर्तनपरम् । तेन न सामान्येन विशेषसाधनासम्भवः । न च त्रिभिः संभूयैकं जन्यते मृदुदकगोमयैरिवोपवेशनकम्, किन्तु क्षयेणान्यैव रुचिरात्यन्तिकी सकलदोषरहिताऽऽविर्भाव्यते, क्षयोपशमेनापि चान्यादृश्येव, तथोपशमेनेत्यादि वदतः टीकाकारस्याप्ययमेवाभिप्रायः । कथं तर्हि पूर्वं भवद्भिरुभयजन्यतावच्छेदिका जातिः खण्डितेति चेत्, न, क्षयोपशमस्य भावान्तरत्वात्, प्रत्येकक्षयोपशमोभयरूपत्वाभावात्, अन्यथा प्रदेशोदयाद्यननुविद्धतापत्तेः,

पुल्लिङ्गत्वेनाचूप्रत्ययान्तस्यापि पुल्लिङ्गतयैव निर्देशस्य युक्तत्वादिति भावः । **व्यवहितकारणत्वेनेति**—निसर्गाधिगमयोस्तज्जन्यदर्शनमोहनीयादिकर्मक्षयादिद्वारा कारणत्वेनेत्यर्थः । क्षयरूपकारणाऽभावेऽपि क्षयोपशमेनोपशमेन वा तथैव क्षयोपशमरूपकारणाऽभावेऽपि क्षयेणोपशमेन वा, उपशमरूपकारणाभावेऽपि क्षयोपशमेन क्षयेण वा सम्यग्दर्शनोत्पत्तेः सम्यग्दर्शनरूपसामान्यकार्यम्प्रति क्षयादीनां प्रत्येकं व्यतिरेकव्यभिचारित्वेन न क्षयत्वादिना विशेषकारणत्वसम्भवः, सम्यग्दर्शनगतवैजात्याश्रयणे तु व्यभिचाराभावेन क्षयत्वादिना प्रत्येकरूपेण कारणत्वं स्यादेव, विजातीयसम्यग्दर्शनम्प्रति क्षयत्वेन कारणत्वं विजातीयसम्यग्दर्शनम्प्रति क्षयोपशमत्वेनैवमुपशमत्वेन कारणत्वमित्येवं विशेषकार्यकारणभावोपगमादित्याशयेनाह—**क्षयादीति विशेषणमित्यादि** । तत्फलमाह—**तेन न सामान्येन विशेषसाधनासम्भव इति** । बृहट्टीकाकारवचसा सहैकवाक्यत्वमस्याह—**न च त्रिभिः सम्भूयेत्यादिना** । यथा क्षयेणोपशमेन क्षयोपशमेन चान्याऽन्यैव रुचिस्स्वीक्रियते तथा निसर्गतोऽन्याऽधिगमतोऽन्या द्वाभ्यां निसर्गाधिगमाभ्यां चान्या रुचिः किन्न स्यात्, तथा च निसर्गाधिगमोभयजन्यतावच्छेदिकाया जातेः “उभयजन्यं तर्हि किञ्चिद्भिन्नं स्यात्” इत्यादिना पूर्वतृतीयसूत्रविवरणग्रन्थेनापाकरणे किं बीजमिति सुहृद्भावेन पृच्छति—**कथं तर्हीति** । क्षयोपशमस्यैकस्यैव भावान्तरस्य कारणत्वं न तु क्षयोपशमयोरिति प्रकृतेऽपि नोभयजन्यतावच्छेदिका जातिराश्रीयते इति कुतस्तद्दृष्टान्तेन निसर्गाधिगमोभयजन्यतावच्छेदकजातिसिद्धिरित्याशयेनोत्तरयति—**क्षयोपशमस्य भावान्तरत्वादिति** । पृथग्जातीयः क्षयः पृथग्जातीय उपशमः, तदुभयात्मैव क्षयोपशमः, न तु विजातीय इत्यभ्युपगमे दण्डमाह—**अन्यथेति** । **प्रदेशोदयाद्यननुविद्धतापत्तेरिति**—अत्रादिपदेन सम्यक्त्वाण्वनुभावाभावापत्तिर्ग्राह्या, तथाहि—क्षयोपशमे सम्यक्त्वाण्वनुभवोऽस्ति, न चोपशमे, स च विशेषः क्षयोपशमस्य वैजात्य एव घटते, अन्यथौपशमिकसम्यक्त्व इव क्षायोपशमिकसम्यक्त्वेऽपि मिथ्यात्वादिदलिकप्रदेशोदयस्य सम्यक्त्वमोहनीयदलिकानुभावस्य चाऽभावस्स्यादिति । तथा च प्रदेशोदयाद्यन्यथाऽनुपपत्त्या विजातीय एव क्षयोपशमोऽभ्युपगन्तव्यः, न तु तदुभयात्मेति भावः । ननु यदि

विजातीयं त्र कारणं विजातीयं कार्यमारभत एव । क्षयादयः कस्येत्याह तदावरणीयस्येत्यादि । तस्य सम्यग्दर्शनस्यावरणीयमाच्छादकं मत्याद्यावरणमित्यर्थः, तस्य, अनेन सम्यग्दर्शनस्य ज्ञानरूपत्वमावेदितम्, दर्शनमोहनीयस्य चानन्तानुबन्ध्यादिसप्तकस्य, दर्शनमोहनीयस्येति ब्रुवता इदमभ्युपगतम्–दर्शनमोहनीयस्य क्षयादिषु सत्सु तत्प्रादुर्भावो न पुनर्दर्शनमोहस्तदावरणमिति, क्षयादिकार्यतावच्छेदकतयै(ये)व निर्जराविशेषजनकतावच्छेदकतयापि रुचिवैजात्यसिद्धिरित्याह–अत्र चेत्यादि । परतः परतो विशुद्धिप्रकर्ष इति–औपशमिकात् क्षायोपशमिकं, ततश्च क्षायिकं प्रकृष्टविशुद्धिजनकमित्यर्थः । विशुद्धिप्रकर्षो निर्मलता, तत्त्वपरिच्छेदितेत्यर्थोऽपि विशुद्ध्यौपयिकीं ता जातिमेवाक्षिपति, न तु विलक्षणा विषयितां, बाधकाभावात् । औपशमिकं सम्यक्त्वं सर्वमलीमसम्, अल्पकालत्वाद् भूयश्च मिथ्यात्वगमनात्, ततः क्षायोपशमिकं विशुद्धतरम्, बहुकालावस्थायित्वात्, ततोऽपि क्षायिकं विशुद्धतमं बहुतरकालावस्थायित्वात् स्पष्टवस्तुपरिच्छेदाच्चेति सिद्धान्तविदः ॥ ७ ॥

क्षयोपशमे मिथ्यात्वादेः प्रदेशोदयो विद्यते तर्हि कथं न सम्यग्दर्शनविघातो भवतीति चेत्, उच्यते, प्रदेशकर्मणो मन्दानुभावरूपत्वादिति जानीहि । क्षयोपशमस्य विजातीयत्वादेव तद्रूपकारणं क्षायोपशमिकरूपं विजातीयकार्यं जनयत्येव, विभिन्नजात्यवच्छिन्नकारणस्य विभिन्नजात्यवच्छिन्नकार्योत्पादकत्वस्वभावादित्याह–विजातीयं चेति–अपूर्वकरणाध्यवसायेनापनीतमिथ्यात्वस्वभावाः शुद्धमिथ्यात्वपुद्गलाः शोधितमदनकोद्रवस्थानीया विरुद्धतैलादिद्रव्यकल्पेन मिथ्यात्वेन मिश्रितास्सन्तस्तत्क्षण एव मिथ्याभावमवाप्नुवन्ति, कुतीर्थिकसंसर्गतद्वचःश्रवणादिजनितपरिणामाद्वा क्लिष्टबहुरसीकृता मिथ्यात्वरूपतां प्रतिपद्यन्ते, ततस्तथैव मिथ्यादृष्टिर्भूत्वा पुनः संसारनीरधिं बम्भ्रमीति । स चैवम्भूतोऽपायः क्षायिकसम्यक्त्वे नास्ति, सर्वानर्थमूलानां शुद्धानामशुद्धानां वा मिथ्यात्वपुद्गलानां क्षपितत्वेनासत्त्वात्, तस्मात् क्षायोपशमिकाद्विशुद्धतमं क्षायिकसम्यक्त्वम्, श्लक्ष्णशुद्धाभ्रपटलविगमे मनुष्यस्य विशुद्धतमा नेत्रदृष्टिरिवेत्याशयेनाह–ततोऽपि क्षायिकं विशुद्धतममिति । सप्तमसूत्रटीकाविवृत्तिस्समाप्तिमगात् ॥७॥

न केवलमेभिरेव निश्चयः कार्यः किन्त्वन्यैरपीत्याह––

## सूत्रम् सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥ १ ॥ ८ ॥

सतः संख्येत्याद्यन्वयभ्रमनिरासाय विविक्तपदार्थान् दर्शयति भाष्यकारः

( भा० ) सत् संख्या क्षेत्रं स्पर्शनं कालः अन्तरं भावः अल्पबहुत्वमित्येतैश्च सद्भूतपदप्ररूपणादिभिरष्टाभिरनुयोगद्वारैः सर्वभावानां विकल्पशो विस्तराधिगमो भवति । कथमिति चेत् उच्यते । सत्, सम्यग्दर्शनं किमस्ति नास्ति, अस्तीत्युच्यते । क्वास्तीति चेत्, उच्यते । अजीवेषु तावन्नास्ति । जीवेषु तु भाज्यम् । तद्यथा–गतीन्द्रियकाययोगकषायवेदलेश्यासम्यक्त्वज्ञानदर्शनचारित्राहारोपयोगेषु त्रयोदशस्वनुयोगद्वारेषु यथासम्भवं सद्भूतप्ररूपणा कर्तव्या । संख्या–कियत्सम्यग्दर्शनं किं संख्येयमसंख्येयमनन्तमिति । उच्यते–असंख्येयानि सम्यग्दर्शनानि । सम्यग्दृष्टयस्त्वनन्ताः ॥ क्षेत्रम्–सम्यग्दर्शनं कियति क्षेत्रे । लोकस्यासंख्येयभागे ॥ स्पर्शनम् सम्यग्दर्शनेन किं स्पृष्टम् ? । लोकस्यासंख्येयभागः । अष्टौ चतुर्दशभागा देशोनाः । सम्यग्दृष्टिना तु सर्वलोक इति ॥ अत्राह–सम्यग्दृष्टिसम्यग्दर्शनयोः कः प्रतिविशेष इति ? । उच्यते–अपायस-

द्रव्यतया सम्यग्दर्शनम्, अपाय आभिनिबोधिकम्, तद्योगात्सम्यग्दर्शनम्, तत्केवलिनो नास्ति । तस्मान्न केवली सम्यग्दर्शनी, सम्यग्दृष्टिस्तु भवति ॥ कालः । सम्यग्दर्शनं कियन्तं कालमिति, अत्रोच्यते । तदेकजीवेन नानाजीवैश्च परीक्ष्यम् । तद्यथा । एकजीवं प्रति जघन्येनान्तर्मुहूर्त, उत्कृष्टेन षट्षष्टि: सागरोपमाणि साधिकानि । नानाजीवान् प्रति सर्वाद्धा ॥ अन्तरम्—सम्यग्दर्शनस्य को विरहकालः । एकं जीवं प्रति जघन्येनान्तर्मुहूर्तं उत्कृष्टेन उपार्धपुद्गलपरिवर्त: । नानाजीवान् प्रति नास्त्यन्तरम् ॥ भावः सम्यग्दर्शनमौपशमिकादीनां भावानां त्रिषु भावेषु भवति ॥ अल्पबहुत्वम्—अत्राह सम्यग्दर्शनानां त्रिषु भावेषु वर्तमानानां किं तुल्यसंख्यत्वमाहोस्विदल्पबहुत्वमस्तीति ?, उच्यते, सर्वस्तोकमौपशमिकम् । ततः क्षायिकमसंख्येयगुणम् । ततोऽपि क्षायोपशमिकमसंख्येयगुणम् । सम्यग्दृष्टयस्त्वनन्तगुणा इति । एवं सर्वभावानां नामादिभिर्न्यासं कृत्वा प्रमाणादिभिरधिगमः कार्यः ॥ उक्तं सम्यग्दर्शनम् । ज्ञानं वक्ष्यामः ॥

(यशो० टीका)—सत्संख्येत्यादि । फलितमाह—सद्भूतपदप्ररूपणादिभिरित्यादि । सर्वभावानामित्यनेनैषामधानामनुयोगद्वाराणा व्यापितामाह—आद्यद्वारे आशङ्कावाक्यं दर्शयति—सम्यग्दर्शनं किमस्ति नास्तीति—सम्यग्दर्शनशब्द: प्रामाणिकार्थबोधको न वेत्येतदर्थः । शब्दो हि कश्चिदप्रामाणिकेऽप्यर्थे शशविषाणादिक: प्रवर्तमानो दृष्टः, कश्चिच्च प्रामाणिकेऽर्थे घटादिः, अतोऽयं संशयः । यत्तु शशविषाणशब्दो वाक्यात्मकत्वादबोधक एव, वाच्यार्थज्ञानेऽयोग्यतानिश्चयस्य प्रतिबन्धकत्वादिति, तन्न, रूपकादाविवेच्छाविशेषस्योत्तेजकत्वात् । उत्तरमाह—अस्तीत्युच्यते । सम्यग्दर्शनशब्द: प्रामाणिकार्थबोधक एवाप्तोपदिष्टत्वात्प्रशमादिलक्षणार्थप्रवृत्तेश्चेत्यर्थः । सम्यग्दर्शनस्यास्तित्वे निश्चिते आधारशङ्का-

कर्मक्षयोपशमवैचित्र्यात्तदधीनबुद्धयोऽपि विचित्रप्रकारा इति तद्वन्तः शिष्या विविधरुचयः, तत्र ये संक्षेपरुचयस्तान् प्रति प्रमाणनयैरधिगम इति षष्ठं सूत्रमाहाचार्यः, ये च मध्यमरुचयस्तान् प्रति 'निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः' इति सप्तमसूत्रं, ये पुनर्विस्तररुचयस्तान् प्रति तत्त्वभूतसर्वभावाधिगमं सदादिभिस्संदिदर्शयिषुरष्टमं सूत्रं रचितवानिति तदवतरणिकामाह न केवलमेभिरेवेत्यादि । सच्छब्दः प्रशंसादिषु वर्तते तद्यथा—प्रशंसायां तावत् सद्धर्मः सत्कुलमित्यादौ, क्वचिद्स्थितत्वे सन्नात्मा सन्परलोक इत्यादौ, क्वचिदादरे सत्कृत्याचार्यान् शृणोतीत्यादौ, तत्रेह प्रामाणिकत्वलक्षणाऽस्तित्वाऽर्थकत्वं व्यवस्थापयितुमाशङ्कामुत्थापयति सम्यग्दर्शनं किमस्ति नास्तीति । तदर्थमाह सम्यग्दर्शनशब्द इत्यादि । आशङ्काबीजमाह शब्दो हीत्यादिना । यत्त्वित्यादिनाऽन्यमतं प्रदर्श्य तन्निषेधति—तन्नेत्यनेन, निषेधे हेतुमाह रूपकादाविवेच्छाविशेषस्योत्तेजकत्वादिति मुखचन्द्र इत्यादि रूपकस्थले मुखचन्द्रयोर्भेदनिश्चयरूपाऽयोग्यताज्ञानदशायामपि मुखे चन्द्रत्वज्ञानं मे जायतामितिजिज्ञासया मुखे चन्द्राभेदविषयकाऽऽहार्यबोधस्योपगमेन शशविषाणादिवाक्यादपि विषाणे शशीयत्वाभावज्ञानरूपाऽयोग्यताज्ञानदशायामपि विषाणे शशीयत्वज्ञानं मे जायतामिति जिज्ञासया विषाणे शशीयाऽभेदविषयकाऽऽहार्यबोधस्स्यादेवेति तज्जन

षशब्दो नाबोधक इति भावः, प्रामाणिकार्थबोधकत्वे

यामाह–क्वास्तीति चेदुच्यते, द्वये पदार्थां जीवा अजीवाश्च। तत्राजीवेषु धर्मादिषु नास्ति, निश्चयतश्चेतनगुणस्याचेतनेऽसमवेतत्वात्, स्वामित्वचिन्तायामजीवस्य सम्यग्दर्शनमिति यदुक्तं तदुपचारात्, स्वामित्वस्योपचरितस्यैव व्यवहारार्थत्वात्, अनुपचरितस्य गुणगुणिभावानतिरेकादिति द्रष्टव्यम्। जीवेषु का वार्तेत्यत आह–जीवेषु तु भाज्यम्। तुशब्द एवकारार्थे, भाज्यमेव, नावश्यंभावि सर्वेषु, भजनां दर्शयति। तद्यथा–गतीन्द्रियेत्यादिना, गत्यादीनि चान्यत्रावश्यकादौ प्रपञ्चेनोक्तानि, स्थानाशून्यार्थं तु किञ्चिदुच्यते–गत्यादिषु पूर्वप्रतिपन्नाः प्रतिपद्यमानाश्च सम्यक्त्वं चिन्त्यन्ते। तत्र नारकप्रभृतिषु गतिषु चतसृष्वपि पूर्वप्रतिपन्नाः प्रतिपद्यमानाश्च जीवाः सन्ति। नरकतिर्यग्देवगतिषु क्षायिकक्षायोपशमिके स्याताम्। मनुजगतौ त्रीण्यपि। इन्द्रियाणि सामान्येनाश्रित्य सन्ति पूर्वप्रतिपन्नाः प्रतिपद्यमानकाश्च।

---

णार्थप्रवृत्तेश्चेति–प्रशमसंवेगनिर्वेदानुकम्पाऽऽस्तिक्यान्यतमलिङ्गकानुमानसिद्धत्वादित्यर्थः। धर्मादिषु धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकायपुद्गलास्तिकायकालेषु पञ्चसु, नास्तित्वे हेतुमाह–निश्चयत इत्यादि। ननु चेतनगुणो नाचेतने समवेतस्तर्हि कथमजीवे सम्यग्दर्शनमिति पूर्वमुक्तमित्याशङ्कायां तदुत्तरमाह–स्वामित्वचिन्तायामिति। ननु किं चतुःप्रकारासु गतिषु सम्यग्दर्शनं प्रतिपन्नाः प्रतिपद्यमानाश्च जीवास्सन्ति न वेति प्रश्ने तदुत्तरमाह–तत्र नारकप्रभृतिष्वित्यादि। चतसृष्वपीति। यदाह विशेषावश्यकभाष्ये–" चउसु वि गतीसु नियमा सम्मत्तसुयस्स होइ पडिवत्ती। २७११।" इति। अनेन सम्यक्त्वं श्रुतञ्च विवक्षितकाले प्रतिपद्यमानका जीवास्सन्ति तर्हि तत्प्रतिपन्नास्तु सुतरां सदैव सन्त्येवेत्युक्तं भवति, अत एव तट्टीकायां पूर्वप्रतिपन्नास्त्वनयोस्सदैव लभ्यन्त इत्युक्तं सङ्गच्छते। ननु सर्वदा प्रतिसमयं पूर्वप्रतिपन्ना नियमतो यथा सन्ति तथा प्रतिपद्यमानकास्सन्ति न वेति प्रश्ने कदाचिद्भवन्ति कदाचिन्नेत्युत्तरम्, तत्र प्रतिपद्यमानका अभिधीयन्ते ते, ये तत्प्रथमतया सम्यग्दर्शनं प्रतिपद्यन्ते, तेऽपि प्रथमसमय एव प्रतिपद्यमानका उच्यन्ते, शेषसमयेषु तु पूर्वप्रतिपन्ना एव भवन्तीत्यनयोर्विशेषः। एवमेवाग्रेऽपि ज्ञेयम्। नरकतिर्यग्देवगतिषु क्षायिकक्षायोपशमिके स्यातामिति। प्रवचनसारोद्धारे एकोनपञ्चाशदधिकशततमे द्वारे तु–" आई पुढवीसु तिसु खय १ उवसम २ वेयगं ३ च सम्मत्तं। वेमाणियदेवाणं पणिंदितिरियाण एमेव ।९६१।" इत्येवं दृश्यते, तत्र 'खओवसमवेयगं' ति सूचकत्वात्सूत्रस्य क्षायिकमौपशमिकं वेदकं च सम्यक्त्वं भवन्तीत्यर्थः, अत्र वेदकमिति–वेद्यन्ते–अनुभूयन्ते शुद्धसम्यक्त्वपुञ्जपुद्गला अस्मिन्निति वेदकं क्षायोपशमिकं सम्यक्त्वमुच्यते, यत्पुनः क्षप्यमाणसम्यक्त्वपुञ्जपुद्गलचरमग्रासलक्षणं वेदकसम्यक्त्वं तन्नात्र पृथग् विवक्षितम्, पुद्गलवेदनस्य समानत्वेन क्षायोपशमिकसम्यक्त्व एव तस्यान्तर्भावात्, ततोऽयमर्थः–आद्यनरकपृथिवीत्रयवर्त्तिनारकाणां क्षायिकौपशमिकक्षायोपशमिकानि त्रीण्यपि सम्यक्त्वानि सम्भवन्तीति, तथाहि–योऽनादिमिथ्यादृष्टिर्नारकः प्रथमं सम्यक्त्वमवाप्नोति तस्यान्तरकरणकालेऽन्तर्मुहूर्त्तमौपशमिकं सम्यक्त्वं भवति। औपशमिकसम्यक्त्वाच्चान-

एकेन्द्रियेषु न पूर्वप्रतिपन्ना न प्रतिपद्यमानकाः । द्वित्रिचतुरिन्द्रियेष्वसंज्ञिपञ्चेन्द्रियेषु च पूर्वप्रतिपन्ना भाज्याः सास्वादनसम्यक्त्वं प्रति, प्रतिपद्यमानास्तु न सन्त्येव । संज्ञिपञ्चेन्द्रियेषु द्वयमप्यस्ति । कायान् पृथिव्यादीनाश्रित्य सामान्येन द्वयमप्यस्ति । विशेषेण धरणिजलानलानिलतरुषु द्वयं न सम्भवत्येव । द्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियेषु पूर्वप्रतिपन्नाः स्युर्न प्रतिपद्यमानाः । संज्ञिपञ्चेन्द्रियत्रसकाये द्वयमपि स्यात् । योगे मनोवाक्कायेषु सामान्येन द्वयमपि । काययोगभाजां पृथिव्यादीनां तरुपर्यन्तानां न द्वयम् । कायवाग्-योगयुजां द्वित्रिचतुरसंज्ञिपञ्चेन्द्रियाणां पूर्वप्रतिपन्नत्वमेव । मनोवाक्काययोगयुजां द्वयम् । कषायेऽनन्तानुब-

नन्तरं शुद्धसम्यक्त्वपुञ्जपुद्गलान् वेदयतस्तस्यापि क्षायोपशमिकं सम्यक्त्वमवाप्यते, मनुष्यतिर्यग्भ्यो वा यः क्षायोपशमिकसम्यग्दृष्टिर्नारकेषूत्पद्यते तस्यैतत्पारभविकं लभ्यते, विराधितसम्यक्त्वो हि षष्ठीपृथिवीं यावद् गृहीतेनापि सम्यक्त्वेन सैद्धान्तिकमतेन कश्चिदुत्पद्यते, कार्मग्रन्थिकमतेन तु वैमानिकदेवेभ्योऽन्यत्र तिर्यङ्मनुष्यो वा वान्तेनैव क्षायोपशमिकसम्यक्त्वेनोत्पद्यते, न गृहीतेनेति, यदा पुनः कश्चिन्मनुष्यो नारकयोग्यमायुर्बन्धं विधाय पश्चात्क्षपकश्रेणिमारभते, बद्धायुष्कत्वाच्च तां न समापयति, केवलं दर्शनसप्तकं क्षपयित्वा क्षायिकं सम्यक्त्वमवाप्नोति, ततश्च मनुष्यायुःक्षयसमये मृत्वा नारकेषूत्पद्यते तदाऽऽद्यपृथिवीत्रयनारकाणां पारभविकं क्षायिकं सम्यक्त्वमवाप्यते, न तु तद्भविकं, मनुष्यस्यैव तद्भवे क्षायिकसम्यक्त्वारम्भकत्वादिति । तथा " वेमाणियदेवाणं " वैमानिकदेवानां " पणिंदितिरियाणत्ति " व्याख्यानतो विशेषप्रतिपत्तिन्यायेन पञ्चेन्द्रियाणां मनुष्याणां तिरश्चां वा त्रीण्यपि सम्यक्त्वानि भवन्तीत्यर्थः । विशेषार्थस्तु तत एवावसेयः । नन्विन्द्रियद्वारे पञ्चेन्द्रियजीवा अप्यागता इत्यतस्सामान्येन पूर्वप्रतिपन्नाः प्रतिपद्यमानाश्च भवन्तु, पृथिवीकायाद्येकेन्द्रियेषु किमुभयरूपास्सन्ति न वेत्याशङ्कायां " उभयाभावो पुढवाइएसु " इति " उभयाभावो एगिंदिएसु सम्मत्तलद्धीए " इति चागमवचनमनुसृत्याह—एकेन्द्रियेषु नेत्यादि । सास्वादनसम्यक्त्वयुक्तस्यापि पृथिव्यादिषूत्पादाभावात्सम्यक्त्वप्रतिपत्त्यभावाच्चेति भावः । एतदपि सैद्धान्तिकमतेन, यदुक्तं प्रज्ञापनायां " पुढविकाइयाणं पुच्छा, गोयमा ! पुढविकाइया नो सम्मदिट्ठी मिच्छादिट्ठी नो सम्मामिच्छादिट्ठी, एवं जाव वणप्फइकाइया " इति । कार्मग्रन्थिकास्तु लब्धिपर्याप्तबादरपृथिव्यब्वनस्पतीन् करणाऽपर्याप्तान् पूर्वप्रतिपन्नानिच्छन्ति, पारभविकसास्वादनसम्यक्त्ववतस्तेषूत्पत्तेः, तन्मतेनैकेन्द्रियेषु पूर्वप्रतिपन्नास्सन्ति न तु प्रतिपद्यमानका इति । द्वीन्द्रियाद्यसंज्ञिपञ्चेन्द्रियान्तजीवेषु ये केचित्सास्वादनसम्यक्त्वेन सह पूर्वभवादागच्छन्ति, त एवाऽपर्याप्तावस्थायां पूर्वप्रतिपत्तिमङ्गीकृत्योभयमतेन स्युः सम्यग्दर्शनस्य पूर्वप्रतिपन्नाः, उक्तञ्च—" विगलेसु होज्ज उववन्नो " इति । सम्यग्दर्शनस्य प्रतिपद्यमानकास्तु न भवन्त्येव, तेषां तथाविधविशुद्ध्यभावादित्याशयेनाह द्वित्रिचतुरिन्द्रियेष्वसंज्ञिपञ्चेन्द्रियेष्वित्यादि । द्वयं न सम्भवत्येवेति पञ्च पूर्ववज्ज्ञेयमिति । कषायेऽनन्तानुबन्धिनामुदये

न्धिनामुदये न द्वयम् । शेषकषायोदये द्वयम् । वेदे सामान्येन द्वयं, विशेषेणाऽपि स्त्रीवेदपुरुषवेदयोर्द्वयम् । नपुंसकवेदे एकेन्द्रियाणां न द्वयम् । विकलेन्द्रियाणामसंज्ञिपञ्चेन्द्रियाणां च पूर्वप्रतिपन्नत्वमेव । संज्ञिपञ्चेन्द्रियनपुंसकेषु द्वयम् । लेश्यासूपरितनीषु द्वयम् । आद्यासु प्रतिपन्नाः स्युर्न तु प्रतिपद्यन्ते । किं सम्यग्दृष्टिः प्रतिपद्यते मिथ्यादृष्टिर्वा ? । अत्र निश्चयस्य सम्यग्दृष्टिः प्रतिपद्यते, अभूतं नोत्पद्यते शशविषाणादिवत् ।

न द्वयम्—सास्वादनकालस्याल्पत्वात् तदविवक्षां कृत्वोक्तमेतत्, अत एव विशेषावश्यके त्रयोदशोत्तरचतुश्शततमगाथाटीकायां मतिज्ञानमुद्दिश्य कषायद्वारे तु चतुर्ष्वनन्तानुबन्धिषु सास्वादनमङ्गीकृत्य पूर्वप्रतिपन्नो लभ्यते न प्रतिपद्यमानक इत्युक्तं सङ्गच्छते । लेश्यास्विति-श्लेषयन्त्यात्मानमष्टविधेन कर्मणा सहेति लेश्याः, कायाद्यन्यतमयोगवतः कृष्णादिद्रव्यसम्बन्धादात्मनः परिणामा भावलेश्याः, तास्वित्यर्थः । उक्तञ्च—" कृष्णादिद्रव्यसाचिव्यात्, परिणामोऽयमात्मनः । स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रवर्त्तते ॥ १ ॥ " इति । आद्यलेश्यात्रयाणामविशुद्धत्वेऽपि तत्र सम्यग्दर्शनस्य केचित्प्रतिपन्नास्स्युः " पुव्वपडिवण्णओ पुण अण्णतरीए उ लेसाए " इत्युक्तेः । न तु प्रतिपद्यमानकाः, उपरितनलेश्यात्रयाणां विशुद्धत्वेन तत्र प्रतिपन्नाः प्रतिपद्यमानाश्च स्युरित्याह लेश्यासूपरितनीषु द्वयम्, आद्यासु प्रतिपन्नाः स्युः, न तु प्रतिपद्यन्त इति । नन्वेवं सति लेश्याद्वारे—'सम्मत्तसुयं सव्वासु लहइ' इत्यावश्यकभाष्यविरोधस्स्यादिति चेत्, नैवम्, तत्रावस्थितकृष्णादिद्रव्यरूपां द्रव्यलेश्यामधिकृत्यैवोक्तत्वात्, अत्र तु भावलेश्याया एवाधिकारादिति । अथ निश्चयनयमतेन यस्सम्यग्दृष्टिस्स एव सम्यग्दर्शनं प्रतिपद्यते, न तु मिथ्यादृष्टिः, यतस्सम्यग्दर्शनात्मककार्यं पूर्वमसत्स्यात्तर्हि नोत्पद्येत, अविद्यमानत्वात्, खपुष्पवत्, अथाविद्यमानमपि जायेत तर्हि प्रागभूतं शशविषाणमपि पश्चादुत्पद्येत, प्रागसत्त्वाविशेषात् । तस्मात् क्रियाकालनिष्ठाकालयोरैक्याच्चरमक्रियाक्षण एव प्रारभ्यते कार्यं, तस्मिन्नेव क्षणे निष्पद्यते तदित्याशयेन निश्चयनयमतमाह अत्र निश्चयस्य सम्यग्दृष्टिः प्रतिपद्यते इति । ननु सामग्री वै कार्यजनिका, सा च नैकक्षणमात्रभाविनी, किन्तु दीर्घकालभाविनीत्युत्पद्यमानानां घटादीनां दीर्घकालो लगन् किन्नावलोक्यते ? निश्चयवादिना, ततो न यस्मिन्समये घटादिः प्रारभ्यते तस्मिन्नेव समये निष्पद्यते, मृदानयन तत्पिण्डविधान—चक्रारोपण—शिवकादिविधानादिचिरकालेनैव तदुत्पत्तेः, एवं प्रकृतेऽपि मिथ्यादृष्टेर्जीवस्य प्राक्कर्मक्षयोपशमप्रभवान्निसर्गाद्यः शुभाध्यवसायस्तदुत्पन्नकर्मक्षयोपशमादिसामग्र्याः श्रीगुरुभगवत्समीपगमनसिद्धान्तश्रवणचिन्तनेहनादिप्रकारोत्पद्यमानशुभाध्यवसायजन्यकर्मक्षयोपशमादिसामग्र्याश्च सम्पत्तावेव चिरकालेन सम्यग्दर्शनमुत्पद्यत इत्यतो यः पूर्वं मिथ्यादृष्टिस्स एव सम्यग्दर्शनं प्रतिपद्यते, न तु सम्यग्दृष्टिः, पूर्वमात्मन्यसद्भूतस्यैव सम्यग्दर्शनस्य स्वकारणोत्तरकालावच्छेदेन प्रतिपत्तिभावात्, न हि लोकेऽपि कारणभूते मृद्द्रव्ये घटकार्यं पूर्वं सत् क्रियते, किन्त्वसदेव, यदि च

व्यवहारस्य मिथ्यादृष्टिः प्रतिपद्यते, प्रतिपत्तेरभूतभावविषयत्वात्, असत् कारणे कार्यमिति दर्शनात् । अन्यक्रियाकालेऽसदपि स्वक्रियाकाले सदेव कार्यं क्रियते, क्रियाकालनिष्ठाकालयोरभेदादिति शुद्धर्जुसूत्ररूपनिश्चयाऽऽश्रयणेऽपि सम्यग्दृष्टिरेव सम्यक्त्वं प्रतिपद्यते । एवं ज्ञानी निश्चयनयस्याज्ञानी व्यवहारनयस्य । चक्षुर्दर्शनिषु द्वयम्, मक्षिकाद्यसंज्ञिषु पूर्वप्रतिपन्नाः स्युर्न तु प्रतिपद्यमानकाः । संज्ञिपञ्चेन्द्रियचक्षुर्दर्शनिषु द्वयम् । अचक्षुर्दर्शनिषु पृथिव्यादिषु पञ्चसु द्वयं नास्ति, शेषेषु द्वित्रिचतुरिन्द्रियासंज्ञिष्वचक्षुर्दर्शनिषु पूर्वप्रतिपन्नाः स्युर्न तु प्रतिपद्यन्ते । संज्ञिपञ्चेन्द्रियाचक्षुर्दर्शनिषु द्वयम् । चारित्री पूर्वप्रतिपन्न एव । अचारित्रः पूर्वप्रतिपन्नः प्रतिपद्यमानश्च स्यात् । आहारकेषु

---

सदेव क्रियते तर्हि क्रियतां नित्यं, सत्त्वाविशेषादिति क्रियानुपरमप्रसङ्गः, न चैवं सत्येकस्यापि कार्यस्य परिसमाप्तिः, एवं प्रस्तुते सम्यग्दर्शनस्यापि प्रतिपत्त्यनवस्था, तदेवं न क्रियाकाले कार्यमस्ति, अनुपलभ्यमानत्वात्, किन्तु तन्निष्ठाकाल एव तदस्ति, तदैवोपलभ्यमानत्वादिति पूर्वं कार्यं प्रारभ्यते, चरमक्रियाक्षणे च निष्पद्यते, क्रियाकालनिष्ठाकालयोः पूर्वोत्तरकालभावित्वेनात्यन्तभेदात्, तस्मान्मिथ्यादृष्टिरेव सम्यग्दर्शनं प्रतिपद्यते, न तु सम्यग्दृष्टिरित्येवं व्यवहारनयमतमाह—व्यवहारस्य मिथ्यादृष्टिः प्रतिपद्यत इति । अथ प्रतिसमयं भिन्ना एव क्रियाः, भिन्नान्येव च मृदानयन मृत्पिण्डविधान शिवक स्थास—कोश कुशूलादीनि कार्याणि भवन्ति, घटस्तु चरमैकक्रियाक्षणमात्रभाव्येवेति तत्र व्यवहारनयवादिना यद्दीर्घक्रियाकालप्रेरणं क्रियते तत्तस्याज्ञतासूचकमेव, यतो न प्रथमे प्रारम्भसमये घटः प्रारब्धः, किन्तु चक्रमस्तकमृत्पिण्डारोपणान्येवारब्धानि, तत्र च दीर्घकालो भवतु, किमत्र हन्त ? घटस्यायातम्, तदेवमन्यक्रियारम्भकालो न घटस्य, किन्तु भिन्नभिन्नकार्याणामेवेति तदानीं घटोऽसन्नपि स्वोत्पत्तिक्षणलक्षणस्वकाले सन्नेवोत्पद्यते, नासन्, ये च यदि सदेव क्रियते तर्हि क्रियतां नित्यमित्यादिप्राक्प्रोक्तदोषास्तेऽपि न, यद्यसत् क्रियते तर्हि क्रियतां नित्यमेव, असत्त्वाविशेषात्, न चैवमेकस्यापि कार्यस्य निष्पत्तिर्युज्यते, खरविषाणकल्पे चाऽसति कार्ये समुत्पाद्ये क्रियावैफल्यमित्यादिदोषसाम्यात्, तथा च घटादिपूर्वतरकारणानि स्वस्वकार्य एवोपक्षीणानीति घटादितत्तत्कार्यं स्वोत्पत्तिकाले सदेव स्वकारणादुत्पद्यते, एवं निसर्गाधिगमसम्यग्दर्शनतत्तत्कारणानि यानि भवता पूर्वं प्रदर्शितानि तान्यपि स्वस्वकार्यकरण एवोपक्षीणानीत्यन्यथासिद्धानि, तानि सम्यग्दर्शनम्प्रत्याकिञ्चित्करत्वेन न सम्यग्दर्शनोत्पादकानीति तदानीमसदपि सम्यग्दर्शनं कर्मक्षयोपशमादिसहकृतं चरमाक्रियान्त्यक्षणलक्षणस्वक्रियाकाले सदेव सम्यग्दृष्टिः प्रतिपद्यत इति शुद्धर्जुसूत्ररूपनिश्चयनयमतमाह—अन्यक्रियाकालेऽसदपीत्यादि ॥ एवं ज्ञानी निश्चयनयस्याज्ञानी व्यवहारनयस्येति—अत्र मते सम्यक्त्वं प्रतिपद्यत इत्यनुषज्यते । "नत्थि चरित्तं सम्मत्तविहूणं दंसणं तु भयणिज्जं" इत्यावश्यकचूर्णिपाठात् चारित्री सम्यग्दर्शनस्य नियमेन पूर्वप्रतिपन्न एव जिनोक्ततत्त्वश्रद्धानमन्तरेण भावचारित्राभावादित्याह चारित्री पूर्वप्रतिपन्न ... आ... केषु

द्वयम् । अनाहारकः पूर्वप्रतिपन्नः, न तु प्रतिपद्यमानकोऽन्तरगतौ संभविता, साकारोपयुक्तः प्रतिपद्यते उतानाकारोपयुक्त इति ? । उच्यते—साकारोपयुक्तः प्रतिपद्यते पूर्वप्रतिपन्नश्च, अनाकारोपयुक्तस्तु पूर्वप्रतिपन्न एव स्यात्, न तु प्रतिपद्यमानकः, यतः किल "सर्वा लब्धयः साकारोपयोगोपयुक्तस्य भवन्ति "इति पारमर्षप्रसिद्धम् । एतेषु त्रयोदशस्वनुयोगद्वारेषु व्याख्यानं यथासम्भवं यत्र यत् सम्भवति तथा सद्भूतपदार्थस्य सम्यग्दर्शनपदस्य प्ररूपणा कर्तव्या । भाषकपरित्तादयस्तु नादृता भाष्यकृता, भाषकपरित्तपर्याप्तसूक्ष्मसंज्ञिभवचरमाणामिन्द्रियकायादिद्वारेष्वेवावतारादिति वदन्ति । सङ्ख्येति द्वितीयद्वारपरामर्शः । किं सम्यग्दर्शनमिति—किं परिमाणाः सम्यग्दर्शनिन इत्यर्थः । उत्तरवाक्येऽसंख्येयानि सम्यग्दर्शनानीति सिद्धकेवलिवर्जयावत्सम्यक्त्ववज्जीवापेक्षया, सम्यग्दृष्टयस्त्वनन्ता इति भवस्थकेवलिसिद्धापेक्षया । क्षेत्रमिति तृतीयद्वारम् । क्षियन्ति निवसन्ति यत्र जीवादिद्रव्याणि तत्क्षेत्रमाकाशम्, य एतेऽसंख्येयतयानन्ततया च निर्धारिता एतैः कियदाकाशं व्याप्तमिति संशये पृच्छति सम्यग्दर्शनं कियति क्षेत्रे, भावव्युत्पत्त्या सम्यग्दृष्टेरपि ग्रहः, आक्षेपाद्वा, एकस्य वा विवक्षितस्य ग्रहणम् । लोकस्यासंख्येयभाग इत्युत्तरम् । एको हि विवक्षितः सम्यग्दर्शनी लोकस्यासंख्येयभागे भवति । सर्वानधिकृत्य प्रश्नेऽपि अधिकतरे लोकासंख्येयभाग एव, सम्यग्दृष्टिः क्षेत्रतो लोकेऽपि स्यात्, न स्यात्, अवगाहकतावच्छिन्नाकाशस्यैव क्षेत्रपदार्थत्वात्, तस्याश्च द्वयोस्तुल्यपरिमाणत्वेऽङ्गुल्योरिवासम्भवात् । स्पर्शनं चतुर्थद्वारम् । तत्पर्यन्तवर्तिदेशावच्छेदेन सम्बन्धः । तत्र सम्यग्दर्शनिना किं स्पृष्टमिति प्रश्ने, उत्तरं लोकस्यासंख्येयभागः, पर्यन्तदेशैरधिकस्य क्षेत्रसम्बन्धस्यैव स्पर्शनापदार्थत्वात्, उक्तं च परमाणुमधिकृत्य महाभाष्यकृता—'एगपएसं खित्तं सत्त पएसा य से फुसणं' त्ति ।

द्वयमिति—उक्तञ्च विशेषावश्यकनिर्युक्तौ "आहारगो उ जीवो पडिवज्जइ सो चउण्हमण्णयरं " इति । पूर्वप्रतिपन्नस्त्वस्त्येवेत्यर्थाल्लभ्यत एवेति । अनाहारकः कश्चिद् देवस्सम्यक्त्वसहितो मनुष्यगतौ मनुष्यो वा देवगतावुत्पद्यमानः सम्यग्दर्शनस्य पूर्वप्रतिपन्नो भवति, न तु प्रतिपद्यमानकः, अपान्तरालगतौ तथाविधविशुद्ध्यभावादित्याशयेनाह **अनाहारकः पूर्वप्रतिपन्न** इत्यादि । अन्तरगताविति—अपान्तरालगतौ सम्यक्त्वसामग्र्यभावात्प्रतिपद्यमानको न सम्भवतीत्यर्थः । यदाह विशेषावश्यके—' सम्मत्त-सुए सिया इयरो ' इति, इतरोऽनाहारकोऽपर्याप्तश्च, तत्रानाहारकोऽपान्तरालगतौ सम्यक्त्वश्रुते अङ्गीकृत्य स्याद्भवेत् 'पूर्वप्रतिपन्नः, प्रतिपद्यमानस्तु नैव' इति वाक्यशेषः । केवलिसमुद्घाते शैलेश्यवस्थायाञ्चाऽनाहारकस्तु पूर्वप्रतिपन्न एवेति । "सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स उववज्जंति" इत्यागममनुसृत्याह—यतः किलेत्यादि । लोकस्यासंख्येयभागे भवन्तीति—विवक्षितसम्यग्दर्शनी असङ्ख्येयप्रदेशात्मको जीवोऽसंख्येयप्रदेशात्मके यस्मिन्नाकाशभागेऽवगाह्य स्थितः स भागो बुद्ध्या कल्पिताऽसंख्येयखण्डस्य लोकस्यैकोऽसंख्येयभाग इति तत्र स्थित इत्यर्थः । सर्वे च सम्यग्दर्शनिनो जीवास्ततोऽप्यधिकतरे लोकस्यासंख्येयभागे वर्त्तन्त इत्याह—सर्वानधिकृत्येति । स्पर्शनलक्षणमाह—तत्पर्यन्तवर्त्तिदेशावच्छेदेन सम्बन्ध इति—तत्र तत्पदेन सम्यग्दर्शनिना यदवगाढं क्षेत्रं तद् ग्राह्यम् । " एगपएसं खित्तं सत्त पएसा य से फुसणा" इति—अत्र "अवगाहणा-

सम्यग्दृष्टिना तु सर्वलोक इति । तुशब्द एवकारार्थः । समुद्घातगतेन चतुर्थसमयवर्तिना सम्यग्दृष्टिनैव सर्वलोक इति । अनया भङ्गया शब्दभेदादर्थभेद आगत इति पृच्छति-सम्यग्दृष्टिसम्यग्दर्शनयोः कः प्रतिविशेषः ? । प्रतिविशेषो भेदः । सूरिरुत्तरमाह-अपायेत्यादि । अपायो निश्चयापरपर्यायो मतिज्ञानतृतीयोऽंशः, सद्द्रव्याणि शुद्धमिथ्यात्वपुद्गलास्त एव तथा ताः, सत्पदप्ररूपणतेत्यादाविव स्वार्थिकस्तल् तयेतीत्थम्भूतलक्षणा तृतीया, यावदपायो यावद्वा सद्द्रव्याणि तावत् सम्यग्दर्शनमित्यर्थः । अपायशब्दस्य विनाशार्थकत्वभ्रमं निरस्यति । अपाय आभिनिबोधिकमिति, तेन योगस्तद्योगः । सम्यग्दर्शनपुद्गलेषु सत्त्वसत्सु स भवतीति व्यापित्वादस्य ग्रहणम् । अपायसद्द्रव्योभयग्रहणमवान्तरभेदख्यापनाय, लक्षणं त्वपायवती रुचिः सम्यग्दर्शनमित्येव ज्याय इति निर्गलितोऽर्थः । तत्सम्यग्दर्शनमपायात्मकरुचिलक्षणं, केवलिनो नास्त्यतो न सम्यग्दर्शनी केवली, सम्यग्दृष्टिस्तु स्यात् । रूढ्या नैवं भावव्युत्पत्त्या तु स्यादिति तुशब्देन द्योत्यते । काल इति पञ्चमं द्वारम् । स्थिति-

इरित्तं पि फुसइ वहिं जहाऽणुणोऽभिहियं" इति पूर्वार्द्धगाथा, इयञ्च महाभाष्ये द्वात्रिंशदधिकचतुर्दशशततमा गाथा। यस्मिन्नेकस्मिन्नाकाशप्रदेशे परमाणुरवगाढस्तम्, अन्यांश्च षड्दिक्सम्बन्धिनः षड् नभःप्रदेशान् स्पृशतीति कृत्वैकपरमाणोस्सप्तप्रदेशा स्पर्शना । यस्मिन् प्रदेशे परमाणुरवगाढस्तत्क्षेत्रमेकप्रदेशमिति परमाणुदृष्टान्तेन क्षेत्रस्पर्शनयोर्विशेषो ज्ञेयः । अष्टौ चतुर्दश भागा देशोना इति तत्त्वार्थभाष्यम्, बृहट्टीकाकारेणैतट्टीकाकृता च नैव विवेचितम्, हारिभद्रीटीकान्विततत्त्वार्थभाष्ये मुद्रिते च नैव स पाठो दृश्यते, तदत्र तत्त्वं बहुश्रुतेन स्वयमेव भावनीयम् । अत्र जीवसमासे "मिच्छेहि सव्वलोओ, सासगमिस्सेहिं अजयदेसेहिं । पुट्ठा चउदस भागा, बारस अट्ठट्ठछच्चेव" ॥१९५॥ इति गाथाटीकायां "अविरतसम्यग्दृष्टयोऽप्यष्टरज्जूः स्पृशन्ति, भावना त्विह सम्यग्मिथ्यादृष्टिवदेवेत्युक्तमतिदेशवाक्येन । पञ्चसङ्ग्रहेऽपि " सहसारंतय देवा, नारयनेहेण जंति तइयभुवं । निज्जंति अच्चुयं जा, अच्चुयदेवेण इयरसुरा ॥ ३१ ॥ " इति गाथाटीकायां " एवमविरतसम्यग्दृष्टीनामप्यष्टरज्जुस्पर्शना भावनीयेत्युक्तमिति । सीतेन्द्रश्चतुर्थपृथिव्यां लक्ष्मणवेदनोपशमनार्थं गतश्श्रूयत इत्यविरतसम्यग्दृष्टिसीतेन्द्रजीवनिरन्तरस्पर्शनापेक्षयाप्युक्तस्पर्शनाऽऽगमाबाधेन विज्ञैर्भावनीयेति । केवलिसमुद्घातावस्थायां चतुर्थसमयावच्छेदेन सम्यग्दृष्टिना केवलिना प्रतिप्रदेशव्याप्त्याऽसंख्येयप्रदेशात्मको निरवशेषो लोकस्स्पृष्टः, न त्वितरेण प्राणिनेत्याह-समुद्घातगतेन चतुर्थसमयवर्तिना सम्यग्दृष्टिनैव सर्वलोक इति । उक्तञ्च विशेषावश्यकभाष्ये स्पर्शनाद्वारे "सम्मत्तचरणसहिया सव्वं लोगं फुसे निरवसेसं" । २७८२ । इति । सम्यग्दर्शनपुद्गलेषु सत्स्विति-अक्षीणानन्तानुबन्ध्यादिसप्तकस्येति शेषः । असत्स्विति-क्षीणदर्शनमोहनीयसप्तकस्येति शेषः । स-अपाययोगः । अपायसद्द्रव्यवती रुचिः सम्यग्दर्शनमिति लक्षणकरणेऽपायसहचरिते क्षायिकसम्यग्दर्शनेऽव्याप्तिस्स्यादित्यव्याप्त्यादिदोषरहितं लक्षणमाह-लक्षणं त्वपायवती रुचिरिति । सम्यग्दृष्टिस्तु भवतीति भाष्योक्ततुशब्दद्योत्यार्थमाह-रूढ्या नैवमित्यादि ।

द्वारेण नानार्थत्वेऽप्येकसर्वजीवाश्रयणेन पुनरभिधानम् । एकजीवेन नानाजीवैश्च परीक्ष्यमिति । एकेन प्राप्तं तत्कियन्तं कालमनुपाल्यते, नानाजीवैश्च कियन्तं कालं धार्यत इति परीक्ष्यमित्यर्थः । नानाजीवान् प्रति सर्वाद्धा सर्वकालं महाविदेहादावविच्छेदात् । अन्तरमिति षष्ठं द्वारम् । विरहकालः सम्यग्दर्शनं प्राप्य पुनस्त्यक्त्वा यावन्नासादयति स काल इत्यर्थः । औपशमिकक्षायोपशमिके आश्रित्येयं चिन्ता, एकं जीवं प्रतीत्यादि । एको जन्तुरौपशमिकं क्षायोपशमिकं वा प्राप्योज्झित्वा पुनः कश्चिन्मुहूर्तान्ते, कश्चित्त्वनन्तेन कालेन, स चानन्तकाल उपार्द्धपुद्गलपरावर्तः । पुद्गलपरावर्तस्य समयसिद्धस्यार्थोऽर्धपुद्गलपरावर्तः, असमेऽर्धे पुंस्त्वम्, उपगतोऽर्धं किञ्चिन्न्यून इति प्रादिसमासः । नानाजीवानिति सर्वजीवानाश्रित्य, नास्त्यन्तरं महाविदेहादिषु सर्वकालमवस्थानादिति, क्षायिकस्य त्वनपगमान्नास्त्यन्तरम् । भाव इति सप्तमं द्वारम् । त्रिषु औपशमिकक्षायोपशमिकक्षायिकेषु । अल्पबहुत्वमष्टमं द्वारम्, आश्रयभेदेन, सर्वस्तोकमौपशमिकं, यत ईदृशीं परिणतिं श्रेण्यारोहादिस्वभावां न बहवः सत्त्वाः संप्राप्नुवन्तीत्यागमः । ततः क्षायिकमसंख्येयगुणमिति, छद्मस्थवर्तिन औपशमिकस्यावधितयोपात्तत्वादवधिमतापि तादृशेन भवितव्यमिति श्रेणिकादीनां छद्मस्थानां क्षायिकस्योपादानादियमुक्तिः । ततोऽपि छद्मस्थस्वामिकक्षायिकात् क्षायोपशमिकं भवत्यसंख्येयगुणं, सर्वगतिषु बहुस्वाम्याधारत्वात् । यर्हि क्षायिकं केवल्याधारं तत् कियत् ? । उच्यते सर्वकेवलिनामानन्त्यादनन्तगुणम् । अत आह-सम्यग्दृष्टयस्त्वनन्तगुणा इति ।

कालद्वारोक्तं एकजीवं प्रति जघन्येनान्तर्मुहूर्त्तमिति भाष्यम्—अन्तर्मुहूर्त्तादूर्ध्वं मिथ्यात्वगमनात् केवलज्ञानावाप्तेर्वेति भावः । यदाह—"अंतोमुहुत्तमित्तं जहन्नयं ॥ २७६३ ॥" इति । उत्कृष्टेन षट्षष्टिः सागरोपमाणि साधिकानीति भाष्यम्, एतच्च प्रागेव विवृतमिति । नानाजीवान् प्रति सर्वाद्धेति—इयं तु स्थितिः क्षायोपशमिकस्य चिंतिता, औपशमिकस्य तु यथासम्भवं अन्तर्मुहूर्त्तप्रमाणेति । कश्चिन्मुहूर्त्तान्त इति—पुनरपि सम्यग्दर्शनमवाप्नोतीति तस्य जघन्यतोऽन्तर्मुहूर्त्तं विरहकाल इत्यर्थः । उक्तं भाष्ये—"हीणं भिण्णमुहुत्तं सव्वेसिमेगजीवस्स ॥" २७७६ । इति । कश्चित्त्वनन्तेन कालेनेति—लभते इति शेषः । अयं चोत्कृष्टतो देशोनापार्द्धपुद्गलपरावर्त्तलक्षणविरहकालः केषां जीवानां भवतीति चेत्, उच्यते, कृताशातनादिदोषप्रचुराणां जीवानामिति । उक्तञ्च—"तित्थगर—पवयण—सुयं, आयरियं गणहरं महड्ढीयं । आसायंतो बहुसो, अणंतसंसारिओ होइ ॥१॥" इति । अनन्तसंसारपरिभ्रमणानन्तरं निसर्गादधिगमाद्वा तस्य पुनः सम्यग्दर्शनसमुपलब्धिरित्युत्कृष्टतस्सम्यग्दर्शनस्य विरहकाल उक्तलक्षणो भवतीति भावः । तत इति—तच्छब्दादवधिरूपपञ्चम्यर्थे तसिल् प्रत्ययः । अवधिश्चावधिमदपेक्षक इति छद्मस्थगतस्यात एवापायसहचारितस्यौपशमिकस्यावधितयोक्तत्वादत्रावधिमत् क्षायिकसम्यग्दर्शनमपि छद्मस्थगतमेवापायसहचरितं ग्राह्यम्, साऽप्य एवावध्यवधिमद्भावादित्याशयेनाह—छद्मस्थवर्तिन औपशमिकस्येत्यादि । तादृशेनेति—छद्मस्थवर्त्तिना क्षायिकेणेत्यर्थः । इयमुक्तिरिति—ततः क्षायिकमसङ्ख्येयगुणमित्युक्तिरित्यर्थः ॥ ८ ॥

पूर्वं सम्यग्दर्शनं सभेदं जिज्ञासितमिति तन्निरूपणं सम्पूर्णरीत्या न समाप्यते तावत्त-

सम्यग्दर्शने या निर्देशादियोजना कृता सा ज्ञानादिष्वपि कार्येत्यतिदिशति—एवमिति ॥ ८ ॥ सम्यग्दर्शनं परिसमाप्य ज्ञानं वक्तुमवसरसंगतिं प्रदर्शयन्नाह—उक्तं सम्यग्दर्शनं, ज्ञानं वक्ष्यामः । उक्तमित्यनेन प्रतिबन्धकजिज्ञासापगमः, वक्ष्याम इत्यनेन चावश्यवक्तव्यत्वं प्रकाशत इति जातमवसरसंगतिशरीरम् ॥

## सूत्रम् मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम् ॥ १ ॥ ९ ॥

(भाष्यम्)मतिज्ञानं श्रुतज्ञानं अवधिज्ञानं मनःपर्यायज्ञानं केवलज्ञानमित्येतन्मूलविधानतः पञ्चविधं ज्ञानम् । प्रभेदास्त्वस्य पुरस्ताद्वक्ष्यन्ते ॥

(यशो० टीका) न पञ्चभि० संभूयैकं ज्ञानमवग्रहादिचतुर्भिरिव भवतीति सूचनाय केवलानीति बहुवचनं, ज्ञानमित्यत्रैकवचनं तु प्रतिज्ञानुरूपत्वात् प्रतिवचनस्य । लक्षणानि चैवं बोध्यानि ।

द्विषयकजिज्ञासारूपप्रतिबन्धकबलेन न तदुपरं ज्ञाननिरूपणं कर्तुं शक्यं, तन्निरूपणसमाप्तौ चोक्तजिज्ञासारूपप्रतिबन्धकविगमेनातः परं किं वक्तव्यमिति जिज्ञासया तदनन्तरोद्दिष्टत्वेन क्रमायातज्ञाननिरूपणावसरः प्राप्त एवेत्यवसरसङ्गतिं सङ्गमयन्नाह सम्यग्दर्शनं परिसमाप्येत्यादि । अवसरव क्तव्यत्वमिति—तल्लक्षणावसरसङ्गतिमित्यर्थः । अनेन नवमसूत्रस्याऽष्टमसूत्रेण सहाऽसम्बद्धत्वारेका निरस्तेति ।

नवमसूत्रव्याख्या

अवग्रहेहावायधारणाः १ । १५ । इत्यग्रिमसूत्रस्यावग्रहेहावायधारणात्मकभेदचतुष्टयशाल्येकं मतिज्ञानमित्येवं यथार्थस्तथा मतिश्रुतेत्यादिसूत्रस्य मतिश्रुतावधिमनःपर्यायकेवलात्मकभेदपञ्चकशाल्येकं ज्ञानमिति नार्थः कर्त्तव्यः, किन्तूक्तभेदपञ्चकेन ज्ञानं पञ्चविधमेवेति सूचनाय केवलानीति बहुवचनमित्याह—न पञ्चभिः सम्भूयैकमिति । अत एव भाष्ये एकैकं ज्ञानं विभिन्नमेवेति प्रख्यापनाय प्रोक्तम्—मतिज्ञानं श्रुतज्ञानमित्यादि । नन्वेवं तर्हि ज्ञानस्य पञ्चप्रकारत्वाद्बहुत्वेन ज्ञानानीत्येवं बहुवचनत्वापत्तिरित्याशङ्कायामाह ज्ञानमित्यत्रैकवचनं त्वित्यादि । न च ' ज्ञानं वक्ष्यामः " इति प्रतिज्ञामनुसृत्य विशेष्यवाचकज्ञानपदोत्तरमेकवचनमभ्युपगतं स्यात्तदा विशेषणवाचकमतिश्रुतावधिमनःपर्यायकेवलपदोत्तरमप्येकवचनमेव स्यात्, न हि कोऽपि व्युत्पन्नो नीलपीतरक्ता घट इति प्रयुङ्क्ते, विशेष्यविशेषणवाचकपदयोरसति विशेषानुशासने समानवचनकत्वनियमादिति वाच्यम्, प्रकृते विशेषणवाचकपदोत्तरविभक्त्या विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयैकत्वसङ्ख्याविरुद्धाया बहुत्वसङ्ख्याया विवक्षितत्वात्, नीलेत्यादिप्रयोगे तु तदभावात्, तथा चाऽत्र यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसङ्ख्याविरुद्धसङ्ख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणवाचकपदयोस्समानवचनकत्वमिति नियममनुसृत्य बहुवचनमेव युक्तमिति भावः । अथ ज्ञानपदोत्तरासिप्रत्ययार्थस्यैकत्वस्य कुत्रान्वयः, न च समवायसम्बन्धेन ज्ञान इति वाच्यम्, मत्यादिभेदैस्तस्य बहुत्वात्; न च ज्ञानत्वजाताविति वाच्यम्, ज्ञानमित्यत्र ज्ञानत्वजातेरनुल्लिख्यमानत्वेन स्वरूपतो ज्ञानपदशक्यतावच्छेदकतयाऽन्वयितावच्छेदकरूपेणानुपस्थितेस्तत्र सिप्रत्ययार्थैकत्वस्य पदार्थान्तरस्यान्वयानुपपत्तेरिति चेद्, उच्यते समाधिः, स्वाश्रयवत्त्वसम्बन्धेन सिप्रत्ययार्थस्यैकत्वस्य पदार्था-

इन्द्रियानिन्द्रियव्यापारजन्यं ज्ञानं मतिज्ञानम्, शब्दशक्तिजन्यं ज्ञानं श्रुतज्ञानम्,

न्तरस्य सिप्रत्ययप्रकृत्यर्थे ज्ञान एवान्वयस्स्वीक्रियते, अत एव पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तेरपि न विरोध इति । इन्द्रियानिन्द्रियव्यापारजन्यं ज्ञानं मतिज्ञानमिति इन्द्रियव्यापारमनोव्यापारान्यतरजन्यं यदवग्रहादिज्ञानं तन्मतिज्ञानमित्यर्थः। तेन तादृशव्यापारोभयाऽजन्ये मनोव्यापारमात्रजन्ये मतिज्ञानात्मके मानसज्ञाने नाव्याप्तिः, अस्यायम्भावः इन्द्रियत्वावच्छिन्नेन्द्रियनिष्ठकारणतानिरूपितकार्यताशालिज्ञानमिन्द्रियजं मतिज्ञानम्, मनस्त्वावच्छिन्नमनोनिष्ठकारणताशालिज्ञानमनिन्द्रियजं मतिज्ञानमिति, तेन ज्ञानमात्रं प्रत्यात्ममनःसंयोगस्य कारणत्वेन तद्रूपमनोव्यापारजन्यमेवेन्द्रियव्यापारजन्यमपि ज्ञानमिति तत्र नोक्तान्यतरघटितलक्षणं सङ्गतमित्यपि निरस्तम्, असाधारणकारणविधयेन्द्रियस्यैव कारणत्वेन तद्व्यापारजन्यमेव तत्, मनसश्चासाधारणकारणविधया कारणत्वं मानसज्ञान एवेति तद्व्यापारजन्यं तदेव, ज्ञानमात्रे मनस्तु साधारणकारणमित्यदोषात्, तातपाद-श्रीयशोविजयोपाध्यायैरेतट्टीकाकारैरेव स्वकृतज्ञानार्णवे श्रुताननुसारित्वे सतीन्द्रियमनोजन्यं ज्ञानं मतिरिति लक्षणस्योक्तत्वेनात्रापि श्रुताननुसारित्वे सतीति विशेषणं देयम्, नातः श्रुत-ज्ञानस्यापि इन्द्रियमनोजन्यत्वेनोक्तलक्षणेऽतिव्याप्तिः, तस्य श्रुतानुसारित्वादिति । नन्वागमे श्रुतनिश्रिताश्रुतनिश्रितभेदेन मतिज्ञानं द्विविधं प्रोक्तं, तत्रावग्रहादिभेदचतुष्टयं श्रुतनिश्रितम्, औत्पत्तिक्यादिमतिचतुष्कमश्रुतनिश्रितम्, श्रुतसंस्कारानपेक्षतया सहजत्वात्, तथा च श्रुताननुसारित्वविशिष्टोक्तलक्षणं लक्ष्यीभूतमतिज्ञानैकदेशेऽवग्रहादिचतुष्के न वर्तत इत्यव्याप्तिदोष-ग्रस्तत्वान्न युक्तमिति चेत्, मैवम्, व्यवहारकालात्पूर्वं परोपदेशागमग्रन्थात्मकश्रुताऽऽहित-संस्कारमतिकस्य व्यवहारकाले श्रुतनिरपेक्षमवग्रहादिलक्षणं यज्ज्ञानमुपजायते तच्छ्रुतनिश्रितम्, यत्पुनः पूर्वं श्रुताऽपरिकर्मितमतेः क्षयोपशमपटीयस्त्वात् औत्पत्तिक्यादिलक्षणमुपजायते तद-श्रुतनिश्रितम्, इत्येवं तयोर्लक्षणे । उक्तञ्च भगवद्भद्रबाहुभिर्विशेषावश्यके—"पुव्वं सुयपरिक-म्मिय-मइयस्स जं संपयं सुयाईयं । तं निस्सियमियरं पुण, अणिस्सियं मइचउक्कं तं ॥ १६९ ॥" इति । तथा च पूर्वकालावच्छिन्नश्रुतपरिकर्मितमतेरेवावग्रहादयः समुपजायन्त इत्येतावता श्रुतनिश्रितास्ते उच्यन्ते, न पुनर्व्यवहारकाले श्रुतानुसारित्वमेतेष्वस्तीत्युक्त-विशेषणस्य व्यवहारकालीनश्रुताननुसारित्वपर्यवसितस्य तत्र भावान्नोक्ताऽव्याप्तिदोषः । अत्र श्रुताननुसारित्वविशिष्टेन्द्रियव्यापाराऽनिन्द्रियव्यापारान्यतरजन्यज्ञानवृत्तिज्ञानत्वसाक्षाद्व्याप्य-जातिमत्त्वं मतिज्ञानत्वमिति पर्यवसितोऽर्थः । नातो वल्ल्यादीनां नीव्राद्यभिसर्पणज्ञाने ओघज्ञानसंज्ञके मतिज्ञानावरणक्षयोपशमविशेषजन्येऽव्याप्तिरिति भावः । शब्दशक्तिजन्यं ज्ञानं श्रुतज्ञानमिति—साक्षाच्छब्दशक्तिग्रहजन्यज्ञानवृत्तिज्ञानत्वसाक्षाद्व्याप्यजातिमत्त्वं श्रुत-ज्ञानत्वम्, तेनानक्षरश्रुतज्ञानादौ नाव्याप्तिः, तत्र शब्दशक्तिग्रहजन्यत्वाभावेऽपि साक्षाच्छब्द-शक्तिग्रहजन्यज्ञानापरवृत्तिज्ञानत्वसाक्षाद्व्याप्यश्रुतत्वजातेस्सद्भावात् । नापि श्रुतनिश्रितमति-

रूपिमात्रविषयमवधिज्ञानम्,

ज्ञानादावतिव्याप्तिः, तत्र साक्षाच्छब्दशक्तिजन्यत्वाभावात् । श्रुते सर्वत्र शब्दोपरागपक्षे शब्दानुपरागेणार्थावगाहिज्ञानावृत्तिज्ञानत्वसाक्षाद्व्याप्यजातिमत्त्वं वा श्रुतज्ञानस्य लक्षणम्, अवधिज्ञानादिकमपि शब्दानुपरागेणार्थावगाहि भवतीति नावृत्त्यन्तमवधिज्ञानत्वादाविति तद्वति नातिव्याप्तिरिति। सर्वत्र श्रुते शब्दोपरागोऽर्थदर्शनोद्बुद्धसंस्कारवशादेव इत्येवमेके प्राहुः। अपरे च श्रुतज्ञानावरणकर्मक्षयोपशमप्रयोज्य एव सः, अत एवैकेन्द्रियाणां तादृशसंस्कारविरहेऽपि न क्षतिरिति ब्रुवन्ति। अन्ये चार्थावभासिनि श्रुते समानसंवित्संवेद्यतयैव पदोपराग इति साङ्गिरन्ति। प्रत्यक्षे विद्यमानत्वमिव श्रुतज्ञाने पदवाच्यत्वं संसर्गतयैव भासते, न तु पूर्ववत्प्रकारतया, अतस्तस्य पदादनुपस्थितत्वेऽपि शाब्दबोधे भानम्, तदेव शब्दोपराग इत्यपि चान्ये वदन्ति। ननु शाब्दज्ञानात्मकं श्रुतज्ञानं नातिरिक्तप्रमात्मकमिति तत्करणस्य शब्दस्यापि न स्वतन्त्रतया प्रामाण्यम्, किन्त्वनुमानविधयैव, न च शब्दस्याऽर्थाऽव्याप्यत्वात् कथमनुमानमिति वाच्यम्, एते पदार्था मिथः संसर्गवन्तः, आकाङ्क्षादिमत्पदकदम्बस्मारितत्वात् गामानयेति पदार्थसार्थवदित्यादिदिशाऽनुमानादिति चेत्, उच्यते, श्रुताज्ज्ञातमेतदिति व्यवहारान्यथानुपपत्त्या श्रुतादर्थं प्रत्येमीत्यनुव्यवसायसिद्धं श्रुतज्ञानमपि प्रमाविशेषरूपमेव। यथाहि—अनुमिनोमीति धिया प्रमाविशेषसिद्धेः प्रमाणान्तरसिद्धिस्तथा शाब्दयामीति धिया प्रमाविशेषसिद्धेस्तत्रापि प्रमाणान्तरसिद्धिरप्रत्यूहैव, व्याप्त्यादिज्ञानं विनापि शब्दादाहत्यार्थप्रतीतेश्च न तस्यानुमानत्वम्, अत एव "एतेन शाब्दं व्याख्यातम्" ९-२-३ इति वैशेषिकोपस्कारसूत्रमपि निरस्तमिति दिक्। रूपिमात्रविषयमवधिज्ञानमिति—ननु "मात्रं कार्त्स्न्येऽवधारणे" इत्यमरकोशवचनाद् मात्रपदं कार्त्स्न्यावधारणोभयार्थकम्, कार्त्स्न्ये यथा जीवमात्रं न हिंस्यात्, अवधारणे तु पयोमात्रं भुङ्क्ते, तथा चात्र मात्रपदमहिम्ना रूपिपदार्थेतरारूपिपदार्थाविषयकत्वे सति निखिलरूपिपदार्थविषयकज्ञानत्वमवध्येर्लक्षणं सिद्ध्यति, न च तद्युक्तं, अवधिज्ञानस्यासङ्ख्येयभेदत्वेन जघन्यादितत्तदवधिज्ञानभेदे पूर्वोक्तलक्षणाऽसङ्गत्याऽव्याप्तेरिति चेत्, मैवम्, रूपिद्रव्यत्वसमनियतविषयताकज्ञानवृत्तिज्ञानत्वव्याप्यजातिमत्त्वमवधिज्ञानत्वमित्येवमनुगतलक्षणकरणेनोक्तदोषाभावात्, तथाहि—परमाण्वादिभेदभिन्नसर्वपुद्गलास्तिकायावगाहित्वेन रूपिद्रव्यत्वसमनियतविषयतानिरूपकं ज्ञानं परमावधिज्ञानं "परमोहि असंखिज्जा, लोकामित्ता समा असंखिज्जा। रूवगयं लहइ सव्वं, खित्तोवमिअं अगणिजीवा ॥ ४५ ॥" इत्यावश्यकसूत्रगाथायां 'रूवगयं लहइ सव्वं' इत्युक्तेः, तद्वृत्तिज्ञानत्वव्याप्या जातिरवधित्वं, तच्चावधिज्ञानमात्रे वर्त्तत इति अवधेस्तत्तदवान्तरभेदेषु लक्षणसङ्गतिरिति, उक्तलक्षणघटकविषयतापदेन तत्तद्धर्मावच्छिन्नतत्तद्धर्मिनिष्ठा विषयता ग्राह्या, अतोऽत्र तेन स्पष्टविशेषाकारग्रहणं कर्त्तव्यम्, नातः पुद्गला रूपिण इतिशाब्दबोधे रूपिद्रव्यत्वसमनियतविषयताकेऽतिव्याप्तिः, अत्रोक्तलक्षणे समनियतत्वं तद्व्याप्यत्वे सति

भावमनःपर्यायमात्रसाक्षात्कारि मनःपर्यायज्ञानम्,

तद्व्यापकत्वलक्षणं तेन केवलज्ञानीयविषयतायां रूपिद्रव्यत्वव्यापकत्वेऽपि रूपिद्रव्यत्वाभाववत्यरूपिद्रव्यादावपि केवलज्ञानीयविषयतायास्सत्त्वेन तत्र तद्व्याप्यत्वाभावान्न केवलज्ञानेऽतिव्याप्तिः, न वा मनःपर्यायज्ञानेऽतिव्याप्तिः, तद्विषयतायां रूपिद्रव्यत्वव्याप्यत्वसत्त्वेऽपि तद्व्यापकत्वाभावात् । यतो व्यापकत्वं तत्सामानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं, तच्च रूपिद्रव्यत्वाधिकरणे मनोद्रव्यभिन्नघटपटादिलक्षणरूपिद्रव्ये विद्यमानस्य मनःपर्यायज्ञानविषयत्वाभावस्य प्रतियोगितावच्छेदकमेव मनःपर्यायज्ञानीयविषयतात्वमिति तादृशानवच्छेदकधर्मवत्त्वस्य मनःपर्यायज्ञानीयविषयतायामभावेन तत्र न सङ्गच्छत इति । **भावमनःपर्यायमात्रसाक्षात्कारिमनःपर्यायज्ञानमिति**—मनो द्विविधं द्रव्यमनो भावमनश्च, तत्र पृथुबुध्नोदराद्याकारभावघटकारणत्वान्मृद्द्रव्यं द्रव्यघटवत् भावमनःकारणत्वाद् द्रव्यमनो मनोवर्गणाः । तदुक्तं बृहट्टीकायां—"तत्र द्रव्यमनो मनोवर्गणा" इति तन्निवृत्त्यर्थमत्र भावपदमुपात्तम्, भावमनस्तु येष्वाकाशप्रदेशेषु स्वात्मप्रदेशा अवगाढास्तेष्वेवाकाशप्रदेशेषु स्थिताभ्यो मनोवर्गणाभ्यस्संज्ञिजीवैः काययोगेन गृहीत्वा मनोयोगेन मनस्त्वेन परिणामितानि यानि तत्तदर्थचिन्तनानुगुणानि मनोद्रव्याणि तल्लक्षणम् । तदुक्तं बृहट्टीकायां—"भावमनस्तु ता एव वर्गणा जीवेन गृहीताः सत्यो मन्यमानाश्चिन्त्यमाना भावमनोऽभिधीयते" इति । चिन्त्यमाना इति मनोयोगेन मनस्त्वेन परिणामिता इत्यर्थो विशेषावश्यकभाष्यटीकायां कृत इति । तस्यैव नानावस्थात्मका ये पर्याया जीवाजीवादिपदार्थचिन्तनानुगुणाः परिणामाः, न पुनश्चिन्तनीयबाह्यघटादिगताः, न वाऽऽकाशस्थमनोवर्गणास्कन्धपर्यायाः, तन्मात्रसाक्षाद्ग्राहकं मनःपर्यायज्ञानमित्यर्थः, न च द्रव्यमनसो भावमनसश्चैवं लक्षणोक्तौ "मणपज्जत्तिनामकम्मोदयओ तज्जोगे मणोदव्वे घेत्तुं मणत्तेण परिणामिआ दव्वा दव्वमणो भणइत्ति, जीवो पुण मणणपरिणामकिरियापन्नो भावमनो, किं भणियं होइ? मणदव्वालंबणो जीवस्स मणणवावारो भावमणो भण्णइ" इति चूर्णिकारवचनेन सह तथा मनस्त्वपरिणतानन्तस्कन्धसमूहमयस्य द्रव्यमनसः पर्यायान् न तु भावमनसः, तस्य ज्ञानरूपत्वात् ज्ञानस्य चामूर्त्तत्वात् छद्मस्थस्य चामूर्त्तविषयाऽयोगादिति विशेषावश्यकभाष्यटीकावचनेन सह च विरोधस्स्यादिति वाच्यम्, अभिप्रायाऽपरिज्ञानात्, तथाहि—व्यवहारनयेन मृद्द्रव्यमेव घटाकारेण परिणमत इति मृद्द्रव्यस्य पृथुबुध्नोदराद्याकारपरिणामलक्षणभावघटोपादानकारणत्वाद् भावघटापेक्षया द्रव्यघटत्वम् "भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तद् द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं कथितम्" इति सिद्धान्ते द्रव्यलक्षणोक्तेः, पृथुबुध्नोदराद्याकारघटस्य च मृद्द्रव्योपादेयकार्यत्वान्मृद्द्रव्यापेक्षया भावघटत्वमभ्युपगतम्, निश्चयनयेन त्वस्यापि द्रव्यघटत्वं, घटोपयोगस्यैव वस्तुगत्या भावघटत्वेनाभ्युपगमात् यथा तथाऽत्रापि येष्वाकाशप्रदे-

शेष्वाऽऽत्मावगाढस्तत्प्रदेशस्थमनोवर्गणा एव मनश्चिन्ताप्रवर्त्तकमनःपरिणामरूपेण जीवप्रयोगात्परिणमन्त इति तदुपादानकारणत्वात्तासां तदपेक्षया द्रव्यमनस्त्वं द्रव्यमनोरूपमनोवर्गणोपादेयकार्यत्वादुक्तद्रव्यमनोऽपेक्षया मनस्त्वेन रूपेण परिणतमनोद्रव्याणां भावमनस्त्वम्, तेषामेव भावेन्द्रियद्वितीयप्रकारोपयोगेन्द्रियाऽपेक्षया तु द्रव्यमनस्त्वम्, उक्तलक्षणद्रव्यमनोऽपेक्षया चोपयोगरूपमननव्यापारस्य भावमनस्त्वम्, अत एवैतट्टीकाकारैरेव स्वकृतज्ञानार्णवे द्वितीयतरङ्गे "किञ्च भावमनो गच्छेद् नहिर्द्रव्यमनोऽथवा । नाद्यः शरीरवृत्तित्वा दात्मनोऽनिर्गमाद्बहिः ॥ २५ ॥" इति श्लोकव्याख्यायां प्रथमविकल्पो न प्रथते, भावमनसः चिन्ताज्ञानपरिणामरूपस्य जीवानन्यत्वाद्, जीवस्य च शरीरमात्रवृत्तित्वेन तद्रूपादीनामिव बहिर्निर्गमाऽसम्भवाद् । आह च–" दव्वं भावमणो वा, वएज्ज जीवो अ होइ भावमणो । देहव्वावित्तणओ, न देहबाहिं तओ जुत्तो ॥ १ ॥" इत्यनेनोक्तमपि सङ्गच्छते । तथा च मनुष्यक्षेत्रवर्तिसंज्ञिजीवगृहीतमनोद्रव्यस्यापि मनस्त्वेन परिणामितस्य मनोवर्गणारूपद्रव्यमनोऽपेक्षया भावमनस्त्वम्, उपयोगरूपमननव्यापारात्मकमुख्यभावमनोऽपेक्षया तु तस्यापि द्रव्यमनस्त्वमित्येकस्यैव मनोद्रव्यस्यापेक्षिकद्रव्यमनोभावमनोरूपत्वान्न सिद्धान्तविरोधप्रसङ्गः, तत्तन्नयापेक्षयाऽपेक्षाभेदस्यैव विवक्षितत्वेन वस्तुतोऽैक्यात्, यतो विशेषावश्यके–' मुणइ मणोदव्वाइं ' इत्युक्तम्, तत्र मनश्चिन्ताप्रवर्त्तकानि द्रव्याणि मनोद्रव्याणीत्यर्थः कृतः । भावमनांस्यपि मनश्चिन्ताप्रवर्त्तकानि मनस्त्वपरिणतद्रव्यरूपाण्येवेत्येवमुभयमतेऽपि मनोद्रव्यरूपत्वं समानमेव, सर्वनयमयार्हत्प्रवचने हि नयानां विचित्रगतिकत्वेनातिगहनविषयकत्वात् तत्तत्पूज्याचार्याणां विवक्षाभेदवशात्तत्तत्प्रकारभेदान् दृष्ट्वा व्यामोहो न कर्त्तव्य इति दिक् । अथ मनःपर्यायज्ञानस्योक्तलक्षणे मात्रपदोपादानं किमर्थमिति चेत्, उच्यते, मनोद्रव्यग्राहिण्यवधिज्ञाने केवलज्ञाने चातिव्याप्तिनिवृत्त्यर्थम्, तदुपादाने च सा न, तस्य स्कन्धान्तरस्यापि साक्षात्कारित्वेन मनोमात्रसाक्षात्कारित्वाभावात् । न च मनोरूपविशिष्टैकपरिणामपरिणतानन्तस्कन्धमयमनःपर्यालोचितान् बाह्यानप्यर्थान् मनःपर्यायज्ञानं साक्षात्करोतीति तस्य मनोमात्रसाक्षात्कारित्वमसिद्धमिति वाच्यम्, येन प्रमाणेन मनःपर्यायज्ञानं सिद्धं तेनैव मनोद्रव्यमात्रसाक्षात्कारितयैव सिद्धेः, नन्वेवं तर्हि मनःपर्यायज्ञानी संज्ञिजीवैर्मनसा चिन्तितं बाह्यवस्तु किं नैव जानातीति चेत्, क आह ? न जानातीति, तर्हि किं वेत्ति ? अवगच्छत्येव, यद्यवधिज्ञानं स्यात्तदा तेन संज्ञिजीवैश्चिन्तितमपि, नो चेत्तदेङ्गिताकारं दृष्ट्वा ततोऽयमाचार्यभगवान् ईदृशाभिप्रायवान् ईदृशेङ्गिताकाराऽन्यथानुपपत्तेरित्येवमनुमानेनान्तेवासी विनयमूर्त्तिः पूज्याचार्याभिप्रायं जानाति । " जाणइ य पिहु जणो विहु, फुडमागारेहिं माणसं भावम् । एमेव य तस्सुवमा, मणदव्वपगासिए अत्थे ॥ २६ ॥" इति बृहत्कल्पभाष्यवचनाद् । यद्वा मलीमसं प्रशान्तं वा मुखाकारं चेष्टाविशेषवत्त्वं वा दृष्ट्वा ततोऽयं पुरुषो दुर्मनाः सुमना वा दृश्यत इत्यनुमानेन...

ज्ञानान्तरासहचरितम्

वाऽन्यथानुपपत्तेरित्यनुमानेनान्यप्राकृतपुरुषोऽन्यप्राकृतपुरुषस्य स्फुटं मानसं भावं वेत्ति यथा तथा मनोद्रव्यपरिणामं स्तम्भादिचिन्तनभाविनं दृष्ट्वा ततो मनोद्रव्याणामीदृशपरिणामान्यथानुपपत्तेरनेन संज्ञिजीवेनेदं स्तम्भादिवस्तु मूर्तमात्माद्यमूर्तं वा चिन्तितमस्तीत्यनुमानेन मूर्तामूर्ते अपि द्रव्ये मनःपर्यायज्ञानी वेत्ति, न तु साक्षादध्यक्षतः, यतश्चिन्तको मूर्तं परमाण्वादिकममूर्तमात्मादिकं ज्ञानादिकं च वस्तु चिन्तयेत्, न च तदनेन मनःपर्यायज्ञानेन साक्षात्कर्तुं शक्यते, ततो ज्ञायते मनोद्रव्याणां तथाऽवस्थाकारपरिणामान्यथानुपपत्तिलिङ्गकानुमानादेव चिन्तनीयं वस्त्ववगच्छतीति । उक्तञ्च विशेषावश्यकभाष्ये—" तेणावभासिए उण जाणइ बज्झेऽणुमाणेणं ॥ " इति । न च मनोद्रव्यपर्यायमात्रसाक्षात्कारित्वं मनःपर्यायज्ञानस्य लक्षणमसङ्गतम्, तत्त्वार्थबृहट्टीकाकारैः—" भावमनसः पर्यायास्ते चैवम्विधाः, यदा कश्चिदेवं चिन्तयेत् किं स्वभाव आत्मा ज्ञानस्वभावोऽमूर्तः कर्ता सुखादीनामनुभविता इत्यादयो ज्ञेयविषयाध्यवसाया परगताः, तेषु यज्ज्ञानं तेषां वा यज्ज्ञानं तन्मनःपर्यायज्ञानम्, " इति लक्षणस्योक्तत्वात्, तेन किमिति चेत्, उच्यते—तत्र घटेषु ज्ञानं घटानां वा ज्ञानमित्यादाविव तेषु तेषां वेत्यत्र सप्तम्याष्षष्ठ्या वा विषयत्वार्थकत्वम्, तथा च परगताध्यवसायविषयकज्ञानं मनःपर्यायज्ञानमिति सिद्धम्, अध्यवसायस्य च ज्ञानत्वाद्, ज्ञानस्य चात्मपर्यायत्वात्तस्यापि साक्षात्कारित्वसिद्धेरिति वाच्यम्, अभिप्रायापरिज्ञानात्, अत्राध्यवसायपदं लक्षणयाऽध्यवसायनिमित्तपरम्, षष्ठीसप्तमीविभक्त्योश्च विषयत्वमर्थः, तथा च तस्य परगताध्यवसायनिमित्तीभूतभावमनःपर्यायविषयकमनःपर्यायज्ञानमित्यर्थः सिद्धयति । यान् नानावस्थात्मकभावमनःपर्यायानालम्ब्य निमित्तीकृत्यान्यसंज्ञिजीवस्य चिन्तनीयपदार्थविषयकोऽध्यवसायो जातस्तद्विषयकं मनःपर्यायज्ञानमिति भावः । एकस्यैव पुरुषस्य पुत्रपित्रपेक्षया पितृत्वपुत्रत्ववन्मनस्त्वेन परिणामितानि यानि द्रव्याणि तानि मनोवर्गणारूपद्रव्यमनोजन्यत्वात्तदपेक्षया भावमनोरूपाणि, मनोद्रव्योपष्टम्भोपजातोपयोगरूपभावमनोजनकत्वात्तदपेक्षया द्रव्यमनोरूपाणीत्येकमेव मनोऽपेक्षाभेदप्रयुक्तद्रव्यभावोभयरूपमित्यतो पूर्वप्रणाल्या भावमनसोऽप्यापेक्षिकद्रव्यमनस्त्वरूपत्वात्, " दव्वमणोपज्जाए जाणइ पासइ य तग्गए णंते " इति विशेषावश्यकभाष्योक्तेन सह तथा " मनोद्रव्यस्य पर्याया, नानावस्थात्मका हि ये । तेषां ज्ञानं खलु मनः–पर्यायज्ञानमुच्यते ॥ १ ॥ " इति द्रव्यलोकप्रकाशोक्तेन सहाप्यत्र न विरोधः । तथा च सिद्धमेतद् भावमनःपर्यायग्राहकत्वे सति साक्षात्तद्व्यतिरिक्तद्रव्यपर्यायाग्राहकं यज्ज्ञानं तन्मनःपर्यायज्ञानमिति दिक् । केवलशब्द एकार्थः, ज्ञाने चैकत्वं यादृशं तद्विवेचयति ज्ञानान्तरासहचरितमिति एककालावच्छेदेन स्वाभिन्नज्ञानासमानाधिकरणमित्यर्थः । एतच्च " नट्ठम्मि छाउमत्थिए नाणे केवलनाणं उववज्जइ " इत्यागमवचनमनुसृत्यो-

सर्वविषयं वा केवलज्ञानम् । भाष्ये मूलविधानत इत्यस्य ज्ञानत्वव्याप्योपाधिभिरित्यर्थः । प्रभेदास्त्विति ज्ञानत्वव्याप्यव्याप्योपाधय इत्यर्थः ॥ ९ ॥

अथ पुरस्तात् प्रमाणनयैरधिगम इत्युक्तं, तत्र न ज्ञायते किं प्रमाणमित्यत आह

## सूत्रम्—तत्प्रमाणे ॥ १ ॥ १० ॥

**( भाष्यम् ) तदेतत्पञ्चविधमपि ज्ञानं द्वे प्रमाणे भवतः परोक्षं प्रत्यक्षञ्च ॥**

( यशो०टीका ) अत्र प्रमाणत्वं द्वित्वसंख्या च विधेयेति द्विविधतात्पर्यमुन्नयन्नाह भाष्यकारः—तदेतदित्यादि । तच्छब्द एतदित्यस्यार्थे, **पञ्चविधमपि** मत्यादिज्ञानं **द्वे प्रमाणे भवतः** प्रमाणं भूत्वा द्वित्वसंख्योपेतमेव भवति । कथमित्याह—**परोक्षं प्रत्यक्षं चेति** । प्रमाणानां सतामन्येषामत्रैवान्तर्भावात्, एतच्चानुपदमेव स्फुटीभविष्यति । अत्रेन्द्रियादिनिमित्तसापेक्षं ज्ञानं परोक्षम् ।

क्षम् । केवलं सकलमित्यर्थमभिप्रेत्याह **सर्वविषयं वेति** । ननु प्रमेयमित्यपि ज्ञानं प्रमेयत्वेन रूपेण सकलार्थविषयमिति तत्रातिव्याप्तिरिति चेन्न, मैवम्, निखिलधर्मप्रकारकत्वे सति निखिलधर्मिविशेष्यकं यज्ज्ञानं तत्केवलज्ञानमिति तदर्थत्वेनोक्तातिव्याप्त्यभावात् । न च तथापि प्रमेयवदिति ज्ञानेऽतिव्याप्तिः प्रमेयभूतानां सर्वधर्माणां प्रमेयत्वेन रूपेण तत्र प्रकारत्वादिति वाच्यम्, निखिलधर्मनिष्ठप्रकारतायास्सामान्यधर्मानवच्छिन्नत्वेन विशेषणीयत्वात् । केवलदर्शनेऽतिव्याप्तिवारणाय सत्यन्तम् । निखिलधर्मिविशेष्यकमिति विशेष्यभागोपादानान्न पर्यायवाद्यभिमतप्रतीत्यसमुत्पादरूपसन्तानविषयकनिखिलधर्मप्रकारकज्ञानेऽतिव्याप्तिरिति । यद्वा निखिलज्ञेयाकारवत्त्वमेव केवलज्ञानत्वं, न च केवलदर्शनेऽतिव्याप्तिः, तत्र निखिलदृश्याकारवत्त्वस्यैवाभ्युपगमादिति ॥ ९ ॥

दशमसूत्रावतरणिकामाह—**अथ पुरस्तादित्यादिना** । इन्द्रियानिन्द्रियनिबन्धनस्य सांव्यवहारिकप्रत्यक्षस्यापि इन्द्रियानिन्द्रियसापेक्षोपयोगेन्द्रियलक्षणात्मव्यापारसम्पाद्यत्वाद् वस्तुतः परोक्षत्वमेव जिनानुगैरभ्युपगतम्, संशयविपर्ययादिभावाच्च, अनुमानाभासवत्, उक्तञ्च विशेषावश्यकभाष्ये " इन्दियमणोणिमित्तं, परोक्खमिहसंसयादिभावाओ । तक्कारणं परोक्खं, जहेह साभासमणुमाणम् ॥ ९३ ॥ " इत्यभिप्रायेण परोक्षलक्षणमाह—**अत्रेन्द्रियादिनिमित्तसापेक्षं ज्ञानं परोक्षमिति**—अत्रादिपदेनानिन्द्रियं मनो ग्राह्यम्, तदुभयमपि द्रव्येन्द्रियं ग्राह्यम्, न तु भावेन्द्रियम्, तथा सत्यवधिज्ञानावरणकर्मक्षयोपशमलक्षणलब्धीन्द्रियात्मव्यापारलक्षणोपयोगेन्द्रियरूपनिमित्तसापेक्षतया अवधिज्ञानादेरपि परोक्षत्वं स्यात्, द्रव्येन्द्रियग्रहणे त्ववधिज्ञानादेः क्षयोपशमविशिष्टात्ममात्रापेक्षत्वेन द्रव्येन्द्रियानपेक्षतया न परोक्षत्वापत्तिरिति । निश्चयतः परोक्षज्ञानेऽपि मुख्यनिमित्तोपयोगेन्द्रियस्यैवाव्यवहितकारणत्वेन तद्व्यवहितं द्रव्येन्द्रियस्यापि गौणं कारणत्वं ज्ञेयम् । ननु द्रव्येन्द्रियस्याप्युपकरणेन्द्रियनिर्वृत्तीन्द्रियभेदेन द्वैविध्यात् कारणभेदेन कार्यमपि द्विविधं स्यादिति चेत्, मैवम्, उपकरणेन्द्रि-

तन्निरपेक्षं च प्रत्यक्षमिति विभागः। द्विविधेऽपि च प्रत्यक्षपरोक्षरूपज्ञाने यः साकारांशः स प्रमाणव्यपदेश-मश्नुते, यथाभिहितं "साकारः प्रत्ययः सर्वो, विमुक्तः संशयादिना। साकारांशपरिच्छेदात्, प्रमाणं तन्म-नीषिणाम् ॥ १ ॥" इति। केचित्तु सर्वं ज्ञानं प्रत्यक्षमेव। मनइन्द्रियजीवेष्वक्षशब्दस्य रूढत्वात्तदन्य-तराभिमुख्येन च सर्वज्ञानप्रवृत्तेः, सावरणानावरणविशेषात्तु भिद्यते। सावरणानां तावदस्मदादीनां त्रित-याभिमुख्येन यथायथं सर्वं ज्ञानं प्रत्यक्षमेव, तद्यथा—आत्माभिमुख्येन भयहर्षरागमनोराज्यलाभादि, मनआभिमुख्येन स्मरणप्रत्यभिज्ञानवितर्कविपर्ययनिर्द्धारणादि, इन्द्रियाभिमुख्येन रूपादिज्ञानमित्याहुः। एतच्च विशुद्धशब्दनयाभिप्रायेण युज्यत इति सम्प्रदायविदः, विशुद्धश्च शब्दनयोऽत्रैवम्भूतो द्रष्टव्यः, तस्य व्यञ्जनार्थतदुभयविशेषकत्वाद्विशेषितं च त्रयमक्षशब्दस्य त्रितयरूढत्वप्रदर्शनादिनेति ध्येयम्।

यस्य निर्वृत्तीन्द्रियगतशक्तिरूपतया शक्तिमत्त्वेन रूपेण निर्वृत्तीन्द्रियस्यैवैकस्य कारणत्वेन तत्तत्कार्यानुकूलशक्तिमत्त्वेन कारणत्वमभ्युपगच्छद्भिरस्माभिरभ्युपगमादिति। तन्निरपेक्षमि-ति—इन्द्रियादिनिरपेक्षमित्यर्थः, तत्तज्ज्ञानावरणीयकर्मक्षयोपशमक्षयान्यतरविशिष्टात्ममात्रजन्य-मिति यावत्। न च प्रत्यक्षस्यैवं लक्षणकरणे सांव्यवहारिकप्रत्यक्षेऽव्याप्तिरस्यादिति वाच्यम्, तस्याऽलक्ष्यत्वात्, तत्रोपचारेणैव प्रत्यक्षत्वव्यवहारात्, न हि वाहीको गोव्यवहारात् गौरेव, न चेन्द्रियजन्यज्ञानत्वमेव प्रत्यक्षत्वम्, अवध्यादौ तु तदौपचारिकमिति वाच्यम्, लिङ्गाद्यजन्यत्वे-नावध्यादेः प्रत्यक्षत्वावश्यकत्वात्, प्रत्यक्षपरोक्षातिरिक्तज्ञानस्य चालीकत्वादिति। नन्वक्षमिन्द्रियं प्रति गतम् कार्यत्वेनाश्रितं यत्तत्प्रत्यक्षम्, तथा चेन्द्रियाधीनतया यदुत्पद्यते तत्प्रत्यक्षमिति प्रत्यक्षशब्दव्युत्पत्तिसिद्धमिन्द्रियादिसापेक्षज्ञानत्वमेव प्रत्यक्षलक्षणं मुख्यवृत्त्या सिद्ध्यति। अत एव नैयायिका इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानत्वं प्रत्यक्षलक्षणमाहुरिति पूर्वोक्तं न युक्तियुक्तमिति चेत्, उच्यते, भवतु नाम चैवं व्यवहारनयापेक्षातः, न पुनर्निश्चयनयतः, तदपेक्षया त्वक्षं जीवम्प्रति साक्षाद्गतमिन्द्रियनिरपेक्षं वर्त्तते यज्ज्ञानं तत्प्रत्यक्षमिति व्युत्पत्तिभावात्तत्सिद्धमात्म-मात्रसापेक्षज्ञानत्वमेव मुख्यवृत्त्या प्रत्यक्षलक्षणमिति प्राज्ञैर्निर्णीयते। नन्वक्षशब्दवाच्यो जीवः कथमिति चेत्, उच्यते, 'अश् भोजने" अश्नातेर्भोजनार्थत्वात् भुजेश्च पालनाभ्यवहारार्थ-त्वात्, अश्नाति समस्तत्रिभुवनान्तर्वर्त्तिनो देवलोकसमृद्ध्यादीनर्थान् पालयति भुङ्क्ते चेत्यक्षो जीवः। "यदि वा अशौङ् व्याप्तौ" अश्नुते ज्ञानेन व्याप्नोति सर्वान् ज्ञेयानिति अक्षः—जीवः। उभयत्राप्यौणादिकः सक्प्रत्यय इति, विशेषावश्यकभाष्ये चोक्तम्—" जीवो अक्खो अत्थव्वा-वण—भोयणगुणण्णिओ जेण। तं पइ वट्टइ नाणं, जं पच्चक्खं तयं तिविहं ॥ ८९ ॥" इति ॥ व्यावहारिकप्रत्यक्षपारमार्थिकप्रत्यक्षगतस्पष्टत्वद्वयस्य स्पष्टतात्वेनानुगतीकृत्य व्यवहारनिश्च-यप्रत्यक्षसाधारणमनुगतलक्षणं तु स्पष्टत्ववत्त्वमेव नातोऽवधिज्ञानादौ मतिज्ञाने चाव्याप्तिरिति। शब्दनयो हि साम्प्रतसमभिरूढैवम्भूतभेदैस्त्रिविध इति प्रकृते शब्दनयग्राह्यः को नय इत्याश-ङ्कायामाह—विशुद्धश्च शब्दनयोऽत्रैवम्भूतो द्रष्टव्य इति। विशुद्धशब्दनयपदेनैवम्भूत-नयस्यैव ग्राह्यत्वे हेतुमाह—तस्य व्यञ्जनार्थतदुभयविशेषकत्वादिति व्यञ्जनं चार्थश्च

तदिदमाह आचार्यसिद्धसेनोऽपि—"अभित्रि मादृशा भाज्य मभ्यात्मं तु स्वयंदृशाम् । एकं प्रमाणमर्थैक्या—दैक्यं तल्लक्षणैक्यतः ॥१॥" 'ऐक्यम्' अर्थैक्यं, कुतः तल्लक्षणैकत्वात् । अर्यते गम्यते परिच्छिद्यतेऽक्षेणेत्यर्थ इति व्युत्पत्त्याऽर्थैक्यादित्यर्थः । यदि च संग्रहनयाभिप्रायेण प्रत्यक्षत्वं जातिरुच्यते, तदापि सा सर्वज्ञानवृत्तिः स्वीकर्तुमुचिता, मितिमातृप्रत्यक्षानुरोधात्, परोक्षत्वं तु विषयांशे कल्पितमौपाधिकत्वाच्चिछन्नमेव । यद्विषयत्वावच्छेदेन ज्ञानजन्यत्वं तद्विषयत्वावच्छेदेन परोक्षत्वमित्यस्यापि वक्तुम-

व्यञ्जनार्थौ तौ च तदुभयं च व्यञ्जनार्थतदुभयं, तद्विशेषयति—नैयत्येन स्थापयतीति व्यञ्जनार्थतदुभयविशेषकः, तस्य भावस्तत्त्वं तस्मादित्यर्थः । उक्तं च विशेषावश्यकनिर्युक्तौ—"वंजण अत्थ तदुभयं, एवं भूओ विसेसेइ ।" २१८५ । इति । तद्व्याचष्टे भाष्यकृत् घटमुद्दिश्य चैवम्—"वंजणमत्थेणत्थं च वंजणेणोभयं विसेसेइ । जह घडसद्दं चेट्ठा—वया तहा तंपि तेणेव" ॥ ॥२२५२॥ तदर्थश्चायम् व्यज्यतेऽर्थोऽनेनेति व्यञ्जनं वाचकः शब्दो घटादिशब्दः, तं चेष्टावतैतद्वाच्येनाऽर्थेन विशिनष्टि, स एव घटशब्दो यश्चेष्टावन्तमर्थं प्रतिपादयति, नान्यम्, इत्येवं शब्दमर्थेन नैयत्येन व्यवस्थापयति । तथा, अर्थमप्युक्तलक्षणमभिहितरूपेण व्यञ्जनेन विशेषयति, चेष्टापि सैव या घटशब्दवाच्यत्वेन प्रसिद्धा योषिन्मस्तकारूढस्य घटस्य जलाहरणादिक्रियारूपा, न तु स्थानभरणक्रियात्मिकेत्येवमर्थं शब्देन नैयत्येन व्यवस्थापयतीत्यर्थः, एवमुभयं विशेषयति, शब्दमर्थेन, अर्थं तु शब्देन नैयत्येन स्थापयतीत्यर्थः । एतदेवाह—'जह घडसद्दं' इत्यादि । इदमत्र हृदयम्—यदा योषिन्मस्तकारूढश्चेष्टावानर्थो घटशब्देनोच्यते तदा स घटलक्षणोऽर्थः, स च तद्वाचको घटशब्दः, अन्यदा तु वस्त्वन्तरस्येव तच्चेष्टाऽभावादघटत्वं घटध्वनेश्चावाचकत्वम्, "शब्दवशादेवाभिधेयमभिधेयवशाच्च शब्दः" इत्यभ्युपगमपरत्वादेवम्भूतनयस्य, एवमुभयविशेषक एवम्भूत इति, एतच्च नयप्रकरणे विवेचयिष्यते । अभित्रीति—त्रीन् मनइन्द्रियजीवानभित्यभित्रि, त्रितयाभिमुख्येनेत्यर्थः । अत्र 'लक्षणेनाभिप्रती आभिमुख्ये' इति पाणिनीयसूत्रेणाव्ययीभावसमासः । मादृशां—अस्मत्तुल्यानाम् । भाज्यं—विकल्पनीयम् । अभ्यात्ममिति—आत्मानमभीति विग्रहेणोक्तसूत्रेणाव्ययीभावे अनश्चेति सूत्रेण समासान्तटच्प्रत्यये 'नस्तद्धिते' इति सूत्रेणान्त्यस्य टेर्लोपे अभ्यात्ममिति, आत्मानमभिमुखीकृत्येत्यर्थः । स्वयंदृशामिति स्वयमेवात्मनैव पश्यन्तीति स्वयंदृशः तेषाम्, अनावरणदृष्टीनामिति यावत् । सर्वज्ञानवृत्तिः प्रत्यक्षत्वं जातिरित्यभ्युपगमे हेतुमाह—मितिमातृप्रत्यक्षानुरोधादिति सङ्ग्रहनये वेदान्तसूत्रे ज्ञानमात्रं स्वप्रकाशमिति व्यवसायस्यानुव्यवसायरूपत्वेन वह्निप्रत्यक्षज्ञानमिव वह्न्यनुमित्यादिज्ञानमपि स्वांशे प्रमात्रंशे च प्रत्यक्षरूपमिति तद्बलादित्यर्थः । अनुमितौ मितिमातृरूपाविषयत्वावच्छेदेन परामर्शात्मकज्ञानजन्यत्वं नेति तदंशे प्रत्यक्षत्वं, पक्षसाध्यरूपाविषयत्वावच्छेदेन परामर्शजन्यत्वात्तदंशे परोक्षत्वमित्यपि न च वक्तुं शक्यमित्याह—यद्विषयत्वावच्छेदेनेत्यादि । अशक्यत्वे हेतुमाह अहं

शंवयत्वात्, अहं ज्ञानवान् सुखवत्त्वादित्यादौ मितिमात्रंशेऽपि तदापत्तेः। विशदाविशदभावेन प्रत्यक्षपरोक्षविषयाविभागैकान्तोऽपि न युक्तः। परोक्षस्थलेऽपि ज्ञानावच्छेदकतया विषयस्य विशदत्वात्। तदाहुरन्येऽपि सर्वं वस्तु ज्ञानतयाऽज्ञानतया वा साक्षिप्रत्यक्षविषय इति, सर्वप्रकारेण विशदत्वं तु न स्तम्भादावपि, परभागाद्यवच्छेदेनातथात्वात्। ज्ञानानवच्छेदकतया विषयस्य विशदाविशदभावो विभाजक इत्यपि वार्त्तम्, व्यवसायानुव्यवसायोभयस्वभावस्वप्रकाशज्ञानाङ्गीकारे ज्ञानस्य विषयावच्छिन्नत्वध्रौव्यात्। परिणामेन

ज्ञानवानित्यादि। अहं ज्ञानवानित्यनुमितौ प्रमातुरेव पक्षत्वेन ज्ञानस्यैव च साध्यत्वेन तद्विषयत्वस्य परामर्शजन्यतावच्छेदकत्वेन परोक्षत्वापत्त्या तदंशे प्रत्यक्षत्वं न स्यात्, एवञ्च ज्ञानमात्रस्य मितिमात्रंशे प्रत्यक्षत्वमित्युच्छेदस्स्यादिति भावः। तदापत्तेरिति–परोक्षत्वापत्तेरित्यर्थः। अयुक्तत्वे हेतुमाह–परोक्षस्थलेऽपीति। ज्ञानावच्छेदकतयेति–विषयितासम्बन्धेन तद्विशेषणतयेत्यर्थः। विषयस्य विशदत्वादिति सर्वज्ञानस्य प्रत्यक्षत्वात्परोक्षार्थस्यापि प्रत्यक्षत्वेन विशदत्वादित्यर्थः। तथा च प्रत्यक्षविषयस्येव परोक्षविषयस्याप्युक्तनीत्या विशदत्वेन विशदाविशदभावस्यैवाभावान्न स प्रत्यक्षपरोक्षविभाजक इति भावः। अन्येऽपि–वेदान्तिनोऽपि, ज्ञानतयेति–ज्ञानविषयतयेत्यर्थः, अज्ञाततयेति–अविद्याविषयतयेत्यर्थः। साक्षिप्रत्यक्षविषय इति–अन्तःकरणावच्छिन्नचैतन्यं प्रमातृचैतन्यम्, अन्तःकरणोपलक्षितचैतन्यं साक्षिचैतन्यं, यद्यपि चक्षुरादिनाऽपि यत्प्रत्यक्षम्भवति तदपि साक्षिणैव, न हि साक्षिणमन्तरेण कस्यापि प्रत्यक्षम्, तथापि इन्द्रियादिव्यापारमन्तरेण यत्प्रत्यक्षम्भवति तत्साक्षिप्रत्यक्षमभिमतम्, अयं घटोऽयं पट इत्यादिवृत्तेश्चक्षुरादिव्यापारजनितत्वात्तदवच्छिन्नचैतन्यलक्षणप्रत्यक्षमिन्द्रियादिजन्यप्रत्यक्षं, वृत्त्याद्याकारवृत्तिश्च नेन्द्रियादिना जन्यते, किन्त्वविद्ययैव, तदवच्छिन्नचैतन्यलक्षणप्रत्यक्षं साक्षिप्रत्यक्षम्, तद्विषयो वृत्तिः सुखादिकं च साक्षिप्रत्यक्षविषयः, एवमुक्तवृत्तिविषयतालक्षणज्ञातताऽपि साक्षिप्रत्यक्षविषय एव तथा घटादिकमपि साक्षिप्रत्यक्षविषयः, एवं यदा घटादौ न चक्षुरादिव्यापारस्तदाऽपि घटोऽविद्यात्मकाज्ञानविषयत्वादज्ञातस्तदानीमज्ञाततारूपेणाविद्यावृत्तिस्तत्र तस्यास्साक्षिणैव भानमिति अज्ञाततया घटादिरपि साक्षिप्रत्यक्षविषयः, साक्षिप्रत्यक्षबलादेव चैतावन्तं कालं घटोऽज्ञातो मयेत्यवभासः, शुक्तिरजतादिकमपि प्रातिभासिकं साक्षिप्रत्यक्षविषय एवेत्यर्थः। अतथात्वादिति–प्रत्यक्षाभावेनाविशदत्वादित्यर्थः। ज्ञानानवच्छेदकतयेति–ज्ञानावच्छेदकत्वविवक्षामन्तरेण, स्वस्वरूपेणेति यावत्। वार्त्तम्–तुच्छम्, वार्त्तत्वे हेतुमाह–व्यवसायेत्यादिना। क्रमेणैवायं घटो घटमहं जानामीति ज्ञानद्वयं समुत्पद्यते, यच्च व्यवसायोऽनुव्यवसायादभिन्न इत्युच्यते तत्पूर्वज्ञानस्य व्यवसायस्योत्तरानुव्यवसायज्ञानरूपेण परिणमनात्, तथा च व्यवसाये विषयस्य ज्ञानानवच्छेदकतयैव भानमिति स्वस्वसामग्रीतो विशदरूपेणाऽविशदरूपेण चोत्पन्नत्वादेव विशदाविशदविभाग इति न तदप्रसिद्धिरित्याशङ्कते परिणामेनेत्यादि। व्यवसायस्यानुव्यवसायरूपत्वेनाभ्युपगमादव्यवसायेऽपि विषयस्य ज्ञानावच्छेदकतयैव भानमिति ज्ञानानवच्छेदकतया

व्यवसायानुव्यवसायोभयैकत्वेऽपि क्रमिकाकारभेदो नानुपपन्न इति चेत्, न अनुव्यवसितत्वेनैवापायस्य निश्चयत्वसिद्धेः, अन्यथाऽननुव्यवसितनष्टज्ञानतुल्यताप्रसङ्गात् । न च निश्चितप्रामाण्यकत्वादन्यद्विशदत्वं नाम, अतथाभूतयोर्लैङ्गिकालैङ्गिकयोस्तुल्यवदेवाविशदत्वव्यवहारात्, अनुमितित्वादीनां मानसत्वव्याप्यत्वनये च सुतरां प्रत्यक्षैकप्रमाणसाम्राज्यम्, प्रमाभेदाभावे प्रमाणभेदासिद्धेः, ज्ञानाद्वैतनये वा स्वाकारस्येव विषयाकारस्य स्वतः प्रकाशत्वात्प्रत्यक्षमात्रं प्रमाणम्, स्वव्यवहार इव विषयव्यवहारेऽपि संविदन्तरानपेक्षत्वेन प्रत्यक्षत्वाविशेषादित्यादयो नयसुधोर्मयः परिशीलनीया निष्णातैः ॥ १० ॥

अयमिदानीं विवेको नावधृतः पञ्चविधस्य मध्ये किं परोक्षं किं वा प्रत्यक्षमिति तद्विवेकावधारणायाह—

## सूत्रम् आद्ये परोक्षम् ॥ १ ॥ ११ ॥

**(भाष्यम्) आदौ भवमाद्यम् । आद्ये सूत्रक्रमप्रामाण्यात् प्रथमद्वितीये शास्ति । तदेवमाद्ये मतिज्ञानश्रुतज्ञाने परोक्षं प्रमाणं भवतः । कुत ?—निमित्तापेक्षत्वात् । अपायसद्द्रव्यतया मतिज्ञानम् । तदिन्द्रियानिन्द्रियनिमित्तमिति वक्ष्यते ॥ तत्पूर्वकत्वात्परोपदेशजत्वाच्च श्रुतज्ञानम् ॥**

(यशो०टीका) विभज्यमानोच्चारणक्षणध्वंसानाधिकरणक्षणवृत्त्युच्चारणविषयो मुख्यमाद्यं, गौणं च तदव्यवहितोत्तरक्षणवृत्त्युपचारस्तत आद्यं चाद्यं चेत्येकशेषाद् द्विवचनम् । इत्थं च आदौ भवमाद्यं

विषयभावाऽप्रसिद्धिरेवेत्याशयेन समाधत्ते—अनुव्यवसितत्वेनेत्यादि—उत्पद्यमानं सदपायात्मकव्यवसायज्ञानमनुव्यवसायात्मकतयैवोत्पद्यत इति तस्य निश्चयात्मकतयैव सिद्धेरित्यर्थः । तदनभ्युपगमे दण्डमाह—अन्यथेति । अननुव्यवसितमेव यज्ज्ञानं नष्टं तत्तुल्यताप्रसङ्गात्, तद् यथा न निश्चितमननुव्यवसितत्वात्, तथा पूर्वोत्तरज्ञानयोर्भेदाभ्युपगमे पूर्वोत्पन्नं व्यवसायज्ञानमपि न निश्चितं स्यात्, पूर्वक्षणेऽननुव्यवसितत्वादिति भावः । अतथाभूतयोरिति—अनिश्चितप्रामाण्यकयोरित्यर्थः ॥ १० ॥

ज्ञानं कतिविधमिति जिज्ञासायां नवमसूत्रेण ज्ञानं पञ्चविधमिति निर्णीतम्, जैनमते प्रमाणं कतिविधमिति जिज्ञासायां दशमसूत्रेण परोक्षं प्रत्यक्षञ्चेति प्रमाणद्वैविध्यं सामान्यतोऽवधृतम्, न च तथापि पञ्चविधज्ञानस्य मध्ये कतिसङ्ख्यकं किं परोक्षं कतिसङ्ख्यकं किञ्च प्रत्यक्षमिति निर्णीतमिति तज्जिज्ञासामूलिकामवतरणिकामेकादशसूत्रस्याह अयमिदानीमित्यादिना । आदौ भवमाद्यम्, आद्यश्चाद्यश्चाद्ये द्वित्वस्य द्विवचनार्थत्वाद् द्वित्वावच्छेदेनाद्यद्वये परोक्षप्रमाणत्वविधानम् "आद्ये परोक्षम्" इति सूत्रेण कृतम्, द्वित्वावच्छिन्नाद्यत्वञ्च पञ्चज्ञानमध्ये मतिज्ञानश्रुतज्ञानयोरेवेति मतिज्ञानं श्रुतज्ञानञ्चोभयं परोक्षप्रमाणमिति सिद्धम् । इयांस्तु विशेषो मतिज्ञाने मुख्यमाद्यत्वं श्रुतज्ञाने च गौणम्, कथं तत्तथेत्याशङ्कायां तल्लक्षणमाह—विभज्यमानेत्यादि—विभज्यमाने परोक्षतया विभागकर्मणी मतिश्रुतज्ञाने, तदुच्चारणक्षण आद्यक्षणः, तद्ध्वंसस्याधिकरणक्षणो द्वितीयादिक्षणः, अनधिकरणक्षणः प्रथमक्षण एव तद्वृत्त्युच्चारणं मतिज्ञानस्य, तद्विषयो मतिज्ञानमिति तदेव मुख्यमाद्यम् । तदव्यवहितोत्तरक्षणेत्यादि-तत्र तदव्यवहितोत्तरक्षणत्वं तत्क्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति तत्क्षणध्वंसा-

दिगादित्वात् यदिति व्युत्पत्तिरपि विवक्षावशान्नासंभविता, उक्तविवक्षया द्वयोरपि तदर्थान्वयात्, तदाह– आद्ये सूत्रक्रमप्रामाण्यात् **प्रथमद्वितीये शास्ति,** सूत्रक्रमो मतिश्रुतेत्यादिसूत्रस्योच्चारणानुपूर्वी तत्प्रामाण्यं तदबाधितत्वं तस्मात्तदाश्रित्य तद्विवक्षयेत्यर्थः, **प्रथमद्वितीये** आभिनिबोधिकश्रुते शास्त्युपदिशति ग्रन्थकार. सूत्रकारभाष्यकारपर्यायभेदादित्थमुक्ति. । मतिश्रुतयोः परोक्षत्वे हेतुं शङ्कते । कुत इति, उत्तरमाह–**निमित्तापेक्षत्वादिति** । मतिश्रुते परोक्षे निमित्तापेक्षत्वाद् धूमादग्निज्ञानवदिति प्रयोगः । अवधिज्ञानमनःपर्याययोरान्तरं क्षयोपशमम्, केवलस्य चावरणक्षयम्, त्रयाणामपि बाह्यं च विषय निमित्तमपेक्ष्योत्पद्यमानत्वाद् व्यभिचारमाशङ्क्य निमित्तापेक्षत्वादिति हेतोरिन्द्रियापेक्षत्वादित्यर्थ. कर्तव्य इत्यभिप्रायवानाह । **अपायसद्द्रव्यतया मतिज्ञानं,** धर्मित्वेनोपात्तं यन्मतिज्ञानं तदपायो निश्चय, सद्द्रव्याणि च शुद्धदलिकानि तत्तया तद्भावेन, सद्द्रव्यानुगतोऽपायो धर्मित्वेनोपात्त इत्यर्थ. ।

धिकरणत्वम्, तत्पदेन मतिज्ञानम्, तत्क्षणः–आद्यक्षणः, तद्ध्वंसाधिकरणक्षणो द्वितीयक्षणः, तद्ध्वंसस्याधिकरणं तृतीयक्षणादि, अनधिकरणं द्वितीयक्षण इव प्रथमक्षणोऽपीति तन्निवारणाय तत्क्षणध्वंसाधिकरणत्वरूपविशेष्यदलम्, तथा च द्वितीयक्षण एव तदव्यवहितोत्तरक्षण इति तद्वृत्तिश्रुतज्ञानं, तस्मिन्नाद्यत्वस्योपचारो मतिज्ञानसदृशमूलिका लक्षणेत्यर्थः । **दिगादित्वाद्** दिगादिगणपठितत्वात् । दिगादिभ्यो यदिति सूत्रेण यत्प्रत्यये सति "यस्येति च" इति सूत्रेणेकारलोपे आद्यं सिद्धं भवति । **उक्तविवक्षया**–विभज्यमानेत्यादिविवक्षया । **द्वयोरपि**–मतिज्ञानश्रुतज्ञानयोरपि । **तदर्थान्वयात्** आद्यशब्दार्थस्य घटमानत्वात् । ननु य एव सूत्रकारस्स एव भाष्यकार इत्युपदिशतीत्यर्थकशास्तीत्ययुक्तमुक्तं, परात्मन्येव तथाप्रयोगादित्याशङ्कायामाह- **सूत्रकारभाष्यकारपर्यायभेदादित्थमुक्तिरिति**- तथा च भाष्यकारपर्यायापेक्षया सूत्रकारपर्यायस्य परत्वात्तत्र शास्तीति प्रयोगो युक्त एवेति । ननु मतिज्ञानश्रुतज्ञाने परोक्षप्रमाणे निमित्तापेक्षत्वादित्यनुमानं मतिज्ञानं परोक्षं निमित्तापेक्षत्वात्, श्रुतज्ञानं परोक्षं निमित्तापेक्षत्वादित्येवं रूपं पर्यवस्यति । तत्र मतिज्ञानत्वरूपपक्षतावच्छेदकावच्छेदेन साध्यत्वेऽवग्रहेहयोरपि मतित्वेन तद्रूपपक्षैकदेशे मिथ्यादृष्टयपाये च परोक्षप्रमाणत्वाभावनिश्चयात् सामानाधिकरण्येन बाधनिश्चयरूपस्य तस्यावच्छेदकावच्छेदेनानुमितिं प्रति प्रतिबन्धकत्वेन मतिज्ञानं परोक्षप्रमाणमित्यनुमितिर्न स्यादित्याशङ्कायां पक्षविशेषणमाह–**अपायसद्द्रव्यतया मतिज्ञानमिति**–न सर्वैव मतिः पक्षीक्रियते, किन्तु सद्द्रव्यानुगतापायत्वविशिष्टैव, तत्र च परोक्षप्रमाणत्वसाध्यं विद्यत एवेति नोक्तसामानाधिकरण्येन बाधः । यथा सत् गुणवत् क्रियावत्त्वाद् घटादिवदित्यनुमाने सत्त्वावच्छेदेन गुणवत्त्वे साध्ये पक्षैकदेशे गुणे कर्मणि च गुणवत्त्वसाध्याभावनिश्चयात्तस्य चावच्छेदकावच्छेदेनानुमितिप्रतिबन्धकत्वात्तत्र पक्षतावच्छेदकावच्छेदेनानुमितिर्नोदेतीति सद्रूपपक्षे गुणकर्मान्यत्वे सतीति विशेषणप्रक्षेपे यथा निरुक्तबाधो न भवतीति तत्रानुमितिर्निराबाधा तथा प्रकृतेऽपीति

मिथ्यादृष्ट्यपायव्यवच्छेदाय सद्द्रव्यानुगत इति विशेषणम्, विशेष्यबलेनावग्रहेहयोरनिश्चितयोर्व्यवच्छेदः। क्षीणदर्शनसप्तकस्य तु केवल एवापायांशोऽर्थतो ग्राह्यः। यथाऽपायश्चापायश्चापायौ सद्द्रव्यं च, सद्द्रव्यं च सद्द्रव्ये। अपायौ च सद्द्रव्ये चापायसद्द्रव्याणि तेषां भावस्तयेत्येकशेषादुभयसङ्ग्रहः। अक्षीणदर्शनसप्तकावस्थायामपायसद्द्रव्ययोः क्षीणदर्शनसप्तकावस्थायां चापायरूपस्य सद्द्रव्यस्य तत्परिणतशुभात्मरूपस्य समन्वयात्। एवं श्रुतज्ञानस्याप्यपायांशः प्रमाणयितव्य इति **टीकाकृतः** । स च पदार्थमहावाक्यार्थानुसन्धानोत्तरभावी महावाक्यार्थपरामर्श ऐदंपर्यार्थपरामर्शो वेति वयमनुपश्यामः, प्रपञ्चितमेतद् ज्ञानबिन्दौ। व्यभिचारोद्धारकहेतुपर्यवसानार्थमाह तदित्यादि। तन्मतिज्ञानं, इन्द्रियाणि श्रोत्रादीनि, अनिन्द्रियं मन ओघज्ञानं च, तानि निमित्तं यस्य तत्तथा। न हीन्द्रियाण्यनिन्द्रियं च विरहय्य तस्य ज्ञानस्य संभवोऽस्ति। तथा च निमित्तापेक्षत्वादित्यत्र निमित्तमिन्द्रियरूपं विवक्षितं मयेतीन्द्रियनिमित्तत्वादिति हेतूकरणे न कोऽपि दोष इति भावः। श्रुतज्ञानस्यापीन्द्रियनिमित्तत्वात्परोक्षत्वं सिद्ध्यत्येव। तथापि निमित्तमूलत्वेनाभ्युच्चयमाह तत्पूर्वकत्वादिति, तन्मतिज्ञानं पूर्वं पूरकं पालकं यस्य तस्य भावस्तत्त्वं तस्मात्, भवति हि मतिज्ञानं श्रुतज्ञानस्य पूरकं पालकं च, मत्युत्कर्षेण श्रुतोत्कर्षाद् यावन्मतिस्तावच्छ्रुतावस्थितेश्च, परोपदेशस्तीर्थकरादिवचनं, तज्जत्वाच्च श्रुतज्ञानं परोक्षम्।

भावः। **मिथ्यादृष्ट्यपायव्यवच्छेदाय**–मिथ्यादृष्ट्यपाये पक्षतावच्छेदकनिरासाय। व्यवच्छेदः–पक्षतावच्छेदकव्यवच्छेदः। तथा च मिथ्यादृष्ट्यपायस्यावग्रहेहयोश्च पक्षतावच्छेदकानाक्रान्तत्वान्न तत्र परोक्षप्रमाणत्वरूपसाध्यस्याभावनिश्चयेऽपि बाध इति भावः। स्वरूपासिद्धिदोषनिवृत्त्यर्थमाह–**न हीन्द्रियाणीति**। **न कोऽपि दोष इति**–निमित्तापेक्षत्वादित्येतावन्मात्रहेतुकरणेऽवधिज्ञानादित्रयमपि निमित्तापेक्षमेवोत्पद्यत इति तत्रोक्तहेतुर्वर्तते, न च परोक्षत्वसाध्यमिति यो व्यभिचारः प्रदर्शितस्सोऽपि नेत्यर्थः। **तत्पूर्वकत्वादिति**–पञ्चार्थे प्रोक्तं तत् 'मइपुव्वगं सुयं' इत्यागमवचनमनुसृत्यैव, पॄ पालनपुरणयोरिति जुहोत्यादिगणपठितपॄधातोः पिपर्तीति विग्रहं कृत्वा पूर्वमितिरूपं निपातनात् सिद्ध्यति, ततश्च पूर्वं पूरकरूपं पालकरूपञ्चेति द्विविधमिति तदुभयार्थकपूर्वशब्दघटितसमासमाह–**तन्मतिज्ञानं पूर्वं पूरकमित्यादि**। मतिज्ञानं श्रुतज्ञानस्य कथं पूरकमित्याशङ्कायां हेतुमाह–**मत्युत्कर्षेण श्रुतोत्कर्षादिति**–अनुप्रेक्षादिकालेऽभ्यूहनाच्छ्रुतपर्यायवृद्धिर्भवतीत्यनुप्रेक्षादिकालीनोहादिलक्षणमतिज्ञानपाटवविभवप्रकर्षेण श्रुतज्ञानपटुताविभवप्रकर्षादित्यर्थः। पालने हेतुमाह **यावन्मतिस्तावच्छ्रुतावस्थितेश्च**। गुर्वादिगृहीतं सच्छ्रुतज्ञानं परावर्तन–चिन्तनद्वारेण मत्यैव पाल्यते स्थिरीक्रियते मत्यभावे तद्गृहीतमपि प्रणश्येदेव, यदाह भाष्यकारः–"पुरिज्जइ पाविज्जइ, दिज्जइ वा जं मईए नाऽमइणा। पालिज्जइ य मईए, गहियं इहरा पणस्सेज्जा॥१०६॥" इति। तथा च यावत्कालमविस्मृत्यनुकूलपरावर्तन चिन्तनलक्षण–धारणाव्यापाररूपमतिज्ञानं तावत्कालं श्रुतज्ञानावस्थितेरित्यर्थः। श्रुतज्ञानं परोक्षं परोपदेशजत्वात् परार्थानुमानवदित्यनुमानेनापि श्रुतज्ञानस्य परोक्षत्वमित्यत्र हेत्वर्थमाह **परोपदेशस्तीर्थकरादिवचनम्, तज्जत्वाच्चेति**। नन्वत्र

अत्र परार्थानुमानादिर्दृष्टान्तो वाच्यः । ननु मतिज्ञानं परोक्षम्, इन्द्रियापेक्षत्वाद् धूमादग्निज्ञानवदित्यत्र हेतुविकलो दृष्टान्तोऽनुमितेरिन्द्रियापेक्षत्वासिद्धेः, प्रसिद्धानुमाने चक्षुराद्यन्वयव्यतिरेकानुविधानस्य हेतुज्ञान एवोपक्षीणत्वात्, जन्यसाक्षात्कारत्वस्यैवेन्द्रियजन्यतावच्छेदकत्वादिति चेत्, न, इन्द्रियजन्यतावच्छेदककोटौ नानाविधजन्यत्वनिवेशापेक्षयैन्द्रियकत्वस्यैव निवेशयितुमुचितत्वात्, ऐन्द्रियके च ज्ञाने स्वप्रयोज्यव्यापारसम्बन्धेनेन्द्रियस्य हेतुत्वे हेतुज्ञानादिनोपक्षयायोगात्, न हि दण्डो घटे चक्रभ्रम्यादिनोपक्षीणो भवति । अनुमिनोमि न साक्षात्करोमीति प्रत्ययस्तु विषयताविशेषाधीनो न त्विन्द्रियाजन्यत्वाधीनः, पर्वतांशेऽपि तत्प्रसङ्गात् ।

---

परोपदेशजत्वादिति हेतुर्भागासिद्धः–तथाहि श्रुतज्ञानं सर्वमपि मूलभेदापेक्षया द्विविधम्, स्वमतिसमुत्थं परोपदेशसमुत्थञ्च, तत्राद्यं प्रत्येकबुद्धानां पदानुसारिप्रज्ञानां वा, द्वितीयश्चारागादादीनाम् । यदभिहितं बृहत्कल्पभाष्ये–" तं पुण समतिसमुत्थं, परोवदेसा व सव्वंपि ॥ ४१ ॥" इति । तथा च प्रत्येकबुद्धादीनां श्रुतज्ञानस्य स्वत एव जायमानत्वेन पक्षान्तर्गते तत्र हेतोरभावादिति चेत्, नैवम्, तद्भिन्नत्वेन पक्षस्य विशेषणीयत्वात्, अत एव विशेषावश्यकभाष्ये "पाएण पराहीणं, दीवोव्व परप्पबोहयं जं च ।" ८३९ । इत्यत्र प्रत्येकबुद्धादीनां श्रुतस्य स्वयमेव भावात्तद्व्यवच्छेदार्थं प्रायोग्रहणमित्युक्तं सङ्गच्छते । हेतुज्ञान एवोपक्षीणत्वादिति–चक्षुराद्यन्वयव्यतिरेकानुविधानस्य धूमादिहेतुप्रत्यक्षज्ञानोत्पादनमात्रमेव फलमिति तदुत्पत्तौ सत्यां सिद्धफलत्वेन गतार्थत्वादित्यर्थः । जन्यसाक्षात्कारत्वावच्छिन्नं प्रतीन्द्रियत्वेनेन्द्रियस्य कारणत्वमिति कार्यकारणभावमवलम्ब्याह–जन्यसाक्षात्कारत्वस्येति– अत्र जन्यत्वविशेषणमीश्वरसाक्षात्कारे व्यतिरेकव्यभिचारवारणायोपात्तमिति । प्रागभावप्रतियोगित्वलक्षणं स्वरूपसम्बन्धविशेषरूपमथवा प्रागसतः सत्त्वलक्षणमथवा तन्निष्ठान्यथासिद्धयनिरूपकत्वे सति तदव्यवहितोत्तरत्वरूपं वेत्यादि भेदेन जन्यत्वस्य नानात्वमाश्रित्याह–नानाविधजन्यत्वनिवेशापेक्षयेति । ऐन्द्रियकत्वस्यैवेति–एतच्चैन्द्रियकत्वमखण्डोपाधिरूपमखण्डं मत्वैवोक्तम्, इन्द्रियजन्यत्वरूपत्वे तस्य पूर्वोक्तदोषतादवस्थ्यादिति भावः । स्वप्रयोज्यव्यापारसम्बन्धेनेति–स्वमिन्द्रियं तत्प्रयोज्यो यो हेतुज्ञानरूपो व्यापारस्तत्सम्बन्धेनेत्यर्थः । उपक्षयायोगादिति–व्यापारेण व्यापारिणोऽन्यथासिद्धययोगादिति भावः । तत्र दृष्टान्तमाह–न हीति । नन्वनुमितेरिन्द्रियाजन्यत्वात्तदधीन एवाऽनुमिनोमीति प्रत्यय इत्याशङ्कानिवृत्त्यर्थमाह अनुमिनोमीत्यादि । विषयताविशेषाधीन इति विधेयताव्यविषयताधीन इत्यर्थः । तथाऽनभ्युपगमेऽतिप्रसङ्गदोषमाह पर्वतांशेऽपि तत्प्रसङ्गादिति–विधेयात्मकवह्न्यंश इवोद्देश्यात्मकपर्वतांशेऽप्यनुमितेरिन्द्रियाजन्यत्वात्तदधीनो वह्निमनुमिनोमीत्यनुव्यवसायवत्पर्वतमनुमिनोमीत्यनुव्यवसायप्रत्ययस्स्यादित्यर्थः । गुणविशेषजन्यं प्रत्यक्षमिति प्रत्यक्षस्य लक्षणं, तत्र गुणविशेषोऽवधिज्ञानेऽवधिज्ञानावरणकर्मक्षयोपशमः, मनःपर्यायज्ञाने

गुणविशेषजन्यतावच्छेदकप्रत्यक्षत्वाभावादप्यस्य परोक्षत्वमर्थसिद्धम् । त्वया हि योगजधर्मप्रत्यासत्ते-र्निखिलजात्यंशे निरवच्छिन्नप्रकारताकप्रत्यक्षत्वं जन्यतावच्छेदकं वाच्यम्, मया तु प्रत्यक्षत्वमात्रमिति दीयतां लाघवे दृष्टिः । एतेनेन्द्रियजन्यज्ञानत्वं परोक्षत्वाभावव्याप्यमिति विरुद्धोऽयं हेतुरित्यप्यपास्तम् । कालिकादिनेन्द्रियजन्यत्वस्य

तज्ज्ञानावरणकर्मक्षयोपशमः, केवलज्ञाने च केवलज्ञानावरणीयकर्मक्षयः, तज्जन्यत्वादवधिज्ञानादीनां त्रयाणां प्रत्यक्षत्वं, यद्यपीन्द्रियजन्यज्ञाने मतिज्ञानावरणीयकर्मक्षयोपशमलक्षणगुणविशेषः प्रयोजकोऽस्त्येवेति तज्जन्यज्ञानस्य किमिति न प्रत्यक्षत्वमित्याशङ्कोद्भवत्येव, तथापीन्द्रियनिरपेक्षगुणविशेषस्यैव प्रत्यक्षत्वप्रयोजकत्वेन तज्जन्यत्वादवधिज्ञानादित्रयाणामेव प्रत्यक्षत्वम्, इन्द्रियसापेक्षत्वस्य च परोक्षत्वप्रयोजकत्वेनेन्द्रियजन्यज्ञानस्य परोक्षत्वमेवेत्याशयेनाह—गुणविशेषजन्यतावच्छेदकेत्यादि । त्वया हि योगजधर्मप्रत्यासत्तेरिति-रिहेयतः, त्वया—नैयायिकेन, न्यायमते अयं घट इत्यादेश्चक्षुरादिजन्यलौकिकप्रत्यक्षस्यापि प्रत्यक्षत्वेन तस्य योगजधर्मप्रत्यासत्तिं विनैवोत्पादेन व्यभिचारेण प्रत्यक्षत्वमात्रं न योगजधर्मप्रत्यासत्तिजन्यतावच्छेदकं, नापि सर्वविषयकप्रत्यक्षत्वं तज्जन्यतावच्छेदकं, प्रमेयत्वेन रूपेण निखिलप्रमेयविषयकप्रत्यक्षस्य योगजधर्मप्रत्यासत्तिं विनाऽपि सामान्यलक्षणाप्रत्यासत्तितो जायमानत्वेन तत्र व्यतिरेकव्यभिचारात्, अतो निखिलजात्यंशे निरवच्छिन्नप्रकारताकप्रत्यक्षत्वं तज्जन्यतावच्छेदकमिति तादृशप्रत्यक्षवत एव सर्वज्ञत्वम्, इति गौरवम्, स्याद्वादिना तु चक्षुरादिप्रभवज्ञानस्य पारमार्थिकप्रत्यक्षत्वं नाभ्युपगम्यते, वस्तुतः सर्वज्ञप्रत्यक्षस्यैव तथात्वेनाभ्युपगमादिति प्रत्यक्षत्वस्य योगजधर्मप्रत्यासत्तिजन्यतावच्छेदकत्वेऽपि न काऽप्यनुपपत्तिरिति लाघवम्, अवधिमनःपर्यायज्ञानयोः प्रत्यक्षत्वेऽपि तयोर्योगजधर्मप्रत्यासत्त्यजन्यत्वे सकलप्रत्यक्षत्वमेव योगजप्रत्यासत्तिजन्यतावच्छेदकमभ्युपगन्तव्यमित्याशयः । इन्द्रियरूपम्प्रति समवायेनेन्द्रियस्याप्युपादानविधया कारणत्वेनेन्द्रियसापेक्षत्वमिन्द्रियरूपेऽपि वर्तते, न च तत्र परोक्षप्रमाणत्वसाध्यमिति यो व्यभिचारस्तन्निवारणाय निमित्तविधयेन्द्रियसापेक्षत्वं विवक्ष्यते तदेन्द्रियध्वंसे व्यभिचारः, तम्प्रति प्रतियोगिविधयेन्द्रियस्य कारणत्वादितीन्द्रियजन्यज्ञानत्वरूपमिन्द्रियसापेक्षत्वं वाच्यम्, इन्द्रियजन्यज्ञानस्य च प्रत्यक्षत्वेन यत्रेन्द्रियजन्यज्ञानत्वं तत्र परोक्षत्वाभाव इत्येवमिन्द्रियजन्यज्ञानत्वस्य परोक्षत्वाभावव्याप्यत्वाद्विरुद्ध इत्याशङ्क्य निषेधति एतेनेन्द्रियजन्यज्ञानत्वमित्यादि । एतेनेत्यस्यापास्तमित्यनेनान्वयः । हेतुरिति—मतिज्ञाने परोक्षत्वसाधक इन्द्रियजन्यज्ञानत्वहेतुरित्यर्थः । निषेधे हेतुमाह कालिकादिनेत्यादि—कालिकादिनेत्यस्येन्द्रियजन्यत्वे सम्बन्धविधयाऽन्वये सति कालिकेन सम्बन्धेन परोक्षज्ञाने इन्द्रियजन्यत्वं वर्त्तते परोक्षत्वाभावो न वर्त्तत इतीन्द्रियजन्यत्वस्य परोक्षत्वाभावव्याप्यत्वाभावाद्विरोधाऽसिद्धिः, अथेन्द्रियजन्यत्वस्य सम्बन्धः स्वरूपात्मको विवक्षणीय इति स्वरूपसम्बन्धेनेन्द्रियजन्यत्वस्य परोक्षत्वाभावाभाववति परोक्ष-

तत्रापि परोक्षेऽभ्युपगमेन विरोधासिद्धेः, स्वजन्यविलक्षणव्यापारसम्बन्धेनेन्द्रियजन्यत्वग्रहे च तद्ग्राहकस्याप्यभावात्. न च बलवत्तर्कोपबृंहितं हेतोः साध्यान्यथानुपपत्तिग्रहं निर्बलो विरोधो बाधितुमभ्युत्सहत इति न किञ्चिदेतत्। यदि चेन्द्रियज्ञानस्य लोके प्रत्यक्षत्वेन प्रसिद्धत्वात्तदपाकरणे लोकविरोधः, इदं रूपमिति प्रतीताविदन्तोल्लेखोऽपि प्रत्यक्षाधीन एव, न ह्यनुमितोऽग्निरयमिति प्रकाशते, इदन्तायाः प्रत्यक्षज्ञानावच्छिन्नत्वस्वरूपायाः स्वीकारेऽनुमितेऽपि तत्प्रसङ्गात्, ज्ञानांशे स्वप्रत्यक्षत्वस्य सार्वत्रिकत्वादितीदं रूपमित्यादौ विषयांशे प्रत्यक्षत्वानुपगमे स्वप्रतीतिविरोधोऽपीत्युद्भाव्यते, तत्राऽयं मतिश्रुतयोः परोक्षत्वविधिर्नैश्चयिको, व्यवहारतस्तु प्रत्यक्षत्वमिष्यत एवेति न विरोधः। यतोऽभिहितं नन्द्यां—' तं समासओ दुविहं पण्णत्तं—इंदियपच्चक्खं च नोइंदियपच्चक्खं च।'

ज्ञानेऽवृत्तित्वेन विरोधस्स्यादेवेत्यर्थस्तु स्वजन्यविलक्षणव्यापारसम्बन्धेनेत्युत्तरग्रन्थपर्यालोचनया न सङ्गतः, किन्तु कालिकादिनेन्द्रियजन्यं यत्तत्तथा तस्य भावस्तत्त्वमित्येवमर्थः समीचीनः, अत्रादिपदेन संयोगोऽपि ग्राह्यः, तथा च शरीरं प्राणवत् कालिकेन संयोगेन वा इन्द्रियवत्त्वादित्यनुमानस्योक्तान्यतरसम्बन्धेनेन्द्रियलक्षणहेतुजन्यत्वात्तत्र परोक्षत्वस्यैव सत्त्वेन परोक्षत्वाभावाभाववति तस्मिन्ननुमाने इन्द्रियजन्यत्वस्य वृत्तित्वेन परोक्षत्वाभावव्याप्यत्वाभावात् परोक्षत्वेन सहेन्द्रियजन्यत्वस्य विरोधाऽसिद्धेरिति भावः। स्वजन्यविलक्षणव्यापारसम्बन्धेनेन्द्रियजन्यत्वग्रहे इति स्वजन्यविलक्षणव्यापारसम्बन्धेनेन्द्रियजन्यत्वस्येन्द्रियजन्यज्ञानत्वं परोक्षत्वाभावव्याप्यमित्यत्रेन्द्रियजन्यपदेन ग्रहणे इत्यर्थः। तद्ग्राहकस्याप्यभावादिति—विरोधग्राहकस्याप्यऽभावादित्यर्थः। उक्तसम्बन्धेनेन्द्रियजन्यज्ञानं परापेक्षकमित्यतः परोक्षत्वेनाभ्युपगमादिति भावः। यदि परोक्षं न स्यादिन्द्रियजन्यं न स्यादव्यादिवदिति तर्केणेन्द्रियजन्यत्वहेतोः परोक्षत्वसाध्येन सहान्यथानुपपत्तिलक्षणाविनाभावस्य ग्रहो भवति, तद्बाधने बलवत्तरप्रमाणाननुगृहीतो विरोधो दुर्बलत्वान्न समर्थ इत्याह—न चेति। तदपाकरणे इन्द्रियजज्ञानस्य प्रत्यक्षत्वापाकरणे। अनुमितेऽर्थे इदन्तोल्लेखाभावादिदन्तोल्लेखस्य प्रत्यक्षाऽऽधीनत्वमित्याह—न हीति। अथेदन्त्वं प्रत्यक्षज्ञानावच्छिन्नत्वम्, तच्च नाग्नौ तस्यानुमित्यवच्छिन्नत्वादिति तत्र नेदन्त्वप्रतीतिरित्यभ्युपगमेऽतिप्रसङ्गमाह—इदन्ताया इत्यादि। अनुमितेऽपीति अनुमितावपीति पाठो युक्तः। तत्प्रसङ्गात् इदन्तायाः प्रसङ्गात्। सर्वं ज्ञानं स्वांशे प्रत्यक्षमित्यनुमितिरपि स्वांशे प्रत्यक्षरूपेति तदवच्छिन्नत्वस्यानुमित्यात्मकविषये सत्त्वेन तद्रूपेदन्त्वं स्यादित्याह ज्ञानांश इति। परोक्षत्वविधिरिति "परोक्खं दुविहं पण्णत्तं, तं जहा—आभिणिबोहियनाणपरोक्खं सुअनाणपरोक्खं च" इति सूत्रेणेति शेषः। इंदियपच्चक्खं च नोइंदियपच्चक्खं चेति—अत्रेन्द्रियं श्रोत्रादिपञ्चविधम्, तन्निमित्तं सहकारिकारणं यस्योत्पित्सोस्तदलैङ्गिकं शब्दरूपरसगन्धस्पर्शविषयकज्ञानमिन्द्रियप्रत्यक्षं। उक्तञ्च नन्द्याम्—"से किं तं इन्दियपच्चक्खं? इंदियपच्चक्खं पंचविहं पन्नत्तं तं जहा—

इन्द्रियप्रत्यक्षमित्यनेन व्यवहारप्रत्यक्षता भणिता भवति ।

सोइंदियपच्चक्खमित्यादि । व्यवहारत इन्द्रियजन्यप्रत्यक्षमुक्त्वा निश्चयतो नोइन्द्रियप्रत्यक्षमाह– नोइन्दियपच्चक्खमिति–अत्र नोशब्दस्य सर्वनिषेधपरत्वात् नोइन्द्रियेण इन्द्रियाभावेनेन्द्रियप्रवृत्तिं विनैवात्ममात्रेण यत्प्रत्यक्षं प्रवर्त्तते तन्नोइन्द्रियं प्रत्यक्षम्–अत एवात्ममात्रजन्यज्ञानत्वं तल्लक्षणं पर्यवस्यति, तच्चावधिमनःपर्यायकेवलज्ञानाख्यम्, तस्यातीन्द्रियत्वादिति । आह– ननु " नोइन्दियपच्चक्खं च " इत्यत्र नोइन्द्रियं मनः, तस्येन्द्रियैकदेशत्वात्, नोशब्दस्य चैकदेशवाचकत्वात्, ततश्च नोइन्द्रियं मनः, तन्निमित्तकं यत्प्रत्यक्षं तन्नोइन्द्रियप्रत्यक्षमिति, तदयुक्तम्, आगमार्थाऽपरिज्ञानात्, यदि पुनर्नोइन्द्रियं तत्र मनो व्याख्यायेत तदा नोइन्द्रियनिमित्तं प्रत्यक्षमिति मनोनिमित्तमेवावध्यादिज्ञानं प्रत्यक्षं स्यात्, तथा च सति मनःपर्याप्त्याऽपर्याप्तस्य मनुष्यदेवादेरवधिज्ञानं न स्यात्, मनसोऽभावात्, तच्चायुक्तम्, " चुएमित्ति जाणइ " इति वचनेन सिद्धान्ते तस्यावधिज्ञानाभ्युपगमात्, किञ्च सिद्धानामपि प्रत्यक्षज्ञानाभावस्स्यादित्यादिविशेषावश्यकभाष्यपञ्चनवतितमगाथाटीकोक्तेः । अत्र " इंदियपच्चक्खं " इत्यनेनेन्द्रियजन्यं ज्ञानं प्रत्यक्षं व्यवहारतो यथोक्तं तथोपलक्षणन्यायेन मनोभवज्ञानमपि प्रत्यक्षं व्यवहारतो वाच्यम्, इन्द्रियलिङ्गादिकमन्तरेणैव यन्मनसा ज्ञानमुपजायते तत्प्रत्यक्षमिति लोकेऽपि व्यवहारात्, श्रोत्रेण शब्दं, चक्षुषा रूपं, साक्षात्करोमीत्यादिवन्मनसा सुखदुःखादिकं साक्षात्करोमीत्यनुव्यवसायात्, अत एव भगवच्छ्रीवादिदेवसूरयः प्रमाणनयतत्त्वालोकालङ्कारे " तद् द्विप्रकारम् सांव्यवहारिकं पारमार्थिकञ्च " २-४ । तत्राद्यं द्विविधमिन्द्रियनिबन्धनमनिन्द्रियनिबन्धनञ्च–२–५ । इति सूत्रद्वयेन सांव्यवहारिकप्रत्यक्षस्य भेदद्वयं प्राहुः, विशेषावश्यकभाष्येऽपि–" इंदियमणोभवं जं तं संववहारपच्चक्खं " इत्युक्तमिति । अकलङ्कोऽप्याह–"द्विविधं प्रत्यक्षज्ञानं–सांव्यवहारिकं मुख्यं च, तत्र सांव्यवहारिकमिन्द्रियानिन्द्रियप्रभवं, मुख्यमतीन्द्रियज्ञानम्" इति । अस्यायं भावः–संव्यवहारप्रयोजनकत्वात् तत्प्रत्यक्षतया व्यवह्रियते स्पष्टतया चोपचर्यते, न तु वस्तुगत्या प्रत्यक्षम्, अक्षमात्मानं प्रत्यगतत्वात्, साक्षादात्मसम्पाद्यमेव प्रत्यक्षं, तदेव च पारमार्थिकम्, तच्चावध्यादिकमेवेत्याशयेन संव्यवहारशब्दोपदर्शनेन सांव्यवहारिकाख्यः प्रत्यक्षप्रथमभेद उपदर्शित इति । इन्द्रियप्रत्यक्षमित्यनेन व्यवहारप्रत्यक्षता भणितेति–ननु कथमिदं सूत्रं सांव्यवहारिकप्रत्यक्षमाश्रित्यैव प्रवृत्तमित्यवसीयत इति चेत्, उच्यते, "परोक्खं दुविहं पण्णत्तं, तं जहा–आभिणिबोहियनाणपरोक्खमित्याद्युत्तरसूत्रे " श्रोत्रेन्द्रियाद्याश्रितावग्रहादीनां निश्चयनयतः परोक्षत्वेन प्रतिपादनात्, तस्मान्नन्द्यामुत्तरसूत्र इन्द्रियाश्रितज्ञानस्य परोक्षत्वेनाभिधानादिन्द्रियप्रत्यक्षमित्यनेनेन्द्रियाश्रितं ज्ञानं व्यवहारतः प्रत्यक्षमुक्तं, न परमार्थतः, परमार्थतस्त्ववध्यादिज्ञानत्रयमेव प्रत्यक्षं तद्वदत्रापि ज्ञेयमिति । नन्वनुमानस्मृत्यादेः कस्मिन् ज्ञानेऽन्तर्भाव इति चेत्, उच्यते, ऐकान्तिकपरोक्षात्मकमतिज्ञान एवेति । तथा चैकान्ततः परोक्षमनुमानादिकमेव, एकान्ततः प्रत्यक्षमवध्यादित्रयं, इन्द्रियमनोभवं ज्ञानं त्वेकान्ततो न

भाष्यकारस्यापि योगविभागादिन्द्रियजन्यज्ञानस्य सिद्धा प्रत्यक्षता, स चैवं योगो विभजनीयः, आद्ये परोक्षं निश्चयतः, प्रत्यक्षं चाद्ये व्यवहारत इति ॥ ११ ॥

परोक्षं दर्शयित्वा प्रत्यक्षं दर्शयति

## ॥ सूत्रम् प्रत्यक्षमन्यत् ॥ १ ॥ १२ ॥

(भाष्यम्) मतिश्रुताभ्यां यदन्यत् त्रिविधं ज्ञानं तत्प्रत्यक्षं प्रमाणं भवति । कुतः ? । अतीन्द्रियत्वात् । प्रमीयन्तेऽर्थास्तैरिति प्रमाणानि ॥ अत्राह-इह अवधारितं द्वे एव प्रमाणे प्रत्यक्षपरोक्षे इति, अनुमानोपमानागमार्थापत्तिसम्भवाभावानपि प्रमाणानीति केचिन्मन्यन्ते, तत्कथमेतदिति ? । अत्रोच्यते-सर्वाण्येतानि मतिश्रुतयोरन्तर्भूतानीन्द्रियार्थसन्निकर्षनिमित्तत्वात् । किं चान्यत्-अप्रमाणान्येव वा, कुतः ? । मिथ्यादर्शनपरिग्रहाद्विपरीतोपदेशाच्च । मिथ्यादृष्टेर्हि मतिश्रुतावधयो नियतमज्ञानमेवेति वक्ष्यते । नयवादान्तरेण तु यथा मतिश्रुतविकल्पजानि भवन्ति तथा परस्ताद् वक्ष्यामः ॥ अत्राह-उक्तं भवता मत्यादीनि ज्ञानानि उद्दिश्य तानि विधानतो लक्षणतश्च परस्ताद्विस्तरेण वक्ष्याम इति। तदुच्यतामिति । अत्रोच्यते ॥

(यशो०टीका) प्रत्यक्षमन्यदिति । अवधिदर्शनपूर्वकं व्याचष्टे । मतिश्रुताभ्यां यदन्यत् त्रिविधं ज्ञानम् अवधिमनःपर्यायकेवलभेदात् तत् प्रत्यक्षं प्रमाणं भवति, अवधारणपरत्वाद्वाक्यस्यैकान्तेन प्रत्यक्षमित्यर्थः । आद्ये परोक्षमित्यत एवार्थादवशिष्टस्य प्रत्यक्षत्वलाभे नियमार्थं योगविभागार्थं चायं

प्रत्यक्षं, परोक्षत्वेनाप्यभ्युपगमात्, नाप्येकान्ततः परोक्षं, सांव्यवहारिकप्रत्यक्षत्वेनाप्युररीकारात् । उक्तञ्च "एगंतेण परोक्खं लिंगिअ-मोहाइअं च पच्चक्खं । इंदिअमणोभवं जं, तं संववहारपच्चक्खं ॥ ९५ ॥" इति ॥ ११ ॥

द्वादशसूत्रावतरणिकामाह **परोक्षं दर्शयित्वा प्रत्यक्षं दर्शयतीति** । प्रत्यक्षमन्यदिति सूत्रेऽन्यदित्यस्योद्देशपदत्वेन प्रत्यक्षमित्यस्य च विधेयपदत्वेन प्रमाणमित्यस्यानुवृत्तेरन्यत्पदग्राह्यावध्यादिज्ञानत्रयस्य सिद्धत्वात्तदुद्दिश्य तत्र प्रत्यक्षप्रमाणत्वमनेन सूत्रेण विधीयत इत्यर्थः । केनापि पुंसा इदमन्यदित्युक्ते केन काभ्यां कैर्वाऽन्यदिति परेषां जिज्ञासोत्पत्तेस्तन्निवृत्तये तदवधिभूतं प्रदर्शनीयम्, प्रत्यक्षमन्यदिति सूत्रेऽप्यन्यदित्यस्य तदवधिसाकाङ्क्षत्वात्तदुपदर्शनपूर्वकमुक्तसूत्रस्यार्थमाह **मतिश्रुताभ्यां यदन्यत् त्रिविधं ज्ञानमित्यादि** । उक्तञ्च विशेषावश्यकभाष्ये "एत्थं च मइ सुयाइं परोक्खमियरं च पच्चक्खं ॥ ८८ ॥" इति । ननु "आद्ये परोक्षं" इत्यनेन सूत्रेण मतिश्रुतयोः परोक्षत्वविधाने परिशेषादवध्यादिज्ञानत्रयस्य प्रत्यक्षत्वमायातमेवेति किमर्थमस्य सूत्रस्यारम्भ इत्याशङ्काव्यवच्छेदार्थमाह-**नियमार्थमिति** । एकान्तेन प्रत्यक्षमवध्यादिज्ञानत्रयमेव नान्यमिति नियमार्थमित्यर्थः । **योगविभागार्थं चेति**-आद्ये परोक्षं प्रत्यक्षमन्यदित्येकसूत्रे मतिश्रुतयोः परोक्षत्वमेव, तदन्यस्य च प्रत्यक्षत्वमेवेति स्यात्, आद्ये परोक्षमित्येकं सूत्रं प्रत्यक्षमन्यदिति द्वितीयं सूत्रमित्येवं सूत्रे विभक्ते सति आद्ये परोक्षमित्येकयोगः, प्रत्यक्षमन्यदित्यत्र प्रत्यक्षं प्रथमसूत्रोपात्तेन आद्ये इत्यनेनापि सम्बध्यते, अन्यदित्यनेनापि, उक्तप्रकारेण योगविभागे आद्ये परोक्षं

प्रयत्नः । अन्यस्य प्रत्यक्षत्वं कुत इत्याशङ्कयाह–अतीन्द्रियत्वात् । योगिसाक्षात्कारानुरोधेनात्माभिमुखत्वलक्षणमतीन्द्रियत्वमेव प्रत्यक्षलक्षणमभ्यर्हितमिति भावः । तत्प्रमाणे इति द्वित्वसंख्यां विभागेनोपदर्श्य प्रमाणशब्दार्थं कथयति–प्रमीयन्ते इति, प्रमीयन्ते यथावन्निश्चीयन्तेऽर्था जीवादयो यैस्तानि प्रमाणानीति करणे ल्युट्, आहितप्रधानकारणस्य स्वतन्त्रस्य कर्तुरनेककारकशक्तिप्रयुक्तस्य साधकतमत्वविवक्षावशादवच्छेदिका शक्तिरर्थस्य करणव्यपदेशमश्नुत इति टीकाकृतः । एवं सति लब्धीन्द्रियं प्रमाणं स्यात्, तच्चायुक्तं, शक्तिरूपस्य तस्य कार्यार्थापत्त्यैव गम्यत्वेन 'स्वपरव्यवसायि ज्ञानं प्रमाणम्' इत्यस्य भङ्गापत्तेः, द्रव्यार्थप्रत्यक्षतायाश्चातिप्रसञ्जकत्वात्,

निश्चयतः, आद्ये प्रत्यक्षं व्यवहारतः, अन्यदित्यनेन सह प्रत्यक्षमित्येव सम्बध्यते, न परोक्षम्, तथा च ततोऽन्यत् अवध्यादित्रयमेकान्तेन प्रत्यक्षमेवेति योगविभागतो लभ्यत इति तदर्थं "प्रत्यक्षमन्यत्" इति सूत्रकरणमित्यर्थः । अतीन्द्रियत्वादिति–उत्पत्ताविन्द्रियमनोनिरपेक्षत्वादित्यर्थः । व्यवहारप्रत्यक्षत्वे इन्द्रियजन्यत्ववन्निश्चयप्रत्यक्षत्वे इन्द्रियाद्यजन्यत्वस्यापि प्रयोजकत्वादिति । न च प्रत्यक्षत्वमेवेन्द्रियजन्यतावच्छेदकं लाघवादितीन्द्रियव्यापाराभावेऽतीन्द्रियप्रत्यक्षानुपपत्तिरिति शङ्कनीयम्, परैरपीश्वरप्रत्यक्षव्यावृत्त्यर्थं प्रत्यक्षनिष्ठवैजात्यस्यैवेन्द्रियजन्यतावच्छेदकत्वोपगमात्, अस्माभिस्तत्र निश्चयप्रत्यक्षव्यावृत्त्यर्थं सांव्यवहारिकत्वाख्यस्य प्रत्यक्षनिष्ठवैजात्यस्येन्द्रियजन्यतावच्छेदकत्वोपगमे दोषाभावादिति भावः । "अशौङ् व्याप्तौ" अश्नुते व्याप्नोति ज्ञानात्मना सर्वार्थान्, "अश् भोजने" अश्नाति स्वःसमृद्ध्यादीन् पालयति भुङ्क्ते वेति उणादिनिपातनाद् अक्षो जीवः, तम्प्रति साक्षाद्गतं तमेवाभिमुखीकृत्य प्रवृत्तमिति प्रत्यक्षशब्दस्य वास्तविकार्थमनुसृत्याह योगिसाक्षात्कारेत्यादि । अवच्छेदिका शक्तिरर्थस्येति–अर्थस्यावच्छेदिका निश्चायिका शक्तिः, अर्थनिश्चयानुकूलशक्तिरिति यावत् । शक्तिरूपस्य तस्य कार्यार्थापत्त्यैव गम्यत्वेनेति–शक्तिर्हि कार्यानुमेया, तस्या अतीन्द्रियत्वात्, न हि केनापि चर्मचक्षुषा वह्न्यादिगतरूपमिव तद्गतशक्तिरपि साक्षाद्दृश्यत इत्यर्थग्रहणशक्त्यात्मकलब्धीन्द्रियमन्तरेण प्रमात्मकतत्तदर्थविषयकज्ञानकार्यानुपपत्तिरूपलिङ्गेनैव शक्तिरूपस्य प्रमाणस्याऽनुमीयमानत्वेनेत्यर्थः । भङ्गापत्तेरिति उक्तसूत्रेण तादृशज्ञानं प्रमाणमित्युक्तम्, न तु शक्तिः प्रमाणमित्यभिहितम्, ज्ञानञ्च स्वप्रकाशत्वात्तदात्मकप्रमाणं स्वेनैव सिद्ध्यति, न त्वनुमानेनेति तद्विरोधस्स्यादित्यर्थः । किञ्चार्थग्रहणशक्तिलक्षणस्य लब्धीन्द्रियस्य प्रमाणत्वे तस्योपयोगात्मना करणेन फले व्यवधानात्, सन्निकर्षादिवदुपचारत एव प्रमाणत्वमभ्युपगतं स्यादिति, द्रव्यार्थतः प्रत्यक्षाऽर्थग्रहणशक्तिः, पर्यायार्थतस्तु परोक्षेत्यभ्युपगमे दोषमाह–द्रव्यार्थप्रत्यक्षतायाश्चातिप्रसञ्जकत्वादिति–अयमर्थः–स्वपरपरिच्छित्तिरूपात् फलात्कथञ्चिदपृथग्भूते आत्मनि परिच्छिन्ने तथाभूता तज्जननशक्तिरपि परिच्छिन्नैवेति द्रव्यार्थतया प्रत्यक्षेति चेत्, तर्ह्यात्मवर्त्तिनामतीतानागतवर्त्तमानपर्यायाणाम-

तस्मादुपयोगेन्द्रियमेव प्रदीप इव प्रकाशस्य स्वाभिन्नप्रमायाः करणमेष्टव्यमिति देवसूरिप्रभृतयः ।
प्रमाणशब्दः सम्यग्ज्ञाने रूढ एव, फलं तु यथासम्भवं दोषनिवृत्तिः केवलं तु स्वयं फलमेवेति तु युक्तम् ।

शेषाणामपि द्रव्यार्थतः प्रत्यक्षत्वाद्यथा ज्ञानं स्वसंविदितमेवं तेऽपि स्वसंविदिताः किं न स्युः ?, तथा च बौद्धान्प्रति सुखादीनां स्वसंविदितत्वप्रतिषेधप्रयासो निरसार एव स्यात्, तदिह यत् स्वयमात्मानं वेत्ति तत् स्वसंविदितमुच्यते, उपयोग एव तादृशो, न शक्तिः सुखादयश्च । शक्तिर्हि द्रव्याधिगमद्वारग्रहणा, सुखादयश्च पुनरुपयोगाख्यपर्यायान्तरसमधिगम्या इति । किञ्च यदि द्रव्यार्थतः प्रत्यक्षत्वात् स्वसंविदिता ज्ञानशक्तिस्तदाऽहं घटज्ञानेन घटं जानामीति करणोल्लेखो न स्यात्, न हि कलशसमाकलनवेलायां द्रव्यार्थतः प्रत्यक्षत्वेऽपि प्रतिक्षणपरिणामिनामतीतानागतानां च कुशूलकपालादीनामुल्लेखोऽस्ति, तत उपयोग एव साधकतमः प्रत्यक्षेऽपि प्रमाफलं प्रतीत्य सिद्धः, तस्यैव तत्र घटमानत्वादित्याशयेनोपसंहारमाह—**तस्मादुपयोगेन्द्रियमेवेत्यादि** । **स्वाभिन्नप्रमायाः करणमेष्टव्यमिति**—प्रदीपः स्वं प्रकाशात्मना स्वेनैव प्रकाशयतीति प्रतीतेः प्रदीपात्मनः कर्तुः कथञ्चिद्भिन्नस्य प्रकाशात्मककरणस्य प्रकाशनक्रियायाश्च प्रदीपात्मिकायाः कथञ्चिद्भेदसिद्धेर्यथा प्रकाशनक्रियात्मकफलस्य स्वाभिन्नप्रदीपः करणं तथा स्वार्थव्यवसितिरूपप्रमात्मकज्ञप्तिफलस्य स्वाभिन्नोपयोगेन्द्रियमेव करणमभ्युपगन्तव्यम्, ज्ञानं स्वात्मनैव स्वं प्रकाशयतीति प्रतीतेः । एतेनोपयोगात्मकज्ञानस्य प्रमाणत्वे फलत्वं कस्य कथ्यते जिनानुगैः, स्वार्थसंवित्तेरेवेति चेत्तर्हि स्वपरव्यवसायित्वं प्रमाणे कथं घटनामियादित्यारेकाऽपि निरस्ता, प्रमाणप्रमाफलयोः कथञ्चिद्भेदे दूषणकणस्याप्यनवकाशात्, नन्वेकस्मिन्नेव ज्ञाने प्रमाणत्वप्रमात्वविरोध एव दुरुद्धरो दोषोऽस्तीति चेत्, स्यादेतत् यद्येकस्वभावेन तदुभयाभ्युपगमस्स्यात्, न चैवम्, पावको दहत्यौष्ण्येनेत्यत्र यथा दहनक्रिया तत्करणमौष्ण्यं च पावके युगपद्दाहकत्वस्वभावेनौष्ण्यत्वस्वभावेन च स्वीकृतं तथा साधकतमत्वस्वभावेन ज्ञाने प्रमाणत्वं ज्ञप्तिक्रियात्वस्वभावेन प्रमाफलत्वमित्येवमुरुरीकारात् । घटाभावीयप्रतियोगितावान् घट इत्यत्र प्रतियोगितायाः प्रतियोग्यात्मकत्वपक्षे एकत्रैव घटत्वेन प्रतियोगितात्वेनाश्रयत्वाश्रितत्ववत् प्रतियोगितया अवच्छेदकात्मकत्वपक्षे च घटाभावीयप्रतियोगिता घटत्वावच्छिन्नेत्यत्रैकत्रैव घटत्वत्वेन प्रतियोगितात्वेनावच्छेदकत्वावच्छिन्नत्ववच्च नैव तत्र स्वभावभेदापेक्षयोस्तयोः कोऽपि विरोधः, प्रमाणप्रमाफलयोश्च कथञ्चिद्भेदात्तदुभयस्य स्वपरव्यवसायित्वमप्युपपद्यत एव । यदुक्तं स्याद्वादरत्नाकरे प्रथमपरिच्छेदे ५४सूत्रे—"ज्ञानस्याथ प्रमाणत्वे, फलत्वं कस्य कथ्यते ? । स्वार्थसंवित्तिरस्त्येव, ननु किं न विलोक्यते ? ॥ ४० ॥ स्यात्फलं स्वार्थसंवित्ति—र्यदि नाम तदा कथम् ? । स्वपरव्यवसायित्वं, प्रमाणे घटनामियात् ॥ ४१ ॥ उच्यते स्यादभेदात्प्रमाणस्य, स्वार्थव्यवसितेः फलात् । नैव ते सर्वथा कश्चिद्, दूषणक्षण ईक्ष्यते ॥ ४२ ॥ आश्चर्यमाश्चर्यमहो तदेतद्, विलोकयतां शुक्लपटाङ्कितानाम् । ज्ञानं यदेकं नितरां विरुद्ध—प्रमाप्रमाणत्वपदं वदन्ति ॥४३॥

यदाह श्रीसिद्धसेनः–" दोषपक्तिर्मतिज्ञाना–न्न किञ्चिदपि केवलात् । तमःप्रचयनिःशेष–विशुद्धिफलमेव तत् ॥ १ ॥ " इति । प्रमाणद्वयेऽभ्युपगते प्रमाणानीति बहुवचनमयुक्तमिति चेत्, न, व्यक्ति-पक्षसमाश्रयणान्मत्यादिकानां पञ्चानां व्यक्तीनां बहुत्वेन बहुवचनस्य समीचीनत्वात् । ननु प्रत्यक्षानु-मानागमा प्रमाणानीति सांख्याः । प्रत्यक्षानुमानोपमानागमाः प्रमाणानीति नैयायिकाः । अर्थापत्त्या सहैतानि पञ्च प्रमाणानीति प्राभाकराः । अभावेन सहैतानि षडिति भाट्टा वेदा-न्तिनश्च । संभवैतिह्ययुक्तानि तान्यष्टेति पौराणिकाः, तत्कथं निर्णीतं द्वे एव प्रमाणे प्रत्यक्षपरोक्षे इत्याशङ्कते–अत्राहेत्यादि । समाधत्ते–अत्रोच्यत इति, सर्वाण्येतान्यनुमानादीनि, इन्द्रियार्थयोर्यः सन्नि-कर्षः सम्बन्धस्तन्निमित्तत्वान्मतिश्रुतयोरन्तर्भूतानि । तथाहि–अनुमानं तावच्चक्षुरादीन्द्रियधूमाद्यर्थसन्निकर्षजम्,

अत्रोच्यते–आश्चर्यमाश्चर्यमहो तदेतद्, विलोक्यतां भस्मकणाङ्कितानाम् । कथञ्चिदेकत्र मतौ वद-न्ति, प्रमाप्रमाणत्वविरुद्धतां यत् ॥४४॥" इति । एतेनोपयोगस्य स्याद्वादसिद्धान्ते कर्तुरभिन्नत्वात् स एव कर्ता करणञ्चेति सिद्धम्, एतच्च विरुद्धमित्यारेकाऽपि निरस्ता, परिणामपरिणामिनोः कथञ्चिद्भेदविवक्षायामुक्तविरोधाभावात्, ज्ञानपरिणामो हि करणमात्मनः कर्तुः कथञ्चिद्भिन्नम्, अन्यथा स्वप्रज्ञयैव शास्त्रसन्दर्भगर्भमेनमवैमीति विभक्तकर्तृकरणानिर्देशाऽनुपपत्तिरस्यादिति । दोषपक्तिरिति–अज्ञानदोषनिवृत्तिरित्यर्थः । अत्र ज्ञानाज्ञाननिवृत्त्योस्सहभावेऽप्यभेदे हेतु-फलभावः प्रदीपप्रकाशयोरिवेति द्रष्टव्यम् । न किञ्चिदपि केवलादिति अनेनेष्टानिष्टोपा-दानपरिहारद्यरूपभिन्नफलापेक्षया केवलज्ञानस्य निष्फलत्वमुक्तम्, अतः केवलिनां सिद्धप्रयोज-नत्वेन जिहासोपादित्सयोरभावेन न मतिज्ञानवद्धेयोपादेयसंवित्तिरूपं भिन्नं फलं केवलज्ञान-स्येति, केवलज्ञानस्याव्यवहितमभिन्नफलमाह–तमःप्रचयनिःशेषेत्यादि । अत एव " उपे-क्षाफलमाद्यस्य, शेषस्यादानहानधीः । पूर्वा वाऽज्ञाननाशो वा, सर्वस्यास्य स्वगोचरे ॥१०२॥" इत्यष्टसहस्यामुक्तम् । तत्राद्यस्य केवलज्ञानस्य व्यवहितं फलं सर्वत्रोपेक्षा, कुत इति चेत्, उच्यते, हेयस्य त्यागार्थमुपादेयस्य च ग्रहणार्थं प्रयोजनार्थिजन्तूनां प्रवृत्तिर्दृश्यते, न च केव-लिनां तथा प्रवृत्तिः, हेयस्य संसारतत्कारणस्य हानेनोपादेयस्य मोक्षतत्कारणस्योपात्तत्वेन सिद्धप्रयोजनत्वादिति केवलज्ञानस्य सर्वत्रोपेक्षाफलम् । शेषस्यादानहानधीरिति मत्यादेर्व्यवहितं फलं ग्रहणपरित्यागसंवित्तिः, उपादित्साजनिका जिहासाजनिका च बुद्धिरिति यावत्, अत एव तद्द्वारोपादेयहेयोपादानहानाऽऽत्मिका विरतिरपि फलं सङ्गच्छते, तदुवाच वाचकचक्रवर्ती "ज्ञानस्य फलं विरतिर्विरतिफलं चाऽऽश्रवनिरोधः" इति । उक्तद्वारद्वारिभावः–"सवणे नाणे य विन्नाणे, पच्चक्खाणे य संजमे । अणण्हए तवे चेव, वोदाणे अकिरिया सिद्धी ॥ १ ॥" इति सङ्ग्र-हगाथया ज्ञातव्यः । अत्रोपलक्षणन्यायेनोपेक्षाऽपि बहिष्प्रवृत्तिनिवृत्तिविषयान्तरसञ्चारशून्य-निभृतज्ञानरूपा मत्यादेः फलत्वेन ज्ञेयेति । पूर्वार्द्धेन व्यवहितफलमुक्त्वोत्तरार्द्धेनाव्यवहितफल-प्रतिपादनायाह–पूर्वेति, अव्यवहितं तु फलं केवलज्ञानस्याज्ञाननिवृत्तिरेव, मत्यादेः स्वविषयाऽ-ज्ञानविच्छेदवदित्यर्थः । एतदभिप्रायेणैव तातपादश्रीवादिदेवसूरयोऽपि–"यत्प्रमाणेन प्रसाध्यते

अन्यथा तस्यासम्भवात्, स च सन्निकर्षः संयोगो निरन्तरोत्पाद आभिमुख्यं वेत्यन्यदेतत् । उपमानमपि चक्षुरादीन्द्रियगवयाद्यर्थसन्निकर्षजम्, आगमोऽपि श्रोत्रेन्द्रियशब्दसन्निकर्षजः, शब्दार्थापत्तिरप्येवमेव, अर्थार्थापत्तिस्तु चक्षुरादेरिन्द्रियस्य नीलादे रूपस्य च सन्निकर्षत एवोपजायते, सम्भवोऽपि प्रस्थमर्थं दृष्ट्वा श्रुत्वा वा प्रादुरस्ति, सोऽपि चक्षुःश्रोत्रयोः प्रस्थार्थप्रस्थशब्दयोः सन्निकर्षादेवोपजायते, अभावोऽप्यनुपलब्धिलिङ्गकमनुमानमेव, ऐतिह्यं च शब्दः, एवमेतानि स्वप्रयोज्यचरमव्यापारद्वारा यथायथमिन्द्रियानिन्द्रियार्थसन्निकर्षनिमित्तानि सन्ति मतिज्ञानान्न भिद्यन्ते । किं चान्यदिति पक्षान्तरमाश्रयति, अप्रमाणान्येव वा परकल्पितान्यनुमानादीनि प्रमाणानि, मिथ्यादर्शनपरिग्रहात्—एकनयाश्रयणात्, विपरीतोपदेशात्—एकान्तप्ररूपकत्वाच्च, उन्मत्तवाक्यवत् । वक्ष्यमाणं स्मारयति—मिथ्यादृष्टेर्हि जन्तोर्मतिश्रुतावधयो नियतं निश्चितं अज्ञानमेव कुत्सितज्ञानमेवेति वक्ष्यत्युपरिष्टात् । ननु मिथ्यादृष्टिना कोऽपराधः कृतो येन तत्सम्बन्धि सर्वमज्ञानम्, सम्यग्दृष्टिसंबन्धि च सर्वं ज्ञानमिति चेत्, अनुवृत्तिव्यावृत्तिपर्यायद्वारा सर्वस्य सर्वात्मकस्यानन्तपर्यायस्य वस्तुन एकपर्यायप्रकारेण ग्रहणादित्यवेहि । ननु सम्यग्दृष्टिरपि घटादिवस्तुन एकस्मिन्काले

तदस्य फलम् ॥६–१॥ तद् द्विविधमानन्तर्येण पारम्पर्येण च ॥६–२॥ तत्रानन्तर्येण सर्वप्रमाणानामज्ञाननिवृत्तिः फलम् ॥६–३॥ पारम्पर्येण केवलज्ञानस्य तावत्फलमौदासीन्यम् ॥६–४॥ शेषप्रमाणानां पुनरुपादानहानोपेक्षाबुद्धयः ॥६–५ ।” इत्याहुः । बौद्धनयमूलप्रकृतिभूतमृजुसूत्रनयं समाश्रित्याह—निरन्तरोत्पाद इति व्यवधायकदेशराहित्येनोत्पाद इत्यर्थः । ऐतिह्यं च शब्द इति—अनिर्णीतप्रवक्तृकवृद्धपरम्पराऽऽयातं वाक्यमैतिह्यमिति लक्षणाच्छब्दरूपस्य तस्य श्रोत्रेन्द्रियेण सन्निकर्षादेव ज्ञानं जायत इतीन्द्रियनिमित्तमेव तज्ज्ञानमिति मतिज्ञानेऽन्तर्भूतं तदिति भावः । नियतं निश्चितमज्ञानमेवेति—आस्तां तावत्संशयादिकाले, निश्चयकालेऽपि, यतस्स मिथ्यादृष्टिर्यथा जिनेन्द्रभगवद्भिः प्रज्ञप्तमनन्तपर्यायं वस्तु तथा नैवावगच्छति, अत एव तथा नाऽभ्युपगच्छति, केवलिभगवद्दृष्टयथावस्थितवस्त्वभ्युपगमस्य सम्यग्ज्ञानाधीनस्य सम्यग्ज्ञानाभावेन परमार्थवृत्त्या मिथ्यादृष्टेः कदाचिदप्यभावात्, अन्यथा मिथ्यादृष्टित्वमेव तस्य न स्यात्, तथा च सापेक्षभावेन तदतत्स्वभावात्मकस्य वस्तुन एकान्तैकधर्मप्रकारेण निश्चयात्मकज्ञानस्य भ्रान्तत्वात् तच्छालिनस्तस्य निश्चयरूपं संशयादिरूपं च सर्वं ज्ञानमज्ञानरूपमेव । उक्तञ्च विशेषावश्यकभाष्ये—“निण्णयकाले वि जओ न तहारूवं विदंति ते वत्थुं । मिच्छद्दिट्ठी तम्हा सव्वं चिय तेसिमण्णाणं ।” ३२३ । इति । अनुवृत्तिव्यावृत्तिपर्यायद्वारेति साक्षात्सम्बन्धेन स्वनिष्ठा ये स्वीयपर्यायास्तेऽनुवृत्तिपर्यायाः, ये च परवस्तुगतत्वेन परपर्याया अपि स्वाभाववत्त्वरूपपरम्परासम्बन्धेन स्वगतास्ते व्यावृत्तिपर्यायाः, तद्द्वारेत्यर्थः । अनुगतरूपत्वेन व्यावृत्तिरूपत्वेन स्वनिष्ठस्वपर्यायपरपर्यायद्वारेति यावत् । सर्वस्य सर्वात्मकस्येति—कथञ्चिद्भिन्नाभिन्नत्वे सत्येव धर्मधर्मिभाव इति सत्त्वप्रमेयत्वादिको यो घटादेरनुवृत्तिपर्यायात्मा धर्मस्तेन समं कथञ्चित्तादात्म्यं घटादेरवश्यमभ्युपगन्तव्यमेवं पटादेरपि, तथा च तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमाद् घटाभिन्नप्रमेयत्वाद्यभिन्नस्य पटादेर्घटाभिन्नत्व-

एकमेव कश्चिद् घटत्वादिपर्यायं गृह्णात्यतोऽनन्तपर्यायमपि वस्त्वेकपर्यायतया गृह्णतस्तस्यापि कथं ज्ञानमिति चेत्, सत्यम्, यद्यप्यसौ प्रयोजनादिवशादेकं पर्यायं गृह्णाति, तथाहि–सौवर्णे घटे दृष्टे यस्य घटमात्रेण प्रयोजनं स घटोऽयमित्यध्यवस्यति, सुवर्णार्थी यः स सुवर्णमिदमिति, जलाहरणार्थी जलभाजनमिदमिति। एवं ब्राह्मणे द्वारि दृष्टेऽभ्यासवशाद् भिक्षुकोऽयमिति, यस्तत्समीपेऽधीते स प्रत्यासत्तिवशान्मदीयोपाध्यायोऽसाविति, अन्यस्तु पाटववशाद् ब्राह्मणोऽयमिति। तथापि 'जे एगं जाणइ से सव्वं जाणइ' सर्वमनन्तपर्यायात्मकमित्याद्यागमार्थश्रद्धानोपनीतसर्वात्मकत्वानन्तपर्यायात्मकत्वावगाहित्वं वस्तुनि सम्यग्दृ-

मित्येवं दिशाऽनुवृत्तिपर्यायद्वारा सर्वस्य सर्वात्मकत्वम्, तथा स्वाभाववत्त्वसम्बन्धेन परगतधर्मा ये घटादौ वर्त्तन्ते तैस्सममपि धर्मधर्मिभावानुरोधेन कथञ्चित्तादात्म्यमेषितव्यम्, तेषां च घटादिभिर्यथाऽभेदस्तथा पटादिभिरित्युक्तनियमाद् घटपटादीनामभेद आयात्येवेति व्यावृत्ति पर्यायद्वारा सर्वस्य सर्वात्मकत्वम्, इत्थं सर्वस्य सर्वात्मकस्य स्वपरानन्तपर्यायात्मकत्वे सत्यपि मिथ्यादृष्टिज्ञानमेकपर्यायप्रकारेणैव वस्त्ववगृह्णातीति तदज्ञानमित्यर्थः। एकपर्यायतया गृह्णतस्तस्यापि कथं ज्ञानमिति–यद्वस्तु यदात्मकं तद्रूपेणैव तद्ग्रहणे सम्यग्ज्ञानमन्यथा तु मिथ्याज्ञानम्, न च केवलैकपर्यायात्मकं वस्तु जैनसिद्धान्ते, किन्त्वनन्तपर्यायात्मकमित्येकस्मिन् काले एकपर्यायमात्रेण घटादिवस्तुग्रहणेऽन्यथात्वग्रहप्रसक्त्या सम्यग्दृष्टिनोऽपि कथं सम्यग्ज्ञानं स्यादिति भावः। "जे एगं जाणइ से सव्वं जाणइ"त्ति–अत्र "जे सव्वं जाणइ से एगं जाणइ" इत्युत्तरार्द्धं ज्ञेयम्। अयम्भावः इह जगति परमाण्वादिकमेकैकं वस्तु स्वपरपर्यायैस्समस्तत्रिभुवनमयम्, तथाहि–परमाणौ तावदेकगुणकालत्वादयः षड्गुणहानिवृद्धिलक्षणा वर्ण–गन्ध–रस स्पर्शादयो भिन्नाभिन्नकालीना अनन्तास्स्वपर्याया इव तत्तत्क्षेत्रतत्तत्कालवर्त्तिपरमाणुद्व्यणुकत्र्यणुकाद्यनन्तपुद्गलस्कन्धानन्तजीवादिसमस्तवस्तुभ्यो व्यावृत्तत्वात्तद्व्यावृत्तिलक्षणा अनन्ताः परपर्याया भवन्ति, एवं द्व्यणुकादिष्वपि भावनीयम्, न चान्यसमस्तवस्तुव्यावृत्तयोऽभावरूपत्वात्स्वरूपसम्बन्धेन विवक्षितपरमाण्वादिवस्तुनि विद्यन्त इति तद्धर्मत्वात् धर्मस्य च पर्यायरूपत्वेन भवत्वन्यव्यावृत्तिलक्षणानन्तपर्यायावलीढं तत्, न चैतावताऽन्यसमस्तवस्तुमयं तत्सिद्ध्यति, व्यावृत्तिप्रतियोगिनां समस्तवस्तूनां तत्राऽसत्त्वादिति वाच्यम्, स्वाभाववत्त्वसम्बन्धेन प्रतियोगिनामपि तत्र सत्त्वात्, तथा च प्रतियोगिभूतानां तेषां तद्धर्मत्वाद् धर्मधर्मिणोश्च कथञ्चिदभेदात् सिद्धत्येव सर्वमपि वस्तु सर्वमयम्। तथा च य एकं किमपि वस्तु सर्वैस्स्वपरपर्यायैर्युक्तं जानाति स सर्वं लोकालोकगतं वस्तु सर्वैस्स्वपरपर्यायैर्युक्तं जानाति सर्ववस्तुपरिज्ञाननान्तरीयकत्वाद् याथात्म्येनैकवस्तुज्ञानस्येति। यश्च सर्वं सर्वपर्यायोपेतं वस्तु जानाति स एकमपि घटादिवस्तु सर्वपर्यायान्वितं जानाति, यथावस्थितैकवस्तुज्ञाननान्तरीयकत्वात् सर्ववस्तुज्ञानस्य, तथा चैकं वस्तु गृह्णतः सर्ववस्तुग्रहणं निराबाधं सिद्धम्, यत एकं वस्तु स्वान्यसर्ववस्तुव्यावृत्तं, व्यावृत्तिश्चाभावः, न च प्रतियोगिनि सर्ववस्तुन्यज्ञाते तदभावो ज्ञातुं शक्यः, अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्। यद्वा मयूराण्डकरसे [illegible] र्व च

ष्टिज्ञाने सर्वत्रैवेति तदेव प्रमाणमिति स्थितम् । यद्येवं कथं तर्हि मतिश्रुतयोरन्तर्भूतानीत्युक्तमत आह–

नेत्रपिच्छोदरचरणादितदनेकावयवतद्गततत्तद्रूपरसाद्यनुकूलानन्तशक्तिमत्पुद्गलपरमाणुष्वप्यतीतानागतवर्तमानानन्ततत्तत्पुद्गलपर्यायपरिणमनशक्तिसद्भावादनन्तकालेन विस्रसाप्रयोगादितत्तत्सामग्रीसमवधाने सति सर्वेण वस्तुना सर्वावस्थानां परस्परानुगमेनासादितत्वादवस्थातुश्चाऽवस्थानां कथञ्चिदनन्यत्वात्सर्वे पदार्थास्सर्वरूपेणापि विवृत्ता विवर्तन्ते विवर्तिष्यन्त इति सर्वं सर्वात्मकं कथञ्चिदिति सिद्धम् । तथा च यः कश्चिदविशेषित एकं परमाण्वादिद्रव्यं पश्चात्पुरस्कृतपर्यायं स्वपरपर्यायं वा जानाति परिच्छिनत्ति स सर्वं स्वपरपर्यायं जानाति, अतीतानागतपर्यायिद्रव्यपरिज्ञानस्य समस्तवस्तुपरिच्छेदाविनाभावित्वात्, इदमेव हेतुहेतुमद्भावेन लगयितुमाह–जे सव्वमित्यादि, यः संसारोदरविवरवर्ति सर्वं वस्तु जानाति, स एकं घटादिवस्तु जानाति, तस्यैवातीतानागतपर्यायभेदैस्तत्तत्स्वभावापत्त्याऽनाद्यनन्तकालतया समस्तवस्तुस्वभावगमनादिति । तदुक्तं सम्मतौ–"एकदवियम्म जे अत्थपज्जवा, वयणपज्जवा वावि । तीयाणागयभूया, तावइयं तं हवइ दव्वं ॥ ३१ ॥" इति । अथैवंविधं परिज्ञानं केवलज्ञानिनं भगवन्तं विना नान्यस्यास्मदादेश्छद्मस्थस्यातीन्द्रियज्ञानाभावात् सम्भवतीति चेत्, सत्यम्, सम्यग्दृष्टिनश्छद्मस्थस्य साक्षात्तथापरिज्ञानाऽभावेऽपि "जे एगं जाणइ से सव्वं जाणइ" इत्याद्यागमप्रामाण्याभ्युपगमद्वारा स्वपरपर्यायापेक्षयाऽनन्तधर्मात्मकत्वेनैकैकं वस्तु सर्वमयं सर्वं च सर्वमयमिति श्रद्धानोपनीतवासनावतस्तस्यापि भावतो तथापरिज्ञानमस्त्येव, तदानीं तस्य मतिज्ञानावरणकर्मक्षयोपशमजनितस्याद्वादसंस्कारसद्भावेन भावतोऽनन्तपर्यायात्मकतया वस्तुग्रहणपरिमाणस्याऽक्षयात् । उक्तञ्च विशेषावश्यकभाष्ये–"पज्जायमासयन्तो, एक्कं पि तओ पओयणवसाओ । तत्तियपज्जायं चिय, तं गिण्हइ भावओ वत्थुं ॥३२२॥" तस्माज्जाग्रतस्स्वपतस्तिष्ठतश्चलतो वा यथोक्तागमश्रद्धानद्वारा परमगुरुप्रणीतयथोक्तवस्तुस्वरूपज्ञानपरिणामस्य सर्वदैव भावात् सम्यग्दृष्टिज्ञानं सर्वं प्रमाणमिति सिद्धम्, अत एव "सम्मद्दिट्ठीणं भंते ! किं नाणी अन्नाणी ? गोयमा ! नाणी नो अन्नाणी इत्यागमोऽपि सङ्गच्छते । अत्रेदमप्यवधेयम्

ननु त्रिभुवनान्तर्गतसर्वद्रव्यसर्वपर्याया अपि विवक्षितवस्तुनः पर्याया इति सिद्धान्ते गीयते, यतो न ह्यन्यसर्वद्रव्यपर्यायेष्वज्ञातेषु विवक्षितवस्तुसम्पूर्णशैर्ज्ञायते ज्ञातेषु च ज्ञायत इति हेतोस्ते तस्य धर्माः, प्रयोगः–येषामनुपलब्धौ यन्नोपलभ्यते उपलब्धौ चोपलभ्यते तस्य ते धर्माः, यथा घटपटादेर्घटत्वपटत्वादयः, नोपलभ्यते च याथात्म्येन विवक्षितवस्तु तदन्यसर्वद्रव्यपर्यायाणामनुपलब्धौ, उपलभ्यते च तदुपलब्धौ इति ते तस्य धर्मा इत्येतत्कथं सङ्गच्छते, यतो न हि परधनं स्वधनम्, न हि कोऽपि कोविदः परधनेन धनवानयं पुरुष इति व्यवहरतीति न्यायात्, एवं परद्रव्यपर्याया अपि कथं विवक्षितवस्तुपर्यायास्स्युः, तेषामविच्छिन्नमात्रसम्बन्धेनान्यद्रव्यनिष्ठत्वेन स्वावृत्तित्वादिति चेत्, सत्यम्, यदि साक्षात्सम्बन्धेन परद्रव्यपर्यायविशिष्टं विवक्षितं वस्त्विति मन्येत तदा स्यादुक्तदोषः, न चैवम्, स्वाभाव-

नयवादान्तरेणेत्यादि । नया नैगमादयस्तेषां वादः स्वरुचितार्थप्रकाशनं तस्यान्तरं भेदस्तेन मतिश्रुतयोर्विकल्पा ये भेदास्तज्जानि यथाऽन्योक्तप्रमाणानि भवन्ति तथा परस्तान्नयविचारणाया वक्ष्यामः । शब्दनयस्य मिथ्यादृष्टिरन्यो वा नास्तीति वक्तव्यम्, तन्मतेन प्रमाणानीति, वस्तुतः परैः पृथक्त्वेनाशाङ्कितान्यनुमानादीनि प्रमाणानि सम्यग्दृष्टिसम्बन्धीनि मतिश्रुतयोरन्तर्भवन्तीति तात्पर्यं न कोऽपि दोष इति स्मर्तव्यम् ॥ १२ ॥

विधानतो लक्षणतश्चेति प्रभेदास्त्वस्य पुरस्ताद्वक्ष्यन्त इत्यनेनास्योक्तत्वं द्रष्टव्यम् । भिद्यतेऽनेनेति भेदः, प्रकृष्टो भेदः प्रभेदः । प्रभेदश्च प्रभेदाश्च प्रभेदा इत्येकशेषाश्रयणात् । अत एवात्र विधानस्य प्राग्वक्तत्वेऽप्यर्थक्रमस्य बलवत्त्वात् प्रथमं लक्षणमाह—

वस्त्वरूपपरम्परासम्बन्धेनैव तत्र वैशिष्ट्यस्याङ्गीकारात्, अत एव परद्रव्यपर्याया विवक्षितवस्तुनि परपर्याया इत्याख्यायन्ते, स्वाभाववत्त्वसम्बन्धरूपपरम्परासम्बन्धेनैव तत्र तेषां सत्त्वात्, तथा च यथा भिषग्वरो महाविषमप्यौषधिप्रयोगादमृतमिव करोति तथा सम्यग्दृष्टिर्जीवोऽपि महाविषादप्यतिक्रान्तरूपमज्ञानं भगवद्वचनौषधिप्रयोगादमृतोपमज्ञानरूपं करोति, भारतादिमिथ्याश्रुतस्य सम्यग्दृष्टिपरिगृहीतस्य सम्यग्ज्ञानरूपेण परिणमनात् । उक्तञ्च "सम्मत्तपरिग्गहियं सम्मसुयं" इति । नन्वेवं तर्हि स्वातिनक्षत्रजलमहिमुखप्रविष्टं विषरूपेणेव मिथ्यादृष्टिपरिगृहीतमज्ञानङ्गप्रविष्टं सम्यक्श्रुतमपि मिथ्याश्रुतरूपेण परिणतं स्यादिति चेत्, तत्तद्वस्तुपरिणामस्येव श्रुतपरिणामस्यापि पात्रानुसारित्वाद् यथापात्रं तथा स्यादेव, सम्यग्दृष्टेर्यथावस्थिततत्त्वबोधतो मिथ्याश्रुतस्यापि विषयविभागेन याथार्थ्येन योजनात् तत्परिगृहीतं मिथ्याश्रुतमपि सम्यक्श्रुतम्, मिथ्यादृष्टेश्चाऽयथावस्थितबोधतस्सम्यक्श्रुतस्यापि वैपरीत्येन योजनात् तत्परिगृहीतं सम्यक्श्रुतमपि मिथ्याश्रुतम् । यदाह भाष्यकारः—"अंगाणंगपविट्ठं, सम्मसुयं लोइअं तु मिच्छसुयं । आसज्ज उ सामित्तं, लोइअ—लोउत्तरे भयणा ॥ ५२७ ॥" इति । तथा च परप्रवादिभिर्भिन्नप्रमाणत्वेन प्रोक्तान्यप्यनुमानादीनि सम्यग्दृष्टिपरिगृहीतत्वेन सम्यग्ज्ञानरूपाण्येव, सम्यग्ज्ञानं च प्रकृते मतिज्ञानं श्रुतज्ञानञ्चेति तत्रैव तान्यन्तर्भवन्तीत्याशयेनाह वस्तुतः परैरित्यादि ॥ १२ ॥

भाष्ये त्रयोदशसूत्रावतरणिकामाह अत्राह—उक्तं भवतेत्यादिना, प्रथमाध्याये नवमसूत्रभाष्योक्तेन "प्रभेदास्त्वस्य पुरस्ताद्वक्ष्यन्ते" इति पाठेन, विधानत इत्यस्य लक्षणतश्चेत्यस्य च ग्रहणं यथा कृतं तथा चाह भिद्यतेऽनेनेति, प्रभेदश्चेत्यनेन लक्षणत इत्यस्य प्रभेदाश्चेत्यनेन च विधानत इत्यस्य ग्रहणं कृतम् । कथमिति चेत्, उच्यते, मतिस्मृत्याद्यन्यतमज्ञानत्वरूपस्य मतिज्ञानलक्षणस्यैकत्वात् प्रभेद इत्येकवचनान्तपदेन ग्रहणम्, विधानस्यावान्तरभेदरूपस्यानेकत्वाद्बहुवचनान्तेन प्रभेदा इत्यनेन ग्रहणमिति बोध्यम् । पाठक्रमापेक्षयाऽर्थक्रमस्य बलवत्त्वाद्विधानतो लक्षणतश्चेत्यत्र विधानस्य पूर्वमुक्तत्वेऽपि लक्षणतस्सामान्यज्ञाने सत्येवावान्तरधर्मजिज्ञासया विभागप्रवृत्तेर्लक्षणं पूर्वं पश्चाद्विभाग इत्यर्थक्रमे लक्षणमेव पूर्वं निरूपणीयमित्याह अत एवेत्यादि ।

# सूत्रम् मतिः स्मृतिः संज्ञा चिन्ताभिनिबोध इत्यनर्थान्तरम् ॥१॥१३॥

(भाष्यम्) मतिज्ञानं स्मृतिज्ञानं सञ्ज्ञाज्ञानं चिन्ताज्ञानं आभिनिबोधिकज्ञानमित्यनर्थान्तरम् ।

(यशो० टीका) तथा च मत्याद्यन्यतरज्ञानं मतिज्ञानमित्यत्र लक्षणे तात्पर्यम् । अनर्थान्तरमिति यावद्विशेषाणामेव सामान्यरूपत्वादित्यर्थः । मतिज्ञानमित्यादि भाष्यम्, प्रत्येकं ज्ञानशब्दो विशेषाणां पृथग्लक्षणीयत्वद्योतनार्थः । मतिज्ञानं नाम यदिन्द्रियानिन्द्रियनिमित्तं वर्तमानकालविषयपरिच्छेदि । स्मृतिज्ञानमतीतकालावच्छिन्नार्थपरिच्छेदि । न च प्रमृष्टतत्ताकस्मरणेऽव्याप्तिः, तस्यापि वस्तुत ईदृशत्वात्, न च प्रत्यभिज्ञानेऽतिव्याप्तिः, अनुभवाजन्यत्वेन विशेषणात्, प्रत्यभिज्ञानं चानुभवस्मृतिहेतुकं तिर्यगूर्द्ध्वतासामान्यविषयं प्रसिद्धम्, अनुभवाजन्यत्वमपि साक्षाद्विवक्षणीयम्, अन्यथा स्मृतिमात्रस्य संस्कारद्वाराऽनुभवहेतुकत्वादसम्भवापत्तेः । संज्ञाज्ञानं प्रत्यभिज्ञानं पूर्वापरसंकलनात्मकम् । अत एव संज्ञासंज्ञि-

---

सामान्यरूपत्वादिति—मतिज्ञानत्वस्मृतित्वादीनां मतिज्ञानत्वरूपसामान्यधर्मव्याप्यान्तरधर्मत्वेन मतिस्मृत्यादिषु तत्सत्त्वे तद्व्यापकीभूतमतित्वसामान्यधर्मस्यापि तत्र सत्त्वेन तेषां तद्रूपेण मतिसामान्यस्वरूपत्वादित्यर्थः, तथा चाम्रनिम्बाशिंशपादियावद्वृक्षविशेषान्यतमस्वरूपव्यतिरेकेण वृक्षसामान्यस्वरूपस्यानुपलम्भात्तादृशवृक्षविशेषाणामेव वृक्षत्वावच्छिन्नसामान्यस्वरूपत्वमिव मतिस्मृत्यादियावद्विशेषान्यतमस्वरूपव्यतिरेकेण मतित्वावच्छिन्नसामान्यस्वरूपस्यानुपलम्भान्मतित्वावच्छिन्नसामान्यं निरुक्तविशेषस्वरूपतां परिहाय नैव स्वस्वरूपतां धर्तुं शक्नोतीत्यतत्सामान्यविशेषयोः कथञ्चिद्भेदेऽप्यभेदसद्भावादनर्थान्तरत्वं ज्ञेयमिति भावः । स देवदत्त इत्याकारके स्मरणे तत्तांशभानादेवानुभवकालरूपातीतकालावच्छिन्नार्थस्य भानम्, तत्तांशप्रमोषे च न तद्भानमिति प्रमृष्टतत्ताकस्मरणेऽव्याप्तिरित्याशङ्क्य निषेधति न चेति । निषेधे हेतुमाह—तस्यापीति । तस्यापि प्रमृष्टतत्ताकस्मरणस्यापि, वस्तुतः—परमार्थतः, ईदृशत्वात्—अतीतकालावच्छिन्नार्थपरिच्छेदरूपत्वात् । अतीतकालावच्छिन्नत्वं ह्युपलक्षणम्, न त्वर्थस्य विशेषणमिति तद्भानेऽपि न क्षतिरिति भावः । यद्वाऽतीतकालावच्छिन्नार्थपरिच्छेदिज्ञानवृत्तिमतिज्ञानत्वव्याप्यधर्मवत्त्वं स्मृतिज्ञानत्वमित्येवं लक्षणकरणे नोक्ताव्याप्तिदोष इति । तिर्यगूर्ध्वतासामान्यविषयमिति—देशानुगतसदृशपरिणामलक्षणतिर्यक्सामान्यविषयकं तज्जातीयोऽयं घट इत्याद्याकारं परापरविवर्त्तव्यापिद्रव्यलक्षणोर्ध्वतासामान्यविषयकं कुण्डलाङ्गदादिषु तदेव सुवर्णं स एवायं जिनदत्त इत्याद्याकारमित्यर्थः । तथा च प्रत्यभिज्ञानस्यानुभवजन्यत्वादनुभवजन्यत्वघटितोक्तस्मृतिलक्षणस्य तत्र सङ्घटनाभावान्नातिव्याप्तिरिति भावः । सञ्ज्ञाज्ञानमिति—अस्यार्थमाह—प्रत्यभिज्ञानमिति । तदर्थमाह—पूर्वापरसङ्कलनात्मकमिति—पूर्वोत्तरकालावच्छिन्नव्यक्त्यभेदावगाहिय एव पूर्वं मया दृष्टस्स एवायमित्याद्याकारमित्यर्थः । एवं तज्जातीयोऽयं घटः अङ्गदकुण्डलादिषु तदेव सुवर्णमित्यादिज्ञानमपि संज्ञाज्ञानं प्रत्यभिज्ञानापरनामकं ज्ञेयम् ।

सम्बन्धोऽप्यनेनैव गृह्यते इति संज्ञाशब्दोऽन्वर्थः । चिन्ताज्ञानमागामिनो वस्तुन एवं निष्पत्तिर्भवत्यन्यथा नेत्याकारम् । आभिनिबोधिकमभिमुखो निश्चितो यो विषयस्तत्परिच्छेदोऽशेऽप्यभ्रोन्यस्पर्शरहितो योग्यसाक्षात्कार इति यावत् ॥ १३ ॥

अनेनैव संज्ञाज्ञानेनैवेत्यर्थः । एतेन गवयो गवयपदवाच्य इत्युपमितिफलमपि संज्ञाज्ञानरूपमेवेति तस्य मतिज्ञान एवान्तर्भावान्न तज्जनकमतिरिक्तमुपमानप्रमाणमभ्युपगन्तव्यमिति सूचितम्, न चोपमिनोमीति प्रत्ययबलात्तद्भिन्नं सिद्धमिति वाच्यम्, अनुमितित्वादिकमिवोपमितित्वमपि मतिज्ञानत्वव्याप्यमेवेत्यभ्युपगमे दोषाभावात् । अभिमुख इति–सन्मुखः यथार्थबोधोत्पादनक्षम इति यावत्, एतेन भ्रमात्मकनिश्चयविषयस्य व्यवच्छेदः कृतः । अभिमुखोऽपि विषयः क्षयोपशमाद्यपाटवेऽनिश्चितोऽपि स्यादित्यत आह निश्चित इति । एतेन सन्दिग्धविषयस्य व्यवच्छेदः कृतः । योग्यसाक्षात्कार इति–अत्र योग्यताऽऽभिनिबोधिकज्ञानप्रतिबन्धकीभूतस्वावरणकर्मक्षयोपशमलक्षणा, सैव च तत्तत्प्रतिनियतप्रत्यक्षविषयत्वे प्रयोजिका, न तु स्वजनकसन्निकर्षाश्रयत्वं तन्त्रम्, नाप्यर्थः, तथा च प्रत्यक्षस्य यद्विषयत्वावच्छेदेन स्वावरणकर्मक्षयोपशमलक्षणयोग्यताऽऽविर्भवति तद्विषयकत्वमेव भवति, नान्यविषयकत्वम्, एवं विषयस्यापि स्वावच्छेद्याविर्भूतावरणक्षयोपशमादिलक्षणयोग्यताविशिष्टं जन्यतासम्बन्धेन यज्ज्ञानं तद्विषयत्वमेव, नान्यज्ञानविषयत्वम् । अत एव परोक्षज्ञानस्यार्थसन्निकर्षाद्यऽजन्यतया परेणाप्यभिप्रेतस्य प्रतिनियतविषयत्वव्यवस्थोपपत्तिः, यदर्थांशे परोक्षज्ञानावरणकर्मक्षयोपशमलक्षणयोग्यता तदर्थविषयकत्वस्यैव भावात् । नन्वेवं द्रव्यचाक्षुषादौ तत्प्रतिबन्धककर्मक्षयोपशमत्वादिना हेतुता वाच्या, तद्धेतुता च चक्षुःसन्निकर्षादेरेव, तथा च तद्धेतोरित्यादिन्यायेन प्रत्यक्षे इन्द्रियार्थसन्निकर्षस्य हेतुत्वं युक्तमिति चेत्, मैवम्, यतोऽन्तरङ्गबहिरङ्गयोर्मध्येऽन्तरङ्गस्यैव बलीयस्त्वमिति न्याय एवान्तरङ्गरूपक्षयोपशमस्य हेतुत्वे विनिगमक इति स एव हेतुर्युक्तः । एतेन स्थैर्यपक्षे विषयनिष्ठाया योग्यताया अपरावृत्तेर्नयनसन्निकर्षस्याहेतुत्वे भित्त्याद्यावृतस्य चाक्षुषापत्तिरित्यादिकमपास्तम्, भित्त्यादिना चाक्षुषजनककर्मक्षयोपशमस्य प्रतिबन्धात्, अप्रतिबन्धे वा तद्वतां चाक्षुषापत्तेरिष्टत्वात् । अपरेषां तु मते दिव्याञ्जनादिसंस्कृतचक्षुषामनुभूयमानभित्त्याद्यावृतार्थचाक्षुषानुपपत्तिः, चक्षुस्सन्निकर्षाभावात्, तत्र चाक्षुषत्वापलापे च घटादिज्ञानेऽपि तदपलापप्रसङ्गः । किञ्च प्रत्यासत्तिहेतुत्ववादिना नेत्राञ्जनसूक्ष्मतारकाद्यप्रत्यक्षत्वायाऽत्यासन्नातिदूरत्वयोर्दोषत्वं वाच्यम्, आदर्शसाम्मुख्याञ्जनादिसन्निधाने च तत्प्रत्यक्षत्वाय तत्तद्विषये तदभावविशिष्टतत्तदासन्नातिदूरत्वाभावस्य चाक्षुषहेतुत्वं वाच्यमित्यतिगौरवम् । मम तु क्षयोपशमे आदर्शसाम्मुख्याञ्जनादिसन्निधानस्य विशिष्य हेतुता, न तु चाक्षुषादौ, तत्र तु सा विलक्षणक्षयोपशमत्वेनैव समानप्रत्यासत्त्येति लाघवम्, किञ्चेन्द्रियप्रत्यासत्तेरपि क्षयोपशमाधायकतयैव प्रत्यक्षहेतुता वाच्या, असङ्ख्येयसमयप्रविष्टानामेव पुद्गलानां ग्रहणयोग्यतायाः पारम-

लक्षणमुक्त्वा विधानमाह

## सूत्रम् तदिन्द्रियानिन्द्रियनिमित्तम् ॥ १ ॥ १४ ॥

(भाष्यम्) तदेतन्मतिज्ञानं द्विविधं भवति। इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च । तत्रेन्द्रियनिमित्तं स्पर्शनादीनां पञ्चानां स्पर्शादिषु पञ्चस्वेव स्वविषयेषु। अनिन्द्रियनिमित्तं मनोवृत्तिरोघज्ञानं च ।

(यशो० टीका) इन्द्रियनिमित्तं स्पर्शनादिभेदेन पञ्चविधम् । तदाह तत्रेन्द्रियनिमित्तमित्यादि । अनिन्द्रियनिमित्तं द्विविधम्—मनोवृत्तिर्मनोजन्यम्, ओघ इन्द्रियानिन्द्रियव्यापारानाहितातिशयक्षयोपसिद्धान्तेऽभिधानात्, सकृत्सम्बन्धे बोधाऽननुभवेन तस्याश्च युक्तियुक्तत्वात्, असङ्ख्येयैश्च समयैः क्षयोपशमपुष्टेरेव सिद्धेः, तथा च योग्येन्द्रियविषयसम्बन्धानकामेनापि क्षयोपशमहेतुत्वेनानुगमय्य प्रत्यक्षहेतुतां वदता विलक्षणक्षयोपशमत्वेनैव हेतुतायां किं लाघवं नोद्वीक्ष्यते ? । मतिस्मृत्यादीनां किञ्चिदंशेन भेदेऽपि मतित्वेनाविशिष्टत्वमतोऽनर्थान्तरत्वमेकार्थवाचकत्वलक्षणं तत्तच्छब्दानाम्, अतो मतिविशेषेभ्यो मतिज्ञानादिभ्यो मतिविशेषस्याभिनिबोधिकस्य वैलक्षण्यप्रतिपत्तये योग्यसाक्षात्काररूपतया तदुपवर्णनं यौगिकार्थमवलम्ब्य, रूढ्यर्थमवलम्ब्य त्वनुमानादिपरोक्षज्ञानेऽप्याभिनिबोधिकशब्दप्रवृत्तिरिति बोध्यम् ॥ १३ ॥

चतुर्दशसूत्रावतरणिकामाह **लक्षणमुक्त्वा विधानमाहेति** यद्यपीन्द्रियानिन्द्रियनिबन्धनस्य मतिज्ञानस्येन्द्रियानिन्द्रियव्यवहितात्मव्यापारसम्पाद्यत्वाद्वस्तुतः परोक्षत्वमेव, तत्रेन्द्रियपदेन द्रव्येन्द्रियमेव ग्राह्यम्, न तु भावेन्द्रियमुपयोगलक्षणम्, तस्य साक्षादात्मव्यापारत्वेन व्यवधानाऽयोगात्, तथाऽप्यपामरसाधारणलौकिकप्रवृत्तिनिवृत्तिलक्षणव्यवहारफलकत्वेन स्वविषये देशतो विशदत्वेन च मन्दमतीनुद्दिश्यैव प्रत्यक्षत्वमिति पक्षे सन्निहितार्थविषयकत्वेनैकमपि प्रत्यक्षमिन्द्रियभेदेनैव भिन्नभिन्नव्यपदेशं लभत इत्याशयेनाह **इन्द्रियनिमित्तं स्पर्शनादिभेदेन पञ्चविधमिति** । स्पर्शनेन्द्रियत्वाद्यसाधारणधर्मावच्छिन्नस्पर्शनादीन्द्रियनिष्ठकारणतानिरूपितसांव्यवहारिकप्रत्यक्षत्वव्याप्यधर्मावच्छिन्नकार्यताशालित्वमिन्द्रियनिमित्तत्वम्, सांव्यवहारिकप्रत्यक्षत्वव्याप्यधर्मश्च स्पार्शनत्वरासनत्वादिरिति तद्धर्मावच्छिन्नकार्यताशालित्वं स्पार्शनरासनादौ, तथा च कार्यभेदस्य कारणभेदायत्तत्वेन कारणीभूतस्पर्शनादीन्द्रियाणां पञ्चभेदत्वेन तत्प्रयोज्यस्पार्शनादिप्रत्यक्षात्मकार्यभेदोऽपि पञ्चविध एवेति भावः । **अनिन्द्रियनिमित्तमिति**—इन्द्रियादन्यदनिन्द्रियं मन ओघश्चेति तन्निमित्तं यस्य मतिज्ञानस्य तदनिन्द्रियनिमित्तम्, अत एवाह **द्विविधमिति** । द्वैविध्यमेवाह—**मनोवृत्तिरित्यादिना** । ननु सुखादिसाक्षात्कारः सकरणकः प्रत्यक्षत्वात् चाक्षुषादिप्रत्यक्षवदित्यनेन सकरणकत्वे सिद्धे मनः इन्द्रियं सुखादिसाक्षात्कारकरणत्वात्, यद्यत्प्रत्यक्षकरणं तत्तदिन्द्रियं यथा चक्षुरादि, सुखादिसाक्षात्कारकरणं च मनः, तस्मादिन्द्रियमित्यनुमानेन मनस इन्द्रियत्वे सिद्धे कथमनिन्द्रियत्वमिति चेत्, मैवम्, मनोऽनिन्द्रियं अनियतार्थविषयकज्ञानोत्पादकत्वात् आत्मवत्, यद्वा मनोऽनिन्द्रियं रूपग्रहणादावस्वतन्त्रत्वात् असम्पूर्णत्वाद्वा अनुदरकन्यावदित्यनेन मन-

पशमश्च । यथा वल्ल्यादीनां नीव्राद्यभिसर्पणेष्टसाधनताज्ञानम् । अत्रैकेन्द्रियादीनामसंज्ञिपञ्चेन्द्रियपर्यन्तानाममनस्कानामिन्द्रियनिमित्तमेव मतिज्ञानम् । समनस्कानां चक्षुरादिव्यापाराभावे स्मृतिज्ञानमनिन्द्रियनिमित्तम्, जाग्रदवस्थायां स्पर्शनादिना मनसा चोपयुक्तस्येन्द्रियानिन्द्रियनिमित्तम् । ओघज्ञानं चैकेन्द्रियादीनामिति विभागं वदन्ति तांत्रिकाः । तत्रेन्द्रियजन्यतावच्छेदकमैन्द्रियकत्वं, मनोजन्यतावच्छेदकं दीर्घकालिकत्वम् , उभयजन्यता

सोऽनिन्द्रियत्वसिद्धेः, अनिन्द्रियनिमित्तत्वञ्चानिन्द्रियनिष्ठकारणतानिरूपितसांव्यवहारिकप्रत्यक्षत्वव्याप्यधर्मविशेषावच्छिन्नकार्यताशालित्वम्, सांव्यवहारिकप्रत्यक्षत्वव्याप्यधर्मविशेषो मानसत्वमोघज्ञानत्वञ्चेति तद्धर्मावच्छिन्नकार्यताशालि मानसप्रत्यक्षमोघज्ञानञ्चेति तद्द्वयमनिन्द्रियनिमित्तम्, न चोक्तलक्षणं चाक्षुषादिप्रत्यक्षेऽतिव्याप्तं, सांव्यवहारिकप्रत्यक्षज्ञानमात्रे मनसः कारणत्वेन तस्यापि मनोरूपानिन्द्रियजन्यत्वादिति वाच्यम्, यतस्तत्र मनोनिरूपितकार्यता सांव्यवहारिकज्ञानत्वात्मकसामान्यधर्मावच्छिन्नैव, न तु सांव्यवहारिकप्रत्यक्षत्वव्याप्यधर्मावच्छिन्नेति । इन्द्रियादिरूपपरनिमित्तकत्वान्मतिज्ञानस्य परोक्षत्वमिति नैश्चयिकपक्षे त्वपेक्षमाणानामर्थालोकादीनां साधारणकारणत्वान्न तैः तत्तत्कार्यभेदः किन्तु तत्तदसाधारणकारणैरेवेत्यसाधारणकारणीभूततत्तदिन्द्रियभेदेनेन्द्रियनिमित्तमतिज्ञानस्य यो भेदस्तत्प्रतिपादनायाह **इन्द्रियनिमित्तं स्पर्शनादिभेदेन पञ्चविधमिति । यथा वल्ल्यादीनां नीव्राद्यभिसर्पणेष्टसाधनताज्ञानमिति**–उक्तञ्च विशेषावश्यकभाष्ये "पंचण्हमूहसण्णा" ॥ ५२३ ॥ इति । तस्य च पञ्चानां पृथिव्यप्तेजोवायुवनस्पतीनामूहसंज्ञा वृत्त्यारोहणाद्यभिप्रायरूपौघसंज्ञा भवतीत्यर्थः । नात्र स्पर्शनेन्द्रियं निमित्तं, न वा मनः, किन्तु केवलं मत्यज्ञानावरणकर्मक्षयोपशम एवेति । एतदभिप्रायेणैव द्रव्यलोकप्रकाशेऽपि "ओघज्ञानमविभक्तरूपं यदपि लक्ष्यते । वल्ल्यादीनां वृत्तिनीव्राद्यभिसर्पणलक्षणम् ॥ २८ ॥ तदप्यनिन्द्रियनिमित्तकमेव प्रकीर्त्यते । हेतुभावं भजन्तीह, नाक्षाणि न मनोऽपि यत् ॥ २९ ॥ मत्यज्ञानावरणीयक्षयोपशम एव हि । केवलं हेतुतामोघज्ञानेऽस्मिन्नश्नुते च यत् ॥ ३० ॥" इत्युक्तमिति । उक्तसूत्रे इन्द्रियं चानिन्द्रियं च इन्द्रियानिन्द्रिये च इन्द्रियानिन्द्रियाणि, तानि निमित्तं यस्य तदिन्द्रियाऽनिन्द्रियनिमित्तमित्येकशेषसमासाल्लभ्यं मतिज्ञानत्रैविध्यं विवृणोति–**अत्रैकेन्द्रियादीनामित्यादिना । जाग्रदवस्थायां स्पर्शनादिना मनसा चोपयुक्तस्येन्द्रियाऽनिन्द्रियनिमित्तमिति**–ननु एतज्ज्ञानं किं स्पार्शनादिज्ञानमिति व्यपदेश्यं किं वा मानसज्ञानमिति चेत्, उच्यते, स्पृशत्युष्णमिदं शीतं चेति वृहट्टीकोक्तेः स्पार्शनादिज्ञानमित्येव व्यपदेश्यम्, यतस्तत्र स्पर्शनादीन्द्रियाणामेव स्पर्शनादीन्द्रियत्वादिनाऽसाधारणकारणत्वादिति । संज्ञिपञ्चेन्द्रियाणां या दीर्घकालीनार्थचिन्तनाऽनुकूला दीर्घकालिकसंज्ञा सा मनोज्ञानावरणकर्मक्षयोपशमजनितमानसिकज्ञानरूपैवेति तत्र मन एवासाधारणकारणमिति तज्जन्यतावच्छेदकं किमित्याशङ्कायामाह–**मनोजन्यतावच्छेदकं दीर्घकालिकत्वमिति । उभयजन्यतेति**–

त्वर्थसमाजात्, दीर्घकालिकत्वस्यावध्यादिव्यावृत्तस्यैन्द्रियकत्वव्याप्यत्वाच्च न सङ्करः, ओघजन्यतावच्छेदकं चाव्यक्तज्ञानत्वम्, अव्यक्तत्वं चोक्तत्रयान्यत्वं जातिविशेषो वा, येनौघसंज्ञायाः सर्वप्राणिसाधारण्यं स्यादिति विवेकः ॥ १४ ॥ लक्षणविधानाभ्यामुक्तस्य मतिज्ञानस्य भेदानाह—

## सूत्रम् अवग्रहेहापायधारणाः ॥ १ ॥ १५ ॥

(भाष्यम्) तदेतन्मतिज्ञानमुभयनिमित्तमप्येकशश्चतुर्विधं भवति । तद्यथा—अवग्रह ईहाऽपायो धारणा चेति । तत्राऽव्यक्तं यथास्वमिन्द्रियैर्विषयाणामालोचनावधारणमवग्रहः । अवग्रहो ग्रहणमालोचनमवधारणमित्यनर्थान्तरम् ॥ अवगृहीते विषयार्थैकदेशाच्छेषानुगमनं निश्चयविशेषजिज्ञासा चेष्टा ईहा । ईहा ऊहः तर्कः परीक्षा विचारणा जिज्ञासेत्यनर्थान्तरम् ॥ अवगृहीते विषये सम्यगसम्यगिति गुणदोषविचारणाध्यवसायापनोदोऽपायः । अपायोऽपगमः अपनोदः अपव्याधः अपेतमपगतमपविद्धमपनुत्तमित्यनर्थान्तरम् ॥ धारणा प्रतिपत्तिर्यथास्वं मत्यवस्थानमवधारणं च । धारणा प्रतिपत्तिरवधारणमवस्थानं निश्चयोऽवगमः अवबोध इत्यनर्थान्तरम् ॥

(यशो० टीका) एकश इति एकैकस्य, स्पर्शनेन्द्रियनिमित्तं चतुर्विधं यावन्मनोनिमित्तं चतुर्विधमित्येवं वाच्यमित्यर्थः । कास्ताश्चतस्रो विधा इत्याह—अवग्रह ईहाऽपायो धारणेति । स्पर्शनास्पर्शनादीन्द्रियमनोरूपानिन्द्रियात्मकोभयजन्यतेत्यर्थः । **अर्थसमाजादिति**—स्वघटकप्रत्येकधर्मावच्छिन्नसामग्रीसमुदायादित्यर्थः । **न सङ्कर इति**—अवधित्वाभाववति मानसे दीर्घकालिके दीर्घकालिकत्वं वर्तते, दीर्घकालिकत्वाभाववत्यवधिविशेषेऽवधित्वं वर्तते, उभयोश्च दीर्घकालिकेऽवधिज्ञाने सद्भावात्साङ्कर्यमिति, न, मनोजन्यतावच्छेदकं यद् दीर्घकालिकत्वं तदवध्यादिव्यावृत्तमेव स्वीक्रियत इत्यवधित्वसामानाधिकरण्यस्य तत्राभावात्, इन्द्रियमनोभ्यां जन्ये ज्ञाने यद्दीर्घकालिकत्वं तदैन्द्रियकत्वव्याप्यमेव स्वीक्रियत इति तस्यैन्द्रियकत्वाभावसामानाधिकरण्याभावान्नैन्द्रियकत्वेनापि साङ्कर्यमित्यर्थः ॥ १४ ॥

पञ्चदशसूत्रस्यावतरणिकामाह—**लक्षणविधानाभ्यामुक्तस्येत्यादिना** । **यावन्मनोनिमित्तं चतुर्विधमिति**—अत्र यावत्पदाद्रसनेन्द्रियनिमित्तं चतुर्विधं घ्राणेन्द्रियनिमित्तं चतुर्विधं चक्षुरिन्द्रियनिमित्तं चतुर्विधं श्रोत्रेन्द्रियनिमित्तं चतुर्विधमिति ग्राह्यम्, कारणायत्तजन्मनां कारणभेदेनैव भेद इत्यवग्रहेहादिचतुर्णां कार्याणां कारणानि स्पर्शनरसनाघ्राणचक्षुश्श्रोत्रेन्द्रियमनोलक्षणानि षड्विधानीति तत्प्रत्येककार्यरूपाणां चतुर्णां षट्केन गुणने चतुर्विंशतिर्भेदाः, तत्रावग्रहो व्यञ्जनावग्रहार्थावग्रहभेदेन द्विविधः, तत्राद्यस्य व्यञ्जनावग्रहस्य चक्षुर्मनोव्यतिरिक्तस्पर्शनरसनाघ्राणश्रोत्रेन्द्रियाण्येव कारणानीति तद्भेदेन तत्कार्यभूतव्यञ्जनावग्रहाणां चातुर्विध्यमिति तेषां तत्र प्रक्षेपे मतिज्ञानस्याष्टाविंशतिर्भेदाः । तेषां भेदानां बह्वबह्वादिद्वादशभेदैर्गुणने मतिज्ञानस्य षट्त्रिंशदधिकानि त्रीणि शतानि भेदाः, एते च भेदाश्श्रुतनिश्रितमतिज्ञानस्यैवेति तत्राश्रुतनिश्रितौत्पत्तिकबुद्ध्यादिभेदचतुष्टयप्रक्षेपे मतिज्ञानस्य चत्वारिंशदधिकात्रिशतानि भेदाः । तदेतन्मतिज्ञानमिन्द्रियानिन्द्रियनिमित्तमप्येकशश्चतुर्विधं भवतीति सामान्योक्तिजनितसामान्यज्ञानप्रयोज्यविशेषजिज्ञासाविषयीभूतान् भेदानाह—अवग्रहईहाऽपायो धारणा चेतीति । अथैषामवग्रहादीनां पार्थक्ये मानाभाव इति चेत्,

ऽवग्रहः, स्पर्शनेहा, स्पर्शनाऽवा(पा)यः, स्पर्शनधारणेति । एवं सर्वत्र दृश्यं यावन्मनोधारणेति । अवग्रहादीनां स्वरूपमाह तत्राव्यक्तमित्यादिना, तत्र चतुर्ष्ववग्रहादिषु मध्येऽव्यक्तमस्फुटम्, इन्द्रियैः स्पर्शनादिभिः, यथास्वं यथाशब्दो वीप्सायाम्, ये ये आत्मीयास्तेषामित्यर्थः । विषयाणां स्पर्शादीनाम्, आलोचनमेवम्, यतः 'अवगृह्णामि' 'ईहे' 'अवैमि' 'स्थिरीकरोमि' इति प्रत्यया एव प्रतिप्राण्यनुभवसिद्धा अवग्रहादिभेदे प्रमाणम्, एतेनावग्रहस्यैवेहादयः पर्याया एवेत्यपि निरस्तम्, पृथग्भेदवाचकत्वात् तेषामिति । नन्वेवं तर्ह्येषामेवमनुक्रमोपन्यासे को हेतुरिति चेत् क्रमोत्पादिष्णुना हि कारणेन स्वकार्यमपि क्रमेणैव जनयितव्यमित्यतः क्रमिक एव हेतुरिति जानीहि, तथाहि—अवगृहीतमीह्यते—विचार्यते नानवगृहीतम्, अनवगृहीते वस्तुनि धर्म्यऽसिद्धौ निरालम्बनविचाराऽयोगात्, तेनादावेवावग्रहो जायते, तदन्वीहा, ततोऽपायः, यत ईहितमपेयते निश्चीयते नानीहितम्, अपायस्य निश्चयरूपत्वात्, तस्य च विचारपूर्वकत्वात्, न च विचारं विनाऽपि कारणमहिम्ना तदुत्पादो युक्तः, विचारस्यापि तत्कारणत्वेन तद्विरहे कारणमहिम्न एवाऽसिद्धेः, तेनापायात्पूर्वमीहा प्रवर्त्तते, अपेतं धार्यते, नानपेतमपायेनानिश्चितम्, अन्यथा सन्देहादपि धारणाप्रसङ्गात्, ततश्च धारणायाः पूर्वमपायः प्रवर्त्तते इत्येवमन्वयव्यतिरेकमूलकात् तेषामवग्रहादिचतुर्णां क्रमनिबन्धनकार्यकारणभावादेव क्रमेणोत्पादः, अत एव नोत्क्रमेण व्यतिक्रमेण वोत्पादः, न चैषां मध्येऽन्यतमस्याप्यभावे वस्तुस्वभावावबोधः, ततः क्रमेण सर्वेऽप्यमी एष्टव्याः, न त्वेको द्वौ त्रयो वा, युगपद्वा नैते जायन्ते । नन्वभ्यस्ते पुरुषेऽवग्रहेहाद्वयमन्तरेणैवायं पुरुष इति निश्चीयते, पूर्वकालीनानुभवविषये चोद्बुद्धसंस्कारादवग्रहेहाऽपायरूपत्रयं विनैव स इति स्मृतिरूपधारणा समुपजायते इति कथमवग्रहाद्यन्यतराभावे वस्तुस्वभावावबोधो नेति सङ्गतमिति चेत्, उच्यते, शतपत्रवेधन्यायेन कालातिसौक्ष्म्यादेव क्रमिकावग्रहाद्यनुपलक्षणमिति, न चैतावता तदपलापः कर्तुं शक्यः, अन्यथा मयैतानि पद्मपत्राणि युगपद्विद्धानीत्यनुभवात् क्रमिकोपजातपद्मपत्रशतच्छेदस्याप्यपलापस्स्यात्, यथा च तत्र कालातिसौक्ष्म्यात् क्रमिकच्छेदानुपलक्षणं तथाऽभ्यासदशापन्नस्य शीघ्रं शीघ्रतरं जायमानानामवग्रहादीनां कालसौक्ष्म्यादनुपलक्षणम् । यद्वा दीर्घशुष्कशष्कुलीभक्षणकाले तद्रूपदर्शनतज्जनितशब्दश्रवणतद्गन्धाघ्राणतद्रसास्वादनतत्स्पर्शोपलब्धिषु क्रमिकजायमानासु रूपशब्दगन्धरसस्पर्शान् युगपत्प्रत्येमीति यौगपद्याभिमानम्, आत्मन एकदैकोपयोगस्वभावत्वान्मनसः सर्वेन्द्रियैस्सह युगपदसम्बन्धात्, मनसश्चाशुसञ्चारित्वेनैव तेन तेनेन्द्रियेण सह शीघ्रं सम्बन्धात्तेनाशुकार्यार्जनात् । अत एव "मनसः युगपज्ज्ञानानुत्पत्तिर्हि लिङ्गम्" इति वैशेषिकसूत्रेऽप्युक्तं सङ्गच्छते । यथा चात्र कालभेदस्य दुर्लक्ष्यत्वात् कारणक्रमजनितोक्तोपलब्धिक्रमस्यानुपलक्षणेऽपि प्रमाणसिद्धत्वात् नैवापलापः कर्तुं शक्यते तथा प्रकृतेऽपि । एतेन भवत्वेतद् मनसोऽणुत्वपक्षे, भवदभ्युपगते तनुव्यापकत्वपक्षे तु नैवं सङ्गतम्, पञ्चेन्द्रियैस्सह मनसो युगपत्संयोगसद्भावादित्यपि निरस्तम्, अणुत्वपक्षेऽपि मनसो रसनेन्द्रियसंयोगकाले त्वक्संयोगस्य दुर्निवारत्वात् युगपदुभयज्ञानोत्पत्तेरनि-

नावधारणमालोचनाऽपरपर्यायं ज्ञानम्, अवग्रहः नामादिसंस्पर्शरहितं सामान्यमात्रज्ञानमवग्रह इत्यर्थः। तत्पर्यायानाह—अवग्रह इत्यादि । अयमवग्रहो द्वेधा—व्यञ्जनावग्रहार्थावग्रहभेदात् । तत्र व्यज्यते प्रकटीक्रियतेऽर्थोऽनेनेति व्यञ्जनमुपकरणेन्द्रियं, तेन सह शब्दादिपरिणतद्रव्यसम्बन्धः, शब्दादिपरिणतद्रव्याणि च । ततो व्यञ्जनेन व्यञ्जनस्यावग्रहो व्यञ्जनावग्रह इति मध्यमपदलोपी समासः । शब्दादिपरिणतद्रव्याणामर्थत्वात्कथं व्यञ्जनत्वमिति तु नाशङ्कनीयम्, चरमसमयप्रविष्टानामेवार्थत्वात्, मल्लकप्रतिबोधकदृष्टा-

वार्थत्वात्, अदृष्टवैचित्र्यमहिम्नैव तद्वारणे चैकदैकेन्द्रियजन्यज्ञानावरणीयकर्मक्षयोपशमस्यैकस्यैव सद्भावेन ज्ञानोपयोगक्रमादेवावग्रहादिज्ञानक्रम इत्यपि किन्न मन्यसे ॥ **नामादिसंस्पर्शरहितमिति**—अत्रादिपदेन जातिक्रियागुणद्रव्यादि ग्राह्यम्, तथा च नामजात्यादिप्रकारेणार्थावगाहितारहितमित्यर्थः। **सामान्यमात्रज्ञानमिति** सामान्यमात्रेणाव्यक्तस्वरूपेण वस्तुनो ग्रहणमित्यर्थः, अत्र मात्रपदेन विशेषावभासनस्य निषेधः कृतः, तथा च विशेषानवगाहित्वे सति सामान्यस्वरूपावगाहिज्ञानमिति भावः, अत एव तज्ज्ञानं निष्प्रकारकम्, विशेषावभासिज्ञानस्यैव सप्रकारकत्वनियमात् । एतच्च लक्षणं मुख्यस्य नैश्चयिकावग्रहस्यैव कृतम् अत एव "उग्गहे इक्कसमये" इति नन्दिसूत्रवचनात्तस्यैकसमयकालमानमपि सङ्गच्छते, न तु व्यावहारिकावग्रहस्य, अपायस्यापि तदुत्तरेहापायाद्यपेक्षयौपचारिकावग्रहरूपत्वेन भाविविशेषापेक्षसामान्यविषयकस्य व्यवहारनयेनाभ्युपगमात्तत्र सामान्यविशिष्टविशेषमानेन सप्रकारकेऽन्तर्मुहूर्तकालीनेऽभिहितलक्षणसङ्घटनाऽभावात् । ननूत्तरोत्तरेहापायाद्यपेक्षयौपचारिकावग्रहः किमवधिक इति चेत्, उच्यते, यस्माद्विशेषात्प्रमातुर्जिज्ञासा निवर्त्तते तावदवधिक इति जानीहि । व्यञ्जनार्थात्मकविषयद्वैविध्यादवग्रहो द्विविध इत्याह—**अयमवग्रहो द्वेधेति** । योगलभ्यव्यञ्जनशब्दवाच्यार्थमाह **तत्रेत्यादिना** । **उपकरणेन्द्रियमिति** छेद्यच्छेदने तीक्ष्णखड्गधारेव शब्दादिविषयग्रहणे समर्थं, यस्मिन्नुपहते निर्वृत्तीन्द्रियसद्भावेऽपि विषयं न गृह्णातीत्येवं लक्षणं द्रव्येन्द्रियद्वितीयभेदरूपमुपकरणेन्द्रियमित्यर्थः । **व्यञ्जनेन व्यञ्जनस्यावग्रहो व्यञ्जनावग्रह इति**—उपकरणेन्द्रियलक्षणेन व्यञ्जनेन शब्दादिपरिणतद्रव्यसम्बन्धस्वरूपस्य व्यञ्जनस्यावग्रहो व्यञ्जनावग्रहः । अथवा व्यञ्जनेनोपकरणेन्द्रियेण व्यञ्जनानां शब्दादिपरिणतद्रव्याणामवग्रहः परिच्छेदो व्यञ्जनावग्रह इत्यर्थः । उभयत्राप्येकस्य व्यञ्जनशब्दस्य लोपं कृत्वा समास इति । अथ नैकसमयप्रविष्टा यावत्सङ्ख्यातसमयप्रविष्टाश्शब्दपुद्गलाश्श्रोत्रेन्द्रियेण सम्बद्ध्यमाना अप्यऽर्थावग्रहलक्षणविज्ञानग्राह्या भवन्ति किन्त्वसङ्ख्येयसमयप्रविष्टा एव । अयम्भावः श्रोत्रेन्द्रियेण सह शब्दपरिणतपुद्गलानां प्रतिसमयं यस्सम्बन्धस्तत्कृतक्षयोपशमसहकृताश्चरमसमयप्रविष्टा एव शब्दपुद्गला अर्थावग्रहोत्पादने समर्था भवन्तीति तेषामेवार्थाऽवग्रहविषयत्वादर्थत्वं, तत्पूर्ववर्त्तिनां तु सहकारिविधया तज्जनकत्वाद्व्यञ्जनत्वमित्याशयेनोत्तरयति—**चरमसमयप्रविष्टानामेवार्थत्वादिति** । **मल्लकप्रतिबोधकदृ-**

न्ताभ्यां सूत्रे तथैव प्रतीतेः । अथ व्यञ्जनावग्रहो न ज्ञानं बधिरादीनामिव तत्काले स्वसंवेदनेनाप्रतिसन्धानादिति चेत्, न, दोषाभावे ज्ञानसामग्र्यां सत्यामितरासामग्र्ये व्यञ्जनावग्रहाख्यज्ञानोत्पत्तेरवर्जनीयत्वात्, अन्ते ज्ञानदर्शनात्पूर्वमपि तदनुमीयत इत्यस्याप्ययमेवार्थः । एकतेजोऽवयवप्रकाशवच्च सूक्ष्मत्वान्नोपलभ्यते, ज्ञानं चेदव्यक्तं कथमिति तु सुप्तमत्तादिज्ञानदृष्टान्तेन समर्थनीयम्,

ष्टान्ताभ्यामिति–एतत्स्वरूपं नन्दिसूत्रे "वंजणोग्गहस्स परूवणां करिस्सामि पडिबोहकादिट्ठंतेण य इत्यारभ्य जाहे तं वंजणं पूरियं होइ, ताहे हुंति करेइ, नो चेव णं जाणइ के वेस सद्दाइ" इत्यन्तग्रन्थोक्तं विशेषार्थिना तत एवावसेयं, ग्रन्थगौरवभीत्येह तन्न विविच्यते । बधिरादीनामिवेति– एतच्चोपलक्षणम्, तेनोपहतघ्राणेन्द्रियादीनामपि ग्रहणं कर्त्तव्यम् । "तदंते तत्तो च्चिय उवलंभाओ तओ नाणं ॥ १९५ ॥" इति महाभाष्यवचनमनुसृत्याह अन्ते ज्ञानदर्शनात् पूर्वमपि तदनुमीयते इति–व्यञ्जनावग्रहसमयो ज्ञानवान् तदन्त्यसमये ज्ञानोत्पत्तेः, यदन्त्यसमये ज्ञानमुत्पद्यते स कालो ज्ञानवान्, यथेहाऽऽद्यसमयः, यदि च कारणसाम्राज्येऽपि प्राक्समयेषु ज्ञानोत्पत्तिर्न स्यात् तर्ह्यन्त्यसमयेऽपि न स्यात्, अविशेषात्, तथा च तस्यामप्यवस्थायामव्यक्ता ज्ञानमात्रा प्रथमादिसमयेऽंशेनाऽन्त्यसमये तद्भवनाऽन्यथानुपपत्त्याऽभ्युपगन्तव्या, युक्तश्चैतत्, निश्चयतोऽविकलकारणमेव कार्योत्पत्तिव्याप्यं, अविकलं च कारणं ज्ञाने उपयोगेन्द्रियमेव, तच्च व्यञ्जनावग्रहकाले लब्धसत्ताकं कथं न स्वकार्यं ज्ञानं जनयेदिति ? नन्वेवमनुपहतेन्द्रियसम्बन्धिव्यञ्जनावग्रहकाले ज्ञानमस्ति चेत्तर्हि कथं नोपलभ्यत इत्याशङ्कानिवृत्त्यर्थं तत्र सदृष्टान्तं हेतुमाह–एकतेजोऽवयवप्रकाशवच्च सूक्ष्मत्वान्नोपलभ्यते इति । एतेन प्रकाशस्वभावे ज्ञानेऽव्यक्तता नोपपद्यते, न हि प्रकाशस्वभावेऽव्यक्तता क्वचिदपि दृष्टेत्याशङ्काऽपि निरस्ता, यतः प्रचुरतरतेजोऽवयवाः प्रकाशस्वभावा व्यक्ततया दृष्टिगोचरा अपि यथैको तेजोऽवयवः प्रकाशस्वभावोऽप्यतिसूक्ष्मतया न दृष्टिगोचर इति तत्राव्यक्ततावत्प्रकृतेऽपि व्यञ्जनावग्रहेऽल्पज्ञानस्वभावेऽव्यक्तता भावनीयेति । उक्तञ्च विशेषावश्यकभाष्ये "तक्कालम्मि वि नाणं तत्थत्थि तणुं ति तो तमव्वत्तं ॥ १९६ ॥" इति । यच्च बधिरादीनामिवेति दृष्टान्तोपन्यसनं तदप्यसंगतं तेषां व्यञ्जनव्यञ्जनपूर्त्तिघटकशक्त्यभावेन ज्ञानकारणत्वाभावादव्यक्तस्यापि च ज्ञानस्याभावात् । उक्तञ्च–" बहिराईणं पुण सो अन्नाणं तदुभयाभावा ।१९६।" इति । विरोधमाशङ्कते वादी–ज्ञानं चेदव्यक्तं कथमितीति । तदुत्तरयति–सुप्तमत्तादिज्ञानदृष्टान्तेन समर्थनीयमिति । ननु सुप्तमत्तमूर्च्छितानामव्यक्तं ज्ञानमेव नैव सिद्धं, तज्ज्ञानस्य स्वसंविदितरूपत्वादिति कथं तद्दृष्टान्तेन ज्ञानमव्यक्तं सिद्धं स्यादिति चेन्मैवम्, यतस्सुप्तादयस्स्वयमपि तदाऽऽत्मीयविज्ञानं नैव संवेदयन्ति अतिसूक्ष्मत्वात् । नन्वेवंविधसुप्तमत्तादिविज्ञानं तत्र मानाभावेन दुःश्रद्धेयमिति वाच्यम्, सुप्तमत्ताद्यवस्थायां केचित् प्रभाषन्ते नृत्यन्ति अङ्गाङ्गादिकं च कुर्वन्ति जृम्भन्ते कण्डूयन्ते च, या प्राऽऽत्मीयक्रिया

न च तदपि दुःश्रद्धानम्, जाग्रदपि हि दिवसमध्येऽतिप्रजन्त्यध्यवसायस्थानान्यसङ्ख्येयानि न सर्वाणि जानाति, किं पुनः सुप्तादिरित्यस्यार्थस्य सुश्रद्धानत्वात्, तस्मात्तन्तुसम्बन्धसमयेषु पटेष्विव (पट इव) सर्वेष्ववग्रहसमयेषु ज्ञानमविशेषेणान्त्यतन्तुसम्बन्धसमये महापट इव व्यञ्जनावग्रहान्त्यसमये त्वर्थावग्रह इति प्रतिपत्तव्यम्। स चानिर्देश्यसामान्यमात्रग्राही,

सा सा मतिपूर्विकैव दृश्यत इति प्रभाषणादिका क्रिया मतिपूर्विकैवाभ्युपगन्तव्येति धूमेन वह्नेरिव वचनचेष्टादिकार्यलिङ्गेनैव सुप्तमत्तादिज्ञानरूपकारणस्यानुमीयमानत्वेन न तज्ज्ञानं दुःश्रद्धेयमिति। अत एव "सुखमहमस्वाप्सं न किञ्चिदवेदिषं" इति सुप्तोत्थितपुरुषीयानुभवविरोधो न भवति, तस्यापि न किञ्चित्पदोपरागेणाव्यक्तज्ञानावगाहित्वात्। सुप्तोत्थितस्य सुखस्मरणदर्शनात् स्मरणस्य चानुभवपूर्वकत्वात्सुषुप्तिकालेऽपि सूक्ष्मसुखानुभवस्य सिद्धेश्च। नन्वात्मीयमपि चेष्टितं किं किञ्चिद् न जानाति? येन सुप्तादीनां स्वचेष्टितासंवेदनमुच्यते? इति चेत्, उच्यते, जाग्रदपि छद्मस्थः स्वहृदयगोचरं सर्वं ज्ञानावरणवैचित्र्यान्नैव जानीते, आस्तां पुनः सुप्तादिः, यत एकस्यात्मनः सूक्ष्माध्यवसायस्थानान्येकेनाप्यन्तर्मुहूर्तेनाऽसङ्ख्येयानि अतिक्रामन्ति, किं पुनः सर्वेणापि दिवसेन, न चैतानि छद्मस्थः सर्वाण्यप्यवगच्छन्ति, उक्तश्च "जग्गन्तो वि न जाणइ, छउमत्थो हियपगोचरं सव्वं। जं तज्झवसाणाइं, जमसंखेज्जाइं दिवसेण ॥ १९९ ॥" इति। न चैतावता तदभावः, केवलज्ञानगोचरत्वात्तेषाम्, यानि यानि केवलज्ञानगोचराणि तानि तान्यतीन्द्रियाण्यपि सन्त्येव, यथा धर्मास्तिकायादयः, यथा च केवलज्ञानिदृष्टत्वादव्यक्तान्यपि तानि श्रद्धेयानि तथाऽव्यक्तमपि व्यञ्जनावग्रहज्ञानं श्रद्धेयमित्याशयेनाह—**न च तदपि दुःश्रद्धानमित्यादि**। उपसंहारमाह—**तस्मादित्यादिना**। यद्याद्यद्वितीयसंयोगादियावदुपान्त्यसंयोगपर्यन्तमंशतः पटोत्पत्तिर्नाभ्युपगम्येत तदा चरमतन्तुसंयोगेऽपि महापटोत्पत्तिर्न स्यात् खण्डपटोत्पत्तिक्रमेण महापटोत्पत्त्यभ्युपगमादित्याद्यद्वितीयाद्युपान्त्यान्ततत्तन्तुसंयोगसमयेष्वंशतः पट इवार्थावग्रहात्पूर्वसमयेष्वपि ज्ञानं भवति, नैकस्मिंश्चरमसमय एव, यतो यदि प्रथमसमयादिष्वव्यक्तं ज्ञानं न स्यात्तर्हि चरमसमयेऽपि न स्यात्, अस्ति च चरमसमये ज्ञानम्, तस्मात्तत्पूर्वसमयेष्वपि तदभ्युपगन्तव्यम्, तदेव च ज्ञानमतीवास्फुटं व्यञ्जनावग्रह इति व्यपदिश्यते, अन्त्यतन्तुसंयोगसमये महापट इव व्यञ्जनावग्रहान्त्यसमये तु तदेव ज्ञानं किञ्चित्स्फुटतरावस्थामापन्नमर्थावग्रह इत्युच्यते, अतो यद्यपि सुप्तमत्तमूर्च्छितादिज्ञानस्येव व्यञ्जनावग्रहज्ञानस्यानुमापकं व्यक्तं तथाविधं लिङ्गं न विद्यते तथापि यथोक्तयुक्तितः सुप्तादिज्ञानमिवाव्यक्तं व्यञ्जनावग्रहज्ञानमस्तीत्यभ्युपगन्तव्यमिति भावः। सः—अर्थावग्रहः, **अनिर्देश्यसामान्यमात्रग्राहीति** नामजातिक्रियागुणद्रव्यप्रकारेण केनापि शब्देन निर्देष्टुमशक्यं यत्सामान्यं तन्मात्रग्राहीत्यर्थः। अत्र मात्रपदेन तत्र विशेषग्रहणं निषिद्धं, नैश्चयिकावग्रहस्यैकसामायिकत्वेन तत्र विशेषग्रहणायोगात्, विशेषग्रहणस्य चानेकसमयभावित्वादिति भावः।

यस्मात्किञ्चिदिदं ज्ञातमित्युल्लेखः, कथं तर्हि सूत्रे तेन शब्द इत्यवगृहीत इत्युक्तमिति चेत्, सत्यं, वक्त्रा तथोक्तत्वात्, अशब्दव्यावृत्तशब्दग्रहे त्वपायत्वस्य दुर्वारत्वात्, स्तोकविशेषग्राहित्वस्योत्तरोत्तरापेक्षयाऽव्यवस्थितत्वात्। न च स्तोकत्वाच्छब्दोऽयमित्याकार आद्योऽर्थावग्रह इति युज्यतेऽपि,

उक्तलक्षणाऽवग्रहस्याकारमाह **यस्मात् किञ्चिदिदं ज्ञातमित्युल्लेख** इति। एवमुक्ते सति पर आशङ्कते **कथं तर्हीत्यादिना**। सूत्रे नन्द्यध्ययनसूत्रे, "से जहा नामए केइ पुरुसे अव्वत्तं सद्दं सुणेज्जा, तेण सद्देति उग्गहिए, न उण जाणइ के वेस सद्दाइत्ति" पाठेनेति शेषः। **वक्त्रा तथो**क्त**त्वादिति** तेन शब्द इत्यवगृहीत इत्यत्र शब्द इति प्रज्ञापकेन प्रोक्तम्, अथवा शब्दमात्रं रूपरसादिविशेषव्यावृत्त्याऽनवधारितत्वाच्छब्दतयाऽनिश्चितं गृह्णातीत्येतावतांशेन शब्दस्तेनावगृहीत इत्युक्तम्, न पुनः अशब्दव्यावृत्तशब्दोऽयमित्यवग्रहापेक्षयोक्तम्, एकसामयिकेऽर्थावग्रहेऽशब्दव्यावृत्त्यवभासाऽसम्भवात्, अशब्दव्यावृत्तिमत्तया शब्दोल्लेखस्यान्तर्मुहूर्त्तिकज्ञान एव भावादिति नास्यात्रोक्तेन शब्दाद्युल्लेखरहितसामान्यमात्रग्राहीत्यनेन सह विरोध इति भावः। नन्वशब्दव्यावृत्तश्शब्दोऽयमिति ग्रहाभ्युपगमे को दोष इत्याशङ्कायामाह **अशब्दव्यावृत्तशब्दग्रहे त्वपायत्वस्य दुर्वारत्वादिति**। तदा विशेषावभासित्वादपाय एवासौ स्यात्, न त्वर्थावग्रहः, विशेषग्राहितया निश्चयस्यापायरूपत्वात्, ततश्चार्थावग्रहेहाऽभाव एव स्यात्, न चैतद् दृष्टम्, इष्टं चेति भावः। ननु शब्दोऽयमिति निश्चयो विशेषावभासित्वादपाय एव स्यादित्युक्तं न युक्तम्, यतस्स शब्दमात्रस्तोकविशेषग्राहकत्वेनावग्रह एव, नापायः, कः पुनस्तर्ह्यपाय इति चेत्, उच्यते, तादृशावग्रहोत्तरकाले प्रमातुर्विशेषजिज्ञासायां शाङ्खेन शब्देन भवितव्यमित्याकारिका येहोत्पद्यते तदुत्तरं तया जायमानश्शाङ्ख एवायं शब्द इति निश्चयात्मक एव सः, अवग्रहापेक्षयाऽधिकस्तोकविशेषग्राहकत्वादित्याशङ्कां मनसि धृत्वा तदुत्तरमाह—**स्तोकविशेषग्राहित्वस्योत्तरोत्तरापेक्षयाऽव्यवस्थितत्वादिति**। एवमभ्युपगमेऽपायज्ञानकथैव व्युच्छिन्ना स्यात्, शाङ्खोऽयं शब्द इत्यपायस्यापि तदुत्तरं किं मन्द्रो मधुरो वेति संशयोत्तरं जायमाना या मन्द्रेणानेन भवितव्यमित्याकारिकेहा तदुत्तरं तयोत्पन्नस्य मन्द्रोऽयं शब्दो न मधुर इत्यपायस्यापेक्षया स्तोकविशेषग्राहकत्वेनावग्रहरूपत्वात्, एवं मन्द्रोऽयमित्यस्याप्ययं शब्दो न मध्यमवृद्धपुरुषीयः, न वा स्त्रैणः, किन्तु तरुणपुरुषीय इत्यपायापेक्षया स्तोकविशेषग्राहकत्वेनावग्रहरूपत्वं स्यादित्येवमुत्तरोत्तरविशेषग्राहिणामपि ज्ञानानां तदुत्तरोत्तरभेदापेक्षया स्तोकविशेषग्राहित्वादवग्रहरूपत्वापत्त्याऽपायत्वाभावो भावनीय इति भावः। न चेत्यस्य युज्यतेऽपीत्यनेनान्वयः। सद्भूतासद्भूतविशेषोपादानत्यागाभिमुखविचारात्मकेहया रूपादिव्यावृत्तिग्रहणे सत्येवाशब्दव्यावृत्तश्शब्दोऽयमिति निश्चयस्स्यात्, विशिष्टबुद्धिम्प्रति विशेषणज्ञानस्य कारणत्वात्, अन्यथा तस्याकस्मिकत्वं स्यात्, पूर्वोक्तेहाऽपि न हि सामान्यरूपतयाऽव्यक्तशब्दधर्मिण्यज्ञाते जायते,

ततोऽप्याद्यस्य तत्कारणेहाजननार्थमाश्रयणीयत्वात् । व्यञ्जनावग्रह एव तदर्थमास्थीयताम्, अव्यक्तेन तेनाव्यक्तसामान्यस्य ग्रहीतुं योग्यत्वादिति चेत्, न, अर्थो न व्यञ्जनम्, अन्यथा सङ्करप्रसङ्गादित्यस्योक्तप्रायत्वात् । किं चार्थावग्रहे शब्द इति स्तोकविशेषोल्लेखस्वीकारे एकस्मिन् समये उपयोगबाहुल्यं स्यात्, तथा हि–प्रथमं तावद् रूपादिभ्योऽव्यावृत्तमव्यक्तं शब्दसामान्यं ग्राह्यम्, ततस्तद्विशेषविषया तदपररूपादिविशेषविषया चेहा एतैरेतैश्च धर्मैः किमयं शब्द आहोश्विद् रूपादिरित्याकारा, तदनन्तरं च शब्दसामान्यविशेषाणां ग्रहणमन्येषां तु रूपादिविशेषाणां तत्राविद्यमानानां परिवर्जनमित्येवम्भूतेन क्रमेण हि तत्र निश्चयोत्पत्तिः स्यादिति । न च संशयव्यावृत्तिमात्रेण निश्चयत्वनिर्वाहः;

---

कत्वात्तस्या इति तदर्थं तत्पूर्ववर्तिनोऽव्यक्तशब्दसामान्यमात्रग्रहात्मकधर्मिज्ञानस्याभ्युपगमः कर्त्तव्यः, स एव चार्थावग्रह इत्यनायासेनैवास्मत्समीहितसिद्धिरित्याशयेन निषेधे हेतुमाह– **ततोऽप्याद्यस्य तत्कारणेहाजननार्थमाश्रयणीयत्वादिति ।** तत्कारणेति–शब्दोऽयमिति निश्चयकारणेत्यर्थः । **तदर्थं** इहाजननार्थम् । **तेन** व्यञ्जनावग्रहेण, अर्थावग्रहे अर्थो रूपादिभेदेनानिर्धारिताऽव्यक्तशब्दसामान्यात्मक एव भासते इत्यभ्युपगतं शास्त्रे, यदि च तस्मिन्नपि व्यञ्जनावग्रहेऽसावव्यक्तशब्दः प्रतिभासते इत्यभ्युपगम्यते भवता तदा व्यञ्जनावग्रहो न स्यात्, एवञ्च व्यञ्जनावग्रहकथैवोच्छिद्येत, यतस्तस्योपकरणेन्द्रियशब्दादिपरिणतद्रव्यसम्बन्धमात्रविषयत्वेन न हि तत्र सामान्यरूपो विशेषरूपो वा कश्चनार्थः प्रतिभाति, तदा मनोरहितेन्द्रियमात्रव्यापारात्तत्रार्थप्रतिभासायोगात्, भवता तु तत्राव्यक्तशब्दरूपार्थग्रहणस्योक्तत्वात् । तर्ह्यव्यक्तार्थग्रहणे किमसौ स्यादिति चेत्, उच्यते, अर्थावग्रह एवेति, एवं सत्यप्यस्य व्यञ्जनावग्रहत्वाभ्युपगमे द्वयोरप्यविशेषरूपत्वात्, मेचकमणिप्रभावत् सङ्करो वा स्यादित्याशयेनोत्तरयति **अर्थो न व्यञ्जनम्, अन्यथा सङ्करप्रसङ्गादिति ।** अपि चार्थावग्रहे शब्दोऽयमिति विशेषबुद्धिर्भवदभ्युपगता शब्दत्वमात्रप्रकारकत्वेन तदभावाप्रकारकत्वान्निश्चयरूपा स्यात्, निश्चयश्च नाकस्मात्, किन्तु पूर्वं शब्दसामान्यग्रहणम्, ततः किमत्र श्रोत्रग्राह्यत्वादयो धर्मा घटन्ते किं वा चक्षुर्वेद्यत्वादय इत्येवं विचारणात्मिकेहा, तदनन्तरं नात्र चक्षुर्वेद्यत्वादिधर्मा उपलभ्यन्ते किन्तु श्रोत्रग्राह्यत्वादिधर्मा इत्येवं व्यतिरेकान्वयधर्मविचारणाक्रमेण स्यात्, तथाऽभ्युपगमे चोपयोगबहुत्वमापद्यते, न चैकस्मिन् समये तथाऽभ्युपगतं सिद्धान्ते इत्याशयेन दोषान्तरमाह **किञ्चार्थावग्रहे शब्द इतीत्यादिना ।** **एतैरेतैरिति** श्रोत्रग्राह्यत्वादिभिश्चक्षुर्ग्राह्यत्वादिभिरित्यर्थः । **शब्दसामान्यविशेषाणामिति** शब्दसामान्यगतश्रोत्रग्राह्यत्वादिधर्माणामित्यर्थः । **रूपादिविशेषाणामिति** रूपादिगतचक्षुर्ग्राह्यत्वादिधर्माणामित्यर्थः । न चेहा संशयाद्भिन्ना तत्पूर्वकत्वात् यद्यत्पूर्वकं तत्ततो भिन्नं, यथा तन्तुपूर्वकः पट इत्येवं संशयभिन्नत्वमात्रेणेहाया निश्चयत्वनिर्वाह इत्याह **न च संशयव्यावृत्तिमात्रेण निश्चयत्वनिर्वाह इति ।** तथापि कार्यकारणभावानुरो-

तथापि भ्रमसंशयोत्तरत्वं परित्यज्य लाघवात् प्रत्यक्षमात्रे विशेषदर्शनविषयेहाया हेतुत्वेन तां विना तद्योगात् । एतेन बालस्य सर्वविशेषविमुखस्याद्यसमये सामान्यज्ञानम्, परिचितविषयस्य तु समय एव विशेषनिश्चय इत्यप्यपास्तम् । पटुत्ववैचित्र्येण समय एव विशेषविज्ञानोपगमेऽवग्रहादीनामुत्क्रमव्यतिक्रमप्रसङ्गात् । तथा च परममुनिनिर्देशोल्लङ्घनापत्तेः ।

धेनेहा निश्चयात्मिका, तथाहि–प्रत्यक्षं प्रति विशेषदर्शनं कारणम्, न च तत्र कार्यकोटौ भ्रमसंशयोत्तरत्वं नैयायिकाभिमतं प्रवेश्यम्, गौरवात्, येनापायात्मकप्रत्यक्षस्य भ्रमसंशयोत्तरत्वाभावेनेहात्मकविशेषदर्शनस्याऽनपेक्षणीयत्वं तं प्रति स्यात्, ननु प्रत्यक्षमात्रं प्रति विशेषदर्शनस्य हेतुत्वे यथा नेदं रजतमिति भ्रमोत्तरमेवमिदं रजतं न वेति संशयोत्तरमिदं रजतमिति प्रत्यक्षं प्रति रजतत्वव्याप्यधर्मविशेषदर्शनस्यैवायं घटोऽयं पट इत्यादि प्रत्यक्षं प्रत्यपि विशेषदर्शनस्य हेतुत्वं स्यादिति चेत्, मैवम्, जैनमते व्यवसायात्मकप्रत्यक्षस्याप्यपायात्मकनिश्चयरूपतयेहापूर्वकत्वेन तत्कारणतयाऽत्रापीहात्मकविशेषदर्शनस्याऽभ्युपगमादिति, तथा चेहात्मकविशेषदर्शनस्य प्रत्यक्षं प्रत्यपेक्षणीयत्वे सिद्धे तद्व्यतिरेकेण निश्चयात्मकप्रत्यक्षायोगादपायात्मकनिश्चयात् पूर्वं कारणविधयाऽभ्युपगन्तव्यस्य विशेषदर्शनस्य ग्राह्यव्याप्यनिश्चयात्मकत्वेन तदात्मिकाया ईहाया अपि निश्चयात्मकत्वमभ्युपगन्तव्यमित्याशयेनाह–**तथापि भ्रमसंशयोत्तरत्वं परित्यज्येत्यादि** । अत्र रूपाद्यव्यावृत्तशब्दसामान्यग्रहणस्यैवाऽर्थावग्रहत्वं, न तु शब्दत्वेन शब्दग्रहणस्य तत्त्वम्, तस्येहापूर्वकत्वेन वस्तुतोऽपायत्वमेव, औपचारिकमेव चार्थावग्रहत्वमित्येतद्व्यवस्थापनायैव चात्रेहाविचारः प्रसङ्गागतः, न तु स्वातन्त्र्येण तद्विचारोऽत्राधिकृतो, येनैकाधिकारेऽपरिसमाप्त एवान्याधिकारोऽप्राप्तकालत्वादयुक्त इति शङ्कया पराभूतो भवेदिति बोध्यम् । अथास्मिन्नेवाऽर्थावग्रहेऽपरवाद्यभिप्रायं निराचिकीर्षुराह–**एतेनेत्यादि** । एतेनेत्यस्यापास्तमित्यनेनान्वयः । **बालस्येति**–अनेन शब्देनाऽयमर्थो बोध्यः इदम्पदममुमर्थं बोधयत्वित्यादिपुरुषेच्छालक्षणसङ्केतादिविकलत्वेनापरिचितविषयस्य तत्क्षणजातस्य शिशोरित्यर्थः । **सामान्यज्ञानमिति**–अशेषविशेषानवगाहि महासामान्यसन्मात्रावगाहिज्ञानमित्यर्थः, अर्थावग्रह इति शेषः । **परिचितविषयस्य त्विति**–गृहीतसङ्केतादिकस्य पुंसः पुनरित्यर्थः । **समय एवेति**–आद्यशब्दश्रवणसमय एवेत्यर्थः । **विशेषनिश्चय इति**–तत्तच्छब्दशक्तिग्रहमन्नितत्वात्तस्येति शेषः । ततश्च शब्दोऽयमिति विशेषनिश्चयात्मकावग्रहमाश्रित्य "तेणं सद्देति उग्गहिए" इत्यादि यथाश्रुतमेव व्याख्यायत इति । अपासने हेतुमाह–**पटुत्वेति** । **अवग्रहादीनामुत्क्रमव्यतिक्रमप्रसङ्गादिति**–मतिज्ञानावरणीयकर्मक्षयोपशमपाटववैचित्र्येण कस्यापि प्रथमं धारणा ततोऽपायः ततोऽपीहा तदन्ववग्रह इत्येवं पश्चानुपूर्वीभवनलक्षणोत्क्रमेणोत्पत्तिप्रसङ्गस्स्यात् । अन्यस्य कस्यचित्पुनरवग्रहमुल्लङ्घ्य प्रथममेवेहा, तदन्यस्य तु तामप्यतिक्रम्य प्रागेवापायस्स्यात्, कस्यचित्पुनस्तमप्यतिक्रम्य प्रथममेव धारणेत्येवमनानुपूर्वीभवनलक्षणव्यतिक्रमेणोत्पत्तिस्स्यादित्यर्थः । तथाऽभ्युपगमे च "उग्गहो ईहा अवाओ य धारणा एव होंति चत्तारि" इति सिद्धान्तनिर्दिष्टक्रमभङ्गापत्तिस्स्यादित्याह–**तथा च परममुनिनिर्देशोल्लङ्घनापत्तेरिति** ।

यत्त्वालोचनाज्ञानानन्तरमर्थावग्रहः कैश्चिदिष्यते, तदविचारितरमणीयम् । तस्य व्यञ्जनावग्रहनामान्तरत्वात्, ततः पूर्वं व्यञ्जनार्थसम्बन्धाभावेन तदसिद्धेः । तदन्ते चार्थावग्रहस्यैव सिद्धान्तेऽभिधानात् । न चैवमपीष्टसिद्धिः, व्यञ्जनावग्रहकालस्याऽर्थपरिशून्यत्वात्सामान्यार्थानालोचने विशेषार्थस्यावग्रहीतुमशक्यत्वात् । तस्माद्रूपाद्यव्यावृत्तशब्दसामान्यविषय एवार्थावग्रहो न तु शब्द इत्याकारः,

लोयणपुव्वमोग्गहं बेंति तत्थ सामण्णं । गहियमहत्थावग्गहकाले सद्देत्ति निच्छिण्णं । २७३ ।"
इति भाष्यगाथोक्तान्याचार्यमतं प्रथमं सामान्याऽव्यक्तवस्तुग्राहकमालोचनाज्ञानं तदनु शब्दोऽयमित्याकारको रूपादिव्यावृत्तशब्दविशेषग्राहकोऽर्थावग्रहः, उक्तलक्षणालोचनाज्ञानमालम्ब्य "से जहा नामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्ज" इति सूत्रं प्रवृत्तं, उक्तलक्षणार्थावग्रहमवलम्ब्य च "तेणं सद्देत्ति उग्गहिए" इति सूत्रं प्रवृत्तमित्येवं तत्त्वं सङ्क्षेपतः प्रदर्श्य निराकरोति । **यत्त्वालोचनाज्ञानानन्तरमित्यादि** । किं व्यञ्जनावग्रह एवालोचनाज्ञानम् ? यद्वा किं व्यञ्जनावग्रहात्पूर्वं तत् तदन्ते वेति विकल्पत्रयमध्ये आद्यविकल्पनिरसने हेतुमाह—**तस्य व्यञ्जनावग्रहनामान्तरत्वादिति** । **तस्येति**—आलोचनाज्ञानस्येत्यर्थः । तथा च नाममात्र एव नो विवादः, परिभाषाया अपर्यनुयोज्यत्वात्, एवमभ्युपगमेऽपि व्यञ्जनावग्रहस्यार्थविषयकत्वाभावादर्थालोचनज्ञानात्मकत्वं न सम्भवतीति भावः । द्वितीयविकल्पनिरासे हेतुमाह—**ततः पूर्वमित्यादि** । व्यञ्जनेन श्रोत्रादीन्द्रियेण सह व्यञ्जनस्य शब्दाद्यर्थस्यावग्रहः सम्बन्धो व्यञ्जनावग्रह इत्येवं सिद्धान्तेऽभ्युपगमादुक्तलक्षणव्यञ्जनावग्रहात्पूर्वं व्यञ्जनार्थसम्बन्ध इति वक्तुमप्यशक्यम्, न हि स्वस्मात् स्वं पूर्वमिति कोऽपि प्राज्ञो वक्तीति, ततः पूर्वमुक्तसम्बन्धस्याभावेन केनालोचनाज्ञानं स्यात् ? । तस्य भावे वा तदानीं व्यञ्जनावग्रहस्यैवेष्टत्वेन तत्पूर्वकालता तस्य न स्यादिति पूर्ववर्त्तिकारणाभावेनालोचनाज्ञानानुपपत्तिरेवेत्यर्थः । तृतीयविकल्पखण्डने हेतुमाह **तदन्ते इत्यादि** । व्यञ्जनावग्रहचरमसमयेऽर्थावग्रहस्यैवाऽविकलसामग्रीसद्भावेनोत्पत्तिरभ्युपगम्यते सिद्धान्तकारैः, तस्मात्तदन्तेऽप्यालोचनाज्ञानं न युक्तम्, निरवकाशत्वात्, न हि व्यञ्जनावग्रहार्थावग्रहयोरन्तरकालोऽस्ति, येनालोचनाज्ञानं भवदभ्युपगतं तत्र स्यादिति भावः । ननु व्यञ्जनावग्रहस्यैवालोचनाज्ञानमिति नामान्तरमस्तु को दोषः ? यस्मादिदमालोचनाज्ञानं सामान्यग्राहकं भविष्यति, अर्थावग्रहस्तु विशेषग्राहक इति चेत्, एवमभ्युपगमेऽपि न भवदिष्टसिद्धिः, यतः—"वंजणकालो सो अत्थपरिसुण्णो" इति वचनात्, व्यञ्जनावग्रहकालोऽर्थपरिशून्य इत्यतो न व्यञ्जनावग्रहे सामान्यरूपो विशेषरूपो वा कश्चिदर्थः प्रतिभाति, तदा चक्षुर्मनोरहितेन्द्रियमात्रव्यापारात्, तत्र चाऽर्थप्रतिभासायोगात् । तथा च व्यञ्जनावग्रहेण सामान्यार्थग्रहणाऽभावे सति कथं सामान्यग्रहणं व्यञ्जनावग्रहपर्यायान्तरालोचनाज्ञानेनापि स्यात्, येन भवदिष्टसिद्धिप्रमोदः पूर्त्तिभावमाप्नुयात्, व्यञ्जनावग्रहनामान्तरालोचनाज्ञानेन सामान्यरूपार्थग्रहणाभावे च कथं विशेषरूपार्थावग्रहोऽपि स्यात्, सामान्यग्रहणपूर्वकत्वाद्विशेषग्रहणस्येत्याशयेनाह—**न चैवमपीष्टसिद्धिरिति** तत्र हेतुमाह—**व्यञ्जनावग्रहेत्यादि** । उपसंहारमाह—**तस्माद्रूपाद्यव्या-**

यदि च तादृश एवेष्यते तदा स औपचारिको द्रष्टव्यः । सर्वत्रोत्तरोत्तरविशेषाकाङ्क्षायां पूर्वपूर्वापायस्यौपचारिकावग्रहत्वेनाश्रयणान्नैश्चयिकावग्रहापाययोः पूर्वोत्तरतारतम्यवदवध्यभाव एव विश्रान्तेः । तदुक्तम्–
" सव्वत्थेहावाया–णिच्छयओ मोत्तुमाइसामन्नं । संववहारत्थं पुण, सव्वत्थावग्गहोवाओ ॥१॥ तरतमजोगाभावे–वाओ च्चिय धारणा तदंतंमि । सव्वत्थ वासणा पुण भणिया कालंतरे सइओ ॥ २ ॥ त्ति "

वृत्तशब्दसामान्यविषय एवार्थावग्रह इति–रूपाद्यव्यावृत्तेति रूपरसादिविशेषव्यावृत्ततयाऽनवधारितेत्यर्थः। अनिर्देश्यसामान्यमात्रप्रतिभासात्मकत्वादर्थावग्रहस्य शब्द एवैष इत्याकारकनिश्चयात्मकत्वं न सम्भवतीति भावः। यद्यपि पूर्वमवग्रहमीहां चान्तरेणानुपपद्यमानत्वात् तत्पूर्वकश्शब्दोऽयमिति निश्चयोऽपाय एव तथापि यदि सोऽवग्रहरूप एवेत्याग्रहस्तदा सोऽस्तु किं शाङ्खः शार्ङ्गो वेति शब्दविशेषविषयकेहां शाङ्ख एवायं शब्द इत्यपायं चापेक्ष्य भाविविशेषापेक्षया च सामान्यग्राहकत्वात्सांव्यवहारिकावग्रहरूपत्वेनौपचारिकः, न तु मुख्यः, तस्यैकसामयिकत्वात्, एकसमये च निश्चयाऽयोगात्, निश्चयस्यान्तर्मुहूर्तिकत्वादित्याशयेनाह–यदि च तादृश एवेष्यते तदा स औपचारिको द्रष्टव्य इति–तदेव विवृणोति–सर्वत्रोत्तरोत्तरविशेषाकाङ्क्षायामित्यादिना। पूर्वोत्तरतारतम्यवदवध्यभाव एव विश्रान्तेरिति–यथा ज्ञानस्य पूर्वतारतम्यविश्रान्तिस्सूक्ष्मनिगोदजीवज्ञाने, तदपेक्षया कस्यापि ज्ञानस्य जघन्यत्वाभावेन तत्पूर्वावध्यभावात्, उत्तरतारतम्यविश्रान्तिः केवलज्ञाने, तदपेक्षया कस्यापि ज्ञानस्योत्कृष्टत्वाभावेनोत्तरावध्यभावात्, तद्वद् यदपेक्षया पूर्वावधिर्नास्ति तत्रावग्रहत्वस्य यदपेक्षया चोत्तरावधिर्नास्ति तत्रापायत्वस्य विश्रान्तेरित्यर्थः। उक्तार्थे विशेषावश्यकभाष्यसंवादमाह–सव्वत्थेहेत्यादि। आद्यत्वविशेषणान्यथानुपपत्त्याऽऽद्यसामान्यं सामान्यमेव तत्पूर्वसामान्यान्तराभावेन तदपेक्षकाविशेषरूपं न तदिति तद्विषयको नैश्चयिकोऽवग्रह एव, तस्यैकसमयवर्तिनः परमयोगिनैव निश्चयवादिनाऽवगमादिति तद्रूपप्रथमज्ञानं मुक्त्वा सर्वत्र विषयपरिच्छेदे कर्तव्ये निश्चयतः परमार्थत ईहापायौ भवतः, ईहा पुनरपायः, पुनरीहा, पुनरप्यपायः, न पुनस्तत्रान्तरा क्वाप्यवग्रहः, इत्येवं क्रमेण यावदन्त्यविशेषः, न तदुत्तरमीहाऽपायौ, अन्यथाऽन्त्यत्वविशेषणमेवानुपपन्नं स्यादिति निश्चयनयमतं पूर्वार्द्धेन प्रदर्श्य व्यवहारनयमतप्रदर्शनार्थमुत्तरार्द्धमाह–संववहारत्थमित्यादि, संव्यवहारार्थं व्यावहारिकजनप्रतीत्यपेक्षं पुनः, सर्वत्र यो योऽपायः स स उत्तरोत्तरेहापायापेक्षया भाविविशेषापेक्षया च सामान्यग्राहकत्वाच्चोपचारतोऽर्थावग्रहः, एवं तावद् नेयं यावत्तारतम्येनोत्तरोत्तरविशेषजिज्ञासा प्रवर्त्तत इति ॥२८५॥ नन्वेवं तर्हि तन्निवृत्तौ तदुत्तरं किं भवतीत्याशङ्कायामाह–तरतमजोगाऽभावे इत्यादि, तरतमयोगाभावेऽपाय एव, न तस्यावग्रहत्वम्, जिज्ञासोत्तदुत्तरविशेषाकाङ्क्षाविश्रान्तेस्तन्निमित्तेहाऽपायाभावात्, नन्वेवमन्तिमापायोत्तरमीहादयो न भवन्ति तर्हि किं भवतीति चेत्, धारणैव तदर्थोपयोगाप्रच्युतिरूपा, ननु धारणाऽपि च्युतिवासनास्मृतिभेदेन त्रिविधेति वासनास्मृतिरूपभेदद्वयस्य क्व सम्भव इत्याशङ्कायामुत्तरार्द्धमाह–सव्वत्थ

एवमवग्रहमुक्त्वा ईहायाः स्वरूपं व्याचिख्यासुराह—अवगृहीतेत्यादि । अवगृहीतेति क्रमप्रदर्शनं अवगृहीतमेवेह्यत इति । अवग्रहगोचरीकृतो यो विषयस्यार्थस्य सामान्यविशेषात्मकवस्तुन एकदेशः सामान्यम्, तस्मादनन्तरं शेषस्य भेदस्य विशेषस्येति यावत्, अनुगमनं विचारणम्, ईहाशब्दस्येच्छायां रूढिमनुरुध्याह—निश्चयेति । निश्चीयतेऽसाविति निश्चयः, विशिष्यते भिद्यतेऽस्मादिति विशेषः, ततः कर्मधारयः । तस्य ज्ञातुमिच्छा जिज्ञासा सेहा । किमयं मृणालीस्पर्श उताहो सर्पस्पर्श इत्याकारेति टीकाकृतः । सा च व्यावहारिकावग्रहजन्या द्रष्टव्या । नैश्चयिकावग्रहजन्या तु किमयं स्पर्श उतास्पर्श इत्येवंरूपा विशेषावश्यकप्रसिद्धा समुन्नेया । जिज्ञासारूपत्वादेवास्या न संशयरूपत्वम् ।

वासणेत्यादि सर्वत्र वासना तथा कालान्तरे स्मृतिश्च, सा च सर्वत्र भणिता । अयमत्र भावः—अविच्युतिरूपा धारणाऽऽयाव्यवहितोत्तरसमय एव भवति, वासनास्मृती तु सर्वत्र कालान्तरेऽप्यविरुद्धे इति । अनुगमनं विचारणमिति—भाष्यकारोऽप्यभ्यधात् "भेयमग्गणमहेहा" इति । १८० । भेदा वस्तुनो धर्माः तेषां मार्गणमन्वेषणं विचारणं, प्रायः काकनिलयनादयः स्थाणुधर्मा अत्र वीक्ष्यन्ते, न तु शिरःकण्डूयनादयः पुरुषधर्मा इत्येवं वस्तुधर्मविचारणमीहेत्यर्थः । निश्चीयतेऽसाविति निश्चय इति—निश्चित इत्यर्थः । विशेषपदस्य व्युत्पत्तिमाह—विशिष्यते भिद्यतेऽस्मादिति विशेष इति । तस्य—निश्चितविशेषस्य । विशेषावश्यकप्रसिद्धा समुन्नेयेति—विशेषावश्यके मतिज्ञानद्वितीयभेदेहालक्षणनिष्कर्ष एवमुक्तः । " इय सामण्णग्गहणाणंतरमीहा सदत्थवीमंसा । किमिदं सद्दोऽसद्दो को होज्ज व संखसंगाणं ? ।।२८९।। " इति । इत्येवं प्रागुक्तप्रकारेणाऽनिर्देश्याऽव्यक्तसामान्याऽर्थमात्रग्रहणलक्षणनैश्चयिकार्थावग्रहो यः पश्चोत्तरविशेषापेक्षया शब्दादिसामान्यग्रहणलक्षणव्यावहारिकार्थावग्रहस्तदनन्तरमीहा जायते सा किं लक्षणेत्यत आह—सदर्थमीमांसेति सतस्तत्र विद्यमानस्य गृहीतार्थस्य विशेषविमर्शद्वारेण मीमांसा विचारणा किमिदं वस्तु मया गृहीतं शब्दोऽशब्दो वा रूपादिरित्येवं स्वरूपा, इदं नैश्चयिकार्थावग्रहानन्तरभाविन्या ईहायास्स्वरूपमुक्तम्, व्यावहारिकार्थावग्रहानन्तरसम्भविन्यास्तस्यास्स्वरूपमाह को होज्ज वेत्यादि । शाङ्खशार्ङ्गयोर्मध्ये कोऽयं भवेच्छब्दः शाङ्खः शार्ङ्गो वेत्येवं स्वरूपेहा प्रवर्त्तते । ननूक्तप्रकारा विचारणा संशयात्मिका, न त्वीहात्मिकेति चेत्, सत्यम्, तथापि परमार्थदृष्ट्याऽवगृहीतार्थस्य भवितव्यताप्रत्ययरूपतयाऽपायाभिमुखः आद्यपक्षे प्रायः शब्देन भाव्यं न रूपादिनेत्याकारको द्वितीयपक्षे च प्रायः शाङ्खेन शब्देन भाव्यं न शार्ङ्गेनेत्याकारको मतिविशेष एवेहा ज्ञातव्या, तद्यथा—" अरण्यमेतत्सवितास्तमागतो, न चाधुना सम्भवतीह मानवः । प्रायस्तदेतेन खगादिभाजा, भाव्यं स्मरारातिसमाननाम्ना ।। १ ।। " इति । एतेन स्थाणुर्वा पुरुषो वेति संशयानन्तरं पुरुषधर्मव्यतिरेकतः स्थाणुधर्मसन्वयतश्च प्रायः स्थाणुरेवायमिति बोध ईहेत्युपदर्शितम्भवति । अत एव प्रमाणनयतत्त्वालोकालङ्कारे—" अवगृहीतार्थविशेषाकाङ्क्षणमीहा" २–८ इत्युक्तलक्षणमपि सङ्गच्छते । ईहा न संशयरूपेत्यत्र हेतुमाह—जिज्ञासारूपत्वादेवेति । अस्याः—ईहायाः । न संशयरूपत्व-

इच्छारूपत्वेन च न ज्ञानत्वविरोध', इच्छाया अपि भाव्यत्वप्रकारकज्ञानविशेषरूपत्वात्, भाव्यत्वमर्थे प्रकार इति जिज्ञासात्वोक्तिविरोधो ज्ञानविषयिण्या इच्छाया एव जिज्ञासात्वादित्यपि न शङ्कनीयम्, अत्र जिज्ञासापदेन ज्ञानावच्छिन्नार्थविषयकेच्छाया एव ग्रहणात्, अत एव जिज्ञासायाः प्रत्यक्षहेतुत्वे घटायोन्मीलितं घटं न प्रकाशयेदित्यादि दूषणमपि परास्तम्। ज्ञानविषयकेच्छायाः स्वातन्त्र्येण हेतुत्वोक्तौ तद्दोषावतारेऽप्यर्थकथंता-रूपायास्तस्या हेतुत्वे दोषाभावात्। अस्याः स्थाणुत्वव्याप्यवक्रकोटरादिमत्त्वज्ञानपुरुषत्वव्याप्यकरचरणाद्य-भावज्ञानभाविज्ञानप्रामाण्याऽप्रामाण्यरूपसम्भवासम्भवादिज्ञानपर्यायैः समन्वयो दीर्घोपयोगत्वे सम्भवी, परेषां तु तावता पर्यायाणामेकदानवस्थानात् क्रमभाविना च मेलकाभावात् सर्वमेव दुर्घटम्। अथालोकादिसाधारण्येन

मिति तथा चास्या नाप्रामाण्यमिति भावः। ननु जिज्ञासा इच्छाविशेष एव, तद्रूपत्वे च ज्ञान-रूपत्वमपि न भवेदिति मतिज्ञानविशेषत्वं कथमस्या इत्यत आह–इच्छारूपत्वेन चेति। न नैयायिकमत इव स्याद्वादिमते ज्ञानतो भिन्ना भवतीच्छा, किन्त्वऽभिन्नैव–इदंभवतु इदंभूयात् इत्याद्याकाराया भाव्यत्वप्रकारकज्ञानविशेषरूपाया एव तस्या अभ्युपगमादित्याह–इच्छाया अपीति। ननु नेच्छामात्रमीहा, किन्तु जिज्ञासारूपा सा, ज्ञानविषयिणी चेच्छा जिज्ञासा, भाव्यत्वप्रकारकस्त्वार्थविशेष्यकं ज्ञानं तु न ज्ञानविषयकमिति नास्या जिज्ञासात्वसम्भव इत्याशङ्काम्प्रतिक्षिपति भाव्यत्वमर्थे प्रकार इतीति। प्रतिक्षेपे हेतुमाह–अत्रेति–ईहा-स्थले इत्यर्थः, ज्ञानीयविषयताविशेष एव भाव्यत्वं, तस्यार्थविशेषणत्वे ज्ञानावच्छिन्नत्वमर्थे समागतमेव, इदं ज्ञातं भवतिरित्याकारकत्वेऽपि ज्ञानावच्छिन्नार्थविषयकत्वमीहाया इत्याशयः, अत एव–ज्ञानावच्छिन्नार्थविषयकेच्छाया एव जिज्ञासात्वादेव, अस्य परास्तमित्यनेनान्वयः, घटविषयकज्ञानविषयकेच्छाया घटप्रत्यक्षहेतुत्वे ततो घटप्रत्यक्षमेव स्यात्, घटविषयक-ज्ञानेच्छायाः घटप्रत्यक्षकारणीभूताया अभावेन घटप्रत्यक्षं न स्यादिति दोषस्तदा स्याद्यदि तथाकार्यकारणभावो भवेत्, न चैवम्, किन्तु भाव्यत्वप्रकारकार्थविशेष्यकज्ञानविशेषरू-पजिज्ञासाया एवावायलक्षणप्रत्यक्षहेतुत्वस्य स्वीकारेणोक्तदोषाभावादित्याह ज्ञानविषयके-च्छाया इति। अर्थकथन्तेति–अर्थस्य प्रकारविशेषसम्भावनलक्षणाजिज्ञासैव अर्थकथन्ता, तद्रूपाया ईहाया अवायलक्षणप्रत्यक्षहेतुत्वे दोषाभावात्, यस्यैवेहा तस्यैवावाय इति नियमात्। अयमाशयः, घटप्रत्यक्षायोद्घाटितं चक्षुर्यत्र तत्र घटस्य सन्निकृष्टत्वे तस्यावग्रहे-हासद्भाव एवावायो भवति, न त्वन्यथेति घटावग्रहात्मकज्ञानविषयीभूतार्थविशेष्यकभाव्यत्व-प्रकारकेहालक्षणजिज्ञासात एव घटस्यावायात्मकप्रत्यक्षं भवतीति तं प्रत्युक्तजिज्ञासायास्त-त्रापि कारणत्वं निर्वहतीति नोक्तकार्यकारणभावे व्यभिचार इति तादृशव्यभिचारप्रदर्शकं घटं न प्रकाशयेदिति वचो न युक्तमिति। इयञ्चेहा स्याद्वाद एव दीर्घोपयोगरूपत्वात्सङ्गतिमङ्गति, न परमत इत्याह–अस्या इति। परेषां–नैयायिकादीनाम्। ईहानन्तरमेव निश्चयलक्षणापाय इति नियमप्रतिक्षेपणाय शङ्कते–अथेति। आलोकादिसद्भावे चक्षुरादिग्रहणयोग्योऽर्थो भवति, न

भ्रमादिविरोधित्वेनैव विशेषदर्शनस्य हेतुत्वादीहाया न सर्वत्र निश्चये उपयोग इति चेत्, न, आलोकादिनाऽर्थस्यैव योग्यतापादनम्, निश्चयस्त्ववग्रहादिक्रमेणैवेत्यभ्युपगमात्। अनुभवसिद्धं चैतत् सामान्यज्ञाने सति विशेषो जिज्ञास्यते ततश्च निश्चीयत इति। अथावग्रहे सति धर्मिज्ञानकोटिद्वयोपस्थितिसामग्र्या संशयेनैव भवितव्यमितीहाया अनवकाश एवेति चेत्, न, तथापि तदनन्तरमेककोटिसहचरितभूयोधर्मानुगमनव्यापारस्येहासाध्यत्वात्, संशयादुत्तीर्णत्वेन निश्चयाभिमुखत्वेन च तस्या विलक्षणत्वात्, अस्तु तर्हि उत्कटकोटिक एव संशय ईहा, ज्ञानान्तराकल्पनलाघवादिति चेत्, सत्यम्, तथापि तुल्यकोटिद्वयं संशयमुपमृद्य एककोटिसहचरितभूयोधर्मावगाहनेन तदुत्कटत्वमनुभवन्त्यास्तस्याः प्रायोऽनेन स्थाणुना भवितव्यमित्याकाराया दीर्घविचारात्मिकायाः संशयाद्भिन्नत्वात्, एककोटिसहचरितभूयोधर्मज्ञानेन प्रागेवोत्कटकोटिकः संशयो भवन्नीहाव्यपदेशमश्नुत इति तु स्वगृहगोष्ठीमात्रम्, तावद्विचारस्य ज्ञानान्तरनिबन्धनत्वात्, विशेषदर्शनसामग्रीत्वेनोत्तरकाल इव संशयनिवर्तकत्वाच्च।

त्वालोकादितः साक्षादेवार्थनिश्चयः, किन्त्ववग्रहादिक्रमेणैवेति निश्चये ईहाया उपयोग आवश्यक इति समाधत्ते—नेति। अवग्रहेहावायानां क्रमिकत्वेऽनुभवं प्रमाणयति—**अनुभवसिद्धमिति**। अवग्रहानन्तरं संशयसामग्रीसिद्धावात्संशय एव स्यात्, न त्वीहेति शङ्कते—**अथेति**। भवतु अवग्रहानन्तरं संशयस्तथापि तदनन्तरमीहाव्यापारोपलम्भेरीहाप्यभ्युपेयैवेति समाधत्ते—**तथापीति**। **तदनन्तरं**—संशयानन्तरम्। ईहायाः संशयनिश्चयाभ्यां वैलक्षण्यमावेदयति—**संशयादुत्तीर्णत्वेनेति**—सामान्यावग्रहे सति साधारणधर्मदर्शनात् कोटिद्वयप्रकारकसंशयः, ततोऽपि प्रमातुर्विशेषलिप्सायामनेन भवितव्यमित्येवमीहा जायते इति संशयोत्तरकालभावित्वेन तत्कार्यतयेत्यर्थः। ईहायास्संशयाद्भिन्नत्वे हेत्वन्तरमप्याह—**निश्चयाभिमुखत्वेनेति**। **तस्या**—ईहायाः। परामिमतसम्भावनारूपत्वेनेहायास्संशयेऽन्तर्भावमाशङ्कते—**अस्तु तर्हीति**। उत्कटकोटिकत्वमस्या भवतु नाम तथापि संशयमुपमृद्य जायमानाया अस्यास्संशयाद्भिन्नत्वमेव, आकारतोऽपि संशयाद्भिन्नत्वमेवास्या अनुभवपथमायातीति समाधत्ते—**सत्यमिति**। **तदुत्कटत्वम्**—एककोटेरुत्कटत्वम्, **तस्या**—ईहायाः। पूर्वं कोटिद्वयविषयकः संशयो भवति तदनन्तरमीहा भवतीत्येव नास्ति, येन संशयोत्तरकालीनत्वेन संशयाद् भेदो भवेत्, किन्तु संशयकालत्वेनाभिमतकाल एवैककोटिसहचरितभूयोधर्मज्ञानेन जायमान उत्कटकोटिकसंशय ईहेति कथमस्याः संशयाद् भेद इत्यत आह—**एककोटीति**। दीर्घोपयोगरूपत्वे सत्येवास्याः स्थाणुत्वव्याप्यवक्रकोटरादिमत्त्वज्ञानादिपर्यायसमन्वयो भवितुमर्हतीति ज्ञानान्तरत्वमेवास्या न संशयत्वमित्याह—**तावद्विचारस्येति**—यत्र च न संशयः किन्तु प्रथमत ईहाया एव भावस्तत्रापि तस्या विशेषदर्शनसामग्रीत्वेन उत्तरकाले संशयानुत्पादकत्वलक्षणसंशयनिवर्त्तकत्ववत्पूर्वकालेऽपि संशयनिवर्त्तनयोग्यत्वं समस्त्येव, संशयाभावाच्च न तन्निवृत्तिः, संशये च न संशयनिवर्त्तकत्वमिति संशयाद्भेदोऽवश्यमस्या दीर्घविचाररूपाया इत्याह **विशेषदर्शनसामग्रीत्वेनेति**। उक्तरीत्या भेदकसौलभ्येऽपि यद्यस्यास्संशयेऽन्तर्भावस्तर्हि निश्चयत्वेनाभिमतज्ञानस्याप्यनुत्कोटिक-

न चेदेवं तदाऽनुत्कटकोटिकसंशयेन निश्चयोऽप्यपोद्येत । वदन्ति ह्यापातनिश्चयमीदृशमेव वेदान्त्याभासा इति न किञ्चिदेतत् । एवं स्वचित्तगतामीहां निरूप्य पर्यायशब्दैरर्थतो नानात्वमप्रतिपद्यमानैरसम्मोहार्थं तामेव व्याचष्टे । ईहा ऊह इत्यादि । अपायं निरूपयति–अवगृहीतेत्यादि । अनेनापि क्रममाचष्टे, अवगृहीते स्पर्शादिसामान्यविषये किमयं स्पर्शोऽस्पर्शो वा किं मृणालस्पर्श उताहिस्पर्श इति वेहाया

संशय एवान्तर्भावोऽस्तु, संशयस्याभाव्याद् द्वितीयकोटिसद्भावेऽप्यनुत्कटत्वान्न तदाकारोल्लेख इत्यस्य वक्तुं शक्यत्वान्निश्चयकथैव समुच्छिन्ना स्यादित्याह न चेदेवमिति । संशयनिवर्त्तकत्वेनेहायास्संशयाद्भेदो नाङ्गीक्रियते चेदित्यर्थः । ननूत्कटकोटिकज्ञानस्य संशयत्वं नैयायिका अभ्युपगच्छन्ति ततस्तन्नीत्याश्रयणेनेहायास्संशयत्वं वक्तुं शक्येत, अनुत्कटकोटिकसंशयस्य निश्चयत्वं न केनाप्युररीक्रियत इति कथमनुत्कटकोटिकसंशयरूपता निश्चयस्येत्यत आह–वदन्ति हीति–तथा च नाऽदृष्टचरीत्थं कल्पनाऽपि । निश्चयज्ञानस्य निश्चिनोमीत्यनुव्यवसायाद्यदि न संशयत्वं तर्हि ईहाया अपि सम्भावयामीत्याद्यनुव्यवसायो न तु सन्देह्मीति न तस्या अपि संशयत्वमित्याशयः । ननु संशयेहयोर्वैलक्षण्यं न वीक्षामहे इति चेत्, सोऽयं पुरुषदोषः, न तु वस्तुदोषः, तयोर्भेदस्यानुभविकत्वात्, तथाहि–" एकधर्मिणि विधिनिषेधोभयज्ञानं संशयः, हेतूपपत्तिव्यापारप्रवणं ज्ञानमीहा " इति लक्षणभेदेनानयोर्भेदस्स्फुटमनुभूयते प्रेक्षावद्भिः । यदाह भाष्यसुधासुधाम्भोधिः–"जमणेगत्थालम्बण–मपज्जुदासपरिकुंठिअं चित्तं । सेय इव सव्वप्पयओ, तं संसयरूवमण्णाणं ॥ १८३ ॥" इति । " तं चिय सयत्थहेऊ–ववत्तिवावारतप्परममोहं । भूआभूअविसेसा–याणच्चायाभिमुहमीहा ॥ १८४ ॥ " इति । अत्रानेकार्थालम्बनमित्यत्रालम्बनपदेनैकालम्बनत्वविवक्षणात्, अनेकार्थपदेन विरुद्धार्थत्वलाभात् " एकधर्मिनिष्ठविशेष्यतानिरूपितविरुद्धधर्मनिष्ठप्रकारतानिरूपकं ज्ञानं संशयः " इति संशयस्य लक्षणम्, तत्स्वरूपविशेषणमाह–अपर्युदासपरिकुण्ठितमिति–उपलक्षणन्यायेनाविधिपरिकुण्ठितमिति ज्ञेयम्, न पर्युदासो निषेध इत्यपर्युदासः, विधिरिति यावत्, तेनोपलक्षणन्यायलब्धेनाऽविधिना च परिकुण्ठितं जडीभूतं वस्तुनिश्चयकरणाऽसमर्थमित्यर्थः । संशयपदव्युत्पत्त्यर्थमाह–शेत इव स्वपितीव सर्वात्मना न किञ्चिच्चेतयते तदेवंविधं चित्तं संशय उच्यते, तच्च वस्तुगत्याऽज्ञानमेव वस्तुतत्त्वनिश्चयाऽक्षमत्वादित्यर्थः ॥ १८३ ॥ भाष्यकार ईहालक्षणमाह–तं चियेत्यादि, यच्च ज्ञानं सदर्थहेतूपपत्तिव्यापारतत्परं तदीहा, सदर्थेऽरण्यादौ विद्यमानस्थाण्वादिविषये हेतुव्यापारः स्थाणुरयं वल्ल्युपसर्पणकाकादिनिलयादित्याकारः, उपपत्तिव्यापारश्च सम्भवपर्यालोचनं यथा सूर्यास्तसमये महति तमिस्त्रे स्थाणुरयं सम्भाव्यते, न तु पुरुषः, तदनुमापकशिरःकण्डूयन करग्रीवाचलनादिहेतोरदर्शनादिति, तदेवंविधहेतूपपत्तिव्यापारप्रवणमीहात्मकज्ञानमिति सिद्धं भवति । तत्स्वरूपविशेषणमाह–भूयाभूयेति । भूतो विद्यमानो विवक्षितप्रदेशे स्थाण्वादिरर्थः, अभूतस्तत्राविद्यमानार्थः पुरुषादिः, तावेव विशेषौ तयोराद्यस्य यदादानं ग्रहणं द्वितीयस्य च यस्त्यागस्तदभिमुखं ज्ञानमीहेत्यर्थः,

प्रवृत्ताया, गुणदोषयोस्तद्वृत्तितदवृत्तिधर्मयोर्विचारणया योऽध्यवसायः स्पर्शधीः सत्या नास्पर्शधीर्मृणालस्पर्शधीः सत्या नाहिस्पर्शधीरित्येवं **सम्यगसम्यगिति** स्वसंविदितो योऽध्यवसायः सोऽपनुदति तत्रासन्निहितं धर्ममित्यपनोदः १ मृणालस्यैवायं स्पर्शोऽत्यन्तशीतादिगुणसमन्वितत्वादित्येवमाकारोऽपाय उच्यते । ईहाप्रकारीभूतहेतूपपत्तिमानमत्र, परेषा लिङ्गोपहितलैङ्गिकमानवत् समाधेयम् । पर्यायानाह–**अपायोऽपगम** इत्यादि । अपैतीत्यपायः निश्चिनोतीत्यर्थः । अपगच्छतीत्य**पगमः** । अपनुदतीत्य**पनोदः** । अपविध्यतीत्य**पव्याधः** । कर्त्रर्थमुपसर्जनीकृत्य भावार्थं प्रधानीकृत्याह–अपेतमित्यादि । अत्र **केचि**दपायनमपनयनमपाय इति व्युत्पत्त्यर्थभ्रान्ता असद्भूतार्थविशेषापनयनमेवापायं ब्रुवते, अवधारणं धारणेति व्युत्पत्त्यर्थभ्रान्ताश्च सद्भूतविशेषावधारणां धारणामिति, तदयुक्तम् ।

तथा चेहासंशययोरुक्तलक्षणभेदाद्भेदस्सिद्ध एवेति भावः । अधिकं च विशेषार्थिना विशेषावश्यकभाष्यटीकातोऽवसेयमिति । अथावग्रहस्य नैश्चयिकव्यावहारिकभेदेन द्विविधत्वात्तज्जन्यद्विविधेहोत्पन्नापायस्यापि द्वैविध्यात्प्रकारद्वयमाह–**योऽध्यवसायः स्पर्शधीः सत्येत्यादि । मृणालस्यैवायं स्पर्शोऽत्यन्तशीतादिगुणसमन्वितत्वादित्येवमाकारोऽपाय उच्यत** इति, एतत्तत्त्वं शब्दमुद्दिश्य भाष्यकारोऽप्याह–"महुराइगुणत्तणओ संखस्सेवत्ति जं न संगस्स । विण्णाणं सोऽवाओ अणुगम वइरेगभावाओ ॥२९०॥" इति । अस्या अयमर्थः–"मधुरस्निग्धत्वादिगुणत्वात् शङ्खस्यैवायं शब्दः न शृङ्गस्य" इत्यादि यद्विशेषविज्ञानं सोऽपायः, तत्र हेतुमाह–अणुगमवइरेगभावाओत्ति, पुरोवर्त्तिपदार्थे विद्यमानधर्माणामनुगमभावादस्तित्वनिश्चयात् अविद्यमानधर्माणां तु व्यतिरेकभावाद् नास्तित्वनिश्चयात् । अयं व्यवहारार्थावग्रहानन्तरभावी अपाय उक्तः, निश्चयावग्रहानन्तरभावी तु श्रोत्रग्राह्यत्वादिगुणतः शब्द एवायं न रूपादिरिति स्वरूपस्स स्वयमेवाऽवबोध्य इति । वह्निव्याप्यधूमवान् पर्वत इति परामर्शे प्रकारीभूतधूमहेतोर्यथा वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्याकारकानुमितौ लिङ्गोपहितलैङ्गिकमानपक्षे भानं तथाऽपायेऽपीहाप्रकारीभूतहेतूपपत्तिमानमङ्गीकर्त्तव्यमित्याशयेनाह **ईहाप्रकारीभूतहेतूपपत्तिभानमत्रेत्यादि** । अत्रेति अपाय इत्यर्थः । "केइ तयण्णविसेसावणयणमेत्तं अवायमिच्छंति । सब्भूयत्थविसेसा–वधारणं धारणं वेंति ॥१८५॥" इति भाष्यगाथोक्तभावार्थमनुरुध्याह–**अत्र केचिदपायनमित्यादि । असद्भूतार्थविशेषापनयनमेवापायमिति** विवक्षितप्रदेशे असद्भूतः–अविद्यमानोऽर्थः पुरुषादिः तस्य ये विशेषाः शिरःकण्डूयन चलन स्पन्दनादयः, तेषामपनयनं पुरोवर्त्तिनि सद्भूते स्थाण्वाद्यर्थेऽपनयनं निषेधनमसद्भूतार्थविशेषापनयनम्, तद्रूपमेवापायमित्यर्थः । पुरुषत्वव्याप्यशिरःकण्डूयनादिधर्माभाववानयमिति ज्ञानलक्षणमपायं यद्वोक्तधर्माभावप्रकारकज्ञानेन स्थाणुरेवायमिति ज्ञानमपायमिति भावः । **सद्भूतविशेषावधारणामिति** सद्भूतस्तत्र विवक्षितप्रदेशे विद्यमानः स्थाण्वादिः, तस्य विशेषाः वक्रकोटरादयस्तेषां पुरोवर्त्तिस्थाण्वादाववधारणां स्थाणुत्वव्याप्यवक्रकोटरादिदर्शनात् स्थाणुरेवायमिति

प्रकृतकोटिव्याप्यधर्मवत्ताज्ञानात्तदितरकोटिव्याप्यधर्माभावज्ञानादुभयज्ञानाच्च भवतोऽपायस्यैकत्वाविशेषात्, अन्यथा स्मृतेः पञ्चमभेदस्याधिकस्योभयज्ञानजनितस्यापायवारणासंकीर्णभेदस्य च प्रसङ्गात् । धारणामाह—धारणेत्यादि । धारणेति लक्ष्यं, प्रतिपत्तिर्यथास्वमित्यनेनाद्यं भेदं दर्शयति । एतत्काले निश्चितस्यार्थस्यार्थान्तरानुपयोगं यावद्दर्शनादप्रच्युतिः प्रतिपत्तिर्यथास्वमित्युच्यते । प्रतिपत्तिरप्रच्युतिर्यथास्वं यथाविषयम् । मत्यवस्थानमित्यनेन

निश्चयं यद्वा तैर्धर्मैरवधारणां स्थाणुरेवायमिति निश्चयमित्यर्थः । अयुक्तत्वे हेतुमाह—प्रकृतकोटिव्याप्यधर्मवत्ताज्ञानादित्यादि विवक्षितप्रदेशवर्त्तिस्थाणौ कस्यचित्प्रतिपत्तुः स्थाणुत्वव्याप्यो यो वक्रकोटरादिमत्त्वधर्मो वल्ल्युत्सर्पणवयोनिलयनादिधर्मो वा तत्प्रकारकज्ञानात् स्थाणुरेवायमित्यपायज्ञानमुत्पद्यते, कस्यचित्पुनः स्थाणुत्वेतरपुरुषत्वव्याप्यशिरःकण्डूयनादिधर्माभावप्रकारकज्ञानादेवोक्तापायज्ञानमुद्भवति, कस्यापि च पुंसः स्थाणुत्वव्याप्यवल्ल्युत्सर्पणादयो धर्मास्तामीक्ष्यन्ते न पुनः पुरुषत्वव्याप्यशिरःकण्डूयनादय इत्याकारकतदुभयप्रकारकसमूहालम्बनज्ञानादुक्तापायज्ञानं जायते, तत्सर्वं ज्ञानमपाय एव, निश्चयत्वलक्षणापायसामान्यधर्मेणैकतया भेदाभावात् । तथाऽनभ्युपगमे दण्डमाह—अन्यथेति—अविच्युतेस्स्वसमानकालिन्यपाये वासनायास्तु स्मृतावन्तर्गततया विवक्षणेनान्यत्रालब्धपदप्रचारस्मृतिरूपपञ्चमभेदस्य प्रसङ्गस्स्यात् । नन्वविच्युतिवासनास्मृतिलक्षणानां धारणाभेदत्रयाणां प्रच्युतिविरोधित्वेनैक्यतया विवक्षणान्न स्मृतेर्धारणातः पार्थक्यमिति न तया पञ्चमभेदप्रसंग इति यदि वादी ब्रूयात्तदापि दूषणान्तरमाह—उभयज्ञानजनितस्येत्यादि । अत्रेदमवधेयम् यद्यपि पुरुषत्वव्याप्यशिरःकण्डूयनाद्यभावो घटादौ व्यभिचारान्न स्थाणुत्वव्याप्यः, येन तद्रूपव्याप्यज्ञानेन स्थाणुत्वरूपव्यापकज्ञानं स्यात्, तथाप्येककोटिनियतधर्माभावज्ञानस्याप्यपरकोटिनिश्चायकत्वात्तेन स्थाणुरेवेति निश्चयः समुपजायते, अथवा शिरःकण्डूयनाद्यभावस्य पुरुषत्वाभावव्याप्यत्वेन तद्रूपव्याप्यज्ञानाऽनन्तरं पुरुषत्वाभावरूपव्यापकज्ञानात्पुरुषत्वाभावविशिष्टोच्चैस्तरत्वरूपसाधारणधर्मस्य पुरुषव्यावृत्तत्वेन स्थाणुत्वव्याप्यतया तज्ज्ञानादेवायं स्थाणुरेवेति निश्चयः, सोऽपाय एवेत्यभ्युपगन्तव्यमिति दिक् । उक्तलक्षणा धारणाऽविच्युतिवासनास्मृतिभेदात्त्रिधा भवति, अतः सभेदामपि तां—"तयणंतरं तयत्थाविच्चवणं जो य वासणाजोगो । कालंतरे य जं पुणरणुसरणं धारणा सा उ ॥ २९१ ॥" इति भाष्योक्तगाथाभावार्थगर्भितामाह—धारणामाहेत्यादिना—भिन्नविषयकज्ञानसामग्री पूर्वज्ञानसन्तानप्रतिबन्धिकेति तत्सत्त्वे भिन्नविषयकज्ञानमेव समुत्पद्यते, न तु प्रक्रान्तार्थविषयकधारावाहिकज्ञानमित्यत आह—अर्थान्तरानुपयोगं यावदिति । अप्रच्युतिरिति—अन्तर्मुहूर्त्तं यावदुपयोगसातत्यादनाश इत्यर्थः । न च धारावाहिकज्ञानसन्तानरूपायास्तस्या अप्रामाण्यम्, गृहीतग्राहित्वात्, यथा प्रथमपुरुषोच्चारितमेव वाक्यमन्यपुरुषोऽनुवदति, तत्र प्रथमपुरुषकर्तृकमेव वाक्यं तत्रार्थे प्रमाणम्, न त्वनुवादकवाक्यम्, यतोऽनुवादकः पुरुषः परेण कथमित्यमर्थ इत्येवं पृष्टस्सन्नुत्तरयति, नात्रार्थेऽहमेवं प्रष्टव्यः, प्रथमतो येन पुंसो-

द्वितीयां लब्धिरूपां धारणां कथयति । यदाऽपायं स्पर्शादेर्विषयस्य कृत्वाऽन्यत्रोपयुक्तो भवति तदाप्यसौ लब्धिरूपा धारणा समस्त्येवेति । अवधारणं चेत्यनेन तृतीयं भेदं कथयति । यदा कालान्तरे तमेव प्रागनुभूतं विषयमालम्ब्य ज्ञानमुदेति तदा तदवधारणमिति । पर्यायानाह—धारणा प्रतिपत्तिरित्यादि । धारणा प्रतिपत्तिर्नाम परिच्छिन्नेऽर्थे यावदन्यत्रोपयोगं न याति तावदनाशः । अवधारणं कालान्तरानुस्मरणं गृहीतम् । अवस्थानमित्यनेनान्यत्र पदार्थे उपयुक्तस्य लब्धिरूपा धारणा, निश्चय इति प्रतिपत्तिरित्यस्य पर्यायः । अवगम इत्ययं कालान्तरानुस्मरणरूपावधारणस्य, अवबोध इत्ययं तु मत्यवस्थानस्य लब्धिरूपस्येति । नन्वविच्युतिः प्रध्वंसानवच्छिन्ना सत्ता घटादेरिव ज्ञानस्य न

कोऽयमर्थस्स एव प्रष्टव्य इति, तथा चानुवादकवाक्यजन्यबोधस्यानुवाद्यवाक्यजन्यबोधविषयग्राहित्वेन यथा न प्रामाण्यं तथा प्रकृतेऽपीति । किञ्च प्रथमनिश्चयात्मकज्ञानेनैव तत्पूर्वसंशयनिवृत्तेर्द्वितीयज्ञानेन कार्यान्तराऽकरणेन तस्य निष्फलत्वादप्रामाण्यमिति वाच्यम्, तत्तत्कालभेदेन तत्तद्विशिष्टत्वेन स्पष्टस्पष्टतरस्पष्टतमभिन्नधर्मकवासनाजनकत्वेन वा भिन्नस्यैव स्वसजातीयस्यार्थस्य ग्रहणात्, तथा च भिन्नभिन्नस्वसजातीयार्थग्राहित्वेनापूर्वार्थग्राहकत्वात् प्रामाण्यम् । भिन्नभिन्नवासनाद्वारा दृढदृढतरदृढतमस्मरणादिलक्षणकार्यजनकतयाऽपि प्रामाण्यमिति । वस्तुतो गृहीतग्राहित्वमप्रमात्वव्यवहारे न प्रयोजकम्, किन्तु तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपकज्ञानत्वमेवेति यथार्थावगाहिन्यास्तस्या नाप्रामाण्यम्, अत एव तज्जन्यस्मृतेरपि प्रामाण्यमिति दिक् । द्वितीयां लब्धिरूपामिति—स्मृतिज्ञानावरणीयकर्मक्षयोपशमरूपा सा यद्यपि न ज्ञानरूपा तथाप्यपायकार्यत्वेन स्मृतिकारणत्वेन ज्ञानोपचारं तत्र कृत्वा धारणाभेदत्वेनात्रोक्तेति भावः । यदा कालान्तरे तमेव प्रागनुभूतमित्यादि-समानविषयत्वप्रत्यासत्त्याऽनुभवस्मृत्योः कार्यकारणभावात् पूर्वानुभवविषयविषयकं स्मृतिरूपं प्रत्यभिज्ञानरूपं वा यदा ज्ञानमुद्भवति तदा तदुभयमवधारणमित्युच्यते, नातस्मृतेरिव प्रत्यभिज्ञानस्यापि पूर्वापायजन्यत्वेन तद्भेदेनाधिकभेदप्रसङ्गः, धारणातृतीयभेदस्मृतिपदेन तत्तात्रिषयकज्ञानविशेषग्रहणात् प्रत्यभिज्ञानस्यापि तद्रूपत्वादिति भावः । अत्र धारणाभेदत्रयाणां भिन्नलक्षणानामपि धारणात्वेनावग्रहभेदद्वयस्यावग्रहत्वेनैवैक्यान्नाधिकभेदकल्पनाप्रसङ्ग इति भावनीयम् । कालान्तरानुस्मरणरूपावधारणस्येत्यस्य लब्धिरूपस्येत्यस्य च पर्याय इत्यनेनान्वयः । अविच्युतिवासनास्मृत्यात्मकभेदत्रयवती धारणाऽपायान्नातिरिच्यते, तस्या अपायातिरिक्तत्वेनाऽघटमानत्वादिति मतिज्ञानस्य भेदान्तरात्मिका धारणा नास्ति किन्त्वपायविशेषरूपैव सेत्याशयेन पर आशङ्कते—नन्वविच्युतिरित्यादि । प्रध्वंसानवच्छिन्ना सत्तेति—अपायज्ञानस्य यावन्न नाशस्तावत्कालीनसत्तेत्यर्थः । घटादेरिव ज्ञानस्य न भेदान्तरमिति घटादिर्यावन्न नश्यति तावत्कालीनघटसत्ता घटात्मिकैव, न तु तत्तत्क्षणभेदेन भिन्ना, तद्वदुक्तलक्षणा स्वरूपसत्ता तावत्कालीनाऽपायस्वरूपान्नातिरिक्ता किन्त्वपायविशेषरूपैवेति ज्ञानस्य नाविच्युतिलक्षणं भेदान्तरम्, न हि काल-

भेदान्तरम्, भेदान्तरं चेद्बौद्धमतप्रवेशः, सोऽपि भेदाग्रहसादृश्यादिरूपेण न भेदबुद्धिमाधातुमलम्, एतेनोपयोगसातत्यलक्षणाऽविच्युतिर्निरस्ता, घटादिक्षणसातत्यतुल्ययोगक्षेमत्वात्, या तु तस्मिन् घटाद्युपयोगे उपरते सति सङ्ख्येयमसङ्ख्येयं वा कालं वासनाभ्युपगम्यते, इदं तदेवेति लक्षणा स्मृतिश्च, सा मत्यंशरूपा धारणा न भवति, मत्युपयोगस्य प्रागेव विरतत्वात्, कालान्तरेण जायमाने चोपयोगेऽन्वयमुखस्यापायस्यैव प्रवृत्तेरिति नास्ति धारणाख्यो भेदः कश्चिदिति चेत्, अत्रोच्यते, न हि घटादिवदुत्पन्नस्य ज्ञानस्य यावत्कालमेकरूपेणैवावस्थानम्, किन्तु प्रदीपस्यापरापरकलिकापर्यायैरिवापरापरविषयोल्लेखपर्यायैरेव, ततश्च यस्मिन् समये स्थाणुरेवायमिति निश्चयरूपोऽपायः प्रवृत्तः, ततः समयादूर्ध्वमपि स्थाणुरेवायं स्थाणुरेवायमित्यविच्युत्या याऽन्तर्मुहूर्तं क्वचिदपायप्रवृत्तिः सा प्रथमप्रवृत्तापायादस्यधिका स्वीकर्तव्या । एतेन धारावाहिकं व्याख्यातम् । दीर्घकालमविच्युतस्यैव तदर्थत्वात् । किं च स्पष्टस्पष्टतरस्पष्टतमभिन्नवासनाजनकवस्तुविषयत्वेनाप्यपायकलिकारूपाऽविच्युतेर्भिन्नत्वमादर्तव्यम् । वासनापि स्मृतिविज्ञानावरणकर्मक्षयोपशमरूपा तद्विज्ञानजननशक्तिरूपा वा कार्यान्यथानुपपत्त्यैव कल्पनीया । स्मृतिरपि इदं वस्तु तदेव यत्प्रागुपलब्धं मयेत्याकारा पूर्वप्रवृत्तापायान्निर्विवादमधिकैव,

भेदेन वस्तुभेदो नाम, तथाऽनभ्युपगमेऽतिप्रसङ्गमाह—**भेदान्तरं चेद् बौद्धमतप्रवेश** इति—कालभेदेन वस्तुभेदाभ्युपगमे क्षणभङ्गप्रसङ्गेन बौद्धमतसाम्राज्यं स्यादिति भावः । नन्वेवं सति स भेदो भेदबुद्धिं कथं न विदधातीत्याशङ्कायामाह—**सोऽपीति** । ज्ञानस्य प्रतिक्षणभेदेन भेदोऽपि पूर्वोत्तरज्ञानव्यक्त्योः पूर्वोत्तरज्ञानव्यक्तीनां वा भेदाग्रहात् सादृश्याच्च न भेदबुद्धिमाधातुं समर्थ इति भावः । **घटादिक्षणसातत्यतुल्ययोगक्षेमत्वादिति**—घटादिक्षणसातत्यं यथा घटादिरूपमेव न ततो भिन्नं तथोपयोगसातत्यलक्षणाऽविच्युतिरप्यपाय एवान्तर्भूतेति न ततो व्यतिरिक्तेति भावः । वासना यदि वस्तुविकल्परूपा चेत्तदा तन्निराकरणे हेतुमाह—**मत्युपयोगस्य प्रागेव विरतत्वादिति** । संख्येयमसंख्येयं वा कालं वासनाया इष्टत्वादेतावन्तं कालं तद्वस्तुविकल्पाऽयोगादिति भावः । **स्मृतिज्ञानावरणकर्मक्षयोपशमरूपा तज्ज्ञानजननशक्तिरूपा वा सा** चेत्तदा तस्या अज्ञानरूपत्वेन मतिभेदत्वाऽसम्भव एवेति । या चाऽनुभूतार्थस्य कालान्तरोपयोगलक्षणस्मृतिः, तदेवेदमित्याकारा सापि पूर्वोत्तरव्यक्त्यभेदावगाहनमुखेन जायमाना निश्चयरूपाऽपायात्मिकैवेत्यभिप्रेत्याह **कालान्तरेणेति** । **नास्ति धारणाख्यो भेदः कश्चिदिति** । तथा च मतिस्त्रिधैव न चतुर्धेति पूर्वपक्षाभिप्रायः । ग्रन्थकारस्समाधत्ते—**अत्रोच्यत इत्यादिना** । **अपरापरविषयोल्लेखपर्यायैरेवेति**—क्षणभेदेनापरापरक्षणविशिष्टस्य विषयस्यापि भिन्नत्वमेव, विशेषणभेदेन तद्विशिष्टस्यापि भेदादिति भिन्नभिन्नविषयाऽवगाहनपर्यायैरेवेत्यर्थः, अस्यावस्थानमित्यनेनावृत्त्या सम्बन्धः । **अविच्युत्येति**—अविच्छिन्नप्रवाहरूपतयेत्यर्थः । **दीर्घकालमविच्युतस्यैवेति** दीर्घकालं यावत्समानविषयकाऽनुव्यवज्ञानधाराप्रवाहस्यैवेत्यर्थः । हेत्वन्तरमप्याह—**किञ्चेति** । **तद्विज्ञानजननशक्तिरूपेति**—स्मृत्यात्मकविज्ञानोत्पादानुकूलशक्तिरूपेत्यर्थः । ननु भवन्तु तेऽपि धारणानां भेदत्रयात्मकत्वेन

पूर्वप्रवृत्तापायकाले तस्या अभावात्, साम्प्रतिकापायस्य च वस्तुनिश्चयमात्रफलत्वात्पूर्वापरदर्शनानुसन्धानायोगात्, तस्माद्धारणात्रयमप्येतद्धारणात्वेनानुगतमवग्रहद्वयमिवावग्रहत्वेनावश्यकमभ्युपगन्तव्यमिति न मतिज्ञानस्य भेदचतुष्ट्वव्याकोप इति ध्येयम् । अवग्रहादीना सूत्रे कर्तृसाधनानां श्रुतत्वात्तत्कर्माभिधानद्वारा भेदानाह

देवेत्यत आह–तस्माद् धारणात्रयमप्येतदित्यादि । एतच्च पूर्वमेव विवृत्तमिति नेह प्रतन्यत इति ॥ १५ ॥

षोडशसूत्रावतरणिकामाह अवग्रहादीनामित्यादिना । सूत्रे "अवग्रहेहापायधारणाः" इति पूर्वसूत्रे । तत्कर्माभिधानद्वारा भेदानाहेति बह्वाद्यर्थानवगृह्णातीत्यवग्रहः, ईहत इतीहा, अपैतीत्यपायः, धारयतीति धारणा इत्येवं कर्तृप्रत्ययनिष्पन्नावग्रहेहाऽपायधारणाविषयीभूतबह्वाद्यर्थात्मककर्माभिधानद्वाराऽवग्रहादीनामेकैकानां प्रभेदनिश्चयार्थं भेदानाहेत्यर्थः । अवग्रहादिचतुर्णां मतिज्ञानत्वेनैक्येऽपि यथा स्वस्वविषयभेदापेक्षयैव भेदस्तथा तेषामवग्रहादीनामेकैकानामपि विषयभेदप्रयोज्यभेदप्रतिपिपादयिषया कानर्थानवगृह्णाति कानर्थानीहते इत्यादिकर्माऽऽकाङ्क्षाप्रयोज्यावग्रहेहादिविषयात्मकबह्वादिकर्माभिधानद्वारा भेदानाहेति भावः ।

## सूत्रम् बहुबहुविधक्षिप्रानिश्रितसंदिग्धध्रुवाणां सेतराणाम् ॥ १ ॥ १६ ॥

( भाष्यम् ) अवग्रहादयश्चत्वारो मतिज्ञानविभागा एषां बह्वादीनामर्थानां सेतराणां भवन्त्येकश. । सेतराणामिति सप्रतिपक्षाणामित्यर्थः । बह्ववगृह्णाति । अल्पमवगृह्णाति । बहुविधमवगृह्णाति । एकविधमवगृह्णाति । क्षिप्रमवगृह्णाति । चिरेणावगृह्णाति । अनिश्रितमवगृह्णाति । निश्रितमवगृह्णाति । अनुक्तमवगृह्णाति । उक्तमवगृह्णाति । ध्रुवमवगृह्णाति । अध्रुवमवगृह्णाति । इत्येवमीहादीनामपि विद्यात् ॥

( यशो० टीका ) भाष्ये अवग्रहादयश्चत्वारो मतिज्ञानस्य प्रकृतस्य विभागा भेदाः, एषां बह्वादीनामर्थानां सेतराणामबह्वादिप्रतिपक्षयुक्तानाम्, एकशः प्रत्येकं, ग्राहका भवंतीत्यर्थः । उक्तमेवार्थं प्रपञ्चयति–बह्ववगृह्णातीत्यादिना । नन्ववग्रहादयः प्रथमान्ताः श्रुता पूर्वसूत्रे बह्वादयश्चेह षष्ठ्यन्ता इति तत्रैवमर्थः कथनीयो भवति–बहोरर्थस्यावग्रहोऽल्पस्यावग्रह इत्यादि, उच्यते, बहोरवग्रहो बहुं गृह्णातीत्यनयोरर्थाऽभेदान्नायं दोष. । बहोरवग्रह इत्यस्य बहुविषयकोऽवग्रह इत्यर्थः । बहुमवगृह्णातीत्यत्र च बहुनिरूपितावग्रहीयविषयितावानिति । तत्र स्पर्शनावग्रहस्तावदेवं बहुमवगृह्णाति, शय्यायामुपविष्टः पुमांस्तत्स्थयोषित्पुष्पचन्दनवस्त्रादिस्पर्शं बहुसन्तमेकैकं भेदेनावबुध्यतेऽयं योषित्स्पर्शोऽयं

सम्बन्धार्थे षष्ठी, सम्बन्धश्च ज्ञानज्ञेययोर्विषयविषयिभावात्मेति घटस्य ज्ञानमिव बहोरवग्रह इत्यत्रापि विषयत्वलक्षणषष्ठ्यर्थममभिप्रेत्याह–बहोरवग्रह इत्यस्येति । बहुमवगृह्णातीत्यस्य भावार्थमाह बहुनिरूपितावग्रहीयविषयितावानिति–अवग्रहीयविषयितेत्यस्यावग्रहनिष्ठविषयितेत्यर्थः । विषयविषयित्वयोश्च निरूप्यनिरूपकभावसम्बन्ध इति बहुनिरूपितेति तद्विशेषणम्, तद्वत्त्वञ्च स्वरूपसम्बन्धेनावग्रहे वाच्यमिति । भेदेनेति–स्वस्वासाधारणधर्मप्रकारेण, पृथक्पृथग्जातिप्रकारेणेति यावत् । "अत्थोग्गहो जहन्नो समयं" इति विशेषावश्यक-

तल्लग्नपुष्पस्पर्शोऽयं च तद्गात्रानुलग्नचन्दनस्पर्शोऽयं चैतत्परिहितवस्त्रस्पर्शोऽयमेतदावद्धरसनास्पर्श इति । नन्ववग्रह एकसामायिकः शास्त्रे निरूपितो न चैकस्मिन् समये एकैकावग्रह एवंविधो युक्तोऽल्पकालत्वादिति चेत्, सत्यम्, एवमेवैतत्, नैश्चयिकोऽवग्रह एकसामायिक एव, व्यावहारिकं चावग्रहमङ्गीकृत्येदमुच्यते यदुत तत्तत्स्पर्शाकारतानिरूपितेदमाकारताकः स्पर्शीयो बह्ववग्रह इति, ताश्चाकारताः क्रमवत्य एव, तत्तत्क्षणावच्छेदेनैव ज्ञाने इदमाकारतोत्पत्तेः, आनुपूर्व्येकत्वाच्च पदवाक्यादाविव तदवग्रहेऽप्येकत्वं भावनीयम् । बह्वित्यस्य प्रतिपक्षं कथयति–अल्पमवगृह्णाति यदा तेषामेव योषिदादिस्पर्शानां यं कंचिदेकं स्पर्शमवगृह्णात्यन्यान् सतोऽपि क्षयोपशमापकर्षान्न गृह्णाति तदा अल्पमेकमेव गृह्णातीत्युच्यते । बहुग्रहेऽपि बहुत्वव्याप्यसंख्याऽग्रहात्प्रत्येकं तत्तज्जात्यग्रहाद्वाऽबहुत्वमित्यन्ये । बहुविधमवगृह्णाति–बह्व्यो विधा यस्य स यथा तं, यदा योषिदादिस्पर्शमेकैकं शीतस्निग्धमृदुकठिनादिरूपं गृह्णाति, तदा बहुविधगुणोपेतग्रहणाद् बहु-

भाष्यवचनान्नैश्चयिकार्थावग्रहस्यैकसमयमात्रकालत्वेन कारणे कार्यधर्मोपचारं कृत्वोपचारवृत्त्या बह्वाद्यवग्रहभेदो घटमानोऽपि मुख्यवृत्त्या न घटते, घटते च पूर्वज्ञानापेक्षया विशेषग्राहकत्वेनापायरूपे उत्तरज्ञानापेक्षया सामान्यग्राहकत्वेन व्यावहारिकार्थावग्रह एव, तस्यान्तर्मुहूर्त्तिकत्वेन प्रतिक्षणं भिन्नाभिन्नाकारतयोत्पत्तेः, विशेषग्राहकत्वेन बहुबहुविधादिग्रहणस्यापि घटमानत्वादित्याशयेन समाधत्ते सत्यम्, एवमेतत्, नैश्चयिकोऽवग्रह एकसामयिक एवेत्यादि । अत्र व्यञ्जनावग्रहादीनां द्वादशविधत्वात्तत्र बह्वादिविशेषणविशिष्टत्वमेकसन्तानगामित्वरूपयोग्यतां पुरस्कृत्य सम्भवाभिप्रायेण ज्ञेयमित्युक्तं ज्ञानार्णवे इति । व्यञ्जनावग्रहादयः कारणमपायादीनाम्, तानन्तरेणाऽपायाद्यभावात्, ततश्चापायादिगतं बह्वादिपरिज्ञानं तत्कारणभूतेषु व्यञ्जनावग्रहादिष्वपि योग्यतयाऽभ्युपगन्तव्यम्, न हि सर्वथाऽविशिष्टात् कारणाद्विशिष्टं कार्यमुत्पत्तुमर्हति, कोद्रवबीजादेरपि शालिफलादिप्रसङ्गादिति विशेषावश्यकभाष्यदशोत्तरत्रिशततमगाथाटीकायामुक्तमिति । ननु व्यावहारिकबह्ववग्रहस्याप्युक्तप्रकारेण स्वस्वासाधारणधर्मेण भिन्नभिन्नयोषित्पुष्पचन्दनवस्त्रादिस्पर्शावगाहित्वेन भिन्नभिन्नसमयावच्छेदेन विचित्रक्षयोपशमोत्कर्षबलेन भिन्नभिन्नाकारतोत्पत्तेराकारभेदेनाकारिणोऽपि भेदात्तस्य भेदापत्त्यैकत्वक्षतिरित्याशङ्कां मनसि धृत्वा तदुत्तरमाह आनुपूर्व्यैकत्वाच्चेत्यादि । बहुविषयकावग्रहस्य पूर्वोत्तरज्ञानानुपूर्व्या एकत्वादेवैकत्वमिति भावः । तत्र दृष्टान्तमाह पदवाक्यादाविवेति । अन्याचार्यीयमतमाह बहुग्रहेऽपीत्यादि । अन्यस्त्वल्पक्षयोपशमत्वात्तत्समानदेशोऽप्यबहुमवगृह्णातीत्यत्र हेतुमाह बहुत्वव्याप्येत्यादि । योषित्स्पर्शे ये ये शीतत्वस्निग्धत्वमृदुत्वादयो बहुविधधर्मास्सन्ति तत्तद्धर्मोपेतं तं जानाति, एवं योषित्संलग्नपुष्पादिस्पर्शमपि तद्गतशीतत्वमृदुत्वादिबहुविधधर्मोपेतं क्षयोपशमविशेषाद् जानाति तदा बहुविधावग्रह इति सिद्धान्ते गीयत इत्याशयेनाह बहुविधमवगृह्णातीत्यादि । बह्ववग्रहादितो बहुविधावग्रहादेर्विशेष्यांशावगाहित्वसाम्येऽपि प्रकारांशावगाहनेऽस्ति वैलक्षण्यं, बह्ववग्रहाद्यपेक्षया बहुविधावग्रहादेरेकैकस्मिन्नपि विशेष्ये बहुधर्मप्रकारावबोधरूपत्वादिति भावः । तथा चाशेषस्वावि-

विधावग्रह इत्यर्थः । गुणा जात्यादिरूपाः । यदा तु योषिदादिस्पर्शमेकैकगुणसमन्वितं शीतोऽयमिति वा स्निग्धोऽयमिति वा मृदुरयमिति वेत्यवच्छिनत्ति तदा **एकविधमवगृह्णातीत्युच्यते** । कोलाहलप्रत्यक्षं प्रत्येकं तत्तज्जात्युपरागेण बहूनां ग्रहणं बह्ववग्रह इति पक्षेऽबहुमध्ये, अन्यथा त्वेकविधमध्येऽन्तर्भावनीयम्, अगृहीतकत्वादिनानाशब्दसमुदायस्यैव कोलाहलपदार्थत्वात्, कोलाहले दोषविशेषेण प्रतिबन्धान्न कत्वादि-प्रत्यक्षमिति तु मन्दम्, बहुबहुविधक्षयोपशमवतस्तदापि तत्प्रत्यक्षात् । न च कोलाहले कत्वादिग्रहवारणाय तत्तद्दोषाभावानां तत्तत्पुरुषीयकत्वादिप्रत्यक्षहेतुत्वमिति नैयायिकादिकल्पितं ज्यायः, अनन्तदोषाभावाना हेतुत्वमपेक्ष्यानुगतक्षयोपशमहेतुताया एव युक्तत्वात् । तस्य हि कार्यतावच्छेदकं नानाविषयस्थलीयनाना-धर्मप्रकारकप्रत्यक्षत्वमिति कार्यतावच्छेदकेऽपि लाघवमेवमाश्रितं भवति, प्रतिनियतद्वित्रादिधर्मप्रकारकबहु-विधप्रत्यक्षानुरोधेन च बहुविधत्वादिव्याप्यधर्मावच्छिन्नक्षयोपशमविशेषस्य हेतुत्वमावश्यकम्, दोषाभावे जातिरूपविशेषासम्भवात्, तथा च **यद्विशेष** इति न्यायेन सामान्यतोऽपि क्षयोपशमस्यैव हेतुत्वं युक्तमिति विभावनीयं प्रामाणिकैः । तमेव भूयो योषिदादिस्पर्शमाशु स्वेनात्मना यदावच्छिनत्ति तदा **क्षिप्रमवगृह्णातीति** भण्यते । यदा तु तं बहुना कालेनावच्छिनत्ति तदा चिरेणावगृह्णातीत्युच्यते, स्वल्पास्वल्पेहा कृतोऽत्र विशेषो द्रष्टव्यः । **अनिश्रितमवगृह्णातीति** निश्रितो लिङ्गप्रमितोऽभिधीयते, यथा यूथिकाकुसुमानामत्य-न्तशीतमृदुस्निग्धादिरूपः स्पर्शोऽनुभूतस्तेनानुमानेन लिङ्गेन विना यदा तं विषयं परिच्छिनत्ति तदाऽनिश्रि-तमवगृह्णातीत्युच्यते, अनिश्रितमलिङ्गमित्यर्थः । यदा त्वेतस्मादाख्याताल्लिङ्गात्परिच्छिनत्ति तदा

षयनिष्ठानेकाऽसाधारणव्याप्यबहुतरधर्मावगाहि ज्ञानं बहुविधावग्रह इति लक्षणं पर्यवस्यति । **जात्यादिरूपा इति**–शीतत्वस्निग्धत्वादिजातिरूपा इत्यर्थः । **अबहुमध्ये इति**–तत्तज्जा-त्युपरागेण बहूनां विषयाणां ग्रहणाभावात् कोलाहलप्रत्यक्षे बहूनां विषयाणां प्रातिस्विकधर्म-प्रकारकग्रहत्वं बह्ववग्रहत्वमिति लक्षणसङ्गमनाभावेन न तद् बह्ववग्रहरूपमिति तदबह्ववग्रहमध्येऽ-न्तर्भावनीयम्, कोलाहलोऽयं श्रूयत इत्येवमव्यक्तस्वरूपतया जानाति, अल्पक्षयोपशमत्वात्, न तु विभिन्नस्वस्वजातिरूपेणेति हेतोस्तद्भिन्नज्ञानत्वात्, तत्त्वश्चासाधारणधर्मानुपरागेण बहुविषयग्रा-हित्वमबह्ववग्रहत्वम् । तस्य च लक्षणस्य विभिन्नजातीयानेकशब्दसमुदायो हि कोलाहल इति तेषां सर्वेषां शब्दानां स्वस्वाऽसाधारणधर्मानुपरागेणाऽव्यक्तस्वरूपेण नाना शब्दा एते इति सामान्यज्ञानसद्भावेन तत्र सङ्गतिर्भावनीयेति । **अन्यथेति**–विभिन्नजातीयानां तेषां शब्दानां मध्ये अशेषस्वविषयनिष्ठाऽसाधारणधर्मव्याप्यस्वल्पतरधर्मग्रहणे इत्यर्थः । **लाघवमिति** तत्त-त्पुरुषीयकत्वादिप्रत्यक्षाऽनिवेशादिति भावः । **दोषाभावे जातिरूपविशेषासम्भवादिति**-दोषाभावस्य तुच्छरूपत्वेन तत्र तत्तत्पुरुषीयकत्वादिप्रत्यक्षकारणतावच्छेदकजातिरूपविशेषाऽस-म्भवादित्यर्थः । **यद्विशेष इति न्यायेनेति**–यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपीति न्यायेनेत्यर्थः । **आश्विति**–शीघ्रमित्यर्थः, झटित्युपनतसामग्रीकत्वादिति भावः । **स्वेनात्मे-नेति**–स्वगताऽसाधारणधर्मेणेत्यर्थः, **बहुना कालेनेति** कालान्तरावच्छेदेनैव तत्सामग्रीस-द्भावादिति भावः । अनिश्रितमित्यस्यार्थमाह **अलिङ्गमित्यर्थ इति** यत्र लिङ्गनिश्रामपेक्षते

**निश्रितमवगृह्णातीति** भण्यते । तद्विषयकानुमितिसामग्र्यां सत्यां तल्लिङ्गकप्रत्यक्षेच्छया जायमानं प्रत्यक्षं तल्लिङ्गनिश्रितमिति बोध्यम् । तेन न पर्वतो वह्निमानिति प्रत्यक्षसत्त्वे धूमलिङ्गकवह्न्यनुमित्सया धूमलिङ्गेन जायमानानुमितेर्निश्रितावग्रहत्वम् ॥ अत्र स्थले **उक्तमवगृह्णाति अनुक्तमवगृह्णातीति** विकल्पौ कैश्चिदुक्तौ, तौ चोक्तानुक्तत्वयोः शब्दधर्मत्वेन श्रोत्रावग्रहविषयावेव, न सर्वव्यापिनाविति त्यक्तौ । यदि च रूपविशेषवान्मणिः पद्मराग इत्युपदेशसहकृतचक्षुरादिजन्योऽयं पद्मराग इत्याद्यवग्रहे उक्तत्वमन्यत्र चानुक्तत्वम्, उक्तोपदेशस्य तत्पदवाच्यत्वोपमितावेवोपक्षय इति तु लिङ्गनिश्रितस्थलेऽपि शक्यं वक्तुम्, तत्राप्येतल्लिङ्गवानेतत्पदवाच्य इत्याभिप्रायिकोपदेशस्य कल्पयितुं शक्यत्वादित्युद्भाव्यते तदा निश्राऽस्ति जनकत्वेन यत्र स निश्रित इति व्युत्पत्तेर्निश्रापदेन च लिङ्गोपदेशयोर्द्वयोरपि संग्रहान्न दोषः । अतस्मिंस्तद्ग्रहो निश्रित इतरोऽनिश्रित **इत्यपरे । यद्भाष्यसुधांभोनिधिः**—'निरिराए विसेसो वा परधम्मेहिं विमिस्सं णिस्सिअमविणिस्सिअं इयरं । ' निश्रिते विशेषो वा वक्तव्यः । परधर्मैरश्वादिवस्तुधर्मैर्निश्रितं युक्तं गवादिवस्तु गृह्णतो निश्रितं भवति । गव्यश्वादिधीर्निश्रितमित्यर्थः । इतरद्गवि गोज्ञानमानिश्रितमित्यर्थः । **निश्चितमवगृह्णातीति** निश्चितं सकलसंशयादिदोषरहितम्, यथा तमेव योषिदादिस्पर्शमवगृह्णज्ज्ञानं योषित एव पुष्पाणामेव चन्दनस्यैवायं स्पर्श इति निश्चयव्यापारे प्रवर्तते । **अनिश्चितमवगृह्णाति**—यदा तमेव स्पर्शं संशयापन्नः परिच्छिनत्ति, अत्र धर्म्यंशे निश्चय एव योषिदादिसम्बन्धांशे तु संशयो बोध्यः,

तदनिश्चितमिति भावः । **तल्लिङ्गकप्रत्यक्षेच्छया जायमानमित्यस्य फलमाह तेनेति । निश्रितावग्रहत्वमिति**—अस्य नेत्यनेनान्वयः । धूमलिङ्गपरामर्शाव्यवहितोत्तरजायमानायाः पर्वते वह्नेः प्रत्यक्षं मे जायतामितीच्छाया अभावादिति भावः । **इत्याद्यवग्रहे उक्तत्वमिति**—मुख्यवृत्त्योक्तत्वं शब्दात्मकविषयगतमेव, अवग्रहे तूपचारत उक्तमिति भावः । रूपविशेषवान् मणिः पद्मराग इत्युपदेशवाक्यं पद्मरागपदवाच्यत्वविषयकोपमितावेव जनकं, न तु चक्षुरादिजन्येऽयं पद्मराग इति प्रत्यक्षे इति नोपदेशजन्यत्वेन प्रत्यक्षस्योक्तत्वमिति यदि कश्चिद् ब्रूयात्तदा लैङ्गिकस्थलेऽप्येतल्लिङ्गवान् एतच्छब्दवाच्य इत्युपमितावेव लिङ्गज्ञानस्य हेतुत्वं न तु लैङ्गिकप्रत्यक्षे इत्यपि वक्तुं शक्यं स्यात्, अतो यथा तस्य प्रत्यक्षस्य लिङ्गज्ञानजन्यत्वं तथा चक्षुरादिजन्येऽयं पद्मराग इति प्रत्यक्षेऽप्युपदेशजन्यत्वं स्वीकरणीयमित्यपराशङ्कोत्तराभ्यामाह **उक्तोपदेशस्य तत्पदवाच्यत्वोपमितावित्यादि** । अपरमतेन निश्रितानिश्रितयोर्व्याख्यानान्तरलक्षणविशेषमाह—**अतस्मिंस्तद्ग्रहो निश्रित इति । इतरोऽनिश्रित इति** वदति तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपको ग्रह इति तात्पर्यकोऽनिश्रित इत्युच्यत इत्यर्थः । **सकलसंशयादिदोषरहितमिति** प्रामाण्यसंशयादिरूपविषयसंशयसामग्र्यनास्कन्दितमित्यर्थः । **धर्म्यंशे निश्चय एवेति** स्पर्श एवेत्येवं स्पर्शधर्मिणि निश्चय एवेत्यर्थः । **संशय इति**—

तेन नापायस्य निश्चयरूपत्वव्याघातः, ज्ञानप्रामाण्यादिसंशयादर्थसंशयपरिणते वाऽवग्रहे सन्दिग्धत्वं भावनीयम् । भूतलं घटवदिदं ज्ञानं प्रमा न वा भूतलं घटवन्न वेत्येतेषामेकोपयोगत्वात् । ध्रुवमवगृह्णाति सत्युपयोगे यदाऽसौ विषयः स्पृष्टो भवति तदा तमवगृह्णात्येवेत्यर्थः । अध्रुवमवगृह्णाति सतीन्द्रिये सति चोपयोगे सति च विषयसम्बन्धे कदाचित्तं विषयं तथा परिच्छिनत्ति कदाचिन्नेत्यर्थः । ननु कारणसामग्र्ये सति कदाचिदभावप्रतियोगित्वं नाध्रुवत्वम्, वदतो व्याघातात् । यत्किञ्चित्कारणवैकल्ये च तथात्वमन्यत्राप्यतिप्रसक्तम्, न च क्षयोपशमविशेषजन्यतावच्छेदकतयैवाध्रुवत्वजातिसिद्धेर्न प्रश्नावकाश इत्यपि वक्तुं शक्यम्, कार्यगतविशेषासिद्धौ कारणगतविशेषासिद्धेरिति चेत् । मैवम् । इन्द्रियोपयोगविषयादिसत्त्वेऽपि कदाचिद्भावाभावाभ्यामभिव्यज्यमानस्याध्रुवत्वस्य जातिविशेषस्यानुभवसिद्धस्यैवाश्रयणात्तदवच्छिन्ने क्षयोपशमविशेषहेतुताकल्पनस्य चोत्तरकालिकत्वेन बाधकाभावादिति दिग् । इत्येवमिति यथा विषयस्य बह्वादेर्भेदाद् द्वादशप्रकारोऽवग्रहोऽभिहितः

अयं स्पर्शो योषितोऽन्यस्य वेति संशय इत्यर्थः । तेनेति–धर्म्यंशे निश्चय एवेत्युक्त्येत्यर्थः । अपायस्येति–निश्चयनयापेक्षयाऽपायस्योत्तरविशेषापेक्षया सामान्यग्राहितया व्यवहारनयापेक्षयाऽवग्रहरूपस्येत्यर्थः । न निश्चयरूपत्वव्याघात इति–स्पर्शत्वरूपेण स्पर्शधर्मिणि निश्चयरूपत्वादपायस्येति भावः । नन्ववग्रहस्य निश्चयात्मकत्वेन सिद्धान्तेऽभ्युपगमादनिश्चितमवगृह्णातीत्युक्त्या तस्य संशयरूपत्वे कथं, निश्चयात्मकत्वमुपपद्यते प्रकारांशे सन्देहरूपत्वेऽपि धर्म्यंशे निश्चयरूपत्वमस्त्येवेति चेत्तर्हि संशयमात्रस्य निश्चयरूपत्वं स्यात्, ज्ञानमात्रस्य धर्म्यंशे निश्चयरूपत्वादित्याशङ्कायां पक्षान्तरमाह–ज्ञानप्रामाण्यादिसंशयादित्यादि । भूतलं घटवदित्येकं ज्ञानमिदं ज्ञानं प्रमा न वेति द्वितीयं ज्ञानं भूतलं घटवन्न वेति तृतीयं ज्ञानमित्येतत्त्रयाणां ज्ञानानां दीर्घोपयोगरूपत्वेनैक्यात् ज्ञानप्रामाण्यसंशयोपजातार्थसंशयरूपाऽन्तिमज्ञानस्य संशयरूपत्वेन तदभिन्नस्य निश्चयरूपस्यापि प्रथमज्ञानस्य संशयरूपत्वं तद्वदत्रापि पूर्वं निश्चयात्मकतयैवावग्रहो भवति पश्चात्तत्र प्रामाण्यसन्देहादर्थसन्देह इति तदात्मकतया परिणते तस्मिन् प्रथमज्ञाने निश्चयरूपेऽपि सन्दिग्धत्वं भावनीयमित्यर्थः । ध्रुवमवगृह्णातीत्यस्यार्थमाह–सत्युपयोगे यदेत्यादि । असौ विषयः स्पृष्ट इति–स्पर्शाख्यविषयः स्पर्शनेन्द्रियसम्बद्ध इत्यर्थः । विशेषावश्यकबृहद्वृत्तौ ध्रुवम्, कोऽर्थः ? अत्यन्तं, न तु कदाचिदिति । इदमुक्तं भवति–यथैकदा बह्वादिरूपेणावगतं सर्वदैव तथाऽवबुद्ध्यमानो ध्रुवमवगृह्णातीत्युच्यते । यस्तु कदाचिद् बह्वादिरूपेण कदाचित् त्वबह्वादिरूपेण सोऽध्रुवमवगृह्णातीत्येवमर्थः कृत इति । यदेकदा गृहीतं तत् सर्वदैवावश्यं गृह्णाति, न पुनः कालान्तरे तद्ग्रहणे परोपदेशादिकमपेक्षते तद् ध्रुवम्, यत्पुनः कदाचिदेव गृह्णाति न सर्वदा तदध्रुवम् । इत्युक्तं प्रथमकर्मग्रन्थटीकायामिति । तथा च कालान्तरेऽपि परोपदेशादिघटितविजातीयसामग्र्यनपेक्षतया सिद्धमेतत् सर्वकालं सजातीयसामग्रीनियतोत्पत्तिकसमानविषयकज्ञानत्वं ध्रुवावग्रहत्वम्, अतादृशत्वमध्रुवावग्रहत्वमिति । यथा विषयस्य बह्वादेर्भेदाद् द्वादशप्रकारोऽवग्रहोऽभिहित इति शब्दलक्षणं विषयमाश्रित्य बह्वादिद्वादशविधावग्रहार्थमाह

क्षयोपशमोत्कर्षापकर्षवशादेवमीहादीनामपि जानीयाद्भेदमिति शेषः । वह्वीहते ऽल्पमीहते इत्याद्याकारेण ग्राह्यभेदश्चायं यद्यपि ग्राहककृत इवावभासते तद्भेदश्च ग्राह्यकृत इत्यन्योऽन्याश्रयः, तथाप्यनादौ संसारेऽस्य बीजाङ्कुरस्थानीयत्वेनादोषः । इदानीमेषामेवावग्रहादीनां विषयं निर्धारयन्नाह

## सूत्रम् अर्थस्य ॥ १ ॥ १७ ॥

( भाष्यम् ) अवग्रहादयो मतिज्ञानविकल्पा अर्थस्य भवन्ति ॥

( यशो० टीका ) अर्थस्येति–कस्य विषयस्यावग्रहादयो ग्राहका इति यच्छङ्कसे, तत्रार्थस्येत्युत्तरम् । अर्थश्च स्पर्शरसगन्धवर्णशब्दात्मकः । ननु यद्येवं स्पर्शादेर्विषयस्य ग्राहका अवग्रहादयोऽभ्युपगम्यन्ते न तर्हि द्रव्यस्य ज्ञानं चक्षुरादिना स्यात्, मैवम्, स्पर्शादीना द्रव्यपर्यायत्वेन पर्यायग्रहणे द्रव्यग्रहणावश्यकत्वात्, एकाधिकरणावच्छिन्नाना विशेषाभावानां सामान्याभावत्वस्येव पर्यायाणा द्रव्यत्वस्य

च भाष्यकारोऽपि–"नाणासद्दसमुहं, वहुं पिहं मुणइ भिन्नजाईयम् । वहुविहमणेगभेयं, एक्केक्कं निद्धमहुराई ॥३०८॥ खिप्पमचिरेण तं चिय, सरूवओ जं अणिस्सियमलिङ्गं । निच्छियमसंसयं जं, धुवमच्चंत न उ कयाई ॥३०९॥" इति ॥ १६ ॥

सप्तदशसूत्रावतरणिकामाह इदानीमेषामेवावग्रहादीनां विषयं निर्धारयन्नाहेति–विषयनिरूप्यं हि ज्ञानमिति निर्विषयं ज्ञानमसद्रूपमेव सविषयकमेव तत् प्रमाणकोटिमारोहतीत्यवग्रहादिमतिज्ञानभेदानां प्रतिपादने कृते तद्विषयप्रतिपादनमप्यावश्यकमेवेति मन्वानः सूत्रकारः सप्तदशसूत्रमाहेत्यर्थः । तत्रार्थस्येत्युत्तरमिति–स्पर्शनावग्रहेहापायधारणारूपमतिज्ञानभेदाः स्पर्शात्मकार्थस्य रासनावग्रहादयो रसात्मकार्थस्य घ्राणजावग्रहादयो गन्धात्मकार्थस्य चाक्षुषावग्रहादयो रूपात्मकार्थस्य श्रावणावग्रहादयः शब्दात्मकार्थस्य ग्राहका इत्युत्तरमित्यर्थः । स्पर्शादीनां द्रव्यपर्यायत्वेनेति स्पर्शरसादिसामान्यानां पूर्वोत्तरपर्यायानुगामिलक्षणद्रव्यस्य सहभाविगुणपर्यायत्वेन तत्तत्कालभाविशीतादितत्तत्स्पर्शमधुरादितत्तद्रसादीनां क्रमभाविपर्यायत्वेनेत्यर्थः । पर्यायग्रहणे द्रव्यग्रहणाऽऽवश्यकत्वादिति "दव्वं पज्जवविउअं दव्वविउत्ता य पज्जवा नत्थि" इति सम्मतावुक्तत्वाद् पर्यायविनिर्मुक्तस्य द्रव्यस्य, द्रव्यविनिर्मुक्तानां पर्यायाणां चाऽभावात् द्रव्यपर्याययोरनुस्यूतत्वादिति हेतुरत्रोह्यः । अत एव गुणपर्यायवद्द्रव्यमिति द्रव्यलक्षणं सङ्गच्छते, तत्र नित्ययोगे मतुप्प्रत्ययः, योगश्च सम्बन्धः, स च कथञ्चिद्भेदसंवलिताभेदात्मेति द्रव्यपर्याययोः प्रतिक्षणमनुस्यूतत्वं सिद्ध्यति, तथात्वे सत्येवोत्पादव्ययध्रौव्ययुक्तं सदिति सत्त्वलक्षणमप्युपपद्यते, एतेन द्रव्यस्य गुणसमवायिकारणत्वेन कारणत्वस्य चान्यथासिद्धिशून्यत्वे सत्यव्यवहितपूर्ववर्तित्वलक्षणत्वेन कार्यद्रव्यमुत्पत्तिक्षणावच्छेदेन निर्गुणमेवोत्पद्यते, तदनु कारणगुणपूर्वको हि कार्यगुण इति कारणगुणेभ्यः कार्यगुणा रूपादय उत्पद्यन्ते इत्यपि निरस्तम्, यतो यदैव मृद्द्रव्यादि कपालादिपूर्वपर्यायं परित्यज्य घटादिरूपेणोत्तरपर्यायेण परिणमते तदानीमेव सहभाविरूपसामान्यं कपालगतपूर्वरक्तादिक्रमिकपर्यायं परित्यज्योत्तरघटीयकृष्णादिपर्यायान्तररूपेण परिणमते इति । तथा च पर्यायाणां द्रव्यधर्मत्वेन धर्मग्रहणे

व्यपदेशात्, अधिकरणतायाश्चाभेदेऽपि घटाभावे घटाभाव इत्यादौ दर्शनात्, रूपादेरपि तेन रूपेण द्रव्यभव-नादविशेषात् प्रतीन्द्रियप्राप्त्या द्रव्यस्यैव रूपादिविशेषणभाक्त्वात्, विवक्षावशाच्च प्रधानगुणभावस्य जैनैर-भ्युपगमात् । एतेन चक्षुस्त्वग्मनांसि द्रव्यग्राहकाणीतराणीन्द्रियाणि द्रव्याऽग्राहकाणीति नैयायिकाद्युक्तं निरस्तम् । शर्करास्वादे इयं शर्करेति रासनादिद्रव्यसाक्षात्कारस्याप्यनुभवसिद्धत्वात्, तस्य भ्रान्तत्वकल्पनेऽन्यत्राप्य-नाश्वासात्, रसादिना द्रव्यानुमानं च रूपादिना द्रव्यानुमानतुल्ययोगक्षेमम्, समं च द्रव्यग्राहकप्रत्यासत्त्य-कल्पनलाघवमपि । अस्माकं तु बद्धस्पृष्टताभिमुख्यस्पृष्टताः प्रत्यासत्तयो द्रव्यद्वारैव पर्यायेष्वित्युभयग्रहणं भावः । ननु पर्यायाणां द्रव्यत्वव्यपदेशे तेषां तदभेदप्राप्तेरभेदे चाऽऽधाराधेयभावाभावाद् घटे रूपमात्मनि च ज्ञानमित्यादिव्यवहारः कथमित्याशङ्कायामाह—**अधिकरणतायाश्चाऽभे-देऽपीति** । **प्रतीन्द्रियप्राप्त्या द्रव्यस्यैव रूपादिविशेषणभाक्त्वादिति** तत्तदिन्द्रि-यसम्बन्धाद् द्रव्यस्यैव रूपाद्यात्मकविशेषणविशिष्टत्वादित्यर्थः । रूपादिविशिष्टतया द्रव्यस्यैव चाक्षुषादिज्ञाने भानमिति भावः । ननु तत्तदिन्द्रियसम्बन्धाद् द्रव्यस्यैव रूपरसादिसंज्ञाकरणेन द्रव्यस्यैव रूपाद्यात्मकतया परिणमनाऽभ्युपगमे तयोरभेदाद्रूपं घट इति प्रतीतिरस्यादिति चेत्, स्यादेव यद्येकान्ताऽभेदाभ्युपगमस्स्यात्, न चैवम्, कथञ्चिद् भेदस्याप्यभ्युपगमात्, अत एव रूपस्य प्राधान्यं द्रव्यस्य गौणत्वमिति विवक्षया घटस्य रूपं पश्यामीति प्रत्ययः, द्रव्यस्य प्राधान्ये तु रूपविशिष्टं घटं पश्यामीति प्रत्यय इत्याशयेनाह—**विवक्षावशाच्चेत्यादि** । **अन्यत्राप्यनाश्वासादिति**—घटादिचाक्षुषत्वाचादिप्रत्यक्षेष्वप्यनाश्वासप्रसङ्गादित्यर्थः। तत्रापि भ्रान्तत्वं स्यादिति भावः । अथ नैव रसनाघ्राणश्रोत्रेन्द्रियेभ्यो द्रव्यस्य प्रत्यक्षं किन्तु तेभ्य-स्तद्गतानां रसगन्धशब्दानामेव तत्, द्रव्यस्य तु रसगन्धादिगुणलिङ्गकानुमानमेवेत्युच्यमाने चक्षुस्त्वङ्मनोभिरिन्द्रियैर्नैव घटादेरात्मनश्च द्रव्यस्य प्रत्यक्षं भवति, किन्तु रूपस्पर्शसुखा-दिगुणलिङ्गकानुमानमेवेति वदतो नैव वक्त्रं वक्रीभवेत्, उभयत्र युक्तेस्साम्यादित्याशयेनाह—**रसादिना द्रव्यानुमानमिति** । अनुमानञ्चात्र इयं शर्करा पूर्वोपलब्धमाधुर्यसजातीयमाधु-र्यवत्त्वात्, इयं कस्तूरिका पूर्वोपलब्धगन्धसजातीयगन्धवत्त्वात्, अयमुत्पलनालः पूर्वोपलब्ध-स्पर्शसजातीयस्पर्शवत्त्वादित्याद्याकारमवगन्तव्यम् । **रूपादिनेति**—पूर्वोपलब्धरूपसजातीयरू-पवत्त्वादिहेतुनेत्यर्थः । रूपादिना हेतुना द्रव्यानुमानाभ्युपगमे च लाघवफलमप्याह **समञ्चे-ति** । ननु द्रव्यग्राहकप्रत्यासत्त्यकल्पने भवतामपि चक्षुरादिना कथं द्रव्यग्रहणमित्यत आह **अस्माकं त्विति** । अत्र बद्धस्पृष्टताप्रत्यासत्तिर्घ्राणरसनास्पर्शनेन्द्रियविषयगन्धरसस्पर्शाकार-परिणतद्रव्यप्रत्यक्षे, आभिमुख्यप्रत्यासत्तिस्तु चक्षुर्विषयरूपाकारपरिणतद्रव्यप्रत्यक्षे स्पृष्टता-प्रत्यासत्तिश्च श्रोत्रेन्द्रियविषयशब्दात्मकद्रव्यप्रत्यक्षे हेतुभूता ज्ञेया, स्पर्शादिग्रहणं द्रव्यग्रहण-द्वारैव, न त्वन्यथा, यत्र स्पर्शनेन्द्रियेण स्पर्शं स्पृशामि, रसनादीन्द्रियेण रसादिकमास्वादयामी-त्यादिप्रतीतिस्तत्रापि स्पर्शद्रव्यं रसादिद्रव्यमनुभवामीत्येवमर्थः । स्पर्शादिग्रहणे द्रव्यग्रहणस्याव-श्यंभावित्वादित्याशयेनाह—**द्रव्यद्वारैव पर्यायेष्वित्युभयग्रहणमिति** । उक्तञ्च विशेषावश्य-कनिर्युक्तौ—"पुट्ठं सुणेइ सद्दं, रूवं पुण पासइ अपुट्ठं तु । गंधं रसं च फासं च, बद्धपुट्ठं वियागरे ।२६६।"

युक्तमिति दिग्। मतिज्ञानविकल्पा मतिज्ञानभेदाः ॥ १७ ॥

अथान्योऽप्यस्ति मतिज्ञानस्य विकल्पो योऽर्थं न गृह्णाति ? । अस्तीत्याह

## सूत्रम् व्यञ्जनस्यावग्रहः ॥ १ ॥ १८ ॥

( भाष्यम् ) व्यञ्जनस्यावग्रह एव भवति, नेहादयः । एवं द्विविधोऽवग्रहो व्यञ्जनस्यार्थस्य च । ईहादयस्त्वर्थस्यैव ॥

( यशो० टीका ) नियमपरतया व्याचष्टे । व्यञ्जनस्यावग्रह एव भवति, नेहादय इति— व्यञ्जनमुपकरणेन्द्रियस्पर्शाद्याकारपरिणतद्रव्यसम्बन्धस्तस्यावग्रह एवैको भवति । यत्र किमप्येतदित्यपि न संवेद्यते, अर्थावग्रहे तु किमप्येतदिति संवेद्यत इति, ततोऽप्ययं मलीमसः । अत्र ग्राह्यस्याव्यक्तत्वाद्-ग्राहकस्याव्यक्तत्वम् , चरमसमयप्रवेशाहितातिशयानां शब्दादिद्रव्याणा त्वर्थपर्यायतापन्त्या व्यक्तत्वात्तद्ग्रा-हकस्यार्थावग्रहस्य व्यञ्जनावग्रहापेक्षया व्यक्तत्वम् । अत एव न तदव्यक्तं व्यञ्जनमवगाहते । ईहापाय-

इति । अस्यायमर्थः स्पृष्टं तनौ रेणुवत् सम्बद्धं शब्दविषयं श्रोत्रेन्द्रियमुपलभते, इदमुक्तम्भवति स्पृष्टमात्राण्येव शब्दद्रव्याणि श्रोत्रमुपलभते, यतो घ्राणेन्द्रियविषयभूतद्रव्येभ्यस्तानि सूक्ष्माणि, बहूनि, भावुकानि च, पटुतरं च श्रोत्रेन्द्रियं विषयपरिच्छेदे घ्राणेन्द्रियादिगणादिति । रूपं पुनः पश्यति चक्षुरस्पृष्टं तु, तुशब्दस्यैवकारार्थत्वादसम्बद्धमेव, चक्षुषोऽप्राप्यकारित्वात्, तदपि योग्यदेशस्थत्वेनाभिमुखमेव, न तु तद्विपरीतम्। गन्धं रसं च स्पर्शं च बद्धस्पृष्टं, स्पृष्टं च बद्धं चेत्य-र्थः । स्पृष्टं तनुसम्बद्धरेणुवदात्मसम्बद्धं सन्तं नवशरावे तोयवदात्मप्रदेशैर्गाढतरमाश्लिष्टं यथाक्रमं घ्राणेन्द्रियं रसनेन्द्रियं स्पर्शनेन्द्रियं च गृह्णाति, यतो घ्राणेन्द्रियादिविषयभूतानि गन्धादिद्रव्याणि शब्दद्रव्यापेक्षया स्तोकानि, बादराणि चाऽभावुकानि च, विषयपरिच्छेदे श्रोत्रापेक्षयाऽपटूनि च घ्राणेन्द्रियादीनि, अतस्स्पृष्टबद्धमेव गन्धादिद्रव्यसमूहं गृह्णन्ति, न पुनस्स्पृष्टमात्रमित्येवं व्यागृ-णीयात् प्ररूपयेत् प्रज्ञापक इति ॥ १७ ॥

अष्टादशसूत्रावतरणिकामाह—अथाऽन्योऽप्यस्तीत्यादि । यत्र घटाद्यर्थेऽवग्रहस्तत्रे-हाऽपायधारणा भवन्तीत्यतो व्यञ्जनेऽप्यवग्रहभावे तत्पूर्वकाणामपीहाऽपायादीनां सत्त्वं प्रसज्येत अतस्तत्प्रतिषेधार्थो नियमो व्यञ्जनस्यावग्रह एव, न त्वीहादय इत्याह—निय-मपरतया व्याचष्टे इति । नन्वस्य सूत्रस्य नियमपरतया व्याख्याने सूत्रे एवकारः कर्त्तव्यः स्यादिति चेत्, मैवम्, सामर्थ्यादवधारणप्रतीतेः, अब्भक्षस्तपस्वीत्यादौ यथा अप एव भक्षयतीति सामर्थ्यादवधारणं प्रतीयते तद्वत्प्रकृतेऽप्येवकारानुक्तावपि सामर्थ्या-देवावधारणं प्रतीयते इति । ततोऽपि—अर्थावग्रहादपि । अयम्—व्यञ्जनावग्रहः । ननु व्यञ्जना-वग्रहार्थावग्रहयोर्नास्ति भेदो ग्रहणाविशेषात्, न हि शब्दादिग्रहणं प्रति विशेषोऽस्तीति चेत्, मैवम्, अव्यक्तव्यक्तभेदेन विषयस्य द्विभेदत्वेन तद्ग्राहकव्यञ्जनावग्रहार्थावग्रहयोर्भेदात् । अव्यक्तग्रहणं व्यञ्जनावग्रहो व्यक्तग्रहणमर्थावग्रह इत्याशयेनाह—अत्र ग्राह्यस्येत्यादि—

धारणास्तु व्यञ्जनस्य ग्राहिकाः सर्वथा न भवन्त्येव, स्वांशे भेदमार्गणनिश्चयधारणाख्ये तासां नियतत्वात् । एवं सूत्रद्वयोक्तप्रकारेण, द्विविधोऽवग्रहो विषयद्वैरूप्यात्, तदाह व्यञ्जनस्यार्थस्य च, ईहादयस्त्वर्थस्य स्पर्शादेरेव विशेषका भवन्ति ॥ १८ ॥

अथ किं स्पर्शनादीनामिन्द्रियाणां सर्वेषां व्यञ्जनावग्रहः सम्भवत्युत कस्यचिन्नेति, उच्यते—कस्यचिन्न भवत्यपि । एतद् दर्शयति

## सूत्रम् न चक्षुरनिन्द्रियाभ्याम् ॥ १ ॥ १९ ॥

( भाष्यम् ) चक्षुषा नोइन्द्रियेण च व्यञ्जनावग्रहो न भवति । चतुर्भिरिन्द्रियैः शेषैर्भवतीत्यर्थः । एवमेतन्मतिज्ञानं द्विविधं चतुर्विधं अष्टाविंशतिविधं अष्टषष्ठ्युत्तरशतविधं षट्त्रिंशत्त्रिशतविधं च भवति ॥ अत्राह । गृह्णीमस्तावन्मतिज्ञानम् । अथ श्रुतज्ञानं किमिति । अत्रोच्यते ॥

( यशो० टीका ) करणे सहार्थे चैषा तृतीया । चक्षुषोपकरणाख्यचक्षुरिन्द्रियेण, अनिन्द्रियेण च मन ओघज्ञानरूपेण च सह ते रूपाकारपरिणता पुद्गलाश्चिन्त्यमानाश्च वस्तुविशेषाः संश्लेषं न यान्ति, अतो व्यञ्जनं चक्षुरुपकरणेन्द्रियनोइन्द्रिययोर्न भवति । तदभावाच्च तत्करणकोऽवग्रहोऽपि नास्तीति भाष्यं प्राञ्चो व्याचक्षते । तच्चाभिमतशब्दपूरणवाक्यभेदौ विना न सुस्थम्, गवि शशशृङ्गं नास्तीत्यत्र यथा गवाधिकरणकं शृङ्गं शशीयत्वेन नास्तीत्यर्थः, तथाऽत्र चक्षुर्नोइन्द्रियकरणकोऽवग्रहो व्यञ्जनीयत्वेन नास्तीत्यर्थः, ईदृशबोधश्च तत्तदानुपूर्वीज्ञानस्य तथाबोधजनकत्वज्ञानात्, तथा च करणतृतीययैवोपपत्तिरिति तु द्विविधोऽवग्रहो विषयद्वैरूप्यादिति । उक्तञ्च "तत्थोग्गहो दुरूवो गहणं जं होइ वंजणत्थाणं ॥ १९३ ॥" इति । १८ ।

एकोनविंशतिसूत्रावतरणिकामाह—**अथ किमित्यादिना** । **तच्चाभिमतशब्दपूरणवाक्यभेदौ विना न सुस्थमिति** आद्ये पक्षे सहार्थकतृतीयाघटिताद्यवाक्यं तत्तच्छब्दपूरणं विना न बोधक्षममिति तत्राभिमतशब्दपूरणदोषः, करणार्थकतृतीयाघटितद्वितीयवाक्याङ्गीकारे च वाक्यभेददोषः, उक्तवाक्यद्वयस्य परस्परनिरूप्यनिरूपकभावापन्नविषयताकैकबोधजनकत्वाभावादित्यर्थः । किञ्च चक्षुरुपकरणेन्द्रियनोइन्द्रिययोर्व्यञ्जनाभावात्तत्करणकोऽवग्रहोऽपि नास्तीति द्वितीयवाक्येऽवग्रहे चक्षुर्नोइन्द्रियव्यञ्जनकरणकत्वस्याऽप्रसिद्ध्या तत्र तन्निषेधायोगोऽप्यधिकदोषोऽत्र ज्ञेय इति भावः । जिनानुगैर्व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावोऽप्यभ्युपगत इति तत्पुरस्कारेणोक्तभाष्यमेकवाक्यतया सदृष्टान्तं व्याख्याय शब्दपूरणवाक्यभेदाकल्पनप्रयुक्तलाघवं स्वमते टीकाकार आह— **गवि शशशृङ्गं नास्तीत्यादि** । **व्यञ्जनीयत्वेनेति**—व्यञ्जनकरणकत्वेनेत्यर्थः । तथा च सामान्यव्यञ्जनकरणकत्वं रासनादिप्रत्यक्ष एवास्ति प्रसिद्धं, न तु चक्षुर्नोइन्द्रियकरणकेऽवग्रहे इति तद्रूपेण चक्षुर्नोइन्द्रियकरणकोऽवग्रहो नास्तीत्युच्यमाने नाऽप्रसिद्धस्य निषेधायोगदोषः, चक्षुर्नोइन्द्रियकरणकावग्रहस्यार्थावग्रहरूपतया प्रसिद्धत्वादिति भावः । नन्वेवमुक्तशाब्दबोध एव तत्कारणाभावात्कथमुत्पद्येतेत्याशङ्कानिवृत्त्यर्थमाह—**ईदृशबोधश्च तत्तदानुपूर्वीज्ञानस्य तथाबोधजनकत्वज्ञानादिति** । आकाङ्क्षाज्ञानस्य शाब्दबोधहेतुत्वेनोक्तशाब्दबोधं प्रत्यपि हेतुभूतस्य तत्तदानुपू-

न्याय्यमाभाति। अयमत्राशयः–इन्द्रियचतुष्टयस्य प्राप्यकारित्वाद् व्यञ्जनावग्रहः सम्भवति। नयनमनसोस्त्वप्राप्यकारित्वान्न तत्सम्भवः। प्रमाणं च तत्र, नयनमनसी अप्राप्यकारिणी विषयकृतानुग्रहोपघातशून्येन्द्रियत्वात्, व्यतिरेके त्वगादिर्दृष्टान्त इति, त्वगादीनां चानुग्रहोपघातौ चन्दनाङ्गनादिस्पर्शनक्षीरशर्कराद्यास्वादनकर्पूरपुद्गलाद्याघ्राणमृदुमन्दशब्दाद्याकर्णनकर्कशकम्बलादिस्पर्शनतिक्तकटुकाद्यास्वादनाशुच्यादिपुद्गलाघ्राणभेर्यादिशब्दश्रवणस्थले दृष्टौ, नयनस्य तु निशितकरपत्रचन्दनाद्यालोकने मनसश्च तच्चिन्तने न दृश्येते तौ, ततो न नयनमनसी प्राप्यकारिणी इति। एतेन चक्षुर्न प्राप्यकारि अधिष्ठानासम्बद्धार्थग्राहकत्वात्, यत्प्राप्यकारि तन्नाधिष्ठानासम्बद्धग्राहकं, यथा रसनादीत्यनुमानं न चक्षुरप्राप्यकारित्वसाधकम्, प्रदीपप्रभायामनैकान्तिकत्वात्, चक्षुषो हि गोलकमिव प्रभाया अपि दीपोऽधिष्ठानं तदसम्बद्धार्थग्राहकत्वं च प्रभाया न चाप्राप्यकारित्वं तत्रेति नैयायिकोक्तमपास्तम्, प्रभावन्नयनरश्मीनां विषयपर्यन्तं गमनाभ्युपगमे तत्कृतानुग्रहोपघातप्रसङ्गदोषस्य दुर्निवारत्वाद्विपरीतबाधकतर्केणास्मदुक्तानुमानस्य बलवत्त्वात्। सूक्ष्मत्वात्तैजसत्वाच्च नयनरश्मीनां नाञ्जनदहनादीनां सम्बन्धादनुग्रहोपघाताविति परिहारो न रमणीयः, प्राप्तचन्द्रसूर्यादिकिरणैस्तदप्रसङ्गात्, अधिष्ठानगतानुग्रहोपघाताभ्यां तदन्यथासिद्धिरित्यपि वाच्यम्, आत्मगतसुखदुःखरूपौ तौ प्रतीन्द्रियगतयोरेव तयोर्हेतुत्वात्, अन्यथोपहतघ्राणस्य कुसुमादिनानुग्रहप्रसङ्गात्, अत एवास्माकं विलक्षणसुखत्वावच्छिन्ने चक्षुःकर्पूरसंयोगत्वादिना हेतुत्वम्, तव त्वधिष्ठानावच्छिन्नचक्षुःकर्पूरसंयोगत्वादिनेति महागौरवम्। यत्तु चक्षुषोऽप्राप्यकारित्वे भित्त्यादिव्यवहितस्यापि ग्रहः स्यात्, भित्त्यादिकं हि

र्थोज्ञानरूपाकाङ्क्षाज्ञानस्य सत्त्वेन तेन तदुत्पत्तिर्भवतीति भावः। **नयनमनसोस्त्वप्राप्यकारित्वान्न तत्सम्भव इति**–अत एव व्यञ्जनावग्रहस्य चातुर्विध्यं सिद्धान्ते प्रोक्तम्। **त्वगादीनामिति**–स्पर्शनेन्द्रियरसनेन्द्रियघ्राणेन्द्रियश्रोत्रेन्द्रियाणामित्यर्थः। **प्राप्यकारिणीति** स्पृष्टार्थग्राहिणीत्यर्थः। **एतेने**त्यस्याऽपास्तमित्यनेनान्वयः। अपासने हेतुमाह–**प्रभावदित्यादि**। **तत्कृतानुग्रहोपघातप्रसङ्गदोषस्येति**–जलरूपविषयावलोकनकृतशैत्यलक्षणानुग्रहरविकिरणरूपविषयावलोकनकृतदाहलक्षणोपघातप्रसङ्गदोषस्येत्यर्थः। नयनरश्मीनां तत्तद्विषयेण सह संयोगसम्बन्धद्वारैव प्रत्यक्षजनकत्वेऽप्यञ्जनसम्बन्धकृतशैत्यलक्षणानुग्रहदहनकृतदाहलक्षणोपघातप्रसङ्गो नेत्यत्र नैयायिकवादी हेतुमाह–**सूक्ष्मत्वात्तैजसत्वाच्चेति**। **तदप्रसङ्गादिति**–अनुग्रहोपघाताऽप्रसङ्गादित्यर्थः। प्राप्तचन्द्रसूर्यादिकिरणैर्मुख्यवृत्त्या गोलकलक्षणाधिष्ठान एवानुग्रहोपघातौ तत्सम्बन्धाच्चक्षुषि तूपचारवृत्त्यैव ताविन्त्याशयेनाशङ्क्य निषेधति–**अधिष्ठानगतेति**। निषेधे हेतुमाह **आत्मगतेत्यादि**। **तयोः**–अनुग्रहोपघातयोः। **अनुग्रहप्रसङ्गादिति**–घ्राणेन्द्रियाधिष्ठानस्य विद्यमानत्वेन तत्रानुग्रहप्रसङ्गादित्यर्थः। **यत्त्वि**त्यस्य–तत्तुच्छमित्यनेनान्वयः। **चक्षुषोऽप्राप्यकारित्वे भित्त्यादिव्यवहितस्यापि ग्रहः स्यादिति** चक्षुषोऽप्राप्यकारित्वेऽर्थेन सह संयोगसन्निकर्षं विनैव घटाद्यर्थप्रत्यक्षजनकत्वात्तत्सन्निकर्षस्य प्रत्यक्षं प्रत्यनियामकत्वे सति चक्षुर्गमनप्रतिबन्धद्वारा सन्निकर्षप्रतिरोधकस्य भित्त्यादिव्यवधानस्य चाक्षुषप्रत्यक्षानुत्पादाऽप्रयोजकत्वात् तत्सत्त्वेऽपि तद्व्यवहितवस्तुनश्चक्षुषा ग्रहणं स्यादित्यर्थः। तदेव विवृणोति–**भित्त्या-**

प्राप्तिविघातकतयैव विरोधि, न तु स्वरूपसत्तया, तथात्वे तस्मिन् सति क्वचिदपि कार्यं न स्यादिति परैरुच्यते, तत्तुच्छम्, काचादिना न प्राप्तिविघातो भित्त्यादिना तु तद्विघात इत्यत्र परेषामिव काचादिना न चाक्षुषप्रतिबन्धो भित्त्यादिना तु तत्प्रतिबन्ध इत्यत्रास्माकं स्वभावस्यैव शरणीकरणीयत्वात्, तन्निर्वाहार्थं च यदि स्वप्राचीस्थपुरुषचाक्षुषे स्वप्रतीचीवृत्तित्वसम्बन्धेन तत्तद्भित्त्यादेः प्रतिबन्धकत्वं कल्प्यते, तदा न गौरवं बाधकम्, प्रामाणिकत्वात् । यदि च व्यवहितमयोग्यत्वादेव न गृह्यते, तदापि न दोषः, व्यवधानाभावरूपनैरन्तर्येण चक्षुर्ग्राह्यतानुकूलयोग्यतोत्पादस्य स्थूलर्जुसूत्रनयेनाश्रयणेऽस्माकं बाधकाभावात् । एतेनायोग्यत्वं हि न स्वरूपायोग्यत्वम्, स्थैर्यपक्षे तस्यैव कालान्तरे ग्रहात् । क्षणिकत्वपक्षेऽपि प्रत्यासन्नाना सहकारिणामेव तत्रातिशयजनकत्वं नाप्रत्यासन्नानाम्, प्रत्यासत्तिश्च बौद्धानां निरन्तरोत्पादोऽस्माकं द्रव्ययोः संयोगस्तदुभयमपि कृष्णसारस्यार्थेन न सम्भवति, किन्तु तदाश्रितस्येन्द्रियस्यातीन्द्रियस्य गतिक्रमेणेति निरस्तम्, तत्तद्व्यवधानाभावकूटविशिष्टतयोत्पन्नस्यैव घटादेर्योग्यत्वात् । किञ्चानन्तचक्षुरवयवगतिसंयोगादिकल्पनापेक्षया तद्धेतुत्वेन कल्प्यमानस्य तत्तद्व्यवधानाभावकूटस्य

दिकं हीति । तथात्वे स्वरूपसत्तया भित्त्यादेर्विरोधित्वे । स्वप्राचीस्थपुरुषचाक्षुष इति–अत्र विषयत्वं प्रतिबध्यतावच्छेदकसम्बन्धो ज्ञेयः, उभयत्र च स्वपदेन तत्तद्भित्त्यादेर्ग्रहणम्, एवं विषयतासम्बन्धेन स्वप्रतीचीस्थपुरुषचाक्षुषप्रत्यक्षे स्वप्राचीवृत्तित्वसम्बन्धेन स्वावाचीस्थपुरुषचाक्षुषे स्वोदीचीवृत्तित्वसम्बन्धेन च तत्तद्भित्त्यादीनां प्रतिबन्धकत्वं बोध्यम् । कल्प्यत इति–अस्माभिरिति शेषः । प्रामाणिकत्वादिति–उक्तप्रतिबध्यप्रतिबन्धकभावे तत्तत्पुरुषप्रवेशकृतगौरवस्य फलबलकल्प्यत्वेन प्रामाणिकत्वात् प्रामाणिकगौरवस्य चादोषत्वादिति भावः । एतेनेत्यस्य निरस्तमित्यनेनान्वयः । स्वरूपायोग्यत्वमिति–फलजनकतावच्छेदकधर्माभाववत्त्वमित्यर्थः । निषेधे हेतुमाह–स्थैर्यपक्षे तस्यैव कालान्तरे ग्रहादिति–यदि व्यवहितार्थस्स्वरूपाऽयोग्यस्स्यात्तर्हि तस्य कदापि ग्रहो न स्यात्, भवति च व्यवधानाभावकाले ग्रह इति न स्वरूपाऽयोग्यत्वलक्षणमयोग्यत्वं युक्तम् । ननु व्यवधानाभावकाले चाक्षुषप्रत्यक्षानुकूला योग्यताऽस्ति व्यवधानदशायां च सा नास्तीति चेत्, तन्न सम्भवति, स्थिरस्यैकस्वभावत्वादिति भावः । अतिशयजनकत्वमिति–प्रत्यक्षकुर्वद्रूपात्मकविषयजनकत्वमित्यर्थः । निरन्तरोत्पाद इति–निरन्तरतत्तद्देशोत्पादक्रमेण विषयदेशे नैरन्तर्येणोत्पाद इत्यर्थः । निरसने हेतुमाह तत्तद्व्यवधानाभावकूटविशिष्टतयोत्पन्नस्यैव घटादेर्योग्यत्वादिति–तथा च भित्त्यादिव्यवधानविशिष्टतयोत्पन्नस्य योग्यत्वाभावादेव न चाक्षुषप्रत्यक्षं, न तु चक्षुरिन्द्रियसन्निकर्षाभावादिति न चक्षुस्संयोगसन्निकर्षस्य चाक्षुषप्रत्यक्षं प्रति हेतुत्वं, किन्तु तत्तद्विषयगतयोग्यताविशेषस्यैवेति भावः । तत्तद्व्यवधानाभावकूटस्येति–एकं पुरुषं प्रति यदेव चाक्षुषप्रत्यक्षव्यवधानरूपं तदेवान्यपुरुषं प्रति न तद्रूपमित्यनतिप्रसक्तस्यानुगतस्य व्यवधानत्वस्य दुर्वचत्वेन व्यवधानत्वावच्छिन्नप्रतियोगिताकसामान्याभावस्यापि दुर्वचत्वात् यत्प्रत्यक्षे यस्य यस्य व्यव-

तत्सम्बन्धेनाभिमुख्यस्यैव वा चाक्षुषहेतुत्वं युक्तम् । यदपि सूक्ष्मवस्त्राद्यावरणे घटादेरल्पप्रकाश-स्तदभावे च महाप्रकाश इति व्यवस्था स्वल्पभूयोऽवयवावच्छेदेन चक्षुःसंयोगवाद एव घटत इति, तदपि तन्नियामकादेव तदुपपत्तौ तादृशसंयोगकल्पनायां गौरवादेव निराकरणीयमिति दिग् । मनसोऽप्यप्राप्य-कारित्वं चिन्त्यमानविषयसम्बन्धकृतानुग्रहोपघातशून्यत्वात् समर्थितमेव । यश्चेह मृतनष्टादिकं वस्तु चिन्त-यतोऽत्यार्तरौद्रध्यानप्रवृत्तस्य दौर्बल्योरःक्षतादिलिङ्गैरुपघातः, इष्टसङ्गमविभवलाभादिकं च चिन्तयतो हर्षादिभिरनुग्रहोऽनुमीयते, स इष्टानिष्टाहाराभ्यवहारसदृशमनस्त्वपरिणतेष्टानिष्टपुद्गलसङ्घातनिमित्तकः, न तु चिन्त्यमानसम्बन्धकृत इति न दोषः । न च सूक्ष्ममनःपुद्गलैः स्थूलचयोपचयासंभव इत्यपि शङ्कनीयम्, स्थूलैरपि पुद्गलैः सूक्ष्मापनयनद्वारैव तत्करणाभ्युपगमात्, अन्यथा प्रतिक्षणं बालादिशरीरवृद्ध्यनुपपत्तेः, सुप्रसिद्धं चैतत् 'सर्पाः पिबन्ति पवनं न च दुर्बलास्ते' इत्यादौ, न च मनसाऽऽत्मनि प्राप्त एव ज्ञानं जन्यते, चिन्त्यमानास्तु पदार्था उपनीता एव तत्र भासन्त इति तस्य प्राप्यकारित्वमेवेति युक्तम् । चिन्ता-दृष्टाद्युद्बुद्धसंस्कारारूढानामपि पदार्थानां मनोयोग्यत्वात्, स्वप्नज्ञानकपिकाव्यमूलज्ञानादिस्थले तेषां

**धायकत्वेन प्रतिबन्धकत्वं** तत्तदभावकूटस्येत्यर्थः । **तत्सम्बन्धेनेति**–तत्तद्व्यवधानाभावकूटवत्त्व-सम्बन्धेनेत्यर्थः । **स्वल्पभूयोऽवयवावच्छेदेनेति**–स्वाल्पावयवावच्छेदेन भूयोऽवयवावच्छे-देन चेत्यर्थः । **तन्नियामकादेवेति**–स्वल्पभूयोऽवयवावच्छेदेन चक्षुस्संयोगनियामकादेवेत्यर्थः । **तदुपपत्तौ** स्वल्पमहाप्रकाशोपपत्तौ, अत्र मनो मृतनष्टादिवस्तुचिन्तननिमित्तकोपघातवत् मृत-नष्टादिवस्तुचिन्तनानन्तरं दौर्बल्योरःक्षतादिमत्त्वात्, मन इष्टसङ्गमविभवलाभादिचिन्तननिमित्त-कानुग्रहवत् इष्टसङ्गमविभवलाभादिचिन्तनानन्तरं वदनविकासरोमाञ्चोद्गमादिमत्त्वादित्यनुमा-नाभ्यां मनस उपघातानुग्रहौ यौ नैयायिकेनानुमीयेते तौ न मनसः, येन ताभ्यां तस्य प्राप्यकारित्वासिद्धिस्स्यात्, किन्तु जीवस्यैवेत्युपपादनायाह–**यश्चेह मृतनष्टादिकमि-त्यादि** । अनुग्रह उपघातश्च जीवस्य यन्निमित्तकस्तन्निमित्तमाह **स इष्टानिष्टेत्यादि** । सूक्ष्ममनस्त्वपरिणतेष्टानिष्टपुद्गलसङ्घातैस्स्थूलशरीरहानिलक्षणचयतत्पुष्टिलक्षणोपचयाऽसम्भव इ-त्याशङ्क्य निषेधति–**न च सूक्ष्ममनःपुद्गलैरिति** । निषेधे हेतुमाह–**स्थूलैरपीति** । सूक्ष्मपुद्ग-लैस्स्थूलशरीरोपचयने दृष्टान्तमाह–**सर्पा इति**–सूक्ष्मपवनपुद्गलैस्स्थूलसर्पशरीरोपचयो भवति यथा तथा प्रकृतेऽपि तथात्वं ज्ञेयमिति भावः । न चेत्यस्य युक्तमित्यनेनान्वयः । **मनसा-ऽऽत्मनि प्राप्त एव ज्ञानं जन्यत इति**–आत्ममनस्संयोगसन्निकर्षेण मनसा प्राप्त एव सन्निकृष्ट एवात्मनि ज्ञानं जन्यत इत्यर्थः । **उपनीता एवेति**–ज्ञानलक्षणाप्रत्यासत्त्या सन्निकृष्टा एवेत्यर्थः । तत्र–ज्ञाने । अयुक्तत्वे हेतुमाह **चिन्तादृष्टाद्युद्बुद्धसंस्कारारूढानामिति** । तदेव विवृणोति–**स्वप्नज्ञानकपिकाव्येत्यादिना** । अयम्भावः विशेषणतया प्रतिभासमान एव ज्ञानलक्षणाप्रत्यासत्तेरुपगमेन स्वप्नज्ञाने पदार्थानां विशेष्यतयैव भानेन कपिकाव्यमूलवाक्यार्थज्ञाने च तथैव भानेन च तत्र व्यभिचारेण मनसः प्राप्यकारित्वस्याऽसम्भव इति । आत्मप्राप्तिमात्रेण

विशेष्यतया मनसाऽवगाहनात्, तेष्वप्राप्य ज्ञानजनने आत्मप्राप्तिमात्रेण मनसः प्राप्यकारित्वासिद्धेः, विशेष्यतया स्वजन्यज्ञानव्याप्यप्राप्तिकत्वस्यैव प्राप्यकारित्वपदार्थत्वादिति दिग्। एवमेतदिति । लक्षणविधानाभ्या यन्निरूपितं मतिज्ञानं तस्य सम्पिण्ड्य भेदान् कथयति–द्विविधमित्यादिना, द्विविधमिन्द्रियानिन्द्रियनिमित्तभेदात् । चतुर्विधमवग्रहादिभेदतः । अष्टाविंशतिविधं स्पर्शनादीनां मनोन्तानां षण्णां प्रत्येकमर्थावग्रहादिभिश्चतुर्भिश्चतुर्विंशतौ भेदेषु नयनमनोवर्जानां चतुर्णां व्यञ्जनावग्रहरूपभेदचतुष्टयक्षेपात् । अष्टषष्ट्युत्तरशतविधं तस्या एवाष्टाविंशतेरेकैकभेदस्य बह्वादिभेदेन षोढा भवनात्, षट्त्रिंशत्त्रिशतभेदं तस्या एवाष्टाविंशतेर्बह्वादिभि· सेतरैर्द्वादशधा भवनात् । अत्राष्टषष्ट्युत्तरशतभेदचिन्तायां बह्वबह्वाद्यन्यतरत्वं विभाजकोपाधिर्द्रष्टव्यः, तेन न न्यूनत्वाद्विभागव्याघातः, सतामपि भेदानामविवक्षया तत्प्रवृत्तावग्रहविनिर्मोकेण त्रिविधस्यापि विभागापत्तेरिति सूक्ष्ममीक्षणीयम् ॥ १९ ॥

मनसः कथं न प्राप्यकारित्वसिद्धिरिति चेत्तदर्थस्यैवाऽघटमानत्वादिति जानीहि । कस्तर्हि तदर्थ इत्याकाङ्क्षायामाह तदर्थमाह विशेष्यतयेत्यादि, स्वजन्यज्ञानव्याप्यप्राप्तिकत्वस्यैवेति–विशेष्यतासम्बन्धेन स्वजन्यज्ञानव्याप्यं यस्यास्सा स्वजन्यज्ञानव्याप्या, स्वजन्यज्ञानव्याप्या प्राप्तिर्यस्य तत्स्वजन्यज्ञानव्याप्यप्राप्तिकम्, तस्य भावस्तत्त्वं तस्यैवेत्यर्थः, तत्र यत्र यत्र विशेष्यतासम्बन्धेन स्वजन्यज्ञानं तत्र तत्रेन्द्रियसन्निकर्षलक्षणप्राप्तिरिति व्याप्तिस्वरूपम् । तथा च मानसज्ञानं विशेष्यतासम्बन्धेन चिन्ताऽदृष्टाद्युद्बुद्धसंस्कारारूढपदार्थेष्वपि वर्तते तत्र मनसः प्राप्तिर्नास्ति, तेषां पदार्थानां स्वप्नज्ञानाद्यव्यवहितपूर्वकाले ज्ञानाऽभावेन ज्ञानलक्षणप्रत्यासत्तेरपि तत्राऽभावात्, तथा च मनसो न प्राप्यकारित्वम् । नन्वेवं तर्हि चिन्ताऽदृष्टाद्युद्बुद्धसंस्कारारूढानां पदार्थानां स्वप्नज्ञानादिस्थले मनसा भानं किं निबन्धनमिति चेत्, उच्यते, मानसज्ञानावरणीयकर्मक्षयोपशमलक्षणयोग्यतावशादेवेति जानाहीति । बह्वबह्वाद्यन्यतरत्वमिति–अत्रादिपदेन बहुविधाबहुविधान्यतरत्वक्षिप्राक्षिप्रान्यतरत्वादीनां पञ्चानां परिग्रहः कार्य इति । अन्यतरत्वेन रूपेण द्वादशभेदपरिग्रहफलमाह–तेन नेति । बह्वादीनां षण्णामेव स्वस्वासाधारणधर्मेण विवक्षायामतिप्रसङ्गदोषहेतुमाह सतामपीति । बह्वादीतराणामबह्वादिभेदानां सतामपीत्यर्थः । अविवक्षयेति–अन्यतरत्वेन विवक्षाया अकरणेनेत्यर्थः । तत्प्रवृत्ताविति–विभागप्रवृत्तावित्यर्थः ॥ १९ ॥

अत्रास्मिन्नवकाशे चोदक आह गृह्णीमो जानीमस्तावल्लक्षणविधानादिना प्ररूपितं मतिज्ञानम्, तदनन्तरं श्रुतज्ञानमुद्दिष्टम्, तत्किं लक्षणमिति । एवमुद्देशक्रमसङ्गत्या पृष्टे गुरुराह–उच्यते मयेति ।

## सूत्रम् श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम् ॥ १ ॥ २० ॥

( भाष्यम् ) श्रुतज्ञानं मतिज्ञानपूर्वकं भवति । श्रुतमाप्तवचनमागम उपदेश ऐतिह्यमाम्नायः प्रवचनं जिनवचनमित्यनर्थान्तरम् । तद्द्विविधमङ्गबाह्यमङ्गप्रविष्टं च । तत्पुनरनेकविधं द्वादशविधं च यथासङ्ख्यम् । अङ्गबाह्यमनेकविधम् । तद्यथा । सामायिकं चतुर्विंशतिस्तवो वन्दनं प्रतिक्रमणं कायव्युत्सर्गः प्रत्याख्यानं दशवैकालिकं उत्तराध्याया दशा· कल्पव्यवहारौ निशीथमृषिभाषितान्येवमादि ॥ अङ्गप्रविष्टं द्वादशविधम् । तद्यथा–आचारः सूत्रकृतं स्थानं समवायः व्या·

ख्याप्रज्ञप्ति ज्ञातधर्मकथा उपासकाध्ययनदशा अन्तकृद्दशा अनुत्तरौपपातिकदशाः प्रश्नव्याकरणं विपाकसूत्रं दृष्टिपात इति ॥ अत्राह—मतिज्ञानश्रुतज्ञानयोः कः प्रतिविशेष इति । अत्रोच्यते । उत्पन्न विनष्टार्थग्राहकं साम्प्रतकालविषयं मतिज्ञानम् । श्रुतज्ञानं तु त्रिकालविषयं उत्पन्नविनष्टानुत्पन्नार्थग्राहकम् ॥ अत्राह गृह्णीमो मतिश्रुतयोर्नानात्वम्, अथ श्रुतज्ञानस्य द्विविधमनेकद्वादशविधमिति किं कृतः प्रतिविशेष इति । अत्रोच्यते । वक्तृविशेषाद् द्वैविध्यम् । यद्भगवद्भिः सर्वज्ञैः सर्वदर्शिभिः परमर्षिभिरर्हद्भिस्तत्स्वाभाव्यात्परमशुभस्य च प्रवचनप्रतिष्ठापनफलस्य तीर्थकरनामकर्मणोऽनुभावादुक्तं भगवच्छिष्यैरतिशयवद्भिरुत्तमातिशयवाग्बुद्धिसंपन्नैर्गणधरैर्दृब्धं तदङ्गप्रविष्टम् । गणधरानन्तर्यादिभिस्त्वत्यन्तविशुद्धागमैः परमप्रकृष्टवाङ्मतिबुद्धिशक्तिभिराचार्यैः कालसंहननायुर्दोषादल्पशक्तीनां शिष्याणामनुग्रहाय यत्प्रोक्तं तदङ्गबाह्यमिति ॥ सर्वज्ञप्रणीतत्वादानन्त्याच्च ज्ञेयस्य श्रुतज्ञानं मतिज्ञानान्महाविषयम् । तस्य च महाविषयत्वात्तांस्तानर्थानधिकृत्य प्रकरणसमाप्त्यपेक्षमङ्गोपाङ्गनानात्वम् । किं चान्यत्—सुखग्रहणधारणविज्ञानापोहप्रयोगार्थं च । अन्यथा ह्यनिबद्धमङ्गोपाङ्गशः समुद्रप्रतरणवद् दुरध्यवसेयं स्यात् । एतेन पूर्वाणि वस्तूनि प्राभृतानि प्राभृतप्राभृतानि अध्ययनान्युद्देशाश्च व्याख्याताः ॥ अत्राह । मतिश्रुतयोस्तुल्यविषयत्वं वक्ष्यति । द्रव्येष्वसर्वपर्यायेष्विति । तस्मादेकत्वमेवास्त्विति । अत्रोच्यते । उक्तमेतत् साम्प्रतकालविषयं मतिज्ञानं श्रुतज्ञानं तु त्रिकालविषयं विशुद्धतरं चेति । किं चान्यत्—मतिज्ञानमिन्द्रियानिन्द्रियनिमित्तमात्मनो ज्ञस्वाभाव्यात्पारिणामिकम् । श्रुतज्ञानं तु तत्पूर्वकमाप्तोपदेशाद् भवतीति ॥ अत्राह—उक्तं श्रुतज्ञानम् । अथावधिज्ञानं किमिति । अत्रोच्यते ॥

( यशो० टीका ) अत्र श्रुतमिति लक्ष्यम् । मतिपूर्वमिति लक्षणम्, द्व्यादिविधानम् । अत्र, श्रूयते स श्रुतमिति व्युत्पत्त्या शब्दो न ग्राह्यो, ज्ञानविचारप्रस्तावात् । किन्तु भावव्युत्पत्त्या ज्ञानमिति व्याचष्टे श्रुतज्ञानमिति, मतिपूर्वमिति विवृणोति मतिज्ञानपूर्वकं भवतीति, श्रुतग्रन्थानुसारिमतिज्ञानजन्यं ज्ञानं श्रुतज्ञानमित्यर्थः । तादृशी च मतिः पदसङ्केतव्युत्पत्त्यादिविषयेहापोहरूपा ग्राह्या । तेन न धूम-

विंशतितमसूत्रमवतारयन्नाह—अत्राभिनिबोधिकादि इत्यादिना । अत्रेति—उक्तसूत्रे इत्यर्थः । व्युत्पत्त्येति—कर्मव्युत्पत्त्येत्यर्थः । यद्यपि प्रागभावावच्छिन्नकालसम्बन्ध एव पूर्वपदार्थो न तु कारणत्वम्, गौरवात्, घटात्पूर्वं पट उत्पन्न इत्यादावकारणेऽपि पूर्वपदव्यवहाराच्च, तथाप्यन्वयव्यतिरेकाभ्यां मतेश्श्रुतज्ञानहेतुत्वावधारणादत्र "सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिः" इत्यादाविव पूर्वपदस्य तात्पर्यान्यथानुपपत्तिमूलिकां कारणत्वे लक्षणां कृत्वा तद्घटितमर्थमाह—श्रुतग्रन्थानुसारिमतिज्ञानजन्यं ज्ञानमिति—श्रुतग्रन्थानुसारिमतिज्ञाननिष्ठकारणतानिरूपितकार्यताशालिज्ञानमित्यर्थः । उक्तलक्षणमतिग्रहणफलमाह—तेनेति—धूमज्ञानस्य चाक्षुषमतिज्ञानरूपत्वेऽपि पदसङ्केतार्थोपस्थितिशक्तिग्रहादिरूपत्वाभावेन न तज्जन्यवह्निज्ञानादौ श्रुतज्ञानत्वप्रसङ्गलक्षणातिव्याप्तिरिति भावः । तथास्वाभाव्यात्क्रमोत्पन्नोपयोगापेक्षया न तु लब्ध्यपेक्षया मतिज्ञानश्रुतज्ञानयोर्यः [illegible] प्रदर्श

प्रश्नितस्य जीवादेर्यत्र प्रतिवचनं भगवता दत्तं तत्प्रश्नव्याकरणम् । विपाकः कर्मणामनुभवस्तं सूत्रयति दर्शयति यत्तद्विपाकसूत्रम् । दृष्टीनामज्ञानिकादीनां यत्र प्ररूपणा कृता स दृष्टिवादः । तासां वा पातो यत्र स दृष्टिपातः । एतावदन्यतरश्रुतजन्यं ज्ञानं श्रुतज्ञानम् । तन्मतिविशेषः किं न स्यादिति पृच्छति मतिश्रुतयोरिति । अत्रोच्यत-इत्यादस्योत्तरम्, संबद्धवर्तमानमात्रग्राहिमतिज्ञानवृत्तिजातिस्त्रिकालविषये श्रुते नास्तीति ततस्तदतिरिच्यत इत्यर्थः । इदं स्वयं मन्ये इदं श्रुत्वा जानामीत्याद्यनुभवादेव तयोर्भेद इत्यानुभाविकाः । अथ श्रुतज्ञानस्य द्विविधत्वादिकं किमुनाधिकृतमित्याशङ्कते गृह्णीम इत्यादिना, उत्तरमाह-उच्यते वक्तृविशेषादित्यादि, वक्तारस्तस्य ग्रन्थराशेर्निबन्धकास्तेषां विशेषो भेदस्तस्माद् द्वैविध्यं द्विभेदता परिभाषणीया, यद्भगवद्भिरित्यादेरयं समुदायार्थः । तीर्थकृद्भिरर्थः कथितः स गणधरैर्गणधरशिष्यादिभिश्च रचित इति गणधरास्तद्वंशवर्त्तिनश्च ये वक्तारस्तद्भेदाद् द्विविधमिति इदमेव यदुक्तं तैर्भगवद्भिरैश्वर्यादिमद्भिः, सर्वद्रव्यपर्यायान् जानन्ति विशेषतस्तैः सर्वज्ञैः, तान् पश्यन्ति सामान्यतस्तैः सर्वदर्शिभिः, निश्चयनं सम्यग् निश्चय इति यावत् । **तीर्थकृद्भिरर्थः कथितः स गणधरैर्गणधरशिष्यादिभिश्च रचित इति**-विशकलितपुष्पौघो मालाकारैर्मालारूपेण निबद्ध इव तीर्थकृद्भिस्स्वमुखेनोच्चरितो योऽर्थः स गणधरभगवद्भिस्तच्छिष्यादिभिश्च सूत्ररूपेण निबद्ध इत्यर्थः । "ईसरिय-रूव-सिरि-जस-धम्म-पयत्ता भगाभिक्खा । ते तेसिमसामण्णा संति जओ तेण भगवंत ॥ १०४८ ॥" इति महाभाष्यमनुसृत्य भगवच्छब्दार्थमाह-**ऐश्वर्यादिमद्भिरिति**-प्राकृतपुरुषातिशायिपारमार्थिकैश्वर्यादिषड्धर्मसमन्वितैरित्यर्थः । नातो मायाविषु भगवत्त्वप्रसङ्ग इति । ऐश्वर्यादिमान् बौद्धमतानुयायिभिरपि सुगतदेवोऽभ्युपगतः, न च स जगदन्तर्गतनिखिलद्रव्यनिखिलपर्यायज्ञस्तैरभ्युपगतः किन्त्विष्टतत्त्वज्ञ एव, यदुक्तं-"सर्वं पश्यतु वा मा वा, तत्त्वमिष्टं तु पश्यतु । कीटसङ्ख्यापरिज्ञानं, तस्य नः क्वोपयुज्यते ? ॥ १ ॥ तस्मादनुष्ठानगतं, ज्ञानमस्य विचार्यताम् । प्रमाणं दूरदर्शी चे-देते गृध्रानुपास्महे ॥२॥" इति तन्मतस्य, "हेयोपादेयतत्त्वस्य साध्योपायस्य वेदकः । यः प्रमाणमसाविष्टो, न तु सर्वस्य वेदकः ॥१॥" इति कैश्चिदभ्युपगतस्य मतस्य च-" ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टयम् ॥ १ ॥ " इत्याद्युक्तेरनादिसिद्धैश्वर्यादिसमन्वितपरमपुरुषप्रतिपादनपरनयवादस्य च कुमारिलभट्टादिभिर्मीमांसकैस्सर्वज्ञ एव नैवाभ्युपगत इति तन्मतस्य च यैश्चैकान्तवादिभिर्वैशेषिकनैयायिकसाङ्ख्यवेदान्त्यादिभिर्यथाक्रमं सप्तषोडशपञ्चविंशतिब्रह्मतत्त्वादिकमेकान्तस्वरूपतया जानन् प्रतिपादयंश्च सर्वज्ञोऽभ्युपगतस्तन्मतस्य च निरासार्थमुपात्तविशेषणस्य सर्वज्ञैरित्यस्यार्थमाह **सर्वद्रव्यपर्यायान् जानन्ति विशेषतस्तैरिति** । उक्तमतनिरासो मत्कृतस्याद्वादबिन्दुसम्मतितर्कमहार्णवावतारिकातोऽवसेयः, ग्रन्थगौरवभीत्याऽत्र नोच्यत इति । ये चैकान्तविशेषवादिनस्सर्वज्ञमभ्युपगच्छन्ति न तु सर्वदर्शिनम्, विशेषातिरिक्तसामान्यस्यैवाभावेनाखिलस्वस्वानुगतसामान्यधर्माकारतया दर्शनस्योत्पत्तेरयोगादिति तन्मतनिरासार्थमुपात्तविशेषणस्य सर्वदर्शिभिरित्यस्यार्थमाह **तान् पश्यन्ति सामान्यतस्तैरिति**-सर्वज्ञास्सर्वदर्शिनस्सामान्यकेवलिनोऽपि भवन्तीत्यतोऽर्हतां चतुस्त्रिंशदष्टप्रातिहार्याद्यतिशयादिसम्पत्तिप्राप्त्या ते सामान्यकेवल्यपेक्षयाऽप्युत्कृष्टा इत्येवमर्हद्विशेष्यकसामान्यकेवल्यवधि-

ह्यमङ्गप्रविष्टं च। अङ्गेभ्य आचाराङ्गादिभ्यो बाह्यं भिन्नं, अङ्गेष्वाचाराङ्गादिषु प्रविष्टमाधेयतया सम्बद्धम्। अङ्गत्वेनाधारता, श्रुतत्वेनाधेयता। तद् द्विविधं पुनर्यथासङ्ख्यमनेकविधं द्वादशविधं च। अङ्गबाह्यमनेकविधम्, अङ्गप्रविष्टं द्वादशविधमित्यर्थः। सामायिकं समभावो यत्राध्ययने वर्ण्यते, चतुर्विंशतीनां पूरणस्यारादुपकारिणो यत्र स्तवः शेषाणां च तीर्थकृतां (वर्ण्यते) स चतुर्विंशतिस्तवः। वन्दनं गुणवतः प्रणामो यत्र वर्ण्यते तद्वन्दनम्। असंयमस्थानं प्राप्तस्य यतेस्तस्मात् प्रतिनिवर्तनं यत्र वर्ण्यते तत्प्रतिक्रमणम्। कृतस्य पापस्य यत्र स्थानमौनध्यानरूपकायत्यागेन विशुद्धिराख्यायते स कायव्युत्सर्गः। मूलोत्तरगुणधारणीयता यत्र ख्याप्यते तत्प्रत्याख्यानम्। एतैरध्ययनैरावश्यकश्रुतस्कन्ध उक्तः। दश विकाले पुत्रहिताय स्थापितान्यध्ययनानि दशवैकालिकम्। आचारात्परतः पूर्वकाले यस्मादेतानि पठितवन्तो यतयस्तेनोत्तराध्ययनानि। पूर्वेभ्य आनीय सङ्घसन्ततिहिताय स्थापितान्यध्ययनानि दशा उच्यन्ते, दशा इति व्यवस्थावचनः शब्दः काचित्प्रतिविशिष्टावस्था यतीनां यासु वर्ण्यते ता दशा इति। आभवत्प्रायश्चित्तदानप्रायश्चित्तयोः कल्पनाद्भेदनाद्व्यवहरणाद्दानाच्च कल्पव्यवहारौ, उभयविधप्रायश्चित्तज्ञापकताया उभयत्र पर्याप्तत्वाद् द्वित्वविश्रान्तपदाभिज्ञानम्। निशीथमप्रकाशं सूत्रार्थाभ्याम्। ऋषिभाषितानि प्रत्येकबुद्धादिप्रणीतानि कापिलीयादीनि, एवमादिसर्वमङ्गबाह्यं दृश्यम्। अङ्गप्रविष्टं द्वादशविधं भण्यते। तद्यथा-आचारो ज्ञानादिर्यत्र कथ्यते स आचारः। सूत्रीकृता अज्ञानिकादयो यत्र वादिनस्तत्सूत्रकृतम्, यत्रैकानि पर्यायान्तराणि वर्ण्यन्ते तत्स्थानम्। सम्यगवायनं वर्षधरनद्यादिपर्वतानां यत्र स समवायः। व्याख्याया जीवादिगताया यत्र नयद्वारेण प्ररूपणा क्रियते सा व्याख्याप्रज्ञप्तिः। ज्ञाता दृष्टान्तास्तानुपादाय धर्मो यत्र कथ्यते ता ज्ञाताधर्मकथाः। उपासकैरेवं स्थातव्यमिति येष्वध्ययनेषु दशसु वर्ण्यते ता उपासकदशाः। अन्तकृतः सिद्धास्ते यत्र स्था(ख्या)प्यन्ते वर्द्धमानस्वामिनस्तीर्थे एतावन्त एवं सर्वतीर्थकृतां ता अन्तकृद्दशाः। अनुत्तरोपपादिका देवा येषु ख्याप्यन्ते ता अनुत्तरोपपादिकदशाः।

मर्थ्याद् वृत्तिर्न स्यात्। ननु शिवस्य भगवता सामर्थ्येऽपि भागवतेनासामर्थ्यात् कथं समासोऽत आह अवयवेति॥ भक्तिः सेव्यः कर्माणि क्तिन्॥ शिवभागवताः कापालिकाः। ते हि शूलहस्ताः प्रायेण भिक्षां चरन्ति॥ इत्युक्तम्। (अ. ५, पा. २, सू. ७६) दशविकाले पुत्रहितायेत्यादि। यदाह—“मणगं पडुच्च सेज्जं—भवेण निज्जूहिया दसऽज्झयणा। वेयालियाइ ठविया तम्हा दसकालियं णामं॥१॥” इति। उत्तराणि श्रीदशवैकालिकनिष्पत्तेः प्राक् आचाराङ्गपठनोत्तरकालं पठ्यमानत्वेन दशवैकालिकनिष्पत्तेरनु च तत एवोर्ध्वमधीयमानत्वेनोत्तराणि वा प्रधानाध्ययनानि उत्तराध्ययनानीत्याह आचारात्परत इत्यादि॥ उक्तश्च जीतकल्पे “आयारस्स उ उवरिं, उत्तरज्झयणाओ आसि पुव्विं तु। दसवेयालिय उवरिं, इयाणिं ते किं न होंति उ॥ १ ॥” इति। पर्याप्तत्वादिति—उभयत्वावच्छेदेनेति शेषः। ज्ञानादिरिति—ज्ञानाद्यासेवनविधिरित्यर्थः। अज्ञानिकादय इति सप्तषष्ठीसङ्ख्याका अज्ञानिनः, अशीत्यधिकैकशतमिताः क्रियावादिनः, चतुरधिकाशीतिसङ्ख्यका अक्रियावादिनः, द्वात्रिंशत्प्रकारा वैनयिका इत्येवं त्रिषष्ठ्यधिकशतत्रयसङ्ख्यका इत्यर्थः। सम्यगवायनमिति सम्यग्

प्रश्नितस्य जीवादेर्यत्र प्रतिवचनं भगवता दत्तं तत्प्रश्नव्याकरणम् । विपाकः कर्मणामनुभवस्तं सूत्रयति दर्शयति यत्तद्विपाकसूत्रम् । दृष्टीनामज्ञानिकादीनां यत्र प्ररूपणा कृता स दृष्टिवादः । तासां वा पातो यत्र स दृष्टिपातः । एतावदन्यतरश्रुतजन्यं ज्ञानं श्रुतज्ञानम् । तन्मतिविशेषः किं न स्यादिति पृच्छति मतिश्रुतयोरिति । अत्रोच्यत–इत्यारभ्योत्तरम्, संबद्धवर्तमानमात्रग्राहिमतिज्ञानवृत्तिजातिस्त्रिकालविषये श्रुते नास्तीति ततस्तदतिरिच्यत इत्यर्थः । इदं स्वयं मन्ये इदं श्रुत्वा जानामीत्याद्यनुभवादेव तयोर्भेद इत्यानुभाविकाः । अथ श्रुतज्ञानस्य द्विविधत्वादिकं किमुपाधिकृतमित्याशङ्कते गृह्णीम इत्यादिना, उत्तरमाह–उच्यते वक्तृविशेषादित्यादि, वक्तारस्तस्य ग्रन्थराशेर्निबन्धकास्तेषां विशेषो भेदस्तस्माद् द्वैविध्यं द्विभेदता परिभाषणीया, यद्भगवद्भिरित्यादेरयं समुदायार्थः । तीर्थकृद्भिरर्थः कथितः स गणधरैर्गणधरशिष्यादिभिश्च रचित इति गणधरास्तद्वंशवर्त्तिनश्च ये वक्तारस्तद्भेदाद् द्विविधमिति इदमेव यदुक्तं तैर्भगवद्भिरैश्वर्यादिमद्भिः, सर्वद्रव्यपर्यायान् जानन्ति विशेषतस्तैः सर्वज्ञैः, तान् पश्यन्ति सामान्यतस्तैः सर्वदर्शिभिः, निश्चयनं सम्यग् निश्चय इति यावत् । तीर्थकृद्भिरर्थः कथितः स गणधरैर्गणधरशिष्यादिभिश्च रचित इति–विशकलितपुष्पौघो मालाकारैर्मालारूपेण निबद्ध इव तीर्थकृद्भिस्स्वमुखेनोच्चरितो योऽर्थः स गणधरभगवद्भिस्तच्छिष्यादिभिश्च सूत्ररूपेण निबद्ध इत्यर्थः ।" ईसरिय–रूव–सिरि–जस–धम्म–पयत्ता भगाभिक्खा । ते तेसिमसामण्णा संति जओ तेण भगवंत ॥ १०४८ ॥" इति महाभाष्यमनुसृत्य भगवच्छब्दार्थमाह–ऐश्वर्यादिमद्भिरिति–प्राकृतपुरुषातिशायिपारमार्थिकैश्वर्यादिषड्धर्मसमन्वितैरित्यर्थः । नातो मायाविषु भगवत्त्वप्रसङ्ग इति । ऐश्वर्यादिमान् बौद्धमतानुयायिभिरपि सुगतदेवोऽभ्युपगतः, न च स जगदन्तर्गतनिखिलद्रव्यनिखिलपर्यायज्ञस्तैरभ्युपगतः किन्त्विष्टतत्त्वज्ञ एव, यदुक्तं–"सर्वं पश्यतु वा मा वा, तत्त्वमिष्टं तु पश्यतु । कीटसङ्ख्यापरिज्ञानं, तस्य नः क्वोपयुज्यते ? ॥ १ ॥ तस्मादनुष्ठानगतं, ज्ञानमस्य विचार्यताम् । प्रमाणं दूरदर्शी चे–देते गृध्रानुपास्महे ॥२॥" इति तन्मतस्य, "हेयोपादेयतत्त्वस्य साध्योपायस्य वेदकः । यः प्रमाणमसाविष्टो, न तु सर्वस्य वेदकः ॥१॥" इति कैश्चिदभ्युपगतस्य मतस्य च–" ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टयम् ॥ १ ॥ " इत्याद्युक्तेरनादिसिद्धैश्वर्यादिसमन्वितपरमपुरुषप्रतिपादनपरनयवादस्य च कुमारिलभट्टादिभिर्मीमांसकैस्सर्वज्ञ एव नैवाभ्युपगत इति तन्मतस्य च यैश्चैकान्तवादिभिर्वैशेषिकनैयायिकसाङ्ख्यवेदान्तादिभिर्यथाक्रमं सप्तषोडशपञ्चविंशतिब्रह्मतत्त्वादिकमेकान्तस्वरूपतया जानन् प्रतिपादयंश्च सर्वज्ञोऽभ्युपगतस्तन्मतस्य च निरासार्थमुपात्तविशेषणस्य सर्वज्ञैरित्यस्यार्थमाह सर्वद्रव्यपर्यायान् जानन्ति विशेषतस्तैरिति । उक्तमतनिरासो मत्कृतस्याद्वादबिन्दुसम्मतितर्कमहार्णवावतारिकातोऽवसेयः, ग्रन्थगौरवभीत्याऽत्र नोच्यत इति । ये चैकान्तविशेषवादिनस्सर्वज्ञमभ्युपगच्छन्ति न तु सर्वदर्शिनम्, विशेषातिरिक्तसामान्यस्यैवाभावेनाखिलस्वस्वानुगतसामान्यधर्माकारतया दर्शनस्योत्पत्तेरयोगादिति तन्मतनिरासार्थमुपात्तविशेषणस्य सर्वदर्शिभिरित्यस्यार्थमाह तान् पश्यन्ति सामान्यतस्तैरिति–सर्वज्ञास्सर्वदर्शिनस्सामान्यकेवलिनोऽपि भवन्तीत्यतोऽर्हतां चतुस्त्रिंशदष्टप्रातिहार्याद्यतिशयादिसम्पत्तिप्राप्त्या ते सामान्यकेवल्यपेक्षयाऽप्युत्कृष्टा इत्येवमर्हद्विशेष्यकसामान्यकेवल्यवधि-

ऋषयः सामान्यकेवलिनस्तेभ्यः परमैः परमर्षिभिः, पूजां त्रिदशादीनामर्हन्ति तैरर्हद्भिः; कृतकृत्या अर्हन्तः कुतोऽर्थं गणधरेभ्यः कथयन्तीत्यत्र हेत्वपेक्षायामाह—तत्स्वाभाव्यात्, तीर्थकृत उत्पन्नज्ञाना अर्थं प्रकाशयन्त्येवेति तेषां स्वभावात् । न हि स्वभावे पर्यनुयोगोऽस्ति भास्करप्रकाशवत्, किमर्थमयमंशुमाली जगत्प्रकाशयतीति प्रश्नानवकाशात् । नित्ये स्वभावे नास्ति पर्यनुयोगोऽनित्ये तु कुत इति हेतुप्रश्नो भवत्येव, नियतावधिककार्योत्पत्तिस्वभावस्य कारणनियम्यत्वात्, अत एव "हेतुभूतिनिषेधो न, स्वानुपाख्यविधिर्न च ॥ स्वभाववर्णना नैव

कोत्कृष्टत्वप्रकारकप्रतिपत्तिश्श्रोतॄणां जायतामित्येतदर्थमुपात्तविशेषणस्य परमर्षिभिरित्यस्यार्थमाह **ऋषयः सामान्यकेवलिनः, तेभ्यः परमैरिति** । उक्तविशेषणैरनन्तज्ञानानन्तदर्शनलक्षणस्वार्थसम्पत्तिं प्रदर्श्य परार्थसम्पत्तिप्रदर्शनायोपात्तविशेषणस्यार्हद्भिरित्यस्यार्थमाह **पूजां त्रिदशादीनामर्हन्ति तैरिति** । पूजाम्—अशोकादिप्रातिहार्यलक्षणाम्, नन्वर्हन्तः कृतकृत्याश्चेत्तदा गणधरेभ्योऽर्थकथनं निरर्थकं, प्रयोजनविरहात्, प्रयोजनमन्तरेण च तत्प्रयासस्यायुक्तत्वात्, प्रयोजनमस्तीत्यत उपदिशन्तीति चेत् तर्हि कृतकृत्यत्वानुपपत्तिस्स्यादित्याशयेन प्रश्नयति—**कृतकृत्या अर्हन्त इत्यादि, गणधरेभ्य इति**—उपलक्षणमेतदन्येषाम्, सुरासुरनरोरगतिर्यक्साधारण्या योजनगामिन्या वाण्या शेषभव्यजीवानामपि निःश्रेयसाभ्युदयसाधनोपदेशदानात्, उक्तञ्चावश्यकसूत्रे बृहत्कल्पभाष्ये च "तित्थयरणामं कोउं कहेइ साहारणेण सद्देणं । सव्वेसिं सण्णीणं जोयणणीहारिणा भयवं ॥५६६॥ ११९२॥" इति । तीर्थकृद्भगवतां तीर्थकृन्नामकर्मविपाकोदयप्रयोज्यजगत्तत्त्वप्रकाशकत्वस्वभावस्यापर्यनुयोज्यत्वे दृष्टान्तमाह—**भास्करप्रकाशवदिति, कारणनियम्यत्वादिति** कारणाधीनत्वादित्यर्थः, कारणस्य नियामकस्य पूर्वकाले सत्त्वे सति भावादिति भावः । अत एवेति—उक्तस्वभावस्य कारणनियम्यत्वादेवेत्यर्थः । अकस्माद्भवतीत्यत्र किंशब्दो यदा हेतुपरस्तदा तस्य नञा सम्बन्धाद्धेत्वभावाद् भवनमित्यर्थो लभ्यते, यदा तु भवनक्रियाया नञा सम्बन्धस्तदा प्रसज्यप्रतिषेधे भवननिषेधोऽर्थो लभ्यते किंशब्दसमस्यमानेनापि नञा सह भवतीत्यस्यान्वयात् । तदुभयनिरसनायाह **हेतुभूतिनिषेधो नेति**—हेतुनिषेधो न, भूतिर्भवनं तन्निषेधोऽपि नेत्यर्थः । हेतुनिषेधे भवनस्यानपेक्षत्वेन सर्वदा भवनप्रसङ्गः, भवनप्रतिषेधे प्राक्पश्चादिव मध्येऽप्यभवनप्रसङ्गः । अथाकस्माद्भवतीत्यस्य स्वस्माद् भवति अथवा अनुपाख्याद्भवतीत्यर्थश्चेत्तत्राह—**स्वानुपाख्यविधिर्न चेति** स्वं कार्यं तस्मान्न च विधिर्विधानं भवनमिति यावत् । यतः स्वोत्पत्तेः पूर्वं यदि स्वं भवेत्तदा नियतकालीनकार्योत्पत्तौ हेतुस्स्यात्, न चैवम्, अनुपाख्यादलीकान्न च विधिः कार्यभवनं कार्योत्पत्तिरिति यावत् । यतोऽनुपाख्यस्य न कार्यकारित्वम्, तथापि तथाभ्युपगमे प्रागप्यनुपाख्यस्यानुपाख्यतया भावात्ततः कार्यस्य सत्त्वप्रसक्तौ सदातनत्वं स्यात् । अथाकस्मादित्यस्य स्वभावादेव कार्यस्य कादाचित्कत्वमित्यर्थः, तत्राह **स्वभाववर्णना नैवमिति** । स्वस्य भावः स्वभावः, किं वा स्वमेव भावः स्वभाव इति

अवधेर्नियतत्वतः ॥" इत्युदयनकारिकाया स्वभावमादायाप्यकस्माद्भावपक्षो बौद्धोद्दङ्कितो दूषित इत्यत आह -परमशुभस्योत्कृष्टपुण्यात्मनो यस्मिन्नभ्युदितेऽसाताद्या अपि प्रकृतयोऽशुभा न स्वविपाकं स्फुटं दर्शयितुमलम्, क्षीराऽऽपूरितकुम्भे पिचुमन्दरसबिन्दुवत् । तथा प्रवचनं श्रुतं सङ्घो वा तत्प्रतिष्ठापनं फलं यस्य तादृशस्य तीर्थकरनामकर्मणोऽनुभावाद्विपाकोदयात् । एवं यदुक्तं तीर्थकृद्भि स्तदेवार्थजातं गृहीत्वा गणधरैर्भगवच्छिष्यैः, न तु स्वयं गृहीतलिङ्गैः, अतिशयवद्भिर्घटात् घटसहस्रनिर्माणाद्युपलक्षितविशिष्टशक्त्युपेतैः, उत्तमाः प्रधाना अतिशयाः प्रसादादयो वाग्वाणी बुद्धिश्च बीजकोष्ठादिका ताभिः संपन्नैरन्वितैः, दृब्धं रचितं तदङ्गप्रविष्टं भण्यते । अङ्गबाह्यं ततोऽर्वाग्भिः कृतमिति तदुच्यते । गणधरा इन्द्रभूत्यादयस्तेषामानन्तर्यं येषा ते जम्ब्वादयस्ते आदिर्येषा ते प्रभवादयस्तैः, अत्यन्तविशुद्धागमैरतीनिर्मलक्षयोपशमैः, परमप्रकृष्टा वाग्मतिशक्तयो येषा तैः, आचार्यैः पञ्चविधाचारा-

द्वयी गतिः, तत्र नाद्यः, यतस्स्वस्य भावः स्वधर्मः, तया च स्वधर्मात्स्वस्योत्पत्तिः प्रतिज्ञाता स्यात्, सा च न युक्ता, स्वधर्मेण स्वस्यानुत्पत्तेः, स्वपूर्वं स्वधर्मस्यैवाभावात्, आश्रयाभावे आश्रितानुत्पत्तेः, न द्वितीयोऽपि, पौर्वापर्यनियतस्य कार्यकारणभावस्यैकस्मिन् वस्तुन्यसम्भवात्, न हि स्वमेव स्वस्मात् पूर्वमुत्तरञ्च भवतीति । सर्वत्र निषेधे हेतुमाह अवधेर्नियतत्वत इति–नियतावधिककार्यदर्शनात्, अनियतावधिकत्वे च कार्याणां कादाचित्कत्वं न स्यादिति भावः । विशेषार्थिना कुसुमाञ्जलिटीकाऽवलोकनीयेति । तीर्थकरनामकर्मणोऽनुभावादिति–घातिकर्मक्षयोत्थकेवलज्ञानावाप्त्याऽर्हन्तो भगवन्तः कृतकृत्या अपि नैव सर्वथा तथाविधाः, स्वपूर्वतृतीयभवासेवितविशुद्धतमविंशतिस्थानकतपोबलनिकाचिततीर्थकरनामकर्मविपाकोदयस्य केवलज्ञानप्रादुर्भावकालीनस्यात्र सद्भावेन सर्वथा सिद्धार्थत्वाभावात्, तत्क्षयार्थं ते ह्युपदिशन्ति, उक्तञ्च विशेषावश्यके–"तित्थयरो किं कारणं, भासइ सामाइयं तु अज्झयणं ? । तित्थयरणामगोत्तं, कम्मं मे वेइयव्वंति ॥२१२२॥ तं च कहं वेइज्जइ ? अगिलाए धम्मदेसणाईहिं । बज्झइ तं तु भगवओ, तइयभवोसक्कइत्ता णं ॥२१२३॥" इति । "पहू णं भंते ! चउदसपुव्वी घडाओ घडसहस्सं पडाओ पडसहस्सं विउव्वित्तए ! हंता पहू" इत्यादिपरमार्षवचनमाश्रित्याह–अतिशयवद्भिर्घटान् घटसहस्रनिर्माणाद्युपलक्षितविशिष्टशक्त्युपेतैरिति । बीजकोष्ठादिका इति बीजबुद्धिः कोष्ठबुद्धिश्चादिर्यस्याः सा तयेत्यर्थः । तत्रोत्पादव्ययध्रौव्ययुक्तं सदित्यादिवदर्थप्रधानेनैकेनापि बीजभूतेन पदेनाधिगतेन शेषमश्रुतमपि यथावस्थितं प्रभूतमर्थमवगाहते या बुद्धिः सा बीजबुद्धिः, सा च श्रीगौतमादिगणधरभगवतामेव सर्वोत्तमा प्रकर्षप्राप्ता । कोष्ठे धान्यमिव या बुद्धिराचार्यमुखाद्विनिर्गतौ तदवस्थाविव सूत्रार्थौ धारयति, न किमपि तयोस्सूत्रार्थयोः कालान्तरेऽपि गलति सा कोष्ठबुद्धिः, आदिपदेन पदानुसारिबुद्धिर्ग्राह्या, या बुद्धिराचार्यभगवन्मुखादेकमपि सूत्रपदमवधार्य शेषमश्रुतमपि तदवस्थमेव श्रुतमवगाहते सा पदानुसारिणी बुद्धिरित्यर्थः । दुरध्यवसेयमशक्यज्ञानोपायं कथं स्यादित्याशङ्कायां तन्निवृत्त्यर्थं

क्षुधादिभिः, कालो दुःषमाभिधानः, संहननं छेदवर्ति, आयुरल्पजीवितम्, तेषां दोषस्तथापरिणामस्तस्मात्, अल्पशक्तीनां हीनसामर्थ्यानाम्, शिष्याणामनुग्रहायाल्पेनैव ग्रन्थेन सुबहुमर्थमेतेऽवगाहन्तामितीच्छया, यत् प्रोक्तं प्रवचनादुद्धृत्य दशवैकालिकादि, तदङ्गबाह्यम् । अत एवादूरविप्रकर्षेण सर्वज्ञप्रणीतत्वादनन्तत्वाच्च ज्ञेयस्य विषयस्य, महाविषयं द्विविधमपि श्रुतज्ञानं साम्प्रतार्थग्राहिण्या मतेः, तस्य च श्रुतज्ञानस्य, महाविषयत्वात्तांस्तानर्थान् जीवादीन्, अधिकृत्य, प्रकरणं विवक्षितजीवादिनिरूपणं, तस्य समाप्तिस्तद्बोधकतापर्याप्तिस्तामपेक्षते यत्तत्तथा, अङ्गोपाङ्गनानात्वं तद्रचनाभेदः । किं चान्यत् इतश्च कारणादङ्गोपाङ्गनानात्वम् सुखग्रहणेत्यादि, सुखेनानायासेनापूर्वस्य ग्रहणं करिष्यन्ति, सुखेन च गृहीतं धारयिष्यन्ति, सुखेन विज्ञानं तस्मिन्नर्थे उत्पादयिष्यन्ति, सुखेनापोहं निश्चयं करिष्यन्ति, एवमेषोऽर्थः स्थित इति । सुखेन च प्रयोगं व्यापारं करिष्यन्ति प्रत्यवेक्षणादिकाले तेन विदितेनेति । व्यतिरेकेऽनुपपत्तिमाह—अन्यथा हीत्यादि । अन्यथा—भेदरचनाभावे, हि निश्चितम्, अङ्गोपाङ्गशः अङ्गोपाङ्गाभ्यां, अल्पार्थाच्छश्, अनिबद्धं मितरचनयाऽसूत्रितम्, समुद्रप्रतरणवद्दुरध्यवसेयमशक्यज्ञानोपायं स्यादपरिच्छिन्नत्वादिति भावः । अङ्गोपाङ्गरचनया परिच्छेदे तु नदीतडागादितरणवद्धलवदनिष्टाननुबन्धित्वाच्छक्योपायतया तत्र शिष्याणा प्रवृत्तिरव्याहता स्यादित्यवधेयम् । पूर्वादिरचनायामप्ययमेवातिदेश इत्याह—एतेनेत्यादि—एतेनाङ्गोपाङ्गभेदप्रयोजनेन सुखग्रहणादिना, पूर्वाण्युत्पादपूर्वादीनि, वस्तूनि तदंशाः, प्राभृतानि वस्त्वंशाः, प्राभृतप्राभृतानि प्राभृतांशाः, अध्ययनानि ततोऽल्पतराणि, उद्देशकास्ततोऽल्पतराः, ते सर्वे व्याख्याताः, सुखग्रहणादेरेव तद्भेदरचनाया प्रयोजनत्वादिति भावः । तदेवं श्रुतस्य द्विविधत्वादिकरणे प्रयोजनमुक्तम्, तथाप्यसर्वपर्यायसर्वद्रव्यविषयत्वसाधारणधर्मदर्शनान्मतिश्रुतयोरैक्यं शङ्कमानस्तद्भेदहेतौ पूर्वोक्तेऽपरितुष्यन् कश्चित् प्रत्यवतिष्ठत इत्याह—अत्राहेत्यादि, समाधत्ते—अत्रोच्यत इति, उक्तमेव हेतु स्मारयति उक्तमेतदित्यादि, यद्यपि मतिस्मृतिचिन्तारूपेण मतिज्ञानस्यापि त्रिकालविषयत्वमुपवर्णितम्,

---

तत्र हेतुमाह अपरिच्छिन्नत्वादिति—अपरिमितजलमानत्वाद्, यथा समुद्रं दृष्ट्वा तरणोपायमजानतः पुंसः सुखेन बाहुभ्यां प्रतरामीति नैव चित्तवृत्तिर्भवति, अतिसाहसवृत्त्या प्रतरणप्रवृत्तोऽप्यल्पमात्रं गतो दुरुत्तरोऽयमिति मत्त्वाऽतिखिन्नः प्रत्यानिवृत्तो नैव पारं प्राप्नुयात्, एवमिहापि तीर्थकृदुपदिष्टत्वेनापरिमितार्थकत्वाच्छ्रुतस्याङ्गोपाङ्गभेदेन रचनाया अभावे समुद्रोपमं तन्मन्दबुद्धित्वेनानधिगतप्रवेशमार्गस्य शिष्यस्य नैव सुशक्यावगाहं स्यात्, सहसा कदाचित्सोत्साहः सोऽवगाहं कुर्यात्तदापि नैव श्रुतज्ञानस्य पारं प्राप्नुयात्, वर्त्तमानार्थविषयकमतिज्ञानापेक्षया त्रिकालावच्छिन्नार्थविषयकस्य तस्य महाविषयत्वादपरिमितार्थकत्वेन तदर्थयथार्थज्ञानाभावादिति भावः । मतिस्मृतिचिन्तारूपेण मतिज्ञानस्यापि त्रिकालविषयत्वमिति—यद्यपि कालस्यातीन्द्रियत्वेन न त्रिकालविषयत्वं मतिस्मृतिचिन्तानां, येन तद्रूपेण मतिज्ञानस्यापि कालत्रयविषयत्वं स्यात्, तथापि यथाक्रमं वर्त्तमानातीतानागतकालोपलक्षितार्थविषयकत्वेन तासां त्रिकालविषयत्वमिति तद्रूपेण मतिज्ञानस्यापि तथात्वमिति भावः ।

तथापि तद् भिन्नोपयोगावच्छेदेन, श्रुते त्वेकोपयोगावच्छेदेन त्रिकालविषयत्वमिति न पूर्वोक्तापरितोषः कार्य इति भावः। नन्विदानीमयं घटोऽस्तीत्याद्युपदेशजन्ये लौकिके 'तेणं कालेणं तेणं समएणं' इत्यादिजन्ये चालौकिके श्रुतज्ञाने त्रिकालविषयत्वं नास्तीत्यव्याप्तिः, "उप्पज्जमाणकालं, उप्पण्णंति विगयं विगच्छंतं। दवियं पण्णवयंतो, तिकालविसयं विसेसेइ" इत्यादि स्याद्वादव्युत्पत्तिमहिम्ना त्रिकालविषयत्वं तु सम्यग्दृशो मतिज्ञानेऽप्यव्याहतमिति चेत्, सत्यं, त्रिकालविषयमित्यस्य 'संखाईए वि भवे' इत्यादिप्रतिपादि-

**तद् भिन्नोपयोगावच्छेदेनेति**—मतिस्मृतिचिन्तानां भिन्नकालोत्पद्यमानत्वात् पृथगुपयोगरूपतया तदवच्छेदेन त्रिकालविषयत्वमित्यर्थः। श्रुतज्ञानस्यैकोपयोगावच्छेदेन त्रिकालविषयत्वे प्रतिपादिते सति वादी तत्राव्याप्तिमाशङ्कते **नन्वित्यादि**। "उप्पज्जमाणकालं," इत्यादिगाथेयं सम्मतितर्के तृतीये काण्डे सप्तत्रिंशत्तमा। उत्पद्यमानकालम् उत्पन्नम्, आद्यतन्तुप्रवेशक्रियासमय एवोत्पद्यमानं पटद्रव्यमाद्यांशरूपेणोत्पन्नं, तदा तथोत्पन्नं न चेत्तदाऽऽद्यक्रियासमयवद् द्वितीयतृतीयादिक्रियासमययावदन्त्यक्रियासमयेऽपि तन्नोत्पन्नं स्यादित्यभीष्टकार्यानिर्जनमेव स्यात्, न चोत्पन्नांशेनैव पुनरप्युत्तरोत्तरक्रिययोत्पद्यते, तथा सति तावन्मात्रपटादिद्रव्योत्पत्तिप्रसक्तिरप्रसार्ति, उत्तरोत्तरक्रियायास्तावन्मात्रफलोत्पादन एव चरितार्थत्वात्, किन्त्वन्यान्यांशेनैव, तथा च प्रथमक्रियाक्षणे केनचिदंशेनोत्पन्नं सदुत्तरोत्तरक्रियाक्षणेऽन्यान्यांशेन यद्यपूर्वमपूर्वमुत्पद्यते तदोत्पन्नं भवेत्, नान्यथेति प्रथमतन्तुप्रवेशादारभ्यान्त्यतन्तुसंयोगावधि यावत्प्रवन्धेनोत्पद्यमानं तत्तदंशेनोत्पन्नं तदेव चाभीष्टकार्यतयोत्पत्स्यते इत्युत्पद्यमानमुत्पन्नमुत्पत्स्यमानं च भवति, एवमुत्पन्नमप्युत्पद्यमानमुत्पत्स्यमानं च भवति, तथोत्पत्स्यमानमप्युत्पद्यमानमुत्पन्नं चेत्येवमेकैकमुत्पन्नादिकालत्रयेण त्रैकाल्यं यथा प्रतिपद्यते, तथा विगच्छदादिकालत्रयेणाप्युत्पद्यमानादिरेकैकस्त्रैकाल्यं प्रतिपद्यते, तथाहि यद् यदैवोत्पद्यमानं तत्तदैव किञ्चिदंशेन विगतं विगच्छद् विगमिष्यच्च, तथा यदेव यदैवोत्पन्नं तदेव तदपि विगतादिकालत्रयस्पर्शि ज्ञेयम्, एवमेवोत्पत्स्यमानमपि द्रव्यं तथैव तद्रूपं ज्ञेयम्, एवमेवोत्पन्नोत्पद्यमानोत्पत्स्यमानभेदाः प्रत्येकशो विगतविगच्छद्विगमिष्यद्रूपैरिव स्थिततिष्ठत्स्थास्यद्रूपैरपि सप्रभेदा ज्ञेयाः, एवं स्थितिविगमावपि कालत्रयस्पर्शित्रिलक्षणयोगेनोत्पत्तिप्रणालिकया सप्रभेदौ प्रदर्शनीयाविति सर्वैरेभिर्धर्मैः त्रिकालस्पर्शिभिरविनाभूतं द्रव्यं प्रज्ञापयंस्त्रिकालविषयं विशेषयति, अनेन प्रकारेण त्रिकालविषयं द्रव्यस्वरूपं प्रतिपादयद्वाक्यं प्रमाणम्, तद्व्यतिरिक्तं तु वाक्यमप्रमाणम्, अन्यप्रकारस्य द्रव्यस्याभावादिति गाथार्थः। **संखाईए वि भवे इत्यादीति**—"संखाईए वि भवे, साहइ जं वा परो उ पुच्छिज्जा। ण य णं अणाइसेसी, वियाणई एस छउमत्थो ॥५९०॥" आवश्यकसूत्रे नवत्यधिकपञ्चाशततमेयं बृहत्कल्पसूत्रे सप्तदशाधिकद्वादशशततमा च गाथा। साहइ त्ति देशीवचनतः कथयतीत्यर्थकं क्रियापदं, तच्च कर्माकाङ्क्षमिति तदपेक्षायामाह संखाईए वि भवे जं वा परो उ पुच्छिज्जा इति, सङ्ख्यातीतानपि भवान् यद्वा परस्तु यद्वस्तुजातं पृच्छेत् यत्तदोर्नित्यसम्बन्धात्तत्सर्वमित्यर्थः। अयम्भावः असङ्ख्येयभवीय-

तविशिष्टत्रिकालविषयतावगाहिज्ञानवृत्तिजातिमदित्यर्थे दोषाभावात् । तदाह—विशुद्धतरं चेति । चकारो वार्थः, स च व्यवस्थार्थः, सा चोक्तैव, विशुद्धतरं च व्यवहितविप्रकृष्टानेकसूक्ष्मार्थग्राहित्वादिति वदतटीकाकृतोऽप्ययमेवाशयः । अत एवैतदुत्तरं **किं चान्यदिति** कारणान्तरमाह—**मतिज्ञानमिन्द्रियाणि स्पर्शनादीनि** अनिन्द्रियं मन ओघज्ञानं च निमित्तमालम्ब्य प्रवर्तमानमात्मनो जीवस्य, ज्ञस्वभावाद्भावप्रधाननिर्देशाद् ज्ञत्वस्वभावात्, **पारिणामिकम**नादिपारिणामिकभाववर्ति, जीवत्वव्यवस्थापकत्वात्, न तु कदापि संसारे पर्यटत एतत्परिभ्रष्टम्, **श्रुतज्ञानं तु** नैवं सदातनम्, किन्तु मतिपूर्वकं मत्यविनाभावि सत्, **आप्तोपदेशादर्हदादिवचनमाश्रित्य, भवति** । तदेवं नित्यत्वानित्यत्वाभ्यां मतिज्ञानश्रुतज्ञानयोर्भेदः सिद्धो भवति । **जिनभद्रगणिक्षमाश्रमणास्तु** "लक्खणभेया हेउफलभावओ भेय इंदियविभागा । वागक्खरमूएअरभेया भेओ मइसुआणं ॥९७॥" इत्यादि ग्रन्थेन लक्षणभेदादिना मतिश्रुतयोर्भेदमुपदिशन्ति । तत्र **लक्षणभेदो** यथा—इन्द्रियमनोनिमित्तं श्रुतानुसारि ज्ञानं श्रुतज्ञानमितरन्मतिज्ञानं, श्रुतानुसारि च तदुच्यते यत् सङ्केतविषयपरोपदेशं श्रुतग्रन्थं चाश्रित्य घटो घट इत्याद्यन्तर्जल्पाकारं भवति स्वप्रति-

भूतभविष्यत्पदार्थजातं वर्त्तमानमपि व्यवहितविप्रकृष्टसूक्ष्मार्थांश्च प्रष्टृप्रश्नसमूहविषयीभूतं वस्तुजातं च तत्सर्वं कथयति, अनेन गणधरभगवतोऽशेषाभिलाप्यार्थप्रतिपादनशक्तिरुक्ता । नन्वेवं तर्हि एष महनीयमान्यगणधरभगवान् छद्मस्थ इति कोऽप्यवध्यादिज्ञानविकलत्वेनानतिशयज्ञानवान् परः किं जानाति न वेत्याशङ्कायामुत्तरार्द्धमाह ण येत्यादि, न च नैव, णमिति वाक्यालङ्कारे, यद्वा 'णं' तं गणधरं 'अणाइसेसीत्ति' अनतिशयी अल्पज्ञः प्राकृतपुरुषो विजानाति एष छद्मस्थ इति, अशेषप्रश्नोत्तरप्रदानानुकूलशक्तिमत्त्वात्तस्य, केवलज्ञानिश्रुतज्ञानिनोस्तत्त्वप्ररूपणायां प्रश्नोत्तरदाने च भेदाभावाच्चेति गाथार्थः । **दोषाभावादिति**—उक्तलौकिके उक्तालौकिके च श्रुतज्ञाने श्रुतज्ञानत्वजातिमादायोक्तलक्षणसमन्वयान्नाव्याप्तिरिति भावः । **आप्तोपदेशादित्यस्यार्थमाह—अर्हदादिवचनमाश्रित्येति** । **लक्षणभेदादिनेति**—अत्रादिपदेन हेतुफलभावभेदविभागेन्द्रियविभागवल्काक्षरमूकेतरभेदपरिग्रहणं कर्त्तव्यमिति । **इन्द्रियमनोनिमित्तं श्रुतानुसारि ज्ञानं श्रुतज्ञानमितरन्मतिज्ञानमिति**—अत्रेन्द्रियमनोनिमित्तमित्येतदितरन्मतिज्ञानमित्यस्यैव विशेषणं न तु श्रुतानुसारिज्ञानमित्यस्य, तत्र तस्य स्वरूपविशेषणत्वेनान्याऽव्यावर्त्तकत्वात्, मतिज्ञानस्य श्रुताननुसारिज्ञानमित्येतावन्मात्रलक्षणकरणेऽवधिज्ञानस्यापि श्रुताननुसारिज्ञानत्वेन तत्रोक्तलक्षणस्यातिप्रसङ्गस्स्यादिति तद्व्यावर्त्तकत्वेन मतिज्ञानलक्षणे तस्योपयुक्तत्वात् । अत एव—"इन्दियमणोनिमित्तं, जं विन्नाणं सुआणुसारेणं । णिययत्थुत्तिसमत्थं, तं भावसुअं मई सेसं ॥१००॥" इति विशेषावश्यकभाष्यगाथान्तर्गतमिन्द्रियमनोनिमित्तमिति विशेषणं शेषमित्यत्र योज्यम्, श्रुतानुसारित्वस्यैव श्रुतलक्षणत्वे निजकार्थोक्तिसमर्थत्वस्य तस्य स्वरूपविशेषणत्वेनाऽव्यावर्त्तकत्वादित्युक्तं ज्ञानार्णवे सङ्गच्छते । न च श्रुतज्ञानस्यैवं लक्षणत्वे ईहापायादीनां शब्दोल्लेखसहितत्वात् शब्दोल्लेखस्य च सङ्केतकालाद्याकर्णितशब्दानुसरणमन्तरेणाभावेन श्रुतानुसारित्वाच्छ्रुतज्ञानत्व-

आसमानार्थप्रतिपादकं (क) शब्दजनकम् । न चैवमीहापायादीनां मतिज्ञानभेदानामपीदृशत्वप्रसङ्गः, पूर्वं तद्विषये श्रुतापेक्षायामपि व्यवहारकाले तदाश्रयणाभावात्, न हि पूर्वप्रवृत्तसङ्केता अधीतश्रुतग्रन्थाश्च व्यवहारकाले प्रतिविकल्पमेतच्छब्दवाच्यत्वेनैतत्पूर्वं मयावगतममुकग्रन्थे वा दृष्टमिति प्रतियन्ति, अभ्यासपाटवात्तदनुसरणमन्तरेणाप्यनवरतविकल्पप्रवृत्तेः । नन्वेवं शब्दशक्तिग्रहजन्यं व्यवहारकाले गृहीतशक्तिकशब्दजन्यं वा श्रुतज्ञानं प्राप्तम्, तथा चैकेन्द्रियाणां तन्न स्यात्, श्रूयन्ते च ते नियमाद् द्व्यज्ञानिनः सूत्र इत्यव्याप्तिः स्यादिति । (न) द्रव्यश्रुताभावेऽपि तेषां स्वापावस्थायां साधोरिवाशब्दकारणाशब्दकार्यश्रुतावरणक्षयोपशममात्रजनितभावश्रुताभ्युपगमात् । न च भाषाश्रोत्रलब्ध्यभावे तेषां भावश्रुताभावः,

प्रसक्त्याऽतिप्रसङ्ग इत्याशङ्क्य निषेधति–**न चेत्यादिना**, न चेतस्येदृशत्वप्रसङ्ग इत्यनेनान्वयः, निषेधे हेतुमाह **पूर्वं तद्विषय इति । तदाश्रयणाभावादिति**–अस्य शब्दस्य वाच्योऽयमर्थः, अस्य चार्थस्य वाचकोऽयं शब्द इत्येवं वाच्यवाचकभावेन पूर्वं गृहीतशब्दशक्तीनां पुंसां व्यवहारकाले पूर्वगृहीतशक्तिस्मरणार्थोपस्थित्याद्याश्रयणाभावेन श्रुतानुसारित्वमन्तरेणापीहापायादिप्रवृत्तिसम्भवादिति भावः । तदेव विवृणोति **न हीत्यादिना । तदनुसरणमन्तरेणापीति**–सङ्केतविषयपरोपदेशस्य श्रुतग्रन्थस्य चानुसरणं विनाऽपीत्यर्थः । अथोक्तश्रुतज्ञानलक्षणे परोऽव्याप्तिमाशङ्कते **नन्वेवमित्यादिना । एकेन्द्रियाणां तन्न स्यादिति**–श्रुतज्ञानकारणीभूतशक्तिग्रहो हि मनःप्रभृतिसामग्रीप्रभवः, तस्याश्चैकेन्द्रियाणामभावेन शक्तिग्रहाभावाच्छ्रुतज्ञानं न स्यादिति भावः । **श्रूयन्ते च ते नियमाद् द्व्यज्ञानिनः सूत्र इति ।** उक्तञ्च–"एगिंदिया नियमं दुयन्नाणी, तं जहा–मइअन्नाणी य सुयअन्नाणी य" इति । समाधत्ते, न, **द्रव्यश्रुताभावेऽपीत्यादि । तेषाम्**–एकेन्द्रियाणाम्, ननु **स्वापावस्थायां साधोरिवे**त्येतद्दृष्टान्तमेवानुपपन्नं, जन्यज्ञानत्वावच्छिन्नम्प्रति त्वङ्मनोयोगस्य विजातीयात्ममनोयोगस्य वा हेतुत्वेनाखिलेन्द्रियवृत्तिनिरोधरूपायां स्वापावस्थायां तदभावे जन्यज्ञानमात्रस्यैवानुत्पत्तेरिति चेत्, नैवम्, द्रव्येन्द्रियवृत्तिनिरोधेऽपि तदानीं भावेन्द्रियज्ञानसम्भवात्, दर्शनावरणकर्मप्रकृतिरूपायाः सुषुप्तेरव्यक्तचक्षुर्दर्शनादेरेवोपघातित्वेन तत्राव्यक्तश्रुतज्ञानाभ्युपगमे दोषाभावात् । किमत्र मानमिति चेत्, स्वापाद्यवस्थोत्तरकालावच्छेदेन व्यक्तीभूतेन भावश्रुतेन लिङ्गेन तत्पूर्वकालावच्छिन्नाव्यक्तश्रुतज्ञानस्य पयसि सर्पिष इवाऽनुमीयमानत्वेनानुमानमेव प्रमाणम्, कथमन्यथा तत्र श्वासप्रश्वासादिसन्तानोपपत्तिरस्यात्, अत एव सुप्तमूर्च्छितादीनां जलसेकादिप्रतिकारेणाऽव्यक्तचैतन्यमेवाभिव्यज्यत इत्यनुभवः, सुप्तोत्थितस्य सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यनुभवस्तु न किञ्चित्पदोपरागेणाऽव्यक्तज्ञानमेवावगाहते इति । अत एवोक्तश्रुतज्ञानलक्षणमव्याप्तिप्रसङ्गतत्परिहाराभ्यां समर्थयन् विशेषावश्यकभाष्यकारोऽप्याह–" जइ सुअलक्खणमेयं, तो न तमेगिंदियाण संभवइ । दव्वसुआऽभावम्मि वि भावसुअं सुत्तजइणो व्व ॥ १०१ ॥ " इति । ननु यस्य जीवस्य भाषालब्धिः श्रवणेन्द्रियलब्धिश्च तस्यैव भावश्रुतमिति तदुभयलब्धिमतस्सुप्तसाधोर्लब्धिरूपतया तत्सम्भवति,

द्रव्येन्द्रियाभावेऽपि भावेन्द्रियज्ञानवद् द्रव्यश्रुताभावेऽपि भावश्रुताविरोधात् । न चावध्यादावतिप्रसङ्गः, तस्य परप्रतिपादनपरोदीरितशब्दश्रवणादिलक्षणभावश्रुतकार्यदर्शनलिङ्गेनानुमीयमानत्वात्, एकेन्द्रियाणां तु तदुभयलब्धिराहित्येन कदाचिदपि भावश्रुतकार्यादर्शनेन तदस्तीति कथं श्रद्धीयेत ? ततस्तेषां तदभाव एवेत्याशयेनाशङ्क्य निषेधति—**न चेत्यादिना** । निषेधे हेतुमाह **द्रव्येन्द्रियाऽभावेऽपीति** । एतद्विषये भाष्यसुधाम्भोधिरपि "भावसुयं भासा सोयलद्धिणो जुज्जए न इयरस्स । भासाभिमुहस्स जयं सोऊण य जं हवेज्जाहि ॥ १०२ ॥" इति गाथया आशङ्कामुद्भाव्य तदुत्तरमाह—"जह सुहुमं भाविंदियनाणं दव्विंदियावरोहे वि । तह दव्वसुयाभावे भावसुयं पत्थिवाईणं ॥ १०३ ॥" इति । अयम्भावः—एकेन्द्रियाणां द्रव्येन्द्रियपञ्चकाभावेऽपि स्पर्शनेन्द्रियादिभावेन्द्रियपञ्चकज्ञानं किञ्चिदभ्युपगन्तव्यम्, अशोकादिद्रुमेषु निष्पिष्टपद्मरागचूर्णशोणतलकामिनीपादपार्ष्णिप्रहारेण बकुलादिषु शृङ्गारितकामिनीवदनार्पितचारुमदिरागण्डूषेण चम्पकादिष्वतिसुरभिगन्धोदकसेकेन तिलकादिषु कामिनीकटाक्षविक्षेपेण विरहकादिषु पञ्चमोद्गारश्रवणेन च पुष्पपल्लवाद्याविर्भावात्मकस्पष्टतल्लिङ्गोपलम्भात् । नन्वेतेन लिङ्गेन सिद्ध्यतूक्ततत्तद्वृक्षेष्वेकैकेन्द्रियजज्ञानं, प्रत्येकतत्तद्वृक्षेषु पञ्चेन्द्रियैः रूपादिविषयकपञ्चज्ञानानि तु कथमिति चेत्, उच्यते, मुख्यवृत्त्यैकैकेन्द्रियजज्ञानमेव, गौणवृत्त्या तु तदतिरिक्ताखिलेन्द्रियजन्यज्ञानान्यपि सम्भाव्यन्ते । न चैवं तर्हि तेषां बकुलादीनां पञ्चेन्द्रियत्वप्रसङ्ग इति वाच्यम्, तद्व्यवहारप्रयोजकस्य द्रव्येन्द्रियपञ्चकस्याभावादिति । उक्तञ्च भाष्येऽपि—" जं किर बउलाईणं, दीसइ सेसेंदियोवलम्भोऽवि । तेणत्थि तदावरणखओवसमसंभवो तेसिं ॥३०००॥ पंचेंदिउव्व बउलो नरो व्व, सव्वविसओवलंभाओ । तहवि न भण्णइ पंचेंदिउत्ति बज्झेंदिआभावा ॥३००१॥" इति । ततश्च बकुलादिषु द्रव्येन्द्रियपञ्चकाऽभावेऽपि भावेन्द्रियपञ्चकावरणक्षयोपशमाद् भावेन्द्रियपञ्चकज्ञानं मतिज्ञानात्मकं यथोररीकृतं तथा भाषालब्धिश्रोत्रलब्ध्यभाववतां तेषां द्रव्यश्रुताऽभावेऽपि भावश्रुतावरणक्षयोपशमसद्भावात् तत्राऽव्यक्तभावश्रुतमप्युररीकर्तव्यम्, तथोररीकारे विरोधाभावादिति भावः । किञ्च मनुष्यशरीर इव वनस्पतिशरीरेऽपि जलाद्याहारभेषजादिप्रयोगतो वृद्धिक्षतभग्नसंरोहणादिकं दृश्यत इति तदन्यथानुपपत्तिलिङ्गेन वनस्पत्यादिष्वाहारसंज्ञा हस्तस्पर्शादिभीत्याऽवयवसङ्कोचनादिलिङ्गेन सङ्कोचनवल्ल्यादिवनस्पतिषु भयसंज्ञा कामिनीभुजलताऽवगूहनजनितपत्रप्रसारणफलोद्गमादिलिङ्गेन तिलकचम्पककुरुवकादिवृक्षेषु मैथुनसंज्ञा च निधानीकृतद्रविणोपरिमूलपत्रादिस्थापनादिलिङ्गेन बिल्वपलाशवल्ल्यादिवृक्षेषु परिग्रहसंज्ञा चास्तीत्यनुमीयते, न च तथाऽभ्युपगमेऽपसिद्धान्तप्रसङ्ग इति वाच्यम् । "रुक्खाण जलाहारो संकोअणिआ भएण संकुचइ । नियतनुहिं वेढइ, वल्लीरुक्खे परिग्गहेणं ॥१॥ इत्थियपरिरंभणेणं कुरुवकतरुणो फलंति मेहुन्ने" । इति सिद्धान्ते प्रतिपादनात्, न चैताः संज्ञा भावश्रुतमन्तरेणोपपद्यन्त इति तदन्यथानुपपत्त्या तत्कारणीभूतं भावेन्द्रियपञ्चकावरणक्षयोपशमजभावेन्द्रियपञ्चकज्ञानवद् भावश्रुतावरण-

क्षयोपशमेन प्रतिनियमात् । ओघश्रुतं जात्यन्तरमेव, तदतिरिक्तस्य च यथोक्तं लक्षणमव्याहतमिति रहस्यम् । हेतुफलभावाद् भेदो यथा मतिपूर्वं श्रुतमुक्तम्, तत्रानुप्रेक्षादिकालेऽभ्यूह्याभ्यूह्य श्रुतपर्यायवर्धनेन मत्यैव श्रुतज्ञानं पूर्यते पुष्टिं नीयत इत्यर्थः । तथा मत्यैवान्यतस्तत् प्राप्यते, मत्यैवान्यस्मै दीयते, तथा गृहीतं सञ्चिन्तनद्वारेण मत्यैव पाल्यते स्थिरीक्रियते, अन्यथा गृहीतमपि नश्येदिति श्रुतपूरणादिकरणान्मतिः कारणं श्रुतं कार्यमित्यतस्तयोर्भेदः, अभेदे पटतत्स्वरूपयोरिव कार्यकारणभावानुपपत्तेः । न च मतिश्रुतयोः समकालत्वनिर्देशादेतदनुपपत्तिः

क्षयोपशमसद्भावाद् द्रव्यश्रुताऽभावेऽपि भावश्रुतं तत्रावश्यं स्वीकर्त्तव्यमिति । नन्वेवं तर्ह्येकेन्द्रियेष्व-व्यक्तमतिज्ञानश्रुतज्ञानवदव्यक्तावधिज्ञानादिप्रसङ्गः, विनिगमनाविरहादित्याशङ्क्य निषेधति-न चेति । निषेधे हेतुमाह क्षयोपशमेन प्रतिनियमादिति । अयम्भावः यज्ज्ञाना-वरणीयकर्मणः क्षयोपशमः क्षयो वा तदेव ज्ञानमभ्युपगन्तव्यम्, तत्रैकेन्द्रियाणां मतिश्रुतज्ञानावरणीयकर्मक्षयोपशमौ, तत्कार्यदर्शनादिति तदुभयं तत्रास्ति, न सानि चावधिज्ञानमनःपर्यवज्ञानावरणीयकर्मक्षयोपशमौ केवलज्ञानावरणकर्मक्षयश्च तत्कार्याऽ-दर्शनादिति नावध्यादिज्ञानत्रयप्रसङ्गः, कारणाभावात्कार्याभाव इति न्यायादिति । न च श्रुतानुसारि यज्ज्ञानं तच्छ्रुतज्ञानमिति श्रुतज्ञानलक्षणस्यैकेन्द्रियौघश्रुते श्रुतानुसारित्वेन सङ्ग-मनाभावात्तत्र तस्याव्याप्तिरिति वाच्यम्, व्यक्तश्रुतज्ञानस्यैव लक्षणकरणात्, एकेन्द्रियौघश्रुत-ज्ञानं त्वव्यक्तमिति जात्यन्तररूपत्वेनालक्ष्यत्वान्नोक्ताव्याप्तिरित्याशयेनाह-ओघश्रुतं जात्य-न्तरमेवेति यद्वोक्तलक्षणस्य श्रुतानुसारिज्ञानवृत्तिज्ञानत्वव्याप्यजातिमत्त्वार्थकत्वेन तादृश-श्रुतज्ञानत्वजातिमत्त्वस्यैकेन्द्रियाव्यक्तश्रुतज्ञानेऽपि सद्भावेनोक्ताव्याप्तिदोषोद्धारोऽभ्यूह्य इति । "मइपुव्वगं सुत्तं" इत्यागमवचनमनुसृत्याह-मतिपूर्वं श्रुतमुक्तमिति । अनेन श्रुतस्य मतिहेतुकत्वं प्रतिपाद्यते, पूर्वपदस्य हेतुत्वार्थकत्वात्, 'सम्यग्ज्ञानपूर्विका पुरुषार्थसिद्धिः' इत्यादौ तथादर्शनादिति । अनुप्रेक्षादिकालेऽभ्यूह्याभ्यूह्येत्यादि-अनेनानुप्रेक्षादिकाली-नोहापरपर्यायस्य मतिज्ञानस्य श्रुतज्ञाने हेतुत्वं ज्ञापितम् । मत्यैवेति नाऽमत्या, न मतिज्ञा-नमन्तरेणेत्यर्थः । प्राप्यत इति गृह्यत इत्यर्थः । एतेन परोपदेशश्रवणादिमतेरेव तदाहित-संस्कारद्वारा श्रुतज्ञानं प्रति हेतुत्वं व्यञ्जितं भवति । एवञ्च श्रुतमात्र एव द्रव्यश्रुतग्रहणस्य हेतुत्वं लभ्यते । दीयत इति व्याख्यायते इत्यर्थः । एतेन व्याख्यानुकूलश्रुतसङ्कल्पे तादिष्ट-साधनतामतेर्हेतुत्वं व्यज्यते । स्थिरीक्रियत इति-इत्थञ्चाविस्मृत्यनुकूलधारणाव्यापाररूपाया मतेरुत्तरकालिकपरिस्फुर्त्तिरूपश्रुतहेतुत्वं व्यवस्थाप्यते । अन्यथेति-मत्यभाव इत्यर्थः । श्रुतज्ञा-नस्यैते पूरणादयोऽर्था विशिष्टाभ्यूहधारणादीनन्तरेण कर्तुं न शक्यन्ते, अभ्यूहादयश्च मतिज्ञान-मेव, इति सर्वथा श्रुतस्य मतिरेव कारणम्, श्रुतं तु कार्यमित्याह-श्रुतपूरणान्मतिरित्यादि । न चेत्यस्यानुपपत्तिरित्यनेनान्वयः । समकालत्वनिर्देशादिति-" जत्थ मइनाणं तत्थ सुअ-नाणं " इति नन्दीसूत्रवचनादिति भावः । उक्तसिद्धान्तवाक्यं हि

लब्धिरूपयोरेव तयोस्तन्निर्देशात्, उपयोगरूपे तु श्रुते मतिरेवावग्रहादिरूपा कारणमित्यदोषः । श्रुत्वा या मतिरुत्पद्यते सा श्रुतपूर्वा स्यादित्यविशेष इति चेत्, न, तस्या द्रव्यश्रुतपूर्वकत्वेऽपि भावश्रुतपूर्वकत्वाभावात् । भावश्रुतादनन्तरं तु मतिः कार्यतया नास्ति, क्रमेण भवन्तीं तु तां न निवारयामः, अन्यथा मरणावधि श्रुतमात्रोपयोगप्रसङ्गात् । कारणान्तरसिद्धस्वोपरमकालीनस्थितिकसुवर्णस्थानीयमत्या स्वविशेषरूपकङ्कणादिस्थानीयश्रुतोपयोगजननाच्छ्रुतस्यैवकार्यत्वं

मतिश्रुतयोर्लब्धिरूपयोरेव समकालत्वात्कार्यकारणभावाभावः, मतिपूर्वं श्रुतमिति तु श्रुतोपयोगमाश्रित्यैवोक्तमिति स एव मतिज्ञानप्रभवः, उपयोगरूपयोर्मतिज्ञानश्रुतज्ञानयोस्तथास्वाभाव्यात्क्रमिकोत्पादानुभवादित्येवमभ्युपगमेन नोक्तदोष इत्युत्तरयति–लब्धिरूपयोरित्यादि–श्रुत्वेत्याद्याशङ्क्य तन्निषेधे हेतुमाह–तस्या द्र० यश्रुतपूर्वकत्वेऽपि भावश्रुतपूर्वकत्वाभावादिति–परस्माच्छब्दं श्रुत्वा जायमानाया मतेश्श्रावणप्रत्यक्षात्मकमतिज्ञानानुकूलक्षयोपशमोद्बोधकस्य शब्दस्य मतिहेतुत्वात्तद्रूपद्रव्यश्रुतहेतुकत्वेऽपि भावश्रुतहेतुकत्वाभावेन न मतौ भावश्रुतपूर्वकत्वमित्यर्थः । ननु भावश्रुतादूर्ध्वं मतिः किं सर्वथा न भवतीत्याशङ्कानिवृत्त्यर्थमाह–भावश्रुतादनन्तरमित्यादि । क्रमेण भवन्तीं तु तां न निवारयाम इति–एकस्मिन्नर्थे श्रुतोपयोगो ह्यान्तर्मुहूर्त्तिक इति तन्नाशानन्तरं निजकारणकलापान्मत्युपयोग उत्पद्यते, तस्याप्येकस्मिन्नर्थे आन्तर्मुहूर्त्तिकत्वात्तदुपरमे श्रुतोपयोगः, पुनरपि तद्विनाशे मत्युपयोग इत्येवं क्रमेणोत्पद्यमानां तु मतिं न निवारयामः, श्रुतोपयोगाच्च्युतस्य मत्युपयोग एवावस्थानादिति भावः । तथाऽनभ्युपगमेऽतिप्रसङ्गमाह–अन्यथेति । कारणान्तरसिद्धं यत्पूर्वोत्तरविशेषानुगतं सत्स्वकार्योपरमेऽप्यवतिष्ठते तत्कारणमेव, न स्वविशेषरूपस्य कार्यरूपं, तदजन्यत्वात्, यथा सुवर्णद्रव्यं तथा मतिरित्याशयेनाह–कारणान्तरसिद्धेत्यादि–कारणान्तरसिद्धं सत् स्वस्य स्वविशेषरूपस्य कङ्कणादेर्य उपरमो विनाशः, तत्कालीनस्थितिकञ्च यत्सुवर्णं तद्वत् सामान्यरूपत्वेन तत्स्थानापन्नमत्येत्यर्थः । इदमुक्तं भवति कङ्कणाङ्गुलीयकादिषु पूर्वोत्तरपर्यायेष्वनुगतत्वात् स्थायिभूतेन सुवर्णेन कङ्कणादयो जन्यन्ते अतस्ते तत्कार्यभूताः, सुवर्णं तु कङ्कणादिपर्यायाऽजन्यत्वान्न तत्कार्यव्यपदेशं लभते, तस्य कारणान्तरेभ्यस्सिद्धत्वात्, कङ्कणादिरूपस्वपर्यायोपरमे तु सुवर्णमेवावतिष्ठत इति तदवस्थानं क्रमेण न निवार्यते, एवं मत्याऽपि सामान्यभूतया स्वविशेषरूपश्रुतोपयोगो जन्यते अतस्तत्कार्यं स उच्यते, मतिस्त्वतज्जन्यत्वात् तत्कार्यतया न व्यपदिश्यते, तस्या हेत्वन्तरात्सदासिद्धत्वात्, स्वविशेषभूतश्रुतोपयोगोपरमे तु क्रमायातं मत्यवस्थानं न निवार्यते, अन्यथाऽऽमरणान्तं केवलश्रुतोपयोगप्रसङ्गादिति । ननु सुवर्णद्रव्यं यथा कालत्रयानुगतं न तथा मत्युपयोगः, कारणं हि कार्यरूपेण परिणममानं तदानीमपि वर्त्तते इति स्वकार्यभूतकङ्कणादिकाले सुवर्णवन्न स्वकार्यभूतश्रुतोपयोगकाले मत्युपयोगो विद्यते, सिद्धान्ते एककालावच्छेदेनोपयोगद्वयस्याऽनभ्युपगमादिति कथं सुवर्णद्रव्यदृष्टान्तेन श्रुतोपयोगकारणत्वं मत्युपयोगस्योक्तं सङ्गच्छते इत्येतदाशङ्कानिवृत्तये श्रुतोपयोगकारणत्वं द्रव्यार्थिकनयेन लब्धि-

न मतेरिति भावः। एतच्च कारणत्वं मतेर्लब्धिरूपाया द्रव्यार्थिकनये संभवदुक्तिकम्, तच्च श्रुतलब्धेर्मत्युपयोगेऽपि सुवचम्, द्वयोस्तुल्यकालत्वानियमात्, गन्धे रूपप्रागभावस्येवैकस्याऽन्यत्रान्यथासिद्धिरपि तुल्या, मत्युपयोगविशिष्टद्रव्यस्य पर्यायार्थिकनये मत्युपयोगस्यैव वा हेतुत्वोक्तौ च श्रुतजनितमतावन्वयव्यतिरेकाभ्यां श्रुतोपयोगविशिष्टद्रव्यस्य श्रुतोपयोगस्यैव वा हेतुत्वं सुवचमिति मतिपूर्वकं श्रुतं न मतिः श्रुतपूर्विकेति यद्यपि विशेषो न चमत्कारकारी तथापि मतेः श्रुतेऽवच्छेदकावच्छेदेन हेतुत्वम्, पदज्ञानसंकेतज्ञानादेर्द्धारणात्वव्याप्यजात्यैव हेतुत्वात्, श्रुतस्य मतौ तु सामानाधिकरण्येन हेतुत्वमित्ययं विशेषो द्रष्टव्यः, भेदभेदाद् भेदस्तु मतिज्ञानमष्टाविंशतिविधं श्रुतज्ञानं चतुर्दशविधमित्यादिना स्पष्ट एव। इन्द्रियभेदाद् भेदो यथा श्रुतं श्रोत्रेन्द्रियोपलब्धिरेव,

रूपाया मतेश्चेदुच्येत तदा तन्नयमपेक्ष्य श्रुतलब्धेरपि मत्युपयोगकारणत्वं सुवचं स्यात्, मतिश्रुतलब्ध्योरसमकालत्वानियमादित्याह एतच्च कारणत्वं मतेर्लब्धिरूपाया इत्यादि। तच्चेति कारणत्वमित्यर्थः। कार्ये स्वप्रागभाव एव कारणमिति तेन तत्समानकालीनोऽपि तदितरप्रागभावोऽन्यथासिद्ध इति रूपम्प्रति कारणत्वचिन्तायां प्रतियोगिज्ञानरूपकारणसद्भावा-द्रूपप्रागभावस्य शीघ्रोपस्थितिकत्वादुपस्थितिकृतलाघवं रूपम्प्रति रूपप्रागभावस्य कारणत्वे, एवं गन्धादिकम्प्रति गन्धप्रागभावादेः कारणत्वेऽपि, अपाकजानां रूपादीनां चतुर्णां न समनियतत्वं न्यायनये, तेन अपाकजरूपादिकम्प्रति गन्धप्रागभावादेर्व्यभिचारादेव न कारणत्वमिति पाकजस्थले गन्धकार्ये तत्कारणेन गन्धप्रागभावेन तत्समानकालीनस्यापि रूपप्रागभावस्य रूपकार्ये च तत्कारणीभूतेन रूपप्रागभावेन तत्समानकालीनस्यापि गन्धप्रागभावस्य चान्यथासिद्धिवन्मत्युपयोगे श्रुतलब्धेरन्यथासिद्धिश्चेत्तर्हि श्रुतोपयोगे मतिलब्धेरन्यथासिद्धिरपि तुल्यैवेत्याह गन्धे रूपप्रागभावस्येवैकस्यान्यत्रान्यथासिद्धिरपि तुल्येति। ग्रन्थकारः स्वाशयप्रकटनेन समाधत्ते तथापि मतेः श्रुतेऽवच्छेदकावच्छेदेनेति-श्रुतमात्रे मतिज्ञानस्य पदज्ञानसङ्केतज्ञानादिलक्षणस्य धारणात्वव्याप्यजातिरूपेण हेतुत्वं यथा तथा न मतिमात्रे श्रुतस्य, किन्तु मतिविशेष एव श्रुतस्य हेतुत्वम्, तथा च श्रुतोपयोगत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकधर्मवत्त्वं मतौ, श्रुते तु मतिज्ञानत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकधर्मवत्त्वमिति विशेष इति भावः। अवच्छेदकावच्छेदेनेति-श्रुतज्ञानत्वावच्छेदेनेत्यर्थः। सामानाधिकरण्येनेति मतिज्ञानत्वसामानाधिकरण्येनेत्यर्थः। "भेयकयं च विसेसणमट्ठावीसइविहंगभेदाइ" इति महाभाष्यगाथापूर्वार्द्धमनुसृत्याह भेदभेदाद्भेदस्त्वित्यादि। "इंदियविभागओ वा, मइसुअभेओ जओऽभिहियं" इति भाष्यगाथोत्तरार्द्धमनुसृत्याह इन्द्रियभेदाद् भेद इति॥ तदेव विवृणोति-यथा श्रुतं श्रोत्रेन्द्रियोपलब्धिरेवेति-अत्रैवकारस्यायोगव्यवच्छेदपरत्वेन श्रुतं श्रोत्रेन्द्रियोपलब्धिरेव, न तु श्रोत्रेन्द्रियोपलब्धिः श्रुतमेव, यतस्सा श्रुतं मतिर्वा भवतीति, तेन श्रुतत्वावच्छिन्ने श्रोत्रेन्द्रियोपलब्धित्वाऽयोगो व्यवच्छिद्यते, न तु श्रुतज्ञानान्यमतिज्ञाने श्रोत्रेन्द्रियोपलब्धित्वयोगो व्यवच्छिद्यते, श्रोत्रेन्द्रियोपलब्धेरवग्रहेहादिरूपाया मतित्वेन श्रुत...न...

शेषेन्द्रियेष्वपि श्रुतानुसारिणोऽक्षरलाभस्य श्रोत्रेन्द्रियग्रहणयोग्यविषयत्वेन परमार्थतः श्रोत्रेन्द्रियोपलब्धित्वात्, श्रोत्रेन्द्रियद्वारकाभिलापप्लावितार्थग्रहणस्य च श्रुतज्ञानरूपत्वात् । मतिज्ञानं तु तद्विपर्यं शेषेन्द्रियविषयं च सिद्धं भवतीति । वल्कशुम्बोदाहरणेन भेदो यथा, वल्कसमा मतिः, शुम्बसदृशं भावश्रुतम् । यथा हि वल्काः शुम्बकारणं तथा मतिरपि भावश्रुतस्य । यथा च शुम्बं वल्कानां कार्यं तथा भावश्रुतमपि मतेः, यतो मत्या चिन्तयित्वा श्रुतपरिपाटिमनुसरति वक्तेति । अन्ये त्वाहुर्वल्कसदृशी मतिः, सैव स्वजनितशब्दोपहिता भावश्रुतमुच्यते, तच्च शुम्बसदृशं वल्कजनितदवरिकातुल्यमिति । तदसत् । भावश्रुताभावप्रसङ्गात्, कार्याणामानन्त्येन तद्विशेषणकृतभेदस्यानिष्टावहत्वात्, अन्यथा श्रुतज्ञानवच्चेष्टाज्ञानमपि वाच्यं स्याद्देवानां प्रियस्य । यदपि विवक्षारूपभावश्रुतं वल्कसदृशं, शब्दरूपं द्रव्यश्रुतं तु कार्यत्वात् शुम्बप्रतिममिति केषांचिन्मतं, तदप्यपमतम्, मतिश्रुतयोर्भेदाभिधानावसरे द्रव्यज्ञानेऽपि श्रोत्रेन्द्रियोपलब्धित्वयोगसद्भावात्, अन्यथा श्रोत्रेन्द्रियजोपलब्धिरूपं मतिज्ञानमेव न स्यात्, तथा च श्रोत्रेन्द्रियावग्रहेहाद्यभावेन मतिज्ञानस्याष्टाविंशतिभेदा नैव स्युरिति भावः । न केवलं श्रोत्रेन्द्रियोपलब्धिः श्रुतम्, किन्तु यश्च शेषेषु चतुर्षु चक्षुरादीन्द्रियेषु श्रुतानुसारिसाभिलापविज्ञानरूपोऽक्षरलाभस्सोऽपि श्रुतमित्याह—शेषेन्द्रियेष्वपीति । **श्रुतानुसारिणोऽक्षरलाभस्येति**—यः सङ्केतविषयशब्दानुसारी सर्वज्ञवचनापेक्षी वा विशिष्टश्रुताक्षरलाभः तस्येत्यर्थः । **वल्कशुम्बोदाहरणेन भेद इति**—ननु पूर्वं हेतुफलभावेन मतिश्रुतयोर्भेदोऽभिहितः, अत्रापि वल्करूपकारणशुम्बात्मककार्यदृष्टान्तेन स एव भेदोऽभिधीयते इति कोऽत्र विशेष इति चेत्, उच्यते, हेतुफलभावेन पूर्वं केवलभेदसाधनं कृतम्, अत्र त्वभेदविशिष्टभेदसाधनमित्यनयोर्विशेषः । तथाहि—श्रुतं मत्यभिन्नत्वे सति तद्भिन्नम्, एकद्रव्यत्वे सति तद्धेतुकत्वात् यद् यदेकद्रव्यत्वे सति यद्धेतुकं तत्तदभिन्नत्वे सति ततो भिन्नं यथा वल्कैकद्रव्यं शुम्बं वल्कहेतुकमिति तदभिन्नत्वे सति ततो भिन्नं, तथा चायं तस्मात्तथेति । न च प्रस्तुते भेदमात्रस्यैव जिज्ञासितत्वेन तन्मात्रस्यैवाभिधानं युक्तं, नाऽभेदस्येति वाच्यम्, न ह्येकान्तभिन्नयोः कार्यकारणभावः, किन्त्वभेदसंवलितभेदविशिष्टयोरेवेत्येवं कथञ्चिद्भेदग्राहककार्यकारणभावग्रहोपयिकत्वादस्येति तदुपन्यासोऽप्यत्रोपयुक्त एवेति । **श्रुतपरिपाटिमनुसरतीति** श्रुतग्रन्थतत्तत्सूत्रवाच्यार्थप्रतिपत्तिं करोतीत्यर्थः । " अन्ने भणंति मई, वग्गसमा सुंबसरिसयं सुत्तं ॥ १५४ ॥ " इति भाष्यमनुसृत्य परमतं दर्शयितुमाह—**अन्ये त्वाहुरित्यादि । सैव स्वजनितशब्दोपहिता भावश्रुतमुच्यत इति**—मतिरेव तज्जनितो यदा शब्द उत्तिष्ठति तदा तदुत्थशब्दसहिता श्रुतमुच्यते, तथा च श्रुतपदं कर्मव्युत्पत्त्या शब्दार्थकमित्यर्थः । **भावश्रुताभावप्रसङ्गादिति**—मत्युत्तरकालावच्छेदेन शब्दमात्रस्यैवोत्पन्नत्वेन तस्य च द्रव्यश्रुतत्वेन भावश्रुतस्याभावप्रसङ्गादित्यर्थः । मतिजनितशब्दविशिष्टत्वेन मतेर्भावश्रुतत्वाभ्युपगमे दूषणान्तरमाह **कार्याणामानन्त्येनेत्यादि** । शब्दो हि मतिज्ञानस्य कार्यमिति तद्विशिष्टत्वेन भेदे तद्वत् कार्याणामानन्त्येन तत्तत्कार्यविशिष्टत्वेन कारणभेदापत्त्यैकस्याप्यनेकत्वं स्यादिति भावः । **चेष्टाज्ञानमपीति**—शब्द इव चेष्टाऽपि मतिज्ञानजन्येति

भावश्रुतयोरप्रस्तुतत्वेनाप्रस्तुताभिधानप्रसङ्गात्, एतेन श्रुतानुसारित्वरहितशब्दमात्रपरिणामान्विता मतिर्वल्कसदृशी, तज्जनितशब्दरूपं तु द्रव्यश्रुतं शुम्बसदृशम्, रहितेत्यन्तेन भावश्रुतव्यवच्छेद इति व्याख्यानमप्यपहस्तितम्, श्रुतज्ञानेन सहैवास्य मतेर्भेदस्य प्रक्रान्तत्वेन द्रव्यश्रुतस्याचिन्तनीयत्वात्, मतेर्ध्वनित्वापरिणामेन दृष्टान्तवैषम्यात्, न चैकं वचनमेतावन्तं विपाकमापन्नमितिवदत्र तत्परिणामे उपचार आश्रयणीयः, सति गत्यन्तरे तदाश्रयणानौचित्यादिति दिग् । **अक्षरानक्षराभ्यां भेदो** यथा—इहाक्षरं द्विविधं, द्रव्याक्षरं भावाक्षरं च । द्रव्याक्षरं पुस्तकादिन्यस्ताकारादिरूपम्, ताल्वादिकारणजन्यः शब्दो वा । एतच्च व्यज्यतेऽर्थोऽनेनेति व्यञ्जनाक्षरमप्युच्यते । भावाक्षरमन्तःस्फुरदकारादिज्ञानरूपं, अकाराद्याकारतेति यावत्, तत्र मतिज्ञानं भावाक्षरमाश्रित्य साक्षरमनक्षरं च भवेत् । ईहादीनामभिलापजनकत्वेन साक्षरत्वात्, अवग्रहस्य च तद्वैपरीत्येन निरक्षरत्वात्, व्यञ्जनाक्षरं चाश्रित्य तदनक्षरं, न हि मतिज्ञाने पुस्तकादिन्यस्तमकारादिकं शब्दो वा व्यञ्जनाक्षरं विद्यते, तस्य द्रव्यश्रुतत्वेन रूढत्वाद् द्रव्यमतित्वेनाऽप्रसिद्धत्वात् ।

तज्ज्ञानमपीत्यर्थः । एतेनेत्यस्यापहस्तितमित्यनेनान्वयः । श्रुतानुसारिशब्दपरिणामान्विता मतिर्भावश्रुतमेवेति तन्निषेधः श्रुतानुसारित्वरहितेति विशेषणेन कृत इत्याह—**रहितेत्यन्तेन भावश्रुतव्यवच्छेद इति** । मतिज्ञानश्रुतज्ञानयोर्भेदस्य प्रक्रान्तत्वेन तमुपेक्ष्याऽप्रस्तुतस्य मतिज्ञानद्रव्यश्रुतयोर्भेदस्य चिन्तया किमित्युत्तरयति—**श्रुतज्ञानेन सहैवास्येति** । **मतेर्ध्वनित्वाऽपरिणामेन दृष्टान्तवैषम्यादिति**—वल्काः शुम्बरूपेण परिणमन्ते, शुम्बपरिणामापन्नानां वल्कानामेव शुम्बरूपत्वेनाभेदरूपत्वात्, न तु तद्वत् मतिश्शब्दरूपेण परिणमते, मतेर्ज्ञानरूपत्वेनात्मधर्मत्वम्, शब्दस्य च मूर्तत्वेन पुद्गलधर्मत्वमित्येवं तयोश्चेतनाचेतनधर्मत्वेन वैसादृश्येन परिणामपरिणामिभावाभावादिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादुक्तदृष्टान्तान्मतिज्ञानद्रव्यश्रुतयोर्न भेदो युक्त इति भावः । मतिज्ञानादर्थान्तरभूतोऽपि शब्दः तत्प्रभवत्वात्तन्मयः, यद्यस्मात् प्रभवति तत्तन्मयमिति व्याप्तेः, तथा च मतिज्ञानपरिणामरूपे शब्दे मतिज्ञानानात्मकेऽपि मतिगता ज्ञानमयतोपचर्यते इति वल्कशुम्बदृष्टान्तसाम्यात् मतिज्ञानद्रव्यश्रुतभेदः सेत्स्यतीति सदृष्टान्तमाशङ्क्य निषेधति—**न चैकं वचनमित्यादि** । निषेधे हेतुमाह—**सति गत्यन्तरे तदाश्रयणानौचित्यादिति** । मुख्यार्थबाधे सत्युपचारः फलवान्, स चात्र नास्ति, पूर्वोक्तनीत्या मुख्यार्थस्य सद्भावादिति तदाश्रयणं न न्याय्यमिति भावः । **तस्य द्रव्यश्रुतत्वेन रूढत्वाद् द्रव्यमतित्वेनाप्रसिद्धत्वादिति**—अत्र तस्येत्यस्य द्रव्यश्रुतस्येत्यर्थः । नन्वत्र भावाक्षरेणावग्रहरूपं मतिज्ञानमनक्षरम्, ईहादिरूपं तत् साक्षरमित्येवं भावाक्षरेण मतिज्ञानं साक्षरानक्षरोभयरूपं प्रतिपादितम्, भावश्रुतज्ञानमपि द्रव्याक्षरेण मतिज्ञानवदनक्षरं भावाक्षरेण साक्षरमित्येवं साक्षरानक्षरोभयरूपं प्रतिपादितं भवता, तथा च प्रत्येकं द्वयोरप्यक्षराऽनक्षररूपत्वेनोक्तत्वात् कुतस्तयोस्ताभ्यां विशेष इति चेत्, उच्यते, केवलं सामान्येन 'श्रुतं' इत्युक्ते तन्मध्ये द्रव्यश्रुतमपि लभ्यते इति कृत्वा तत्र द्रव्यश्रुतमाश्रित्य द्रव्याक्षरमस्ति, मतौ तु तन्नास्ति, तस्या द्रव्यमतित्वेनारूढत्वात् । इदमुक्तं भवति—पुस्तकादिन्यस्ताकारा-

व्यवहारानुरोधेन तन्निष्ठद्रव्यत्वनिरूपकतासम्बन्धेनारोपितस्वपरिणामितासम्बन्धेन वा व्यञ्जनाक्षरत्वं श्रुत एव कल्प्यते न मताविति रहस्यम् । श्रुतं तु द्रव्यतो भावतोऽप्यक्षरवदनक्षरवच्च, पुस्तकादिन्यस्ताकारादेरक्षरस्योच्छ्वसितादेरनक्षरस्य चोभयस्यापि द्रव्यश्रुतत्वेनाम्नानात् प्रत्येकं तदाकारस्य भावश्रुतस्यापि च श्रुतसिद्धत्वात्, न चोच्छ्वसितादिविषयिणी मतिरेव न श्रुतमिति वाच्यम् । व्यञ्जनादिवृत्त्या तज्जन्यनिषेधादिबोधस्य श्रुतत्वात्, न च चेष्टादितुल्यत्वं, पर्युदासवृत्त्यानक्षरपदेनोच्छ्वसितादेरेवाक्षररूपं पुरुषतात्वादिव्यापारजन्यं च यद् द्रव्यश्रुतं तद् द्रव्यमतिशब्देन वाच्यमित्येवं कश्चिदपि सिद्धान्ते सङ्केताभावान्न तन्मतिरूपमिति द्रव्यश्रुतस्य द्रव्यमतित्वेनारूढत्वाद् द्रव्याक्षरेणानक्षरैव मतिः, श्रुतं तु द्रव्यश्रुततया सङ्केतितं शास्त्र इति द्रव्याक्षरेण साक्षरं तदित्येवमनयोर्द्रव्याक्षरापेक्षया साक्षरानक्षरत्वकृतो भेदो ज्ञेयः । उक्तञ्च "उभयं भावक्खरओ, अणक्खरं होज्ज वंजणक्खरओ । मइनाणं सुत्तं पुण, उभयंपि अणक्खरक्खरओ ॥ १७० ॥" इति । तथा च मतिज्ञानं श्रुतज्ञानाद्भिन्नं द्रव्यश्रुतव्यवहाराविषयत्वात्, अवधिज्ञानवत्, अन्यथा द्रव्यश्रुतमितिवद् द्रव्यमतिरित्यपि व्यवहारस्स्यात्, अर्थाऽभेदादिति भावः ।

आरोपितस्वपरिणामितासम्बन्धेनेति अत्र रवं व्यञ्जनाक्षरं, तच्च पुद्गलद्रव्यात्मकं, पुद्गलद्रव्यञ्च पुद्गलात्मककार्यरूपेण परिणमत इति तत्परिणामरूपं मुख्यवृत्त्या न भावश्रुतज्ञानं, तस्यात्मगुणत्वेन तत्परिणामरूपत्वाऽयोगात्, किन्तूपचारत इत्यत आरोपितेति विशेषणम् । श्रुतं द्रव्यभावभेदेन द्विविधम्, तदुभयमपि साक्षरानक्षरभेदेन द्विविधम्, तत्र द्रव्यश्रुतं पुस्तकादिन्यस्ताकाराद्यक्षररूपं साक्षरम्, उच्छ्वसितादिरूपं त्वनक्षरम्, भावश्रुतमपि श्रुतानुसार्यन्तःपरिस्फुरदकारादिवर्णविज्ञानात्मकत्वात् साक्षरम्, पुस्तकादिन्यस्ताकाराद्यक्षरानवभासादनक्षरमित्येवं लक्षणं श्रुतं प्रतिपादयितुमाह-श्रुतं तु द्रव्यतो भावत इत्यादि । उच्छ्वसितादेरनक्षरस्येति-अत्रादिपदेन "ऊससिअं नीससिअं, निच्छूढं खासिअं च छीअं च । निस्सिंघिअमणुसारं, अणक्खरं छेलिआईअं ॥१॥" इति नन्दीसूत्रवचनान्निःश्वसितादिकम् ग्राह्यम् । नन्वेवमुच्छ्वसितादिवत्करमुखनयनभ्रूकुट्यादिचेष्टाऽप्यभिसन्धिपूर्विका क्रियमाणा तत्कर्तुर्भावश्रुतस्य फलं द्रष्टुश्च भावश्रुतस्य कारणमिति तद्वत् तस्या अपि द्रव्यश्रुतत्वप्रसङ्ग इति चेत्, मैवम्, अनक्षरमित्यत्र पर्युदासवृत्त्याऽक्षरभिन्नमक्षरसदृशं यत्तदनक्षरमुच्यते, सादृश्यञ्च श्रूयमाणत्वेन ज्ञेयम्, तथा च श्रुतमित्यत्रान्वर्थाश्रयणाद्यच्छ्रूयते तच्छ्रुतमित्युच्यते, न चोच्छ्वसितादिवत्करादिचेष्टाऽपि श्रूयते, ततस्तद्वत्तस्या अपि न द्रव्यश्रुतत्वप्रसङ्ग इत्याशयेनाह न च चेष्टादितुल्यत्वमिति । यदाऽयं पुरुष एवमभिप्रायवान् एवम्भूतचेष्टान्यथानुपपत्तेरित्येवं चेष्टालिङ्गेन यथानुमितिस्तथोच्छ्वसितादिलिङ्गेनाऽप्यनुमितिः, सा च मतिज्ञानरूपैवेति चेष्टादिवदुच्छ्वसितादिकं मतिज्ञानस्यैव कारणं न तु द्रष्टुर्भावश्रुतस्य कारणम्, येन द्रव्यश्रुतत्वं तस्य स्यात्, अन्यथोच्छ्वासादेरिव चेष्टाया अपि द्रव्यश्रुतत्वप्रसङ्गस्स्यादित्याशङ्क्य निषेधति न च चेष्टादितुल्यत्वमिति-निषेधे हेतुमाह-पर्युदासवृ-

ग्रहणात्, द्रव्यश्रुतत्वद्रव्यमतित्वाभ्यां रूढ्यरूढी एवात्र भेदके इत्यपि वदन्ति । मतिज्ञानमनक्षरं श्रुतज्ञानं चाक्षरवदनक्षरवच्चेति केचिद् व्याचक्षते, ते भ्रान्ताः, मतिज्ञानमात्रस्यानक्षरत्वे ईहादौ विकल्पाभावप्रसङ्गात् । विकल्पः शब्दप्रयोगरूपः सप्रकारकज्ञाननिमित्त एव, न तु साक्षरज्ञाननिमित्त इति चेत्, न । पद्मरागग्रहे योग्यव्यक्तिवृत्तित्वेन पद्मरागत्वजातेरपि ग्रहध्रौव्ये तत्र पद्मरागपदप्रयोगाभावस्य शक्यतासंबन्धेन पद्मरागपदवत्ताज्ञानाभावादेवोपपत्तौ सर्वत्र तच्छब्दवत्ताज्ञानस्यैव तच्छब्दप्रयोगहेतुत्वौचित्यात् । श्रुतनिश्रितवचनादीहादौ विकल्पव्यापारः श्रुतस्यैव न मतेरिति चेत्, तर्हि अवग्रहमात्रं

स्येति—तदर्थश्च पूर्ववदिति । मतिज्ञानमनक्षरमेव शब्दाऽप्रतिभासात्, श्रुतज्ञानं तु श्रुतरूपं साक्षरमुच्छ्वसितादिकश्चानक्षरमित्युभयात्मकमित्येवं मतिश्रुतयोर्भेदमभिमन्यमानानां केषाञ्चिदाचार्याणां मतमाह— **मतिज्ञानमनक्षरमिति** । **विकल्पाभावप्रसङ्गादिति** ईहादौ शब्दनिर्भासाऽभावेऽवग्रहवदीहादीनामन्वयव्यतिरेकधर्मपरामर्शित्वरूपविवेकोऽपि न स्यादिति प्रायः स्थाणुना भाव्यमिति विकल्परूपाया ईहामतेस्स्थाणुरेवायमिति विकल्परूपस्यापायादेश्चोच्छेदप्रसङ्गात्, यतो न ह्यन्तःस्फुरदकाराद्यक्षरनिर्भासं विना विकल्पत्वं नामेत्यर्थः । ननु शब्दप्रयोगरूपविकल्पं प्रति सप्रकारकज्ञानत्वेनैव हेतुत्वं, न तु साक्षरज्ञानत्वेनेतीहादिज्ञानस्य साक्षरज्ञानरूपत्वाभावेऽपि सप्रकारकज्ञानरूपत्वात्तद्रूपेण तत्रोक्तलक्षणविकल्पजनकत्वं भविष्यतीत्याशङ्क्य निषेधति—**विकल्पः शब्दप्रयोगरूप इत्यादिना** । निषेधे हेतुमाह— **पद्मराग इति** घटादेरापामरव्यवहारारूढत्वेन तद्ग्रहे प्रकारविधया घटत्वादिग्रहस्य भावे सति तदात्मकाविशिष्टज्ञानजनितस्य घटोऽयमिति व्यवहाररूपस्य घटादौ घटादिपदप्रयोगस्याप्यवश्यम्भावेन तत्र सप्रकारकज्ञानस्य निमित्तत्वोररीकारसम्भवेऽपि पद्मरागमणिर्न सकलजनव्यवहारवीथीमवतरति किन्तु कस्यचिदेव भाग्यवतः पुंसस्तल्लाभात्तद्व्यवहारोऽत्र ईदृशलक्षणसम्पन्नो मणिविशेषः पद्मरागपदवाच्य इति सङ्केतग्रहवत एव पद्मरागे पद्मरागपदप्रयोगरूप इति तत्र शक्यतासम्बन्धेन पद्मरागवत्ताज्ञानस्य शक्यतासम्बन्धेन पद्मरागरूपोऽर्थः पद्मरागशब्दवानित्याद्याकारकस्य पद्मरागशब्दादिप्रकारकस्य कारणत्वे व्यवस्थितेऽन्यत्रापि तच्छब्दप्रयोगलक्षणविकल्पे शक्यतासम्बन्धेन तच्छब्दवत्ताज्ञानस्य हेतुत्वमिति शब्दप्रयोगरूपविकल्पस्य साक्षरज्ञाननिमित्तकत्वव्यवस्थितिरित्यर्थः । **पद्मरागपदप्रयोगाभावस्येति**—पद्मरागपदप्रयोगरूपकार्यस्याभावस्येत्यर्थः । **पद्मरागवत्ताज्ञानाभावादेवेति**—शक्यतासम्बन्धेन पद्मरागपदवत्ताज्ञानरूपस्य कारणस्याभावादेवेत्यर्थः । **तच्छब्दवत्ताज्ञानस्येति**—अत्र शक्यतासम्बन्धेनेति शेषः । नन्वागमे श्रुतनिश्रितत्वेनावग्रहादिचतुष्टयात्मकमतिज्ञानस्योक्तत्वादीहादौ विकल्पव्यापारोऽक्षरात्मकाच्छ्रुतादेव, न मतेः सकाशात्, तस्यास्त्वयमनक्षरात्मकत्वात्, तथा च श्रुतनिश्रितमीहादिकं श्रुतमेवेत्याशयेनाशङ्कते **श्रुतनिश्रितवचनादीहादाविति** । समाधत्ते **तर्हीत्यादिना**—एवमभ्युपगमे ईहापायादयो मतिभेदास्सर्वेऽप्यक्षरात्मकत्वाच्छ्रुतज्ञानात्मकास्स्युरित्यतोऽक्षराभिलापरहितत्वादवग्रहस्य तन्मात्रं मतिज्ञानं स्यात्, न पुनरीहापायादि-

मतिः स्यादीहादिरूपम् । भवतु तर्हि तदा मतिश्रुतोभयव्यापार इति चेत्, न, युगपदुपयोगद्वयनिषेधात् । ईहादाविन्द्रियमनसोरिव मतिश्रुतलब्ध्योर्व्यापारादुभयरूपमेकं ज्ञानं भवतु, व्यवहारतस्तु तस्य पुष्कलसामग्रीकत्वान्मतावेवेति चेत्, न, अवग्रहाभावप्रसङ्गात्, तदुत्पत्तिकालेऽपि लब्धिद्वयव्यापारस्य प्रत्याख्यातुमशक्यत्वात्, मनोद्रव्याणां त्ववग्रहानन्तरमेव ग्रहणोपगमेनानुपपत्त्यभावादिति दिग् । मूकेतरभावाद् भेदो यथा–परप्रत्यायनहेतुद्रव्याक्षराभावेन मूकं मतिज्ञानं, द्रव्याक्षरसद्भावेन स्वपरप्रत्यायकत्वान्मुखरं तु श्रुतज्ञानमिति । ननु मतिहेतवोऽपि करादिचेष्टाविशेषाः परं प्रत्याययन्त्येवेति मतिज्ञानमपि किं न मुखरं स्यात्, दृश्यते हि करवक्त्रसंयोगे कृते भुजिक्रियाविषयाया मतेरुत्पत्तिरिति । मैवं, तेभ्य

शेषभेदात्मकं तत्स्यादित्यर्थः । अथोक्तदोषभयादस्तु स्थाणुपुरुषविवेककाले मतिश्रुतोपयोगव्यापारद्वयम्, तथा च स्थाणुपुरुषविवेकज्ञानं मतिज्ञानं श्रुतज्ञानञ्चोभयरूपं स्वीक्रियते, केवला तु मतिरनक्षरैव भविष्यतीत्याशयेनाशङ्कते–भवतु तर्हीति । "जुगवं नत्थि दो उवओगा" इति सिद्धान्तवचनमवलम्ब्य तन्निषेधे हेतुमाह युगपदुपयोगद्वयनिषेधादिति । पुनरप्याशङ्कते ईहादावित्यादिना, व्यवहारतस्तु तस्य पुष्कलसामग्रीकत्वान्मतावेवेति यदीहादिकमुभयात्मकं किमिति मतावेवेहादेश्शास्त्रे परिगणनम्, न श्रुत इति न शङ्क्यम्, मतेरेव सामग्री ईहादौ पुष्कलेति ततश्श्रुतात्मकत्वेऽपि व्यवहारतो मतावन्तर्भाव इत्यर्थः, व्यवहारस्त्विति पाठोऽत्र युज्यते, तथा च तत्र मतावेवेत्यनन्तरमन्तर्भाव इति पूरणस्य नापेक्षेति बोध्यम् । समाधत्ते नेति । निषेधे हेतुमाह–अवग्रहाभावप्रसङ्गादिति–अवग्रहे मतिश्रुतलब्धिद्वयव्यापारस्याऽप्रत्याख्येयत्वेन विकल्पव्यापारापत्त्याऽनिर्देश्यसामान्यमात्रावगाहित्वेन निर्विकल्पात्मकतया सिद्धान्तेऽभ्युपगतस्य तस्याभावप्रसङ्गादित्यर्थः । नन्ववग्रहोत्पत्तिकाले मतिलब्धिव्यापार एवाभ्युपगम्यते न श्रुतलब्धिव्यापारोऽपीति नोक्तदोष इत्यत आह–तदुत्पत्तिकालेऽपीति । न चैवं तर्हि भवन्मतेऽपीन्द्रियमनसोर्व्यापारस्यावग्रहकाले प्रत्याख्यानाशक्यत्वात्तदानीं मनोव्यापाराद्विकल्परूपत्वप्रसक्त्याऽवग्रहत्वानुपपत्तिस्तदवस्थैवेति वाच्यम्, ईहादावेव मनोव्यापारस्याभ्युपगमेनाऽवग्रहकाले तदभावेनोक्तदोषाभावादित्याह–मनोद्रव्याणामिति । अयम्भावः ज्ञानत्वावच्छिन्नोत्पादानुकूलशक्तिमत्तया मनोव्यापारस्य सर्वत्र विद्यमानत्वेऽप्यस्मान्मनोव्यापाराद्विकल्पोत्पादानुकूलशक्तिमतो मनोव्यापारस्य विलक्षणत्वेनाऽवग्रहकाले तदभावादेव विकल्परूपापत्त्यभावान्नास्मन्मतेऽवग्रहत्वानुपपत्तिरिति । स्वप्रत्यायकत्वस्वपरप्रत्यायकत्वरूपविरुद्धधर्माभ्यां मतिश्रुतयोर्भेदमाह–मूकेतरभावाद् भेदो यथेति । ननु यथा भावश्रुतज्ञानं न साक्षाद्विज्ञानात्मकस्वस्वरूपेण परपुरुषगतबोधजनकं, विज्ञानस्यात्मधर्मत्वेन स्वयं मूकत्वेन परपुरुषीयबोधजननानुकूलशक्त्यभावात्, किन्तु द्रव्याक्षररूपतत्कारणद्वारैव, तथा मतिज्ञानमपि करशीर्षादिचेष्टारूपकारणद्वारा परबोधकमेवेति श्रुतज्ञानमिव स्वकारणद्वारा मतिज्ञानमपि मुखरं स्यादेवेत्याशङ्कते–ननु मतिहेतवोऽपीति । समाधत्ते मैवमिति । तत्र हेतुमाह तेभ्य आहत्येत्यादिना । तेभ्यः मतिहेतुभ्यः । स्वविषयावग्रहाद्युत्पत्त्यनन्तरमयं पुरुषो भोक्तुमिच्छतीत्याकारकं यज्ज्ञान-

आहत्य स्वविषयावग्रहादीनामेवोत्पादात्, अनन्तरं भुजिक्रियादिविषयं यद्ज्ञानमुत्पद्यते तद् यदि व्याप्त्यादिज्ञानद्वारा तदा चेष्टादीनां लिङ्गत्वमेवागतं, लिङ्गं च न स्वपरप्रत्यायकं, स्वाधिकरणगतप्रतीतिजनकत्वे सति स्वाधिकरणभिन्नगतप्रतीतिजनकत्वस्यैव तदर्थत्वात्, अत एव परार्थानुमानादिकं शब्दरूपमेवोक्तं, न तु लिङ्गान्तरम्, वस्तुत. करादिचेष्टाभिराभिप्रायिकशब्दोन्नयनेन शाब्दबोधरूपं श्रुतमेव जन्यत इति न तत्र मतेः कारणत्वम्, न वा तद्द्वारा मतेर्मुखरत्वम्, कारणकारणत्वाच्च तथास्तु(तासु) द्रव्यश्रुतत्वव्यवहारोऽपि, लिप्यक्षरस्य तु व्यञ्जनाक्षरवत्साक्षाच्छ्रुतकारणतैव श्रुतबलसिद्धेति न तत्प्रतिबन्ध्यवकाशः।

मुत्पद्यते तद्यदि यो यः करवक्त्रसंयोगलक्षणचेष्टाविशेषवान् स स भोक्तुमिच्छति यथा चैत्र इति व्याप्तिज्ञानद्वारा तदनुमातुस्स्वार्थानुमितिजनकं तदा करवक्त्रसंयोगलक्षणचेष्टादीनां हेतुत्वमेव सिद्धमित्याह **अनन्तरं भुजिक्रियादिविषयमित्यादि** । **तदर्थत्वादिति** स्वपरप्रत्यायकत्वस्योक्तार्थकत्वादेवेत्यर्थः । **न तु लिङ्गान्तरमिति**–शब्दभिन्नं यल्लिङ्गं तत्स्वानुमितिहेतुरेवेति धूमेनेव शब्दानात्मकेन तेनापि स्वस्यैवानुमितिस्स्यात्, न तु परस्य, भवति च परार्थानुमानेन लिङ्गपरामर्शद्वारा तस्य सा, तस्मात्तत्परार्थानुमानं शब्दात्मकमेवेति भावः । एतावता करचेष्टादीनां लिङ्गविधया तद्द्रष्टॄणां भुजिक्रियाविषयकस्वगतानुमितिरूपमतिज्ञानजनकत्वेऽपि परगतप्रतीतिजनकत्वाभावान्न तद्द्वारा मतिज्ञानस्य स्वपरप्रत्यायकत्वमिति न तन्मुखरमित्युपपादितम्, अधुना करचेष्टादिना व्याप्तिप्रतिसन्धानद्वारा स्वार्थानुमितिरपि नोत्पद्यते, तथा सति शब्दादप्यर्थप्रतीतिरनुमानेनैवेति शब्दप्रमाणमप्यतिरिक्तं नैव सिद्ध्येत, किन्तु करादिचेष्टादिभिरनुमितेनाभिप्रायिकशब्देनार्थविशेषविषयकसङ्केतग्रहाधीनपदार्थोपस्थितिद्वारा शाब्दबोधरूपश्रुतज्ञानमेवोत्पद्यते, न तु मतिज्ञानमिति, अत एव यत्र शब्दोदीरणासामर्थ्याभावेऽपि प्रतिपिपादयिषवस्तथा तथा चेष्टमाना दृश्यन्ते, तत्रापि चेष्टोन्नीतविवक्षितशब्दद्वारैव चेष्टादीनां शाब्दप्रतीतिजनकत्वमेव, न तु मतिजनकत्वमिति न करचेष्टादिद्वारा मतेर्मुखरत्वमित्युपपादयन्नाह **वस्तुतः करादिचेष्टादिभिरित्यादि** । नन्वेवं तर्हि करादिचेष्टादीनां स्वोन्नीतशब्दद्वारा शब्दवाच्यार्थविषयकशाब्दबोधात्मकभावश्रुतजनकत्वे शब्दवत्तास्वपि द्रव्यश्रुतत्वप्रसङ्गस्स्यादित्याशङ्कानिवृत्त्यर्थमाह–**कारणकारणत्वाच्चेति**–श्रुतज्ञानकारणमनुमितः शब्दः, तत्कारणत्वाच्च करादिचेष्टासु द्रव्यश्रुतत्वव्यवहारोऽपीत्यर्थः। **न प्रतिबन्ध्यवकाश इति**–कारणकारणत्वाद्यथा चेष्टादिषु द्रव्यश्रुतत्वव्यवहारस्तथा लिप्यक्षरस्यापि कारणकारणत्वात्तथा व्यवहारोऽस्त्विति प्रतिबन्देरवकाशो नेत्यर्थः। लिप्यक्षरे साक्षाच्छ्रुतज्ञानकारणता श्रुतप्रमाणसिद्धा न करचेष्टादिष्विति विनिगमकस्य सद्भावादित्यर्थः । ननु "न श्रुतमिदं किन्तु चेष्टादिभ्यो मतमिति प्रतीतेः" चेष्टादिभ्योऽनुमितिरेव जायते न श्रुतज्ञानमिति चेत्, मैवम्, यतस्तत्र मतमित्यस्य साक्षाद्व्यञ्जनाक्षराजन्यज्ञानार्थकत्वेन चेष्टादिभ्य आभिप्रायिकशब्दज्ञानेन पदार्थोपस्थितिद्वारा श्रुतज्ञानमेव जन्यते, नानुमितिरिति चेष्टाऽपि परम्परया श्रुतज्ञानकारणत्वात्, श्रुत एवान्तर्भवति शब्दवत्, न मताविति । एतेन चेष्टाजन्यज्ञानस्य शाब्दबोधरूपत्वे शब्दात्प्रत्येमीति तत्र प्रतीतिस्स्यात्

न श्रुतमिदं किन्तु चेष्टादिभ्यो मतमित्यत्र तु साक्षाद्व्यञ्जनाक्षराजन्यज्ञानत्वमेव मतत्वं बोध्यम्, लिपिसंश्लेषेऽपि तथाध्यवसायादिति बोध्यम् । करादिचेष्टानां परप्रत्यायकत्वेऽपि तासु द्रव्यमतित्वेन रूढ्यभावान्न मतिज्ञानं परप्रत्यायकमिति ऋजवः । "आधीयतां हृदि मतिश्रुतभेदचिन्ता, दिङ्मात्रमेतदिह भाष्यमहार्णवस्य ॥ नव्योक्तिमेरुमथनेन ततोऽर्जिता या, सा ज्ञानबिन्दुनिहितैक्यसुधापि लेह्या ॥ १ ॥"

न तु सञ्ज्ञया प्रत्येमीत्यपि निरस्तम्, तस्य ज्ञानस्य साक्षादुच्चार्यमाणशब्दाऽजन्यत्वादेव शब्दात्प्रत्येमीति प्रतीत्यभावात् । अयम्भावः—शब्दात्प्रत्येमीति प्रतीतौ शब्दजन्यत्वस्य नियामकत्वेन चेष्टाजन्यज्ञाने तदभावादेव नोक्तप्रतीतिः, न तु शाब्दबोधरूपत्वाभावादित्याह—न श्रुतमिदमिति । भवतु वा मतिज्ञानस्य कारणं करादिचेष्टा परप्रबोधिका च, तथापि सा 'द्रव्यमतिः' इत्येवमागमे क्वचिदपि न रूढा, पुस्तकादिन्यस्तं व्यञ्जनाक्षररूपञ्च द्रव्यश्रुतं पुनः 'श्रुतम्' इत्येवं सर्वत्र रूढम् । यदाह विशेषावश्यकभाष्यकारोऽपि—"रूढंति व दव्वसुयं सुयं ति रूढा न दव्वमई ।१७४।" इति । ततश्च यद्यपि करादिचेष्टा मतिज्ञानस्य कारणं परप्रतीतिजनिका च तथापि द्रव्यमतित्वेनारूढत्वात् कारणे कार्योपचारं कृत्वा मतिरूपतया न व्यवह्रियते, अतो मतिज्ञानरूपा सा नेति न तद्द्वारेण तस्य परप्रत्ययोत्पादकत्वम्, द्रव्यश्रुतं तु कारणे कार्योपचारं कृत्वा श्रुतज्ञानत्वेन शास्त्रे व्यवह्रियत इति तद्द्वारेणास्य परप्रत्यायकत्वमुपपद्यत एवेत्याशयवतामृजूनां मतमाह—करादिचेष्टानां परप्रत्यायकत्वेऽपीति ।

" भाष्यार्थसंमिश्रतया प्रभूत-न्यायोक्तिगूढार्थतया मतेश्च ।
श्रुतस्य चैतद्विवृतेरशक्य-प्ररूपणाया अपि नेमिसूरेः ॥ १ ॥
प्रभावतो दर्शनसूरिणेयं, वृत्तिः कृताऽत्र स्खलनां भ्रमोत्थाम् ।
कृत्वा कृपां मय्यतुलां विशोध्य, ज्ञैर्वाच्यमाना प्रमुदं तनोतु ॥२॥ " युग्मम् ।

इति श्रुतज्ञानवक्तव्यतासमाप्तौ मतिश्रुतज्ञानवक्तव्यता परिसमाप्ता ॥१॥२०॥

उक्तं श्रुतज्ञानमथावधिज्ञानवक्तव्यतायामाह । अत्राहेत्यादि—किमिति किं लक्षणं

## सूत्रम् द्विविधोऽवधिः ॥ १ ॥ २१ ॥

(भाष्यम्) भवप्रत्ययः क्षयोपशमनिमित्तश्च ॥

(यशो०टीका) द्वे विधे भेदौ यस्य द्विविधः । ते एव द्वे विधे दर्शयति भवप्रत्यय इत्यादिना । न च लक्षणे पृष्टे भेदकथनमन्याय्यम्, आम्रप्रश्ने कोविदारकथनवदिति वाच्यम्, भेदज्ञाने तदन्यतरत्वेन लक्षणसम्भव इत्यभिप्रायात् । भवो देवनारकान्यतरभवलक्षणः स प्रत्ययो निमित्तकारणं यस्य स तथा, अवश्यं समुत्पन्नमात्रस्यैव देवस्य नारकस्य वाऽवधिरुद्भवतीत्येतावता स भवप्रत्यय इत्यभिधीयते, तद्भावे

---

अथावधिज्ञानादिवक्तव्यताप्रारम्भाय एकविंशतितमसूत्रावतरणिकामाह—अथावधिज्ञानवक्तव्यतायामाह, अत्राहेत्यादि इति । ननु "खओवसमिआ ओहिनाणलद्धी" इत्यनुयोगद्वारवचनात् क्षायोपशमिकभावरूपमवधिज्ञानम्, नारकभवश्च नरकगतिनामकर्मणो नारकायुषश्चोदयात्, देवभवश्च देवगतिनामकर्मणो देवभवायुषश्चोदयाद् भवतीति तावौदयिक-

भावात्तदभावे चाभावात्, मुख्यं तु कारणं तस्याप्यवधेः क्षयोपशम एव । न ह्यवधिज्ञानदर्शनावरणीयस्य कर्मणः क्षयोपशममपहाय देवनारकाणामवधेरुत्पत्तिरस्तीति, तस्यैव तु क्षयोपशमस्य स भवो निमित्ततां बिभर्ति, ततः कारणकारणत्वादशुद्धनयमते स कारणं भण्यत इत्येवं भवप्रत्ययता । नन्वेवं शुद्धनयमते भवप्रत्ययभेदो न स्यादिति चेत्, न स्यादेव, व्यवहारस्यैव भेदाशुद्धकारणताग्राहित्वात्, हन्तैवं दण्डादेरपि घटादौ कारणता न स्याच्चरमकारणेनान्यथासिद्धत्वादिति चेत्, शुद्धनये न स्यादेव, प्रवृत्तेरिष्टप्रयोजकताज्ञानादिनैव सम्भवादिति विपश्चितमेतदध्यात्ममतपरीक्षादावस्माभिः ॥ क्षयोपशमनिमित्तश्चेति उदितानां ज्ञानदर्शनावरणीयकर्मणां क्षयः परिशाटोऽनुदितानां चोदयविघातलक्षणस्ताभ्यां य

भावरूपाविति तदन्यतरमत्रः कथमवधिज्ञानस्य हेतुः, तं प्रति क्षयोपशमस्यैव हेतुत्वादित्याशङ्कायामाह–**मुख्यं तु कारणमिति** । यदाह भाष्यसुधाम्भोधिः "ओही खओवसमिए, भावे भणिओ भवो तहोदईए । तो किह भवपच्चइओ वोत्तुं जुत्तोऽवही दोण्हं ? ॥ ५७३ ॥" इत्याशङ्क्य तदुत्तरमाह "सो वि हु खओवसमओ, किं तु स एव खओवसमलाभो । तम्मि सइ हो अवस्सं, भण्णइ भवपच्चओ तो सो ॥५७४॥" इति । **तस्यैव तु क्षयोपशमस्य स भवो निमित्ततां विभर्तीति**–ननु देवनारकाणामवधिज्ञानदर्शनावरणकर्मक्षयोपशमं प्रति स्वस्वभव एव निमित्ततां बिभर्ति तर्हि कुतः तत्क्षयोपशमवैचित्र्यम् ? कारणसाम्ये कार्यस्यापि साम्यदर्शनादिति चेत्, स्वाशयविशुद्धितारतम्यादिति जानीहि, तदपि तत्तत्कारणाधीनजन्मान्तरीयविशुद्धिभेदादिति भावः । नन्वशुद्धनयमतेन परम्पराकारणमपि कारणमित्यभ्युपगमाद्भवत्ववधेर्भवरूपनिमित्तकारणभेदेन भेदः, शुद्धनयस्तु साक्षात्कारणमेव कारणत्वेनाभ्युपगच्छति, न पुनः परम्पराकारणमिति तन्मतेन स भेदो न स्यादित्याशङ्क्य तत्सत्यङ्कारतया समाधत्ते , **न स्यादेवेति** । तत्र हेतुमाह **व्यवहारस्यैवेति** । तथा च प्रकृतसूत्रं व्यवहारनयमाश्रित्योक्तम्, न तु निश्चयनयमिति भावः । आशङ्कते–**हन्तैवमिति** । तदभ्युपगमवादेन निराकरोति–**शुद्धनय इत्यादि** । ननु यदि घटत्वावच्छिन्नम्प्रति चक्रभ्रमणक्रियैव शुद्धनयेन कारणम्, तदव्यवहितोत्तरक्षणे घटोत्पत्तेः, न पुनः परम्पराकारणीभूतं दण्डादिकम्, तस्य चक्रभ्रमणक्रियारूपचरमकारणेनान्यथासिद्धत्वात् व्यापारेण व्यापारिणो नान्यथासिद्धिरित्यस्य स्वगृह एवोद्घोपणीयत्वादिति चेत्तर्हि घटार्थी अरण्यस्थदण्डानयनप्रवृत्तिमेव नैव कुर्यादित्यत आह **प्रवृत्तेरिष्टप्रयोजकताज्ञानेनैव सम्भवादिति**–प्रयोजकत्वञ्च साक्षात्कारणपरम्पराकारणात्मकोभयानुगतमिति नोक्तदोष इति भावः । नारकाणां देवानाञ्च स्वीयावधिज्ञानदर्शनावरणीयकर्मक्षयोपशमयोर्भवहेतुकत्वात्तदवधिर्यथा भवप्रत्ययस्तथा नराणां तिरश्चां च स्वीयावधिज्ञानदर्शनावरणीयकर्मक्षयोपशमयोः सम्यग्दर्शनतपोव्रतादिगुणहेतुकत्वात्तदवधिरपि गुणप्रत्यय एव,

उदेति स क्षयोपशमनिमित्तो न्यायतो गुणप्रत्यय इति यावत् ॥ २१ ॥

न्याययुक्तेस्साम्यादित्याह न्यायतो गुणप्रत्यय इति यावदिति ॥२१॥

अवधिभेदद्वयमध्ये केषामाद्योऽवधिः केषाञ्च द्वितीयोऽवधिरिति शिष्यजिज्ञासायामाद्यभेदमुपदिदर्शयिषुस्सूत्रकारो द्वाविंशतितमं सूत्रमाह–

**सूत्रम् तत्र भवप्रत्ययो नारकदेवानाम् ॥ १ ॥ २२ ॥**

(भाष्यम्) तत्र नारकाणां देवानां च यथास्वं भवप्रत्ययमवधिज्ञानं भवति । भवप्रत्ययं भवहेतुकं भवनिमित्तमित्यर्थः । तेषां हि भवोत्पत्तिरेव तस्य हेतुर्भवति, पक्षिणामाकाशगमनवत्, न शिक्षा न तप इति ॥

(यशो०टीका) तत्र तयोर्द्वयोर्मध्ये । तद्विवृणोति नारकाणामित्यादिना, नरकेषु भवा नारकाः, दिव्यन्तीति देवास्तेषां, यथास्वं स्थानयोग्यतानतिक्रमेण, भवप्रत्ययमित्यत्र प्रत्ययशब्दस्य ज्ञानार्थकत्वभ्रममपाकरोति–भवनिमित्तकं भवहेतुक(भवहेतुकं भवनिमित्त)मित्यर्थ इति, पर्यायद्वयोत्कीर्तनेनार्थदार्ढ्यम्, देवतानारकाणामवधेरुत्पत्तौ भव एव केवलो हेतुरित्यत्र कार्यविशेषे तथादर्शनं प्रमाणयति–पक्षिणामित्यादिना, पक्षिणां मयूरशुकसारिकादीनां यथाकाशगमनशक्तिः, शिक्षामन्योपदेशरूपाम्, तपश्चानशनादिरूपेण (रूपमन्तरेण) तद्वन्नारकदेवानां शिक्षां तपश्चान्तरेण तदवधिज्ञानं प्रादुर्भवतीति भावः ॥ २२ ॥

द्वितीयं भेदं दर्शयन्नाह–

ननु देवनारकाणां भवभेदात् कथं भवस्तदवधेरेकं कारणं स्यादिति न चाशङ्क्यम्, भवद्वयस्य भवत्वसामान्यधर्मेणैकत्वविवक्षणादिति । दी०व्यन्तीति, विविधप्रकारां स्वेच्छानुकूलां प्रकृष्टपुण्यप्रभावप्रभवां निरुपमक्रीडामनुभवन्तीत्यर्थः । नारकाणां प्रतिनरकं प्रतिप्रतरं च देवानामपि प्रतिविमानं प्रतिप्रतरञ्च स्वस्वस्थानभेदभिन्नमवधिज्ञानावरणीयकर्मक्षयोपशमप्रकर्षापकर्षभेदप्रयुक्तं च विविधमवधिज्ञानं सञ्जायत इत्यभिप्रायेणाह-यथास्वमिति, तदर्थमाह स्थानयोग्यतानतिक्रमेणेति–स्वस्वस्थानस्य योग्यताऽनतिक्रमेणेत्यर्थः । यद्वा स्वस्वस्थानस्य स्वस्वयोग्यतायाश्चानतिक्रमेणेत्यर्थः । तेनैकस्मिन्नेव नरकप्रतरस्थाने तत्तन्नारकाणामेकस्मिन्नेव विमानप्रतरस्थाने तत्तद्देवानाञ्च विशुद्धाविशुद्धभेदभिन्नस्यावधिवैचित्र्यस्य नानुपपत्तिः, एकस्थानस्थितानामपि तत्तज्जीवानां भिन्नभिन्नावधिज्ञानावरणभिन्नभिन्नविभङ्गज्ञानावरणकर्मक्षयोपशमलक्षणयोग्यतावैचित्र्यस्य सद्भावादेवेति भावः । "प्रत्ययः शपथे ज्ञाने, हेतुविश्वासनिश्चये" इति कोशोक्तेनात्र प्रत्ययशब्दो ज्ञानार्थकः, किन्तु हेत्वर्थक एवेत्याशयेनाह प्रत्ययशब्दस्येत्यादि । नारकभवे देवभवे च सति नारकाणां देवानां चावधिज्ञानमुत्पद्यते तदभावे च नोत्पद्यत इत्यन्वयव्यतिरेकबलसिद्धं भवस्य कारणत्वं खे पतत्रिगतिशक्तिदृष्टान्तेनोपपादयितुमाह–देवतानारकाणामवधेरुत्पत्ताविति । अवधिज्ञानदर्शनावरणकर्मक्षयोपशमस्य कारणत्वे औदासीन्यं भवस्य च कारणत्वे प्राधान्यञ्च ख्यापयन्नाह–भव एव केवलो हेतुरिति । आह भाष्यकारोऽपि " भवपच्चइओ नारयसुराणं, पक्खीणं वा नभोगमणं ॥ ५७२ ॥ " इति ॥ द्वाविंशतितमसूत्रटीका समाप्ता ॥ २२ ॥

अथ क्षयोपशमहेतुकोऽवधिः केषां स्यात् किंप्रभेदश्चेत्याशयेन त्रयोविंशतितम-

## सूत्रम् यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् ॥ १ ॥ २३ ॥

(भाष्यम्) यथोक्तनिमित्तः क्षयोपशमनिमित्त इत्यर्थः । तदेतदवधिज्ञानं क्षयोपशमनिमित्तं षड्विधं भवति शेषाणाम् । शेषाणामिति नारकदेवेभ्यः शेषाणां तिर्यग्योनिजानां मनुष्याणां च । अवधिज्ञानावरणीयस्य कर्मणः क्षयोपशमाभ्यां भवति षड्विधम् । तद्यथा—अनानुगामिकं आनुगामिकं हीयमानकं वर्धमानकं अनवस्थितं अवस्थितमिति । तत्रानानुगामिकं यत्र क्षेत्रे स्थितस्योत्पन्नं ततः प्रच्युतस्य प्रतिपतति, प्रश्नादेशपुरुषज्ञानवत् ॥ आनुगामिकं यत्र क्वचिदुत्पन्नं क्षेत्रान्तरगतस्यापि न प्रतिपतति, भास्करप्रकाशवत् घटरक्तभाववच्च ॥ हीयमानकं असंख्येयेषु द्वीपेषु समुद्रेषु पृथिवीषु विमानेषु तिर्यगूर्ध्वमधो यदुत्पन्नं क्रमशः संक्षिप्यमाणं प्रतिपतति आअङ्गुलासंख्येयभागात्, प्रतिपतत्येव वा परिच्छिन्नेन्धनोपादानसन्तत्यग्निशिखावत् ॥ वर्धमानकं यदङ्गुलस्यासंख्येयभागादिषूत्पन्नं वर्धते आसर्वलोकात् अधरोत्तरारणिनिर्मथनोत्पन्नोपात्तशुष्कोपचीयमानाधीयमानेन्धनराश्यग्निवत् ॥ अनवस्थितं हीयते वर्धते च वर्धते हीयते च प्रतिपतति चोत्पद्यते चेति पुनः पुनरूर्मिवत् ॥ अवस्थितं यावति क्षेत्रे उत्पन्नं भवति ततो न प्रतिपतत्याकेवलप्राप्तेः आभवक्षयाद्वा जात्यन्तरस्थायि वा भवति लिङ्गवत् ॥ उक्तमवधिज्ञानम् । मनःपर्यायज्ञानं वक्ष्यामः ॥

(यशो०टीका) यथोक्तं निमित्तं भवोऽपीति यथापदेन बुद्धिस्थत्वेन क्षयोपशमनिमित्तत्वं प्रकार उपनीयत इत्याशयवानाह भाष्यकृत्—यथोक्तनिमित्तः क्षयोपशमनिमित्त इत्यर्थ इति, षड् विकल्पा भेदा यस्य स तथा, सूत्रेऽवधिसम्बन्धात् पुंस्त्वम्, भाष्ये ज्ञानसम्बन्धान्नपुंसकता, तदाह तदेतदित्यादि, शेषाणामित्यत्र प्रतियोगिन आह—नारकदेवेभ्य इति, तिर्यग्योनिजानां मनुष्याणां चेति, तेऽपि योग्या ग्राह्याः । एकं सत् कथं षड्विधमत आह अवधीति, क्षयोपशमस्य षड्विधत्वादवधेः षड्विधत्वमिति भावः । षड्विधा एवोपन्यस्य तदर्थं प्रपञ्चयति तद्यथेत्यादिना, तत्र तेषु षट्सु भेदेषु, अनुगच्छत्यवश्यमानुगामिकं, तद्विपरीतमनानुगामिकं, कोऽर्थः ? यत्र क्षेत्रे प्रतिश्रयस्थानादौ, स्थितस्य कायोत्सर्गक्रियादिपरिणतस्य, उत्पन्नमुद्भूतं भवति, तेन तस्मात् स्थानात् यावन्न निर्याति तावज्जानातीत्यर्थः । ततोऽपक्रान्तस्य स्थानान्तरं गतस्य, प्रतिपतति नश्यति, किंवत्, प्रश्नो धातुजीवमूलाना पृच्छा

सूत्रमाह ज्ञानसम्बन्धान्नपुंसकतेति—मूले अवधिशब्दस्य मुख्यत्वेन विवक्षणात् पुल्लिङ्गता, भाष्ये च अवधेर्ज्ञानविशेषणतया तद्विशेषितज्ञानस्यैव मुख्यत्वेन विवक्षणान्नपुंसकतेति भावः । तिर्यग्योनिजानां मनुष्याणां चेतीति उक्तञ्च भाष्येऽपि "गुणपरिणामनिमित्ता सेसाण खओवसमियाओ ।५७२।" इति । नन्वत्राऽवधिज्ञानावरणकर्मक्षयोपशमनिमित्तोऽप्यवधिः सर्वेषां तिरश्चां मनुष्याणां चाऽविशेषतः किं भवति किं वाऽन्यथेत्याशङ्कानिवृत्त्यर्थमाह तेऽपि योग्या ग्राह्या इति । तिर्यग्योनिजा मनुष्याश्चापि ये सम्यग्दर्शनतपश्चरणादिगुणपरिणामाविर्भूतावधिज्ञानावरणकर्मक्षयोपशमाः संज्ञिपञ्चेन्द्रियजीवास्तेषामेव क्षयोपशमनिमित्तमवधिज्ञानमुत्पद्यते, नान्येषामिति तादृशक्षयोपशमवन्त एव जीवा अत्र ग्राह्या इति भावः । यस्मिन्क्षेत्रे स्थितस्य पुंसोऽवधिज्ञानमुत्पन्नं तस्मात्क्षेत्रादन्यत्र क्षेत्रे गतस्यापि यदनुवर्त्तते तदाऽऽनुगामिकमित्याशयेन तल्लक्षणमाह अनुगच्छत्यवश्यमिति । स्वलोचनवत् स्वस्वामिनं देशान्तरमभिव्रजन्तमिति शेषः । उक्तञ्च—"अणुगामिओऽणुगच्छइ गच्छन्तं लोअणं जहा पुरिसं ।

तमादिशति यः पुरुषस्तस्य ज्ञानवत्, यथा नैमित्तिकः कश्चिदादिशन् कस्मिंश्चिदेव स्थाने शक्नोति संवादयितुं, न पुनः सर्वत्र पृच्छ्यमानमर्थम्, एवं तदप्यवधिज्ञानं यत्र स्थितस्योपजातं तत्रस्थ एवोपलभते नान्यत्रेति। आनुगामिकमेतद्विपरीतं, यत्र क्वचिदाश्रवादावुत्पन्नं ततः क्षेत्रान्तरगतस्यापि न प्रच्यवते भास्करप्रकाशवत्, यथा प्राचीगतस्यादित्यमण्डलस्य प्रकाशः प्रकाशनीयं प्रकाशयति तथा प्रतीचीगतस्यापि, कुम्भरक्ततावद् भावनीयम्, न हि घटस्यापाकादुद्धृतस्य तडागादिनीतस्य रक्तता भ्रंशमश्नुते, तद्वदानुगामिकमवधिज्ञानमिति, पूर्वदृष्टान्ते प्राचीप्रतीचीस्थभानुप्रकाशस्य तावत् क्षेत्रपरिच्छेदः परोक्षत्वेन संदिग्ध इति प्रत्यक्षघटरक्ततादृष्टान्तानुधावनमाचार्यस्य ॥ हीयते क्रमेणाल्पीभवति तद्धीयमानकं, असङ्ख्येयेषु द्वीपेषु जम्बूद्वीपादिषु, समुद्रेषु लवणादिषु, पृथिवीषु रत्नप्रभादिकासु, विमानेषु ज्योतिर्विमानादिषु, तिर्यग् द्वीपसमुद्रेषु, ऊर्ध्वं विमानेषु, अधःपृथिवीषु, यदवधिज्ञानमुत्पन्नं भवति, ततः क्रमशः संक्षिप्यमाणं हीयमानं, हीयमानं प्रतिपतति यावद्द्वीपानपश्यत्तेषामेकं क्रोशं पुनर्न प्रेक्षते शेषं पश्यति, पुनरर्धयोजनं न पश्यति, एवं तावद्धीयते यावदङ्गुलासङ्ख्येयभागः, तदाह आ अङ्गुलस्यासङ्ख्येयभागादिति, अङ्गुलपरिमाणक्षेत्रस्यासङ्ख्येयखण्डीकृतस्यैकस्मिन्नसङ्ख्येयभागे यावन्ति द्रव्याण्यवस्थितानि तानि पश्यतीत्यर्थः। ततः कदाचिदवतिष्ठते, कदाचित् प्रतिपतत्येव वा, तान्यपि न पश्यतीत्यर्थः। अङ्गुलशब्दोऽत्र समयपरिभाषयाङ्गुलीवाचकोऽन्यथाङ्गुल्यसङ्ख्येयभागादित्यनेन भवितव्यम्। दृष्टान्तमुपन्यस्यति–परिच्छिन्नेत्यादि, परितः सर्वासु दिक्षु छिन्ना यदनन्तरं नेन्धनप्रक्षेपस्तादृशी, इन्धनोपादानसन्ततिः पलालादिप्रक्षेपनैरन्तर्यं यस्यां तादृशी याऽग्निशिखा तद्वत्। यथापनीतेन्धनाग्निज्वाला नाशमाशु प्रतिपद्यते तद्वदेतदपीति। वर्धमानकं यदङ्गुलासङ्ख्येयभागादिषु–अङ्गुलस्यासङ्ख्येयभागमात्रे क्षेत्रे पूर्वम्, ततोऽङ्गुलमात्रे, ततो रत्निमात्रे, एवमुत्पद्य तावद्वर्धते यावत्सर्वो लोकः, तदाह आसर्वलोकादिति। कथमेवं वर्धत इत्यत्र दृष्टान्तमाह–अधरोत्तरेत्यादि, अधरोत्तरावधउपरिवर्तिनौ यावरणी ताभ्यां यन्निर्मथनं परस्परं संघर्षणं तेन निष्पन्नं(न्न)उद्भूतस्तथा उपात्तं प्रक्षिप्तं शुष्कं यत्करीषादि तेनोपचीयमानो वृद्धिं गच्छन्नथ च आधीयमानः पुनः पुनः क्षिप्यमाण इन्धनानां पलालादीनां राशिर्यत्राग्नौ तद्वत्। यथाग्निः प्रयत्नादुपजातः सन् पुनरिन्धनलाभाद्विवृद्धिमुपागच्छत्येवं परमशुभाध्यवसायलाभादसौ पूर्वोत्पन्नो वर्धत इत्यर्थः। अनवस्थितमिति नावतिष्ठते क्वचिदेकस्मिन् वस्तुनि शुभाशुभानेकसंयमस्थानलाभात्। तदाह हीयते योजनं दृष्ट्वा तस्यैवार्धमवगच्छति, पुनस्तस्याप्यर्धम्, एवं वर्धतेऽर्धक्रोशं दृष्ट्वा क्रोशं जानाति। ततोऽर्धयोजनं योजनमेवं। तथा पूर्वं वर्धते पश्चाद्धीयते। यद्वा प्रतिपतति नश्यति, पुनः कालान्तर

इयरो य नाणुगच्छइ ठियप्पईवो व्व गच्छंतं ॥७१५॥" इति। नान्यत्रेति–यत्र देशान्तरे पुरुषो गच्छति तत्र तेन पुंसा सह तन्नानुगमनशीलं नियन्त्रितशृङ्खलाप्रतिबद्धप्रदीपवदिति तेन देशान्तरगतस्स नोपलभत इत्यर्थः। हीयमानमिति तृतीयभेदस्य विग्रहमाह–हीयते क्रमेणाल्पीभवति तद्धीयमानकमिति। आत्मविशुद्धिपरिणतेरुत्तरोत्तरं हीयमानत्वादिति हेतुरत्रोह्य इति। पूर्वावस्थातो यदधोऽधो ह्रासमुपगच्छत्यवधिज्ञानं तद्धीयमानकमिति भावः। उक्तञ्च–"हीयमाणं पुव्वावत्थाओ अहोऽहो हस्समाणं" इति। दृष्टान्तप्रतिपादकस्योद्धताच्छन्दसम्बद्धं श्लोकमाह–

उदेति क्षयोपशमवैचित्र्यात् । किंवत् ? ऊर्मिवत् । चारुमारुतधुते यथोर्मयः स्वच्छवारिणि सरस्यनारतं शान्तिमियूति तटान्तचुम्बिनः, संभवन्त्यथ तथाऽनवस्थितम् । अवस्थितमिति—अवतिष्ठते स्म अवस्थितं यथा मात्रयोत्पन्नं ता मात्रां न जहातीति यावत् । तदाह यावतीत्यादि । यावति यत्परिमाणे क्षेत्रेऽङ्गुलासङ्ख्येयभागादावुत्पन्नं आसर्वलोकात् ततः तस्मात् क्षेत्रान्न प्रतिपतति न नश्यति, किन्तु सर्वकालमास्ते । मर्यादामाह—आकेवलप्राप्तेः केवलोत्पत्तिं यावत् । प्राप्ते तु केवले छाद्मस्थिकज्ञानमात्रं नश्यति का वार्ताऽस्यावस्थितस्य । वाऽथवा, आभवक्षयान्मरणं यावदास्ते । ततः परं च नश्यति, जात्यन्तरस्थायि वा भवति । देवादिजात्यन्तरमपि गच्छन्तं जीवं न मुञ्चतीत्यर्थः । किंवत् ? लिङ्गवत् । यथेह जन्मन्युपादाय पुरुषवेदादिलिङ्गं प्राणी जात्यन्तरमाधावत्येवमवधिमपीति ॥२३॥

अवधिनिरूपणस्य सिद्धतां ज्ञापयित्वा मनःपर्यायनिरूपणं प्रतिजानीते उक्तमित्यादिना, तदपि भेदद्वारैव लक्षयति

## सूत्रम् ऋजुविपुलमती मनःपर्यायौ ॥ १ ॥ २४ ॥

(भाष्यम्) मनःपर्यायज्ञानं द्विविधम् । ऋजुमतिमनःपर्यायज्ञानं विपुलमतिमनःपर्यायज्ञानं च ॥ अत्राह । कोऽनयोः प्रतिविशेष इति । अत्रोच्यते ।

(यशो० टीका) मनोमात्रसाक्षात्कारि ज्ञानं मनःपर्यायज्ञानमिति व्युत्पत्तिद्वारैव लक्षणमायातीत्यभिप्रयन् विभागपरतया मनःपर्यायज्ञानं द्विविधमित्यादि । अत्र ऋजुत्वं विपुलत्वं च न मूर्तधर्मौ, ज्ञाने तदयोगात् । किन्तु सामान्यग्राहित्वं विशेषग्राहित्वं च, सामान्यमपि न मुख्यं ग्राह्यम्, मनःपर्यायदर्शनानभ्युपगमात्, आदित एव तस्य विशेषाकारतयोत्पत्तेः, किन्तु कतिपयविशेषचिन्तनपरिणतमनोद्रव्यसाक्षात्कारि ऋजुमति, वहुतरविशेषचिन्तनपरिणतमनोद्रव्यग्राहि च विपुलमतिमनःपर्यायज्ञानमुच्यते, द्विविधेनापि चानेन मनःपर्यायज्ञानेन तत्तदर्थचिन्तनपरिणतानि मनोद्रव्याण्येव गृह्यन्ते, चिन्त्यमानाः स्तम्भकुम्भादयस्तु वाह्याः पदार्था अनुमानेनैवावगम्यन्ते, तावत्पर्यन्तमेकोपयोगाभ्युपगमे विषयांशे परोक्षेऽपि मितिमात्रंशे प्रत्यक्षत्ववन्मनोद्रव्यांशे प्रत्यक्षत्वेऽप्यत्र वाह्यांशे परोक्षत्वमुपपादनीयम्, एकान्तप्रत्यक्षता तु

"चारुमारुतधुते यथोर्मय" इत्यादि—चारुर्मनोज्ञः शीतलो यो मारुतो वायुस्तेन धुते कम्पिते चारुमारुतधुते, स्वच्छं निर्मलं वारि जलं यस्मिन् तत्स्वच्छवारि तस्मिन् स्वच्छवारिणि, एतदुभयविशेषणविशिष्टे सरसि महासरोवरे यथोर्मयः कल्लोला अनारतं वारंवारं तटान्तचुम्बिनः तटान्तस्पर्शिनः शान्तिमियूति विलीयन्ते, अथ तदनन्तरं सम्भवन्ति पुनश्चाभिघातविशेषादुत्पद्यन्ते, अतो यथोत्पद्यन्ते विलीयन्ते सरस्यनवरतमूर्मय इत्यनवस्थितास्ते तथाऽवधिज्ञानमप्यात्मविशुद्धिपरिणामहानिवृद्धियोगात् क्षयोपशमवैचित्र्येणानवस्थितमित्यर्थः ॥ २३ ॥

त्रयोविंशतितमसूत्रटीका समाप्ता ॥

चतुर्विंशतितमसूत्रावतरणिकामाह अवधिनिरूपणस्येत्यादिना । सामान्यमपि न मुख्यं ग्राह्यमिति मुख्यं सामान्यं तदा ग्राह्यं स्यात् यदि तद्ग्राहकं मनःपर्यायदर्शनं सिद्धान्तेऽभ्युपगतं स्यात्, न चैवम्, मनःपर्यायज्ञानं पटुक्षयोपशमप्रभवत्वाद् विशेषमेव गृह्णदुत्पद्यते न सामान्यमिति ज्ञानात्मकतयैव तस्याऽभ्युपगमात्, अत एव दर्शनचतुष्टयमेवोक्तं सिद्धान्ते । अनुमानेनैवावगम्यन्ते इति संवदति चात्र " जाणइ वज्झेणुमाणेणं " इति

स्वग्राह्यावच्छेदेनैव वाच्या, लैङ्गिके एकान्तपरोक्षताया अपीत्थमेवोपपत्तेरिति " एगन्तेण परोक्खं लिंगिअमोहाईअं च पच्चक्खं " इत्यस्य न विरोधः । यदि च मनःपर्यायज्ञानोपगृहीतो बाह्यार्थानुमानोपयोगो भिन्न एव, कालसौक्ष्म्याच्चार्वाग्दृशां तत्रैकत्वाभिमान इति मन्यते, तदा न चाशङ्का न चोत्तरम् ॥२४॥

मनःपर्यायद्रष्टृत्वातीन्द्रियत्वाभ्यामनयोरैक्यं जानन् विशेषं पिपृच्छिषुराह—अत्राहेत्यादि । प्रतिविशेषः स्वगतो भेदः, उच्यते गुरुणा

## सूत्रम् विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ १ ॥ २५ ॥

(भाष्यम्) विशुद्धिकृतश्चाप्रतिपातकृतश्चानयोः प्रतिविशेषः । तद्यथा । ऋजुमतिमनःपर्यायज्ञानाद्विपुलमतिमनःपर्यायज्ञानं विशुद्धतरम् । किं चान्यत्-ऋजुमतिमनःपर्यायज्ञानं प्रतिपतत्यपि, भूयः विपुलमतिमनःपर्यायज्ञानं तु न प्रतिपततीति ॥ २५ ॥

अत्राह । अथावधिमनःपर्यायज्ञानयोः कः प्रतिविशेष इति । अत्रोच्यते ।

(यशो० टीका) पञ्चम्यर्थे कृतशब्देन व्याचष्टे । विशुद्धिकृतश्चेत्यादि । विशुद्धतरमिति यद्द्रव्यं यावद्भिः पर्यायैरवच्छिनत्ति ऋजुमतिस्तदेव द्रव्यं बहुतरैः पर्यायैर्विपुलमतिरवगच्छति । यथा घटे चिन्तिते ऋजुमतिमनःपर्यायज्ञानेनैतावद् व्यज्ञायि ' घटोऽनेन चिन्तितः, ' विपुलमतिमनःपर्यायज्ञानं पुनस्तमेव घटं पार्थिवत्वरक्तत्वप्रमाणादिभिर्बहुभिर्भेदैरवबुध्यतेऽतो विशुद्धतरमुच्यते । किं चान्यदितिहेत्वन्तरसमुच्चयार्थम्, ऋजुमतिमनःपर्यायज्ञानम्, प्राप्तमप्यप्रमत्तसंयतेन प्रतिपतति प्रच्यवते । अपिभाष्यम् । एतच्च पूर्वमेव विस्पष्टीकृतमिति किं पिष्टपेषणेन ? । स्वग्राह्यावच्छेदेनैवेति त्वं मनःपर्यायज्ञानं तद्ग्राह्यं संज्ञिपञ्चेन्द्रियतच्चदर्थविचारणानुकूलपरिणतं मनोद्रव्यं तदवच्छेदेनैवेत्यर्थः । तत्र दृष्टान्तमाह लैङ्गिके एकान्तपरोक्षताया अपीत्थमेवोपपत्तेरिति—ज्ञानस्य स्वप्रकाशत्वपक्षेऽनुमितावेकान्तपरोक्षत्वं साध्यविशिष्टपक्षावच्छेदेनैव, न तु मितिमात्रंशेऽपि, तदवच्छेदेन स्वप्रकाशत्वपक्षे ज्ञानमात्रस्य प्रत्यक्षत्वाभ्युपगमात्, तथा चानुमित्यात्मकज्ञानस्य स्वांशे प्रमात्रंशे च प्रत्यक्षत्वेऽपि तत्र परोक्षत्वोपपादनं स्वग्राह्यावच्छेदेन यथा क्रियेत तथा मनःपर्यायज्ञानस्य संज्ञिजीवमनःपरिचिन्तितघटपटाद्यर्थरूपबाह्यांशे परोक्षत्वेऽप्येकान्तप्रत्यक्षत्वोपपादनं स्वग्राह्यावच्छेदेनैव कर्तव्यमिति भावः ॥ २४ ॥ चतुर्विंशतितमसूत्रटीका समाप्ता ॥

पञ्चविंशतितमसूत्रमवतारयन्नाह मनःपर्यायद्रष्टृत्वातीन्द्रियत्वाभ्यामिति । अनयोः ऋजुमतिविपुलमतिमनःपर्यायज्ञानयोः । यथा घटे चिन्तिते ऋजुमतिमनःपर्यायज्ञानेनेत्यादि घटोऽनेन चिन्तित इत्यध्यवसायनिबन्धनभूता कतिपयपर्यायविशिष्टमनोद्रव्यपरिच्छित्तिः ऋजुमतिमनःपर्यायज्ञानम् । घटोऽनेन चिन्तितः स च सौवर्णः पाटलिपुत्रकोऽद्यतनो महान् अपवरकस्थितः फलपिहित इत्याद्यध्यवसायहेतुभूता प्रभूतपर्यायविशिष्टमनोद्रव्यपरिच्छित्तिर्विपुलमतिमनःपर्यायज्ञानम्, तथा चाद्यभेदापेक्षयैतद् द्वितीयभेदरूपमधिकतरपर्यायावगाहित्वाद्विशुद्धतरमित्यर्थः । प्राप्तमप्यप्रमत्तसंयतेनेति—अनेनाप्रमत्तसंयतस्यैव मनःपर्यायज्ञानं समुत्पद्यते तस्यापि न सर्वस्य, किन्त्वामर्षौषध्याद्यन्यतमर्द्धिप्राप्तस्यैवेति ज्ञापितम् प्रतिपततीत्यस्यार्थमाह प्रच्यवते इति चारित्रमोहोद्रेकाद्धीयमानचारित्रपरिणामस्येति

शब्दात्कदाचिन्न प्रतिपतत्यपि, भूयः यस्य पुनः, विपुलमतिमनःपर्यायज्ञानं समजनि, तस्य नैव प्रतिपतत्याकेवलप्राप्तेरिति ॥ २५ ॥

शेषः। न प्रतिपतत्यपीति-प्रवर्धमानचारित्रपरिणामस्येति शेषः। तस्य नैव प्रतिपततीति प्रवर्धमानचारित्रपरिणामत्वादिति भावः। आकेवलप्राप्तेरिति केवलज्ञानं यावन्न प्राप्यते तावदित्यर्थः। केवलज्ञानाद्यक्षणप्रागभावाधिकरणक्षणप्रागभावानधिकरणत्वे सति केवलज्ञानाद्य-क्षणप्रागभावाधिकरणो यः क्षणस्तत्क्षणपर्यन्तास्थितिकम्, तदनन्तरक्षणे तस्यैव केवलज्ञानरूपेण परिणतिभावेन स्वस्वरूपेणानवस्थानात् "नट्ठम्मि छाउमत्थिए नाणे केवलनाणं उववज्जइ" इति सिद्धान्तवचनादिति भावः ॥ २५ ॥ पञ्चविंशतितमसूत्रटीका समाप्ता ॥

एवं भेदे ऋजुविपुलमत्योः प्रतिपादितेऽवधेर्मनःपर्यायस्य चातीन्द्रियत्वे रूपिद्रव्यनिबन्धनत्वे च समाने विशेषमपश्यन् सूते-अथावधिमनःपर्यायज्ञानयोः कः प्रतिविशेष इति, विशेषहेतून् विशुद्ध्यादीन् पश्यन् गुरुराह। अत्रोच्यते

## सूत्रम् विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्याययोः ॥ १ ॥ २६ ॥

(भाष्यम्) विशुद्धिकृतः क्षेत्रकृतः स्वामिकृतो विषयकृतश्चानयोर्विशेषो भवत्यवधिमनःपर्यायज्ञानयोः। तद्यथा-अवधिज्ञानान्मनःपर्यायज्ञानं विशुद्धतरम्। यावन्ति हि रूपीणि द्रव्याण्य-वधिज्ञानी जानीते तानि मनःपर्यायज्ञानी विशुद्धतराणि मनोगतानि जानीते॥ किं चान्यत्-क्षेत्रकृतश्चानयोः प्रतिविशेषः-अवधिज्ञानमङ्गुलस्यासंख्येयभागादिपूत्पन्नं भवत्यासर्वलोकात्। मनःपर्यायज्ञानं तु मनुष्यक्षेत्र एव भवति नान्यक्षेत्र इति ॥ किं चान्यत्-स्वामिकृत-श्चानयोः प्रतिविशेषः-अवधिज्ञानं तु संयतस्यासंयतस्य वा सर्वगतिषु भवति, मनःपर्याय-ज्ञानं मनुष्यसंयतस्यैव भवति, नान्यस्य ॥ किं चान्यत्-विषयकृतश्चानयोः प्रतिविशेषः। रूपि-द्रव्येष्वसर्वपर्यायेष्ववधेर्विषयनिबन्धो भवति। तदनन्तभागे मनःपर्यायस्येति। अत्राह। उक्तं मनःपर्यायज्ञानम्। अथ केवलज्ञानं किमिति। अत्रोच्यते-केवलज्ञानं दशमेऽध्याये वक्ष्यते। मोह-क्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलमिति ॥

अत्राह-एषां मतिज्ञानादीनां ज्ञानानां कः कस्य विषयनिबन्ध इति। अत्रोच्यते

(यशो० टीका) विशुद्धीत्यादि। विशुद्धिर्बहुतरपर्यायपरिज्ञानकारणत्वम्। क्षेत्रं विषयाधार आकाशम्। स्वामी ज्ञानस्योत्पादयिता। विषयो ज्ञानगम्यः पदार्थः। एभ्यो हेतुभ्योऽवधिमनःपर्याय-ज्ञानयोर्विशेषोऽवगन्तव्यः। पञ्चम्यर्थं कृतशब्देन व्याचष्टे-विशुद्धिकृत इत्यादि। यावन्ति हि यावन्त्येव, हिरेवार्थे, रूपमेषामस्ति रूपीणि-रूपरसगन्धस्पर्शशब्दवन्ति, गुणसङ्घातात्मकानि द्रव्याणीति बोधनायेत्थमुक्तिः, अवधिज्ञानी जानीते पश्यति चेति दृश्यम्। तेषामवधिज्ञानोपलब्धाना रूपिद्रव्याणां यावन्ति मनःपर्यायज्ञानिनो विषयभूयमास्कन्दन्ति तान्यसौ मनःपर्यायज्ञानी विशुद्धतराणि बहुतर-

षड्विंशतितमसूत्रमवतारयन्नाह एवं भेदे ऋजुविपुलमत्योरिति। रूपीणीति-अत्र रूपपदेनोपलक्षणन्यायेन तत्सहवर्तिरसादेरपि ग्राह्यत्वात्तदर्थमाह रूपरस-गन्धस्पर्शशब्दवन्तीति। अत्र शब्दोपादानं नैयायिकाद्यभ्युपगतं शब्दस्याकाशगुणत्वम-पाकृत्य पुद्गलात्मकत्वख्यापनाय कृतमिति। रूपिणीत्यत्र नित्ययोगे मतुप्प्रत्ययः, नित्ययोगश्च कथञ्चिद्भेदविशिष्टाभेदे सत्येवेति तत्प्रतिपादनायाह -गुणसङ्घातात्मकानीति।

पर्यायाणि, तान्यपि **मनोगतानि** मनोव्यापारभाञ्जि, **जानीते**, असंचिन्त्यमानानि तु नैव साक्षाज्जानीते इत्यर्थः । क्षेत्रकृतविशेषमाह—**किंचान्यदित्यादि** । **अवधिज्ञानं** जघन्यमङ्गुलस्य यान्यसङ्ख्येयानि खण्डानि कृतानि तत्रैकस्मिन्नसङ्ख्येयभागमात्रे क्षेत्रे यावन्ति रूपिद्रव्याणि समवगाढानि तावन्ति पश्यति । ततो वर्धमानं बहूनि बहुतराणि यावत् सर्वलोकावस्थितानि रूपिद्रव्याणि पश्यति शुभाध्यवसायविशेषात्, **मनःपर्यायज्ञानं तु मनुष्यक्षेत्र** एवार्धतृतीयद्वीपसमुद्रेषु **भवति, नान्यत्र** वैमानिकेषु शर्कराप्रभादिषु वा। **किं चान्यत् स्वामिकृत** इत्यादि । **अवधिज्ञानं संयतस्य** साधोः **असंयतस्याविरतस्य** संयतासंयतस्य देशविरतस्य वा, **सर्वगतिषु** नारकादिषु, **भवेत्** । **मनःपर्यायज्ञानं तु मनुष्यसंयतस्यैव भवति** । मनुष्यग्रहणान्नारकादिव्युदासः । संयतग्रहणान्मिथ्यादृष्ट्यादीनां प्रमत्तान्तानाम् । एतदेव स्पष्टार्थमाह—**नान्यस्येति** । **किंचान्यद्विषयकृत** इत्यादि, **रूपिद्रव्येषु** परमाण्वादिषु **सर्वेष्वऽसर्वपर्यायेष्वे**कज्ञानविषयतया सर्वपर्यायरहितेषु, **अवधेरवधिज्ञानस्य, विषयनिबन्धो** गोचरनिबन्धः, तद्धयेकैकस्य परमाणोः कदाचिदसंख्येयान् पर्यायान् जानाति, कदाचित्संख्येयान् जघन्येन चतुरो रूपरसगन्धस्पर्शान्, न तु कदाप्यनन्तान्, केवलज्ञानस्यैवानन्तपर्यायग्राहकत्वात् । मनःपर्यायज्ञानस्य तु रूपिद्रव्याणि न सर्वाणि विषयो, यतः, तेषामवधिज्ञानज्ञातानां द्रव्याणामनन्तभागीकृतानां य एकोऽनन्तभागस्तस्मिन्नेवास्य विषयनिबन्धः, तस्मादतीन्द्रियत्वादितौल्येऽप्यवधिमनःपर्याययोर्भेद इति सिद्धम् । केवलज्ञानं त्ववसरप्राप्तमप्यत्र नोच्यते, दशमे वक्ष्यमाणत्वादित्याह— **अत्राहेत्यादिना** ॥ २६ ॥

एवं मतिज्ञानादीनां पञ्चानामपि ज्ञानानां स्वरूपेऽवधृते यस्य मत्यादेर्यो विषयस्तमजानन् पृच्छति । **अत्राह—एषामित्यादि** । गुरुराह—उच्यते

**सूत्रम् मतिश्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु ॥ १ ॥ २७ ॥**

(भाष्यम्) **मतिज्ञानश्रुतज्ञानयोर्विषयनिबन्धो भवति सर्वद्रव्येष्वसर्वपर्यायेषु । ताभ्यां हि सर्वाणि द्रव्याणि जानीते न तु सर्वैः पर्यायैः ।**

(यशो० टीका) व्याचष्टे, **मतिज्ञानश्रुतज्ञानयोर्मतिश्रुतयो**रित्यस्यार्थः । **विषयनिबन्धो**

**प्रमत्तान्तानामिति**—षण्णां प्रथमषड्गुणस्थानवर्त्तिनामित्यर्थः । अत्र व्युदास इत्यस्यानुकर्षः । **नान्यस्येति**—अप्रमत्तसंयतत्वेनैव मनःपर्यायज्ञानत्वावच्छिन्नं प्रति कारणत्वाद् तद्भिन्नस्य मिथ्यादृष्ट्यादिप्रमत्तसंयतान्तमनुष्यस्य देवनारकादेश्च नैतदुत्पद्यत इत्यर्थः । **तद्धयेकैकस्य परमाणोः कदाचिदसङ्ख्येयान् पर्यायान् जानाति कदाचित्संख्येयानिति**—तदेवाह-भाष्यकारोऽपि—"एगं दव्वं पेच्छं, खंधमणुं वा स पज्जवे तस्स । उक्कोसमसंखेज्जे, संखिज्जे पेच्छए कोई ॥७६१॥" इति । **जघन्येन चतुरो रूपरसगन्धस्पर्शान् न तु कदाप्यनन्तानिति**—संवदति चात्र भाष्यम् "दो पज्जवे दुगुणिए सव्वजहन्नेण पेच्छए ते य । वन्नाई य चउरो नाणंते पेच्छइ कयाइ ॥७६२॥" इति ॥२६॥ **इति षड्विंशतितमसूत्रटीका समाप्तेति** ।

सप्तविंशतितमसूत्रावतरणिकामाह—**एवं मतिज्ञानादीनामिति** । प्रकृते ज्ञानस्य प्रस्तावान्मतिश्रुतयोरिति मूलोक्तपदस्य ज्ञानगर्भमर्थमाह—**मतिज्ञानश्रुतज्ञानयोरिति** । विषयनिबन्धो

भवति–विषयनियमो भवति, अर्थान्तरसंक्रमितवाच्यानिबन्धपदार्थोऽयं, सर्वद्रव्येष्वित्यत्र सर्वपदं पर्याये सर्व-

भवतीत्यस्यार्थमाह–**विषयनियमो भवतीति**। एतेन मतिश्रुतज्ञाने न बाह्यार्थालम्बने प्रत्ययत्वात् स्वप्नप्रत्ययवदिति योगाचारमतं निरस्तम्, इदमनुमानमप्रमाणं चेत्तदा तेन न स्वमतसिद्धिः, प्रमाणं चेत्तदा विषयव्यवस्थायाः प्रमाणाधीनत्वेन तद्विषयस्य पक्षसाध्यादेरिवानुमानान्तरविषयस्यापि तस्य बहिर्भूतस्य सिद्धापत्त्या न ज्ञानाद्वैतमतसाम्राज्यम् । अथ ग्राह्यं ग्राहकञ्च ज्ञानमेवेति पक्षसाध्यादेरनुमानकुक्षिप्रविष्टत्वात् ज्ञानरूपत्वेन बाह्यस्यासिद्ध्या न द्वैतमिति चेत्, न, प्रमाणाभावेन वाङ्मात्रेण ज्ञानमात्राऽसिद्धेः, अन्यथा विपरीतस्यापि सिद्ध्यापत्तेः । किञ्चेदं कार्यमिदमस्य कारणमिति भेदज्ञानाभावे उपादानाद्यानयनगोचरोपादेयविधानगोचरा च प्रवृत्तिर्दुर्घटा स्यात्, एवमयं पक्षः अयं साध्यः अयं हेत्वादिरिति भेदज्ञानाभावे न कोऽपि प्रेक्षावाननुमातुमुत्सहते । न च कार्यकारणव्यवस्था पक्षसाध्यादिव्यवस्था च भ्रान्तिमात्रमिति, न बाह्यार्थसिद्धिरिति वाच्यम्, भ्रान्तिबीजाभावात्, तथापि तत्त्वे बाह्यस्येव ज्ञानस्यापि विचारे कर्त्तव्ये सति अन्ततोऽसत्त्वापत्त्या शून्यतापत्तिस्स्यात् । अथ सर्वशून्यताऽभ्युपगम्यत एवेति चेत्तर्हि सा प्रामाणिकी किं वाऽप्रामाणिकी, आद्ये न सर्वशून्यतासिद्धिः, प्रमाणस्य तत्सिद्धशून्यतायाश्च पारमार्थिकत्वेनाभ्युपगमात् । अथ प्रमाणप्रमेयव्यवस्था भ्रान्तिमूलिकेति प्रमाणमपि वस्तुगत्याऽप्रमाणमेवेति तत्सिद्धशून्यताऽपि न पारमार्थिकी, अत एव शून्यताऽपि शून्यरूपेति गीयते इति द्वितीयपक्ष एवाभ्युपगम्यत इति चेत्तर्हि पारमार्थिकप्रमाणमन्तरेण शून्यत्वाभ्युपगमे प्रेक्षावत्त्वक्षतिप्रसङ्गात्, न हि कोऽपि प्रेक्षावान् प्रमाणासिद्धमर्थमभ्युपगच्छन्नुन्मत्तपुरुषवत् सुपरीक्षको भवति । " शून्ये मानमुपैति चेन्ननु तदा, शून्यात्मता दुःस्थिता, नो चेत्तर्हि तथापि किं न सुतरां, शून्यात्मता दुःस्थिता । वन्ध्या मे जननीत्यमुष्यसदृशी–मभ्याश्रय शून्यतां, शङ्के दुश्शकसाहसैकरसिकः, स्वामिन्नसौ सौगतः ॥ १ ॥ " इति श्लोकार्थोऽपि प्रकृतार्थोपयोगितयाऽत्र सुधीभिरनुसन्धेयः । विस्तृतभीत्या नेह वितन्यते । **अर्थान्तरसङ्क्रमितवाच्यनिबन्धपदार्थोऽयमिति** शक्यतावच्छेदकावच्छिन्नशक्यार्थाभिन्नेन विषयात्मकलक्ष्यार्थेन सह सङ्क्रमितो विमिश्रितो घटित इति यावत् वाच्यो निबन्धरूपोऽर्थो यस्य सोऽर्थान्तरसङ्क्रमितवाच्यनिबन्धपदः, तस्यार्थोऽयमित्यर्थः । विषयरूपलक्ष्यार्थान्वितनिबन्धरूपशक्यार्थविषयकशाब्दबोधप्रयोजकत्वलक्षणाऽजहल्लक्षणानिरूपकपदत्वान्निबन्धपदमत्राऽजहल्लाक्षणिकमितिभावः । "सर्वद्रव्येष्वित्यत्र सर्वपदं पर्याये सर्वत्वप्रतिषेधार्थम्" इति पाठो युक्तः, सर्वद्रव्येष्वित्यत्र यदेतत्सर्वपदं तत् पर्यायेषु सर्वत्वप्रतिषेधार्थमित्यर्थः । अयमत्र भावः असर्वपर्यायेषु द्रव्येषु विषयनिबन्ध इत्येतावन्मात्रोक्तावपि सर्वद्रव्येषु विषयनिबन्धो लभ्यत एव, असति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वय इति नियमबलादसर्वपर्यायत्वविशिष्टद्रव्यत्वव्यापकत्वस्य मतिश्रुतविषयत्वयोरनुगमात्, किन्तु पर्याये कथं विषयनिबन्ध इति कथंभावाकाङ्क्षानिवृत्तये

त्वप्रतिषेधात्, असर्वपर्यायेष्विति प्राग्वत् व्याख्येयम् । स्पष्टयति—ताभ्यां हीति, यस्मात्ताभ्यां मतिश्रुताभ्यां, सर्वाणि द्रव्याणि धर्मास्तिकायादीनि, जानीते, न तु तेषां सर्वान्पर्यायानुत्पादादीनिति । कथं पुनस्ताभ्यां सर्वद्रव्यविषयो बोधः ? उच्यते—श्रुतज्ञानिनस्तावत् श्रुतग्रन्थानुसारेण, मतिज्ञानिनस्तु श्रुतज्ञानोपलब्धेष्वर्थेष्वक्षरपरिपाटीमन्तरेण पटुत्वभ्यासदशायां सर्वद्रव्याणि ध्यायतः, सर्वपर्यायग्रहणे तु नैव शक्तं मन इति ॥ २७ ॥

द्रव्यपदसमभिव्याहृतसर्वपदोक्तिः, एवं च पर्यायेषु न सर्वेषु विषयनिबन्धः किन्तु कतिपयेष्वेव तेष्विति लभ्यत इति । सर्वद्रव्येष्वित्यत्र सर्वपदं पर्याये सर्वत्वप्रतिषेधादिति पाठप्रामाण्ये त्वसर्वपर्यायेष्वित्यत्रासर्वपदोपादानेनासर्वपर्यायविशिष्टद्रव्यस्य मतिश्रुतज्ञानविषयत्वमित्येतावता सर्वद्रव्यस्य मतिश्रुतज्ञानविषयत्वं न लभ्यते, यथा सर्वान् पर्यायान् मतिश्रुतज्ञाने न गृह्णतः तथा द्रव्याण्यप्यसर्वपर्यायविशिष्टानि कतिपयान्येव ते गृह्णीयातामित्याशङ्कापनोदार्थं द्रव्यपदसमभिव्याहृतसर्वपदोपादानमित्यवबोधाय पर्याये सर्वत्वप्रतिषेधादित्युक्तम्, तथा चाऽसर्वपर्यायविशिष्टानि सर्वाण्येव द्रव्याणि ते गृह्णीत इति सिद्धम्, यदि तयोर्मतिश्रुतज्ञानयोस्सर्वपर्यायविषयकत्वं स्यात् किमिति ते सर्वपर्यायविशिष्टसर्वद्रव्याणि न गृह्णीयाताम्, न च तथा गृह्णत इति न सर्वपर्यायविषयकत्वं तयोः, ततश्च कतिपयेषु पर्यायेषु तयोर्विषयनिबन्ध इत्यर्थाल्लभ्यत इति । ननु यदि धर्मास्तिकायादिद्रव्याण्यनन्तपर्यायावलीढान्येव वस्तुत्वं समाश्रयन्ति, तदा मतिश्रुतज्ञानाभ्यामनन्तपर्यायविशिष्टतयैव तद्ग्रहणेन भवितव्यमिति चेत्, मैवम्, मतिश्रुतज्ञानयोरसावरणत्वेन तद्विशिष्टतया तद्ग्रहणयोग्यत्वाभावात्, तद्ग्रहणयोग्यता चोदितस्वावरणविच्छेदे सत्येव, नान्यथेति तत्तद्विषयग्रहणे योग्यतैव कारणम्, तथाहि—मतिज्ञानं तत्तदिन्द्रियानिन्द्रिययोग्यार्थग्राहकम्, तत्र च योग्यता मतिज्ञानावरणकर्मक्षयोपशमलक्षणेति सा यस्य यस्य विषयस्य तस्य तस्य मतिज्ञानेन ग्रहणम्, नान्यस्येति तेन धर्मिग्रहणे न सर्वे तद्गताः पर्याया गृह्यन्ते किन्तु कतिपया योग्या एव, न हि चक्षुषा योग्यदेशस्थघटधर्मिग्रहणे तद्गता अनन्तास्स्वपरपर्याया गृह्यन्ते, किन्तु रूपसंख्यासंयोगादिनियतसङ्ख्यकाश्चक्षुर्विषयभावमापन्ना एव । नन्वेवं तर्हि धर्माधर्माकाशास्तिकायादीनां द्रव्याणामतीन्द्रियत्वान्नैव मतिज्ञानेन ग्रहणं स्यादित्यसर्वतत्पर्यायग्रहणे का वार्त्तेति मतेरसर्वपर्यायसर्वद्रव्यविषयनिबन्ध इत्युक्तमयुक्तमिति चेत्, न, यतश्श्रुतज्ञानपरिकर्मितमतेर्मतिज्ञानोपयुक्तस्य तत्कालावच्छेदेन श्रुतपरिपाटीमन्तरेणापि पटुत्वभ्यासादसर्वपर्यायधर्मास्तिकायादिसर्वद्रव्यविषयकापायादिमानसमतिज्ञानं स्यादेव, अनन्तपर्यायग्रहणे तु मनो नैव व्याप्रियते तथाशक्त्यभावात् । श्रुतज्ञानमपि श्रुतानुसारेण जायते तत्र श्रुतं सङ्केतविषयपरोपदेशः श्रुतग्रन्थश्चेति शक्तिस्मरणद्वारा तद्वाच्यार्थगोचरेण तेन श्रुतज्ञानेन नैकैकद्रव्यगताः सर्वे स्वस्वासाधारणधर्मरूपेण पर्याया अभिलाप्यानभिलाप्यात्मका विषयीक्रियन्त इति श्रुतज्ञानी सर्वद्रव्याणि जानन्नपि न तद्गतान् तान् सर्वान् जानीते, तेषां सर्वेषां श्रुतज्ञानावरणीयकर्मक्षयोपशमलक्षणयोग्यत्वस्याभावादित्येवाशयेनाह—यस्मात्ताभ्यां मतिश्रुताभ्यामित्यादि ॥ २७ ॥ इति सप्तविंशतितमसूत्रटीका समाप्ता ।

अवधिज्ञानस्य विषयनिबन्धं कथयति—

**सूत्रम् रूपिष्ववधेः ॥ १ ॥ २८ ॥**

(भाष्यम्) रूपिष्वेव द्रव्येष्ववधिज्ञानस्य विषयनिबन्धो भवति असर्वपर्यायेषु । सुविशुद्धेनाप्यवधिज्ञानेन रूपीण्येव द्रव्याण्यवधिज्ञानी जानीते, तान्यपि न सर्वैः पर्यायैरिति ॥

(यशो० टीका) नियमपरतया व्याचष्टे रूपिष्वेव द्रव्येष्ववधिज्ञानस्य विषयनिबन्धो भवति, असर्वपर्यायेष्वित्यनुवृत्तिलभ्यम् । उक्तमुपपादयति सुविशुद्धेनापीत्यादि ॥ २८ ॥

अष्टाविंशतिसूत्रावतरणिकामाह—**अवधिज्ञानस्य विषयनिबन्धं कथयतीति—रूपिष्ववधेरिति**—एतत्सूत्रस्य नियमसूत्रतया रूपिद्रव्यत्वसमनियतविषयताकत्वमवधेर्लभ्यते । एतदेवाह—**नियमपरतया व्याचष्ट इत्यादिना** । ननु यद्यवधिज्ञानमुत्कृष्टतोऽपि कृत्स्नलोकवर्त्तिनिखिलानि रूपीण्येव द्रव्याणि जानीते तर्हि लोकप्रमाणान्यलोकेऽसंख्यखण्डानि परमावधिः पश्यति, उक्तञ्च—"परमोहि असंखेज्जा लोकमिता" इति । क्षेत्रस्यारूपित्वात्तत्कथं सङ्गच्छते इति चेत्, उच्यते, यदि तत्र तानि रूपिपुद्गलानि द्रष्टव्यानि स्युस्तदा पश्येदेवावधिज्ञानी, न च तानि तत्र सन्तीत्यतस्सामर्थ्यमात्रवर्णनमेतदिति नोक्तविरोधः । उक्तञ्च भाष्यकृता "सामत्थमेत्तमेयं, जइ दट्ठव्वं हवेज्ज पेच्छेज्जा । न य तं तत्थत्थि जओ, सो रूविनिबन्धणो भणिओ ॥६०५॥" इति । **सुविशुद्धेनापीति**—"परमोहिनाणविओ, केवलमन्तोमुहुत्तमित्तेण ॥ ६८९ ॥" इति भाष्यवचनाद् यदुत्पत्त्यनन्तरमन्तर्मुहूर्त्तकालमात्रेण नियमेन केवलज्ञानमुत्पद्यते तेन "रूवगयं लहइ सव्वं" इति भाष्यवचनात्सर्वलोकान्तर्गतपरमाण्वादिभेदभिन्ननिखिलपुद्गलद्रव्यावगाहिना केवलज्ञानभास्करोदये प्रथमप्रभास्फोटकल्पेनाऽऽत्मीयातिविशुद्धिसमुत्पन्नेन परमावधिनाऽपीत्यर्थः । अपिशब्देन यदि सुविशुद्धेनावधिज्ञानेन रूपीण्येव द्रव्याणि न त्वरूपीणि जानीतेऽवधिज्ञानी तर्ह्यविशुद्धेन तेन तान्येव जानीते इत्यत्र किमु वक्तव्यमिति सूचितम् । **तान्यपि न सर्वैः पर्यायैरिति**—भाष्यम् अवधिज्ञानेनानन्तेषु द्रव्येषु समुदितेष्वनन्तान् पर्यायानवधिज्ञान्येकदा जानाति, आधारद्रव्यानन्तत्वेन तेषामनन्तत्वात्, न त्वेकैकद्रव्यगतानुत्कृष्टतोऽप्यनन्तान् सर्वपर्यायान्, अवधिज्ञानस्य तथाविधावधिज्ञानावरणकर्मक्षयोपशमाभावेन तथाविधशक्त्यभावात्, किन्तु जघन्यतो प्रतिद्रव्यं चतुरः पर्यायान्, उक्तञ्च "पेच्छइ चउग्गुणाइं जहण्णओ मुत्तिमंताइं ॥ ८०७ ॥" इति । प्रतिद्रव्यं चत्वारो गुणा धर्माः पर्याया येषां तानि चतुर्गुणानि मूर्त्तिमन्ति द्रव्याणि जघन्यतोऽवधिज्ञानी जानाति पश्यति चेत्यर्थः । उत्कृष्टतस्त्वसंख्येयपर्यायान् । अयम्भावः उत्कर्षतस्त्वेकैकद्रव्यमाश्रित्याऽसंख्येयपर्यायाणि मूर्तिमन्ति सर्वाणि द्रव्याणि जानाति पश्यति चेति । उक्तञ्च—"पइदव्वं संखाईयपज्जयाइं च सव्वाइं ॥८०८॥" इति ॥२८॥

(यशो० टीका) मनःपर्यायज्ञानस्य विषयनिबन्धमाह

एकोनत्रिंशत्तमसूत्रमवतारयन्नाह—**मनःपर्यायज्ञानस्य विषयनिबन्धमाहेति** ।

## सूत्रम् तदनन्त(तम)भागे मनःपर्यायस्य ॥ १ ॥ २९ ॥

( भाष्यम् ) यानि रूपीणि द्रव्याण्यवधिज्ञानी जानीते ततोऽनन्तभागे मनःपर्यायस्य विषयनिबन्धो भवति । अवधिज्ञानविषयस्यानन्तभागं मनःपर्यायज्ञानी जानीते रूपिद्रव्याणि मनोरहस्यविचारगतानि च मानुषक्षेत्रपर्यापन्नानि विशुद्धतराणि चेति ॥

( यशो० टीका ) तेषां तदर्थप्रतियोगीन्यादाय व्याचष्टे–यानि रूपीणि रूपवन्ति, जानात्यवधिज्ञानी तेषामनन्ततमभागे मनःपर्यायज्ञानस्य विषयनिबन्धो भवति । तत्कर्मककर्त्रुक्तिमाह–अवधीत्यादि, रूपिद्रव्याणीत्यतः पूर्वं तानीत्यध्याहार्यं, तानि मनःपर्यायज्ञानग्राह्याणि रूपिद्रव्याणि, न कुड्याद्याकारव्यवस्थितानि, किन्तु, मन एव यद्रहस्यमप्रकाशस्वरूपं तत्र यो विचारः कथमयं पदार्थो व्यवस्थित इत्येवंरूपस्तत्र गतानि प्रविष्टानि चिन्त्यमानानि जीवेनेति यावत् । तान्यपि न सर्वलोकवर्तीनि, किन्तु मनुष्यक्षेत्रे पर्यापन्नानि व्यवस्थितानि, तान्यपि विशुद्धतराण्यवधिज्ञानिनः सकाशाद् बहुतरपर्यायाणि ॥२९॥

न कुड्याद्याकारव्यवस्थितानीति न कुटीघटपटाद्याकारेण बाह्यवर्तिद्रव्याणीत्यर्थः, एतच्च पूर्वमेव विवेचितमिति किं पिष्टपेषणेन ? । चिन्त्यमानानि जीवेनेति संज्ञिपञ्चेन्द्रियजीवेन काययोगेन गृहीत्वा मनोयोगेन मनस्त्वेन परिणमितानि मानसिकविचारणानुगुणानीत्यर्थः । मनुष्यक्षेत्र इति–अर्धतृतीयद्वीपसमुद्रद्वयपरिमाणे मानुषक्षेत्रे इत्यर्थः, एतेन मनःपर्यायज्ञानी न तद्बहिर्भूतप्राणिमनांस्यवगच्छतीति ज्ञापितम् । उक्तञ्च "मुणइ मणोदव्वाइं नरलोए सो मणिज्जमाणाइं ॥ ८१३ ॥" इति ॥ २९ ॥ एकोनत्रिंशत्तमसूत्रटीका समाप्ता ॥

( यशो० टीका ) केवलज्ञानविषयमाह

त्रिंशत्तमसूत्रमवतारयन्नाह केवलज्ञानविषयमाहेति ।

## सूत्रम्–सर्वद्रव्यपर्यायेषु केवलस्य ॥ १ ॥ ३० ॥

( भाष्यम् ) सर्वद्रव्येषु सर्वपर्यायेषु च केवलज्ञानस्य विषयनिबन्धो भवति । तद्धि सर्वभावग्राहकं संभिन्नलोकालोकविषयम् । नातः परं ज्ञानमस्ति । न च केवलज्ञानविषयात्परं किञ्चिदन्यज्ज्ञेयमस्ति । केवलं परिपूर्णं समग्रमसाधारणं निरपेक्षं विशुद्धं सर्वभावज्ञापकं लोकालोकविषयमनन्तपर्यायमित्यर्थः ॥३०॥ अत्राह । एषां मतिज्ञानादीनां युगपदेकस्मिञ्जीवे कति भवन्तीति । अत्रोच्यते

(यशो० टीका) व्याचष्टे सर्वद्रव्येष्वित्यादि । हेतुमाह तद्धीत्यादि, हि यतः, तत् केवलज्ञानं, सर्वेषां भावानां द्रव्यक्षेत्रादीनां ग्राहकं, तथा संभिन्नौ सम्पूर्णौ यौ लोकालोकौ तद्विषयम् । अतोऽस्मात्केवलात्परं प्रधानतरं,न ज्ञानमस्ति, जात्या परत्वं भविष्यति, न विषयव्याप्त्येत्यत आह–न चेति । केवलज्ञानविषयात् सर्वद्रव्यपर्यायराशेः, परम्, उत्कृष्टम्, अन्यत् किंचित् ज्ञेयमस्ति, यदप्रकाशितं भवेत्केवले-

सर्वद्रव्यपर्यायेषु केवलस्येति सूत्रे, द्रव्याणि च पर्यायाश्च द्रव्यपर्याया इतीतरेतरयोगलक्षणो द्वन्द्वो विधेयः, न तु द्रव्याणां पर्याया द्रव्यपर्याया इति तत्पुरुषः समासः, तथा सति द्रव्यपदमनर्थकं स्यात्, यतो नाद्रव्यस्य पर्यायास्सन्ति, किञ्च तत्पुरुषस्योत्तरपदार्थप्रधानत्वात्तत्रोत्तरपदार्थरूपपर्यायाणामेव ज्ञानं केवलिनस्स्यात्, न तु प्राधान्येन पूर्वपदार्थरूपद्रव्याणां ज्ञानं स्यात् । ननु द्वन्द्वसमासोऽपि तत्रैव भवति यत्र

नेति । एवं विषयमाख्याय केवलस्य पर्यायानाह केवलं मत्याद्यसहवृत्ति, परिपूर्णं स्वेतरज्ञानविषयताव्यापकविषयताकं, समग्रं पदार्थत्वव्यापकविषयताकम् ।

भेदः, तथा च प्लक्षन्यग्रोधवद् द्रव्यपर्यायाणामेकान्तभेदः प्राप्नोतीति चेत्, नैवम्, गोत्वं च गोपिण्डश्च गोत्वगोपिण्डावित्येवं द्वन्द्वस्य कथञ्चिदनन्यत्वेऽपि दर्शनात् प्रकृतेऽपि तथा मन्तव्यम् । अथ गोत्वगोपिण्डयोर्जातिव्यक्त्योरेकान्तभेदरूपत्वात्साध्यसममेतदिति, नैष दोषः, एकान्ताभिन्नत्वे सम्बन्धाऽयोगेन गवि गोत्वमिति प्रतीत्यऽभावप्रसङ्गादिति, अधिकमर्थान्तरत्वप्रसक्त्या नोच्यते । तस्मात्साधूक्तं द्वन्द्वोऽयमिति । ततस्सर्वपदेन सह कर्मधारयसमासः, सर्वे च ते द्रव्यपर्यायाश्च सर्वद्रव्यपर्यायाः, तेष्वित्यर्थः । सर्वद्रव्येषु सर्वपर्यायेष्विति भावः । "नट्ठंमि उ छाउमत्थिए नाणे केवलनाणं उववज्जइ" इति वचनमनुसृत्य केवलमित्यस्यार्थमाह— मत्याद्यसहवृत्तीति एककालावच्छिन्नमत्यादिज्ञानचतुष्टयासमानाधिकरणमित्यर्थः । केवलज्ञानाऽवृत्तिज्ञानत्वव्याप्यजातिविशेषावच्छिन्ने केवलज्ञानावरणस्य हेतुत्वेन केवलज्ञानोत्पत्तौ सत्यां तद्रूपकारणाभावान्न मतिज्ञानत्वश्रुतज्ञानत्वावधिज्ञानत्वमनःपर्यायज्ञानत्वलक्षणतादृशजातिविशेषावच्छिन्नोत्पत्तिः, कारणाभावात्कार्याभाव इति न्यायात्, एतेन यद् यज्ज्ञानं स्वस्वावारककर्मक्षयोपशमे सति भवति निश्शेषस्वस्वावारककर्मक्षये सति किमिति तत्तज्ज्ञानं न भवतीत्याशङ्काऽपि निरस्ता, केवलज्ञानावरणीयकर्मणोऽपि तद्धेतुत्वेन तदभावादेव न भवतीत्यूह्यम् तथा च केवलज्ञानोत्पत्तिसमयावच्छेदेन मत्यादिज्ञानचतुष्टयाऽभावान्न तत्समानाधिकरणं केवलज्ञानमिति भावः । यत्र स्वेतरज्ञानविषयता तत्र तत्र केवलज्ञानविषयत्वमिति व्याप्तेस्तद्घटितं परिपूर्णमित्यस्यार्थमाह स्वेतरज्ञानविषयताव्यापकविषयताकमिति । स्वं केवलज्ञानं तदितरज्ञानानि मत्यादीनि चत्वारि, तद्विषयतासमानाधिकरणात्यन्ताभावाऽप्रतियोगिनी विषयता यस्य तत्तथेत्यर्थः । मत्यादिज्ञानचतुष्टयविषयताधिकरणवृत्त्यन्ताभावो न केवलज्ञानीयविषयत्वाभावः, किन्त्वन्याभावः, तदप्रतियोगित्वस्य केवलज्ञानीयविषयतायां सत्त्वात्तादृशविषयतानिरूपकमिति भावः । इह जगति न कोऽपि सूक्ष्मबादरभेदभिन्नः पदार्थः केवलज्ञानविषयत्वानालिङ्गितः, तथा च यत्र यत्र पदार्थत्वं तत्र तत्र केवलज्ञानविषयत्वमिति व्याप्तिघटितं समग्रमित्यस्यार्थमाह पदार्थत्वव्यापकविषयताकमिति—पदार्थत्वसमानाधिकरणात्यन्ताभावाऽप्रतियोगिनी विषयता यस्य तत्तथेत्यर्थः । पदार्थत्वाधिकरणवृत्त्यन्ताभावो न केवलज्ञानीयविषयत्वाभावः, किन्त्वन्याभावः, तदप्रतियोगित्वं केवलज्ञाननिरूपितविषयत्वे वर्तत इति तादृशविषयतानिरूपकं केवलज्ञानम् । ननु केवलज्ञानविषयत्वघटोभयाभावमादाय केवलज्ञानविषयत्वमपि पदार्थत्वसमानाधिकरणाभावप्रतियोग्येवेति चेत्, नैवम्, तादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्त्यभाववद्विषयताकमिति विवक्षणे दोषाभावादिति, तथा च तादृशप्रतियोगितावच्छेदकतापर्याप्तिः केवलज्ञानविषयत्वत्वघटत्वोभयत्वेष्विति तदधिकरणधर्मः

र्याप्तिः केवलज्ञानविषयत्वघटोभयास्मिन् न तु केवलज्ञानवि

असाधारणं सजातीयद्वितीयरहितम् । निरपेक्षम्–आलोकेन्द्रियावग्रहप्रणिधानाद्यपेक्षारहितम् । विशुद्धं निःशेषावरणमलरहितम् , सर्वेषां भावानां ज्ञापकं प्ररूपकं, तादृशशब्दसमूहरूपप्रवचनमूलकारणमित्यर्थः । लोकालोकविषयं क्षेत्रत्वव्यापकविषयताकम् । अनन्तपर्यायं ज्ञेयानन्त्यात् ।

वद्विषयताकमेव केवलज्ञानम्, अर्थात् तादृशपर्याप्त्यनाधारविषयता केवलज्ञाने वर्त्तते इति नोक्तदोषः । असाधारणमित्यस्यार्थमाह–सजातीयद्वितीयरहितमिति साजात्यं चात्र ज्ञानत्वेन, तथा च ज्ञानत्वेन रूपेण केवलज्ञानसजातीयं मतिज्ञानादिकं तद्रहितमेककालावच्छिन्नतत्समानाधिकरणं नेत्यर्थः । केवलज्ञानमात्ममात्रसापेक्षत्वान्नास्मदादिप्रत्यक्षवद् बाह्यालोकेन्द्रियार्थसम्बन्धादिसामग्र्यपेक्षं, न वा युक्तयोगिज्ञानवत् प्रणिधानाद्यान्तरसामग्र्यपेक्षमित्यभिप्रायेण निरपेक्षमित्यस्यार्थमाह आलोकेन्द्रियावग्रहप्रणिधानाद्यपेक्षारहितमिति, यथा भास्करस्य जगत्प्रकाशस्वभावोऽतिसमुन्नतघनाघनघनपटलाडम्बरेणानभिव्यक्तो यः स प्रतिकूलवाय्वादिना सर्वथोक्ताडम्बरविगमे सति तेन सर्वकलांशैरभिव्यक्तस्वरूपतयोत्पद्यमानो नान्यसामग्रीमपेक्षते तथात्मनो जगत्प्रकाशिकेवलज्ञानस्वभावोऽतिनिविडितमज्ञानावरणकर्मावरणेनावृतश्शुक्लध्यानादिना निश्शेषोक्तावरणविध्वंसे सति सर्वथा विरावृतस्वरूपतयोत्पद्यमानो नान्यसामग्रीमपेक्षते किन्त्वात्ममात्रमेवेत्युक्तबाह्याभ्यन्तरसामग्र्यनपेक्षं केवलज्ञानमिति भावः । अत एवातिनिर्मलतरमित्याह विशुद्धमिति । तदर्थमाह निश्शेषावरणमलरहितमिति । सर्वेषां भावानां ज्ञापकं प्ररूपकमिति–यद्यपि मत्यवधिमनःपर्यायज्ञानानामिव केवलज्ञानस्यापि पराऽप्रत्यायकत्वलक्षणमूकत्वान्न तत्सर्वेषां भावानां ज्ञापकं प्ररूपकं तथाप्युत्पन्नकेवलज्ञानो भगवान् भाषापर्याप्त्याहितवाग्योगजन्यभाषया श्रोतॄणां भावश्रुतकारणतया द्रव्यश्रुतत्वमास्कन्दन्त्या भव्यजनविबोधनार्थं प्रज्ञापनीयान् भावान् ग्रहीतुर्ग्रहणयोग्यान् भाषते तत्केवलज्ञानं द्रव्यश्रुतद्वारा सर्वभावानां ज्ञापकं प्ररूपकमित्यर्थः । मुख्यवृत्त्या प्रभुभगवत्केवलज्ञानमेव गणधरभगवद्विरचितद्वादशाङ्गीरूपप्रवचनमूलकारणम् , केवलज्ञानिभगवत्प्रतिपादितत्रिपदीसमालम्बनेन श्रीगणधरभगवता द्वादशाङ्ग्यात्मकप्रवचनप्रणयनादित्याशयेनाह–तादृशशब्दसमूहरूपप्रवचनमूलकारणमित्यर्थः । लोकालोकविषयमिति–अस्यार्थमाह–क्षेत्रत्वव्यापकविषयताकमिति । अनन्तपर्यायमिति–अत्र हेतुमाह ज्ञेयानन्त्यादिति । यद्यपि केवलज्ञानं स्वरूपत एकमेव तथापि निखिलरूप्यरूपिविषयाऽनन्त्येन तदवगाहितयाऽनन्तपर्यायमित्यर्थः । अयम्भावः–यमेकं विषयं येन स्वभावेनावगाहते केवलज्ञानं न तेनैव स्वभावेन विषयान्तरं किन्तु भिन्नेनैवेति विषयाणामानन्त्येनाखिलतत्तद्विषयावगाहनस्वभावा अपि पर्याया अनन्ता एव तस्मिन्नित्येकस्मिन्समयेऽप्यनन्तपर्यायं, समयान्तरेऽपि निखिलपदार्थानामुत्पादादित्रयात्मकत्वान्यथानुपपत्त्या कथञ्चित्परावर्त्तनस्वभावानामत एव प्रतिसमयं भिन्नानां प्रत्येकं भिन्नभिन्नस्वभावतयावगाहित्वेनानन्तपर्यायं तदिति । नन्वतीतकाले निखिलपदार्था येन येन रूपेण परिणताः, वर्त्तमानकाले च सर्वे पदार्था येन येन रूपेण

परिणमन्ति, अनागतकाले च येन येनाकारेण परिणंस्यन्ति तान् सर्वान् भिन्नभिन्नस्वभावतया केवलज्ञानी भगवान् जानाति यथाऽऽद्यसमये तथा द्वितीयादिसमयेष्वपि तथैव जानाति किं वा प्रकारान्तरेणेति चेत्, प्रकारान्तरेणेति जानीहि, कथमिति चेत्, उच्यते, द्वितीयसमयोत्पत्स्यमानपदार्था तेन तेनाकारेण परिणंस्यन्तीत्येवमाद्यसमये भविष्यद्रूपेण ये ज्ञातास्तानेव भावान् द्वितीयसमये केवलज्ञानेन तथा तथाऽऽकारेण परिणमन्तीत्येवं वर्त्तमानरूपेण जानाति, ये चाद्यसमये तेन तेनाकारेण परिणमन्तीत्येवं वर्त्तमानरूपेण ज्ञातास्तान् तथाप्रकारेण परिणता इत्येवमतीतरूपेण द्वितीयसमये जानाति, ये च तत्पूर्वप्रथमद्वितीयाऽऽदिसमयवर्तिनोऽतीतभावाः, तत्पूर्वप्रथमद्वितीयादिसमयवर्त्तितया तथा तथाऽऽकारेण परिणततया च प्रथमसमये ज्ञातास्तानेव भावान् तत्पूर्वद्वितीयतृतीयादिसमयवर्त्तितया तत्पूर्वद्वितीयतृतीयादिसमयाद्यवच्छिन्नविभिन्नपरिणतिस्वभावतया च केवलज्ञाने द्वितीयसमयेऽवगच्छति इत्येवमग्रेऽपि ज्ञेयम्, अत एव स्वरूपतो ध्रुवमपि केवलज्ञानं तत्तद्रूपेण तत्तद्विषयाऽवग्राहित्वात्मकपूर्वस्वभावपरावर्त्तनकालावच्छिन्नतत्तद्रूपावच्छिन्नतत्तद्विषयावगाहित्वात्मकोत्तरस्वभावोत्पादनेनोत्पादव्ययशालितया त्रिलक्षणोपेतं सिद्ध्यतीति ॥ ३० ॥ त्रिंशत्तमसूत्रटीका समाप्ता ॥

(यशो० टीका) एवं मत्यादीनां विषये प्रकाशिते सहभावजिज्ञासुः पृच्छति–अत्राहेत्यादि । अत्रोच्यत इति प्रतिज्ञाबोधरसूत्रमाह

## सूत्रम्– एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ १ ॥ ३१ ॥

(भाष्यम्) एषां मत्यादीनां ज्ञानानामादित एकादीनि भाज्यानि युगपदेकस्मिञ्जीव आचतुर्भ्यः । कस्मिंश्चिज्जीवे मत्यादीनामेकं भवति । कस्मिंश्चिज्जीवे द्वे भवत । कस्मिंश्चित्त्रीणि भवन्ति । कस्मिंश्चिच्चत्वारि भवन्ति । श्रुतज्ञानस्य तु मतिज्ञानेन नियतः सहभाव, तत्पूर्वकत्वात् । यस्य श्रुतज्ञानं तस्य नियतं मतिज्ञानम् । यस्य तु मतिज्ञानं तस्य श्रुतज्ञानं स्याद्वा न वेति ॥ अत्राह । अथ केवलज्ञानस्य पूर्वैर्मतिज्ञानादिभिः किं सहभावो भवति, नेति । अत्रोच्यते, केचिदाचार्या व्याचक्षते, नाऽभावः, किं तु तदभिभूतत्वादकिञ्चित्कराणि भवन्तीन्द्रियवत् । यथा वा व्यभ्रे नभसि आदित्य उदिते भूरितेजस्त्वादादित्येनाभिभूतान्यन्यतेजांसि ज्वलनमणिचन्द्रनक्षत्रप्रभृतीनि प्रकाशनं प्रत्यकिंचित्कराणि भवन्ति तद्वदिति । केचिदप्याहुः । अपायसद्द्रव्यतया मतिज्ञानं तत्पूर्वकं श्रुतज्ञानम्, अवधिज्ञानमनःपर्यायज्ञाने च रूपिद्रव्यविषये, तस्मान्नैतानि केवलिनः सन्तीति ॥ किं चान्यत्-मतिज्ञानादिषु चतुर्षु पर्यायेणोपयोगो भवति न युगपत् । संभिन्नज्ञानदर्शनस्य तु भगवतः केवलिनो युगपत्सर्वभावग्राहके निरपेक्षे केवलज्ञाने केवलदर्शने चानुसमयमुपयोगो भवति ॥ किं चान्यत्-क्षयोपशमजानि चत्वारि ज्ञानानि पूर्वाणि, क्षयादेव केवलम् । तस्मान्न केवलिनः शेषाणि ज्ञानानि सन्तीति ॥

एकत्रिंशत्तमसूत्रमवतारयन्नाह एवं मत्यादीनां विषये प्रकाशिते इत्यादि । एकशब्दः क्वचित्संख्यायां वर्तते, यथैको द्वौ बहव इति, क्वचिदन्यत्वे, यथैके आचार्याः पुनरेवमाहुः, तत्रैके अन्ये इत्यर्थः, क्वचिदसहाये, यथैक एव वीरप्रभुर्विहरति, तत्रैक एव असहाय एवेत्यर्थः । क्वचित्प्राथम्ये यथैकमागमनम्, प्रथममागमनमित्यर्थः,

( यशो० टीका ) एकशब्दः प्राथम्ये । तत एकादीनि प्रथमादीनि, भाज्यानि विकल्पनीयानि, क्वचित्प्रथमम्, क्वचित् द्वे इत्यादिप्रकारेण, युगपदेककाले, एकस्मिन् प्राणिनि, आचतुर्भ्य इत्याद्यनेकार्थे एकशब्दः प्रवर्त्तते, तत्रेहैकशब्दो विवक्षातः प्राथम्यवाचक इत्याह–एकशब्दः प्राथम्ये इति, तथा चैकादीनीत्यस्यार्थमाह–प्रथमादीनीति ज्ञानप्रस्तावाद् पञ्चज्ञानमध्ये पूर्वानुपूर्व्या प्रथमं मतिज्ञानमादि येषु तानि तथेत्यर्थः । लम्बकर्णमानयेत्यादाविवात्रापि बहुव्रीहिस्तद्गुणसंविज्ञान एव "तस्यान्यपदार्थस्य गुणा विशेषणानि समस्यमानपदानामर्था अन्यपदार्थे विशेषणतया विज्ञायन्ते यत्र" इत्येवं लक्षणो ग्राह्यः, न तु दृष्टसागरमानयेत्यादाविवातद्गुणसंविज्ञानस्सः, तथा सति समासावयवदृष्टसागरपदार्थस्येव समासावयवैकपदवाच्यमतिज्ञानस्याप्युपलक्षणविधयैव भानापत्तेस्तद्वत्तद्ग्रहणं न स्यात्, तद्गुणसंविज्ञानबहुव्रीह्याश्रयणे तु लम्बकर्णमानयेत्यादौ समासावयवलम्बकर्णपदार्थस्यापि विशेषणतया भानमिव एकादीनीत्यत्रापि समासावयवैकपदार्थस्य मतिज्ञानस्यान्यपदार्थे विशेषणतया भानमुपपद्यत एवेति मतिज्ञानग्रहणमपि स्यादेवेति । एतेन प्राथम्यवचन एकशब्दः, आदिशब्दश्चावयववचनः, तेनैतदुक्तं भवति एकस्यादिरेकादिः, प्रथमस्यावयवः, प्रथमश्चात्र परोक्षज्ञानं, तस्यावयवो मतिज्ञानम्, ततोऽन्यपदार्थे वृत्तावेकस्यादिशब्दस्य लोपः, उष्ट्रमुखवत्, यथोष्ट्रस्य मुखमुष्ट्रमुखम्, उष्ट्रमुखवत्मुखमस्येति वृत्तावेकस्य लोपः, एवमिहापि एकादिरादिर्येषां तानीमान्येकादीनीत्येकस्यादिशब्दस्य लोप इति तत्त्वार्थराजवार्त्तिकोक्तमपि निरस्तम्, यत उक्ताक्लिष्टकल्पनाऽपेक्षया लाघवादेकादीनीत्यत्र तद्गुणसंविज्ञानबहुव्रीहिसमासाभ्युपगम एव श्रेयानिति । युगपदित्यस्यार्थमाह – एककाले इति तथा च एककालावच्छिन्नस्वाभिन्नज्ञानसमानाधिकरणानि मतिश्रुतावधिमनःपर्यायज्ञानानि भाज्यानीति समुदितार्थः । ननु मतिश्रुतावधिमनःपर्यायज्ञानानि न युगपद्भवन्ति भिन्नकालावच्छिन्नभिन्नसामग्र्युत्पद्यमानत्वात्, चाक्षुषरासनादिज्ञानवत्, प्रत्यक्षानुमानादिवद्वेत्यनुमानेन यौगपद्यनिषेधेनार्थतः क्रमभावित्वसिद्धेर्नोक्तं युक्तम् । अथ शष्कुलिभक्षणे पञ्चेन्द्रियजन्यपञ्चज्ञानानि युगपत्सन्निहितरूपादिपञ्चविषयाणि भवन्तीति तद्दृष्टान्तेन मत्यादिज्ञानान्यपि युगपद्भविष्यन्तीति चेत्, न, शष्कुलीभक्षणस्थलेऽपि क्रमभाविपञ्चज्ञानेष्वेव लघुवृत्तेर्यौगपद्यभ्रान्तिभावात्, अत एव नैयायिकादयोऽप्येकदैकमेव ज्ञानमभ्युपगच्छन्ति, यस्य ज्ञानस्य प्रबलतरसामग्री तदन्यज्ञानं प्रतिबध्य तस्यैव ज्ञानस्योत्पादात्, अत एव "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" १–१–४ इति गौतमीयसूत्रमपि सङ्गच्छते इति चेत्, उच्यते, उक्तानुमानादुपयोगात्मकानामेव ज्ञानानां यौगपद्यनिषेधः सिद्ध्यति, स त्विष्ट एवास्माकमपि, "जुगवं दो नत्थि उवओगा" इति विशेषावश्यकभाष्यवचनात् । अनेन भाष्यवचनेन युगपदुपयोगद्वयं निषिध्यते, जघन्यतो यस्य ज्ञानस्यैकं समयमुत्कृष्टतोऽन्तर्मुहूर्त्तं वा स्थितिः तज्ज्ञानकालावच्छेदेनोपयोगात्मकज्ञानान्तरानुत्पादात्, न त्वनुपयोगात्मकानां मत्यादिज्ञानानां शक्तितया यौगपद्यं निराक्रियते, तेषां सिद्धान्ते षट्षष्टिसागरोपमस्थित्यादिकालमानस्य प्रतिपादनात्, उक्तञ्च–जैनस्यापि हि

इत्याङभिविधौ, न मर्यादायां, तद्विवक्षायां सूरेः प्राग्ग्रहणप्रौव्यात् । यथा "विग्रहवती च संसारिणः प्राक् चतुर्भ्यः" "प्रदेशतोऽसंख्येयगुणं प्राक् तैजसात्" इत्यादौ । एकस्मिन् जीवे संभवन्ती भजना नैकान्तेन शष्कुलीभक्षणादौ रूपादिज्ञानपञ्चकस्य सकृद्रूपादिपञ्चकपरिच्छेदकत्वं सिद्धम्, उपयुक्तस्य प्रमातुरनेकज्ञानस्यैकत्रात्मनि क्रमभावित्वेनोपगमात्, अनुपयुक्तस्य शक्तितो यौगपद्यप्रसिद्धेरिति स्याद्वादरत्नाकरद्वितीयपरिच्छेदीयत्रयोविंशतितमसूत्रव्याख्यायामिति । नन्वनुपयोगात्मकतया युगपदवस्थितसत्ताकानां मत्यादिचतुर्ज्ञानानां बोधस्वभावता चेत्तदा स्वस्वयोग्यार्थविषयकज्ञानोपयोगेनापि सदा नियमेन भवितव्यमेव, अन्यथा जडत्वापत्त्या बोधस्वभावत्वानुपपत्तिस्स्यादिति चेत्, मैवम्, उक्तनियमाभावात्, कथमन्यथा "उक्कोसेणं छावट्ठिं सागरोवमाइं साइरेगाइं" इति वचनान्मत्यादिज्ञानत्रयस्योत्कर्षतः षट्षष्टिसागरोपमास्थितिकत्वम्, "उक्कोसेणं देसूणा पुव्वकोडी" इति वचनान्मनःपर्यवज्ञानस्य च देशोनपूर्वकोटिस्थितिकत्वं सङ्घटते, उत्कृष्टतोऽपि छाद्मस्थिकज्ञानोपयोगस्यान्तर्मुहूर्त्तिकत्वादेतावन्तं कालमेकोपयोगस्वरूपतयाऽवस्थित्यभावात्, तथा चोक्तनियमोऽनैकान्तिक एव, तस्मादत्र स्वस्वयोग्यार्थविषयकज्ञानानुकूलशक्त्यपरनामलब्ध्यपेक्षयोक्तज्ञानानां यौगपद्यमवसेयम्, न चात्रापसिद्धान्तत्वप्रसङ्गः, "नाणलद्धीणं भंते ! कइविहा पन्नत्ता ? गोयमा ! पंचविहा पन्नत्ता, तं जहा- आभिणिबोहियनाणलद्धी जाव केवलनाणलद्धी" इति भगवत्यष्टमशतकद्वितीयोद्देशकसूत्रेण पञ्चज्ञानानां लब्धिरूपत्वस्य "आभिणिबोहियनाणलद्धियाणं भंते ! जीवा किं नाणी अन्नाणी ? गोयमा ! नाणी नो अन्नाणी ? अत्थेगतिया दुन्नाणी चत्तारि नाणाइं भयणाए" इत्यादिसूत्रेणाभिनिबोधिकज्ञानलब्धिकानां केषाञ्चिज्जीवानां मतिश्रुतज्ञानयोः केषाञ्चिच्च मतिश्रुतावधिज्ञानानां मतिश्रुतमनःपर्यायज्ञानानां वा केषांचिच्च मतिश्रुतावधिमनःपर्यायज्ञानानां लब्ध्यपेक्षया यौगपद्यस्य च प्रतिपादनादिति । भगवतीप्रथमशतकप्रथमोद्देशके-"इहभविए भंते ! नाणे परभविए नाणे तदुभयभविए नाणे ? गोयमा ! इहभविए वि नाणे परभविए वि नाणे तदुभयभविए वि नाणे" इत्यभिहितत्वादेतद्भवोत्पन्नस्य मतिश्रुतज्ञानद्वयस्य मतिश्रुतावधिज्ञानत्रयस्य वा लब्ध्यपेक्षयैवेहभवे परभवे तदुभयभवे चानुगमनं सङ्गच्छते, नन्वेकादीनि भाज्यानीत्यादेरस्य सूत्रस्य "जीवाणं भंते ! किं नाणी अन्नाणी ? गोयमा ! जीवा नाणी वि अन्नाणी वि, जे नाणी ते अत्थेगइआ दुन्नाणी अत्थेगतिया तिन्नाणी अत्थेगतिया चउनाणी अत्थेगतिया एगनाणी, जे दुन्नाणी ते आभिणिबोहिनाणी य सुयनाणी य, जे तिन्नाणी ते आभिणिबोहियनाणी सुयनाणी ओहिनाणी, अथवा आभिणिबोहियनाणी सुयनाणी मणपज्जवनाणी, जे चउनाणी ते आभिणिबोहियनाणी सुयनाणी ओहीनाणी मणपज्जवनाणी, जे एगनाणी ते नियमा केवलनाणी" इति भगवत्यष्टमशतकद्वितीयोद्देशकसूत्रेण सह विरोधस्स्यात्, यतस्तत्र मतिश्रुतज्ञानद्वयस्य नियतसहभावत्वेनोक्तत्वात् केवलज्ञानमेवैकमुक्तं, न तु मति-

दर्शयति कस्मिंश्चिदित्यादिना, कस्मिंश्चिन्मनुष्यादावेकजीवे, मत्यादीनां पञ्चानां ज्ञानानामेकं मतिज्ञानं सम्भवति, येन निसर्गसम्यग्दर्शनं प्राप्तमद्यापि सामायिकश्रुतं नाधीतं तस्य ग्रन्थानुसारि विज्ञानं श्रुताख्यं न भवतीति । कस्मिंश्चिद् द्वे भवतो, येनाधिगमसम्यग्दर्शनं प्राप्तं तस्य श्रोत्रेन्द्रियोपलब्धिः श्रुतं द्वादशाङ्गम्, शेषेन्द्रियोपलब्धिर्मतिज्ञानमिति । कस्मिंश्चित् त्रीणि–द्वे मतिश्रुते, तृतीयं चावधिज्ञानम् ।

ज्ञानमिति । अत्र तु **मत्यादीनां पञ्चानां ज्ञानानामेकं मतिज्ञानं सम्भवतीत्युक्तमिति** चेत्, मैवम्, आचार्यकृतविवक्षाभेदमात्रस्यैवात्र प्रयोजकत्वात्, अत एव तत्त्वार्थश्लोकवार्त्तिके त्रिंशत्तमसूत्रटीकायां–" प्राच्यमेकं मतिज्ञानं, श्रुतभेदानपेक्षया । प्रधानं केवलं वा स्या-देकत्र युगपन्नरि ॥ २ ॥" इत्युक्तमपि सङ्गच्छते । ननु जीवो मिथ्यात्वं परित्यजन् यदैव सम्यग्दर्शनमुत्पादयति तदैव तन्माहात्म्यात् सम्यग्ज्ञानरूपे मतिश्रुते युगपत्समुत्पद्येते, यदि च मतिज्ञानभावेऽपि श्रुतज्ञानं नाभ्युपगम्येत तदा–"जत्थ आभिणिबोहियनाणं तत्थ सुअनाणं, जत्थ सुअनाणं तत्थ आभिणिबोहियनाणं, दोवि एयाइं अण्णमण्णमणुगयाइं" इति नन्दीसूत्रोक्तविरोधस्स्यात्, तत्र तयोर्नियतसाहचर्यभावस्यैव प्रतिपादनादिति चेत्, नैष दोषः, यतः सम्यक्त्वोत्पत्तिकाले समकालं मतिश्रुते लब्धिमात्रमेवाङ्गीकृत्य प्रोच्येते, न तूपयोगम्, उपयोगस्य तथा जीवस्वाभाव्यतः क्रमेणैव सम्भवात् । उक्तञ्च " इह लद्धिमइसुयाइं समकालाइं न तूवओगो सिं " इति । अत्र तु तातपादश्रीगुरुभगवच्चरणकमलनिरन्तरोपासनैकतत्परस्य निरसीमानुपकृतकृपाभरव्याप्तान्तःकरणश्रीगुरुमुखाच्छास्त्रमधीत्य शाब्दप्रमाविशेषरूपं यदागमातिगहनार्थज्ञानं जायते तस्यैव लब्धिकार्यरूपस्य विवक्षणात्, तस्य च विशिष्टश्रुतज्ञानस्य निसर्गसम्यग्दर्शनकालेऽभावान्नोक्तदोषः, एतच्च प्रागेव भावितम् । एतदभिप्रायेण द्रव्यलोकप्रकाशेऽपि

" प्राप्तं निसर्गसम्यक्त्वं येन स्यात्तस्य केवलम् ।
मतिज्ञानमनवाप्त,–श्रुतस्यापि शरीरिणः ॥ ६१ ॥
अत एव मतिर्यत्र, श्रुतं तत्र न निश्चितम् ।
श्रुतं यत्र मतिज्ञानं, तत्र निश्चितमेव हि ॥ ६२ ॥ "

इत्युक्तं सङ्गच्छते इत्याशयेनाह–**येन निसर्गसम्यग्दर्शनं प्राप्तमद्यापि सामायिकश्रुतं नाधीतमित्यादि** । "सेसयं तु मइनाणं" इत्युक्तिमनुसृत्याह **शेषेन्द्रियोपलब्धिर्मतिज्ञानमिति**–श्रोत्रेन्द्रियव्यतिरिक्तचक्षुरादीन्द्रियचतुष्टयजन्यं ज्ञानं मतिज्ञानमित्यर्थः । नन्वेवं तर्हि किं श्रोत्रेन्द्रियजन्यमवग्रहेहादिरूपं ज्ञानं तन्मतिज्ञानरूपं नैव, ओमिति चेत्तर्हि मतेरष्टाविंशतिभेदभङ्गापत्तिरिति चेत्, उच्यते, "सोइंदियोवलद्धी होइ सुअं सेसयं तु मइनाणं" इत्यादिगाथोक्ततुशब्दोऽनुक्तसमुच्चयार्थक इति तेन तदप्यवग्रहेहादिरूपं श्रोत्रेन्द्रियोपलब्ध्यात्मकमत्र मतिज्ञानं ग्राह्यमिति नोक्तदोषः । यदाह भाष्यकारः " तुसमुच्चयवयणाओ व काइं सोइंदिओवलद्धी वि । मइरेवं सइ सो उग्गहादओ हुंति मइभेदा" । १२३ । इति । अधिकं विशेषावश्यकभाष्यटीकातोऽवसेयम् । **तृतीयं चावधिज्ञानमिति**–सिद्धान्ते च द्वे मतिश्रुते तृतीयं मनःपर्यायज्ञानमित्यप्यु-

कस्मिंश्चिच्चत्वारि त्रीण्युक्तानि चतुर्थं च मनःपर्यायज्ञानमिति । श्रुतमेकं क्वचित् किं न प्रदर्श्यते ? । उच्यते तस्य मतिज्ञानाव्यभिचारित्वान्मतेस्तु श्रुतसहचारित्वेऽपि तद्व्याप्त्यभावात्, तदाह–श्रुतज्ञानस्येत्यादि । तुरेवकारार्थः । श्रुतज्ञानस्यैव **मतिज्ञानेन** सह **नियतोऽव्यभिचरितः, सहभावः** सामानाधिकरण्यं, व्याप्तिरिति यावत्, कुतः ?, तत्पूर्वकत्वान्मतिपूर्वकत्वान्मतिकारणकत्वादिति यावत् । उक्तम्, तथाहि–भगवत्यष्टमशतकद्वितीयोद्देशके "जीवाणं भंते ! किं नाणी अन्नाणी" इति प्रश्नोत्तरघटकतया यदवाचि प्रागेव–"जे तिन्नाणी ते आभिणिबोहियनाणी सुयनाणी ओहीनाणी अहवा आभिणिबोहियनाणी सुयनाणी मणपज्जवनाणी" इति, तथा "तस्स अलद्धीया णं भंते ! जीवा किं नाणी अन्नाणी ? गोयमा ! नाणी वि अन्नाणी वि, एवं ओहिनाणवज्जाइं चत्तारि नाणाइं" इत्यादिसूत्रे टीकायां अवधिज्ञानस्याऽलब्धिकास्तु ये ज्ञानिनस्ते द्विज्ञानाः, मतिश्रुतभावात्, त्रिज्ञाना वा मतिश्रुतमनःपर्यायभावादिति चाभिहितम् "मणपज्जवनाणलद्धीया णं भंते ! जीवा किं नाणी अन्नाणी ? गोयमा ! नाणी, नो अन्नाणी । अत्थेगइया तिन्नाणी, अत्थेगइआ चउनाणी, जे तिन्नाणी ते आभिणिबोहियनाणी सुयनाणी मणपज्जवनाणी, जे चउनाणी ते आभिणिबोहियनाणी सुयनाणी ओहिनाणी मणपज्जवनाणी" इत्यपि "मणपज्जवसागारोवउत्ता जहा मणपज्जवनाणलद्धिया" इति च तत्रोक्तम् । तत्त्वार्थश्लोकवार्त्तिकेऽप्येवमुक्तम् "द्वेधा मतिश्रुते स्यातां, ते चावधियुते क्वचित् । मनःपर्यायज्ञाने वा, त्रीणि येन युते तथा ॥१॥" तट्टीका चैवम् क्वचित्पुनर्द्वे मतिश्रुते, क्वचित्ते वाऽवधियुते मनःपर्याययुते चेति त्रीणि ज्ञानानि सम्भवन्ति, क्वचित्ते एवावधिमनःपर्यायद्वयेन युते चत्वारि ज्ञानानि भवन्तीति । अत एव द्रव्यलोकप्रकाशेऽपि–"मतिज्ञानश्रुतज्ञान–रूपे द्वे भवतः सह । त्रीणि ते सावधिज्ञाने, समनःपर्यवे तु वा ॥६३॥" इत्युक्तमिति । ननु यथा मतिज्ञानमेकमेकस्मिन्नात्मनि प्रदर्शितं तथा श्रुतज्ञानमेकं कस्मिंश्चिदात्मनि किं न प्रदर्श्यत इत्याशङ्कते–**श्रुतमेकं क्वचित् किं न प्रदर्श्यत ? इति** । श्रुतज्ञानं मतिज्ञानाऽव्यभिचारि, मतिज्ञानस्य कारणस्य पूर्वं नियमेन सत्त्व एव श्रुतज्ञानस्योत्पादात्, तदभावे च तदभावादित्यन्वयव्यतिरेकभावात् यस्य श्रुतग्रन्थानुसारि श्रुतज्ञानं तस्य नियमेन मतिज्ञानमित्येकस्मिन् प्राणिनि मतिश्रुतज्ञाने द्वे स्तः, मतिज्ञानं तु न श्रुतज्ञानाऽव्यभिचारि, निसर्गसम्यग्दर्शनिनोऽनवाप्तश्रुताक्षरस्य श्रुताऽनुसारिश्रुतज्ञानमन्तरेणाऽपीन्द्रियानिन्द्रियजमतिज्ञानोत्पादादिति तद्वतश्श्रुतज्ञानाभावान्मतिज्ञानमेकमेवैकस्मिन्नात्मन्यप्रतीत्याशयेन समाधत्त उच्यते–**तस्य मतिज्ञानाऽव्यभिचारित्वादिति** । तस्य–श्रुतज्ञानस्य । **मतेस्तु श्रुतसहचारित्वेऽपि तद्व्याप्त्यभावादिति**–श्रुतं गुरुसन्निधौ पठित्वा यस्य यच्छ्रुतज्ञानं सम्पद्यते तस्मिन्पुरुषे मतिज्ञानस्य तच्छ्रुतज्ञानसामानाधिकरण्येऽपि निसर्गसम्यग्दर्शनकाले श्रुतग्रन्थानुसारिश्रुतज्ञानाभावेन तद्वति, एवं यश्च पश्चादपि श्रुतं नाधीते तस्मिन्नपि पुरुषे श्रुतज्ञानाभाववति वृत्तित्वेन श्रुतज्ञानाव्यभिचारित्वात्तस्य तद्व्याप्त्यभावादित्यर्थः **मतिपूर्वकत्वादिति**–उक्तञ्च चूर्णावपि–"तेसुऽवि य मइपुव्वयं सुयंति किच्चा पुव्वं मइनाणं कयं, तस्स पिट्ठओ सुयं" इति ।

कार्यं च कारणव्याप्यं भवति, धूम इव वह्नेः, तदाह यस्य श्रुतेति । कारणं तु कार्यस्य न व्याप्यं, वह्निरिव धूमस्य । तदाह यस्य त्विति । एवं भजनायां दर्शितायां कश्चिदाह—अथ केवलज्ञानस्य पूर्वैः पूर्वकालप्राप्तैः, मतिज्ञानादिभिः सहभावः सहावस्थानम्, भवति न वेति । अत्रोच्यते मतभेदेन । तत्र केचिदाचार्या व्याचक्षते—'नाभाव एवास्ति पूर्वप्राप्ताना मतिज्ञानादीनां, नाशकाभावात्, ऐकाधिकरण्यावच्छिन्नस्वपूर्ववर्तितासम्बन्धेन केवलस्यैव स्वसमानाधिकरणगुणनाशकत्वे ज्ञानचतुष्टयवत् शमवीर्यदर्शनसुखितत्वादीनामपि नाशप्रसङ्गात्, न च तन्नाशः, परस्यापि सम्भवात्, तस्मात्सहावस्थानमस्त्येव मत्यादीनां केवलेन, ततः किमिति तानि स्वमर्थं न प्रकाशयन्ति, उच्यते, अभिभवात्, तदाह—किं त्वभिभूतत्वाद्धतप्रभावत्वात्, अकिंचित्कराणि स्वकार्याकारीणि, भवःीन्द्रियवच्चक्षुरादिवत्, धूम इव वह्नेरिति, कारणस्य वह्नेर्भावे कार्यस्य धूमस्य भावः, अभावे चाऽभाव इत्यन्वयव्यतिरेकप्रत्यक्षप्रमाणबलाद् धूमस्य वह्न्यव्यभिचारितया सिद्धेस्तद्व्याप्यत्वस्य तद्वदित्यर्थः । कारणस्य कार्याऽव्याप्यत्वे दृष्टान्तमाह वह्निरिव धूमस्येति—अयोगोलके धूमाभाववति वह्नेरसत्त्वेन धूमव्यभिचारित्वाद् वह्निर्न धूमस्य व्याप्यः, तद्वदित्यर्थः । यदि मत्यादीनि ज्ञानानि स्वस्वावरणक्षयोपशमभावेऽपि प्रादुर्ष्यन्ति तदा निश्शेषतः स्वस्वावरणक्षये सुतरां भवेयुः, चारित्रपरिणामवत्, तत्कथं केवलज्ञानकाले तानि न स्युः ? आह च—" आवरणदेसविगमे जाइं विज्जंति मइसुयाईणि । आवरणसव्वविगमे, कह ताइं न हुंति जीवस्स " ॥१॥ इति । तथा च तदानीं निश्शेषस्वस्वावरणविगमप्रभवाणां मत्यादीनां भाव एव, नाभाव इत्येककालावच्छेदेन केवलज्ञानसमानाधिकरणान्येव मत्यादिचतुर्ज्ञानानीत्याशयं मनसि बिभ्रतां केषाञ्चिदाचार्याणां मतमाह—तत्र केचिदाचार्या व्याचक्षते इत्यादि—ननु क्षायोपशमिकभावरूपाणां चरमत्वविशिष्टमत्यादिज्ञानानां स्वस्वकालावधिकत्वेन स्वस्वकालपूर्तौ तेषां स्वोत्तरवर्त्तिकेवलज्ञानरूपेण क्षायिकभावेन परिणामात्तेन तेषां विनाशः, यद्यद्रूपेण परिणमते तत्तेन विनाश्यते यथा मृत्पिण्डो घटेनेति सामान्यव्याप्तेः, तथा चैकाधिकरण्यावच्छिन्नस्वपूर्ववृत्तित्वसम्बन्धेन केवलज्ञानस्यैव प्रतियोगितासम्बन्धेन स्वसमानाधिकरणगुणनाशम्प्रति हेतुत्वमित्यभ्युपगमे दोषमाह ज्ञानचतुष्टयवत् शमवीर्यदर्शनसुखितत्वादीनामपि नाशप्रसङ्गादिति । " न च तन्नाशः परस्यापि सम्भवात् " इति स्थाने " न च तन्नाशः परस्यापि सम्मतः " इति पाठो युक्तः, शमवीर्यादिनाशप्रसञ्जनमिष्टापत्त्या परिहर्तुं तदा शक्येत यदि केवलज्ञानकाले शमवीर्यादिनाशः परसम्मतः स्यान्न चैवमित्यर्थः ॥ उपसंहरति—तस्मादित्यादि । तत इत्यादिनाऽऽशङ्क्य समाधत्ते—उच्यत इत्यादिना । यथा प्रबलतरतेजस्विना सूर्येणाल्पतेजांसि वह्निमणिशशिनक्षत्रादीनि तिरोहितानि सन्त्यपि दिनकरोदये स्वकार्याकारित्वात्तदानीं सन्तीति न विवक्ष्यन्ते तथा मतिज्ञानादीन्यपि सयोगिकेवल्यादौ स्वकार्ये न व्याप्रियन्त इत्यफलत्वादेव सन्त्यपि तदानीं न विवक्ष्यन्ते । यदाह "अन्ने आभिणिबोहिनाणाईणि वि जिणस्स विज्जन्ति । अफलाणि य सुरुदये जहेव नक्ख-

यथाहि–केवलिनः सदपि चक्षुरादीन्द्रियं विषयग्रहणं प्रति न व्याप्रियते, केवलप्रकाशेन चरितार्थत्वात्, एवं मत्यादिचतुष्टयमपीतिभावः । अत्र दृष्टान्तेऽपि सन्देहादसंदिग्धं दृष्टान्तमाह **यथा वा व्यभ्र** इत्यादि । यथा वा व्यभ्रेऽभ्ररहिते, **नभस्याकाशे, आदित्ये** सूर्ये, **उदिते भूरितेजस्त्वात्** प्रबलकिरणत्वात्, **आदित्येनाभिभूतानि** तिरोहितसामर्थ्यानि, ज्वलनोऽग्निः, मणिः सूर्यकान्तादिः, चन्द्रः शशी, नक्षत्रमश्विन्यादि, एतानि प्रभृतिर्येषां तानि तेजांसि, **प्रकाशनं** कुड्याद्यवभासनं **प्रत्यकिंचित्कराणि** भवन्ति तथा केवलेन भूरितरप्रकाशेनाभिभूतानि मत्यादीन्यपीति । एतच्च मतमयुक्तम् । पूर्वं सतो मत्याद्युपयोगस्य कालत एव विरतेः, तत्क्षयोपशमनाशकतायाश्च 'पणगं खलु पडिवाए' इत्यादिना केवलज्ञानेऽपि शास्त्रसिद्धत्वात्, क्षयोपशमाभावेन क्षायोपशमिकाना मत्यादीना केवलिन्यभावात् ।

त्तमाईणि ॥ १ ॥" इत्याशयकं दृष्टान्तान्तरमाह–**यथा वा व्यभ्र इत्यादीति** । पूर्वोक्तमतं निरस्यति–**एतच्च मतमयुक्तमिति** । अयुक्तत्वे हेतुमाह–**पूर्वं सतो मत्याद्युपयोगस्य कालत एव विरतेरिति** । **"पणगं खलु पडिवाए"** इत्यादिनेति । अत्र " पणगं खलु पडिवाए, तत्थेगो देवभावमासज्ज । मणुए रोगप्पमाया, केवल–मिच्छत्तगमणे वा " ॥१३७॥ इतीयं गाथा बृहत्कल्पभाष्योक्ताऽवसेया । तस्यात्रायमर्थः कृतः–' प्रतिपाते ' प्रतिपातविषयं खलु पञ्चकम्, श्रुतज्ञानस्य पञ्चभिः स्थानैः प्रतिपात इत्यर्थः । तत्रैकः प्रतिपातो देवभावमासाद्य वेदितव्यः । द्वितीयो मनुष्ये रोगात् । तृतीयो मनुष्यभवे एव प्रमादात् । चतुर्थः केवलभावे । पञ्चमो मिथ्यात्वगमने ॥ तत्र प्रथमं प्रतिपातं देवभावमासाद्य भावयति–"चउदसपुव्वी मणुओ, देवत्ते तं न समरइ सव्वं । देसम्मि होइ भयणा, सट्ठाणभवे वि भयणा उ ॥" ॥ १३८ ॥ चतुर्दशपूर्वी मनुजो देवत्वे प्राप्ते सति ' तत् ' श्रुतं सर्वं न स्मरति, विषयप्रमादतस्तथाविधोपयोगाऽभावात् । देशे भवति ' भजना ' विकल्पना, सा त्वेवम् कश्चिद्देशं स्मरति, कश्चिद्देशस्यापि देशम्, कश्चित्पुनरेकादशस्वप्यङ्गेषु सर्वं स्मरति, कश्चित्तेषामपि देशमिति । तदेवं भावितो देवभवमासाद्य प्रथमः प्रतिपातः । सम्प्रति शेषान् भावयति–" सट्ठाणभवे वि भयणा उ " स्वस्थानं मनुष्यत्वं तस्मिन्नपि भवे रोगादिभिः भजना विकल्पना । तथाहि रोगे समुत्पन्ने तथाविधपीडावशतः स्मृतेरुपहननान्न स्मरति, प्रमादतो वा गुणनाऽभावतोऽपगच्छति श्रुतमधीतम्, केवलज्ञानभावे वा श्रुतज्ञानस्य क्षयः, " नट्ठम्मि उ छाउमत्थिए नाणे " (आव० नि० गाथा ५३९) इति वचनात्, मिथ्यादर्शनगमने वा सर्वश्रुताभावः, अज्ञानीभवनादिति । १३८ । श्रुतज्ञानक्षयश्च श्रुतज्ञानावरणकर्मक्षयोपशमरूपस्य श्रुतज्ञानकारणस्य सद्भावे न सम्भवति किन्तु तन्नाशे सत्येव, तन्नाशजनकता च पञ्चस्थानान्तर्गतकेवलज्ञानेऽप्यनेन सिद्धा " नट्ठम्मि उ छाउमत्थिए नाणे " इति वचनात्, तद्वन्मत्यादिज्ञानावरणकर्मक्षयोपशमनाशजनकता च भावनीयेत्याशयेनाह **केवलज्ञानेऽपि शास्त्रसिद्धत्वादिति** । **क्षयोपशमाभावेन क्षायोपशमिकानां मत्यादीनां के[illegible]वादिति**–"खओवसमिआ आभिणिबोहियणाणलद्धी जाव खओवसिआ

शमादयोऽपि क्षायोपशमिकाः केवलिनि नाभ्युपगम्यन्त एव, क्षपकश्रेणिसङ्गतद्वितीयापूर्वकरणभाविधर्मसंन्यासकाल एव तन्नाशात् । किन्तु क्षायिका विलक्षणा इति मत्याद्यभावे शमाद्यभावोऽपि स्यादित्यदृष्टपरमार्थानामुपालम्भः । इदं तु स्यात् मत्यादयः क्षायोपशमिकाः केवलिनि मा भूवन्, क्षायिकास्तु केवलज्ञानसमकक्षा भवन्तु केवलज्ञानावरणक्षये मतिज्ञानावरणादीनामपि क्षयस्य ध्रुवत्वात्, अयं तु दोषः सूर्याभिभूतान्यतेजोदृष्टान्तेन दुष्परिहरः, क्षायिकत्वेनोभयोरुद्भवानुद्भवतौल्यात् ।

द्वारसूत्रोक्त्या क्षयोपशमभावमापन्नानां मत्यादिचतुर्ज्ञानानां—" अरहा जिणे केवली खीणआभिणिबोहियणाणावरणे खीणसुअणाणावरणे खीणओहिणाणावरणे खीणमणपज्जवणाणावरणे खीणकेवलणाणावरणे " इत्यनुयोगद्वारोक्त्या क्षीणज्ञानावरणपञ्चके केवलिनि मत्यादिज्ञानावरणीयकर्मणामेवाभावेन केषां क्षयोपशमः स्यादिति तदभावेनाऽभावादित्यर्थः । शमवीर्यसुखित्वादीनामपि नाशप्रसङ्गादिति यदनिष्टापादनं प्राक्कृतं तदपीष्टापत्त्या परिहरति—शमादयोऽपि क्षायोपशमिकाः केवलिनि नाभ्युपगम्यन्त एवेति । तत्र हेतुमाह—क्षपकश्रेणिसंगतेत्यादि । तन्नाशादिति क्षायोपशमिकशमादिनाशादित्यर्थः । उक्तञ्च ज्ञानबिन्दौ—अत एव द्वितीयापूर्वकरणे तात्त्विकधर्मसंन्यासलाभे क्षायोपशमिकाः शमादिधर्मा अपि अपगच्छन्तीति तत्र तत्र हरिभद्राचार्यैर्निरूपितमिति " । अत्र तत्र तत्रेति योगदृष्टिसमुच्चयादाविल्यर्थः । तथा च तत्पाठः—द्वितीयापूर्वकरणे प्रथमस्तात्त्विको भवेदिति, तट्टीका प्रथमः धर्मसंन्याससंज्ञितः सामर्थ्ययोगः तात्त्विकः पारमार्थिको भवेत् क्षपकश्रेणियोगिनः, क्षायोपशमिकक्षान्त्यादिधर्मनिवृत्तेरिति । मतिज्ञानाद्यावरणपञ्चकक्षये एकमेव केवलज्ञानमुत्पद्यते यतः केवलज्ञानावृत्तिज्ञानत्वव्याप्यजात्यवच्छिन्नं प्रति केवलज्ञानावरणस्य हेतुत्वात्तदानीं तदभावान्न तदुत्पत्तिरिति नैककालावच्छिन्नतत्सामानाधिकरण्यं केवलज्ञानस्येति साम्प्रदायिकानाम्मतमुपदर्शयितुं भूमिकामारचयति—इदं तु स्यादित्यादि । क्षायोपशमिकमत्यादिकम्प्रति क्षयोपशमस्य कारणत्वेन केवलिनि मत्याद्यावरणक्षयोपशमस्याभावात्तत्कार्यभूताः क्षायोपशमिका मत्यादयो मा भूवन्, किन्तु क्षायोपशमिकमतिज्ञानविलक्षणा ये क्षायिका मत्यादयस्ते क्षायिकत्वात्केवलज्ञानसमकक्षाः किन्न भवेयुः, तदानीमावरणमात्रविलये केवलज्ञानकारणकेवलज्ञानावरणक्षयवन्मतिज्ञानादिकारणमतिज्ञानाद्यावरणक्षयस्यापि नियमेन भावादित्यर्थः, नन्वेवम्भूता मतिज्ञानादयस्तदानीं जायमाना अपि सूर्याभिभूतान्यतेजोवत्केवलज्ञानाभिभूता एवेत्यनभिभूतमतिज्ञानादिसाहित्यं न केवलज्ञानस्येति तत्साहित्यप्रसङ्गलक्षणदोषो न भवतीत्यत आह—अयन्तु दोष इति । प्रकृष्टप्रकाशत्वेन सूर्यतेजसो बलवत्त्वेन दुर्बलानां नक्षत्रादीनामभिभवसम्भवेऽपि क्षायिकत्वेन समबलत्वाविशेषाद्यदि केवलज्ञानेन मत्यादीनामभिभवस्तर्हि मत्यादिभिरपि केवलज्ञानस्याभिभवो भवेत्, यदि वा मत्यादिभिर्न केवलज्ञानस्याभिभवस्तर्हि केवलेनापि न मत्यादीनामभिभव इति यादृशं केवलज्ञानं तादृशमेव मत्यादिज्ञानमिति तत्साहित्यं तस्य दुष्परिहरमेवेत्याह—क्षायिकत्वेनेति, उभयोः

आवरणविषयकार्योत्पत्तावावरणक्षयस्य हेतोरप्यनभिभवस्य विनिगन्तुमशक्यत्वात्, बलवत्सजातीयसंवलनं खल्वभिभवो, बलवत्त्वं चोभयत्र तुल्यमिति, तस्मात् केवलज्ञानव्यावृत्तज्ञानत्वव्याप्यजात्यवच्छिन्नं प्रति केवलज्ञानावरणस्यैव हेतुत्वात्, केवलज्ञानत्वावच्छिन्ने च लाघवाद् ज्ञानावरणक्षयत्वेनैव हेतुत्वात्, ज्ञानावरणपञ्चकक्षयादेकं केवलज्ञानमेवोत्पद्यते न मत्यादीनीति तैः साहित्यं न केवलज्ञानस्येत्यभिप्रायवतां साम्प्रदायिकानां मतमाह—**केचिदप्याहुरित्यादि** । केचित्पुनर्ब्रुवते, **नैतानि** मत्यादीनि, **केवलिनः सन्ति**, यस्मान्मतिज्ञानमपायसद्द्रव्यतया भवति । अपायो नामावग्रहेहाक्रमेण श्रोत्राद्युपलब्धार्थनिश्चयो, नैवंविधक्रमवान् स केवलिनोऽस्ति । यावच्च शोभनानि सम्यक्त्वदलिकानि सन्ति तावन्मतिज्ञानं, तान्यपि केवलिनो न सन्तीति कुतस्तस्य मतिज्ञानम् । तदभावाच्च **तत्पूर्वकं श्रुतज्ञानं** दूरोत्सारितमेव । **अवधिमनःपर्यायज्ञाने** रूपिमात्रनियते इति ते अपि न केवलिनः, तस्यापरिच्छिन्नज्ञानत्वात् । तस्मादुपपत्तिबलात् केवलिनो ज्ञानचतुष्टयाभावः । किं चान्यत् **मतिज्ञानादिषु चतुर्षु, पर्यायेण** क्रमेण, उपयोगः । न **युगपदेकस्मिन्काले** । यदा मतिज्ञानोपयुक्तो न तदा श्रुतादीनामन्यतमेन केनचित्, यदा च श्रुतोपयुक्तो न तदा मत्यादीनामन्यतमेनेति । केवलिनस्तु न क्रमेणैतद्ज्ञानगतोऽस्त्युपयोगः । तदाह **संभिन्नेत्यादि** । **संभिन्ने** सर्वद्रव्यपर्यायग्राहके ज्ञानदर्शने यस्य तादृशस्य, **भगवतो** माहात्म्या-

मत्यादिज्ञानकेवलज्ञानयोः । ननु केवलज्ञानावरणक्षयो न केनाप्यऽभिभूतः, मत्यादिज्ञानावरणक्षयस्तु तेनाभिभूत इत्यभिभूत कारणप्रभवा मत्यादयोऽभिभूताः, केवलन्त्वनभिभूतकारणप्रभवत्वादनभिभूतमित्यत आह—**आवरणविषयकार्योत्पत्ताविति**, मतिज्ञानाद्यावरणं मतिज्ञानादिकमावृणोति, केवलज्ञानावरणं केवलज्ञानमावृणोति, तथा च केवलज्ञानावरणक्षये केवलज्ञानावरणविषयीभूतस्य केवलज्ञानलक्षणस्य कार्यस्योत्पत्तिः, एवं मतिज्ञानाद्यावरणक्षये मतिज्ञानाद्यावरणविषयीभूतस्य मतिज्ञानादिलक्षणकार्यस्योत्पत्तिरित्येवमविशेषेणावरणविषयकार्योत्पत्तौ सत्यां केवलज्ञानहेतोः केवलज्ञानावरणक्षयस्यानभिभवः, मतिज्ञानादिहेतोर्मतिज्ञानाद्यावरणक्षयस्याभिभव इत्यस्य विनिगमकहेतोरभावेन विनिगन्तुमशक्यत्वादित्यर्थः, **बलवत्सजातीयसंवलनं खल्वभिभवः, बलवत्त्वं चोभयत्र तुल्यमिति** बलवांश्चासौ सजातीयो बलवत्सजातियः, बलवान् तेजस्त्वेन रूपेण नक्षत्रादिसजातीयो यस्सूर्यस्तेनाल्पतेजस्विनां नक्षत्रादीनां संवलनमाच्छादनं खल्वभिभवः, स चात्र न सम्भवति, मतिज्ञानाद्यावरणक्षये केवलज्ञानावरणक्षये चोभयत्र तुल्यबलवत्त्वादिति केन कस्याभिभवस्स्यात्, तथा च केवलज्ञानावरणक्षयेण मतिज्ञानाद्यावरणक्षयस्याभिभव इति सूर्याभिभूतान्यतेजोदृष्टान्तेन नैव वक्तुं युक्तं, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादिति भावः । नन्वेवं तर्हि किं केवलज्ञानकालविच्छेदेन तत्सामीने क्षायिकमत्यादिज्ञानचतुष्टयमभ्युपगन्तव्यम् । ओमिति चेत्तदा—" जे एगनाणी ते नियमा केवलनाणी " इति भगवतीसूत्राष्टमशतकाद्वितीयोदेशकवचनविरोधप्रसङ्ग इत्याशङ्कानिरासार्थं साम्प्रदायिकमतेन तन्निगमनमाह **तस्मात्केवलज्ञानव्यावृत्तज्ञानत्वव्याप्यजात्यवच्छिन्नं प्रतीत्यादि** । **तस्यापरिच्छिन्नज्ञानत्वादिति**-

दिगुणान्वितस्य, केवलिनो युगपदेकस्मिन्समये, सर्वभावग्राहके निरपेक्षे इन्द्रियाद्यनपेक्षे च, केवलज्ञाने केवलदर्शने च युगपदेकस्मिन्समयेऽनुसमयमनुगतोऽव्यवहितः समयो यत्र कालसन्ताने तं व्याप्य, उपयोगो भवति, कालाध्वनोरत्यन्तसंयोग" इति द्वितीया, वारंवारेण केवलज्ञानदर्शनयोरुपयोगः सर्वकालं भवतीति यावत्, तथा च सामयिककेवलज्ञानदर्शनोपयोगप्रवाहे दूरापास्तैव ज्ञानान्तरोपयोगसंकथा। अत्र केचित्पण्डितम्मन्यास्तर्करसिका वारंवारेणोपयोगो नास्तीत्याहुः। तत्र प्रमाणयन्ति सम्प्रदायवृद्धाः। आम्नाये भूयसां सूत्राणां 'सव्वस्स केवलिस्सा जुगवं दो णत्थि उवओगा' इत्यादीनां वारंवारेणोपयोगप्रतिपादकानामुपलंभात्, न च तेषां सूत्राणामन्य एवार्थो विधेयः, सर्वेषा सूत्राणामन्धस्थानीयानामाप्तसम्प्रदायोपबृंहितसम्यग्बुद्ध्या गृहीतानामेवार्थव्यापारे शक्तत्वात्,

केवलिनोऽपरिमितार्थगोचरकेवलज्ञानशालित्वादित्यर्थः। युगपदित्यस्यार्थमाह **एकस्मिन् समय इति**। अनुसमयमित्यस्यार्थमाह **अनुगतोऽव्यवहितः समयो यत्र कालसन्ताने तं व्याप्येति**। **"कालाध्वनोरत्यन्तसंयोगे" इति द्वितीयेति** पाणिनीयोक्तसूत्रेण २-३-५ अनुसमयमित्यत्र द्वितीया सप्तमीबाधिकेत्यर्थः। **वारंवारेण केवलज्ञानकेवलदर्शनयोरुपयोगः सर्वकालं भवतीति**–केवलज्ञानं किं प्रथमसमये भवति किं वा केवलदर्शनमित्यत्र "सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स" इत्याद्यार्षवचनस्य विनिगमकत्वात् केवलज्ञानस्यापि लब्धित्वात् साकारोपयोगकाले तस्य भावादाद्ये समये तत्, न च तदैव केवलदर्शनोत्पत्तिः, "जुगवं दो नत्थि उवओगा" इति सिद्धान्तवचनात्, किन्तु द्वितीयसमये, केवलदर्शनोपयोगस्य क्रमभावित्वेनार्थसिद्धत्वात्तदानीम्, तदनु क्रमिकोपयोगद्वयधारायास्स्वरसत एव प्रवृत्तेस्तृतीयसमये केवलज्ञानोपयोगः, चतुर्थे च केवलदर्शनोपयोगः, एवमग्रेऽपीत्येवं सर्वकालं प्रतिसमयं क्रमेणैक एव केवलज्ञानकेवलदर्शनान्यतरोपयोग इत्यर्थः। **ज्ञानान्तरोपयोगसंकथेति**–क्रमिकमत्यादिज्ञानोपयोगचर्चेत्यर्थः। यद्यपि केवलज्ञानं केवलदर्शनं चोभयं घातिकर्मक्षयसहकृतात्ममात्रापेक्षकत्वादेकसामग्र्युत्पाद्यमिति क्रमोत्पादहेतुक्रमिकसामग्र्यभावात् प्रतिबन्धकान्तराभावाच्च ते उभे युगपदेवोत्पद्येताम् तथापि–"सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स" इत्याद्यार्षवचनस्य विनिगमकत्वात् आद्यसमये केवलज्ञानोपयोगोत्पत्तिः, द्वितीयसमय एव च केवलदर्शनोपयोगोत्पत्तिः, तत्र च हेतुः प्रागेवोक्तः "जुगवं दो नत्थि उवओगा" इति। अथ छद्मस्थज्ञानदर्शनोपयोगापेक्षया तद्वचनमिति चेत्, मैवम्, विशेषानभिधानात्, छद्मस्थोपयोगविषयत्वेनोक्तवचनस्य सङ्कोचकरणे बीजाभावात्, द्वितीयसमयादन्वपि पूर्वोक्तरीत्या प्रतिसमयं सर्वकालं क्रमिक एव केवलज्ञानकेवलदर्शनान्यतरोपयोग इत्येवं सिद्धान्तावलम्बिश्रीजिनभद्रगणिक्षमाश्रमणमतम्। तर्कनिष्णाता युक्तिबलावलम्बिनः पूज्यपादाश्श्रीसिद्धसेनदिवाकरा मल्लवादिनश्च तन्नानुमन्यन्त इत्याह **अत्र केचित्पण्डितंमन्यास्तर्करसिका वारंवारेणोपयोगो नास्तीत्याहुरिति। सव्वस्स केवलिस्सा(स्स) जुगवं दो नत्थि उवओगा इति।** अत्र "नाणम्मि दंसणम्मि य, एत्तो एगयरयम्मि उवउत्तो"

आप्तसम्प्रदायस्य च सुधर्मस्वामिन आरभ्याद्य यावद्वारंवारेणोपयोग एव प्रगल्भमानत्वादित्याधिकमत्रत्यं तत्त्वं विशेषावश्यकादेरवसेयम् । मतत्रयनययोजना चास्मत्कृतज्ञानबिन्दोः । किं चान्यादित्युपपत्त्य-

इति पूर्वार्द्धं ज्ञेयम् । **मतत्रयनययोजनेति**–अत्र क्रमोपयोगवादिनां जिनभद्रगणिक्षमाश्रमणपूज्यपादानां युगपदुपयोगद्वयवादिनां च तातपादश्रीमल्लवादिप्रभृतीनां यदेव केवलज्ञानं तदेव केवलदर्शनमित्यभेदवादिनाञ्च महावादिपूज्यश्रीसिद्धसेनदिवाकराणां केवलज्ञानकेवलदर्शने एकात्मनि युगपदुत्पद्येते न वा, केवलज्ञानं स्वसमानाधिकरणकेवलदर्शनोत्पत्तिक्षणोत्पत्तिकं न वेत्यर्थपर्यवसायिनी प्रथमा विप्रतिपत्तिः, केवलज्ञानकेवलदर्शने क्रमेणैकात्मनि समुत्पद्येते न वा, केवलज्ञानं स्वसमानाधिकरणकेवलदर्शनोत्पत्तिक्षणाऽव्यवहितपूर्वक्षणोत्पत्तिकं न वेत्यनुगतार्था च द्वितीया, इत्याद्याः साधारण्यो विप्रतिपत्तयः । आद्यविप्रतिपत्तौ विधिपक्षः पूज्यपादश्रीमल्लवादिसिद्धसेनदिवाकराणां, तत्रापि केवलज्ञानं स्वसमानाधिकरणकेवलदर्शनसमानकालीनमपि केवलदर्शनाद्भिन्नमेवेति तातपादश्रीमल्लवादिनः, वादिमुख्यश्रीसिद्धसेनदिवाकरास्तु केवलदर्शनादभिन्नमेवेति प्राहुः, निषेधपक्षो भगवच्छ्रीजिनभद्रगणिक्षमाश्रमणानामिति । द्वितीयविप्रतिपत्तौ चोक्तवैपरीत्येन विध्यंशे निषेधांशे च ज्ञेयम् । तत्र विश्वविश्वार्च्याचार्यश्रीजिनभद्रगणिक्षमाश्रमणानामेवं मतम्–" केवली णं भंते ! इमं रयणप्पभं पुढवीं आगारेहिं हेतूहिं उवमाहिं दिट्ठंतेहिं वण्णेहिं संठाणेहिं पमाणेहिं पडोयारेहिं जं समयं जाणति तं समयं पासइ जं समयं पासइ तं समयं जाणइ ? गोयमा ! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चति केवली णं इमं रयणप्पभं पुढवीं आगारेहिं जं समयं जाणाति नो तं समयं पासति जं समयं पासइ नो तं समयं जाणइ ? गोयमा ! सागारे से नाणे भवति अणागारे से दंसणे भवति, से तेणट्ठेणं जाव णो तं समयं जाणाति एवं जाव अहे सत्तमे " इति प्रज्ञापनात्रिंशत्तमपश्यताख्यपदगतसूत्रपाठदर्शनात् केवलिभगवतामेकस्मिन् समये केवलज्ञानकेवलदर्शनान्यतरोपयोग एव, न तु युगपत्केवलज्ञानोपयोगकेवलदर्शनोपयोगद्वयम् । ननु लोके क्रमिकसामग्रीभेदादेव क्रमिककार्यभेदो दृश्यते, न चात्र स इति कथं केवलिनां क्रमिकोपयोगरूपकार्यभेद इति चेत्, मैवम्, केवलज्ञाने केवलज्ञानान्योपयोगसहकृतकेवलज्ञानावरणक्षयस्य केवलदर्शने च केवलज्ञानोपयोगसहकृतकेवलदर्शनावरणक्षयस्य हेतुत्वेनात्रापि क्रमिकसामग्रीभेदस्य सत्त्वात्, आद्यकेवलज्ञानात्पूर्वं केवलदर्शनस्याभावाद्व्यभिचारस्स्यादतः केवलदर्शनसहकृतेत्यनुक्त्वा केवलज्ञानान्योपयोगसहकृतेति केवलज्ञानकारणकोटावुक्तम् । नन्वेवं तर्हि तथोत्पद्येतां केवलज्ञानोपयोगः केवलदर्शनोपयोगश्च, तन्नाशस्तु समयान्तरे न स्यादेव, नाशकहेत्वभावादित्यपि न चाशङ्कनीयम्, अर्हत्प्रवचनस्यानेकनयसमूहमयत्वात्तत्तन्नयविवक्षैव प्राधान्येन तत्तत्कार्योपयोगिनीत्यत्रर्जुसूत्रनयावलम्बनेन भावमात्रस्य विनाशस्वभावनियतत्वेन स्वनाशम्प्रति स्वाव्यवहितोत्तरक्षणवर्त्तिभावानपेक्षणेन स्वत एव नाशः, अत एव स निर्हेतुक इति तन्मतेनोच्यत इति केवलज्ञानस्य केवलदर्शनस्यापि च स्वत एव

क्षणान्तरे विनाशात् । यद्वोक्तनयमतेन स्वस्य स्वं एव नाशक इति केवलज्ञानस्य केवलदर्शनस्य च विनाशे प्रतियोगिन एव हेतुत्वात् द्वितीयक्षणे स स्यादेवेति भावनीयम्, ननु केवलिनः क्रमेणोपयोगाभ्युपगमे केवलज्ञानकेवलदर्शनयोः प्रतिसमयं सान्तत्वप्राप्त्या "केवलनाणी णं पुच्छा गोयमा! साइए अपज्जवसिए" "केवलदंसणी णं पुच्छा, गोयमा! सातीए अपज्जवसिते" इति प्रज्ञापनाऽष्टादशपदोक्तसूत्रविरोधस्स्यादिति चेत्, मैवम्, षट्षष्टिसागरोपमस्थित्यादिप्रतिपादकमतिज्ञान्यादिसूत्रस्येव लब्ध्यपेक्षयैतत्सूत्रस्यापि प्रवृत्तेः, एतेन समयान्तरेऽन्यतरोपयोगाभावात् सर्वज्ञत्वसर्वदर्शित्वयोस्सातत्यं न स्यादित्याशङ्काऽपि निरस्ता, लब्ध्यपेक्षया तत्सद्भावादेव । एतेन केवलज्ञानदर्शने युगपत्सर्वथाऽपनीतस्वस्वावरणे चेत्ततः कथं ते क्रमेण स्वप्रकाश्यं प्रकाशयतः, यतो न हि सर्वथाऽपनीतावरणौ द्वौ प्रदीपौ क्रमेण प्रकाश्यप्रकाशकारिणौ केनापीक्ष्येते, दृष्टानुसारिणी च कल्पना प्रमाणकोटिमाटीकते, तथा च केवलज्ञानकेवलदर्शने युगपत्स्वप्रकाश्यप्रकाशके युगपत्सर्वथाऽपनीतावरणत्वात् प्रदीपद्वयवदित्यनुमानेन युगपदेव ते निखिलान् स्वप्रकाश्यान् प्रकाशयत इत्यभ्युपगन्तव्यम्, अन्यथा तदावरणक्षयो मिथ्या स्यात्, यस्मिन्समये यस्योत्पादस्तेन तदन्यस्याऽऽवृतत्वात्, तथाऽनभ्युपगमे च यदनुत्पन्नमन्यतरं तस्य निष्कारणमावरणं स्यात्, तथा च सति—"नित्यं सत्त्वमसत्त्वं वा, हेतोरन्यानपेक्षणात् ।" इति प्रसज्यते, किञ्च केवलदर्शनोपयोगकाले नैव त्वन्मते केवलज्ञानोपयोग इति तदानीमसर्वज्ञत्वस्य केवलज्ञानोपयोगकाले केवलदर्शनोपयोगाभावात् तदानीमसर्वदर्शित्वस्य च प्रसङ्गस्स्यादित्येकसमयावच्छेदेन निश्शेषसामान्यविशेषविषयकज्ञानदर्शनोभयमभ्युपगन्तव्यमिति दोषजालमपि प्रतिक्षिप्तम्, छद्मस्थस्याप्येकान्तरदर्शनज्ञानोपयोगाभ्युपगमात्तत्रोक्तदोषजालस्य समानत्वात् । अत्रापि हि शक्यत एवं वक्तुम् दर्शनकाले ज्ञानानुपगमे छद्मस्थस्याज्ञानित्वं ज्ञानकाले दर्शनानुपगमे पुनरदर्शनित्वम्, तथाऽऽवरणक्षयो मिथ्या इतरेतरावरणत्वं वा निष्कारणावरणत्वं वेत्यादि । तदेवं केवलिनो द्वावुपयोगौ युगपद्भवेतामित्यागमे यदि विहितं स्यात्तदेदं कस्यानुमतं न स्यात्, आगमोक्तस्य सर्वसम्मतत्वात्, न च तत्र तत्र सूत्रविहितौ युगपद्द्वावुपयोगौ, किन्तु बहुशो निषिद्धावेव, यदवाचि "कस्स व नाणुमयमिणं, जिणस्स जइ होज्ज दोन्नि उवओगा । नूणं न होंति जुगवं जओ निसिद्धा सुए बहुसो ॥ ३१३२ ॥" इति ।

युगपदुपयोगद्वयवादिनां महनीयमहतां श्रीमल्लवादिनां मतं चैवम्—घनमेघावरणेऽतिप्रबलतरवायुवेगवशात् सर्वथा विनष्टे सति सूर्यस्याविर्भूतेनाऽतिस्वच्छस्वभावेनैव युगपदुत्पद्यमानप्रकाशतापाविवात्मनस्त्रैयिविशुद्धिप्रकर्षविशेषादावरणभूते घनघातिकर्मणि समूलकाषं कषिते सति सर्वथाऽऽविर्भूतेन स्वस्वभावेन युगपत्केवलज्ञानोपयोगकेवलदर्शनोपयोगौ भवतः, न च प्रक्षीणाशेषघनघातिकर्मणः केवलिनः प्रतिबन्धकान्तरम्, येन युगपत्तद्द्वितयं न स्यात्, प्रयोगश्चात्र केवलिनः केवलज्ञानकेवलदर्शनोपयोगावेककालीनौ, युगपदप्रतिहताऽऽविर्भूतस्वभावत्वात्, यौ युगपदप्रतिहताऽऽविर्भूतस्वभावात्मकौ तावेककालीनौ यथा रवेः प्रकाशतापौ, न च युगपदुपयोगद्वयाभ्युपगमे प्रज्ञापनात्रिंशत्तमपश्यतारव्यपदोक्तेन

"केवली णं भंते ! इमं रयणप्पभं" इत्यादिपूर्वोक्तसूत्रेण सह विरोधः, यतोऽत्र भवतैवमर्थः क्रियते-केवली णमिति वाक्यालङ्कृतौ, भन्ते इति भदन्त ! इमां रत्नप्रभापृथिवीमाकारहेत्वादिभिः "जं समयं जाणाति तं समयं" इति कालाध्वनोरत्यन्तसंयोग इति २-३-५ सूत्रेण द्वितीया सप्तमीवाचिका, तेन यं समयं जानाति यस्मिन् समये जानाति 'तं समयं' तस्मिन् समये पश्यति ? यस्मिन् समये पश्यति तस्मिन्समये जानाति ? इति भगवता श्रीगौतमेन प्रश्ने कृते भगवानाह गौतम ! नायमर्थः समर्थः, नैव यस्मिन् समये जानाति तस्मिन्नेव समये पश्यतीत्यर्थो युक्त्युपपन्नः, ततोऽन्यस्मिन्समये जानाति अन्यस्मिंश्च पश्यतीति भावः। तत्त्वमजानानः पुनः पृच्छति-"से केणट्ठेणं भंते !" इत्याद्युच्चारणीयम्, भगवानाह-" सागारे से नाणे भवति अणागारे से दंसणं हवइ त्ति" साकारं विशेषग्राहि 'से' तस्य केवलिनो ज्ञानं भवति, अन्यथा ज्ञानत्वायोगात्, अनाकारं अतिक्रान्तविशेषं सामान्यग्राहि दर्शनं भवति "जं सामन्नगहणं दंसणमेयं विसेसियं नाणं" इति वचनात्। ज्ञानदर्शने चैकसमयावच्छेदेन मिथो विरुद्धे परस्पराभावनान्तरीयकत्वात्, परमाणुगतशीतोष्णत्ववत्, अत्र परमाणुगतेति विशेषणाद् जैनमते एकस्मिन्नवयविन्येकसमयावच्छेदेन भिन्नावयवावच्छेदेन शीतोष्णत्वयोरसत्त्वेऽपि न क्षतिः, एकस्मिन् परमाणौ शीतोष्णत्वयोर्विरुद्धयोरेकसमयावच्छेदेनाऽनभ्युपगमात्। तथा चैकस्मिन्नेव समये निरावरणस्यापि केवलिनस्ते तथाविधे उपयोगात्मना युगपद्भवितुं नार्हतः। तदेवं विशेषग्राहिज्ञानोपयोगः सामान्यग्राहिदर्शनोपयोगान्तरितः, सामान्यावलम्बिदर्शनोपयोगश्च विशेषप्रतिभासिज्ञानोपयोगान्तरितः, तत्स्वाभाव्यादिति युगपदनेकप्रत्ययानुत्पत्तौ स्वभाव एव कारणं नान्यत्, यथा सन्निहितेऽपि च द्वयात्मके विषये सर्वविशेषानेव केवलज्ञानं सर्वसामान्यानि च केवलदर्शनं गृह्णातीत्यत्रानयोस्स्वभाव एव कारणम्, तथा प्रकृते क्रमिकोत्पादेऽपि स्वभाव एव कारणम्। प्रयोगश्चात्र-एकात्मगते केवलज्ञानकेवलदर्शने भिन्नकालावच्छिन्नोत्पत्तिके एकसमयावच्छेदेन परस्परविरुद्धत्वादेकपरमाणुगतशीतोष्णत्ववत्, क्रमभाविस्वभावत्वाद्वा, चक्षुर्ज्ञानश्रोत्रज्ञानवत्। अथवा केवलज्ञानकेवलदर्शने मिथोऽन्तरिततयैवाभ्युपगन्तव्ये तत्स्वाभाव्यात्, यस्य यत्स्वभावस्स तथैवाभ्युपगन्तव्यः, यथा केवलज्ञानस्य विशेषग्राहकत्वस्वभावः केवलदर्शनस्य च सामान्यग्राहकत्वस्वभाव इति। न चायं भवत्कृतोऽर्थः समीचीनतामञ्चति, यतोऽस्मिन्सूत्रे समयमिति पदं न समयाख्यकालवाचकं, किन्तु समकं तुल्यमित्यर्थवाचकम्, तथा च अथ केनार्थेन भदन्त ! एवमुच्यते, केवली इमां रत्नप्रभां पृथिवीं यैराकारादिभिः समकं तुल्यं जानाति न तैराकारादिभिस्तुल्यं पश्यति, यैराकारादिभिः समकं तुल्यं पश्यति न तैराकारादिभिस्समकं तुल्यं जानातीति प्रश्ने कृते तत्प्रतिवचनं भिन्नालम्बनप्रदर्शकम्, केवलिनो ज्ञानं साकारं भवति, तस्य दर्शनं चानाकारं भवतीत्यतो भिन्नालम्बनावेतौ प्रत्ययावित्याहुः सम्मतिटीकाकृदभयदेवसूरिपादाः। पूज्यपादश्रीयशोविजयोपाध्यायास्तत्रैवं समालोचयन्ति ज्ञानबिन्दौ-अत्र यद्यपि जं समयमित्यत्र 'जं' इति अम्भाव प्राकृतलक्षणात्,

यत्कृतमित्यत्र 'जं कयं' इति प्रयोगस्य लोकेऽपि दर्शनादिति वक्तुं शक्यते, तथापि तृतीयान्तपदवाच्यैराकारादिभिः यैस्समकं यत्समकमिति लुप्ततृतीयान्तसमासस्थयत्पदार्थस्य समकपदार्थस्य चान्यूनानतिरिक्तधर्मविशिष्टस्य रत्नप्रभायां भिन्नलिङ्गत्वादनन्वय इति 'यत्समकम्' इत्यादिक्रियाविशेषणत्वेन व्याख्येयम्, रत्नप्रभाकर्मकाकारादिनिरूपितयावदन्यूनानतिरिक्तविषयताकज्ञानवान् न तादृशतावदन्यूनानतिरिक्तविषयताकदर्शनवान् केवलीति फलितोऽर्थः । यदि च तादृशस्य विशिष्टदर्शनस्य निषेध्यस्याऽप्रसिद्धेर्न तन्निषेधः, 'असतो नत्थि निसेहो' विशेषा० भा० १५७४ इत्यादिवचनादिति सूक्ष्ममीक्ष्यते, तदा 'क्रियाप्रधानमाख्यातम्' इति वैयाकरणनयाश्रयणेन रत्नप्रभाकर्मकाकारादिनिरूपितयावदन्यूनानतिरिक्तविषयताकं ज्ञानं न तादृशं केवलिकर्तृकं दर्शनमित्येव बोधः, सर्वनयात्मके भगवत्प्रवचने यथोपपन्नान्यतरनयग्रहणे दोषाभावादिति । अत्र न तादृशं केवलिकर्तृकं दर्शनमित्यस्य रत्नप्रभाकर्मकाकारादिनिरूपितयावदन्यूनानतिरिक्तविषयताकत्वाभाववत् केवलिकर्तृकं दर्शनमिति पर्यवसितोऽर्थः । तेन ज्ञानतुल्यविषयताकदर्शनस्याऽप्रसिद्धत्वेऽपि न क्षतिरिति । ननु केवलज्ञानकेवलदर्शने समकालीनकेवलज्ञानावरणक्षयकेवलदर्शनावरणक्षयहेतुकेऽपि क्रमभावित्वस्वभावादेव क्रमेणैवोत्पद्येते । न हि स्वभावे पर्यनुयोग इति न्यायादिति पूर्वोक्तं किं विस्मृतमिति चेत्, उच्यते, नैव विस्मृतम्, किन्तु युक्तिबलसाम्राज्ये सति न हि स्वभावमात्रेण सन्तोष्टव्यम्, यतो युगपत्कार्यद्वयोत्पादकाऽतुलसमबलकारणद्वयसद्भावेऽपि स्वभावमात्रेण कार्यक्रमाभ्युपगमे सर्वत्र स्वभावेनैव निर्वाहे कारणमात्रस्यैवोच्छेदप्रसङ्गस्स्यात्, तथा सति स्वभाववादस्यैव साम्राज्यं स्यात्, तस्मादनन्यगत्या कार्योत्पत्तिस्वभावः कारणेनेव कार्यक्रमस्वभावोऽपि कारणक्रमेणैव जननीय इत्यभ्युपगन्तव्यम्, न चात्र कारणक्रमः, येनाभिलषितकार्यक्रमोऽपि स्यात् । एतेन सर्वव्यक्तिविषयकत्वसर्वजातिविषयकत्वयोः पृथगेवावरणक्षयकार्यतावच्छेदकत्वादर्थतस्तदवच्छिन्नोपयोगद्वयसिद्धिरित्यपि निरस्तम्, तत्सिद्धावपि तत्क्रमाऽसिद्धेः, आवरणद्वयक्षयकार्ययोः समप्राधान्येनार्थगतेरप्रसराच्च । न च मतिश्रुतज्ञानावरणयोर्युगपत्क्षयोपशमेऽपि यथा तदुपयोगक्रमस्तथा केवलज्ञानकेवलदर्शनावरणयोर्युगपत्क्षयेऽपि केवलिन्युपयोगक्रमस्स्यादिति शङ्कनीयम्, तत्र श्रुतोपयोगे मतिज्ञानस्य हेतुत्वेन शाब्दादौ प्रत्यक्षादिसामग्र्याः प्रतिबन्धकत्वेन चोपयोगक्रमसम्भवात्, अत्र तु क्षीणावरणत्वेन परस्परकार्यकारणभावप्रतिबध्यप्रतिबन्धकभावाभावेन विशेषात् । तदेवं यथा क्षीणावरणे जिने मत्यादिज्ञानचतुष्टयमवग्रहेहादिरूपं वा मतिज्ञानं न सम्भवति तथा केवलज्ञानोत्पत्तिसमयभिन्नसमयोत्पत्तिकदर्शनमपि न सम्भवति, क्रमोपयोगत्वस्य मतिज्ञानाद्यात्मकछाद्मस्थिकज्ञानत्वव्याप्यत्वात् सामान्याऽऽलम्बनविशेषाऽऽलम्बनक्रमोपयोगत्वस्य चावग्रहाद्यात्मकत्वव्याप्यत्वात्, केवलज्ञानकेवलदर्शनयोः क्रमोपयोगत्वे तत्त्वापत्तिः, व्याप्यसत्त्वे व्यापकस्यावश्यम्भावादिति केवलज्ञानावरणकेवलदर्शनावरणक्षययोर्युगपद्भावित्वेन तत्कार्ययोः सर्वव्यक्तिसर्वजातिविषयकयोः केवलज्ञानकेवलदर्शनयोरयुगपदुत्प-

त्वयोगात् प्रतिबन्धकान्तराभावाच्च युगपद्भावोऽभ्युपगन्तव्यः, प्रमाणञ्चात्र केवलज्ञानकेवलदर्शने एकसमयावच्छिन्नोत्पत्तिके एकसामयिकसामग्रीकत्वात्, यदेकसामयिकसामग्रीकं तत्तदेकसमयावच्छिन्नोत्पत्तिकं, "सम्मत्त—चरित्ताइं जुगवं" इति वचनात् "सम्मत्तेणं समगं सव्वं देसं च कोइ पडिवज्जे" इति पञ्चसङ्ग्रहवचनाच्च, एककालीनदर्शनमोहनीयकर्मक्षयोपशमचारित्रमोहनीयकर्मक्षयोपशमवतः कस्यचित्पुंसः सम्यग्दर्शनचारित्रे इव, युगपदुत्पत्त्यविकलकारणकयुगपदुत्पद्यमानरूपरसादिवद्वा । ननु "सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स" इत्याद्यार्षवचनमेव केवलज्ञानकेवलदर्शनक्रमोत्पादे प्रमाणं पूर्वमेवोक्तमिति चेत्, सत्यमुक्तम्, न तु युक्तियुक्तमुक्तम्, एतद्वचनस्य साकारोपयोगयुक्तस्य लब्धियौगपद्य एव साक्षित्वात्, उपयोगक्रमाक्रमयोरौदासीन्यात्, केवलज्ञानकेवलदर्शनयोर्यौगपद्येनापि निर्वाहेऽर्थाद्दर्शनेऽनन्तरोत्पत्त्यसिद्धेः, एकक्षणोत्पत्तिककेवलज्ञानयोरेकक्षणन्यूनाधिकायुष्कयोः केवलिनोः क्रमिकोपयोगद्वयधाराया निर्वाहयितुमशक्यत्वाच्च, अयोगिगुणस्थानकचरमक्षणे एकस्य धाराक्रमेण केवलज्ञानं स्यात्, तदन्यस्य च दर्शनमिति तदुत्तरसिद्धिसमयेऽपि तथा स्यात्, न च तद्युक्तम्, सिद्धिलब्धेस्साकारोपयोगकाल एव भावादिति ।

महातार्किकशिरोमणिभगवच्छ्रीसिद्धसेनदिवाकराणां मतश्चैवम्—'जुगवं दो नत्थि उवओगा' इत्यार्षवचनादेव सामान्यविशेषपरिच्छेदात्मकं केवलज्ञानमेव केवलदर्शनं, न तु ततोऽन्यत्तदिति तदुभयैक्यान्न क्रमोपयोगवत् द्वावुपयोगावप्येकस्मिन्समये केवलिनस्सङ्गच्छतः । उक्तपक्षद्वयस्य तद्विरोधिप्रबलतरयुक्तिसमूहप्रतिहतत्वाच्च, तथाहि सिद्धान्ते यस्मिन्नेव समये केवलदर्शनावरणक्षयस्तस्मिन्नेव समये केवलज्ञानावरणक्षयोऽप्यभ्युपगत इत्येककालीनतद्रूपकारणे समाने सति कस्य पूर्वमुत्पादो भवेत्, पूर्वं यस्य कस्याप्यन्यतरस्योत्पादे तदितरस्याप्यविकलसामग्रीसद्भावेनोत्पादप्रसङ्गात्, अन्यतरसामग्र्या अन्यतरप्रतिबन्धकत्वे च विनिगमनाविरहादुभयोरप्यभावप्रसङ्गात् । नन्वेवं तर्ह्यक्रमकारणे सति कार्यस्याप्यक्रमभावो लोके दृश्यते इति केवलज्ञानकेवलदर्शनोपयोगौ युगपदुत्पद्येयाताम् तत्कारणयोस्तदावरणीयकर्मक्षययोर्युगपद्भावादिति चेत्, सोऽपि पक्षो न प्रमाणार्हः, सिद्धान्ते युगपदुपयोगद्वयस्यानभ्युपगमात्, सामान्यविशेषपरिच्छेदात्मकत्वात्केवलज्ञानस्येति यदेव ज्ञानं तदेव दर्शनमित्यभ्युपगन्तव्यम्, न च दृष्टानुसारिणी कल्पना न तु कल्पनानुसारिणी दृष्टिः, न चैवं क्वचिद् दृष्टिगोचरमित्यपरिदृष्टकल्पनापत्तिरेवमभ्युपगमे स्यादिति नैक्यं तदुभयस्य युक्तियुक्तं प्रतिभासत इति वाच्यम्, उभयहेतुसमाजे समूहालम्बनैकज्ञानस्यैवान्यत्र दृष्टिगोचरत्वात्, नात्रादृष्टपरिकल्पनाक्लेश इति । तदेवमखिलसामान्याखिलविशेषोभयविषयकसमूहालम्बनैकज्ञानाभ्युपगम एव सर्वं द्रव्यपर्यायात्मकं सामान्यविशेषात्मकं जगदेकसमयेन सर्वज्ञो जानातीति युज्यते, अन्यथा सामान्यविशेषात्मकं निरशेषपदार्थमात्रं सर्वज्ञो न जानीयात्, एकदेशोपयोगवर्तित्वात्, मत्यादिज्ञानवत् । तथा च क्रमोपयोगयुगपदुपयोगद्वयवादिमतेऽसर्वज्ञत्वमसर्वदर्शित्वञ्च स्यात् । न च तथाऽभ्युपगन्तुं युक्तमिति सर्वज्ञत्वान्यथानुपपत्त्या यदेव

केवलज्ञानं तदेव केवलदर्शनमित्यभ्युपगन्तव्यम् । किञ्च ज्ञानस्य स्वरूपं व्यक्तता दर्शनस्य पुनरव्यक्तता, न च क्षीणावरणेऽर्हति व्यक्तताऽव्यक्तते युज्येते, ततः सामान्यविशेषज्ञेयमात्रसंस्पर्श्युभयैकस्वभाव एवायं केवलिप्रत्ययः । न च ग्राह्यद्वित्वाद्ग्राहकद्वित्वमिति वाच्यम्, केवलज्ञानस्य ग्राह्यानन्त्येनाऽनन्ततापत्तेः । किञ्च क्रमोपयोगपक्षे ज्ञानकालेऽदृष्टं दर्शनकाले चाज्ञातं, युगपदुपयोगद्वयपक्षे च सामान्यांशेऽज्ञातं विशेषांशे चादृष्टं केवली सर्वदा भाषते, तत एकस्मिन् समये सर्वांशे ज्ञातं दृष्टञ्च भगवान् भाषते इत्येष वचनविशेषो नोपपद्यते, अज्ञातं पश्यन्नदृष्टञ्च जानानः किञ्चिज्जानाति किञ्चित्पश्यति न तु सर्वं जानाति न वा सर्वं पश्यतीत्यखिलसामान्यांशाखिलविशेषांशोभयविषयकज्ञानाभावात्सर्वज्ञत्वं च न सम्भवति । ननु यदेव केवलज्ञानं तदेव केवलदर्शनमित्याकारके भवन्मतेऽपि पञ्चमाङ्गेऽष्टादशशतके दशमोद्देशके "सोमिला दव्वट्ठयाए एगे अहं नाणदंसणट्ठयाए दुविहे अहं" इत्यनेनोत्पन्नकेवलज्ञानेन भगवता स्वयमेव स्वात्मनो ज्ञानदर्शनार्थतया भेदद्वयोक्त्या केवलज्ञानकेवलदर्शनयोरपक्षरैर्भेदप्रतिपादनात् कथं नोक्तागमविरोध इति न चाशङ्कनीयम्, तत्र ज्ञानत्वदर्शनत्वधर्माभ्यां ज्ञानदर्शनभेदविवक्षयैवोक्तम् । यदभिहितं स्तुतिकारेण "एवं कल्पितभेदमप्रतिहतं सर्वज्ञतालाञ्छनं, सर्वेषां तमसां निहन्तृ जगतामालोकनं शाश्वतम् । नित्यं पश्यति बुध्यते च युगपन्नानाविधानि प्रभो, स्थित्युत्पत्तिविनाशवन्ति विमलद्रव्याणि ते केवलम् ॥ १ ॥" इति । वस्तुगत्या केवलज्ञानधर्मी त्वेक एवेत्युक्तविरोधाभावात्, अत एवोपयोगस्य न द्वादशभेदक्षतिः, अत्रान्याक्षेपपरिहारौ सम्मतितर्कज्ञानबिन्दुतोऽवसेयौ, गौरवभीत्या नोच्येते । तदेवमक्रमोपयोगद्वयात्मक एक एव केवलोपयोगोऽभ्युपगन्तव्यः, तत्रैकत्वं व्यक्त्या, द्वयात्मकत्वञ्च नृसिंहत्ववदांशिकजात्यन्तररूपत्वमित्येके, माषे स्निग्धोष्णत्ववद्व्याप्यवृत्तिजातिद्वयरूपमित्यपरे, महनीयमान्यमतिवैभवन्यायाचार्यश्रीयशोविजयोपाध्यायास्तु केवलत्वमावरणक्षयात्, ज्ञानत्वं जातिविशेषः, दर्शनत्वं च विषयताविशेषो दोषक्षयजन्यतावच्छेदक इत्याहुः । नन्वर्हच्छास्त्रग्रन्थिस्थाननगभेदिवज्रोपममतिवैभवमहनीयमहत्तमाचार्यत्रयसत्कपक्षत्रयान्यतमस्यैकस्यैव पक्षस्य वस्तुगत्या प्रामाणिकत्वेन तद्भिन्नपक्षद्वयस्यार्हच्छास्त्रबाधितत्वात्तत्पक्षाभ्युपगन्तॄणामर्हच्छास्त्रविपरीतश्रद्धाशालित्वान्मिथ्यात्वप्रसङ्ग इति न चात्र शास्त्रतत्त्वज्ञैराशङ्कनीयम्, प्रत्यात्मप्रदेशानुस्यूताविच्छिन्नार्हच्छासनानुरागशुभोपायवतामविच्छिन्नगुरुपरम्पराऽऽयातशास्त्रतात्पर्यमपक्षपातेन तन्वतां विदुषां मिथ्याभिनिवेशाऽभावात् । तथाहि स्वाग्रहाऽग्रहिलस्वान्तास्त्रयोऽपि सूरयः स्वस्वाभ्युपगतमर्थं शास्त्रतात्पर्यबाधं प्रतिसन्धायाऽपि पक्षपातेन न प्रतिपन्नवन्तः, किन्त्वविच्छिन्नस्वस्वगुरुपरम्पराऽऽयातभिन्नाभिन्नप्रावचनिकपरम्परया शास्त्रतात्पर्यमेव स्वाभ्युपगतार्थानुकूलत्वेन प्रतिसन्धायेति न ते मिथ्याभिनिवेशिनः, वीतरागप्रभुप्रणीतशास्त्रतात्पर्यबाधप्रतिसन्धानपूर्वकाऽन्यथाश्रद्धानाऽभावात्, किञ्चानेकनयसमूहात्मके भगवत्प्रवचने "नत्थि नएहिं विहूणं सुत्तं अत्थो अ जिणमए किंचि" इति सिद्धान्तवचनादनेन नयेनेदं सूत्रं प्रवृत्तम्, अनेन नयेन चेदमिति सम्भावितत्तन्नयसमालोचनां विना

नैव तत्तत्सूत्राणि याथार्थ्येन ज्ञायन्ते इत्यत्र स्वस्वगुरुसम्प्रदायाऽविच्छिन्नतत्तन्नयगर्भवाचनाप्रवाहाऽऽयातास्त्रयोऽपि सूरिपक्षाः प्रमाणकोटिप्रविष्टाः । अत एव "प्रावचनिकानां जिनभद्रसिद्धसेनप्रभृतीनां स्वस्वतात्पर्यविरुद्धविषये सूत्रे परतीर्थिकपदं भिन्नपरम्पराऽऽयाततात्पर्यानुसारिपरमिति न केषामपि प्रावचनिकत्वक्षतिः, तत्तन्नयाभिप्रायेण प्रवृत्तत्वात्" इति नयोपदेशवृत्तौ व्याख्यातमिति तेषां सूरीणां केषामपि नापसिद्धान्तोक्त्या मिथ्यात्वप्रसङ्गः, तथाहि–यत्सत्तत्क्षणिकमिति सामान्यव्याप्त्या निखिलवस्तुनस्सद्रूपत्वेन क्षणिकत्वमिति पूर्वपूर्वक्षणिकवस्तुनस्स्वोत्तरोत्तरक्षणिककार्यकुर्वद्रूपात्मकतया कारणत्वेन पूर्वपूर्वक्षणिकेनोत्तरोत्तरक्षणिककार्यं जायते इति पूर्वोत्तरक्षणवर्त्तिक्षणिकवस्तुद्वयकार्यकारणभावाऽभ्युपगन्तृबौद्धमतप्रकृत्यृजुसूत्रनयापेक्षया केवलज्ञानकेवलदर्शनसूत्राभिप्रायं व्यवस्थापयन्तः पूर्वोत्तरक्षणवर्तिनोर्ऋजुसूत्राभ्युपगतकार्यकारणभावांश एव प्रस्तुत उपयुक्तः, न त्वृजुसूत्राऽभ्युपगतनिखिलतत्त्वभाग इति तत्रौदासीन्यमुक्तकार्यकारणभावे च प्राधान्यमभिसन्दधानाः केवलज्ञानकेवलदर्शनक्रमिकोत्पादं पूज्याश्श्रीजिनभद्रगणिक्षमाश्रमणाः प्रतिपादयन्ति ।

यद्यपि चेतनालक्षणसामान्यात्मना केवलोपयोगलक्षणसामान्यात्मना वा केवलज्ञानकेवलदर्शनयोरैक्यमेव तथापि सामान्यविशेषभेदग्राहितया तदुभयभेदग्राहकवैशेषिकनैयायिकमतप्रकृतिव्यवहारनयापेक्षया केवलज्ञानकेवलदर्शनसूत्राभिप्रायमुररीकुर्वन्तो व्यवहारनयाभ्युपगतभेदान्यतत्त्वभागे औदासीन्येन तदभ्युपगतभेदमात्रस्य प्रस्तुतोपयुक्तत्वात्तं प्रधानीकृत्य एकसमयावच्छिन्नोत्पत्तिककेवलज्ञानकेवलदर्शनभेदं जगदर्च्यक्रमाब्जश्रीमल्लवादिन ऊचुः ।

"सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयम्, नेह नानास्ति किञ्चन" इत्यादिश्रुत्या घटस्सन् पटस्सन्नित्याद्यनुगतप्रत्ययगोचरीभूतेन सत्त्वेन रूपेणैकस्यैव सर्वजगतो घटत्वपटत्वाद्युपाधिभेदेन यः काल्पनिकभेदो यद्वाऽखण्डसच्चिदानन्दात्मकस्यैकस्यैव ब्रह्मणो मायावच्छिन्नत्वाऽन्तःकरणावच्छिन्नत्वोपाधिभेदेन यः काल्पनिकभेदस्तद्ग्राहिवेदान्तिमतप्रकृतिसङ्ग्रहनयापेक्षया केवलज्ञानकेवलदर्शनसूत्राभिप्रायमभ्युपगच्छन्तो प्रवचनोपनिषद्वेदिमहातर्कवादिभगवच्छ्रीसिद्धसेनदिवाकरा न तु व्यक्त्या भेदं, केवलज्ञानव्यक्तेरेकत्वात्, किन्तु ज्ञानत्वदर्शनत्वधर्मोपाधिभेदेनैकस्यापि केवलज्ञानस्य भेदं कथयामासुः ।

तथा चाविच्छिन्नप्रावचनिकपरम्पराऽऽयाततत्तन्नयगर्भसूत्रतात्पर्यं स्वाभ्युपगतार्थानुकूलत्वेन प्रतिसन्धाय प्रतिपन्नवतां त्रयाणामपि सूरिभगवतां मध्ये नैकोऽपि स्वाभ्युपगतेऽर्थे भगवत्प्रणीतशास्त्रतात्पर्यबाधं प्रतिसन्धायैव पक्षपातेन तमर्थं श्रद्धत्ते इति तत्र शास्त्रतात्पर्यबाधप्रतिसन्धानाभाववति "विदुषोऽपि स्वरसवाहिभगवत्प्रणीतशास्त्रबाधितार्थश्रद्धानमाभिनिवेशिकम्," इति लक्षणाऽसङ्गतेर्नैकस्मिन्नपि सूरिवरे आभिनिवेशिकमिथ्यात्वप्रसङ्गः ।

उक्तं च न्यायाचार्यश्रीयशोविजयोपाध्यायैर्ज्ञानबिन्दौ

प्राचां वाचां विमुख ... ... दमेक्षिकायां

गस्य केनचिद्रूपेणोत्पादः केनचिद्रूपेण विनाशः केनचिद्रूपेण ध्रौव्यमभ्युपेयमेवेति, तत्र पूर्वपूर्वकेवलपर्यायस्योत्तरोत्तरकेवलपर्यायहेतुत्वाभ्युपगमत एव केवलोपयोगधारोपपत्तिरिति तत्र शुद्धर्जुसूत्रसमाश्रयणेन केवलदर्शनकुर्वद्रूपात्मकेन केवलज्ञानेन केवलज्ञानकुर्वद्रूपात्मकस्य केवलदर्शनस्योत्पत्तिस्तथाविधेन केवलदर्शनेन तथाविधस्य केवलज्ञानस्योत्पत्तिरित्येवं केवलोपयोगधारा निराबाधैव, तदपेक्षयाऽपर्यवसितत्वमपि सुसङ्गतम् । यथा च घटविषयकविज्ञानपटविषयकविज्ञानमठविषयकविज्ञानाद्यविच्छिन्नप्रवाहस्य प्रवृत्तिविज्ञानसन्तानत्वं प्रवृत्तिविज्ञानत्वेन घटपटादिविज्ञानानां साजात्यमुपादाय निर्वहति, अन्यथा घटविज्ञानत्वादिना घटपटादिविज्ञानानां प्रत्यक्षत्वानुमानत्वादिना वा प्रत्यक्षानुमानादीनां च साजात्याभावात्प्रवृत्तिविज्ञानसन्ततिरपि जाग्रद्दशाभाविनी न स्यात्, तथा केवलज्ञानकेवलदर्शनयोः केवलज्ञानत्वेन केवलदर्शनत्वेन वा साजात्याऽभावेऽपि केवलोपयोगत्वेन साजात्यात्प्रथमं केवलज्ञानं ततः केवलदर्शनं ततः केवलज्ञानमित्येवं केवलोपयोगाविच्छिन्नप्रवाहलक्षणा केवलोपयोगसन्ततिरनाकुलमवतिष्ठत इत्यभिप्रायवतां पूज्यानां जिनभद्रगणिक्षमाश्रमणानां मतमतिमनोहरमेवेति । सिद्धसेनः— केवलज्ञानमेव केवलदर्शनं, न तयोर्भेद इत्यभ्युपगन्ता सम्मतिप्रणेता सिद्धसेनदिवाकरस्तु, भेदोच्छेदोन्मुखं—केवलज्ञानदर्शनयोर्यो भेदस्तदुच्छेदपरं तयोरैक्यमेवेत्यभ्युपगमपरं सङ्ग्रहमधिगतः—उक्तसङ्ग्रहमवलम्ब्य केवलज्ञानदर्शनयोरैक्यं स्वीकृतवान्, केवलज्ञानदर्शनयोरैक्ये यदेव केवलज्ञानावरणं तदेव केवलदर्शनावरणमिति तत्क्षयलक्षणकारणघटितसामग्र्या एकत्वात्सामग्रीभेदाभावान्न यौगपद्यं तयोः, नापि च केवलदर्शनम्प्रति केवलज्ञानस्य कारणत्वान्तरं गौरवावहं कल्पनीयमिति न तयोः क्रमोऽपि, किन्त्वेकस्याप्येकसामग्रीतो जायमानस्य केवलोपयोगस्याशेषसामान्यविषयकत्वाद्दर्शनत्वमशेषविशेषविषयकत्वाज्ज्ञानत्वमित्युपाधिप्रयुक्तो भेदः, न तु वस्तुगत्येति युक्तम्, तथा च सर्वनयमये स्याद्वादे तत्तन्नयभेदावलम्बनेन तत्तत्पक्षसूत्रणसूत्रधारास्त्रयोऽपि सूरयः स्याद्वादसेवैकरसिका एवेति तेषां पक्षा युक्त्युपपन्नत्वान्न विषमा इत्युपसंहरति तस्मादिति पद्यम् । अत्र 'अपि' इत्यस्य स्थाने 'अमी' इत्यपि पाठः ॥२॥ यथा चोपयोगलक्षणो जीव इति निरुपयोगस्स कदापि न भवतीति चित्सामान्यमुपयोगापराभिधानमनाद्यनन्तमेव तद्रूपं यत्पुरुषपदेनोच्यते तस्यैव च केवलोपयोगो विशेषस्सादिरनन्तश्चेति केवलोपयोगात्मना तदपि चित् साद्यपर्यवसितमिति गीयते, तथा तदेव चित्सामान्यं स्वविशेषस्य केवलोपयोगस्य यौ विशेषौ ज्ञानदर्शनस्वभावौ साकारोपयोगनिराकारोपयोगौ तद्रूपसूक्ष्मांशापेक्षया क्रमिकमपि सम्भवति । तथा च केवलोपयोगस्यैव चित्सामान्यविशेषस्य मुख्यतया विवक्षितत्वे तदंशयोरवान्तरविशेषयोस्साकारानाकारोपयोगयोस्तद्रूपप्रविष्टत्वेन गौणतया विवक्षितत्वे साद्यपर्यवसितत्वं, साकारानाकारोपयोगयोरेव मुख्यतया विवक्षितत्वे उपयोगसामान्यस्य च गौणतयाऽऽश्रयणे क्रमिकत्वमित्येवं व्यवस्था सूरीणामभिमता सूपपादैवेत्याशयेनाह चित्सामान्यमिति । केवलाख्ये विशेषे पुरुषपदभाक्—पुरि वपुषि शेते इति पुरुषः

आत्मा, पुरुषपदं भजते स्ववाचकत्वसम्बन्धेन सेवते इति पुरुषपदभाक्, गुणगुणिनोरभेदादा-त्मवाचिपुरुषपदवाच्यं यदेव चित्सामान्यं तदेव तद्रूपेण-केवलरूपेण साद्यनन्तं स्फुटं यथा स्यात्तथाऽऽगमे अभिहितं-गदितम्, इदं-तदेवेदं चित्सामान्यं सूक्ष्मैरंशैः ज्ञान-दर्शनोपयोगलक्षणैः क्रमवदप्युच्यमानं-पूज्यैरभिधीयमानं न दुष्टं-दुष्टन्न भवति, अपेक्षाभेदे-नानन्तत्वक्रमिकत्वयोरेकत्र सत्त्वे विरोधाभावात्, तत्-तस्मात्कारणात्सूरीणामियं मुख्य-गौणव्यवस्थाऽभिमतेत्यर्थः ॥३॥ यदेत्थं नयभेदावलम्बनेन सूरिपक्षत्रयाभिमतमुख्यगौण-व्यवस्था सामस्त्यञ्जमञ्चति तदा विस्मयोऽपि नात्र करणीयः, आगमे यथाऽन्ये नयविवादपक्षा-स्तथैतेऽपि सुसङ्गता एवेत्याह-तमोपगमेति । यद्यपि निरावृताऽजन्यसर्वदावस्थितस्वयमा-विर्भूतचैतन्यस्वरूप एवात्मा निश्चयतस्तथापि व्यवहारतो मतिज्ञानाद्यावरणकर्मलक्षणतमसोऽ-पगमे सति चिज्जनुः-चैतन्यस्य जन्म भवति, क्षणभिदा-प्रतिक्षणं चैतन्यमन्यदन्यदेव विशिष्ट-विशिष्टतरं भवति निदानोद्भवः स्वस्वप्रतिनियतकारणतोऽस्योद्भव इत्याद्या नयवि-वादपक्षा बहुतरा यथा श्रुते-आगमे श्रुता-अभिहिताः, अपेक्षाभेदेन तेषामुपपन्नत्वान्न तेषु कथमेतदघटमानं घटामटतीति विस्मयो भवति यथा, तथा सूरिपक्षत्रये क इव विस्मयो भवतु, न कोऽपि विस्मयः, पक्षत्रयस्यापि नयभेदावलम्बनेनोपपादितत्वात्, नु-वितर्के, क्व सूरिपक्षत्रयमध्ये कस्मिन् पक्षे धियां प्रधानपदवी दवीयसी दृश्यते ?, काक्वा न कुत्रापीत्यर्थः, सूरिपक्षत्रयमप्यपेक्षाभेदेनोपपद्यत एवेति भावः ॥४॥ ननु विरोधे जाग्रति सति कथं पक्षत्रयमपि समीचीनतयाऽभ्युपगन्तुमर्हमित्यत आह प्रसह्येति, यत्र स्वसमये-जैनसिद्धान्ते प्रसह्य हठादेव एकान्तत इति यावत्, सदसत्त्वयोः-सत्त्वासत्त्वयोः, एतच्च नित्य-त्वानित्यत्वादीनामप्युपलक्षणम्, विरोधनिर्णायकं यत्र सत्त्वन्तत्र नासत्त्वमित्येवमेकाधि-करणावृत्तित्वलक्षणस्य विरोधस्य निर्णायकं-निर्णयजनकं, हि यतः, न-नैव किञ्चित्, सत्त्वा-सत्त्वनित्यत्वाऽनित्यत्वाद्योर्विरुद्धयोरप्यपेक्षाभेदेनाविरुद्धत्वात्, स्वद्रव्यक्षेत्रकालभावावच्छेदेन सत्त्वस्येव परद्रव्यक्षेत्रकालभावावच्छेदेनासत्त्वस्यापि द्रव्यापेक्षया नित्यत्वस्येव पर्यायापेक्षयाऽ-नित्यत्वस्यापि चैकस्मिन् वस्तुनि सत्त्वे बाधकप्रमाणाभावात्, कपिसंयोगतदभावयोरिव सत्त्वासत्त्वनित्यत्वानित्यत्वादीनामव्याप्यवृत्तित्वेन भिन्नावच्छेदेन स्वाभावसामानाधि-करण्यानुभवात्, तथा विशेषणविशेष्ययोरपि नियामकं न-इदमस्य विशेषणमि-दञ्चास्य विशेष्यमित्येवं प्रतिनियतविशेषणविशेष्यभावस्यापि नियामकं न किञ्चित्, यद्यस्य विशेषणं तत्तस्य विशेष्यमपि सम्भवति, यद्यस्य विशेष्यं तत्तस्य विशेषणमपि सम्भवतीत्यर्थः । गुणेति-स्यात्पदात् स्यादस्तीत्यादिवाक्यात्स्यात्पदबलादस्तित्वादेः प्रधानतया नास्तित्वादे-र्गुणतया अपेक्षया स्वस्वनिमित्तभेदापेक्षया मतिर्बोधो भवतीत्यतो भजनोर्जिते-अपेक्षा-भेदेन विरुद्धयोरप्यविरुद्धतया प्रतिपादके अत्र-अस्मिन् स्वसमये-जैनसिद्धान्ते किं न सङ्गच्छते सर्वमेव सङ्गच्छते, स्याद्यौगपद्यं नदर्शनयोः, स्यात्क्र-

भिकत्वं ज्ञानदर्शनयोः, स्यादपर्यवसितत्वं स्यात्पर्यवसितत्वञ्च तयोरित्येव स्यात्पदयोजनया जैनसिद्धान्ते सर्वमेव नयभेदावलम्बनेन चतुरस्रमिति भावः । न केवलमन्यविषयेष्वेव स्याद्वादः किन्तु स्याद्वादेऽपि स्याद्वादोऽनेकान्तेऽप्यनेकान्तः, स्याद्वादः स्यादेकान्तवादः स्यादनेकान्तवाद इति, अनेकान्तः स्यादेकान्तः स्यादनेकान्त इति, प्रमाणापेक्षया स्याद्वादत्वमनेकान्तत्वं च नयापेक्षयैकान्तवादत्वमेकान्तत्वञ्च, सेयमनेकान्तधीर्नयस्य प्राधान्यताटस्थ्याभ्यां विवक्षागोचरतापन्नैकान्तत्वानेकान्तत्वाद्युपाधिसंवलितार्थावगाहिनी सती न गुरुसम्प्रदायक्रमबाधिका भवति प्रत्युतेत्थमेव सद्दर्शनं धीधना आप्ता सर्वथोपपन्नतास्पदं कथयन्तीत्याह—**प्रमाणेति**, स्वसमयेऽपि—जैनसिद्धान्तेऽपि, स्याद्वादे अनेकान्तत्वे च, **अनेकान्तधीः** कथञ्चिदेकान्तवादत्वकथञ्चित्स्याद्वादत्वोभयधर्मप्रकारिका कथञ्चिदेकान्तत्वकथञ्चिदनेकान्तत्वप्रकारिका वा बुद्धिः, **प्रमाणनयसङ्गता**—प्रमाणनयावलम्बनेनानेकान्तत्वादिरत्नविषयीभूतार्थे प्रवृत्ता **नयस्य यः** स्मयोऽभिमानः प्राधान्यमिति यावत्, या च **नयस्य तटस्थता**—प्रमाणस्य प्राधान्ये नयस्य गौणता, ताभ्यामुल्लसन्तो वस्तुनि प्रकारतयाऽवभासमाना ये उपाधयोऽनेकान्तत्वादिधर्मास्तैः **किर्मीरिता**—चित्रिता तादृशाशेषधर्मावगाहिनीति यावत्, एवम्भूता सती **सुगुरुसम्प्रदायक्रमं** सुगुरुपरम्पराभ्युपगतार्थपरिपाटीं **कदाचन न बाधते**, प्रत्युतैवंविधाऽनेकान्तधीस्तत्परिपोषिकैव भवति, **हि**—यतः, **उरुधियः** धीवैभवशालिनः **समञ्जसपदं**—समञ्जसस्थानं यथाभ्युपगमे सति सर्वं समञ्जसं भवति सम्यगुपपद्यते तत् **सद्दर्शनं वदन्ति**, तदेव सद्दर्शनं यत्र सत्त्वासत्त्वादिकं सर्वमपि वस्तुनि सङ्गतिमङ्गति एवम्भूतश्च स्याद्वाद एवेति स्याद्वाद एव सद्दर्शनमिति भावः ॥ ६ ॥ ये च नयानां तत्त्वमजानन्तः हतधियस्तद्विपक्षेषु विरोधमुद्घोषयन्ति तानधिकृत्याह—**रहस्यमिति** । वत—आश्चर्ये, आश्चर्यं खल्वेतत्, खलाः—दुर्जनाः **हतधियो**—नष्टसद्बुद्धयो **नयानां**—सङ्ग्रहादितत्तन्नयानां, **रहस्यं** तात्पर्यार्थं, **किमपि न जानन्ते**—अल्पमात्रमपि नैवावगच्छन्ति, अत एव **विविधबुधपक्षे**—तत्तन्नानाविधस्वस्ववृद्धसम्प्रदायायाततत्तन्नयापेक्षतत्तत्सूत्राभिप्रायभ्राजिष्णुपूर्वोक्ततत्तत्प्राज्ञपक्षे **विरोधं भाषन्ते, अमी चन्द्रादित्यप्रकृतिविकृतिव्यत्ययगिरा(रः)** चन्द्रस्वभावं रवावुद्गिरन्ति रविस्वभावं चन्द्रे प्रलपन्तीत्येवं स्वभावास्स्वीयातिजडत्वस्वभावं प्रकटितवन्तः, **अहह**—खेदे, **कुत्रापि**—कस्मिंश्चिदपि विषये, **निरातङ्का न गुणान्वेषणपराः**—निरर्गला भवभयविनिर्मुक्तास्सन्तो यथा तथा प्रलापिनो न गुणान्वेषणपराः किन्तु परदूषणान्वेषणतत्परा एवेति भावः । यद्वा अमी चन्द्रादित्यप्रकृतिविकृतिव्यत्ययगिरः । "सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः ॥ १ ॥" इति वराहसंहितावचनात् जलमये चन्द्रमसि सूर्यकिरणानां प्रवेशादेव तमोनाशकत्वं चन्द्रमसो भवतीत्यवगमात् चन्द्रमसो विकृतित्वं प्रकृतित्वन्तु आदित्यस्येति सिद्धं भवति, तत्र चन्द्रमस एव प्रकृतित्वं सूर्यस्यैव विकृतित्वमित्याकारकं व्यत्ययं व्यत्यासं गिरन्तो जना यथा स्वीयमज्ञत्वमेव प्रकटयन्ति

न्तरम्, पूर्वाणि चत्वारि ज्ञानानि मत्यादीनि, क्षयोपशमजानि मतिज्ञानावरणादिक्षयोपशमजनितानि, केवलं तु कर्मक्षयादेव। तस्मान्न केवलिनः शेषाणि छाद्मस्थिकानि ज्ञानानि भवन्ति, मन्दप्रकाशे आवरणमेव हेतुरित्युक्तत्वात् । ये तु नैयायिकादयो योगजधर्मप्रत्यासत्तिजन्यं मानसं विलक्षणं योगिज्ञानमिच्छन्ति, तैरतीन्द्रियं योगिज्ञानं कथमुपपादनीयम्, मनसोऽपि तन्मते इन्द्रियत्वात्, कथं च चाक्षुषादिसामग्रीकाले योगिनामपि तदुत्पादः, मानससामग्र्याः सर्वापेक्षया दुर्बलत्वात्, मानसेतरज्ञानसामग्र्याः प्रतिबध्यतावच्छेदककोटौ भोगान्यत्ववत्तत्त्वसाक्षात्कारान्यत्वमपि देयमित्यभ्युपगमे च भोगसामग्र्याः इव तत्त्वसाक्षात्कारसामग्र्याः सर्वतो बलवत्त्वात् योगजधर्मवतां ज्ञानान्तरोत्पत्तिर्न स्यादेव, किन्तु, तत्त्वसाक्षात्कारधारैव स्यात्, तथा चानन्ततदुत्पत्तिध्वंसकल्पनायां गौरवात् योगजधर्मजन्यमेकमनन्तं ज्ञानमेव कल्पयितुं युक्तम्, तदेवासहायं केवलनामधेयमिति किं तत्र मनः प्रत्यासत्त्यन्तरकल्पनया, एवं सूरिपक्षेषु विरोधप्रदर्शनेन स्वीयमनवबोधमात्रं प्रकाशयन्तोऽमी जना अपि अहह कुत्रापि निरातङ्का न गुणान्वेषणपराः । तदर्थस्तु पूर्ववत् । अमी चन्द्रादित्यप्रमृतिविकृतिव्यत्ययगिर इति पाठे तु चन्द्रादित्यप्रमृतीनां चन्द्रसूर्यादीनां परस्परविरुद्धस्वभावानां विकृतेः विकारस्य शीतोष्णस्पर्शादेः व्यत्ययं व्यत्यासं चन्द्र उष्णस्पर्शवान् सूर्यश्च शीतस्पर्शवानित्याकारकं विपरिवर्तनं ये गिरन्ति तद्वत् सूरिवचनेषु त्वयेषु विरोधमुद्भावयन्तः स्वीयमज्ञानमेव प्रदर्शयन्तोऽमी अहह कुत्रापि निरातङ्का न गुणान्वेषणपराः, तदर्थस्तु पूर्ववत् ॥ ७ ॥ इत्यलं पल्लवितेन ।

ननु भवतु मतिज्ञानादीनि चत्वारि ज्ञानानि क्षयोपशमजानि तथापि तानि केवलज्ञानोत्पत्तौ तत्स्वामिनि कथं नोत्पद्यन्ते इत्याशङ्कायामाह मन्दप्रकाशे आवरणमेव हेतुरित्युक्तत्वादिति–केवलज्ञानावरणावृतस्य जीवस्य घनपटलाच्छादितस्य सूर्यस्येव यो मन्दप्रकाशो मतिज्ञानादिसंज्ञकस्तस्मिन्केवलज्ञानावरणमेव हेतुरिति केवलज्ञानोत्पत्तौ तदभावात्तत्कार्यभूतानि मन्दप्रकाशात्मकमतिज्ञानादीनि क्षायोपशमिकानि नोत्पद्यन्ते इत्यर्थः । योगजधर्मप्रत्यासत्तिजन्यमिति–योगाभ्यासजनितो युक्तयुञ्जानयोगिद्वैविध्याद् द्विप्रकारो यो धर्मस्तल्लक्षणप्रत्यासत्तिजन्यमित्यर्थः । मानससामग्र्यास्सर्वापेक्षया दुर्बलत्वादिति–रूपरसादिज्ञानज्ञानतज्ज्ञानादिमानसज्ञानसामग्र्यास्सर्वत्र विद्यमानत्वेन तद्धितिपरम्परोत्पादप्रसक्तया रूपरसादिचाक्षुषरासनादिप्रत्यक्षात्मकविषयान्तरसञ्चारो न स्यादिति मानसप्रत्यक्षम्प्रति चाक्षुषादिसामग्र्या मानसेतरज्ञानसामग्रीत्वेन प्रतिबन्धकत्वकल्पनेन चाक्षुषादिसामग्र्यास्सत्त्वे चाक्षुषादिप्रत्यक्षस्यैवोदयेन तदानीं विद्यमानाया अपि मानससामग्र्या अकिञ्चित्करत्वादिति भावः । मानसेतरज्ञानसामग्र्याः प्रतिबध्यतावच्छेदककोटाविति–मानसेतरज्ञानसामग्रीनिष्ठप्रतिबन्धकतानिरूपिता या मानसप्रत्यक्षनिष्ठप्रतिबध्यता तदवच्छेदककोटावित्यर्थः । भोगान्यत्ववदिति–मानसेतरज्ञानसामग्रीकाले विद्यमानयोरपि सुखदुःखयोर्मनसा साक्षात्कारो न स्यात्, न चैवमस्त्विति वाच्यम्, सुखदुःखयोरवश्यं वित्तिवेद्यत्वाभ्युपगमात्, तदन्यथानुपपत्त्या सुखदुःखसाक्षात्कारलक्षणभोगान्यत्वविशेषणमुपादेयं तद्वदित्यर्थः । किं तत्र मनः प्रत्यासत्त्यन्तरकल्पनयेति–एतेन [illegible]

अन्यथाऽवच्यादिस्थानीयज्ञानान्तरेऽपि प्रत्यासत्त्यन्तरकल्पनापत्तेरिति युक्तमुत्पश्यामः ॥

एवं मत्यादिज्ञानपञ्चकं प्रमाणं प्रदर्श्य प्रमाणाभासमाविष्करोति

## सूत्रम्–मतिश्रुतावधयो विपर्ययश्च ॥ १ ॥ ३२ ॥

(भाष्यम्) मतिज्ञानं श्रुतज्ञानमवधिज्ञानमिति विपर्ययश्च भवति, अज्ञानं चेत्यर्थः । ज्ञानविपर्ययोऽज्ञानमिति अत्राह । तदेव ज्ञानं तदेवाज्ञानमिति, ननु छायातपवच्छीतोष्णवच्च तदत्यन्तविरुद्धमिति । अत्रोच्यते, मिथ्यादर्शनपरिग्रहाद्विपरीतग्राहकत्वमेतेषाम् । तस्मादज्ञानानि भवन्ति । तद्यथा–मत्यज्ञानं श्रुताज्ञानं विभङ्गज्ञानमिति । अवधिर्विपरीतो विभङ्ग इत्युच्यते ॥ अत्राह उक्तं भवता सम्यग्दर्शनपरिगृहीतं मत्यादिज्ञानं भवति, अन्यथाऽज्ञानमेवेति, मिथ्यादृष्टयोऽपि च भव्याश्चाभव्याश्चेन्द्रियनिमित्तानविपरीतान्स्पर्शादीनुपलभन्ते उपदिशन्ति च स्पर्शं स्पर्श इति, रसं रस इति, एवं शेषान्, तत्कथमेतदिति । अत्रोच्यते । तेषां हि विपरीतमेतद्भवति ॥

(यशो० टीका) ज्ञानाधिकाराद्विपर्ययोऽज्ञानमिति । चकाराद् ज्ञानान्यज्ञानानि चेत्यर्थं इत्याशयवान् व्याचष्टे–मतिज्ञानमित्यादि । विरोधमाशङ्कते अत्राहेत्यादिना, आश्रयभेदेन परिहरति अत्रोच्यत इत्यादिना, मिथ्यादृष्टिपरिगृहीता मतिर्मत्यज्ञानं, मिथ्यादृष्टिपरिगृहीतं श्रुतं श्रुताज्ञानं, क्षात्कारत्वजातेर्मानसत्वव्याप्यतयैव कल्पयितुं युक्तत्वेन तदवच्छिन्नम्प्रति योगजधर्मलक्षणमनःप्रत्यासत्तिरेव कारणमित्यपि निरस्तम्, निदिध्यासनादेः कर्मान्तरस्येव विहितत्वेन दोषक्षयरूपसत्त्वशुद्धावेवोपयोगात्, तज्जन्यतावच्छेदकतत्त्वसाक्षात्कारत्वजातेर्मानसाव्यावृत्तितया एव युक्तत्वात्, अन्यथैकतरोत्पत्तिकाले तदन्योत्पत्तिवारणाय तत्त्वसाक्षात्काराख्यमानसे तदितरमानसे च हेत्वन्तरादिकल्पने महागौरवं स्यादिति ॥ ३१ ॥

द्वात्रिंशत्तमसूत्रमवतारयन्नाह एवं मत्यादिज्ञानपञ्चकं प्रमाणमित्यादि । विपर्ययोऽज्ञानमिति– मूलसूत्रोक्तविपर्ययशब्देनात्राज्ञानं वाच्यमित्यर्थः । तत्र हेतुमाह ज्ञानाधिकारादिति–जह दुव्वयणमवयणं, कुच्छियसीलं असीलमसईए । भण्णइ तह नाणं पि हु, मिच्छद्दिट्ठिस्स अन्नाणं । ५२० । इति भाष्योक्तेः अवचनं–अशीलमित्यत्रेवाज्ञानमित्यत्र नञः कुत्सार्थत्वात् कुत्सितं वचनमवचनमिव कुत्सितं शीलमशीलमिव कुत्सितं ज्ञानमज्ञानम्, अप्रमाणत्वलक्षणकुत्सितत्वश्च मिथ्यात्वसंवलितत्वात् । चकारादिति सूत्रस्थचकारादित्यर्थः । ज्ञानान्यज्ञानानि चेति–मतिज्ञानश्रुतज्ञानावधिज्ञानानि यथाऽवस्थितार्थावगाहित्वेन तद्वति तत्प्रकारकत्वाद् यथार्थानि प्रमाज्ञानात्मकानीति यावत् । मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानानि चार्थव्यभिचारित्वेन तदभाववति तत्प्रकारकत्वादयथार्थानि अप्रमाज्ञानात्मकानि ज्ञानाभासानीति यावदित्यर्थः । विरोधमाशङ्कत इति एकत्र स्थले छायाऽऽतपवदेकस्मिन्नेव पुरुषे यदेव मत्यादिज्ञानत्रयमर्थाऽव्यभिचारित्वात्सम्यग्ज्ञानरूपं तदेव चार्थव्यभिचारित्वान्मिथ्याज्ञानरूपमिति विरुद्धत्वान्न युक्तमित्याशङ्कत इत्यर्थः । नैकस्मिन्नेवाधारे ज्ञानत्रयमज्ञानत्रयञ्चेति ब्रूमः, किन्तु भिन्न एवाश्रये इत्येवमुक्ताशङ्कां परिहरति–आश्रयभेदेन परिहरतीति । क तर्हि ज्ञानं क चाज्ञानमित्याशङ्कानिवृत्त्यर्थमाह मिथ्यादर्शनपरिगृहीतेत्यादि । मिथ्यादृष्टिपरिगृहीता चेन्मतिरज्ञा-

मिथ्यादृष्टिपरिगृहीतोऽत्रावधिर्विभङ्ग इत्युच्यते विपरीतप्रकार इत्यर्थः । नन्वज्ञानमित्यत्र नञ् कुत्सायां, तथा चाप्रमाणमित्यर्थः, अप्रामाण्यं च तदभाववति तत्प्रकारकत्वम्, तच्च काचकामलादिदोषवतः सम्यग्दृष्टेरपि शङ्खः पीत इति ज्ञाने भवति, प्रामाण्यं च तद्वति तत्प्रकारकत्वम्, तच्च मिथ्यादृष्टेरपि घटादौ घटत्वादिप्रकारकज्ञाने संभवतीति कोऽयं सम्यग्दृष्टिमिथ्यादृष्टिपरिग्रहयोर्विशेष इति शङ्कते । अत्राहेत्यादिना, मिथ्यादृष्टयोऽपि चेति, मिथ्यादृष्टयस्त्रिविधा अभिगृहीतमिथ्यादर्शना १, अनभिगृहीतमिथ्यादर्शनाः २, प्रवचनार्थसन्देहिनश्च ३, अपिः सम्भावने, चः समुच्चये । ते मिथ्यादृष्टयो द्विधा—भव्याश्चाभव्याश्च । सेत्स्यन्तो भव्याः । असेत्स्यन्तोऽभव्याः । ते द्विविधा अपि इन्द्रियं श्रोत्रादिनिमित्तं सहकारिकारणं येषु तान्, अविपरीतान् यथावस्थितान् स्पर्शरसरूपगन्धशब्दान्, उपलभन्ते, उपदिशन्ति चान्येभ्यः । तथा चाविसंवाद्यर्थक्रियाकारित्वेनापि प्रामाण्यम्, अवैपरीत्यं दर्शयति । स्पर्शं शीतादिकम्, स्पर्शोऽयमित्यध्यवसतीत्यवैपरीत्यम् । रसं रस इति । एवं शेषान् गन्धरूपशब्दानवैपरीत्येन । तत्कथमेतदिति—बाधके हि प्रत्यये सत्यऽयथार्थता प्रत्ययान्तरस्याश्रयितुं शक्या, यथा शुक्तिकायां रजतबुद्धेः, तत्र विशेषदर्शनावतारे इदं न रजतमिति बाधदर्शनात्, नैवमत्र बाधकं कंचित्प्रत्ययं पश्यामो यद्बलान्मिथ्यादृष्टीनां तदयथार्थं ज्ञानं मन्येमहि । अत्रोच्यते, तेषां मिथ्यादृष्टीना तत्स्पर्शादिज्ञानं विपरीतमेव भवति । कुतः ? ।

मत्यज्ञानमिति निर्दिश्यते, कथञ्चित्तदतदुभयरूपानेकान्तात्मकवस्तुनो नियतैकधर्मवत्त्वलक्षणैकान्ततया ग्राहित्वेन मिथ्यादृष्टेर्मतिर्मत्यज्ञानम्, अप्रमतिज्ञानमित्युच्यते । एवं श्रुतादावपि ज्ञेयम् । सम्यग्दृष्टिपरिगृहीता चेन्मतिः तदा मतिज्ञानशब्देन वाच्या भवति, अनेकान्तात्मकवस्तुग्राहित्वेन मत्यात्मकं सम्यग्दृष्टिज्ञानं प्रमात्मकमिति भावः । विभङ्गज्ञानमिति भाष्ये विभङ्गश्च तज्ज्ञानञ्चेति विभङ्गज्ञानम्, इह च कुत्सा विभङ्गशब्देनैव गमितेति न ज्ञानशब्दो नञा विशेषितः । अत्र विरुद्धा भङ्गा वस्तुविकल्पा यस्मिंस्तद्विभङ्गं यद्वा विपरीतो भङ्गः—परिच्छित्तिप्रकारो यस्य तद्विभङ्गम्, तच्च ज्ञानं च विभङ्गज्ञानमित्यादिकाऽपि शास्त्रे व्युत्पत्तिर्दृश्यत इति । विभङ्गपदस्यार्थमाह—विपरीतप्रकार इत्यर्थ इति—अन्यथावस्तुपरिच्छेदीति भावः । अत्राहेत्यादिभाष्येण यदाशङ्कितं तत्प्रतिविधानहेतुकथनविधया त्रयस्त्रिंशत्तमसूत्रपीठिकानिमित्तं तद्भाष्यमवतारयति—नन्वज्ञानमित्यत्रेत्यादिना । अवैपरीत्येनेति—अत्राध्यवस्यतीत्यनुषज्यते ॥ १ ॥ ३२ ॥

त्रयस्त्रिंशत्तमसूत्रमवतारयति—कुत इति ।

**सूत्रम् सदसतोरविशेषात् यदृच्छोपलब्धेरुन्मत्तवत् ॥ १ ॥ ३३ ॥**

( भाष्यम् ) यथोन्मत्तः कर्मोदयादुपहतेन्द्रियमतिर्विपरीतग्राही भवति सोऽश्वं गौरित्यध्यवस्यति गां चाश्व इति लोष्ठं सुवर्णमिति सुवर्णं लोष्ठ इति लोष्ठं च लोष्ठ इति सुवर्णं सुवर्णमिति, तस्यैवमविशेषेण लोष्टं सुवर्णं सुवर्णं लोष्ठमिति विपरीतमध्यवस्यतो नियतमज्ञानमेव भवति तद्वन्मिथ्यादर्शनोपहतेन्द्रियमतेर्मतिश्रुतावधयोऽप्यज्ञानं भवन्ति ॥ उक्तं ज्ञानं, चारित्रं नवमेऽध्याये वक्ष्यामः । प्रमाणे चोक्ते । नयान्वक्ष्यामः । तद्यथा ।

( यशो० टीका ) सद्विद्यमानं स्वरूपेणोत्पादादि, असदविद्यमानं पररूपेण तत्, तयोरविशेषोऽभजना, तस्मान्मिथ्यात्वमेकनयाश्रितमिथ्यादृष्टिज्ञानस्य, स्पर्शोऽयमित्यादितदीयप्रत्यक्षस्याप्येकान्तनयवासनासंवलनैकान्तनयात्मकत्वं भावनीयम् । द्वितीयहेतुं भाष्यकृद्व्याचष्टे यथोन्मत्त इत्यादि । यथा उन्मत्तः पिशाचादिगृहीतः, कर्मोदयात्—कर्मणां पुराकृतानां विपाकात्, यदा उपहतेन्द्रियमतिः—उपहतेन्द्रियमनाः संवृतो भवति, तदा विपरीतग्राही अन्यथावस्थितवस्तुपरिच्छेदी, भवति । यतः, स उन्मत्तः, अश्वं सन्तं, गौरयमित्यध्यवस्यति, गां च सन्तमश्वोऽयमिति, सर्वेष्वेव पदार्थेषून्मत्तस्य यदृच्छयोपलब्धिर्न कतिपयेष्वित्युदाहरणभूयस्त्वेन कथयति । लोष्टं पृथिवीपरिणामं मृदादिकं, सुवर्णमित्यध्यवस्यति, सुवर्णं वा लोष्टमिति, कदाचिच्च लोष्टं लोष्टमेवावधारयति, कदाचिच्च सुवर्णं सुवर्णमित्येव, तस्योन्मत्तस्य 'एवम्' उक्तेन, अविशेषेण लोष्टं सुवर्णं सुवर्णमध्यवस्यतो यथा नियतं निश्चितमज्ञानमेव । तद्वन्मिथ्यादर्शनोपहतेन्द्रियमनस्कस्य, मतिश्रुतावधयोऽप्यज्ञानमेव भवन्तीति, बहुप्रकारभ्रान्तज्ञानप्रवाहपतितं किञ्चिदंशेऽभ्रान्तमपि ज्ञानं तेषां भ्रान्तमेव, भ्रमशक्तेरनपगमादिति भावः । इदमत्र बोध्यम्—तद्वति तत्प्रकारकज्ञानत्वं प्रमात्वमिति प्रमालक्षणं परेषां मतेऽनुपपन्नम्, निर्विकल्पकेऽव्याप्तेः, तदभाववति तत्प्रकारकज्ञानत्वं भ्रमत्वं तद्भिन्नज्ञानत्वं प्रमात्वम्, एवं च निर्विकल्पकसङ्ग्रह इत्यपि, न सम्यग्, भूतलं घटवत्पटवच्चेति ज्ञानेंऽशे भ्रमप्रमात्मकेऽव्याप्तेः । निर्विकल्पकमनुभयात्मकं तृतीयमेवेत्यभ्युपगमे चोक्तमुभयात्मकं तुरीयं प्रसज्येतेत्यपसिद्धान्तः । किं च तद्वतीत्यादौ तच्छब्दार्थस्याननुगतत्वाद्रजतत्ववद्विशेष्यकत्वे सति रजत-

ननु सम्यग्दृष्टेरपि मिथ्यादृष्टेरिव स्पर्शे स्पर्शोऽयमित्येवमेव प्रत्यक्षज्ञानं भवतीति तज्ज्ञानस्य मिथ्यात्वे किं बीजमित्याशङ्कायामाह स्पर्शोऽयमित्यादितदीयप्रत्यक्षस्यापीत्यादि परमार्थवृत्त्या स्पर्शे स्पर्शत्वधर्मवत्तदितरानन्तधर्मसद्भावेऽप्येकान्तनयवासनासंवलिततया मिथ्यादृष्टेस्स्पर्शत्वमात्रस्यैकस्यैव धर्मस्य ग्राहकं स्पर्शोऽयमिति प्रत्यक्षात्मकं यज्ज्ञानमुत्पद्यते तदेकनयगोचरैकधर्ममात्रावगाहित्वेन मिथ्याज्ञानम्, यतो घटगतस्पर्शस्याप्यनेकान्तात्मकतयाऽनन्तस्वपर्यायाणां साक्षात्सम्बन्धेन परपर्यायाणां च स्वाऽभाववत्त्वरूपपरम्परासम्बन्धेन परमार्थवृत्त्या तत्र सद्भावेऽपि मिथ्यात्वदोषबलात्तज्ज्ञानाभावेन तन्निराकरणपूर्वकवस्त्वेकदेशमात्रग्राहिमिथ्यानयज्ञानेन सर्वथा स्पर्शोऽयमित्येवमेकान्तस्पर्शत्वावधारणात्तज्ज्ञानं भ्रान्तमेव, एकस्मिन्नपि कलानिधौ तिमिरादिदोषबलाद् भ्रान्ताद्वित्वप्रत्ययवद्, अत एव तद्भवबीजमिति गीयते त्रिभुवनगुरूपदिष्टानेकान्तात्मकवस्तुतत्त्वज्ञैः, सम्यग्दृष्टेस्तु जिनेन्द्रभगवन्मुखारविन्दविनिर्गतस्याद्वादस्य पदार्थतत्त्वव्यापकत्वेन ज्ञानादनेकान्तवासनावासिततया स्पर्शेऽपि कथञ्चित्स्पर्शोऽयमित्येवं प्रत्यक्षज्ञानम्, तत्रानन्तधर्मात्मकत्वद्योतककथञ्चित्पदेनैवानुवृत्तिव्यावृत्तिधर्मद्वारा सर्वधर्मज्ञानमिति तज्ज्ञानं सम्यग्ज्ञानं प्रमाणज्ञानमिति यावत्, अत एव मोक्षैकपथिकमिति मनीषिभिर्गीयते इति भावः । अंशे भ्रमप्रमात्मकेऽव्याप्तेरिति—भूतलं घटवत्पटवच्चेति समूहालम्बनज्ञानमंशे प्रमात्मकमिति लक्ष्यीभूते तस्मिन्नंशे भ्रमात्मकतया भ्रमभिन्नज्ञानत्वलक्षणस्याऽवृत्तेरव्याप्तिस्स्यादित्यर्थः । अनुभयात्मकमिति—न प्रमात्मकं न वा भ्रमात्मकमित्यर्थः । उक्तमुभयात्मकमिति—तत्स्वं

निवेशं विनाऽगतेः । तथा च तदवच्छेदकावच्छिन्नत्वं प्रकारतायां विशेष्यतायां सांसर्गिकविषयतायां वा निवेशनीयमित्यत्र विनिगमकाभाव एव स्याद्वादसाधकः । अपि च तत्सम्बन्धवद्विशेष्यकत्वदाने शब्दे गगनं घटत्वे घटो बदरे कुण्डमित्यादिप्रतीतीनां प्रमात्वापत्तिः, तद्वद्विशेष्यकत्वदाने च गगने शब्द इत्यादिज्ञानेऽप्रमात्वापत्तिरनाश्रितस्याद्वादेन कथं वारणीया ? । तदाश्रयणे तु सम्बन्धमात्रापेक्षायां प्रमात्वमाधारत्वापेक्षायां त्वप्रमात्वमिति सुकर एव विवेकः । सप्तम्याः अतन्त्रत्वात् । अपि च शुक्ताविदं रजतमित्यत्रापि "सर्वं ज्ञानं धर्मिण्यभ्रान्तम्" इति न्यायाद्धर्म्यंशे प्रमात्वमेव, रजतत्वप्रकारांशेऽपि नाप्रामाण्यं, वैज्ञानिकसम्बन्धेन तत्सत्त्वादिति समवायांशे तद्वक्तव्यम्, तदपि विविक्तविवेके न सम्भवतीति विषयताविशेष एव प्रमात्वं

विशेष्यतायां तन्निवेशे प्रकारसंसर्गयोरन्यकालादिवैशिष्ट्यावगाहिभ्रमे संसर्गतायां तन्निवेशे प्रकारविशेष्ययोरन्यकालादिवैशिष्ट्यावगाहिभ्रमे चातिव्याप्तेः, सर्वत्र तन्निवेशे एकान्तवादे एकत्रैव तदवगाहिन्यां प्रमायामव्याप्तेः स्याद्वादाश्रयणं विना गत्यभावात्तत्स्याद्वादो बलादापततीतीत्यमेकान्तवादे यो विनिगमकाभावस्स एव स्याद्वादसाधक इत्यर्थः । तत्सम्बन्धवद्विशेष्यकत्वदाने सम्बन्धो हि द्विनिष्ठ इति शब्दे समवायसम्बन्धावच्छिन्नाधेयत्वात्मकस्य सम्बन्धस्यानुयोगितया, प्रतियोगितया गगने च सत्त्वेन, घटत्वानुयोगिकस्य च तस्य प्रतियोगितया घटे सत्त्वेन बदरानुयोगिकस्य संयोगसम्बन्धावच्छिन्नाधेयत्वस्य च प्रतियोगितया कुण्डे सत्त्वेन शब्दघटत्वबदरसम्बन्धवद्गगनघटकुण्डविशेष्यकशब्दघटत्वबदरप्रकारकत्वाच्छब्दे गगनं घटत्वे घटो बदरे कुण्डमित्यादिप्रतीतीनां प्रमात्वापत्तिः, प्रमालक्षणे तद्वद्विशेष्यकत्वविशेषणोपादाने च शब्दे गगनं घटत्वे घट इत्यादिप्रतीतिषु समवायसम्बन्धावच्छिन्नाधेयतासम्बन्धेन शब्दवत्त्वस्य गगने घटत्ववत्त्वस्य च घटेऽभावात् प्रमात्वप्रसङ्गाभावेऽपि गगने शब्द इत्यादिप्रतीतीनामप्रमात्वापत्तिः, आधेयत्वसम्बन्धस्य वृत्त्यनियामकतया तेन सम्बन्धेन गगनवत्त्वस्य शब्देऽभावात्, स्याद्वादाङ्गीकारे च कथञ्चिद् गगनवत्त्वस्य शब्दे स्वीकारेण अथवा प्रथमा विभक्तेः, विशेष्यत्वप्रयोजिकेत्यस्यातन्त्रत्वेन समवायसम्बन्धेन शब्दस्यैव प्रकारत्वाभ्युपगमेन नाप्रमात्वापत्तिरित्याह—अपि च तत्सम्बन्धवद्विशेष्यकत्वदान इति । ननु गगने शब्द इत्यत्राधेयत्वे सप्तमीविधानादाधेयत्वसम्बन्धेन गगनसम्बन्धित्वस्य शब्दे सत्त्वात्प्रमात्वं युक्तमाधारत्वसम्बन्धेन सम्बन्धित्वं तत्र विवक्षितुमशक्यमिति कथं तदुपादाय भ्रमत्वोपपादनमत आह—सप्तम्या अतन्त्रत्वादिति—विवक्षानुसारेण विभक्त्यर्थो भवति, आधारत्वेन सम्बन्धित्वविवक्षायां तदपि विभक्त्यर्थतया स्वीकर्तुमर्हमेवेति आधेयत्वमात्रप्रतिभासने सप्तम्या अप्रयोजकत्वादित्यर्थः । वैज्ञानिकसम्बन्धेन तत्सत्त्वादिति स्वप्रकारकज्ञानविशेष्यत्वसम्बन्धेन शुक्तौ रजतत्वस्य सत्त्वादित्यर्थः । तदपि विविक्तविवेके न सम्भवतीति—तदपि शुक्ताविदं रजतमिति ज्ञानस्य समवायांशेऽप्रमात्वमपि, विविक्तविवेके—विविक्ते ये प्रमात्वाप्रमात्वे प्रमात्वाधिकरणे नाप्रमात्वं तदधिकरणे न प्रमात्वमित्येवं ते विविक्ते तयोर्विवेके विविक्तलक्षणादिनैकान्तवादिनोपदर्शयितुमशक्ये सति न सम्भवति, यद्येकान्तवादिना तयोर्लक्षणमभिधानीयं

णात्मकसूक्ष्मेक्षिकाऽभावान्न जीवाजीवादिवस्तुनो यथार्थपरिभावनं स्यादिति यथार्थज्ञानाभावे- नायुक्तमपि युक्तं युक्तमप्ययुक्तं प्रतिभासेत। किञ्च परसमयरूपं यदनित्यत्वादिधर्मप्रति- पादकमेकनयमतं तन्नित्यत्वादिधर्मप्रतिपादकेन तत्प्रतिपक्षभूतेनान्येन नयेन नयविधिज्ञो यदि स्यात्तदा निराकुर्यात्। किञ्च स्वसिद्धान्तेऽपि यदज्ञानद्वेषादिकलुषितस्सन् कोऽपि दोषबुद्ध्या किमपि यज्जीवादिवस्तु अन्यथा परिगृह्णीयात् तदपि यो नयविधिज्ञस्स एव नयोक्तिभिर्यथार्थतया स्थापयेत्, अन्यथा तु कथं, तस्मात्कर्तव्यो नयविचारः। उक्तञ्च भाष्ये "परसमएगनयमयं तप्पडिवक्खनयओ निवत्तेजा। समए व परिग्गहियं परेण जं दोसबुद्धीए ॥ २२७४ ॥" इति। नन्वेवं तर्हि सर्वत्र नयानामेव सावकाशत्वात् प्रमाणानि निष्प्रयोजनानि स्युः, एवं निक्षेपा अपीति चेत्, उच्यते, श्रुताख्यप्रमाणविषयीकृतस्य वस्तुनो य एकोंऽशः यौ वा द्वावंशौ ये वा प्रतिनियतबह्वंशास्तदितरांशौदासीन्येन तत्प्रतिपादनमात्रमेव नयफलम्, सर्वांशविशिष्टवस्तुप्रतिपादनं प्रमाणफलम्, नामादिवस्तु- भेदप्रतिपादनं निक्षेपफलमिति त्रयाणामपि जैनशासने साफल्यमेव, नयप्रमाणनिक्षेपसा- मान्यलक्षणतद्भेदप्रतिभेदस्वरूपलक्षणयथार्थज्ञान एव वस्तुनो यथार्थज्ञानं तत्त्वजिज्ञासुमध्यस्थ- श्रोतृजनावबोधनाय यथार्थवाक्प्रयोगश्च स्यात्, नान्यथा। उक्तञ्च विशेषावश्यकभाष्ये— "अत्थं जो न समिक्खइ निक्खेव—नयप्पमाणओ विहिणा। तस्साजुत्तं जुत्तं जुत्तमजुत्तं व पडिहाइ ।२२७३।" इत्यादि। उक्तलक्षणा नया मिथस्सापेक्षास्सुनयाः, स्वाभ्युपगतैकधर्मेतरधर्मतिरस्करणे सति मिथो निरपेक्षा मिथ्यानयाः, ते चापरिमिताः, यतस्ते तत्तद्वादिभिर्निजाभिप्रायेण प्रदर्शि- तास्सदेवाऽसदेव वा वस्तु नित्यमेवानित्यमेव वा भिन्नमेवाऽभिन्नमेव वा क्षणिकमेवाक्षणिकमेव वेत्याद्येकैकांशप्रतिपादका वचनप्रकारा यावन्तस्तावन्त एव, वचनपथतुल्यसङ्ख्यपरस- मयतुल्यत्वान्नयानाम्। उक्तञ्च सम्मतौ—"जावइआ वयणप्पहा तावइआ चेव होंति नयवाया। जावइआ नयवाया तावइया चेव परसमया ॥ १ ॥" इति। ते च नयाः परस्पर- निरपेक्षा अत एव स्याद्वादैकवाक्यताऽनापन्नास्सावधारणाः स्वपक्षप्रतिहतत्वान्मिथ्या- रूपास्स्वविषयस्य स्वविषयाभिधानस्य च मिथ्यात्वव्यापकाः परसमयरूपा अपि विरुद्धयो- स्सत्त्वासत्त्वायोरविरोधभावनियामकं सापेक्षभावं गतास्ते निरवधारणास्स्याच्छब्दलाञ्छिता- स्समुदितास्सन्तोऽन्योन्यनयविषयापरित्यागवृत्तय इतरनयविषयसापेक्षस्वविषयसत्यत्वनिश्चाय- कास्स्वसमयरूपा इति ते प्रमाणभावलक्षणसम्यक्त्वं प्रतिपद्यन्ते। उक्तञ्च विशेषावश्यकभाष्ये— "ते चेव य परसमया समत्तं समुदिता सव्वे । २२६५ ।" इति। ननु नयानां प्रत्येका- वस्थायां मिथ्यादृष्टित्वात्तत्समुदायेऽपि प्रचुरविषलवसमुदाये विषप्राचुर्यवत् महामिथ्यादृष्टित्व- प्रसक्त्या न ते समुदिता सम्यक्त्वं प्रतिपद्यन्ते, नापि परस्परं विवदमाना वस्तुगमका भवन्ति, प्रत्युत मिथो विरोधित्वाद्वस्तुविघातायैव भवन्तीति चेत्, मैवम्, वस्तुतत्त्वानव- बोधात्, यतः प्रचुरविषलवा अपि प्रौढमन्त्रादिनाऽतिप्राज्ञकुशलक्रियपीयूषपाणिमहावैद्येन

"प्रमाणनयैरधिगम" इति यत् सूत्रितं तत्र प्रमाणे च प्रत्यक्षपरोक्षे उक्ते, चकार आद्यसूत्रस्थं चारित्रं वक्ष्यमाणं समुच्चिन्वन् जिज्ञासितनिरूपणान्यूनत्वेन नयनिरूपणेऽवसरसंगतिं प्रयोजयति तथा च प्रतिजानीते **नयान् वक्ष्यामस्तद्यथा ॥ ३३ ॥**

"न सम्मत्तत्त्युगमगा वीसुं रयणावलीए मणउव्व । सहिया सम्मत्तगमगा मणओ रयणावलीएव्व ॥ २२७१ ॥" नन्वेवं सर्वेऽपि नयवादा मिथ्या स्वपक्षेणैव प्रतिहतत्वात्, चौरवाक्यवदित्यनुमानात् सर्वेषामेव नयानां मिथ्यादृष्टित्वे तत्समुदायेऽपि सम्यक्त्वं न स्यादिति चेत्, न, इतरनयविषयीकृतरूपाऽव्यवच्छेदकत्वलक्षणेन अन्योऽन्यनिश्रितत्वेन समुदाये सम्यक्त्वसम्भवात् । अथ प्रत्येकं मिथ्यावधारणानां तेषां नयानामन्यनिश्रितसमुदायेऽपि कथं सम्यक्त्वम्, तत्तत्स्वगोचराऽपरित्यागेन तत्रापि तेषां विषयान्तराप्रवृत्तेरिति चेत्, मैवम्, यत एकैका अप्यपेक्षितेतरांशस्वविषयग्राहकतयैव सन्तो नयाः, तद्व्यतिरिक्तरूपतया त्वसन्त इति सतां तेषां समुदाये सम्यक्त्वे न कश्चिद्दोषः । ननु तत्कालविद्यमानानामेव रत्नानामेकसूत्रक्रमानुस्यूतानां समुदायो रत्नावली, तथैव प्रत्यक्षप्रमाणेन दृश्यमानत्वात्, न चेतरेतरविषयापरित्यागवृत्तीनां ज्ञानानामेकदोत्पत्तिसम्भवः, "जुगवं दो नत्थि उवओगा" इति वचनात्, येन रत्नावलीदृष्टान्तेन तत्समुदाये सम्यक्त्वमभ्युपगतं शोभावहं स्यादिति चेत्, अनुक्तोपालम्भ एषः, न ह्येकदाऽनेकज्ञानोत्पादतस्तेषां समुदायो विवक्षितः, अपि त्वपरित्यक्तेतरधर्मवस्त्वेकधर्मविषयाध्यवसाय एव समुदायः, अन्योन्यनिश्रिता इत्यनेनाप्ययमेवार्थः प्रतिपादितः, न हि द्रव्यार्थिकपर्यायार्थिकाभ्यामत्यन्तपृथग्भूताभ्यामङ्गुलिद्वयसंयोगवदुभयवादोऽपरः प्रारब्ध इत्येवं सम्मतिवृत्तावप्युक्तमिति । तादृशाध्यवसायश्च मिथ्यात्वालिङ्गितानामेकान्तक्षणिकत्वाक्षणिकत्वभिन्नत्वाभिन्नत्वादिधर्मप्रतिपादकसौगताक्षपादादिनिखिलमतानां यस्समुदायस्स चेत्, स्यात्पदलाञ्छितस्स्यात्तदैव स्यात्, नान्यथा, परसिद्धान्तोक्तैकान्तवस्तुतत्त्वज्ञानेषु स्याद्वादतत्त्वनिर्णायकयुक्तिभिरेकान्ततत्त्वसाधकयुक्तीनां निरासेन एकान्ततत्तत्त्वसाधकहेतूनां स्याद्वादसाधकप्रतिहेतुभिर्बाधितत्वप्रदर्शनेन चाऽप्रामाण्यनिश्चयात्तद्विषयाभावनिश्चये स्याद्वादसिद्धान्तसिद्धेः, अत एव सम्यग्दृष्टिना स्याद्वादमर्यादया विषयविभागेन व्यवस्थापितस्सर्वोऽपि परसिद्धान्तस्स्वसिद्धान्त एवेति सिद्धान्ते गीयते । उक्तञ्च भाष्ये—" मिच्छत्तमयसमूहं सम्मत्तं जं च तदुवगारम्मि । वट्टइ परसिद्धंतो तो तस्स तओ ससिद्धंतो ॥ ९५४ ॥ " इति । नन्वेवं तर्हि दुर्नयसुनयप्रमाणानां लक्षणानि यावन्नैव ज्ञायन्ते तावन्नैव तत्स्वरूपयथार्थज्ञानं जायत इति तेषां तानि कानीति चेत्, उच्यते, इतरधर्मप्रतिक्षेपित्वे सति वस्त्वेकधर्मावगाही प्रतिपत्तुरभिप्रायविशेषो दुर्नयः, श्रुताख्यप्रमाणविषयीकृतस्य वस्तुनोऽनन्तधर्माध्यासितस्य गजनिमीलिकान्यायेन तदितरधर्मौदासीन्यतस्स्वाभिप्रेतैकधर्मावगाही प्रतिपत्तुरभिप्रायविशेषो नयः, अत्र श्रुताख्यप्रमाणविषयीकृतत्वं वस्तुनः परिचायकविधया विशेषणम्, उपलक्षणमिति यावत्, न त्वितरव्यावर्त्तकतया विशेषणम्, तथा सति श्रुताख्यप्रमाणेन

पेक्षार्थग्राहित्वमेवम्भूत इति ॥ अत्राह–एवमिदानीमेकस्मिन्नर्थेऽध्यवसायनानात्वान्ननु विप्रतिपत्तिप्रसङ्ग इति । अत्रोच्यते । यथा सर्वमेकं सदविशेषात्, सर्वं द्वित्वं जीवाजीवात्मकत्वात्, सर्वं त्रित्वं द्रव्य-गुणपर्यायावरोधात्, सर्वं चतुष्ट्वं चतुर्दर्शनविषयावरोधात्, सर्वं पञ्चत्वं पञ्चास्तिकायात्मकत्वात्, सर्वं षट्त्वं षड्द्रव्यावरोधादिति । यथैता न विप्रतिपत्तयोऽथ चाध्यवसायस्थानान्तराण्येतानि तद्वन्नयवादा इति । किं चान्यत्–यथा मतिज्ञानादिभिः पञ्चभिर्ज्ञानैर्धर्मादीनामस्तिकायानामन्यतमोऽर्थः पृथक् पृथगुपलभ्यते पर्यायविशुद्धिविशेषादुत्कर्षेण, न च ता विप्रतिपत्तयो भवन्ति तद्वन्नयवादाः । यथा वा प्रत्यक्षानुमानोपमानाप्तवचनैः प्रमाणैरेकोऽर्थः प्रमीयते स्वविषयनियमात्, न च ता विप्रतिपत्तयो भवन्ति तद्वन्नयवादा इति । आह च "नैगमशब्दार्थानामेकानेकार्थनयगमापेक्षः । देशसमग्रग्राही, व्यवहारी नैगमो ज्ञेयः ॥ १ ॥ यत्संगृहीतवचनं, सामान्ये देशतोऽथ च विशेषे । तत्संग्रहनयनियतं, ज्ञानं विद्यान्नयविधिज्ञः ॥ २ ॥ समुदायव्यक्त्याकृति–सत्तासंज्ञादिनिश्चयापेक्षम् । लोकोपचारनियत, व्यवहारं विस्तृतं विद्यात् ॥ ३ ॥ साम्प्रतविषयग्राहकमृजुसूत्रनयं समासतो विद्यात् । विद्याद्यथार्थशब्दं, विशेषितपदं तु शब्दनयम् ॥ ४ ॥" इति । अत्राह–अथ जीवो नोजीवः अजीवो नोऽजीव इत्याकारिते केन नयेन कोऽर्थः प्रतीयत इति । अत्रोच्यते । जीव इत्याकारिते नैगमदेशसंग्रहव्यवहारर्जुसूत्रसाम्प्रतसमभिरूढैः पञ्चस्वपि गतिष्वन्यतमो जीव इति प्रतीयते । कस्मात् । एते हि नया जीवं प्रत्यौपशमिकादियुक्तभावग्राहिणः । नोजीव इत्यजीवद्रव्यं जीवस्य वा देशप्रदेशौ । अजीव इत्यजीवद्रव्यमेव । नोऽजीव इति जीव एव, तस्य वा देशप्रदेशाविति ॥ एवम्भूतनयेन तु जीव इत्याकारिते भवस्थो जीवः प्रतीयते । कस्मात् । एष हि नयो जीवं प्रत्यौदयिकभावग्राहक एव । जीवतीति जीवः प्राणिति प्राणान्धारयतीत्यर्थः । तच्च जीवनं सिद्धे न विद्यते, तस्माद्भवस्थ एव जीव इति । नोजीव इत्यजीवद्रव्यं सिद्धो वा । अजीव इति अजीवद्रव्यमेव । नो अजीव इति भवस्थ एव जीव इति । समग्रार्थग्राहित्वाच्चास्य नयस्य नानेन देशप्रदेशौ गृह्येते । एवं जीवौ जीवा इति द्वित्वबहुत्वाकारितेष्वपि । सर्वसंग्रहणे ( सर्वसङ्ग्रहेण ) तु जीवो नोजीवः अजीवो नोऽजीवः जीवौ नोजीवौ अजीवौ नोऽजीवौ इत्येकत्वद्वित्वाकारितेषु शून्यम् । कस्मात् । एष हि नयः संख्यानन्त्याज्जीवानां बहुत्वमेवेच्छति यथार्थग्राही । शेषास्तु नया जात्यपेक्षमेकस्मिन्बहुवचनत्वं बहुषु च बहुवचनं सर्वाकारितग्राहिण इति । एवं सर्वभावेषु नयवादाधिगमः कार्यः । अत्राह–अथ पञ्चानां ज्ञानानां सविपर्ययाणां कानि को नयः समाश्रयत इति । अत्रोच्यते । नैगमादयस्त्रयः सर्वाण्यष्टौ श्रयन्ते । ऋजुसूत्रनयो मतिज्ञानमत्यज्ञानवर्जानि षट् । अत्राह–कस्मान्मतिं सविपर्ययां न श्रयत इति । अत्रोच्यते । श्रुतस्य सविपर्ययस्योपग्रहत्वात् । शब्दनयस्तु द्वे एव श्रुतज्ञानकेवलज्ञाने श्रयते । अत्राह–अथ कस्मान्नेतराणि श्रयत इति । अत्रोच्यते । मत्यवधिमनःपर्यायाणां श्रुतस्यैवोपग्राहकत्वात् । चेतनाज्ञस्वाभाव्याच्च सर्वजीवानां नास्य कश्चिन्मिथ्यादृष्टिरज्ञो वा जीवो विद्यते । तस्मादपि विपर्ययान्न श्रयत इति । अतश्च प्रत्यक्षानुमानोपमानाप्तवचनानामपि प्रामाण्यमभ्यनुज्ञायत इति । आह च–" विज्ञायैकार्थपदान्यर्थपदानि च विधानमिष्टं च । विन्यस्य परिक्षेपान्नयैः परीक्ष्याणि तत्त्वानि ॥ ॥ ज्ञानं सविपर्यासं, त्रयः श्रयन्त्यादितो नयाः सर्वम् । सम्यग्दृष्टेर्ज्ञानं, मिथ्यादृष्टेर्विपर्यासः ॥ २ ॥ ऋजुसूत्रः षट् श्रयते, मतेः श्रुतोपग्रहादनन्यत्वात् । श्रुतकेवले तु शब्दः श्रयते नान्यच्छ्रुताङ्गत्वात् ॥३॥ मिथ्यादृष्ट्यज्ञाने, न श्रयते नास्य कश्चिदज्ञोऽस्ति । ज्ञस्वाभाव्याज्जीवो, मिथ्यादृष्टिर्न चाप्यज्ञः (ऽस्ति) ॥ ४ ॥ इति नयवादाश्चित्राः, क्वचिद्विरुद्धा इवाथ च विशुद्धाः लौकिकविषयातीतास्तत्त्वज्ञानार्थमधिगम्याः ॥ ५ ॥ "

(यशो० टीका) आद्यौ च तौ शब्दौ चेति समानाधिकरणसमासाशङ्कायामाह–आद्य इतीत्यादि । आदौ भव आद्य इत्यनेन सूत्रकारो नैगममाह–कुतः, सूत्रस्योक्तविभागसूत्रस्य क्रमः परिपाटी

तत्प्रामाण्यात्, उत्क्रमे ह्याद्यत्वं न स्यादपीति । स–आद्यो नैगमो द्विभेदः–द्वौ भेदौ यस्य स तथा । तावेवाह–देशपरिक्षेपी सर्वपरिक्षेपी च । देशं विशेषं परमाण्वादिगतं परिक्षेप्तुं शीलं यस्य स तथा, सामान्यग्राहीति यावत् । सर्वं सामान्यं परिक्षेप्तुं शीलं यस्य स तथा, विशेषग्राहीति यावत् । सामान्यविशेषरूपस्तु नोक्तम् ( नोक्तः, ) अनुवृत्तिलक्षणं सामान्यमेव, व्यावृत्तिलक्षणो विशेष एवेति भिन्नविषयाभावात् । अयं च काणभुजराद्धान्तप्रवर्तकः टीकायामभिहितः, तन्मते च यद्यपि न सामान्यमात्रं विशेषमात्रं वा वस्तु, द्रव्यगुणक्रियाश्रितस्य सामान्यस्य नित्यद्रव्याश्रितस्य चान्त्यविशेषस्याभ्युपगमात्, तथापि तन्मूलमिदं प्रथमाभ्युपगममाश्रित्येत्थमुक्तमिति भावनीयम् । शब्दनयास्त्रिभेदा इति ( शब्दस्त्रिभेद इति ) शब्दनयस्त्र्यंश इत्यर्थः । तानेव भेदानाह साम्प्रत इत्यादिना । संप्रति काले भवं यद्वस्तु तदाश्रयन्

ननु सामान्याद्विशेषाच्चातिरिक्तः सामान्यविशेषोभयरूपः कथं नोक्त इत्याशङ्कायां तत्र हेतुमाह–अनुवृत्तिलक्षणमित्यादि । द्रव्यादिषु सत्सदिति द्रव्यमिदं द्रव्यमिदं गुणोऽयं गुणोऽयमित्याद्यनुगतप्रत्ययजनकं यत्सत्ताद्रव्यत्वगुणत्वादिकं तत्सामान्यमेव, परमाणोः परमाण्वन्तरेण यो व्यावृत्तप्रत्ययस्तज्जनकोऽन्त्यविशेष एवेति तदतिरिक्तविषयाभावादित्यर्थः । यद्यपि द्रव्यमिदं द्रव्यमिदमित्याद्यनुगतप्रत्ययजनकत्वे सति नायं गुणः नेदं कर्मेति विशेषप्रत्ययजनकत्वाद् द्रव्यत्वादीनां सामान्यत्वं विशेषत्वं चाभ्युपगतं वैशेषिकदर्शनानुगैरिति सामान्यविशेषोभयात्मकं द्रव्यत्वादिकमस्त्येव, अत एव–"द्रव्यत्वं गुणत्वं कर्मत्वञ्च सामान्यानि विशेषाश्च" १–५ इति वैशेषिकसूत्रे सामान्यानि विशेषाश्चेत्यत्राऽसमासः सामान्यत्वे सति विशेषत्वं यथा ज्ञायते तदर्थम्, अन्यथा सामान्यविशेषा इत्युक्तौ षष्ठीसमासभ्रमस्यात्, तथा च सामान्यत्वे सति विशेषत्वं न प्रतीयेत तथापि यदेव द्रव्यत्वादिकं सामान्यरूपं तदेवापेक्षिकविशेषरूपमिति तदतिरिक्तस्य सामान्यविशेषोभयात्मकविषयस्याभावादिति भावः । अयं चेति–नैगमनयश्च वैशेषिकदर्शनप्रवर्त्तकस्तातपादश्रीसिद्धसेनगणिवरकृततत्त्वार्थटीकायामभिहितः । तन्मते चेत्यादि–वैशेषिकमते च यद्यपि सामान्यमात्रं विशेषमात्रं वा वस्तु न सम्मतं, द्रव्यगुणक्रियाश्रितस्य सामान्यस्य नित्यद्रव्याश्रितस्यान्त्यविशेषस्य वैशेषिकेणाभ्युपगमात्, यदि सामान्यमेव वस्तु तन्मते भवेत् तर्हि द्रव्यादिव्यक्तिलक्षणविशेषाभावात्तदाश्रिततया सामान्यस्याभ्युपगमस्तन्मते कथं सङ्गच्छेत, एवं यदि विशेषमात्रं वस्तु तन्मते भवेत्तर्हि नित्यद्रव्यस्यैव तन्मतेऽभावप्राप्तौ तदाश्रिततयाऽन्त्यविशेषाभ्युपगमोऽप्यसमञ्जस एव स्यात्, एवञ्च देशपरिक्षेपी सामान्यमात्रग्राही सर्वपरिक्षेपी विशेषमात्रग्राही यो नैगमो नयस्तन्मूलकत्वञ्च सामान्यविशेषोभयाभ्युपगमप्रवणे वैशेषिकदर्शने न सम्भवति, तथापि–उक्तदिशा सामान्यमात्राभ्युपगमप्रवणविशेषमात्राभ्युपगमप्रवणनैगमविशेषद्वयमूलकत्वाऽसम्भवेऽपि, सामान्यतो नैगमः सामान्यमभ्युपगच्छति विशेषञ्चाभ्युपगच्छतीति देशसमग्रग्राही नैगम इति प्रथमाभ्युपगममाश्रित्येदं नैगमवचनं नैगममननं वा वैशेषिकदर्शनमूलमित्यभिप्रायेणेत्थमुक्तं टीकाकृतेति सुधीभिर्विचारणीयमित्यर्थः । सम्प्रतिशब्दाद् "कालाट्ठञ्" इत्यनेन ठञ्प्रत्यये तत्र ञ् इत्यस्येत्वे

साम्प्रतः । न च कालाट्ठञिति साम्प्रतिक इति भवितव्यम्, संप्रतिशब्दस्य वर्तमानवस्त्वध्यवसाये लाक्षणिकत्वेन तद्भवशब्दप्रत्यायकाण्प्रत्यये प्रज्ञादित्वात् स्वार्थिकाश्रयणे वा दोषाभावात् । यां यां संज्ञा-

"ठस्येकः" इत्यनेन ठस्येकादेशे आदिवृद्धौ "यस्येति च" इत्यनेनेकारलोपे साम्प्रतिक इति प्रयोगेण भाव्यमित्याशङ्क्य निराकरोति—न चेति, निरासे हेतुमाह—सम्प्रतिशब्दस्येत्यादिना—सम्प्रतिशब्दो नात्र शक्त्या वर्तमानकालात्मकार्थवाचकः किन्तु लक्षणया वर्तमानवस्त्वध्यवसायार्थक इति कालवाचित्वाभावात् ठञोऽप्राप्तौ "तत्र भवः" इत्यनेनाणि प्रत्यये साम्प्रत इति सिद्ध्यति । अथवा "प्रज्ञादिभ्योऽण्" इत्यनेन स्वार्थिकाणि प्रत्यये साम्प्रत इति प्रयोगस्साधुरेवेति भावः । एष साम्प्रतनयो मूलशब्दनयाभिप्रायाऽविशिष्ट इति न पृथगुदाहरणैर्विभावित इति । यां यां संज्ञामभिधत्ते इत्यादि । यां यां संज्ञां घटः कुम्भः कलश इत्यादिरूपामभिधत्ते वदति तां तां भिन्नभिन्नार्थवाचकत्वेन समभिरोहति प्रमाणीकरोतीति समभिरूढः, यद्यपि अर्थक्रियाकारित्वात् सल्लक्षणं वर्तमानक्षणवर्तिनमृजुसूत्राभ्युपगतमेकमपि वस्तु तटस्तटी तटं, दारा कलत्रं, यास्यसि त्वं, यास्यति भवान्, बभूव भवति भविष्यति सुमेरुः, संतिष्ठते अवतिष्ठते इत्यादौ यथाक्रमं लिङ्गसङ्ख्यापुरुषकालोपसर्गभेदभिन्नशब्दवाच्यं चेत्तदा शब्दनयस्तदैक्यं नाभ्युपगच्छति, स्त्रीपुंनपुंसकलिङ्गादीनां गुणानां भिन्नत्वात् तथाप्यभिन्नलिङ्गकपर्यायशब्दवाच्यमर्थमेकमुरीकरोति सः, समभिरूढनयस्तु नैवं प्रमाणीकरोति, अभिन्नलिङ्गकपर्यायशब्दभेदेनापि तदर्थभेद इति मूलत एव शब्दभेदेन तद्वाच्यार्थभेदस्यैव प्रमाणाहर्त्वात्, यतो यो घटशब्दवाच्योऽर्थस्तं कुटकुम्भकलशादिपर्यायशब्दवाच्यं नेच्छत्यसौ, एतन्मते व्युत्पत्तिनिमित्तस्यैव प्रवृत्तिनिमित्तत्वेन तद्भेदेनार्थभेदाभ्युपगमादित्यर्थः । अयमत्र भावार्थः इन्द्रशक्रपुरन्दरादिशब्दान् घटकुटकुम्भादिशब्दांश्चानन्तरं शब्दनयेनैकाभिधेयत्वेनेष्टानसौ विशुद्धतरत्वात् प्रत्येकं भिन्नाभिधेयानभिमन्यते, भिन्नव्युत्पत्तिनिमित्तकत्वात् सुरमनुजादिशब्दवत्, तथाहि—इन्दति परमैश्वर्यमनुभवतीति इन्द्रः, शक्नोतीति शक्रः, पुरन्दारयतीति पुरन्दरः, "घट चेष्टायां" घटते विशिष्टचेष्टां करोतीति घटः, "कुट कौटिल्ये" कुटति कौटिल्यं करोतीति कुटः, "उभ उम्भ पूरणे" कूम्भनात् कुक्षितिपूरणात्कुम्भः, कं जलमुम्भति पूरयतीति वा कुम्भः, "शकन्ध्वादिषु च" इति वार्त्तिकेन पररूपम् ॥ इह परमैश्वर्यादीनि भिन्नान्येवात्र व्युत्पत्तिनिमित्तानि, एवमप्येकार्यत्वे घटपटादिशब्दानामप्येकार्थत्वापत्तिस्स्यात्, युक्तेरसाम्यात्, न च पर्यायशब्दानामेवैकार्थत्वमभ्युपगम्यत इति नेन्द्रपुरन्दरादिघटकुटकुम्भादिशब्दवद् घटपटादिशब्दाः पर्यायशब्दाः, एकार्थवाचकत्वाभावादिति नैकार्थास्ते इति वाच्यम् । एवं सतीन्द्रशब्दस्य शक्रादिशब्देन सहैकार्थतयेन्द्रार्थे शक्रादिप्रयोगे इन्द्रार्थस्य परमैश्वर्यस्य शक्रशब्दार्थे शक्नलक्षणे वस्त्वन्तरे संक्रान्तिः कृता स्यात्, तयोरेकत्वमापादितं भवेदिति यावत्, तच्च न युक्तम्, यतो न हि य एव परमैश्वर्यपर्यायः स एव शकनपर्यायो भवितुमर्हति, अन्यथा सर्वपर्यायसाङ्कर्यापत्तिस्स्यात् तस्मादेतन्मतेऽर्थैक्याभावाद्

मभिधत्ते ता तां समभिरोहतीति समभिरूढः । एवं व्युत्पत्तिनिमित्तपुरस्कारेण भूत एवंभूतः । इह संज्ञा तावत् त्रिविधा भवति–पारिभाषिकी, औपाधिकी, नैमित्तिकी च । तत्र नामकरणसंस्काराधीनसंकेतशालिनी पारिभाषिकी । यथा चैत्रादिः । उपाधिप्रवृत्तिनिमित्तका औपाधिकी, यथा पशुभूताकाशादिः जातिप्रवृत्तिनिमित्तिका नैमित्तिकी, यथा पृथिवीजलादिः । तत्रेयं शब्दसंज्ञा त्रयाणा पारिभाषिकी, " तिण्हं सद्दणयाणं जाणए अणुवट्टत्ते अवत्थू " इत्यादौ लाघवार्थं त्रयाणा शब्दनामकरणात्, अन्यथा पर्यायशब्दा एव न, शब्दभेदेनार्थभेदाभ्युपगमादिति भिन्नार्थसमभिरोहणात् समभिरूढो नय इति सिद्धम् । समभिरूढनयो हि वर्त्तमानक्षणे व्युत्पत्तिनिमित्तां तत्तत्क्रियां कुर्वन्तमकुर्वन्तमप्यर्थमभ्युपगच्छति, एवम्भूतस्तु तद्विशुद्धतरत्वात् तां क्रियां कुर्वन्तमेवार्थमभ्युपगच्छति, नाकुर्वन्तमिति स योषिन्मस्तकारूढं जलाहरणादिक्रियानिमित्तं घटमानमेव चेष्टमानमेव घटं मन्यते, न तु गृहकोणादिव्यवस्थितम्, अचेष्टमानत्वात् वस्त्वन्तरमिव, घटशब्दमप्येतद्वाच्यचेष्टावदर्थप्रतिपादनपरमेवाभिमन्यते, न त्वन्यम्, यदैव चेष्टां करोति तदैव घटरूपार्थस्य घटशब्दवाच्यत्वम्, घटध्वनेश्च वाचकत्वम्, अन्यदा तु वस्त्वन्तरस्येव घटलक्षणार्थस्य चेष्टाऽभावादघटत्वं घटध्वनेश्चावाचकत्वमिति । तथा च पदवाच्यव्युत्पत्तिनिमित्तक्रियाकालव्यापकपदार्थसत्ताऽभ्युपगमपर एवम्भूतनय इति निष्कर्ष इत्याशयेनाह एवं व्युत्पत्तिनिमित्तपुरस्कारेण भूत एवम्भूत इति । एवं यस्य यस्य शब्दस्य या या व्युत्पत्तिनिमित्तीभूतक्रिया तत्तत्पुरस्कारेण तत्तत्क्रियाविशिष्टतया शब्दार्थो यथावस्थितस्तथैव योऽर्थो वर्त्तते स एवंभूतो विद्यमानः, अन्यथात्वभूतोऽविद्यमानः, तत्तच्छब्दार्थ एव न भवतीति भावः । भाष्यकारोऽप्याह–एवं जह सद्दत्थो संतो भूओ तदन्नहाऽभूओ । तेणेवंभूयनओ सद्दत्थपरो विसेसेणं । २२५१ । इति । ननु व्युत्पत्तिनिमित्तक्रियामात्रेण तत्तच्छब्दवाच्यत्वाभ्युपगमे गमनक्रियाविशिष्टायां यथा गवि गोशब्दप्रवृत्तिस्तथा गमनक्रियाविशिष्टे पुरुषेऽपि गोशब्दप्रवृत्तिरस्यादिति चेत्, मैवम्, यस्मिन्नेव पराभ्युपगतप्रवृत्तिनिमित्तधर्माक्रान्तेऽर्थे यदा तत्तच्छब्दव्युत्पत्तिनिमित्तक्रियायास्सद्भावस्तस्मिन्नेवार्थे तदैवम्भूतनयेन तत्तच्छब्दवाच्यत्वोपगमान्न पुरुषे गोव्यवहारः, गोत्वात्मकप्रवृत्तिनिमित्तधर्मोपलक्षितगोशब्दव्युत्पत्तिनिमित्तगमनक्रियाया-ऽत्राभावादिति युक्तमुत्पश्याम इति । आधुनिकसङ्केतशालिनी संज्ञा पारिभाषिकीत्याह–नामकरणेति । अनुगतोपाधिना या संज्ञा प्रवर्त्तते सौपाधिकीत्याह–उपाधीति । यथा पशुभूताकाशादिरिति लोमवल्लाङ्गूलावच्छिन्नत्वं पशुत्वं, तच्च न जातिरूपम्, समवायेनाऽवृत्तित्वात् । भूतत्वमपि न जातिरूपम्, मूर्त्तत्वेन सह साङ्कर्यात्, आकाशत्वकालत्वादिकमपि न जातिरूपम्, एकव्यक्तिवृत्तित्वात्, किन्तूपाधिरूपं, तद्रूपप्रवृत्तिनिमित्तका पशुभूताकाशादिसंज्ञेत्यर्थः । जात्यवच्छिन्नसङ्केतवती नैमित्तिकीत्याह–जातीति । त्रयाणामिति शब्दप्राधान्येनार्थोपसर्जनत्वेन प्रतीतिजनकत्वेन रूपेण सङ्केतितैकत्वानां साम्प्रतसमभिरूढैवम्भूतानां त्रयाणामित्यर्थः । अत्रानुयोगद्वारसूत्रसंवादमाह–" तिण्हं सद्दणयाणं " इत्यादि । उक्तानभ्युपगमे दोषमाह–अन्यथेति–

त्रयाणामिति विरुध्येत । व्यक्तिपक्षे आनन्त्याज्जातिपक्षे च जातित्रयवत्स्वेकजातिशब्दासमावेशात्, न हिं घटपटतटास्त्रयो घटा इति केनापि वक्तुं शक्यम् । तस्माच्छब्दस्य ये भेदा अभिहितास्ते नयभेदा एव, नयत्वसाक्षाद्व्याप्यजात्यवच्छिन्नत्वात् । नैगमस्य च यौ भेदावभिहितौ तौ नयप्रभेदौ, नयत्वव्याप्यजातिव्याप्यजात्यवच्छिन्नत्वादिति स्मर्तव्यम् । अत एवासंकीर्णजातिपुरस्कारेण नयप्रमाणे सप्तैव नया अनुयोगद्वारेऽप्युक्ताः । तथा च तत्सूत्रं-"से किं तं नयप्पमाणे ? नयप्पमाणे सत्तविहे पण्णत्ते । तंजहा–णेगमे, संगहे, ववहारे, उज्जुसुए, सद्दे, समभिरूढे, एवंभूएत्ति सत्त मूलणया पण्णत्ता " इत्यादि । स्थानाङ्गेऽपीत्थमेवोक्तम् । न च पारमर्षप्रसिद्धं विभागक्रममुल्लङ्घ्यान्यथा विभजन्ते आम्नायविद इति । शब्दं त्रिभेदमाचक्षाणाना वाचकचक्रवर्तिनामपि सप्तधा नयविभाग एव चेतःस्वरसः, पञ्चेत्युक्तिस्तु परिभाषाप्रयुक्ताऽऽदेशान्तरेणेति सुदृढमवधेयम् । एतेन नव नया द्रव्यार्थिकः पर्यायार्थिको नैगमः संग्रहश्चेत्यादि विभागो जैनाभासस्य दिक्पटदेशीयस्य देवसेनस्य निरस्तो द्रष्टव्यः, भेदप्रभेदानां सहोक्तौ विभागवाक्यव्याघातात्, न हि भवति मूर्तामूर्तपृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनास्येकादश द्रव्याणीति विभजतो वैशेषिकबालस्य चतुर्दशभूतग्रामे त्रसेतरभेदद्वयं प्रक्षिप्य षोडशधा विभजतो वाऽऽर्हतबालस्य नोपहास

व्यक्तिपक्षे त्रयाणामिति प्रयोगाऽनुपपत्तौ हेतुमाह–**व्यक्तिपक्षे आनन्त्यादिति** । **जातित्रयवत्स्वेकजातिशब्दासमावेशादिति**–साम्प्रतत्वसमभिरूढत्वैवम्भूतत्वजातित्रयाधारेषु नयत्रयेषु शब्दत्वरूपैकजात्यवच्छिन्नवाचकशब्दनयत्रयागासम्भवादित्यर्थः । जातित्रयाधारेऽनेकजात्यवच्छिन्नवाचकशब्दव्यवहाराभावे दृष्टान्तमाह–**न हीति** । **नयत्वव्याप्यजातिव्याप्यजात्यवच्छिन्नत्वादिति**–नयत्वव्याप्यजातिर्नैगमत्वं तद्व्याप्यजाती देशपरिक्षेपित्वसर्वपरिक्षेपित्वे तद्विशिष्टत्वादित्यर्थः । **नयप्रमाण इति**–नयप्रमाणद्वार इत्यर्थः । **स्थानाङ्गेऽपीत्थमेवोक्तमिति**–सत्त मूलनया पन्नत्ता, तं जहा नेगमे संगहे ववहारे उज्जुसुत्ते सद्दे समभिरूढे एवंभूते । सू. ५५२ इति । शब्दनयभेदानां साम्प्रतादिनयत्रयाणां नयविभाजकोपाधिव्याप्यविभाजकोपाधिमत्त्वाभावान्न शब्दावान्तरभेदत्वं किन्तु नयविभाजकतावच्छेदकमूलजातिरूपेण सप्तनयानामनुयोगद्वारठाणाङ्गसूत्रादिष्वेक एव विभागः प्रतिपादितः, न तु विभक्तविभाग इति मूलभेदत्वमेवेति वस्तुगत्या नयानां सप्तविधत्वमेवेति सूत्रकारस्वारस्यमाह–**शब्दं त्रिभेदमाचक्षाणानामित्यादि** । नन्वेवं तर्हि चतुस्त्रिंशत्तमसूत्रभाष्ये पञ्चनया इति कथमुक्तमित्याशङ्कानिवृत्त्यर्थमाह **पञ्चेत्युक्तिस्त्वित्यादि** । साम्प्रतादिनयत्रयाणां शब्दप्राधान्येनार्थोपसर्जनतया प्रतीतिजनकत्वेन रूपेणैकत्वात्तत्र शब्दनयेतिसङ्केतशालिनी या परिभाषा तत्प्रयुक्ताऽऽदेशान्तरेणेत्यर्थः । नग्नाटदेशीयदेवसेनदृब्धलघुनयचक्रे–"दो चेव मूलिमणया भणिया दव्वत्थपज्जयत्थगया(णया) । नैगम संगह ववहार तह य रिउसुत्त सद्द अभिरूढा । एवंभूयो णवविह णया वि तह उवणया तिण्णि ॥१॥" इत्युक्तस्य तत्कृतालापपद्धतौ च द्रव्यार्थिकः पर्यायार्थिकः नैगमः संग्रहः व्यवहारः ऋजुसूत्रः शब्दः समभिरूढः एवम्भूत इति नवनया इत्युक्तस्य निरसनायाह–**एतेनेति** । अस्य निरस्तो द्रष्टव्य इत्यनेनान्वयः । निरासे हेतुमाह–**भेद-**

प्रयोजनभेद उक्त एव, नवनयविभागे च न कश्चित्प्रयोजनभेदः । किं तु तीर्थंकरवचनसंग्रहविशेषण(विशेष)-प्रयोजनाभ्यामादितो द्वयोरेव निरूपणं विधेयम् । तद्भेदजिज्ञासायां च सप्त निरूपणीया इति विभक्तविभागोऽयमेकप्रघट्टेन । नवानां मौलभेदानामभिधानं तु बालिशविलसितम् । तदिदमभिप्रेत्याह महावादी सिद्धसेनः– " तित्थयरवयणसंगह–विसेसपत्थारमूलवागरणी । दव्वट्ठिओ य पज्जव–णयो य सेसा विगप्पा सिं ॥१॥" ति । अधिकं मत्कृतानेकान्तव्यवस्थादौ । अत्राहास्मिन्नवसरे लक्षणजिज्ञासुः पृच्छति–किमेषां नैगमादीनां, लक्षणमिति, गुरुराह–अत्रोच्यते–निगमेष्वित्यादि । न चैतानि सूत्राणि, अवृत्तित्वात्, केचित्तु भ्रान्त्या सूत्राणीति प्रतिपन्नवन्तः । निश्चयेन गम्यन्ते उच्चार्यन्ते प्रयुज्यंते येषु शब्दास्ते निगमा जनपदास्तेष्वभिहिता उच्चारिता ये शब्दा घटादयस्तेषामर्थो जलाहरणादिसमर्थः, शब्दार्थपरिज्ञानं च–अयं शब्द एतस्यार्थस्य वाचकोऽयमर्थ एतस्य शब्दस्य वाच्य इत्येवं वाच्यवाचकभावपरिज्ञानं च, नैगमनयः । यद्यपि नयस्य ज्ञानरूपत्वाद्भेदसमुच्चयार्थकचकारानुपपत्तिः, तथापि परामृश्यमाणं लिङ्गमनुमानमितिवत्परिज्ञायमानः शब्दार्थ एव नैगम इति पक्षे प्रथमाभिधानं, लिङ्गपरामर्श एवानुमानं न तु परामृश्यमाणं लिङ्ग-

इति त्रिभक्तविभागोऽपि युक्तः, न तु भावाऽभावद्रव्यगुणकर्मसामान्यविशेषसमवायप्रागभावध्वंसात्यन्ताभावान्योन्याभावा द्वादश पदार्था इतिवद् द्रव्यार्थिकपर्यायार्थिकनैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूता नव नया इति मूलविभागो युक्तः, द्रव्यत्वगुणत्वादीनां सप्तधर्माणां मिथो विरोधिधर्मत्वात्तद्रूपेण पदार्थविभागसम्भवेऽपि भावत्वस्य न द्रव्यत्वगुणत्वादिभिस्सह मिथो विरोधिधर्मत्वम्, अभावत्वस्य च न प्रागभावत्वादिभिस्सह मिथो विरोधिधर्मत्वमिति तद्घटितधर्मैर्विभागाभाववद् द्रव्यार्थिकत्वपर्यायार्थिकत्वयोर्नैगमत्वसङ्ग्रहत्वादिधर्मैस्सह मिथो विरोधिधर्मत्वं नेति तद्घटितनवधर्मैर्मूलनयविभागाभाव एव युक्त इति । प्रयोजनभेद उ० ए० एवेति–तत्त्वार्थचतुर्थसूत्रव्याख्यायामिति शेषः । बालिशविलसितमिति–अनुयोगठाणाङ्गसूत्राद्यभिहितं सप्तधा नयविभागमुल्लङ्घ्य नवधा तत्करणस्य सूत्राशातनाकलङ्कितत्वादिति भावः । तित्थयरवयसंगह–विसेसपत्थारमूलवागरणी । दव्वट्ठिओ य पज्जव–णओ य सेसा वियप्पा सिं ॥ ३ ॥ इति नयकाण्डे तृतीयगाथा । अस्याः सङ्क्षेपार्थश्चैवम् तीर्थंकरवचनमाचाराङ्गादिदृष्टिवादान्तम् " अत्थं भासेइ तित्थयरा इति वचनादर्थतस्तस्य तदुपदिष्टत्वात्, तस्य तीर्थंकरवचनस्य सङ्ग्रहविशेषौ द्रव्यपर्यायौ सामान्यविशेषशब्दवाच्यावभिधेयौ तयोः प्रस्तारः सङ्ग्रहविशेषप्रस्तारः, तस्य मूलव्याकरणी–आद्यवक्ता आद्यज्ञाता वा द्रव्यास्तिकश्च पर्यवनयश्च, तीर्थंकरवचनसङ्ग्रहविशेषप्रस्तारमूलभूतनयौ द्रव्यार्थिकपर्यायार्थिकनयावित्यर्थः, तत्र सामान्यप्रस्तारस्य संग्रहादिनयात्मकस्य मूलभूतो द्रव्यार्थिकनयः, विशेषप्रस्तारस्यर्जुसूत्रशब्दादिनयरूपस्य मूलभूतः पर्यायास्तिकनय इति यावत् । शेषास्तु सङ्ग्रहाद्यृजुसूत्रादयो विकल्पा भेदा अनयोर्द्रव्यार्थिकपर्यायार्थिकनययोः । महातर्कवादिशिरोमणिश्रीसिद्धसेनदिवाकरमते नैगमस्य सामान्यग्राहिणस्सङ्ग्रहे विशेषग्राहिणश्च व्यवहारनयेऽन्तर्भूतत्वाद्द्रव्यार्थिकनयभेदौ सङ्ग्रहव्यवहाराख्यौ, पर्यायास्तिकनयभेदा ऋजुसूत्रशब्दसमभिरूढैवम्भूताः, सिमिति प्राकृतशैल्या

मितिवच्छब्दार्थपरिज्ञानमेव नैगमो न तु परिज्ञायमानः शब्दार्थ इति पक्षे च द्वितीयाभिधानमिति मत-भेदान्नानुपपत्तिरिति युक्तं पश्यामः । स च सामान्यविशेषावलम्बीत्येतद्दर्शयति देशो विशेषः समग्रं सामान्यं, अयं हि सामान्यग्राही जातिमेव पदार्थमाह–विशेषग्राही च द्विकत्रिकादिकं, तथा च विचित्र-प्रकारं नैगमनयमाश्रित्यानुस्मर्यते । "एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ॥ नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥ १ ॥" इति, एकं जातिर्नामार्थः, लाघवेन तस्या एव वाच्यत्वौचित्यात्, अनेकव्यक्तीनां वाच्यत्वे गौरवात् । न च व्यक्तीनामपि प्रत्येकमेकत्वाद्विनिगमनाविरहः, एवं ह्येकस्यामेव व्यक्तौ शक्त्यभ्युपगमे व्यक्त्यन्तरे लक्षणायां स्वसमवेताश्रयत्वं संसर्ग इति गौरवम्, जात्या तु सहाश्रयत्वमेव संसर्ग इति लाघवम्, किं चैवं गौः स्वरूपेण न गौरित्यादिन्यायाद्विशिष्टस्य वाच्य-

बहुवयणेण दुवयणमिति द्विवचनस्थाने बहुवचनमिति । अधिकमस्मदृब्धसम्मतितर्कमहार्ण-वाऽवतारिका टीकातोऽवसेयम् । जातिरिति–तत्तत्पदार्थाऽसाधारणो धर्म इत्यर्थः । तेनाभावत्वाकाशत्वादीनां नित्यानेकसमवेतत्वरूपजातित्वाऽभावेऽपि न क्षतिः । लाघवे-नेति व्यक्त्यनुगताया जातेरेकत्वेन तद्गतायाश्शक्तेरप्येकत्वसम्भवादिति भावः । ननु गामानय गां नय घटमानय घटं नयेत्यादिवृद्धपुरुषव्यवहारेण व्यक्तावेव शक्तिग्रहात्कथं जातौ शक्तिसिद्धिरित्यत आह–अनेकव्यक्तीनामिति–पूर्वं व्यवहारेण व्यक्तौ शक्तिग्रहेऽप्यान-न्त्यात् तावतीषु शक्तिग्रहाऽसम्भवात्तदाश्रयभेदभिन्ननानाशक्तिकल्पने गौरवात् पश्चाज्जा-तावेव शक्तिर्निर्धार्यत इत्यर्थः । ननु गोपदशक्यं गोत्वमिति पक्षेऽपि शक्यतावच्छेदकं गोत्वत्वं स्यात्, तच्च गवेतराऽसमवेतत्वे सति सकलगोव्यक्तिसमवेतत्वरूपमिति सखण्डरूपत्वाद् गौरवं समानमेवेति चेत्, मैवम्, गौश्शक्येति पक्षे गोत्वादिजात्यंशे शक्यतावच्छेदकता यथा निरव-च्छिन्ना तथाऽस्मन्मते गोत्वे शक्तिरपि निरवच्छिन्नेति न गोत्वत्वप्रवेशाद्गौरवमिति ॥ ननु गोत्वादिजातिवत् प्रत्येकगवादिव्यक्तिरप्येकैवेति तत्र शक्तिकल्पनायां यथा सकलगोव्यक्ति-भानार्थं तावद् गोव्यक्तिषु शक्तिकल्पनापक्षे गौरवज्ञानं बाधकं विनिगमकं तथैकव्यक्ति-शक्तिपक्षे तन्न, जातिव्यक्त्योरेकत्वाविशेषादित्याशङ्क्य निषेधति–न च व्यक्तीनामपीति–निषेधे गौरवज्ञानमेव बाधकं विनिगमकमाह एवं ह्येकस्यामेवेति । व्यक्त्यन्तरे लक्षणायामिति व्यक्त्यन्तरे लक्षणानभ्युपगमे तद्बोधो न स्यादिति तदन्यथानु-पपत्तिरेव तद्बीजमिति भावः । शक्यसम्बन्धो हि लक्षणा, सम्बन्धश्चात्र क इत्याश-ङ्कायां तमाह स्वसमवेताश्रयत्वमिति–स्वं शक्यत्वेनाभिमतव्यक्तिविशेषः, तत्समवेता, जातिः, तदाश्रयत्वं तत्समवायित्वमित्यर्थः । आश्रयत्वमेव–शक्तेः स्वरूपेणाश्रयत्वमेव । यद्वा आश्रयत्वमित्यस्य स्वसमवायित्वमित्यर्थः । लाघवमिति–तथा चोक्तलाघवं जातौ शक्त्य-भ्युपगमे विनिगमकमिति न विनिगमनाविरह इति भावः । नन्वनुगतजात्यवच्छिन्नयाव-द्व्यक्तिषु शक्तिस्स्वीक्रियते सा चानुगतधर्मावच्छिन्नैकैव, अनुगतैककारणतावच्छेदकधर्माव-च्छिन्नकारणतावदिति नानन्तशक्तिकल्पनादोषप्रसङ्ग इत्यत आह किञ्चैवमिति । एवम्–जातिविशिष्टे शक्त्यभ्युपगमे । गौः स्वरूपेण न गौरिति–गौस्स्वरूपेण न गौर्ना-

त्वमाश्रयणीयं, तथा च नागृहीतविशेषणान्यायाज्जातिरेव वाच्येति युक्तम्, व्यक्तिबोधस्तु लक्षणया, एवं हि तत्र विभक्त्यर्थान्वयोऽप्युपपत्स्यत इति दिक् । यद्वा केवला व्यक्तिरेवैकः शब्दार्थः, केवलव्यक्तिपक्ष एवैकशेषाद्यारम्भस्य शास्त्रसिद्धत्वात् । युक्तं चैतद्, व्यवहारेण व्यक्तावेव तद्ग्रहणात्, संबंधितावच्छेदकस्य(दिकाया) जातेरैक्याच्छक्तेरप्येकैवेति न गौरवमपि । न चैवं शक्यतावच्छेदकत्वात् घटत्वमपि वाच्यं स्यात्, नागृहीतविशेषणान्यायादिति वाच्यम्, अकारणत्वेऽपि कारणतावच्छेदकत्ववदशक्यत्वेऽपि शक्यतावच्छेदकत्वसम्भवात् ।

एषगौः गोत्वाभिसम्बन्धात्तु गौरिति सम्पूर्णन्यायस्वरूपं ज्ञेयम् । तथा च गोत्वविशिष्टस्य गोपदवाच्यत्वस्वीकारे च । नागृहीतेति—नागृहीतविशेषणा बुद्धिर्विशेष्यमधिगच्छतीति न्यायशरीरम् । विशेषणाऽविषयकबुद्धिर्विशेष्यं नावगाहत इति तदर्थः । तथा च विशिष्टशक्तिवादे विशिष्टशक्तिग्रहे विशेष्यविषयकत्वेऽभ्युपगते सति नियमेन विशेषणविषयकत्वमप्यावश्यकमिति तदुभयविषयकत्वे पदार्थोपस्थित्यादिनिरूपितशक्तिग्रहनिष्ठकारणतावच्छेदकत्वस्य कल्पनापेक्षया विशेषणविषयकत्वमात्र एव तस्य कल्पनं लाघवेन युक्तमिति जातावेव शक्तिस्सिद्ध्यतीति भावः । लक्षणयेति—स्वशक्यजात्याश्रयत्वसम्बन्धरूपलक्षणयेत्यर्थः । न चात्राऽनुपपत्तिप्रतिसन्धानं विना कथं लक्षणेत्याशङ्क्यम्, निरूढलक्षणायां तदनपेक्षणात्, यद्वाऽन्वयानुपपत्त्यभावेऽपि तात्पर्यानुपपत्तेरत्र सत्त्वान्नोक्तदोषः । वस्तुतो गामानयेत्यादावानयनकर्मत्वादेर्जातावन्वयानुपपत्तिप्रतिसन्धानमेव लक्षणाबीजमिति बोध्यम् । ननु लक्षणाभ्युपगमे लक्षितव्यक्तेः पदार्थत्वाभावात् 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति व्युत्पत्तेर्गामानयेत्यादौ गोव्यक्तौ द्वितीयाविभक्त्यर्थकर्मत्वान्वयो न स्यादित्याशङ्कायामाह—एवं हीति—तथा च लक्षितव्यक्तेरपि प्रकृत्यर्थत्वात्तत्र न विभक्त्यर्थान्वयानुपपत्तिः, पदवृत्तिजन्योपस्थितेरेव शाब्दबोधे हेतुतया व्यक्तेरशक्यत्वेऽपि लक्षणावृत्त्युपस्थितायां तस्यां न विभक्त्यर्थकर्मत्वाद्यन्वयबोधानुपपत्तिरिति भावः । एकं द्विकं त्रिकमित्यादिश्लोकोक्तैकपदस्य केवलव्यक्तिरेवार्थ इति पक्षान्तरमाह—यद्वेति—व्यक्तिरेवेत्यनेन जातिव्यवच्छेदः । व्यक्तिः पदार्थ इत्यत्र प्रमाणमाह—केवलव्यक्तिपक्ष इति । एकशेषाद्यारम्भस्येति—जातिपक्षे एकेनैव शब्देन द्वयोर्बहूनां वा प्रत्यायनसम्भवादेकशेषग्रहणमनर्थकं सद्व्यक्तिपक्षज्ञापकमित्यर्थः । युक्तिमेवाह—व्यवहारेणेति—'घटमानय' इति वाक्यप्रयोगानन्तरकालिकप्रयोज्यवृद्धकर्तृकानयनरूपव्यवहारेण प्रथमतो व्युत्पित्सोर्बालस्य व्यक्तावेव शक्तिग्रहादित्यर्थः । एतत्कल्पे पूर्वोक्तं शक्त्यानन्त्यदोषं समुद्धरति—सम्बन्धितावच्छेदकस्येति शक्तिग्रहे धर्मितावच्छेदकस्य, शक्यतावच्छेदकस्येति यावत् । तथा च जातिरूपसम्बन्धितावच्छेदकाऽनुगतीकृतनानाव्यक्तिष्वेकधर्मावच्छिन्नाया एकस्या एव शक्तेरुपगमान्न तन्नानात्वप्रयुक्तगौरवमिति भावः । अकारणत्वेऽपीति—दण्डत्वादीनामन्यथासिद्धत्वेनाऽकारणत्वेऽपीत्यर्थः, शक्यतावच्छेदकत्वसम्भवादिति—शक्यत्वे सति शक्य-

उक्तं च—"आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् । शब्दः सुकरसम्बन्धो, न च व्यभिचरिष्यति ॥ १ ॥" इति । एकमित्यनिर्धारितनिर्देशेन तज्जातिर्वाऽखण्डोपाधिर्वाऽन्यापोहो वा बुद्धिविशेषो वेत्यत्र नाग्रह इति ध्वन्यते । केचित्तु न ह्याकृतिपदार्थस्य द्रव्यं न पदार्थ इति भाष्याद्विशिष्टं वाच्यम्, न चैकपक्षविरोधः, घटत्वविशिष्टबोधे घटत्वांशेऽन्याऽप्रकारकघटत्वशक्तिवृत्तित्वे सति शक्योपस्थितिप्रकारत्वं शक्यतावच्छेदकत्वमिति नियमे नैयायिकाभ्युपगते मानाभावादिति घटत्वादेर्घटादिपदशक्यत्वाऽभावेऽपि शक्यतावच्छेदकत्वं स्यादेवेति भावः । उक्तार्थे सम्मतिमाह उक्तञ्चेति । आनन्त्येऽपि हि भावानामिति—भावानां व्यक्तीनां नानात्वाच्छक्तिग्रहाविषयत्वेऽपीत्यर्थः । एकम्—अनुगतजात्यादिधर्मम् । कृत्वोपलक्षणम्—अशक्यत्वेऽपि शक्यव्यावर्तकमभ्युपगम्य । शब्दः सुकरसम्बन्धः—गवाद्यात्मकशब्दः सुग्राह्यगवादिनिष्ठवाच्यतानिरूपितवाचकतासम्बन्धः । न च व्यभिचरिष्यतीति—पुरोवर्त्तिव्यक्तौ शक्तिग्रहेऽपि तदविषयीभूतां व्यक्तिं बोधयिष्यतीत्यर्थः । गोत्वादिसामान्यलक्षणया प्रत्यासत्त्या सर्वास्वेव शक्त्यवधारणादिति भावः । ननु हस्तिपकव्यक्त्यन्तरे सम्बन्धग्रहे यत्र हस्तिपके सम्बन्धो न गृहीतस्तस्यापि हस्तिदर्शने स्मरणापत्त्या तद्व्यक्तिविषयकसम्बन्धग्रहस्य तदुपस्थितिनियामकत्वस्यावश्यकतया कथमेकव्यक्तिविषयकशक्तिज्ञानादपरव्यक्तिविषयकोपस्थितिः, सामान्यलक्षणया प्रत्यासत्त्या स्यादित्यपि, न, तस्या अप्यापातरमणीयत्वादित्याशयवतां केषाञ्चिन्मतमाह केचित्त्विति । आकृतिपदार्थस्येति—अत्राकृतिः पदार्थो यस्येति बहुव्रीहिः । शब्दस्येति शेषः । विशिष्टमिति जातिविशिष्टा व्यक्तिः, व्यक्तिविशिष्टा जातिर्वेत्यर्थः । यद्यपि "आकृतिपदार्थस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य चाऽऽकृतिर्न पदार्थ इत्युभयोरुभयं पदार्थः" इति भाष्याद्विशकलितयोरेवाकृतिव्यक्त्योः शक्तिग्रहविषयता लभ्यते, तथापि "कस्यचित् किञ्चिद् गुणभूतं किञ्चित्प्रधानम्" इत्युत्तरभाष्यपर्यालोचनया तत एव विशिष्टे शक्त्यवधारणात् तथोपादानमविरुद्धम्, जातिव्यक्त्योर्विशकलितयोः शक्यत्वे गोपदाद् गोत्वं व्यक्तिश्चेति समूहालम्बनबोधापत्तेः, शक्तिज्ञानपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वनियमादिति । जात्यखण्डोपाध्यतिरिक्तपदार्थस्य किञ्चिद्धर्मावच्छिन्नत्वमिति नियमेन निरवच्छिन्नाया व्यक्तेर्जात्यंशे भानं नेति गवादिपदाद्गोविशिष्टगोत्वबोधस्याननुभवेनोक्तार्थोऽसम्भवे तु जातिविशिष्टव्यक्तिरेव शक्येति तदर्थः । न च विशिष्टस्य पदार्थतास्वीकारे एकमिति पक्षस्य विरोध इत्याह—न चैकपक्षविरोध इति । अस्मात्पदादेतदर्थबोधो भवत्विति शक्तिज्ञाननिष्ठशाब्दबोधहेतुतायां प्रकारतयाऽवच्छेदिकाया जातेरैक्यात्तत्पक्षोपपत्तिरित्याशयेन निषेधे हेतुमाह घटत्वविशिष्टबोध इति स्वरूपतो घटत्वप्रकारकबोध इत्यर्थः । घटत्वांशेऽन्याप्रकारकेति विशेषणाद् 'जातिमान् घटः' इति बोधस्य घटत्वांशे जातित्वप्रकारकत्वेनोक्तशक्तिज्ञानकार्यतावच्छेदकतानाक्रान्तत्वेन न तदापत्तिः । जातिमान् घट इति बोधम्प्रति तु घटत्वांशे जातित्वप्रकारकशक्तिज्ञानस्य हेतुत्वान्तरं कल्पनीयमिति तत्सत्त्व एव तत्सत्त्वम्, तथा च निरव-

ज्ञानत्वेन हेतुतया तदविरोधादित्याहुः । द्विकमिति जातिव्यक्ती इत्यर्थः । न च लक्ष्यतावच्छेदक इव शक्यतावच्छेदकेऽपि शक्यभावान्नैतत् सांप्रतं, यद्धर्मविशिष्टे वृत्तिग्रहस्तद्धर्मप्रकारेणोपस्थितेः शक्तिं विनापि सम्भवादिति वाच्यम् । लक्ष्यतावच्छेदके शक्यसंबन्धरूपाया लक्षणाया बाधेऽपि शक्यतावच्छेदके विशिष्टसङ्केतविषयत्वरूपायाः शक्तेरब्बाधात्, विषयताया विशेष्यविशेषणसाधारण्यात्, शक्यतावच्छेदकस्य लक्ष्यतावच्छेदकतुल्यत्वे तद्वदेवानियतत्वप्रसङ्गात्, कोशादित एव विशिष्टे शक्तिसिद्धेश्च, अन्यथा शक्यैक्ये शक्यतावच्छेदकभेदेन पर्यायभेदानुपपत्तेः, यथा त्यजिगम्यादेरिति भावनीयम्, व्युत्पत्तिविशेषेण बोधानियमेऽविनिगमादेव वा द्वयमर्थः । त्रिकमिति जातिव्यक्तिलिङ्गानीत्यर्थः । सत्त्वरजस्तमोगुणानां साम्यावस्था नपुंसकत्वम् । आधिक्यं पुंस्त्वम्, अपचयः स्त्रीत्वम्, तत्तच्छब्दनिष्ठं तद्वाच्यं च, तमेव विरुद्धधर्ममादाय तटादिशब्दा भिद्यन्ते, केषाञ्चिदनेकलिङ्गत्वव्यवहारस्तु समानानुपूर्वीकत्वेन शब्दानामभेदारोपात् । तच्च लिङ्गमर्थे परिच्छेदकत्वेनान्वेति । एवं च पदार्थपदे पुंस्त्वमेव, व्यक्तिपदे स्त्रीत्वमेव, वस्तुपदे नपुंसकत्वमेवेति, सर्वत्रायं

च्छिन्नप्रकारताकतद्विशिष्टबुद्धिम्प्रति निरवच्छिन्नतत्प्रकारताकतच्छक्तिज्ञानस्य सावच्छिन्नतत्प्रकारताकतद्विशिष्टबुद्धिम्प्रति च सावच्छिन्नतत्प्रकारताकशक्तिज्ञानस्य हेतुत्वमिति भावः । **जातिव्यक्ती इति**–विशेष्यविशेषणभावापन्ने ते इत्यर्थः । **न चे**त्यस्य **वाच्यमि**त्यनेनान्वयः । असाम्प्रतत्वे हेतुमाह–**यद्धर्मविशिष्ट** इत्यादि । **लक्ष्यतावच्छेदके**–गङ्गापदलक्ष्यतावच्छेदके तीरत्वे । **शक्यसम्बन्धरूपायाः**–गङ्गापदस्य यो जलप्रवाहविशेषरूपशक्यार्थस्सामीप्यलक्षणतत्सम्बन्धरूपायाः । विशिष्टे शक्त्यनभ्युपगमे जातिश्शक्यतावच्छेदिका न स्यादिति शक्यतावच्छेदकभेदेन पर्यायभेदो न स्यादित्याह **अन्यथेति** । तद्भेदेन तद्भेदः कुत्रेत्याशङ्कायां तत्र दृष्टान्तमाह–**यथेति** । त्यज्धात्वर्थः पूर्वदेशविभागानुकूला क्रिया, गम्धात्वर्थ उत्तरदेशसंयोगानुकूला क्रिया, यैव क्रिया विभागजनिका सैव संयोगजनिकेत्येवमुभयधात्वर्थक्रियाया ऐक्येऽपि पूर्वदेशविभागानुकूलत्वोत्तरदेशसंयोगानुकूलत्वरूपप्रवृत्तिनिमित्तयोर्भेदादेव पर्यायभेद इत्यर्थः, विशिष्टे शक्त्यनभ्युपगमे स न स्यादिति भावः । **लिङ्गानीति**–लिङ्गत्वञ्च प्राकृतगुणगतो धर्मविशेषः, तद्विशेषश्च नपुंसकत्वादिरित्याशयेनाह **सत्त्वेति** । **तत्तच्छब्दनिष्ठमिति**–जातिगुणक्रियादिभेदभिन्नशब्दनिष्ठमित्यर्थः । **तत्तद्वाच्यं चेति**–स्वाश्रयशब्दवाच्यं चेत्यर्थः । **तमेव विरुद्धधर्ममिति** समानानुपूर्वीकत्वेऽपि सत्त्वादिगुणत्रयसाम्यावस्थादिरूपं नपुंसकत्वमित्याद्युक्तलक्षणं परस्परासमानाधिकरणं लिङ्गमेवेत्यर्थः । **भिद्यन्ते** पुंस्त्वादिलिङ्गेनेतरव्यावृत्ततयाऽनुमीयन्ते । ननु लिङ्गस्योक्तावस्थारूपत्वे तासां परस्परविरुद्धानां तटादित्रिलिङ्गशब्देष्ववस्थानाऽसम्भवेन कथं 'तटं त्रिषु' इत्येवं तत्र त्रिलिङ्गत्वव्यवहार इत्यत आह **केषाञ्चिदिति**–केषाञ्चित्तटादिशब्दानां समानानुपूर्वीकत्वनिबन्धनाभेदाध्यासादनेकलिङ्गकत्वव्यवहारोपपत्तिरित्यर्थः । **परिच्छेदकत्वेनेति**–विशेषणत्वेनेत्यर्थः । लिङ्गविशेषविशिष्टस्यैवार्थविशेषवाचकतया लिङ्गानुशासनसिद्धतया च स्वाश्रयवाच्यत्वसम्बन्धेनार्थविशेषणत्वोपपत्तिरिति भावः । **एवञ्चेति** स्तनकेशवती नारी लोमशः पुरुषः स्मृतः इत्यादिस्मृतिलक्षितं लौकिकस्त्री-

पदार्थे इयं व्यक्तिरिदं वस्त्विति व्यवहारस्तटस्तटी तटमिति चोपपद्यते । अत एव पशुनेत्यादौ पुल्लिङ्गपशुपदप्रयोगान्न छाग्यादिलाभः । न च व्यक्त्यादिशब्दोक्तलिंगवत् पश्वादिशब्दोक्तस्य साधारण्यं शङ्क्यम्, व्यक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वेन तथासम्भवेऽपि पशुशब्दस्य नित्यपुँल्लिङ्गत्वे प्रमाणाभावात् । मीमांसायां चतुर्थे पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोर्विवक्षितत्वान्नानेकपशुभिः पशुस्त्रिया वा याग इति प्रतिपादितत्वाच्च । यदि च विशेषविध्यभावे उप्रत्ययान्ताना पुंस्त्वस्य व्याकरणे निर्णीतत्वात्पशुशब्दस्य नित्यपुंस्त्वं निर्णीयते, तदा पशुनेत्यादिविधौ मन्त्रवर्णन्यायनेनैव च्छागो मीमांसकैः प्रतिपादनीयः, कामधेनुरपि या पशुरेवेत्यादौ च

त्वादिकमर्थनिष्ठं लिङ्गं नैतच्छास्त्रीयप्रक्रियानिर्वाहकम्, दारानित्यादौ शस्प्रकृत्यर्थे तदभावेन नत्वाद्यनापत्तेः, एकस्मिन्नर्थे " पुष्यस्तारका नक्षत्रम् " इति लिङ्गनानात्वदर्शनाच्च, किन्तु पारिभाषिकं शब्दनिष्ठमुक्तलिङ्गमेवेत्यर्थत्वे चेत्यर्थः । उपपद्यत इति—अर्थनिष्ठस्य लिङ्गस्य व्यवहारोपपादकत्वे तु स्त्रीव्यक्तिवस्तुपदार्थपदाभ्यां पुरुषादिरपि व्यक्त्यादिशब्दैर्न व्यवह्रियेतेति भावः । अत एवेति—शब्दनिष्ठस्यैव पारिभाषिकलिङ्गस्य स्त्रीपुंसादिव्यवहारोपयोगित्वादेवेत्यर्थः । पशुनेत्यादौ पुल्लिङ्गपशुपदप्रयोगान्न छाग्यादिलाभ इति—यदि स्त्रीपशुर्यागाङ्गत्वेन विवक्षितोऽभविष्यत्तदा अस्त्रीविहितनाभावं विभक्त्यन्ते न प्रयोक्ष्यत् । तदनापशुपदप्रयोगात्तु पुम्पशुरेव यागाङ्गमिति निर्णीयत इत्यर्थः । स्त्रीलिङ्गार्थकपशुशब्दात् "आङो नाऽस्त्रियाम् " (पा० सू० ७ । ३ । १२० । ) इति सूत्रविहितनाभावस्य तृतीयैकवचनेऽसम्भवेन तदनापशुशब्दप्रयोगात् तदर्थस्य पुंस्त्वावगतेरिति भावः । न चेत्यस्य शङ्क्यमित्यनेनान्वयः । व्यक्त्यादीति—अत्रादिना वस्त्वादिपदसंग्रहः । साधारण्यमिति—स्वाश्रयवाच्यत्वसम्बन्धेन स्त्रीपुंवृत्तित्वमित्यर्थः । निषेधे हेतुमाह—व्यक्तिशब्दस्येत्यादिना । नित्यस्त्रीलिङ्गत्वेन व्यक्तिशब्दस्य तेन रामादीनां पुंसां बोधसम्भवेऽपि पशुशब्दो न नित्यपुल्लिङ्ग इति न तेन छाग्यादिस्त्रीबोध इत्यर्थः । ननु पशुना यजेत इत्येष वैदिकप्रयोग एव पशुशब्दस्य नित्यपुंस्त्वे मानमिति चेत्, मैवम्, ऋग्वेदे " पश्वाऽनतायुं गुहा चरन्तं " " पश्वे नृभ्यो यथा गवे " इत्यादिप्रयोगदर्शनात् पशुशब्दस्य स्त्रीलिङ्गत्वस्यापि दर्शनेन नित्यपुल्लिङ्गत्वाभावात्, तथा च तस्य न व्यक्त्यादिशब्दसाम्यमिति न पुल्लिङ्गेन पशुशब्देन छाग्यादेर्बोध इति भावः । स्वोक्तेऽर्थे मीमांसकसम्मतिमाह—मीमांसायामिति । विशेषविध्यभावे बाधकसूत्राभावे । निर्णीतत्वादिति—लिङ्गानुशासने " उप्रत्ययान्तः " इति सूत्रेण निर्णीतत्वादित्यर्थः । नित्यपुंस्त्वं निर्णीयत इति पशुशब्दस्य नित्यपुल्लिङ्गत्वे च पशुत्वावच्छिन्नवाचकत्वेन छाग्याः पशुत्वविशिष्टतया तेन तद्बोधोऽपि स्यादिति न पुम्पशोरेव यागाङ्गत्वनिर्णय इत्यत आह—तदेत्यादि । मन्त्रवर्णन्यायेन " छागो वा मन्त्रवर्णात् " इति न्यायेन । अयमभिप्रायः मन्त्रवर्णे हि " छागस्य वपाया मेदसः " इति श्रूयते तत्र पुंस्त्वविशिष्टछागपदोपादानादत्रापि पुल्लिङ्गपशुपदेन पुम्पशुरेव यागाङ्गतया निर्णीयते, न स्त्रीपशुरिति । कामधेनुरपि या पशुरेवेत्यादौ चेति अत्र कामधेनुबोधकस्य यच्छब्दस्य विशेष्यवाचकस्य स्त्रीलिङ्गत्वेऽपि विधेयीभूतपशुबोधकस्य

पशुपदस्य विधेयलिङ्गतैव न तु विशेष्यलिङ्गतेति स्मर्तव्यम् । चतुष्कं संख्यादिसहितं त्रिकमित्यर्थः । पञ्चकं कारकसहितं चतुष्कमित्यर्थः । नन्वन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यमस्तु, तत एव लिङ्गादीनामुपस्थितौ प्रकृतिवाच्यत्वे मानाभावादिति चेत्, सत्यम्, प्रत्ययवर्जिते दधि पश्येत्यादौ प्रत्ययमजानतोऽपि बोधात् प्रकृतेरेव वाचकत्वं कल्प्यते, तथा लिङ्गाद्यनुशासनाच्च, न वा लिङ्गादीनां प्रकृतिवाच्यत्वे निर्बन्धः, प्रत्ययस्यैव वाचकतायां युक्तत्वात् । " द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तय " इति वाक्यपदीयेऽपि पक्षद्वयव्युत्पादनात् । शब्देन सह षडपि नामार्थाः, तस्यापि नियतं शाब्दबोधे भानात्, अन्यथा विष्णुमुच्चारयेत्यादावगतेः, अर्थोच्चारणासम्भवात्, न च लक्षणया निर्वाहः, जबगडदशमुच्चारये-

पशुशब्दस्य पुल्लिंगस्यैवाभिधानम्, यदि नित्यपुल्लिंगपशुशब्दो न भवेत्तदा विशेष्यवाचकपदसमानलिङ्गत्वमेव विधेयपदस्येति नियमतः स्त्रीलिङ्गत्वमेव स्यात्, न पुल्लिंगत्वम्, तथा च "ऊङुतः" इति सूत्रेणोङ्प्रत्यये सति पशूरित्येव प्रयुज्येत, अतः पुल्लिंगस्यैव पशुशब्दस्यात्र प्रयोगो न स्त्रीलिंगस्येति नित्यपुल्लिंग एव पशुशब्द इत्यर्थः । सङ्ख्यादिसहितमिति- अत्र सङ्ख्यासहितमित्यपि पाठः । लिङ्गसङ्ख्याकारकाणां नामार्थत्वं साधयितुं शङ्कते नन्विति । अन्वयव्यतिरेकाभ्यामिति टाबादिसमभिव्याहारे अश्वादिपदात्स्त्रीत्वबोधात्तदभावे च तदबोधादेवंरूपाभ्यामित्यर्थः । एवमन्यत्राप्यूह्यम् । तथा च ताभ्यां लिङ्गादेः प्रत्ययार्थत्वावधारणान्न लिङ्गादित्रिकस्य प्रकृत्यर्थत्वमित्यर्थः । तत एवेति-प्रत्ययादेवेत्यर्थः । बोधादिति-कर्मत्वादिबोधादित्यर्थः । तथा चानेन व्यतिरेकव्यभिचारो दर्शित इति प्रत्ययस्य लिङ्गादित्रयवाचकत्वं नेति भावः । वक्ष्यमाणयुक्त्या संख्याकारकयोः प्रत्ययार्थत्वेऽपि लिङ्गस्य प्रकृत्यर्थत्वमेव युक्तमित्याशयेनाह तथा लिङ्गाद्यनुशासनाच्चेति--लिङ्गबोधकशास्त्राच्चेत्यर्थः। प्रकृतिप्रत्ययोरन्यतरस्य वाचकत्वे युक्तेस्साम्यादाह-नवेति । निर्बन्ध इति- इदमेव मतं मुख्यमित्यभिनिवेश इत्यर्थः । युक्तत्वादिति-अनन्तानां प्रकृतीनां वाचकत्वकल्पनापेक्षया कतिपयस्वादीनामेव तत्कल्पने लाघवादिति भावः । अस्मिन्नर्थे हरिसम्मतिमाह द्योतिका वाचिका वेति-प्रत्ययभागस्य संख्याकर्मादयो वाच्यत्वेन द्योत्यत्वेन वाऽर्था इति भावः । " यद्वा सङ्ख्यावतोऽर्थस्य समुदायोऽभिधायक " इति त्वस्योत्तरार्द्धम् । प्रकृतिप्रत्ययसमुदाय एव संख्यादिविशिष्टस्यार्थस्य वाचक इति तदर्थः। "न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं, सर्वं शब्देन भासते ॥१॥" इति हरिकारिकामनुसृत्याह-शब्देन सहेति । तस्यापि-शब्दस्यापि । अन्यथेति-शाब्दबोधे शब्दभानानभ्युपगम इत्यर्थः। अर्थोच्चारणासम्भवादिति-तथा च विना शब्दविषयं शाब्दबोधानुपपत्तेश्शब्दोऽपि प्रातिपदिकार्थ इति भावः । न्यायमते विष्णुमित्युच्चारय इत्येवं तस्यार्थ इति शाब्दबोधे न शब्दभानमिति । लक्षणया स्ववाच्यवाचकत्वसम्बन्धरूपया । निर्वाहः-शाब्दबोधे विशेष्यतया शब्दभानोपपत्तिः । यद्यपि विष्णुपदं विष्णुपदार्थवाचकमेव तथापि विष्णुपदस्य स्ववाच्यवाचके विष्णुशब्दे लक्षणाश्रयणात्तया शब्दभानं स्यादेवेति भावः । तन्निषेधे हेतुमाह जबगडदशमिति ।

त्यादौ शक्यायहेण शक्यसम्बन्धरूपलक्षणाया अज्ञानात्, अज्ञातायाश्च वृत्तेरनुपयोगात् । अत्र चानुकार्यानुकरणयोर्भेदविवक्षायामनुकार्यस्य पदादनुपस्थितत्वात्तत्सिद्धये शक्तिरुपेया, अभेदे प्रत्यक्षे विषयस्य हेतुत्वात् स्वप्रत्यक्षरूपा पदजन्योपस्थितिमादाय शाब्दबोधोपपत्तिरिति, यद्यप्याकाशादेः समवायितया

**शक्याग्रहेणेति** कुत्रापि समुदायरूपशक्यग्रहाभावेनेत्यर्थः । कुत्रापि शक्यं गृहीतं चेत्तदा तत्सम्बन्धरूपलक्षणया बोधस्स्यात्, न चात्र कुत्रापि शक्यं गृहीतमिति तत्सम्बन्धरूपलक्षणाज्ञानाभावेन तया कथं लक्ष्यबोधस्स्यात्, मन्मते तु तादृशसमुदायस्यैव तत्पदशक्यतया न बोधानुपपत्तिरिति भावः । ननु तत्र समुदायस्याशक्यत्वेऽपि तद्घटकजकारादिवर्णानामेकाक्षरकोशादौ जैत्रादौ शक्तिप्रतिपादनात्तत्तदर्थवाचकत्वरूपलक्षणायास्तत्र नानुपपत्तिरत आह **अज्ञातायाश्च वृत्तेरनुपयोगादिति**—गङ्गापदस्य स्वशक्यजलप्रवाहविशेषसामीप्यरूपसम्बन्धस्याग्रहे लक्ष्यार्थबोधस्यानुदयेन ज्ञाताया एव लक्षणायाः पदार्थोपस्थित्यौपयिकत्वेन प्रकृते तदग्रहात्तल्लक्ष्यार्थबोधानुपपत्तिस्तदवस्थैवेति भावः । ननु विष्णुमुच्चारयतीत्यादौ विष्णुपदस्य स्वस्मिन् शक्त्यभावेऽपि विष्णुरूपार्थे शक्तेस्सद्भावात् स्वशक्यविष्णुरूपार्थवाचकत्वलक्षणस्वशक्यसम्बन्धस्य स्वस्मिन् सम्भवेन तद्रूपलक्षणाबलाद्विष्णुपदाद्विष्णुपदस्योपस्थितिसम्भवेन तत एव शाब्दबोधे भानसम्भवेन विष्णुपदस्य स्वस्मिन् शक्तिर्नोपेया, अनन्यलभ्यो हि शब्दार्थ इति वचनात्, तथा च कथं शब्दस्वरूपमादाय षोढा शब्दार्थ इति चेत्, सत्यम्, किन्तु पुरुषोच्चरितगावशब्दं श्रुत्वा परः एवं ब्रवीति अयं गावमुच्चारयति, तत्र ग्रामीणप्रसिद्धगावशब्दस्यापशब्दस्य न क्वचिच्छक्तिरिति तदनुकरणरूपस्य गावशब्दस्यापि तत्समानस्वभावस्य नास्त्येव क्वचिदर्थे शक्तिरिति तस्य शक्यार्थाभावाच्छक्यसम्बन्धरूपलक्षणाया अप्यभावेन न ततोऽनुकार्यस्य गावशब्दस्योपस्थितिरिति गावमुच्चारयतीति वाक्यजन्यबोधे तद्भानं न स्यात्, भवति च तद्भानमिति तदुपपत्तयेऽनुकरणशब्दस्यानुकार्यशब्दस्वरूपे शक्तिरवश्यमुपेयेत्यतः शब्दस्वरूपमादाय षोढा प्रातिपदिकार्थोऽनुकार्योऽनुकरणशब्दयोर्भेदपक्षे उपपद्यते । शब्दजन्योपस्थितिविषय एव शब्दार्थ उपेयते, न तु वृत्तिग्रहद्वारा शब्दजन्योपस्थितिविषय एवेत्येवमभ्युपगमे त्वनुकार्यानुकरणयोरभेदपक्षे अनुकरणजन्यं तच्छ्रावणप्रत्यक्षं तद्रूपोपस्थितिविषयत्वादप्यनुकार्यपदस्य पदार्थत्वं नाद्धोपस्थितित एव तस्य शाब्दे भानमित्यतोऽपि शब्दस्य प्रातिपादिकार्थत्वं सङ्गतिमङ्गतीत्याशयेनाह—**अत्र चानुकार्यानुकरणयोरिति** । **पदादनुपस्थितत्वादिति** शक्त्यभावे ह्यपाद्रिः । तथा च शक्त्यभावेऽनुकार्यस्य पदादुपस्थित्यसम्भवादित्यर्थः । तत्सिद्धये शाब्दबोधजनक-पदजन्योपस्थितिसिद्धये । **शक्तिरुपेयेति**—तथा च तद्वृत्तिज्ञानजन्योपस्थित्याद्याश्रयशाब्दबोधोपपत्तिरिति भावः । **अभेदे इति**—अभेदविवक्षायामित्यर्थः । स्वप्रत्यक्षरूपामिति-अनुकरणशब्दस्य श्रावणप्रत्यक्षरूपामित्यर्थः । अयमाशयः अनुकार्यानुकरणयोरभेदपक्षे वृत्ति-रिक्तशक्तिं विनैव स्वविषयकश्रावणप्रत्यक्षरूपामुपस्थितिमादाय यथा कुत्रचिदनुकार्यस्य

घटादिपदादुपस्थितस्य शाब्दबोधे प्रवेशवारणाय वृत्तिजन्यपदार्थोपस्थितिरेव हेतुः, तथाप्यत्राश्रयतया वृत्तिमत्त्वस्य सत्त्वान्नानुपपत्तिः, निरूपकताश्रयतान्यतरसम्बन्धेन वृत्तिमतः शाब्दबोधे वृत्तिज्ञानत्वेन हेतुत्वकल्पने दोषाभावात्, सम्बन्धस्योभयनिरूप्यत्वात्पदादर्थस्येवार्थादुद्बोधकत्वेन शब्दस्यापि ज्ञान-सम्भवाच्च । तदुक्तं वाक्यपदीये "ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा । तथैव सर्वशब्दानामेते पृथ-

भानं तथैव घटमानयेत्यादौ घटादिपदानामपि तां सामग्रीमादाय भानस्य दुर्वारतया शाब्द-बोधमात्रस्य शब्दविषयकत्वसिद्धिरिति । **प्रवेशवारणायेति**—घटोऽस्तीत्यादिवाक्यजन्य-शाब्दबोधे भानापत्तिवारणायेत्यर्थः । **वृत्तिजन्येति**—वृत्तिज्ञानजन्येत्यर्थः । **वृत्तिजन्यपदार्थोपस्थितिरेव हेतुरिति**—अत्र यद्यपि शाब्दबोधे समानविषयत्वप्रत्यासत्त्या वृत्तिजन्योपस्थितिरेव हेतुः, यत्र पदार्थे यस्य पदस्य वृत्तिः तत्पदवृत्तिजन्या तत्पदार्थस्योपस्थितिर्भवतीत्येतावता वृत्तिजन्यपदार्थोपस्थितिः शाब्दबोधे हेतुरित्यभिधीयते, न तु कारणावच्छेदकतया पदार्थ-विषयकत्वमप्युपस्थितौ निवेश्यत इति लाघवम्, आत्मनिष्ठप्रत्यासत्त्योपस्थितिशाब्दबोधयोः कार्यकारणभावे तु समवायेन तत्पदार्थविषयकशाब्दबोधम्प्रति समवायेन वृत्तिजन्यपदार्थोप-स्थितिर्हेतुरिति गौरवं स्यात्, एवञ्च वृत्तिजन्यपदार्थोपस्थितिरेव हेतुरित्यत्र पदार्थविषयकत्वे-नोपस्थितेरभिधानमसङ्गतमिव प्रतिभाति, तथापि घटमुच्चारयतीत्यादावुच्चारणकर्मत्वस्य कम्बु-ग्रीवादिमत्यभावाद् घटपदस्यैव कर्मान्विततया शाब्दबोधविषयत्वमिति वृत्तिजन्या पदरूपस्य पदार्थस्य योपस्थितिः सैव हेतुर्न तु सम्बन्धान्तरजन्यपदरूपपदार्थोपस्थितिः शाब्दबोधहेतुरि-त्यर्थे नासङ्गतिः, अत्र पदार्थविषयकत्वं न कारणतावच्छेदककोटौ निवेश्यते, किन्तु कारणीभूतो-पस्थितिः पदार्थविषयिकेति पदस्यापि पदार्थत्वेन तद्विषयकत्वं तत्र समस्तीति तद्घटपदरूप-पदार्थस्य शाब्दबोधे भानोपपत्तिरित्यभिप्रेत्य तदुक्तिरिति । **सत्त्वान्नानुपपत्तिरिति**—शब्दे सत्त्वात्तस्य न शाब्दबोधविषयत्वानुपपत्तिरित्यर्थः । नन्वाश्रयतासंसर्गेण वृत्तिमत्त्वस्यैव शाब्द-बोधविषयत्वे तन्त्रत्वे निरूपकतासम्बन्धेन वृत्तिमतोऽर्थस्य शाब्दे भानानुपपत्तिरत आह **निरूपकेति** । **वृत्तिमतः शाब्दबोध इति**—उक्तान्यतरसम्बन्धेन वृत्तिमानर्थः शब्दश्चेति तद्विषयकशाब्दबोध इत्यर्थः । ननु पदाद् वृत्तिज्ञानद्वारा तद्वाच्यार्थशाब्दबोधोत्पत्तौ तत्र वृत्ति-ज्ञानद्वारोपस्थितार्थभानसम्भवेऽपि तत्र शब्दस्यापि भानं कथमित्याशङ्कानिवृत्त्यर्थमाह **सम्बन्धस्योभयनिरूप्यत्वादिति**—सम्बन्धस्योभयनिष्ठत्वेनोक्तसम्बन्धाश्रयस्यार्थस्येव श-ब्दस्यापि शाब्दबोधे भानं स्यादेवेत्यर्थः । हेत्वन्तरमप्याह **पदादर्थस्येवेत्यादि**—यत्संज्ञा-स्मरणं तत्र न तदप्यन्यहेतुकम् । पिण्ड एव हि दृष्टस्सन् संज्ञां स्मारयितुं क्षमः ॥१॥ इति । अस्मिन् श्लोके दृष्ट इत्यस्योपस्थित इत्यर्थः । अत्रार्थस्मरणजन्यशब्दस्मरणं शाब्दबोधार्थमेवो-पन्यस्तमिति तज्जन्यशाब्दबोधः शब्दस्मरणानन्तरमेव भवितुमर्हतीति क्षणविलम्बोऽर्थादवग-म्यते । उक्तार्थे हरिसम्मतिमाह **ग्राह्यत्वं ग्राहकत्वं चेत्यादि** । यथा तेजस्स्वोपलब्धौ तेजोन्तरानपेक्षत्वेन विषयीभावमापन्नमेव घटपटादिबाह्यार्थोपलब्धौ कारणमिति तत्र तेजसि

गवस्थिते ॥ १ ॥" इति, विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यत " इति । अनुकार्यानुकरणयोरभेदपक्ष एव च गवित्याह–भू सत्तायामित्याद्यनुकरणशब्दानामर्थवदादिसूत्राविषयत्वेन पदत्वस्य प्रातिपदिकत्वस्य वाऽभावेऽपि साधुत्वम् । बुद्धिप्रतिबिम्बकान्यापोह एव शब्दार्थ इत्यपि केचित्प्रतिपन्नाः,

ज्ञानविषयत्वलक्षणग्राह्यत्वं बाह्यार्थज्ञानजनकत्वलक्षणग्राहकत्वञ्चेति द्वे शक्ती विद्येते तथा शब्दोऽपि स्ववाचकशब्दान्तरानपेक्षत्वेन शाब्दबोधे विषयीभावमापन्न एवार्थान् शाब्दबोधेऽवभासयतीति बाह्यार्थोपलब्धौ कारणमिति तत्र ग्राहकत्वम्, स्वयञ्च तत्र भासत इति ग्राह्यत्वञ्च, एतच्च शक्तिद्वयमेकशब्दनिष्ठत्वादभिन्नमपि भिन्नकार्यकारित्वात्पृथगिवावस्थितम्, पृथक्कार्यं यत्र शब्दस्य जबगडदशादिस्थले तद्वाच्यार्थाऽभावेन नार्थसन्निधानं तत्र शब्दादर्थबोधो न भवतीति तत्र विद्यमानाऽपि ग्राहकत्वशक्तिर्नोपयोगिनी, यत्र वाच्यार्थसद्भावेनार्थसन्निधानं तत्रोपयोगिनीति तत्र शक्तिद्वयस्य सम्भूय कार्यकारित्वमिति भावः । तस्यैव पद्यान्तरमाह विषयत्वमनादृत्येति–स्वस्य विषयतामसम्पाद्य शब्दैरर्थो न बोध्यत इत्यर्थः । स्वजन्यार्थबोधत्वस्य स्वविषयकत्वव्याप्यत्वादिति भावः । प्रसङ्गादनुकार्यानुकरणयोरभेदपक्षे साधकमाह–अनुकार्यानुकरणयोरिति–स्वतन्त्रपुरुषोच्चारितो 'गो' इति शब्दोऽनुकार्यः, स विभक्तिरहित एवोच्चारित इति तत्स्वरूपज्ञापकेन परेण निर्विभक्तिक एव 'गो' इति शब्द उच्चार्यते सोऽनुकरणात्मकः समानानुपूर्वीकत्वे सत्येवानुकार्यानुकरणभावमासादयति, एवञ्च तयोरभेदपक्ष एव गवित्याहेत्यत्रानुकरणस्य 'गो' इत्यस्यार्थवत्त्वाभावेन "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" ( पा० सू० १।२।४५ ॥ ) इति प्रातिपदिकसंज्ञाविधायकसूत्राविषयत्वेन प्रातिपदिकत्वाभावात्प्रातिपदिकादेव प्रत्ययोत्पत्तिरित्यप्रातिपदिकान्न ततः प्रत्ययोत्पत्तिसम्भव इति पदत्वस्याप्यभावात् "न केवलं प्रकृतिः प्रयोक्तव्या" इत्यादिनियममूलकस्य "अपदं न प्रयुञ्जीत" इति निषेधविधेः प्रत्यययोग्यस्य प्रत्ययं विना प्रयोगेऽसाधुतापत्तिप्रयोजकस्य प्रत्ययायोग्येऽनुकरणेऽप्रवृत्तेस्तदतिक्रमणेऽप्यप्रत्ययस्यानुकरणस्य साधुत्वमिति तस्यावादेशतो गवित्याहेति भवति साधुः, एवमेव "भू" सत्तायामित्यत्र निर्विभक्तिकस्य भूशब्दस्य साधुत्वम्, अनुकार्यतोऽनुकरणस्य भेदे तु तस्यार्थवत्त्वस्यावश्यकतया प्रत्यययोग्यस्य तस्योक्तनिषेधविधिविषयत्वेन तदतिक्रमणेऽसाधुत्वमेव स्यादिति भावः । बुद्धिप्रतिबिम्बकान्यापोह एवेति–बुद्धिप्रतिबिम्बको वासनाविशेषतोऽसदर्थविषयक एव बुद्धेर्य आकारविशेषस्स बुद्ध्यात्मैव, तदात्मको योऽन्यापोहोऽदशरथव्यावृत्त्यादिः स एव दशरथादिशब्दार्थ इत्यपि केचिदपोहपदार्थवादिनः प्रतिपन्नाः–स्वीकृतवन्तः, इत्यपीत्यपिशब्देन यत्र जात्यादीनां पूर्वोक्तानामर्थानामनुभूयमानत्वं तत्र जात्यादयोऽपि शब्दार्थ इत्यर्थः सूचितः, अथवा सर्वशब्दानां बुद्धिप्रतिबिम्बात्माऽन्यापोह एवार्थः, अत एवैवकारेण जात्यादीनां पदार्थत्वव्यवच्छेदः, केचिदित्यनेनान्यापोहमात्रस्य पदार्थत्ववादिनां बौद्धविशेषाणां तदनुयायिनां वैयाकरणविशेषाणां वा ग्रहणम्, ननु बुद्धिप्रतिबिम्बस्य शब्दार्थत्वे शब्दात्तस्यैवोपस्थित्या शाब्दे भानं स्यान्न बाह्यस्यार्थस्य, तस्य शब्दार्थत्वाभावे-

तेषां विषयतया तदाश्रयस्याक्षेपादेव लाभः, तेषामदृष्टदशरथादीनामपि दशरथादिपदाददशरथव्यावृत्तिधी-विषयत्वेनोपस्थितिरित्यन्तासतोऽपि चार्थस्य वासनाविशेषोपनीतबुद्धिप्रतिबिम्बविषयत्वेन धीः सुलभा । एवमेते सर्वेऽपि शब्दार्थाध्यवसाया नैगमनये संभवन्ति,

शब्दत उपस्थित्यभावात्, यद्यपि बौद्धमते शब्दानां प्रामाण्याभावान्नार्थविषयकशाब्दबोधजनकत्वं, न वाऽपोहस्यापि शब्दजन्यबोधे प्रतिभासनम् । "विकल्पयोनयः शब्दाः, विकल्पाः शब्दयोनयः । कार्यकारणता तेषां, नार्थं शब्दाः स्पृशन्त्यपि" ॥१॥ इति वचनाद् विकल्पमात्रजनकत्वमेव शब्दानाम्, तथापि नैगमनयप्रसूते मते ऋजुसूत्रप्रसूतबौद्धमतस्य न प्रस्ताव इति य एवापोहशब्दार्थवादिनो बाह्यस्यापि प्रतिभासनं शाब्दे ऽङ्गीकुर्वन्ति त एवापोहशब्दार्थाऽभ्युपगममात्रेण बौद्धसजातीया अत्राधिकृता इति तेषां मतेऽर्थस्यापि सति सम्भवे शाब्दे प्रतिभासनं तदर्थानुपस्थितौ कथं स्यादित्यत आह–तेषामिति–मत इति शेषः, **विषयतया तदाश्रयस्याक्षेपादेव लाभ** इति–बुद्धिप्रतिबिम्बरूपस्यान्यापोहस्य विषयतासम्बन्धेनाश्रयस्य बाह्यवस्तुनो घटादेराक्षेपादेव लक्षणात एव लाभः–शाब्दबोधविषयत्वम् । यद्यपि विषयं विना बुद्धिप्रतिबिम्बो नोपपद्यते इत्येवमर्थापत्तिलक्षणादाक्षेपाल्लाभ इत्यप्यर्थः सम्मुखीनः, तथापि वृत्तिविषयस्यैव शाब्दबोधविषयत्वं, शाब्दबोधविषय एव श्रुतत्वव्यवहारो नार्थापत्तिविषय इत्यत आक्षेपादित्यस्य लक्षणात इति व्याख्यानम्, अत एव जातिशक्तिवादिमते आक्षेपादेव व्यक्तिलाभ इत्यत्राक्षेपादित्यस्य लक्षणात इत्यर्थोऽन्यत्र कृत इति । तेषाम्–अन्यापोहशब्दार्थवादिनाम्, मत इति शेषः, दशरथादिपदस्य दशरथादिरूपार्थे शक्तिग्रहणं न सम्भवति, प्रत्यक्षप्रमाणप्रतीत एवार्थे शक्तिग्रहो व्यवहारादितो भवति, ये चेदानीन्तनाः प्रमातारोऽतीतानां दशरथादीनां न प्रत्यक्षज्ञानवन्तस्तेषां तत्र शक्तिग्रहाभावान्न शाब्दबोधविषयतासम्भवः, किन्तु तेषामपि दशरथादिपदाद्वासनाविशेषसहकृताददशरथव्यावृत्तिधीविषयत्वेनादृष्टानामपि दशरथादीनामुपस्थितिः सम्भवति, अघटितघटनापटुमायास्थानीया वासना, तद्विशेषादुपनीतं यद्बुद्धिप्रतिबिम्बविषयत्वं तेन तेषां बुद्धिर्नाऽसम्भावनापथमवतरतीत्यर्थः, उपसंहरति **एवमिति**–अथवेदं नैगमस्य लक्षणं द्रष्टव्यम् "अनिष्पन्नार्थसंकल्पमात्रग्राही नैगमः" इति । निगमो हि सङ्कल्पस्तत्र भवस्तत्प्रयोजनो वा नैगमः । यथा कश्चित्पुरुषो गृहीतकुठारः पथि गच्छन् किमर्थं भवान् गच्छतीति केनचित्पृष्टः प्रतिवक्ति प्रस्थकमानेतुमिति, अटव्यां गतस्सन् काष्ठं छिन्दानः "भवान् किं छिनत्ति ?" इति पृष्टस्सन् आह प्रस्थकं छिनद्मि । मार्गे चागच्छन् पृष्टः किमिदं स्कन्धे त्वयाऽऽरोपितम् ?, स आह–'प्रस्थकः' । एवमाकुट्टयन्, घटयन्, उत्किरन्, श्लक्ष्णीकुर्वन्, नाम च तत्राऽऽकुट्टयन् यावद् धान्यमाने च व्यापारयन् किमिदं ? इति पृष्टस्सन्नाह प्रस्थकोऽयमिति । एधोदकाद्याहरणे वा कश्चित्पुमान् व्याप्रियमाणः किं करोति भवानिति केनापि पर्यनुयुक्तः प्राह–ओदनं पचामीति । न च प्रस्थकपर्याय ओदनो वा निष्पन्नः, तन्निष्पत्तये कारणे कार्योपचारेवृत्त्या तस्मिन् तदध्यवसायरूपे सङ्कल्पमात्रे प्रस्थादिव्यवहारात् । अयम्भावः प्रस्थकमानेतुमित्यत्र प्रस्थकपदस्य प्रस्थकदलयोग्यवृक्षे उपचारः, प्रस्थकं छिनद्मीत्यत्र प्रस्थकपदस्य

प्रस्थकवसत्यादिदृष्टान्तेन विचित्रस्य तस्य सूत्रे प्रतिपादनात् । यावत्तु तद्भेदेष्वभ्यनुज्ञया च जैनानामपक्षपातित्वम् । यदवदामः, अध्यात्मसारप्रकरणे " शब्दो वा मतिरर्थ एव किमु वा (वस्तु वा) जातिः क्रिया वा गुणः, शब्दार्थः किमिति स्थिता प्रतिमतं सन्देहशङ्कुव्यथा । जैनेन्द्रे(ऽनुमतेन)तु मते न सा प्रतिपदं जात्यन्तरार्थस्थितेः, सामान्यं च विशेषमेव च यथा तात्पर्यमन्विच्छति ॥१॥ " इति ।

छेदनक्रियायोग्ये काष्ठे उपचारः, प्रस्थकमाकुट्टयामि घटयामीत्यादिप्रश्नोत्तरेष्वाकुट्टनघटनादिक्रियायोग्यकाष्ठेषूपचाराः क्रमेण विशुद्धविशुद्धतरा भवन्ति, अत एव तन्मूलकविविधसङ्कल्परूपो नैगमनयोऽपि शुद्धशुद्धतरशुद्धतमो ज्ञेय इति । यथोक्तम् " सङ्कल्पो निगमस्तत्र, भवोऽयं तत्प्रयोजनः । तथाप्रस्थादिसङ्कल्प–स्तदभिप्राय इष्यते ॥१॥" इति । एतदभिप्रायेणाह–**प्रस्थकवसत्यादिदृष्टान्तेन विचित्रस्य तस्य सूत्रे प्रतिपादनादिति**–"से किं तं नयप्पमाणे ? नयप्पमाणे तिविहे पन्नत्ते तं जहा–पत्थगदिट्ठंतेणं वसहिदिट्ठंतेणं पएसदिट्ठंतेणं । "से किं तं पत्थगदिट्ठंतेणं ? २ से जहा नामए केइ पुरिसे परसुं गहाय अडवीसमहुत्तो गच्छेज्जा, तं पासित्ता केइ वएज्जा कहिं भवं गच्छसि ? अविसुद्धो नेगमो भणइ–पत्थगस्स गच्छामि" इत्यादिना ग्रन्थेन प्रदर्शितविस्तृतदृष्टान्तत्रयप्रकारेणानुयोगद्वारसूत्रे विचित्रस्य नानाप्रकारस्य तस्य नैगमनयस्य प्रतिपादनादित्यर्थः । जैनानां यावत्तत्तद्भेदेषु स्वीकारवृत्त्याऽपक्षपातित्वेऽध्यात्मसारग्रन्थसक्तजिनमतैकविंशतितमस्तुत्यधिकारदशमश्लोकसंवादमाह–**शब्दो वा मतिरर्थ एवेत्यादि** । शब्दार्थः तत्तच्छब्दवाच्यः । यश्शब्दार्थस्तमाह–शब्द इत्यादि । एवेत्यस्य सर्वत्रान्वयाच्छब्द एव, वा विकल्पे, अथवा मतिरेव–बुद्धिप्रतिबिम्बात्मकान्यापोह एव, किमु उत अर्थ एव–तत्तद्व्यक्तिरेव । किमुस्थाने वस्त्विति पाठश्च, वस्त्वेव द्रव्यमेव, वा अथवा जातिरेव, किम् उत क्रियैव गुणो वा, इति इत्येवं, **प्रतिमतं सन्देहशङ्कुव्यथा स्थिता**, शब्दवाच्यार्थनिश्चयाऽभाववतां जिज्ञासूनां तत्तद्विरुद्धमतानि दृष्ट्वा संशयरूपशङ्कुजन्यव्यावाधा भवत्येव, शब्दवाच्यार्थनिर्णयाभावात्, **जैनेन्द्रे तु मते**–अत्र तुः पूर्वोक्तमतेभ्यो वैलक्षण्यं सूचयति, **सा** सन्देहशङ्कुव्यथा **न**, तत्र हेतुमाह **प्रतिपदं जात्यन्तरार्थस्थितेरिति** तत्तच्छब्दवाच्यस्यान्योन्यसापेक्षसामान्यविशेषोभयांशात्मकजात्यन्तरत्वेनाभ्युपगमादित्यर्थः । नन्वेवं तर्हि केनचिच्छब्देन सामान्यार्थस्यैव बोधः, केनचिच्च विशेषार्थस्यैवेति किं निवन्धनमस्स्यादित्यत आह–**सामान्यं च विशेषमेव च यथा तात्पर्यमन्विच्छतीति**–कस्यचिच्छब्दस्य प्राधान्येन सामान्यमेव वाच्यं गौणतया विशेषः, कस्यचित्तु प्राधान्येन विशेष एव वाच्यः, गौणतया सामान्यमिति यथा वक्तृतात्पर्यं तथैव तत्तच्छब्दात्तथा तथा बोधः, जैनमते एकमेव वस्तु सामान्यविशेषोभयांशात्मकमिति तत्तन्मतप्रयोज्यवक्तृतात्पर्यविषयतत्तदंशप्राधान्यतदितरांशगौणत्वविवक्षणेन तत्तच्छब्दजन्यप्रधानीभूतैकांशगौणीभूततदितरांशविशिष्टवस्तुबोधस्तत्तन्नयप्रयोज्यो वस्तुगतैकांशतात्पर्यावलम्बनेनालौकिकः सम्पूर्णांशतात्पर्यावलम्बनेन सप्तभङ्ग्यात्मकप्रमाणवाक्यजन्यालौकिकश्च सम्पूर्णबोधो निराबाधो

एतादृशाध्यवसायवृत्तिद्रव्यार्थिकत्वव्याप्यजातिमत्त्वं

त्येव, उक्ततात्पर्यानवलम्बनेन तु जायमानैकांशमात्रविषयकलौकिकबोधो भवेद्, स च व्यवहारतः प्रमात्मकोऽपि वस्तुगत्याऽप्रमात्मक एवेति भावः । तदुक्तं तत्रैव—"यत्रानर्पितमादधाति गुणतां मुख्यं तु वस्त्वर्पितम् । तात्पर्याऽनवलम्बनेन तु भवेद् बोधः स्फुटं लौकिकः ॥ सम्पूर्णं त्ववभासते कृतधियां कृत्स्नाद्विवक्षाक्रमात् । तां लोकोत्तरभङ्गपद्धतिमयीं स्याद्वादमुद्रां स्तुमः ॥११॥" इति । तदेवमुक्ताऽलौकिकनयवाक्यजन्यबोधोक्तालौकिकप्रमाणवाक्यजन्यबोधक्षमं सर्वनयैकभावगरिमस्थानं भगवत्प्रवचनं बाधितुं तत्तदेकान्तांशप्रतिपादकतत्तद्दर्शनसङ्कथा न क्षमा, तदुक्तं तत्रैव सदृष्टान्तम्—"उष्मा नार्कमपाकरोति दहनं नैव स्फुलिङ्गावली, नाब्धिं सिन्धुजलप्लवः सुरगिरिं ग्रावा न चाभ्यापतन् । एवं सर्वनयैकभावगरिमस्थानं जिनेन्द्रागमं, तत्तद्दर्शनसङ्कथांशरचनारूपा न हन्तुं क्षमा ॥७॥" इति । एतादृशाध्यवसायवृत्तिद्रव्यार्थिकत्वव्याप्यजातिमत्त्वमिति—सामान्यविशेषग्राहिणो ये शब्दार्थाध्यवसायास्तद्वृत्तिद्रव्यार्थिकत्वव्याप्यजातिमत्त्वमित्यर्थः, नैगमनयस्य नानाप्रकारत्वान्नैगमत्वजातिमादाय तत्सर्वप्रकारसंग्रहार्थं द्रव्यार्थिकत्वव्याप्यजातिपर्यन्तानुधावनमत्र कृतम्, तद्वृत्तिजातिमात्रनिवेशे नैगमत्वजातिमादाय नानाप्रकारसर्वनैगमनयसङ्ग्रहेणाव्याप्तिदोषनिवृत्तावपि महासामान्यसत्ताजातिमादाय वस्तुमात्रेऽतिव्याप्तिस्स्यात्, तन्निवारणाय तद्वृत्तिज्ञानत्वव्याप्यजातिनिवेशे नयत्वजातिमादाय पर्यायार्थिकनयेऽतिव्याप्तिस्स्यात्, तद्वारणाय तद्वृत्तिनयत्वव्याप्यजातिनिवेशे द्रव्यार्थिकत्वजातिमादाय सङ्ग्रहादावतिव्याप्तिस्स्यादित्यतस्तद्वृत्तिद्रव्यार्थिकत्वव्याप्यजातिनिवेशः कृतः । न चैवमपि द्रव्यार्थिकत्वजातेस्स्वाभाववदवृत्तित्वात्स्वव्याप्यत्वेन तामादाय सङ्ग्रहनयादावतिव्याप्तिस्तदवस्थैवेत्याशङ्कनीयम्, तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वलक्षणान्यूनवृत्तित्वार्थकस्य व्याप्यत्वस्यात्र ग्रहणात्, यदि तदभाववदवृत्तित्वमेव व्याप्यत्वमित्येवाग्रहस्तदा स्वस्य स्वव्याप्यत्ववारणाय स्वभिन्नत्वेनापि व्याप्यजातिर्विशेषणीयेति । एवमग्रेऽपि भावनीयम् । अत्र प्राधान्येन सामान्यविषयकाध्यवसायवृत्तित्वे सति प्राधान्येन विशेषविषयकाध्यवसायवृत्तिद्रव्यार्थिकत्वव्याप्यजातिमत्त्वं नैगमत्वमित्याद्यपि लक्षणमूह्यम् । अत्र सत्यन्तनिवेशान्न व्यवहारेऽतिव्याप्तिः, सुनयवृत्तेर्व्यवहारत्वस्य गौणवृत्त्या सामान्यविषयकाध्यवसायवृत्तित्वेऽपि प्राधान्येन तद्विषयकाध्यवसायवृत्तित्वाभावात्, व्यवहारनयेन प्रधानतया विशेषविषयकाध्यवसायस्यैवाभ्युपगमात्, प्राधान्येन विशेषविषयकेत्याद्युपादानान्न सङ्ग्रहनयेऽतिव्याप्तिः, सुनयवृत्तेस्संग्रहत्वस्य गौणतया विशेषविषयकाध्यवसायवृत्तित्वेऽपि प्रधानवृत्त्या तद्विषयकाध्यवसायवृत्तित्वाभावात् । प्राधान्येन सामान्यविषयकत्वे सति प्राधान्येन विशेषविषयकाध्यवसायत्वं नैगमत्वमित्येतावन्मात्रोक्तौ च यद्यपि प्रमाणात्मकज्ञाने नातिव्याप्तिः, यतस्तस्य प्राधान्येन सामान्यविशेषोभयविषयकत्वेऽपि सामान्यविशेषोभयात्मकत्वेन जात्यन्तररूपवस्त्ववगाहित्वत एव तस्य निरुक्तोभयावगाहित्वमिति तत्र सामान्यविषयत्वविशेषविषयत्वयोरेकवस्त्ववच्छे-

तादृशान्यतरत्वविशेषो वा नैगमनयलक्षणं बोध्यम् । एवमग्रेऽप्यध्यवसायविशेषान् परिगृह्य तद्वृत्तिजातिधर्माणि भेदधर्माणि वा लक्षणानि वाच्यानि ॥ संग्रहं लक्षयति–अर्थानामित्यादि । अर्थानां घटादीनां सर्वे

देन समानाधिकरणयोरवच्छेद्यावच्छेदकभावः, नयनिरूपितयोश्च तयोरेकवस्तुविभिन्नांशमात्रगतयोर्नावच्छेद्यावच्छेदकभाव इति मिथोऽनवच्छेद्यावच्छेदकभावापन्नयोरेव सामान्यविशेषविषयत्वविशेषयोर्निरुक्तनैगमलक्षणे प्रवेशात्, तथापि–" धर्मयोर्धर्मिणोर्धर्म–धर्मिणोश्च विवक्षणम् । गुणप्रधानभावेन नैगमस्तद्विदां मतः ॥ १ ॥" इत्युक्तलक्षणनैगमस्य सच्चैतन्यमात्मनि १ वस्तु पर्यायवद्द्रव्यम् २ क्षणमेकं सुखी विषयासक्तजीवः ३ इत्युदाहरणत्रयेऽव्याप्तिस्स्यात्, तत्र प्रधानोपसर्जनभावविवक्षणादिति तद्वारणाय प्राधान्येन सामान्यविषयकाध्यवसायवृत्तित्वे सति प्राधान्येन विशेषविषयकाध्यवसायवृत्तिद्रव्यार्थिकत्वव्याप्यजातिमत्त्वमित्युक्तम्, तथा च धर्मद्वयविषयो धर्मियुग्मगोचरो धर्मधर्म्यालम्बनश्चेति नैगमभेदत्रयेऽपि नैगमत्वजातिमादायोक्तलक्षणसमन्वयान्नाव्याप्तिः । एवञ्च घटोऽयं पटोऽयमित्याद्येकैकधर्ममात्रावगाह्यध्यवसायेष्वपि तादृशाध्यवसायवृत्तिद्रव्यार्थिकत्वव्याप्यनैगमत्वजातिर्वर्त्तत इति न तेष्वप्यव्याप्तिः । अत्राप्यन्यत्सर्वं पूर्ववदूह्यमिति "धर्मयोर्धर्मिणोर्धर्म–धर्मिणोश्च विवक्षणम् । गुणप्रधानभावेन, नैगमस्तद्विदां मतः ॥१॥" इति श्लोकेन " धर्मयोर्धर्मिणोर्धर्मधर्मिणोश्च प्रधानोपसर्जभावेन यद्विवक्षणं स नैकगमो नैगम इति " । ७–७। प्रमाणनयतत्त्वालोकालङ्कारसूत्रानुसारिणोक्तस्य नैगमनयलक्षणस्य पर्यवसानञ्चैवं ज्ञेयम्–पर्याययोर्द्रव्यवस्तुनोः पर्यायद्रव्ययोश्च मुख्यामुख्यरूपतया यो विवक्षात्मकोऽभिप्रायस्तद्वृत्तिद्रव्यार्थिकत्वव्याप्यजातिमत्त्वं नैगमनयत्वमिति । अत्र नैगमस्य धर्मद्वयगोचरप्रथमभेदस्योदाहरणम्–"सच्चैतन्यमात्मनीति" तत्र चैतन्याख्यस्य व्यञ्जनपर्यायस्य विशेष्यतयामुख्यत्वेन सत्त्वाख्यस्य च व्यञ्जनपर्यायस्य चैतन्यविशेषणत्वेनामुख्यत्वेन विवक्षणम् । नैगमस्य धर्मिद्वयगोचरद्वितीयभेदस्योदाहरणम्–" वस्तु पर्यायवद्द्रव्यमिति " अत्र पर्यायवद्द्रव्यं वस्तु वर्त्तत इति विवक्षायां पर्यायवद्द्रव्याख्यस्य धर्मिण उद्देश्यतया विशेष्यत्वेन प्राधान्यम्, वस्त्वाख्यस्य तु धर्मिणो विधेयत्वेन प्रकारतया गौणत्वम् । यद्वा किं वस्तु पर्यायवद्द्रव्यमिति विवक्षायां वस्तुनो विशेष्यत्वात्प्राधान्यं पर्यायवद्द्रव्यस्य विधेयतया प्रकारत्वविवक्षणाद् गौणत्वम् । धर्मधर्मिगोचरतृतीयभेदस्योदाहरणम्–"क्षणमेकं सुखी विषयासक्तजीव इति " । अत्र विषयासक्तजीवाख्यस्य धर्मिणो मुख्यता, विशेष्यत्वात्, सुखलक्षणस्य तु धर्मस्याप्रधानता, तद्विशेषणत्वेनोपात्तत्वादिति । न चास्यैवं प्रमाणत्वानुषङ्गः, धर्मधर्मिणोर्द्वयोः प्राधान्येनात्र ज्ञप्तेरसम्भवात् । तयोरन्यतरदेव हि नैगमनयेन प्रधानतयाऽनुभूयते, प्राधान्येन द्रव्यपर्यायद्वयात्मकं चार्थमनुभवद्विज्ञानं प्रमाणं प्रतिपत्तव्यं नान्यदित्युक्तं प्रागेव । सङ्ग्रहादिनयचतुष्टयनिष्ठां पक्षान्तरेण सङ्ग्रहादिनयत्रयगतां यदि द्रव्यार्थिकत्वजातिं कोऽपि नाभ्युपगच्छेत्तदाप्याह–तादृशान्यतरत्वविशेषो वेति । अध्यवसायविशेषाणां नैगमस्वरूपाणां नानात्वेऽप्यन्यतरत्वेन यत्तेषामुपादानं तदनेकभेदावच्छिन्नप्रतियोगिताकभेद एवान्यतरत्वमित्यस्युपेत्य, न तु भेदद्वयावच्छिन्नप्रतियोगिताकभेदलक्षणम् । इत्थ-

सामान्यमेकदेशो विशेषस्तयोः संग्रहणमेकीभावेनाश्रयणं सर्वमेकं सदविशेषादित्यध्यवसाय इति यावत् स संग्रहो भण्यते । यद्यपि 'संगहिअपिंडियत्थं, संगहवयणं समासओ बिंति'त्ति सूत्रस्वरसात् "संग्रहः संगृहीतस्य पिण्डितस्य च निश्चयः । संगृहीतं परा जातिः पिण्डितं त्वपरा स्मृता ॥१॥ इति ग्रन्थेनास्माभिरन्यत्र विषयभेदेन संग्रहस्य द्विभेदत्वमुक्तं, तथापि पदव्युत्पत्तिनिमित्तं संग्राहकत्वैकरूपमाश्रित्य तदत्र नादृतम् । इतः शब्दब्रह्मपरब्रह्माद्यद्वैतदर्शनानि प्रवृत्तानि । व्यवहारं लक्षयति–लौकिकेत्यादि । लोके मनुष्यलोकादौ

सेत्र स्वसमयेऽन्यतमस्थानेऽन्यतरोपादानं तत्र तत्र दृश्यत इति । **सदविशेषादिति**–जीवाजीवादिपदार्थमात्रे सन् सन्नित्यनुगतप्रतीतिमात्रात्तद्विषयीभूतसत्त्वेन रूपेणाशेषार्थानामविशेषादभेदादित्यर्थः, तथा चाशेषविशेषेष्वौदासीन्यं भजमानो यस्सत्तारूपेण वस्तुमात्राभेदाध्यवसायस्तद्वृत्तिद्रव्यार्थिकत्वव्याप्यजातिमत्त्वं सङ्ग्रहनयत्वमिति पर्यवसितोऽर्थः । तेनापरसंग्रहस्य द्रव्यत्वादिरूपेण धर्मास्तिकायादिद्रव्याऽभेदावगाहिन उक्ताध्यवसायत्वाभावेऽप्युक्ताध्यवसायवृत्तिद्रव्यार्थिकत्वव्याप्यसंग्रहत्वजातेरत्र सत्त्वान्नाव्याप्तिः । न वा नैगमनयेऽतिव्याप्तिः, तन्मते द्रव्यादित्रयवर्त्तिसत्ताजातिस्वीकारेऽपि तद्रूपेण निखिलवस्तुन्यभेदाध्यवसायाऽनभ्युपगमादिति । **"संगहियपिंडियत्थं संगहवयणं समासओ बिंति" ॥ २१८३ ॥** इति विशेषावश्यकनिर्युक्तिगाथापूर्वार्द्धम्, तस्य चायमर्थः–"अहवा महासामन्नं संगहियपिंडियत्थमियरं ति" २२०५ इति तद्भाष्यवचनात् अथवा सत्ताख्यं महासामान्यं संगृहीतमुच्यते, इतरत्तु द्रव्यत्वादिकमवान्तरसामान्यं पिण्डितार्थमभिधीयते, ततः संगृहीतपिण्डितार्थं परापरसामान्यार्थं संग्रहवचनं समासतः संक्षेपतो ब्रुवते इत्यर्थः । **संग्रहः संगृहीतस्येत्यादिश्लोक**स्यायमर्थः संगृहीतस्य पिण्डितस्य च निश्चयः सङ्ग्रहः, तत्र संगृहीतं परा–सर्वव्यापिका जातिः–सत्ताख्यमहासामान्यमिति यावत्, पिण्डितं त्वपरा देशव्यापिका जातिस्स्मृता, द्रव्यत्वादिकमवान्तरसामान्यं कथितमिति । यद्यप्येतदुभयग्राहित्वं प्रत्येकग्राहिसंग्रहेऽव्याप्तं प्रत्येकग्राहित्वं चाननुगतं तथापि सामान्यमात्राभ्युपगमप्रवणैकदेशबोधित्वं संग्रहनयत्वमिति लक्षणं बोध्यमिति । ग्रन्थेन–नयोपदेशग्रन्थसत्कद्वात्रिंशतितमश्लोकेन । **संग्रहस्य द्विभेदत्वमुक्तमिति**–उक्तश्च जैनतर्कभाषायां पूज्योपाध्यायैः स च द्वेधा परोऽपरश्च, तत्राशेषविशेषेष्वौदासीन्यं भजमानः शुद्धद्रव्यं सन्मात्रमभिमन्यमानः परसंग्रहः, यथा विश्वमेकं सदविशेषादिति । द्रव्यत्वादीन्यवान्तरसामान्यानि मन्वानस्तद्भेदेषु गजनिमीलिकामवलम्बमानः पुनरपरसंग्रहः, यथा धर्माधर्माकाशपुद्गलजीवद्रव्याणामैक्यं द्रव्यत्वाभेदादिति । **पदव्युत्पत्तिनिमित्तमिति** संगृह्णाति सामान्यरूपतया सर्वं वस्तु क्रोडीकरोतीति संग्रह इत्याकारिका सर्वेऽपि भेदास्सामान्यरूपतया संगृह्यन्तेऽनेनेति संग्रह इत्याकारिका वा वस्तुजातं "सम्" एकीभावेन गृह्णातीति संग्रहः इत्याकारिका वा या व्युत्पत्तिस्तन्निमित्तमित्यर्थः । तत् द्विभेदत्वम् । **इतः शब्दब्रह्मपरब्रह्माद्यद्वैतदर्शनानि प्रवृत्तानीति** शब्दब्रह्माद्वैतदर्शनं शब्दसन्मात्रस्वरूपब्रह्मवादः, परब्रह्माद्यद्वैतदर्शनं सच्चिदानन्दस्वरूपब्रह्मवादः, एतदुभयवादः शुद्धसंग्रहनयप्रकृतिकत्वात्ततः प्रवृत्तः,

त्रिदिता सत्त्वा लौकिका ये पुरुषास्तैः समस्तुल्यः, यथा लौकिका विशेषैरेव घटादिभिर्व्यवहरन्ति तथाऽय-
मुक्तश्च सम्मतौ "दव्वट्ठियनयपयडी सुद्धा संगहपरूवणाविसओ" इति। नयोपदेशेऽपि "जातं द्रव्यार्थिकाच्छुद्धाद्दर्शनं ब्रह्मवादिनां। तत्रैके शब्दसन्मात्रं, चित्सन्मात्रं परे जगुः ॥ ११०॥" इत्युक्तम्। आदिपदात्त्रिगुणात्प्रधानात्प्रवर्त्तमाना महदादयः कार्यविशेषास्तदात्मका एव, कार्यकारणयोस्तादात्म्यादिति कारणस्य प्रधानस्य यत्त्रिगुणात्मकत्वं सत्त्वं तदेव तत्कार्याणामपि, तथा चात्मभिन्नं सर्वमेकं त्रिगुणात्मकत्वादित्याद्यभिप्रायशालि यत्सांख्यदर्शनं तस्य परिग्रहः कार्यः। तस्य व्यवहारनयाभ्युपगतभेदसंमिश्राभेदाभ्युपगमपरत्वेनाशुद्धसंग्रहनयप्रकृतिकत्वात्तत्प्रवृत्तत्वं ज्ञेयमिति। ईश्वरभिन्नप्रकृतिप्रक्रियांशे सांख्यदर्शनेन सह साम्यात्पातञ्जलदर्शनस्यापि त्रिगुणात्मकत्वेन रूपेण प्रकृतितद्विकारयोर्योऽभेदस्तदंशमादायाऽशुद्धसंग्रहनयप्रकृतिकत्वात्तदप्यादिपदेनात्र ग्राह्यमिति, वस्तुतस्सांख्यदर्शने चेतनाचेतनवस्तुद्वयाभ्युपगमेन भेदाभ्युपगमपरत्वात्तस्य व्यवहारनयप्रकृतिकत्वमेवेति। उक्तञ्च सम्मतिटीकायाम् "अशुद्धद्रव्यार्थिको व्यवहारनयावलम्बी एकान्तनित्यचेतनाऽचेतनवस्तुद्वयप्रतिपादकसांख्यदर्शनाश्रित" इति। नयोपदेशेऽप्युक्तम्–"अशुद्धाद्व्यवहाराख्यात्ततोऽभूत्साङ्ख्यदर्शनम्। चेतनाचेतनद्रव्यानन्तपर्यायदर्शकम् ॥१११॥" इति। वेदान्तप्रकृतिभूतसंग्रहनयेनैकतया विषयकृतस्यात्मनः भेदकरणेन संग्रहविषयभेदकत्वलक्षणसमन्वयाद्व्यवहारप्रकृतित्वं सांख्यदर्शनस्य विवक्षितमिति तात्पर्यम्। शब्दब्रह्मवादो हि भर्तृहरिणाऽऽदृतः, उक्तञ्च तेन वाक्यपदीयग्रन्थे प्रथमकाण्डे–"अनादिनिधनं ब्रह्म, शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन, प्रक्रिया जगतो यतः ॥१॥ न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं, सर्वं शब्देन भासते ॥१२४॥ वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती। न प्रकाशः प्रकाशेत, सा हि प्रत्यवमर्शिनी ॥१२५॥" इत्यादि। शब्दार्थयोरभेद एव सम्बन्ध इति वैयाकरणाभ्युपगतिरप्येतद्वादावलम्बिन्येव, एतन्मते शब्दब्रह्मत्वेन रूपेण सर्वस्यैक्यं बोध्यम्, शब्दस्वभावात्मकं ब्रह्म च प्रणवस्वरूपम्, तच्च सर्वेषां शब्दानां सर्वेषां चार्थानां प्रकृतिः। अयञ्च वर्णक्रमरूपो वेदस्तदधिगमोपायः, प्रतिच्छन्दकन्यायेन तस्यावस्थितत्वात्, तच्च परमं ब्रह्म अभ्युदयनिःश्रेयसफलधर्मानुगृहीतान्तःकरणैरवगम्यते। अत्र च प्रयोगः–ये यदाकारानुस्यूतास्ते तन्मयाः, यथा घटशरावोदञ्चनादयो मृदाकारानुगता मृन्मयत्वेन प्रसिद्धाः, शब्दाकारानुस्यूताश्च सर्वे भावाः, तस्मात्तन्मया इति। सच्चिदानन्दब्रह्मवादो हि वेदान्तिभिरादृतः, तन्मते हि ब्रह्मभिन्नस्याशेषस्य जगतो नामरूपात्मकस्य मिथ्यात्वम्, ब्रह्मणस्त्वद्वितीयसच्चिदानन्दात्मकस्य सत्यत्वम्, यतो ब्रह्मैव तेन तेन घटाद्यात्मनाऽवभासते–तथा चायं सर्प इयं माला इदं वस्त्रमित्यादाविदं स्वरूपमनुगामि तथा घटस्सन् पटस्सन् मठस्सन्नित्यादौ सर्वत्र ब्रह्मात्मकसद्रूपमनुगामि, एवञ्च घटपटादिरूपस्य जगतस्सत्ता ब्रह्मसत्तैव, अतो ब्रह्मरूपेण सर्वस्यैकत्वमिति सङ्ग्रहनयमूलकत्वं वेदान्तदर्शनस्य सिद्धमिति। विशेषैरेवेति–अत्रैवकारस्यान्ययोगव्यवच्छेदार्थकतया तेन सामान्यनिषेधात्केवलविशेषैरित्यर्थः।

मपीत्यतस्तत्समः। उपचारो नामाऽन्यत्र सिद्धस्यार्थस्यान्यत्रारोपः, यथा कुण्डिकास्थे उदके स्रवति कुण्डिका स्रवतीति, पुरुषे च गच्छति पन्था गच्छति, गिरितृणादौ दह्यमाने गिरिर्दह्यत इत्यादौ, तत्प्रायस्तद्बहुलः। विस्तृतो विस्तीर्णोऽनेकेषां विशेषाणां ज्ञेयत्वादर्थो विषयो यस्य स तथा,

सामान्यानभ्युपगमे सति विशेषाऽभ्युपगमादिति भावः । अत एव विशेषतोऽवह्रियते-निराक्रियते सामान्यमनेनेति व्यवहार इति व्यवहारस्य व्युत्पत्तिर्गीयते सिद्धान्ते। तथाऽ-थम्मपीत्यतस्तत्सम इति-तथा च विशेषानाऽऽश्रित्य लोकव्यवहारप्रधानो नयो व्यवहारनय इति भावः । अत एव "लोकव्यवहारौपयिकोऽध्यवसायविशेषो व्यवहारः" इति नयरहस्योक्तं व्यवहारलक्षणं सङ्गच्छते । नन्वयं नयो यदि सदित्युक्ते विशेषानेव घटपटादीन् प्रतिपद्यते, तेषामेव व्यवहारहेतुत्वात्, तथाहि-लोके घटपटगवादयो विशेषा एव जलाहरणाच्छादनबन्धनादिक्रियासूपयुज्यमाना दृश्यन्ते, न पुनस्तदतिरिक्तसामान्यं, यतो न हि घटमानय पटेनाच्छादय गां बधान" इत्युक्ते कश्चिद् घटत्वमानेतुं पटत्वेनाच्छादयितुं गोत्वं बध्नुमध्यवस्यतीति जलाहरणाद्युपयोगिनो घटादिविशेषानेवायमङ्गीकरोति, अर्थक्रियाकारित्वलक्षणसत्त्वोपेतत्वात्, न तूक्तसत्त्वलक्षणरहितानि विविधरूपाणि घटत्वपटत्वादिसामान्यानि, उक्तञ्च-"जं च विसेसेहिं चिय, संववहारो वि कीरए सव्वं। जम्हा तम्मत्तं चिय, फुडं तदत्थंतरमभावो" २२१५ । इति । नन्वेवं तर्हि निखिलघटपटादौ घटोऽयं घटोऽयं पटोऽयं पटोऽयमित्याद्यनुगतप्रतीतिरेतन्मते कथं स्यादिति चेत्, उच्यते, अखण्डातद्व्यावृत्तितस्सोपपादनीयेति, तत्राखण्डाभावनिवेशाच्च नान्योन्याश्रयः, अस्तु वा शब्दानुगमादेवानुगतत्वव्यवहारः, दण्डचक्रादिष्वनुगतसामान्याभावेऽपि दण्डः कारणं चक्रादिरपि कारणमित्यनुगतव्यवहारवदिति । लोकव्यवहारसमत्वादेवास्य नयस्य पञ्चवर्णात्मकेऽपि भ्रमरादावुद्भूतत्वात् बहुतरत्वाद्वा कृष्णादिवर्णमेकमेवाभ्युपगच्छति स नयः। एवं तर्हि भ्रान्तत्वप्रसक्तिस्स्यात् पञ्चवर्णात्मके एकवर्णबोधादिति न च वाच्यम्, कृष्णादिपदस्योद्भूतकृष्णादिपरत्वेन विवक्षणात्, तेनैव लोकव्यवहारात्, यतो न ह्युद्भूतकृष्णरूपं परित्यज्यान्यरूपाणीक्ष्यन्ते लोकैरिति व्यवहारनयोऽप्येवमेवाभ्युपगच्छति, प्रत्यक्षमात्रप्रमाणाभ्युपगमपरत्वात्, न नैश्चयिकपञ्चरूपादिकम् । उपचारप्राय इत्येतद्घटकोपचारपदस्यार्थमाह उपचारो नामेत्यादिना, कुण्डिका स्रवतीत्यत्र कुण्डिकापदस्य कुण्डिकास्थजले लक्षणा, तद्बीजं तु-अनिविडत्वप्रतीतिः प्रयोजनम्, यद्वा कुण्डिकापदार्थस्याद्रवत्वेन स्रवणेऽन्वयस्य तात्पर्यस्य वा अनुपपत्तिरेवेति बोध्यम् । पन्था गच्छतीत्यत्र पथिपदस्य पथि गच्छति पुरुषसमुदाये लक्षणा, तद्बीजं तु नैरन्तर्यप्रतीतिः । यद्वा स्थिरस्य पथिपदार्थस्य गम्धात्वर्थेऽन्वयस्य तात्पर्यस्य वाऽनुपपत्तिः । गिरिर्दह्यत इत्यत्र गिरिपदस्य गिरिस्थतृणादौ लक्षणा, तद्बीजं तु भूयोदग्धत्वप्रतीतिः प्रयोजनम् । गिरेरदह्यमानत्वेन दहनक्रियाऽन्वयाऽनुपपत्तिरेव वा । तत्प्राय इत्यस्यार्थमाह तद्बहुल इति-उपचारबाहुल्येन व्यवहारकारीति भावः । भाष्योक्तस्य विस्तृतार्थ इत्यस्यार्थमाह-विस्तृतो विस्तीर्ण इत्यादि।

एतादृशोऽध्यवसायविशेषो व्यवहार इति निगद्यते। ऋजुसूत्रं लक्षयति—सतामित्यादि। सतां परमार्थसतां, न तु खपुष्पादीनामत्यन्तासतां, प्रधानादीना वा संवृतिसतां, तेषामपि सांप्रतानां मध्यमक्षणवर्तिनां, नातीतानागतानाम्, अभिधानपरिज्ञानं समाहारद्वन्द्वादभिधानं परिज्ञानं च, आश्रित्येति शेषः, ऋजुसूत्रनयो भवति, इदमुक्तं भवति—अर्थमभिधानं परिज्ञानं च वर्तमानमेव योऽध्यवसायोऽभ्युपैति स ऋजुसूत्र इत्यर्थः। अवदाम च—" भावत्वे वर्तमानत्वव्याप्तिधीरविशेषिता ॥ ऋजुसूत्रः श्रुतः सूत्रे " इति । भेदत्रयसंग्राहकं परिभाषितं

व्यवहारनये विशेषस्य प्राधान्यादेव विस्तृतार्थः, तत्प्राधान्यञ्च व्यक्तिष्वेवोपयुक्ततया सङ्केताश्रयणादिना बोध्यम् । एतादृशोऽध्यवसायविशेषो व्यवहार इति—लौकिकव्यवहारप्रधान उपचारबहुलो विस्तृतार्थविषयको योऽध्यवसायस्तद्वृत्तिद्रव्यार्थिकत्वव्याप्यजातिमत्त्वं व्यवहारत्वमित्यर्थः। लौकिकव्यवहारप्रधान इत्यनेनर्जुसूत्रादौ नातिव्याप्तिः, तन्मते क्षणिकपदार्थस्यैवाभ्युपगमेन घटादिपदार्थानां स्थैर्ये सत्येव दृश्यमानस्य तदानयनादिलौकिकप्रवृत्त्यादिव्यवहारस्यैवानुपपत्तेः, उपचारबाहुल्यञ्च स्वेतरनयापेक्षया विवक्षणीयम्, नातः संग्रहनये नैगमनयेऽपि च स्वस्वसिद्धान्तोचितोपचारसद्भावेऽप्यतिव्याप्तिः। अन्यनयापेक्षयोपचारबाहुल्यस्यास्मिन्नेव व्यवहारनये सद्भावात्। नानाव्यक्तिकशब्दसङ्केतग्रहणप्रवण इत्यर्थकं विस्तृतार्थ इति विशेषणं नयान्तरतो व्यवहारस्य विषयवैलक्षण्यप्रदर्शनेन विविक्तानेकविशेषविषयकलौकिकव्यवहारस्वरूपावबोधार्थमुपात्तम्। उक्तव्यवहारलक्षणे नयत्वव्याप्यजातिनिवेशे द्रव्यार्थिकत्वजातिमादाय संग्रहादावतिव्याप्तिस्स्यात्, अतस्तद्वारणाय द्रव्यार्थिकत्वव्याप्यजातिनिवेशः कृत इति।

ऋजुसूत्रलक्षणाभिधानायाह—ऋजुसूत्रमित्यादि । संवृतिसतामित्यस्य न त्वित्यनेनान्वयः। समाहारद्वन्द्वादिति—अभिधानञ्च परिज्ञानञ्चाभिधानपरिज्ञाने, अनयोस्समाहारोऽभिधानपरिज्ञानमिति समाहारद्वन्द्वादित्यर्थ । स्वकृतनयोपदेशसम्मतिमाह—अवदाम चेति । ऋजुसूत्रः श्रुतः सूत्र इति। "पच्चुप्पन्नग्गाही उज्जुसुओ णयविही मुणेयव्वो " इत्येवमृजुसूत्रनयलक्षणमनुयोगद्वारसूत्रे विशेषावश्यकनिर्युक्तौ २१८४ चोक्तमित्यर्थः। तस्य चायमर्थः साम्प्रतमुत्पन्नं प्रत्युत्पन्नमुच्यते वर्त्तमानक्षणोत्पन्नमेवार्थक्रियाकारित्वेन सद्रूपमिति तद्ग्रहीतुं शीलमस्येति प्रत्युत्पन्नग्राही, देशकालान्तरसम्बद्धस्वभावरहितं वस्तुतत्त्वं साम्प्रतिकमेकस्वभावमकुटिलमृजु सूत्रयति इति ऋजुसूत्रो नयविधिर्ज्ञातव्यः। उक्तञ्च "सुत्तयइ व जमुज्जुं वत्थुं तेणुज्जुसुत्तेत्ति ।२२२२।" अत एव। "अतीतानागताकार,—कालसंस्पर्शवर्जितम्। वर्त्तमानतया सर्व—मृजुसूत्रेण सूत्र्यते ॥१॥" इत्युक्तमपि सङ्गच्छते। व्यवहारनयेनातीतानागतकालभेदेनार्थभेदो नाभ्युपगतः, अतीतानागतकालावच्छिन्नार्थस्योत्पत्तिकालादारभ्याऽऽविनाशमेकत्वेनैवाभ्युपगमात्, ऋजुसूत्रनयेन त्वतीतानागतार्थयोर्विनाशानुत्पत्तिभ्यामसत्त्वात्, असदभ्युपगमश्च कुटिल इति हेतोः सोऽप्यभ्युपगतः, तद्विशुद्धत्वात्तस्य, स्वदेशकालयोरेव स्वलक्षणात्मकार्थसत्ताविश्रामादतीतानागतकालभेदेन तद्विशिष्टार्थभेदवत्तद्वाचकशब्दोऽपि भिन्न एव, वाच्यभेदे वाचकभेदस्याऽवश्यंभावात्, न तु व्यवहारनयवदृजुसूत्रनये काल-

शब्दनयं लक्षयति यथार्थाभिधानं शब्द इति। भावत्वव्याप्यविषयताक ऋजुसूत्रविषयताव्याप्यविषयताको वाऽध्यवसायः शब्द इत्यर्थः। वस्तुतः साम्प्रतसमभिरूढैवम्भूतान्यतमत्वमेव शब्दत्वम्। अयावच्छिन्नैकार्थवाचक एकशब्दोऽभ्युपगतः, तज्ज्ञानमपि भिन्नमेव, न तु व्यवहारनय इवैतन्नये एकम्, अतीतार्थविषयाहित्वस्वभावानागतार्थविषयाहित्वस्वभावधर्मभेदेन ज्ञानधर्मिभेदस्यापि भावादिति भावः। अत्र यद्यपि वर्त्तमानक्षणमात्रवर्त्तिपरमार्थसदर्थशब्दपरिज्ञानाभ्युपगन्त्रध्यवसायविशेषवृत्तिपर्यायार्थिकत्वव्याप्यजातिमत्त्वमृजुसूत्रस्य लक्षणं पर्यवस्यति तथापि शब्दादिनयत्रयेऽतिव्याप्तिवारणाय लिङ्गसंख्याकारकपुरुषसंज्ञाक्रियाभेदप्रयुक्तार्थभेदानभ्युपगन्तृत्वे सतीति विशेषणीयं तल्लक्षणम्, तथा चर्जुसूत्रनयो लिङ्गवचननामादिभिन्नमप्येकमेव वस्तु प्रतिपद्यते, तन्मते वर्तमानं वस्तु लिङ्गादिभिन्नमपि न स्वरूपमुज्झतीत्येवमभ्युपगन्तरि तत्र लक्षणसमन्वयः, शब्दादिनयत्रयस्तु तटस्तटी तटमापो जलमित्यादौ लिङ्गवचनादिभेदेनार्थभेदमेवाभ्युपगच्छतीति न तत्रातिव्याप्तिरिति। यद्वा विशेषार्थग्राहिणि शब्दादिनयत्रयेऽतिव्याप्तिवारणाय शब्दनयाद्यभिमतविशेषाऽनभ्युपगन्तृत्वे सतीति विशेषणोपादानमध्यवसायविशेषस्य कर्त्तव्यम्, अत एव पूज्योपाध्यायैर्नयोपदेशे "भावत्वे वर्त्तमानत्वव्याप्तिधीरविशेषिता" इत्यत्रोक्तार्थकमविशेषितेति पदमुपात्तम्। उक्तलक्षणे मात्रपदोपादानान्न नैगमादावतिव्याप्तिः, तेनैकस्यैवार्थस्य कालत्रयवर्त्तितयाऽभ्युपगमात्। जातिगर्भलक्षणोक्त ऋजुसूत्रत्वजातिमादाय सर्वर्जुसूत्रप्रकारोपसंग्रहान्न कुत्राप्यव्याप्तिः। जातेश्च पर्यायार्थिकत्वव्याप्येति विशेषणान्न पर्यायार्थिकत्वनयत्वादिजातिमादाय शब्दादिनये नैगमादिनये चातिव्याप्तिः।

यथार्थाभिधानं शब्द इति—यथेति—येन प्रकारेण भावरूपेण नामस्थापनाद्रव्यवियुतेन वर्त्तमानोऽर्थो घटादिर्यथार्थः, तस्याभिधानं तद्वाचकशब्दो यथार्थाभिधानं तदाश्रयी तत्प्रयोजको वा योऽध्यवसायः स शब्दनयतयाऽभिधीयते। साम्प्रतसमभिरूढैवम्भूतभेदभिन्नो ह्ययं नयो वर्त्तमानमात्मीयं भावघटमेवाश्रयति, नेतरान्नृजुसूत्रनयवन्नामस्थापनाद्रव्यघटान्, यतश्शब्दप्रधानो ह्येष नयः, चेष्टालक्षणश्च घटशब्दस्यार्थः "घट चेष्टायाम्" घटते चेष्टत इति घट इति व्युत्पत्तेः, ततश्च य एव जलाहरणादिक्रियावान् प्रसिद्धो घटस्तमेव भावरूपं घटमिच्छत्ययमसौ, शब्दार्थोपपत्तेः, न तु नामादिघटान्, घटशब्दार्थानुपपत्तेरिति, उक्तञ्च भाष्ये—"तं चिय रिउसुत्तमयं, पच्चुप्पन्नं विसेसिययरं सो। इच्छइ भावघडं चिय जं न उ नामादए तिन्नि" इति च। तत्पर्यवसितार्थमुपाध्यायभगवानाह भावत्वव्याप्यविषयताक इत्यादि। ऋजुसूत्रनयो हि भावत्वसमव्याप्तविषयताकः, तद्घटकसमव्याप्तिश्च तद्व्याप्यत्वे सति तद्व्यापकत्वमिति तदन्तर्गततया भावत्वव्याप्यविषयताकत्वमपि तत्रर्जुसूत्रे वर्त्तत इति तत्रातिव्याप्तिस्स्यादिति तन्निवृत्तये लक्षणान्तरमाह ऋजुसूत्रविषयताव्याप्यविषयताक इति—अत्र न्यूनवृत्तित्वमेव व्याप्यत्वं सन्निविष्टमतो न ऋजुसूत्रविषयताव्याप्यत्वमृजुसूत्रविषयतायामिति न तत्रातिव्याप्तिः। भावमात्रविषयकर्जुसूत्रापेक्षया साम्प्रतादिनयत्रयस्य विशेषविशेषतरविशेषतमभावविषयताकत्वेनाल्पविषयक-

अनुगतशब्दत्वजातेरभावेन तद्व्यञ्जकस्यानुगतलक्षणस्यावश्यानाश्रयणीयत्वात्, अन्यथा चतुर्ष्वर्थत्वमप्येका जातिरनुगतं च तद्व्यञ्जकमपेक्षणीयं स्यात्। अर्थशब्दनयविभागस्तूपाधिभ्यां, नैगमलक्षणे द्रव्यार्थिकत्व-व्याप्यजातिनिवेशस्तु यदि कश्चित्परो ब्रूयादित्यभ्युपगमाभिप्रायेण। परमार्थतस्तु "दव्वट्ठिओत्ति कोई णत्थि णओ णियमसुद्धजातिओ। णयपज्जवट्ठिओ णाम कोइ भयणाइ उ विसेसो"। इति सम्मतिग्रन्थपर्यालोचनयाऽनुगतजात्यसिद्धेरिति संक्षेप.। सांप्रतं लक्षयति नामेत्यादि। नामादिषु नामस्थापनाद्रव्यभावेषु मध्ये प्रसिद्धो निर्ज्ञातः पूर्वं संज्ञासंज्ञिसम्बन्धग्रहकाले भावमात्रवाचकत्वेन निश्चित इति यावत्, प्रपदेन प्रमारूपो निश्चयो ग्राह्यः, तेन विपरीतव्युत्पन्नपुरुषीयशब्दमादाय नैगमादौ नातिव्याप्तिः, एतादृशाच्छब्दात्, त्वात्तत्र भवति लक्षणसमन्वय इति। **अनुगतशब्दत्वजातेरभावेनेति**–शब्दनयशब्दवाच्ये साम्प्रतादिनयत्रये लक्ष्यीभूतेऽनुगताया लक्ष्यतावच्छेदकशब्दत्वजातेरभावेनेत्यर्थः। नन्वनुगतार्थत्वशब्दत्वजात्यभावे नैगमादयश्चत्वारो नया अर्थनयाः साम्प्रतादित्रयो नयाश्शब्दनया इत्यर्थनयशब्दनयविभागः कथं स्यादित्याशङ्कायामाह **अर्थशब्दनयविभागस्त्विति। उपाधिभ्याम्**–नैगमसंग्रहव्यवहारर्जुसूत्रान्यतमत्वमर्थनयत्वं साम्प्रताद्यन्यतमत्वं शब्दनयत्व-मित्येवमुपाधिभ्याम्। **यदि कश्चित्परो ब्रूयादिति** द्रव्यार्थिकत्वव्याप्यजातिरतिरिक्ताऽस्तीत्यन्यो यदि ब्रूयादित्यर्थः। "दव्वट्ठिओत्ति तम्हेत्ति" सम्मतिप्रथमनयकाण्डसत्क-नवमीगाथा, तस्याक्षरार्थः तस्माद् द्रव्यार्थिक इति नयः शुद्धजातीयः सामान्यमात्रविषय-ताको नास्ति नियमेनेत्यवधारणार्थः, विशेषविनिर्मुक्तसामान्यविषयाभावेन विषयिणोऽप्य-भावात्, न च पर्यायार्थिकोऽपि कश्चिन्नयः, नामेति प्रसिद्धार्थः, नियमेन शुद्धस्वरूपः सम्भवति, सामान्यविकलात्यन्तव्यावृत्तविशेषविषयाऽभावेन विषयिणोऽप्यभावात्, विशेषविनिर्मुक्तद्रव्यस्य द्रव्यविनिर्मुक्तपर्यायस्य चाभावेनैकान्तद्रव्यमात्रविषयकस्य द्रव्यार्थिकस्यैकान्तपर्यायमात्रवि-षयकस्य पर्यायार्थिकस्य चाभाव एवेति भावः। यदि विषयाभावादिमौ नयौ न तर्हि यदुक्तं तीर्थकरवचनसंग्रहेत्यादि तद्विरुध्यते इत्याह–**भयणाइ उ विसेसो**। भजनायास्तु विवक्षाया एव विशेषः, इदं द्रव्यमयं पर्याय इत्ययं भेदः, तद्भेदाच्च विषयिणोऽपि तथैव भेदः, अयमभिप्रायः–भजना च सामान्यविशेषात्मके वस्तुतत्त्वे उपसर्जनीयकृतविशेषं यदन्वयिरूपं तद् द्रव्यमिति विवक्ष्यते यदा तदा द्रव्यार्थिकनयविषयः, यदा तूपसर्जनीकृतान्वयिरूपं तस्यैव वस्तुनो यदसाधारणं विशेषरूपं तद्विवक्ष्यते तदा पर्यायनयविषयस्तद् भवतीति। अत एव द्रव्यपर्यायविषयताभ्यां तदितरोविषयतया वा न शुद्धजातीयद्रव्यार्थिक-पर्यायार्थिकभावव्यवस्था, किन्तूपसर्जनीकृतान्यार्थप्रधानीकृतस्वार्थविषयतयाऽनेकान्तानुप्रवेशादेवेत्यनेकान्तव्यवस्थाग्रन्थोक्तमपि सङ्गच्छत इति। **अनुगतजात्यसिद्धेरिति**-तथा चैतादृशाध्यवसायिवृत्तिद्रव्यार्थिकत्वव्याप्यजातिमत्त्वमिति पूर्वोक्तं जातिघटितं लक्षणं पराभ्युपगमवादेनैव, परमार्थतस्तु न सम्भवतीति यस्य नयस्य यावन्तोऽध्यवसायविशेषास्तस्य नयस्य तावदध्यवसायाऽन्यतमत्वमेव लक्षणमिति भावः। प्रसिद्धपदघटकप्रपदग्राह्यप्रमात्मक-निश्चयफलमाह तेनेति केनचित्पुंसा घटशब्दो भावघटमात्रवाचक यथार्थसङ्केते कृतेऽपि

अर्थे भावलक्षणे, यः प्रत्ययः स सांप्रतनय इत्यर्थः । भावमात्रप्रमितशक्तिकशब्दजन्यं ज्ञानं साम्प्रत इति निष्कर्षः । जन्यता च नयत्वसाक्षाद्व्याप्यजात्यवच्छिन्ना ग्राह्या, तेन विचित्रत्वान्नैगमस्य भावमात्रग्राहिणि तद्भेदे नातिव्याप्तिः । जनकता च निरुक्तशब्दत्वेन, न समभिरूढैवम्भूतयोः सा, तत्र घटकुम्भा-

तेन संकेतेन घटनामादिनिक्षेपचतुष्टयात्मकार्यवाचको घटशब्द इति भ्रमात्मकशक्तिग्रहो यस्य पुंसो जातः, तत्पुरुषीयशब्दप्रवृत्तघटनामादिनिक्षेपचतुष्टयलक्षणार्थविषयकप्रत्ययात्मके नैगमादौ याऽतिव्याप्तिस्सा नेत्यर्थः । शब्दनयापरसंज्ञकसाम्प्रतनयस्य फलितलक्षणमाह भावमात्रेति । तेनेति साक्षात्पदोपादानेनेत्यर्थः । तद्भेदे नातिव्याप्तिरिति—नैगमावान्तरभेदे उक्तशब्दजन्यता न नयत्वसाक्षाद्व्याप्यनैगमत्वजात्यवच्छिन्ना, किन्तु नयत्वव्याप्यनैगमत्वव्याप्यजात्यवच्छिन्नेति नातिव्याप्तिरिति भावः । सेति—जनकतेत्यर्थः, तत्र हेतुमाह तत्रेत्यादिना—समभिरूढनये हि संज्ञाभेदेनार्थभेद इति घटकलशकुम्भादिसंज्ञाभ्यो भिन्नाभ्यस्स्वस्ववाच्यभिन्नभिन्नार्थविषयका भिन्ना एव बोधाः, न तु साम्प्रतनयवत् घटकलशकुम्भादिपर्यायसंज्ञावाच्यैकघटात्मकार्थविषयक एक एव बोधो घटकलशादिपदेभ्यः, तन्मते एकार्थवाचकपर्यायशब्दाऽभावादिति कार्यकारणभावोऽपि तत्तत्पदविषयकज्ञानत्वेन तत्तच्छब्दवाच्यार्थविषयकज्ञानत्वेनैव, न तु घटात्मकैकार्थवाचकघटकुम्भकुटकलशादिशब्दसामान्यविषयकज्ञानत्वेन घटकुम्भादिशब्दवाच्यघटरूपैकार्थविषयकज्ञानत्वेनेति, एवम्भूतनये च व्युत्पत्तिनिमित्तक्रियाभेदेनार्थभेद इति साम्प्रतनयोक्तः कार्यकारणभावोऽपि नाभ्युपगतः, किन्तु तत्तत्क्रियाव्युत्पत्तिनिमित्तकतत्तत्पदविषयकज्ञानत्वेन तत्तत्क्रियासत्ताकालविशिष्टार्थविषयकबोधत्वेनैवेति न समभिरूढैवम्भूतनययोरुक्तसाम्प्रतनयलक्षणस्यातिव्याप्तिरिति भावः । ऋजुसूत्रनयो ह्येकमेवार्थं त्रिलिङ्गविशिष्टशब्दवाच्यमेकवचनबहुवचनान्तशब्दवाच्यमुत्तममध्यमप्रथमपुरुषवाच्यञ्चाभिमन्यते, न त्वेवं साम्प्रतनयः, तटस्तटी तटं स्वातिः तारा नक्षत्रमित्यादौ पुल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गाभिधानवाच्यार्थानामन्यलिङ्गभेदलक्षणेन ध्वनिभेदेन भेदस्य एकस्मिन्नेव गुरौ मानार्थे बहुवचनं तदपि तन्मते नेति गुरुर्गुरव इत्यादौ चैकवचनबहुवचनान्तशब्दवाच्यानामर्थानाञ्च वचनभेदलक्षणेन ध्वनिभेदेन वैधर्म्येण भेदस्याभ्युपगमात्, उक्तञ्च "विरोधिलिङ्गसङ्ख्यादि,—भेदाद्भिन्नस्वभावताम् । तस्यैव मन्यमानोऽयं, शब्दः प्रत्यवतिष्ठते ॥ १ ॥" इति । तथा च साम्प्रतनयेऽपि भावमात्रप्रमितशक्तिकशब्दजन्यज्ञानवृत्तिनयत्वसाक्षाद्व्याप्यजात्यवच्छिन्नम्प्रति भावप्रमितशक्तिकशब्दत्वेन कारणत्वमिति पूर्वोक्तकार्यकारणभावो भावात्मकतटगुर्वाद्यर्थमात्रप्रमितशक्तिकाभिन्नलिङ्गकाभिन्नवचनकतटगुर्वादिशब्दरूपकारणसद्भावेऽपि भावात्मकतटगुर्वादिरूपैकार्थबोधरूपकार्याभावेनान्वयव्यभिचाराद्यदि न सम्भवति तदापि समानलिङ्गवचनकशब्दवाच्यार्थविषयकशाब्दबोधम्प्रति समानलिङ्गकसमानवचनकशब्दज्ञानत्वेन कारणत्वमित्येवमनुगत एव कार्यकारणभावोऽभ्युपगन्तव्यः, साम्प्रतनयमतेऽपि समानलिङ्गसमानवचनादिशब्दानामेकार्थत्वाभ्युपगमात्, तथाहि यस्मिन्वाक्ये पुंस्त्वैकत्वा-

दिविषयकशाब्दबोधत्वावच्छिन्ने घटकुम्भादिपदज्ञानत्वेन तत्तत्क्रियाविशिष्टविषयकशाब्दबोधत्वावच्छिन्ने, तत्तत्क्रियापदत्वेन च प्रत्येकं हेतुत्वात् । यदि च लिङ्गसंख्यादिभेदेन साम्प्रतेऽप्यर्थभेदाद् विशिष्य कार्यकारणभावः, तदापि समानलिङ्गकसंख्याकत्वं कारणतावच्छेदककोटौ तादृशार्थविषयकत्वं च कार्यतावच्छेदककोटौ कथञ्चिदनुगतं कृत्वा निवेशनीयम्, न तु प्रातिस्विकरूपेण कार्यकारणभाव इति सर्वं सुस्थम् । वस्तुत 'इच्छइ विसेसियतरं पच्चुप्पण्णं णओ सद्दो' इत्यादिपर्यालोचनया ऋजुसूत्राद्विशेषिततरेऽध्यवसाये या नयत्वसाक्षाद्व्याप्या जातिस्तामादायैव लक्षण कार्यम् । समभिरूढं लक्षयति—सत्स्वित्यादि । सत्सु वर्तमानेषु भावरूपेषु च घटादिष्वर्थेषु, असंक्रमः स्ववाचकत्वाभिमतशब्दान्तरस्यावाच्यत्वं समभिरूढः । व्युत्पत्तिनिमित्तभेदव्याप्यशब्दार्थभेदाभ्युपगमप्रवणो भिन्नव्युत्पत्तिनिमित्तकशब्दनिष्ठकारणताभेदप्रयुक्तभेदशालिकार्यताश्रयः शाब्दबोधो वा समभिरूढ इति निर्गलितोऽर्थः । भवति ह्येतन्मते इन्द्रशक्रादिपदयोर्घटकुटादिपदयोश्च भिन्न एवार्थः, घटज्वलनादिवाद्भिन्ननिमित्तत्वात् । यथा हि—शब्दनयमते सम्बन्धविशेषेण शब्दार्थगतो लिङ्गसंख्यादिभेदो भेदक., तथैतन्मते व्युत्पत्तिनिमित्तभेदोऽपि । अथ स्वार्थप्रतीतिनियतप्रतीति·

दिविशिष्टोऽर्थः पुल्लिङ्गैकवचनादिनियतं वाचकं न व्यभिचरति तदभिधानं, तस्य चैकोऽर्थः । अर्थात्पुल्लिङ्गशब्दस्य पुंस्त्वविशिष्ट एवार्थः, न तु स्त्रीत्वनपुंसकत्वविशिष्टोऽर्थः, स्त्रीलिङ्गशब्दस्य स्त्रीत्वविशिष्ट एवार्थः, न तु पुंस्त्वनपुंसकत्वविशिष्टोऽर्थः, एवं नपुंसकेऽपि ज्ञेयम्, न वा पुंस्त्वविशिष्टस्यार्थस्य स्त्रीलिङ्गविशिष्टो नपुंसकविशिष्टश्च शब्दो वाचकः किन्तु पुल्लिङ्गशब्द एव, अत एव तट इति शब्दान्न तटयादेर्बोधः । एवं स्त्रीत्वविशिष्टस्यार्थस्य वाचकस्त्रीलिङ्गशब्द एव, नपुंसकविशिष्टार्थस्य च वाचको नपुंसकशब्द एव, एवमेकवचनादावपि ज्ञेयमित्येवं यत्र शब्दे न व्यभिचरितार्थस्तदभिधानं, तद्वाच्यश्चार्थः प्रमितः, उक्तञ्च—"यत्र ह्यर्थो वाचं न व्यभिचरत्यभिधानं तत्" इति । तथा च पुंस्त्वैकत्वादिविशिष्टोऽर्थो यत्र तत्र पुल्लिङ्गैकवचनादिप्रयोग एवोचित इति समानलिङ्गसमानवचनकादिशब्दानां घटकलशकुम्भादिपर्यायात्मकानां साम्प्रतनयेऽप्येकार्थत्वं सिद्धमिति तदनुसृत्यैव पूर्वोक्तकार्यकारणभावोऽभ्युपगन्तव्य इत्याशयेनाह यदि च लिङ्गसङ्ख्यादिभेदेनेत्यादि । "इच्छइ विसेसियतरं पच्चुप्पण्णं नओ सद्दो ॥ २१८४ ॥" इति विशेषावश्यकनिर्युक्तिदलार्थः पूर्वमेवोक्तः । "जं जं सण्णं भासइ, तं तं चिय समभिरोहए जम्हा । सण्णंतरत्थविमुहो, तओ नओ समभिरूढोत्ति । २२३६ ।" इति भाष्यगाथा यां यां संज्ञां घट इत्यादिरूपां भाषते तां तामेव यस्मात्संज्ञान्तरार्थविमुखः कुटकुम्भादिशब्दवाच्यार्थनिरपेक्षः समभिरोहति तत्तद्वाच्यार्थविषयत्वेन प्रमाणीकरोति ततस्तस्मान्नानार्थसमभिरोहणात्समभिरूढो नयः, यो घटशब्दवाच्योऽर्थस्तं कुटकुम्भादिपर्यायशब्दवाच्यं नेच्छत्यसौ, संज्ञाभेदनियतार्थभेदाभ्युपगन्तृत्वात्तस्येत्यर्थिकामनुसृत्य समभिरूढनयलक्षणमाह समभिरूढं लक्षयति—सत्स्वित्यादि । इन्द्रशब्दपर्याया एव पुरन्दरादिशब्दा इति पर्यायवाद्याशङ्कते—अथेति । स्वार्थप्रतीतिनियतप्रतीतिकार्थकत्वेनेति स्वमिन्द्रशब्दः तद्वाच्यो य इन्द्रात्मकोऽर्थस्तत्प्रतीतौ सत्यां नियमेन जायमाना प्रती·

कार्थकत्वेन स्वार्थप्रतीतावसंमुह्यमानार्थकत्वेन चेन्द्रशब्दस्य पुरन्दरादिशब्दाः पर्याया भविष्यन्ति । एतदप्यसत् । एवं हि सामान्यविशेषशब्दयोरपि पर्यायत्वं स्यात् । प्लक्ष इत्युक्ते द्राग् वृक्षेऽपि संप्रत्ययात् । वृक्षोऽस्तित्वेऽसंमोहाच्च । किं चैवं प्रविश पिण्डीमित्यत्र नियतं गम्यमानस्य गृहस्य भक्षणस्य प्रथमपुरुषे प्रयुज्यमानेऽस्तीत्यस्य च गम्यमानस्य पर्यायतापत्तिः । न चैकशक्यतावच्छेदकत्वमेव पुरन्दरादिशब्दानां पर्यायत्वमित्यपि सम्यक्, जातिवदाकृतेरपि शक्यतावच्छेदकत्वे तथा वक्तुमशक्यत्वात् । न चैकपदशक्यतावृत्तिर्यस्यार्थस्य स स्वार्थप्रतीतिनियतप्रतीतिकार्थः, सोऽर्थो वाच्यत्वेन यस्य पुरन्दरादिशब्दस्य तद्भावस्तत्त्वं तेनेत्यर्थः । यदैवेन्द्रशब्देन तद्वाच्येन्द्रार्थप्रतीतिस्तदैव तन्नियतपुरन्दराद्यर्थप्रतीतिर्जायते इति तद्विषयीभूतार्थवाचकत्वेनेति यावत्, असंमुह्यमानार्थकत्वेनेति–संमोहः–अज्ञानं तदभावोऽसम्मोहः तद्विषयीभूतोऽर्थोऽसम्मुह्यमानार्थः, सोऽर्थो वाच्यत्वेन यस्य तद्भावस्तत्त्वं तेनेत्यर्थः । असंमुह्यमानार्थवाचकत्वेनेति यावत् । "नहि सम्भवन्तो यावन्त एव दोषा उद्भाव्याः किन्तु यथाकाममेकः" इति न्यायेन यथा दोषाणां मध्यादेकस्यैव दोषस्योद्भावनं युक्तं तथैवोक्तन्याये दोषो गुणस्याप्युपलक्षणमित्यनुमापकतया गुणरूपस्य हेतोरप्येकस्यैवोद्भावनं यद्यपि युक्तम्, तथापि "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका" इति वचनाद्यथा प्रत्यक्षप्रमाणप्रसिद्धेऽपि वस्तुनि तत्प्रसिद्धिदार्ढ्यायानुमानप्रवृत्तिः, तथैकलिङ्गप्रसिद्धेऽप्यर्थे तद्दार्ढ्याय लिङ्गान्तरोपन्यासो युक्त एव, अत एव च पर्वतो वह्निमान् धूमादालोकाच्चेति वह्न्यधिगतये धूमलिङ्गोपादानवदालोकलिङ्गस्याप्युपादानमिति प्रकृते हेतुद्वयोपादानं नासङ्गतम् । इन्द्रपुरन्दरादिशब्दानां व्युत्पत्तिभेदप्रयोज्यार्थभेदसद्भावेऽपि पर्यायत्वाऽभ्युपगमेऽतिप्रसङ्गदोषापादनेनोक्ताशङ्कोत्तरमाह–एतदप्यसदिति, एवं हीति–हि–यतः, निरुक्तहेतुभ्यां पर्यायत्वसाधने । विशेषवाचकशब्दस्य स्वार्थप्रतीतिनियतप्रतीतिकार्थवाचकत्वं सामान्यवाचकशब्दे व्यवस्थापयति–प्लक्ष इत्युक्त इति । न च प्लक्षशब्दपर्यायत्वं वृक्षशब्दस्येति प्रथमहेतुर्व्यभिचरित इत्यभिसन्धिः । विशेषवाचकशब्दस्य स्वार्थप्रतीतावसंमुह्यमानार्थवाचकत्वं सामान्यवाचकशब्दे उपपादयति–वृक्षास्तित्व इति–अत्रापि प्लक्ष इत्युक्त इत्यनुवर्तते, प्लक्ष इति वचनाद् वृक्षविशेषस्य प्लक्षस्य प्रतीतौ वृक्षोऽस्ति न वेत्यादि संशयादिलक्षणसंमोहो न भवति, किन्तु वृक्षास्तित्वस्य निर्णय एव भवति अतः प्लक्षाऽपर्याये वृक्षशब्दे गतत्वाद् द्वितीयहेतुरपि व्यभिचरित इत्याशयः । शब्दाध्याहारपक्षे प्रविशेत्युक्तौ गृहमित्यध्याहृत्य गृहं प्रविशेति वाक्यत एवं पिण्डीमित्युक्तौ पिण्डीं भक्षयेति वाक्यतो देवदत्त इत्युक्तौ देवदत्तोऽस्तीति वाक्यतश्चान्वयबोधोदयात्तत्र सर्वत्र गम्यमानपदान्तरार्थस्य श्रूयमाणपदार्थप्रतीतिनियतप्रतीतिकत्वेन तद्वाचकपदस्य पर्यायतापत्तिरित्याह–किञ्चैवमिति । आशङ्कते –न चेति । अस्येत्यपि सम्यगित्यनेनान्वयः । निषेधे हेतुमाह–जातिवदाकृतेरपीत्यादि । तथा च पुरन्दरादिशब्दानामपि भिन्नप्रवृत्तिनिमित्तकत्वादेकशक्यतावच्छेदककत्वं पर्यायत्वमिति वक्तुमशक्यत्वादित्यर्थः । न चेत्यस्य पर्यायत्वमित्यने-

च्छेदकत्वसामानाधिकरण्येनापरपदशक्यतावच्छेदकत्वावच्छिन्नभेदाभाव एव पर्यायत्वम्, हरिपदस्य सिंहपदपर्यायत्वापत्तेः, हरिपदशक्यतावच्छेदकत्वसामानाधिकरण्येन कृष्णत्वादौ सिंहपदशक्यतावच्छेदकत्वावच्छिन्नभेदसत्त्वात् । तत्र तत्पर्यायत्वानभ्युपगमे च शब्दमात्र एव तदनभ्युपगमः श्रेयान् । किं च घटपदादिजन्यतावच्छेदकशाब्दबोधनिष्ठविषयताभेदादेव घटाद्यर्थभेदः, घटपदत्वकुम्भपदत्वादिना प्रतिस्वं हेतुत्वे कार्यताच्छेदककोटावव्यवहितोत्तरत्वदाने च महागौरवात् । घटपदकुम्भपदाद्यन्यतरत्वेन हेतुत्वेऽप्यन्यतरत्वस्य तद्भिन्नत्वे सति तद्भिन्नो यस्तद्भेदरूपतया विशेषणविशेष्यभावे विनिगमनाविरहाद्गौरवाच्च । घटपदविषयकत्वमप्यतन्त्रं पदादर्थोपस्थितिवदर्थात्पदोपस्थितिरिति पक्षे तद्विषयस्यैकस्य शब्दस्य शाब्दबोधे विनि-

नान्वयः । निषेधे हेतुमाह हरिपदस्येत्यादि । तत्र तत्पर्यायत्वानभ्युपगम इति-सिंहपदे हरिपदपर्यायत्वाऽनभ्युपगम इत्यर्थः । घटरूपार्थविषयकबोधं प्रति घटपदत्वेन कुम्भपदत्वेन कलशपदत्वादिना प्रातिस्विकरूपेण कारणत्वे घटपदाभावेऽपि कुम्भादिपदात् घटशाब्दबोधोत्पत्तेर्व्यतिरेकव्यभिचारस्स्यात्, तन्निवारणाय घटपदाव्यवहितोत्तरघटशाब्दबोधम्प्रति घटपदत्वेन कुम्भपदाव्यवहितोत्तरघटशाब्दबोधं प्रति कुम्भपदत्वेन कारणत्वाभ्युपगमे नानाकार्यकारणभावकल्पनापत्त्या गौरवदोषमाह घटपदत्वकुम्भपदत्वादिनेति । अथ घटपदजन्यशाब्दबोधे घटपदमपि भासते, तच्च न कुम्भपदजन्यशाब्दबोधे भासते इत्यर्थरूपविषयस्यैकत्वेऽपि पदरूपविषयभेदाच्छाब्दबोधवैलक्षण्ये व्यभिचाराभावान्नाव्यवहितोत्तरत्वं कार्यतावच्छेदककोटौ निवेशनीयम्, तथा च घटपदविषयकघटार्थशाब्दबोधम्प्रति घटपदत्वेन कारणत्वमित्यपि न च वाच्यम्, घटपदाद् घटरूपार्थोपस्थितिवत् घटरूपार्थात्कुम्भपदोपस्थितिरिति पक्षे उपस्थिताद् घटरूपार्थात् कुम्भपदस्याप्युपस्थितिसम्भवेन शाब्दबोधे तद्भानसम्भवेन न ततः कार्यतावच्छेदकवैलक्षण्यसम्भवः, अतोऽव्यवहितोत्तरत्वं कार्यतावच्छेदके निवेशनीयमेवेति पर्यायपक्षे गौरवं दुर्निवारमेवेत्याह—घटपदविषयकत्वमप्यतन्त्रमित्यादि । अतन्त्रम्—अव्यभिचारकम्, एतदेव भावयति—पदादिति, घटपदोपस्थितघटरूपार्थाद् घटपदस्यैवोपस्थितिः, न तु तद्वाचकस्यापि कुम्भादिपदस्येति घटपदोपस्थितघटरूपार्थविषयको घटपदविषयक एव शाब्दबोधो न कुम्भादिपदविषयक इति घटपदविषयकत्वं व्यभिचारवारकं स्यादित्यत आह—तद्विषयस्यैति—अर्थजन्यपदोपस्थितिविषयस्येत्यर्थः । यद्यपि तत्तत्क्रियालक्षणव्युत्पत्तिनिमित्तभेदान्निमित्तिना त्वर्थेन भिन्नेन भाव्यमिति घटकुटकुम्भादिशब्दा भिन्नार्था घटनकुटनकुम्भनादिक्रियालक्षणव्युत्पत्तिनिमित्तभेदात्, तथापि यदा कदा घटनक्रियायामपि घट एव, यदा कदा कुटनक्रियायामपि कुट एवेत्याद्यभ्युपगच्छति समभिरूढनयः, नैवमेवम्भूतनयः, यत्तन्मते शब्दाभिधेयक्रियापरिणतिवेलायामेव तद्वस्तु, नान्यदा, अतिप्रसङ्गात्, तथाहि यदा घटते तदैवासौ घटः, न पुनर्घटितवान् घटिष्यति वा तदा घट इति व्यपदेष्टुं युक्तम्, सर्वेषां पुनर्घटत्वप्रसङ्गात्, अत घटनसमयात्प्राक् पश्चाद् वा घटत्वव्यपदेशमासादयतीत्येवम्भूत-

गन्तृमशक्यत्वाच्छक्यतावच्छेदकान्तरविषयत्वस्य चातिप्रसङ्गाभञ्जकत्वादिति विभावनीयं सूक्ष्मबुद्धिभिः। एवंभूतं लक्षयति व्यञ्जनार्थयोरेवम्भूत इति, व्यञ्जनं शब्दोऽर्थोऽभिधेयस्तयोर्विशेषक इत्यध्याहार्यम्, स एवम्भूतः। तथा च भाद्रबाहवं वचनं 'वंजणअत्थतदुभयं एवंभूओ विसेसेइत्ति'। एतदनुसृत्य नयोपदेशेऽप्युक्तम्। "एवंभूतस्तु सर्वत्र व्यञ्जनार्थविशेषणः॥ राजचिह्नैर्यथा राजा नान्यदा राजशब्दभाग्"॥१॥ इति। एतन्मते घटपदजन्यतावच्छेदकं जलाहरणकर्तृत्वविषयकशाब्दबोधत्वं, कर्तुर्बोधश्चाक्षेपात्, जलाहरणकर्तृत्वविशिष्टविषयकशाब्दबोधत्वमेव वा तथा, समभिरूढमते व्युत्पत्तिनिमित्तमुपलक्षणीकृत्य बोधः, तथा च नियततज्ज्ञानं न स्यादिति मम तद्विशेषणत्वादरः, व्यवहारबाधश्च क्वचित्कथञ्चित्सर्वस्यापि, सर्वे शब्दा व्युत्पन्ना एवेति व्याकरणपक्षव्यवहारानतिलङ्घनं तु ममापीत्यस्याशयः। गच्छतीति गौरिति व्युत्पत्त्यर्थो गमनकर्तर्य-

नयमतमुपदर्शयितुमाह एवम्भूतं लक्षयतीति 'वंजणअत्थतदुभयं एवंभूओ विसेसेइ' ॥ २१८५ ॥ त्ति निर्युक्तिदलं, व्यज्यतेऽर्थोऽनेनेति व्यञ्जनं–शब्दः, अर्थस्तु तदभिधेयवस्तुरूपः, व्यञ्जनं चार्थश्च व्यञ्जनार्थौ, तौ च तौ तदुभयं चेति समासः, व्यञ्जनार्थशब्दयोर्व्यस्तानिर्देशः प्राकृतत्वात्, एवम्भूतनयो व्यञ्जनार्थतदुभयं विशेषयति, शब्दमर्थेनार्थं शब्देन नैयत्येन स्थापयति, एवमुभयं विशेषयतीत्यर्थः। एतत्तात्पर्यन्तु पूर्वमेव विवृतमिति नेह विस्तार्यते। उपलक्षणीकृत्येति ननूपलक्षणविशेषणयोः किंलक्षणमिति चेत्, उच्यते, क्रियानन्वयि सद् व्यावर्तकमुपलक्षणम्, क्रियान्वयि सद्व्यावर्तकं विशेषणमिति। ननु जलाहरणकर्तृत्वविशिष्टस्य घटस्यैव घटपदवाच्यत्वे यदा घटो जलाहरणादिकार्यं न करोति तदाऽपि घट इत्येवं व्यवह्रियते, गमनक्रियाविकलाऽपि गौर्गौरित्येवं व्यवह्रियते इति व्यवहारबाध एवम्भूतनये दुष्परिहार इत्यत आह–व्यवहारबाधश्चेति। जलाहरणकर्तृत्वोपलक्षितघटरूपार्थे घटपदवाच्यत्वाभ्युपगन्तुस्समभिरूढस्यापि मते यदोत्पन्नो यो घटो जलाहरणादिक्रियामकृत्वैव विनष्टस्तदाऽपि स घटो घट इति व्यवह्रियते, उत्पन्नोऽयं घटो विनष्टोऽयं घट इति च व्यवह्रियत इति तादृशव्यवहारस्य एवं गमनादिक्रियामकृत्वैवोत्पत्त्यनन्तरं विनष्टायां गवि गौरुत्पन्ना विनष्टा गौरित्येवं व्यवहारस्य चाबालगोपालप्रसिद्धस्य बाधस्समस्त्येव, यतस्स्थिरस्वरूप एवार्थे प्रतियोगिव्यधिकरणार्थक्रियाकारित्वाभावाभाववत्त्वलक्षणमर्थक्रियाकारित्वोपलक्षितत्वं सम्भवति, तत्रोत्तरकालावच्छेदेनार्थक्रियाकारित्वरूपप्रतियोग्यधिकरणे पूर्वकालावच्छेदेनार्थक्रियाकारित्वाभावस्यैव सत्त्वेन प्रतियोगिव्यधिकरणस्यार्थक्रियाकारित्वाभावस्य तत्राभावात्, न तूत्पत्त्यनन्तरविनष्टेऽर्थे तत्सम्भवति, तत्र प्रतियोगिव्यधिकरणस्यार्थक्रियाकारित्वाभावस्यैव सत्त्वात्। एवमेवान्यत्राप्यन्यमते व्यवहारबाध इति "यत्रोभयोस्समो दोषः, परिहारोऽपि वा समः। नैकः पर्यनुयोज्यः स्यात्, तादृश्यर्थविचारणे ॥१॥" इति वचनाद्व्यवहारबाधदोषो नैवम्भूतनये परेणोद्भाव्य इत्याशयेनाह–क्वचिदिति। सर्वशब्दानां व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तमित्येतदुपष्टम्भेन सर्वे शब्दा व्युत्पन्ना एव, व्युत्पत्त्यभावे प्रवृत्तिनिमित्ताभावात्तत्प्रवृत्तिरेव न स्यादिति वैयाकरणमतानुग्रहो यथा समभिरूढस्य तथैवम्भूतस्यापीत्याह⋯सर्वे इति। ममापि–एवम्भूतनयस्यापि। अस्य–एवम्भूतनयस्य।

श्चेऽप्यतिप्रसक्त इति तद्दोषवारणाय गोमात्रवृत्तिगमनं चेद्धात्वर्थो आश्रयस्तदा गोत्वावच्छिन्नगमनमादाया-र्थान्तरसंक्रमितवाच्यो गोत्वसम्बन्धमादायात्यन्ततिरस्कृतवाच्यो वा प्रयोगो विधेय इति त्वेवंभूतोपगृहीत-संग्रहादिनयमतं, न तु शुद्धस्य तस्यैवेति व्युत्पादितमन्यत्र । इत्थं नैगमादीनां प्रत्येकं लक्षणे कृते प्रश्न-यति कश्चित्—अत्राहेत्यादि, उद्दिष्टा इत्यतः प्राग् यदीति शेषः । तत्तर्हि नया इति, नया इत्यस्य शब्द-स्य कः पदार्थ इति । ननु कोऽर्थ इतीयतासिद्धे पदग्रहणमतिरिच्यते, मैवम्, शब्दस्य हि द्विविधोऽर्थो वाच्यो गम्यश्च, यथा गुड इत्युक्ते द्रव्यं वाच्यम्, माधुर्यादयस्तु गम्याः, एवमिहापि वाच्योऽर्थः कश्चित्क-र्मादिरूपः, शेषस्तु गम्य इति, तत्रेह वाच्यमर्थं पदग्रहणेन प्रश्नयति, नयपदस्यार्थो वाच्यः क इति । सूरिराह—अत्रोच्यते नयाः प्रापका इत्यादिना, कर्त्रर्थः प्रकाश्यते—नयन्त इति नयाः, सामान्यादि-

तद्दोषवारणाय—अतिप्रसङ्गलक्षणदोषवारणाय, तद्वृत्तित्वविशिष्टस्य तत्रैव सत्त्वमिति नियमात् प्रतिव्यक्तिगमनक्रियाभिन्नैवेत्याश्रयणाद्वा गोमात्रगमनं नाश्वादाविति न तत्र गोव्यपदेशप्रसङ्ग-लक्षणातिप्रसङ्गः, धात्वर्थः गम्धात्वर्थः, गोमात्रवृत्तिगमनाश्रयस्य सामानाधिकरण्यसम्बन्धेन गोत्वविशिष्टगमनाश्रयत्वेन रूपेण गोपदार्थत्वे गोपदमर्थान्तरसङ्क्रमितवाच्यम्, यतोऽर्थान्तरं स्ववाच्यभिन्नं यद्गोत्वं तेन सङ्क्रमितं तद्विशिष्टं वाच्यं गमनाश्रयरूपं यस्येति कृत्वा, स्वाश्रयवृत्तिगमनाश्रयत्वसम्बन्धेन गोत्वविशिष्टस्य गोपदार्थत्वे गोपदमत्यन्ततिरस्कृतवाच्यम्, गमनाश्रयरूपस्य वाच्यस्य प्रकारविधया विशेष्यविधया वा वाच्यकोटौ सर्वथाऽप्रवेशादित्याह—गोत्वावच्छिन्नेति सामानाधिकरण्यसम्बन्धेन गोत्वविशिष्टेत्यर्थः, गोत्वसम्बन्धम्—गोत्वस्य स्वाश्रयवृत्तिगमनाश्रयत्वलक्षणसम्बन्धम्, सर्वसामान्यानभ्युपगन्तुरेवम्भूतस्यैतन्मतं न सम्भवतीत्यत आह—एवम्भूतोपगृहीतेति—आदिपदान्नैगमस्य ग्रहणम्, तस्य—एवम्भूतस्य।

इत्थं प्रत्येकं नैगमादिनयान्निरूप्य सम्प्रत्युत्तरभाष्यं व्याख्यातुमवतारयति इत्थमिति । तन्नया इति भाष्ये तच्छब्दस्तर्हीत्यस्यार्थे, पूर्वं यदीति पदप्रयोग एव तर्हीति तत्सापेक्षम्भवितुमर्हतीत्यत आह उद्दिष्टा इत्यतः प्राग् यदीति शेष इति । तथा च यदि उद्दिष्टा भवता नैगमादयो नयास्तर्हि नया इति कः पदार्थ इत्ये-तद्वाक्यं निराकाङ्क्षार्थावबोधाय प्रभवतीति भावः । नया इति कः पदार्थ इति भाष्योक्तस्य विवरणं—नया इत्यस्य शब्दस्य कः पदार्थ इति । नया इत्यस्य शब्दस्य कोऽर्थ इत्येता-वन्मात्रेणापि प्रष्टव्यार्थाधिगतिसम्भवे पदार्थ इत्यत्र पदस्य ग्रहणमनर्थकमेवेति शङ्कते नन्विति । वाच्यगम्यभेदेनार्थस्य द्वैविध्ये सति नयशब्दस्य गम्योऽर्थो न पृच्छाविषयः, किन्तु वाच्य एवार्थ इत्येवं वाच्यार्थप्रतिपत्तये पदार्थ इत्यत्र पदग्रहणं कृतमिति । सद्-ष्टान्तं समाधत्ते मैवमिति । इहापि नयशब्देऽपि, नयाः प्रापका इत्यादयः कर्त्रर्थाः, कथमित्यपेक्षायां तद्व्युत्पत्त्युपदर्शनेन तदर्थो भाष्य एव स्पष्टीकृत इत्याशयेनाह कर्त्रर्थः प्रकाश्यत इति—नयन्त इति नया इति । तदर्थमाह सामान्यादीति ।

रूपेणार्थं प्रकाशयन्तीत्यर्थः । प्रापका इत्यनेनान्तर्नीतण्यर्थताख्यायते, प्रापयंति तं तमर्थमात्मनि स्वाभिमताभिरुपपत्तिभिरिति हेतोः । प्राप्नुवन्तीत्यत्र तु तांस्तानर्थानिति द्रष्टव्यम् । कुर्वन्तीत्यादिना तु नयतेरर्थान्तरमपि शक्यं कल्पयितुमिति दर्शयति । तच्च करणं साधनं निर्वर्तनं निर्भासनमुपलम्भनं व्यञ्जनं च, करणमात्मनि तत्तद्विज्ञानोत्पादनम् । साधनमन्योन्यव्यावृत्त्यात्मकत्वज्ञप्तिः । निर्वर्तनं तथाध्यवसायेनाप्रच्युतिः । निर्भासनं वस्त्वंशविविक्तीकरणात्मिका दीप्तिः । उपलम्भनं सूक्ष्मार्थावगाहनम् । व्यञ्जनं प्रतिनियताभिप्रायस्फुटीकरणम् । प्रापका इत्यादिना यः कर्त्रंशो दर्शितः प्राप्नुवन्तीत्यादिना स एव क्रियाऽनन्यत्वेन, तेनाख्यानस्थले क्रियायाः प्राधान्यं कर्तुर्गुणभाव इति वैयाकरणम्मन्यानां दीक्षितादीनामेकान्तो निरस्तः । यत इह नात्यन्तिकः कर्तृक्रिययोर्भेदोऽस्ति । स एव पदार्थः कर्तेति व्यपदिश्यते स्वतन्त्रत्वात्, स एव साध्यात्मना वर्तमानः क्रियेत्याख्यायत इति नानयोरत्यन्तं भेदः ।

**प्रापयन्ति तमित्यादि**, अत्र स्वाभिमताभिरुपपत्तिभिरात्मनि तं तमर्थं प्रापयन्तीति सम्बन्धः । प्रापका इत्यस्येत्थं व्युत्पत्तिष्टीकाकारेण स्वयमाविदिता, प्राप्नुवन्तीति प्रापका इति भाष्यव्युत्पत्तौ निराकाङ्क्षप्रतिपत्तये त्वाह **प्राप्नुवन्तीत्यत्रेति** । नय इत्यस्यार्थः कारका इत्यनेन यः प्रतिपादितः, तदुपोद्बलिका कारयन्तीति व्युत्पत्तिः, एवं साधका इत्यादीनां नयवाच्यार्थोद्बोधपराणां साधयन्तीत्याद्या व्युत्पत्तयो ज्ञेयाः । किं तन्नयतेरर्थान्तरमित्यपेक्षायामाह । **तच्चेति**–अर्थान्तरं चेत्यर्थः । करणसाधनादीनां कथञ्चिद् भेदाधिगतये क्रमेण स्वरूपात्मकलक्षणान्युपदर्शयति–**करणमिति** । **तत्तद्विज्ञानोत्पादनम्**–सामान्यविशेषादिविषयकविज्ञानोत्पादनम् । **अन्योऽन्येति**–सामान्यं विशेषतो व्यावृत्तं विशेषस्सामान्याद्व्यावृत्त इत्येवं ज्ञानम्, **तथाध्यवसायेनाप्रच्युतिरिति**–सामान्यविषयकाध्यवसायात्मना विज्ञानस्य कश्चित्कालमवस्थानमित्यर्थः, **वस्त्वंशेति**–एतन्निमित्तापेक्षया सामान्यात्मकमेतन्निमित्तापेक्षया विशेषात्मकमेतदपेक्षया नित्यमेतदपेक्षयाऽनित्यमित्येवं दिशा विवक्तीकरणात्मिका दीप्तिरित्यर्थः, **सूक्ष्मेति**–स्थूलबुद्ध्यगम्येत्यर्थः । तथा च प्रतिविशिष्टक्षयोपशमापेक्षसूक्ष्मार्थावगाहनमिति भावः । **प्रतिनियतेति**–सङ्ग्रहस्यायमभिप्रायः, नैगमस्येदं रहस्यम्, व्यवहारस्यैदम्पर्यमिदम्, ऋजुसूत्र इदमित्यभ्युपैति, साम्प्रतस्येदमाकूतम्, समभिरूढस्येत्थमुपगमेऽयम्भावः, एवम्भूतस्यात्रार्थे इदं तात्पर्यमित्येवं प्रतिनियतानां तत्तन्नयाभिप्रायाणां स्पष्टीकरणमित्यर्थः । भाष्यं निगमयन्नाह–**प्रापका इत्यादिनेति**, **स एव**–कर्त्रंश एव । **क्रियानन्यत्वेनेत्य**नन्तरं दर्शित इत्यस्यानुकर्षः। **तेन**–क्रियाकर्त्रोरनन्यत्वेन क्रियायाः प्राधान्ये तदनन्यस्य कर्तुरपि प्राधान्यं, कर्तुः प्राधान्येन तदनन्यभूतायाः क्रियाया अपि प्राधान्यं, क्रियाया गौणत्वे तदनन्यस्य कर्तुरपि गौणत्वम्, कर्तुर्गौणत्वे तदनन्यभूतायाः क्रियाया अपि गौणत्वमिति पर्यवसानेन, अस्य **निरस्त** इत्यनेनान्वयः, तेनेत्यतिदिष्टमेव हेतुमुपदर्शयति–**यत इति**, **इह**–स्याद्वादे, **आत्यन्तिक** इत्युपादानात्कथञ्चिद्भेदः कर्तृक्रिययोस्स्याद्वादिनामप्यनुमत इति लभ्यते, कर्तृक्रिययोरत्यन्ताभेदाभावमेवोपपादयति–**स एव पदार्थ इत्यादिना** । **नानयोरत्यन्तं भेद इति**–क्रियाक्रियावतोः कथञ्चिद्भेदादिति भावः ।

अत्र पश्य मृगो धावतीत्यादिभाष्यसिद्धैकवाक्यत्वानुरोधेन क्रियाप्रधानमाख्यातमिति वाक्याश्रयणेन चाख्यातस्थले क्रियामुख्यविशेष्यक एव शाब्दबोधः, तथा च पचतीत्यत्रैकाश्रयका पाकानुकूला भावना, पच्यत इत्यत्रैकाश्रयिका या विक्लित्तिस्तदनुकूला भावनेति बोधः । शप्श्यनादीनां व्यापारफलयोराश्रयान्वयद्योतकत्वात् । देवदत्तादिपदप्रयोगेत्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याभेदान्वयः । घटो नश्यतीत्यत्रापि घटाभिन्नाश्रयको नाशानुकूलो व्यापार इति बोधः । स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम् । अत एव तस्यां सत्यां नश्यति तदऽत्यये नष्टस्तदभावे नंक्ष्यतीति प्रयोगोपपत्तिः । देवदत्तो जानातीच्छतीत्यादौ च

वैयाकरणमतं प्रतिक्षेप्तुमुपन्यस्यति—अत्रेति—पश्येत्यारभ्य रीत्योह्यमित्यन्तं तन्मतम् । **पश्य मृगो धावतीत्यादिभाष्यसिद्धैकवाक्यत्वानुरोधेनेति**—पश्य मृगो धावतीत्यत्र धावनानुकूलकृत्याश्रयमृगकर्मकदर्शनाभ्युपगमे मृगस्य दृशिधात्वर्थनिरूपितकर्मत्वाद् द्वितीयापत्तिः, तमित्यध्याहारे मृगो धावतीत्येकं वाक्यं, तं पश्येत्यपरमित्येवं वाक्यभेदापत्तिरित्यतो मृगकर्तृकवर्तमानधावनक्रियायाः कर्मत्वसम्बन्धेन दृशिक्रियायामन्वयः, तथा च न द्वितीयापत्तिशङ्काऽपि, मृगस्य प्रातिपदिकत्वेऽपि कर्मत्वाभावात्, क्रियायाः कर्मत्वेऽपि तद्वाचकस्य धाविधातोः धावतीति तिङन्तस्य च प्रातिपदिकत्वाभावाच्च तस्याः प्रसक्तेरेवाभावात् । आदिपदग्राह्ये पचति भवतीत्यादावपि देवदत्तकर्तृकपचिक्रियाया वर्तमानभवनक्रियायामन्वयः, "सुबन्तं हि यथाऽनेकं, तिङन्तस्य विशेषणम् । तथा तिङन्तमप्याहु,—स्तिङन्तस्य विशेषणम् ॥१॥" इत्युक्तेः तिङन्तक्रियायां सुबन्तविशेषणमिव तिङन्तविशेषणमपि युक्तियुक्तमेवेति । भाष्यसिद्धेति—क्रियाऽपि कृत्रिमं कर्म, क्रियाऽपि हि क्रिययेप्सिता भवति, कया—संदर्शनप्रार्थनादिक्रियया" इति "कर्मणा यम्" पा० सू० १।४।३२। इति सूत्रस्थभाष्यसिद्धेत्यर्थः । **विक्लित्तिरिति**—विक्लित्तिलक्षणाविकृतिरित्यर्थः । **शप्श्यनादीनां व्यापारफलयोराश्रयान्वयद्योतकत्वादिति**—कर्तृप्रत्ययस्थले शप्श्यनश्नमादीनां धात्वर्थे व्यापारे आश्रयान्वयस्य कर्मप्रत्ययस्थले तङ्यक्चिणादीनां धात्वर्थे फले आश्रयान्वयस्य द्योतकत्वात्तात्पर्यग्राहकत्वादित्यर्थः । **देवदत्तादिप्रयोगे त्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याभेदान्वय इति**—तथा च देवदत्तः पचतीत्यादौ देवदत्ताभिन्नैककर्तृको विक्लित्तिफलानुकूलो वर्तमानो व्यापार इति शाब्दबोधः । तत्र व्यापारो भावनाऽपरनामिका साध्यत्वेनाऽभिधीयमाना क्रिया । एतेन समानविभक्तिकयोरेवाभेदान्वय इति नैयायिकोक्तो नियमोऽपि निरस्तः, स्तोकं पचतीत्यादौ व्यभिचाराच्च, अकर्मकस्थलेऽपि फलव्यापारोभयार्थकत्वं धातोरन्यैरपि स्वीकार्यमिति सूचयञ्छाब्दबोधप्रकारमाह—**घटो नश्यतीत्यत्रापीति** । तद्व्यापाराकाङ्क्षायामाह—**स चेति** । **प्रतियोगित्वविशिष्टेति**—अत्र वैशिष्ट्यं निरूपकतासम्बन्धेन बोध्यम् । **सामग्रीसमवधानमिति**—तदनुकूलो व्यापार इत्यर्थः । अन्यप्रतियोगिकनाशसामग्रीसमवधानेऽपि घटो नश्यतीत्यप्रयोगात् स्वप्रतियोगित्वविशिष्टार्थकमुक्तविशेषणमुपात्तम्, **अत एवेति**—नशधातोः प्रतियोगित्वविशिष्टनाशफलकतत्सामग्र्यर्थकत्वादेव, **तदत्यये** प्रतियोगित्वविशिष्टनाशसामग्रीविनाशे । **तदभावे** उक्तसामग्रीप्रागभावे ।

देवदत्ताभिन्नाश्रयको ज्ञानेच्छाद्यनुकूलो वर्तमानो व्यापार इति बोधः । स चान्तत आश्रयतैवेत्यादिरीत्योह्यमिति ये वदन्ति, त एव प्रष्टव्याः ? ननु पचतीत्यत्रैकाश्रयिका पाकानुकूला भावनेति बोध इति यदुक्तम्, तत्कथं युक्तम्, पच्यर्थानां बुद्धिविशेषविषयतावच्छेदकत्वावच्छादिताधःसन्तापनत्वादिना भानस्वीकारेण तदनुकूलव्यापारस्यातिरिक्तस्याभानात् । धातुसामान्यार्थे व्यापारे धातुविशेषार्थस्य व्युत्पत्तिवैचित्र्येण भानस्वीकारे चाभेदेनान्वयस्स्यात्, न त्वनुकूलतया, चरमं व्यापारं फलस्थानीयं कृत्वा तदितरेषां तदनुकूलानां भावनात्वेन भानस्वीकारे च "गुणीभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥ १ ॥" इत्यादिना समूहस्य तुल्यवद्भानोक्तिविरोधः । घटो नश्यतीत्यत्रापि घटाभिन्नाश्रयको नाशानुकूलो व्यापार इति बोधस्वीकारे कपाले घटो नश्यतीति प्रयोगानुपपत्तिः, प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानात्मन उक्तव्यापारस्य कपालावृत्तित्वात्, घटे घटो नश्यतीति प्रयोगापत्तिश्च, उक्तव्यापारस्य घटवृत्तित्वात्, घटपटौ नश्यत इति प्रयोगस्यानुपपत्तिश्चोभयाभिन्नाश्रयकस्य प्रतियोगित्वविशिष्टनाशसाम-

तद्भावित्वे इत्यपि पाठः । स चेति—ज्ञानानुकूलव्यापार इच्छाद्यनुकूलव्यापारश्चेत्यर्थः । **अन्तत इति** अन्यव्यापारानुपस्थितावित्यर्थः । **आश्रयतैवेति** तस्या अनवयवत्वेऽपि सावयवत्वारोपाद्व्यापारत्वं निर्वाह्यमित्यतो जानातीत्यादौ न सकर्मकत्वक्षतिरिति भावः । ये इति वैयाकरणा इत्यर्थः । तन्मतस्यायुक्तत्वावगतये आह **त एव प्रष्टव्या इति**—ते वैयाकरणा एव प्रष्टव्या इत्यर्थः, किं पृच्छाकर्मेत्यपेक्षायामाह **नन्विति** । पचिधातुप्रवृत्तिनिमित्तानामधस्सन्तापनत्वादीनामननुगतत्वेऽपि बुद्धिविशेषविषयतावच्छेदकत्वस्य तदुपलक्षकस्यानुगतत्वेन तद्रूपेणोपलक्षिताधस्सन्तापनत्वादिविशिष्टस्यैव धात्वर्थतया भानम्, न तूक्तधात्वर्थानुकूलभावनायाः, तस्या अधस्सन्तापनफूत्कारचुल्ल्युपरिधारणादिक्रियासमूहान्तःपातिव्यतिरिक्ताया अभावादित्याह **पच्यर्थानामिति** । धातुत्वेन सामान्यरूपेण पच्यादिधात्वर्थो व्यापारः शाब्दबोधविशेष्यः, पचिधातुत्वेन विशेषरूपेण पचिधात्वर्थः पाकः प्रकार इत्येवं सामान्यविशेषार्थयोर्विशेषणविशेष्यभावेन भानसम्भवेऽप्यभेदेनैवान्वयस्स्यात्, न त्वनुकूलत्वादिसंसर्गेणेत्याह **धातुसामान्यार्थे इति** । पूर्वपूर्वव्यापाराणामुत्तरोत्तरव्यापारं प्रति कारणत्वेनोपात्यान्तानां व्यापाराणां केवलफलरूपत्वाभावादुक्तम्—**व्यापारस्य चरमेति** विशेषणम् । **गुणीभूतैरवयवैरित्यादि**—क्रमिकैतद्व्यापारसमूहम्प्रति गुणीभूतैस्तत्तद्रूपेण भासमानैरवयवैरुपलक्षितः सङ्कलनात्मकैकत्वबुद्ध्या प्रकल्पितोऽभेदो यस्य तद्रूपः समूहः क्रियेति व्यवह्रियते इति कारिकार्थः । तत्र क्षणनश्वराणां व्यापाराणां वस्तुभूतसमुदायाभावाद् बुद्ध्येत्युक्तम्, पूर्वापरीभूतक्षणविनश्वरक्रमिकव्यापाराणां मेलनाऽसम्भवेऽपि आख्यातप्रतिपाद्यक्रियैकत्वव्यवहारः सङ्कलनात्मकबुद्धिविशेषात्मकावच्छेदकैक्यस्वीकारेण निर्वहति । तथा चावयवाश्रयणे पौर्वापर्येऽपि समुदायाश्रयमेकत्वमादायाख्यातप्रतिपाद्यक्रियैकत्वव्यवहारसिद्धिरिति भावः । **समूहस्य तुल्यवद्भानोक्तिविरोध इति**—समूहस्य क्रियारूपत्वेन समूहिनामशेषाणां तदवयवानां समूहैकरूपतया यद्भानं तदुक्तेस्समूहान्तर्गतचरमव्यापारस्य फलतया तदन्तर्गता-

श्रीसमवधानस्यैकस्याभावात्, उभयव्यापारग्रहे च क्रियाभेदाद्वाक्यभेदापत्तिः, प्रतियोगित्वविशिष्टेत्यत्र विशेषणविशेष्यभावे विनिगमनाविरहादपि विशेष्यभेदध्रौव्यम्, भिन्नतया भासमानयोः क्रिययोरपि कल्पनयाऽभेदस्वीकारे च क्रियामात्रभेदोच्छेदापत्तिः, धात्वर्थत्वादिना सर्वाविशेषात् । एतेन जानातीच्छतीत्यादौ ज्ञानेच्छाद्यनुकूलैकव्यापारमाननमप्यपास्तम्, तादृशव्यापारे मानाभावात्, एककर्तृकाणामनेककर्तृकाणां च क्रियाणां बौद्धैक्यमात्रादरे च जीवति म्रियतेऽयमित्यादेरपि प्रसङ्गात्, जानातीच्छतीत्यादावनन्तत आश्रयतैव ज्ञानेच्छाद्यनुकूलो व्यापारो जीवति म्रियतेऽयमित्याद्यप्रयोगस्त्वनाकाङ्क्षत्वादित्युक्तिः शिष्यधन्धनमात्रम् । एवं सत्याख्यातार्थस्य धात्वर्थमध्ये प्रवेशनेन त्वसत(त्)व्यापारासिद्धेः । तस्मात्पचतीत्यादौ पाकानुकूलयत्नवान्, नश्यतीत्यादौ नाशप्रतियोगी, जानातीच्छतीत्यादौ ज्ञानाश्रय इच्छाश्रय इत्याद्याकारकः प्रथमान्तपदार्थविशेष्यक एव बोधः श्रद्धेयः । नश्यति नंक्ष्यति नष्ट इत्यादौ नशधातोरर्थो नाश उत्पत्तिश्चेत्युत्पत्तौ कालत्रयान्वयस्य

चरमव्यापाराणां भावनात्वेन तदनुकूलतया भानाभ्युपगमे विरोध इत्यर्थः । **सर्वाविशेषादिति**–धात्वर्थक्रियामात्राणामभेदादित्यर्थः । एतेनेत्यस्यापास्तमित्यनेनान्वयः, अपासने हेतुमाह **तादृशव्यापारे मानाभावादिति**–वर्तमानज्ञानकाल एव जानातीति प्रयोगः, एवं वर्तमानेच्छाकाल एवेच्छतीति प्रयोगो भवति, न तु ज्ञानेच्छाद्यनुकूलव्यापारकाले, ज्ञानेच्छयोः काले तदनुकूलव्यापाराऽभावादिति भावः । पच्यादिधात्वर्थानां पूर्वापरीभावापन्नानां चैत्रात्मकैककर्तृकाणां चैत्रमैत्रोभयकर्तृकाणां च समूहैकरूपत्वेन बौद्धैक्यकल्पनाऽपि न युक्ता, तथा सति जीवनमरणक्रिययोरपि बौद्धैक्यं स्यात्, यतो जीवनादिमरणान्तक्रियाणामप्यविच्छिन्नक्रियासमूहरूपत्वेन बौद्धैक्यं कल्पयितुं शक्यत एव । तथा च जीवनावस्थायामपि जीवति देवदत्ते बुद्ध्या जीवनक्रियाऽभिन्नमरणक्रियायाराद्भावेन जीवति पुरुषे जीवतीतिवन्म्रियतेऽयमिति प्रयोगः प्रसज्येतेत्याशयेनाह **एककर्तृकाणामनेककर्तृकाणां चेति** । जानातीच्छतीत्यादावित्यत्रादिपदाद् यतते द्वेष्टीत्यादेरुपग्रहः । त्वसत(त्) व्यापारासिद्धेरित्यत्रातद्व्यापाराऽसिद्धेरिति पाठो भवितुमर्हति, तत्रायमर्थः–एवं सति -आश्रयत्वस्य व्यापाररूपतयाऽभ्युपगमे सति, **आख्यातार्थस्य धात्वर्थमध्ये प्रवेशनेन** आश्रयत्वमाख्यातार्थः । तस्य धात्वर्थमध्ये यद् भवता प्रवेशनं कृतं तेन, अतदः तदन्यस्य धात्वर्थव्यापारव्यतिरिक्तस्येति यावत्, **व्यापारासिद्धेः** आख्यातार्थस्य व्यापारस्यासिद्धेः, आश्रयत्वमाख्यातलभ्यमेव, तस्य धात्वर्थमध्ये प्रवेशनमज्ञानविजृम्भितम्, आख्यातस्य तत्र निरर्थकत्वापादनमात्रफलकमेव, न तु तेन धात्वर्थव्यापारः सिध्यतीति भावः । पचतीत्यत्र पचिधात्वर्थस्य पाकस्याख्यातशक्यार्थे कृतावनुकूलत्वसंसर्गेणान्वयं नश्यतीत्यत्र नशधात्वर्थस्य नाशस्य निरूपितत्वसंसर्गेणाऽऽख्यातलक्ष्यार्थे प्रतियोगित्वेऽन्वयं जानातीच्छतीत्यत्र ज्ञाधात्वर्थस्य ज्ञानस्येषुधात्वर्थस्येच्छायाश्चाख्यातलक्ष्यार्थे आश्रयत्वे तस्य च देवदत्तादावन्वयं च कृत्वाऽर्थमाह–**तस्मात्पचतीत्यादाविति** । **उत्पत्तौ कालत्रयान्वयस्य सम्भवादिति**–तथा च नश्यतीत्यस्य वर्तमानकालीनोत्पत्ति-

सम्भवात्, आख्यातजन्यसंख्याभावनाप्रकारकबोधे च प्रथमान्तपदजन्यपदार्थोपस्थितेरेवेतरविशेषणत्वतात्पर्याविषयत्वावच्छिन्नविशेष्यतयाहेतुत्वान्न गौरवम्, संबन्धगौरवस्यादोषत्वात्, केवलं भावनाप्रकारकबोधं प्रति धात्वर्थभावनोपस्थितेः पृथग्धेतुत्वे तवैव गौरवम् । पश्य मृगो धावतीत्यत्र तु तमिति कर्माध्याहार्यमेव,

विशिष्टनाशप्रतियोगीत्येवं बोधः, नङ्क्ष्यतीत्यस्य भविष्यत्कालीनोत्पत्तिविशिष्टनाशप्रतियोगीति बोधः, नष्ट इत्यस्यातीतकालीनोत्पत्तिविशिष्टनाशप्रतियोगीति बोधः । आख्यातजन्यसंख्याभावनाप्रकारकबोधे चेति–विशेष्यतासम्बन्धेनेति शेषः । यथा चैत्रः पचतीत्यत्र पाकानुकूलकृतिमान् एकत्ववाँश्च चैत्र इत्याकारके पाकानुकूलकृतिनिष्ठप्रकारताकत्वे सत्येकत्वनिष्ठप्रकारताकचैत्रनिष्ठविशेष्यताकबोधे धात्वर्थविशेष्यतया भासमाना कृतिः एकत्वसंख्या चाख्यातार्थः प्रथमान्तपदार्थे चैत्रे प्रकारतया भासते, विशेष्यतासम्बन्धेनोक्तबोधे च विशेष्यतासम्बन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमिति प्रथमान्तार्थमुख्यविशेष्यक एव शाब्दबोधः, तत्र चेत्यर्थः । चैत्र इव मैत्रो गच्छतीत्यादौ चैत्रे संख्याद्यन्वयवारणाय सम्बन्धमध्ये इतरविशेषणत्वतात्पर्याऽविषयत्वावच्छिन्नान्तं विशेष्यताया विशेषणमुपात्तम् । अथ चैत्र एव गच्छतीत्यत्रान्ययोगव्यवच्छेदरूपैवकारार्थैकदेशेऽन्यत्वे प्रतियोगितासंसर्गेण चैत्रस्यान्वयादितरविशेषणत्वतात्पर्यविषयत्वादितरविशेषणत्वतात्पर्याऽविषयत्वावच्छिन्नविशेष्यतासम्बन्धेनोपस्थितेश्चैत्रेऽभावात्कथमेकत्वान्वयस्तत्र, पश्य मृगो धावतीत्यत्रापि च धावनकर्तृमृगस्य कर्मतासम्बन्धेन दर्शनेऽन्वयादितरविशेषणत्वतात्पर्यविषयत्वात्कथं तत्र संख्यान्वय इति न च शङ्क्यम्, इतरविशेषणत्वमात्रतात्पर्याविषयत्वावच्छिन्नत्वस्य विशेष्यताविशेषणतया विवक्षितत्वात्, चैत्र एव गच्छतीत्यत्र चैत्रस्य पश्य मृगो धावतीत्यत्र मृगस्य च विशेष्यतयाऽपि तात्पर्यविषयत्वेन संख्यान्वयसम्भवादिति । केवलं भावनाप्रकारकबोधम्प्रतीति–प्रकारतासम्बन्धेनेति शेषः । धात्वर्थभावनोपस्थितेरिति–भावनानिष्ठविशेष्यतासम्बन्धेन धातुजन्योपस्थितेरित्यर्थः । भावनापदमत्र तन्निष्ठविशेष्यतालाभार्थमेव । प्रथमान्तार्थे आख्यातार्थसंख्यान्वयानुरोधेन विशेष्यतासम्बन्धेनाख्यातार्थैकत्वप्रकारकशाब्दबोधम्प्रति विशेष्यतासम्बन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमिति कार्यकारणभावोऽपि पूर्वकार्यकारणभाववदवश्यको भवतामित्यभिप्रायेणाह–तवैव गौरवमिति–न्यायमते तु विशेष्यतासम्बन्धेनाख्यातार्थभावनाप्रकारकत्वे सत्याख्यातार्थसङ्ख्याप्रकारकशाब्दबोधम्प्रति विशेष्यतासम्बन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमित्येक एव कार्यकारणभाव इति लाघवम् । कर्माध्याहार्यमेवेति तथा च व्याकरणमतेऽपि तत्र वाक्यभेदस्त्वीकार्य एवेति भावः । पश्य मृगो धावतीत्यत्र मृगकर्तृकधावनाक्रियाकर्मकसम्बोध्यपुरुषकर्तृकदर्शनक्रियाविषयकशाब्दबोधस्याऽभ्युपगमेन वाक्यभेदाऽसम्भवेऽपि यत्रैककर्तृकानेकक्रियाया बोधस्तत्र क्रियारूपमुख्यविशेष्यभेदेन वाक्यभेदस्स्यादेव, तत्रापि यद्येककर्तृकाणामनेकक्रियाणां यथा कथञ्चित् परस्परसाकाङ्क्षत्वमाश्रित्यैकवाक्यार्थबोधमभ्युपगम्य वाक्यभेदः परिह्रियते तदापि यत्रैककर्तृ-

अन्यथाऽत्र वाक्यभेदापत्तिभिया साकाङ्क्षैककर्तृकक्रिययोर्यथाकथञ्चिदन्वयोपपादनेऽपि "स्विद्यति कुणति (कूणति) वल्लति निमिषति तिर्यग् विलोकयति सद्यः । अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥ १ ॥" इत्यादावेककर्तृकनिराकाङ्क्षानेकक्रियाणां प्रत्येकं प्राधान्येन तदनुपपत्तौ बहुवाक्यभेदापत्त्यावजां निःकाशयत क्रमेलकागमन्यायापातात् । न चात्र नवपरिणतवध्वभिन्नकर्तृकस्वेदनाद्यनुकूल एकव्यापारोऽस्त्य-नुभूयते वा । एकत्रानेकक्रियासम्बन्धघटितदीपकोदाहरणतयैवास्याभिहितत्वात् । न चात्रोत्थाप्याकाङ्क्षया तत एककर्तृकत्वसम्बन्धेन सर्वासां क्रियाणामेकत्र क्रियायामन्वयः स्वाभाविकक्रियान्तराकांक्षाविषयतानव-च्छेदकरूपवत्त्वाच्च न क्रियात्वभङ्ग इत्युद्भावनेऽपि वाक्यभेददोष उद्धर्तुं शक्य., विनिगमनाविरहेण प्रत्येकं क्रियाणां प्राधान्येन तस्य तदवस्थत्वात्, सर्वक्रियाणामाख्यातार्थद्वारैकत्र द्वयमिति न्यायेनैकस्मिन् कर्तर्ये-

काणामनेकक्रियाणां न यथाकथञ्चित्साकाङ्क्षत्वं तत्र वाक्यभेदस्स्यादित्याशयेनाह—अन्यथाऽ-त्रेति । वाक्यभेदापत्तिभियेति—मृगो धावतीत्येकं वाक्यम्, तं पश्येति द्वितीयं वाक्यमि-त्येवं वाक्यभेदापत्तिभियेत्यर्थः । तदनुपपत्तौ—अन्वयाऽनुपपत्तौ । न चेत्यस्यानुभूयते वेत्य-नेनान्वयः । दीपकोदाहरणतया- दीपकालङ्कारोदाहरणतया । "अप्रस्तुतप्रस्तुतयो दीपकं तु निगद्यते । अथ कारकमेकं स्याद्—नेकासु क्रियासु चेत् ॥ १ ॥" अनेन दीपकालङ्कारो द्विविधो दर्शितः, तत्र प्रस्तुताप्रस्तुतयोरेकधर्मसम्बन्धोपवर्णनं प्रथमो दीपकालङ्कारः, स अप्र-स्तुत इत्यनेन दर्शितः, एकस्य कारकस्यानेकक्रियाभिः सम्बन्धोपवर्णनं द्वितीयो दीपकालङ्कारः, तस्योपदर्शनमथ कारकमित्यादिना, प्रथमस्योदाहरणं यथा "बलावलेपादधुनाऽपि पूर्ववत्, प्रबाध्यते तेन जगज्जिगीषुणा । सतीव योषित्प्रकृतिश्च निश्चला, पुंमांसमभ्येति भवान्तरेष्वपि ॥ १ ॥" इति । अत्र प्रस्तुतायाः कंसप्रकृतेः अप्रस्तुतायाश्च सत्या भवान्तरकालीनतत्पुरुष-कर्मकाभिप्राप्तिरूपैकधर्मसम्बन्धात् प्रथमं दीपकमिति । द्वितीयस्योदाहरणम् स्विद्यति कूणतीत्या-दिकमत्रोपदर्शितमेव, नवपरिणीतवधूरूपे एकस्मिन् कर्तृकारके स्वेदनकूणनादीनां बहूनां क्रियाणां सम्बन्धात् । तथा—" दूरं समागतवति त्वयि जीवनाथे, भिन्ना मनोभवशरेण तप-स्विनी सा । उत्तिष्ठति स्वपिति वासगृहं त्वदीय—मायाति याति हसति श्वसिति क्षणेन ॥१॥" इति । एकस्य कारकस्यानेकक्रियाभिसम्बन्ध एवायं दीपकालङ्कारः स न स्यात्, उक्तदिशैक-व्यापारपरत्वेन व्याख्याने इति । यतस्तत्रानेकक्रियानुकूलैकव्यापारस्य नवपरिणीतवधूरूपकार-केऽन्वयादिति । न चेत्यस्योद्धर्तुं शक्य इत्यनेनान्वयः । न हि क्रिया क्रियान्तरमाकाङ्क्षतीति न्यायेन क्रियायाः क्रियान्तरेऽन्वयाऽसम्भवमाशङ्क्याह—स्वाभाविकेति । तथा चोक्तन्याय-घटकाकाङ्क्षतीत्यत्राकाङ्क्षोत्थिता ग्राह्या, प्रकृते चोत्थाप्याकाङ्क्षयाऽन्वयान्नोक्तन्यायविरहः, उक्तन्याये उत्थितक्रियाया एव ग्रहणादिति । अत्र स्वाभाविकेति आकाङ्क्षाया विशेषणम्, सा चोत्थितरूपा ग्राह्या, तद्विषयतानवच्छेदकरूपं स्वेदनत्वादि तद्वत्त्वाच्चेत्यर्थः, तत्र हेतुमाह विनिगमनाविरहेणेति । तस्य—वाक्यभेदस्य । आख्यातार्थद्वारेति—आख्यातस्सार्थः

न्वय एव ह्ययमुद्धर्तुं शक्यः । यत्त्वत्रापि निघातानुरोधादेकक्रियाया एव प्राधान्यम्, अन्यासां साधनत्वाद्वै-कवाक्यत्वं तिङतिङ इति सूत्रयता तिङन्तानामप्येकवाक्यत्वस्वीकारात् 'एकतिङ् वाक्यम्' इत्यस्य वार्त्तिकवचनस्य चैकतिङ्मुख्यविशेष्यकं वाक्यमित्यभिप्रायादिति । तत्र निघातोऽपि कुत्रेति विनिगन्तुमशक्यत्वाच्चरमपठितत्वस्यापि पश्य मृगो धावतीत्यत्रैव व्यभिचारात् । किं च साध्यसाधनवर्तितया क्रिययोः परस्परमन्वयस्वीकारे पाकेन भूयत इत्यर्थे पचति भूयत इत्यस्य पठन् गच्छतीत्यर्थे च पठति गच्छतीत्यस्य प्रसंगात्,

कृतिः, तद्द्वारेत्यर्थः । अयम् वाक्यभेदः । उद्धर्तुं शक्य इति- तथा च मुख्यविशेष्यतया भासमाने एककर्त्तर्येव प्रकारतयाऽनेकक्रियाणां कृतिद्वारा भानादेकवाक्यत्वोपपत्तिर्न्यायमते, व्याकरणमते तु सर्वासां तासां क्रियाणां मुख्यविशेष्यतया प्राधान्याद्वाक्यभेदो दुष्परिहर एवेति भावः । निघातानुरोधादिति "समानवाक्ये निघातः" इत्यादिवार्त्तिकेनैकवाक्ये निघात इष्ट इति तदनुरोधादित्यर्थः, निघातविधायकसूत्रञ्च "तिङ्ङतिङः" पा. सू० ८ । १ । ८८ । इति । अतिङन्तात्परं तिङन्तं निहन्यते इति तदर्थः । अस्मिन् सूत्रे "अतिङ्पदं पचति भवतीत्यादौ तिङन्तात्परस्य निघातवारणार्थम् । तिङन्तानामप्येकवाक्यत्वस्वीकारादिति–तिङन्तसमुदायस्यैकवाक्यत्वाभावे निघातस्याप्राप्त्या "अतिङ्" पदं व्यर्थमेव स्यात् । तथा च तदेव ज्ञापकं तिङन्तसमुदायस्यैकवाक्यतायामिति भावः । "एकतिङ् वाक्यम्" इति–अत्रैकत्वे सति तिङ्त्वं वाक्यत्वमित्युक्ते पचतीत्यस्यापि वाक्यत्वापत्तिः, एकः तिङ् यस्मिन्निति बहुव्रीह्याश्रयणे एकतिङ्घटितपदसमुदायत्वं वाक्यत्वमिति पर्यवसन्नं, तच्च पचति भवतीत्यादावेकवाक्यतयाऽभ्युपगतेऽव्याप्तमित्याशयेन तदभिप्रायमाह एकतिङ्मुख्यविशेष्यकमिति एकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमूहो वाक्यमित्यर्थः । तेन पचति भवति, पश्य मृगो धावति, शृणु गर्जति मेघः, नटो गायति शृणु इत्यादावित्र स्निह्यति कूजतीत्यादावपि नैकवाक्यत्वव्याघातः । एतेन शक्तं पदं तत्समूहो वाक्यमिति घट इत्यत्र घटपदं घटत्वावच्छिन्ने सुप्पदं चैकत्वे शक्तमिति पदद्वयात्मकत्वादेकत्वप्रकारकघटत्वावच्छिन्नविशेष्यकशाब्दबोधजनकं घट इति वाक्यमित्यपि नैयायिकमतं निरस्तम्, "न हि क्रियाविनिर्मुक्तं वाक्यमस्ति" इति भाष्यात् "अस्तिर्भवन्तीपरः प्रथमपुरुषः" इत्यादिकात्यायनवचनाच्च सर्वत्रोचितक्रियाध्याहारे सत्येवैकवाक्यत्वस्वीकारात् । तथा च प्रकृतेऽस्तिक्रियाध्याहारेणैवैकवाक्यं मन्तव्यम् । ननु हरेर्दशावतारा इत्यत्र का क्रियाऽध्याहार्येति चेत् भवन्तीत्यवेहि । परन्तु यत्राऽयोग्यता न तत्र लडर्थवर्त्तमानत्वादयः, अविवक्षितत्वात् । वर्त्तमानसामीप्ये वा लट् । सामीप्यञ्च भूतभविष्यद्रूपम्, अत एव जयन्ति कृष्णस्य दशावतारा इत्युक्तं सङ्गच्छते, इत्यलं प्रसङ्गानुप्रसङ्गेन । उक्तवैयाकरणमतनिरसने हेतुमाह तत्र निघातोऽपीत्यादिना । निघातोऽपि कुत्रेति निघातकृतं प्राधान्यमपि कुत्रेत्यर्थः । व्यभिचारादिति–धावतीत्यस्य चरमपठितत्वेऽपि तदर्थस्य मुख्यविशेष्यत्वाऽभावेन व्यभिचारादित्यर्थः, प्रसङ्गादिति–पचति भूयते इत्यत्रापि

पठति गच्छति चेत्यत्र चकारार्थानुपपत्तिश्च, क्रियाद्वयस्यैकत्र कर्तर्यन्वय एव तदर्थस्य वर्तमानत्वात् । कर्तृपदोत्तरचकारस्य कर्तृद्वये एकक्रियाया इव क्रियापदोत्तरचकारस्य क्रियाद्वये एककर्तुरन्वययोतकत्वादेव नानुपपत्तिरिति चेत्, तर्हि प्रधानक्रियाभेदाद् वाक्यभेदापत्तिः । अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति मीमांसकोक्तन्यायादुद्देश्यबोधरूपार्थैक्येन नैकवाक्यत्वव्याघात इति चेत्, न, तथाप्येकतिङ् वाक्यमिति त्वदुक्तैकवाक्यत्वव्याघातानुद्धारादिति यत्किञ्चिदेतत् । तस्मान्नयाः प्रापका इत्यादिना कर्तृप्रत्ययक्रियारूपभेदोपदर्शनं कर्तुः क्रियान्यत्वानन्यत्वस्याद्वादस्फोरणाय, न तु कर्तृप्राधान्यबाधेन क्रियाप्राधान्यैकान्तस्फोरणाय । फलीभूतशाब्दबोधे वैचित्र्यं तु नयव्युत्पत्तिवैचित्र्याधीनं भवत्येव । तत्र च

भूधात्वर्थे भवने पचिधात्वर्थस्य पाकस्य कारणविधयाऽन्वयसम्भवात्, एवं पठति गच्छतीत्यत्रापि एकाश्रयिका स्वकर्तृकत्वसंसर्गेण पठनक्रियाविशिष्टवर्तमानकालीना गमनक्रियेत्येवमन्वयबोधसम्भवादिति भावः । अनुपपत्तौ हेतुमाह क्रियाद्वयस्येति देवदत्तो यज्ञदत्तश्च गच्छत इत्यादौ यथा भवतां मते कर्तृद्वये एकस्या गमनक्रियाया अन्वयस्येवाऽसमन्मतेऽपि पठति गच्छति चेत्यादौ मुख्याक्रियाद्वये एककर्तुरन्वयस्य द्योतकश्चकार इत्यतो गमनक्रियानुकूलकृतिमन्तौ देवदत्तयज्ञदत्ताविति शाब्दबोधवदेकाश्रयं वर्तमानगमनपठनक्रियाद्वयमिति शाब्दबोधस्यापि सम्भवेन न चकारानुपपत्तिरित्याशयेन शङ्कते कर्तृपदोत्तरमित्यादि । समाधत्ते–तर्हीति, मीमांसकोक्तन्यायादिति पू० मी० अ० २, पा० १ । अ० १४, सू० ४६ इति जैमिनिसूत्रादित्यर्थः । तत्र साकाङ्क्षत्वं तन्निवर्तनीयाकाङ्क्षोत्थापकत्वतदुत्थिताकाङ्क्षानिवर्तकत्वान्यतरवत्त्वलक्षणं ज्ञेयम् । तथा चास्य सूत्रस्य विच्छिद्यपाठे साकाङ्क्षत्वे सत्येकार्थप्रतिपत्तिजनकत्वमेकवाक्यत्वमित्यर्थो लभ्यते । उद्देश्यबोधरूपार्थैक्येनेति–पठति गच्छति चेत्यादौ एककर्तृकपठनगमनक्रियाद्वयविषयकोद्देश्यबोधरूपप्रयोजनैक्येनेत्यर्थः । नैकवाक्यत्वव्याघात इति साकाङ्क्षत्वे सत्येकार्थप्रतिपत्तिजनकत्वलक्षणैकवाक्यत्वस्य भङ्गप्रसङ्गो नेत्यर्थः । एवमभ्युपगमे पश्य मृगो धावतीत्यत्रापि तमित्युक्ते कमित्याकाङ्क्षासत्त्वाद्यथाकथञ्चिद्वाक्यद्वयस्य धावनानुकूलकृतिमन्मृगकर्मकदर्शनाश्रयसम्बोध्यपुरुषरूपैकार्थप्रतिपत्तिजनकत्वान्न वाक्यभेदप्रसङ्ग इति प्रथमान्तार्थविशेष्यकबोधाभ्युपगमेऽपि न कापि क्षतिरिति दूषणसद्भावेऽपि दूषणान्तरमाह–तथाप्येकतिङ्वाक्यमिति । पठति गच्छति चेत्यत्र पठनगमनक्रियाद्वयस्यापि मुख्यविशेष्यत्वेनैकतिङ्मुख्यविशेष्यकयोधजनकत्वादसमूहत्वलक्षणैकवाक्यत्वस्याघटमानत्वेन तद्व्याघातानुद्धारादिति भावः ॥ उपसंहारमाह–तस्मादिति । ननु नैगमनयप्रकृतिकनैयायिकमतस्यैवाश्रयणेन प्रथमान्तार्थमुख्यविशेष्यक एव शाब्दबोध इत्यभ्युपगमे एकान्तत्वप्रसक्त्या स्याद्वादपक्षक्षतिरित्यत आह–फलीभूतशाब्दबोध इत्यादि । तथा च स्याद्वादस्य तत्तन्नयसमूहरूपत्वेन यस्य नयस्य यदा प्राधान्यं विवक्षितं तदा तन्नयाश्रितव्युत्पत्त्याश्रयणेन शाब्दबोधोऽपि तन्नयाभ्युपगतप्रकारक एवेति नैगमनयप्रकृतिकनैयायिकमताश्रयणे प्रथमान्तार्थमुख्यविशेष्यक एव शाब्दबोधः । शब्दनयप्रकृतिक [illegible] ने गय

-तत्तद्दर्शनाश्रयणमपीत्यनाविलः स्याद्वादमार्गः "ज्ञात्वा सदूषणं बाह्यवैयाकरणभूषणम् । कण्ठे निदूषणं कुर्मः स्याद्वादं हैमभूषणम् ॥ १ ॥" अत्र नयशब्दार्थे निरूपिते प्रेरक आह—किमेते वस्त्वंशपरिच्छेदव्यापृता नैगमादयो नयाः तन्त्रान्तरीयाः, तन्यन्ते विस्तार्यन्ते जीवादयः पदार्था अस्मिन्निति तन्त्रं जैनं प्रवचनं, तस्मादन्यत् काणभुजादिशास्त्रं तन्त्रान्तरं तस्मिन् भवाः कुशला वा, वादिनो वैशेषिकादयः, आहोश्विदिति पक्षान्तरे, स्वतन्त्रा एव स्वं आत्मीयं तन्त्रं शास्त्रं येषां ते तथा, जिनवचनमेव स्वबुद्ध्या विभजन्त इत्यर्थः । चोदकस्य दोषसूचकस्य परस्य पक्षग्राहिणो मतिभेदेन विप्रधाविता अयथार्थनिरूपका इति । तन्त्रान्तरीयत्वे एकत्र स्वसमयाभ्युपगतभागमात्रावलम्बित्वेनापादयिष्यमाणविप्रतिपत्तित्वानुपपत्तिः, स्वतन्त्रत्वे चाशयनिक्षेपित्वेन मिथ्यादृष्टित्वप्रसङ्गः । एकस्यापि पदस्यारोचनाद्धावस्योक्तत्वादिति चोदकस्याशय. । सूरिस्तूभयमप्येतत् त्यक्त्वा पक्षान्तरमाश्रयन्नाह अत्रोच्यत इति । नैते तन्त्रान्तरीया नापि स्वतन्त्रा—भिन्नमतयः । किन्तु ज्ञेयस्य घटादेरध्यवसायान्तराणि ज्ञानभेदा, एतानि नैगमादीनि पञ्च । इदमुक्तं भवति—वस्त्वेवानेकधर्मात्मकमनेकाकारेण ज्ञानेन निरूप्यत इत्यतः स्वशास्त्रनिरूप-

शाब्दबोधः । तथा च देवदत्तो गच्छतीत्याद्येकवाक्यादेव तत्तन्नयभेदेन विभिन्नाकारशाब्दबोधोपपत्तेरापेक्षिकतथाविधशाब्दबोधजनकवाक्यस्य स्याद्वादत्वं युक्तियुक्तमेवेति भावः । यावन्ति तीर्थकरवचनानि तावन्ति नयगर्भितान्येव अत एव तीर्थकरवचनमूलभूता नया इति तेषां स्वरूपप्रदर्शनेन सुनयत्वप्रतिपत्तये भाष्ये भूमिकामाह—अत्राह—किमेते तन्त्रान्तरीया वादिन इत्यादि । क एवमाहेत्यत आह अत्र नयशब्दार्थे निरूपिते प्रेरक आहेति । तन्त्रान्तरीया इत्यस्यार्थमाह—तन्यन्त इत्यादि । मतिभेदेनेति विभिन्नाभिप्रायेणेत्यर्थः । स्याद्वादविषयानेकान्तात्मकवस्तुनस्त तदंशानादाय विज्ञानविशेषलक्षणाध्यवसायनानात्वात् पूर्वपूर्वनयाभ्युपगतविषयापेक्षया सूक्ष्मसूक्ष्मतरसूक्ष्मतमाद्यंशविषयका उत्तरोत्तरनया इति तत्तन्नयप्रतिपाद्यविरुद्धधर्मप्रकारकविप्रतिपत्तित्वप्रसङ्गः "एवमिदानीमेकस्मिन्नर्थेऽध्यवसायनानात्वान्ननु विप्रतिपत्तिप्रसङ्गः" इत्युत्तरग्रन्थेनापादयिष्यमाणोऽसङ्गतस्स्यादित्याद्यपक्षे दोषमाह तन्त्रान्तरीयत्वे एकत्रेत्यादि । "पयमक्खरंपि इक्कंपि, जो न रोएइ सुत्तनिद्दिट्ठं । सेसं रोयंतो वि हु, मिच्छद्दिट्ठी जमालिव्व ॥१॥" इति पारमर्षोक्तिमनुस्मरन्मिथ्यादृष्टित्वप्रसङ्गे हेतुमाह—एकस्यापि पदस्यारोचनादिति । सत्त्वासत्त्वभेदाभेदनित्यत्वानित्यत्वादयो धर्माः परस्परविरहरूपत्वेन वह्नितदभाववद्विरुद्धा इति नैकस्मिन्नेवार्थेऽवच्छेदकभेदमन्तरेणावतिष्ठन्ते इति तेषामविरोधद्योतनायावच्छेदकभेदोऽपेक्षणीयः, तथा च नितम्बशिखरावच्छेदेन पर्वते वह्नितदभाववत् भिन्नभिन्नतत्तदवच्छेदकावच्छेदेनैकार्थे तेऽवतिष्ठमाना अपि न विरुद्धाः, अवच्छेदकभेदश्च नयभेदेनैव प्रतिपादनीय इत्यविरोधप्रतिपत्तयेऽपेक्षणीया नया न तन्त्रान्तरीयाः, स्याद्वादासिद्धान्तानभिमतैकान्तधर्मप्रतिपादकत्वात्, न वा स्वतन्त्रा, आर्हतसिद्धान्तविरुद्धस्वमतिकल्पनाकल्पितार्थऽऽगमादायाऽप्रवृत्तत्वात्, किन्तु स्याद्वादलक्षणप्रमाणराजमार्गानुगमनपरत्वेनोभयविलक्षणा एवेत्याशयकमत्रोच्यत इत्यस्यावतरणमाह—सूरिस्तूभयमप्येतदिति । अनेकाकारेण ज्ञानेन निरूप्यत इति एकमेव वस्तु महदपेक्षयाऽणु, अण्वपेक्षया च

णमेवेदम्, तज्जन्यज्ञाने प्रमिणोमि नयामीति प्रतीतिसाक्षिकजातिभेदस्यानपलपनीयत्वादिति भावः। वैजात्यव्यञ्जकमेव प्रतिस्वं प्रदर्शयति तद् यथेत्यादिना, घट इत्युक्ते नैगमाध्यवसाय एवं मन्यते, योऽसाविति लोकसिद्धः, चेष्टानिर्वृत्तः कुम्भकारचेष्टानिष्पन्नः, ऊर्ध्वमुपरि कुण्डलौ वृत्तावोष्ठौ भागविशेषौ यस्य स तथा, आयता दीर्घा वृत्ता समपरिधिर्ग्रीवा यस्य। उपरि तावदेवमाकारः अधस्तात्परिमण्डलः समन्ताद् वृत्तः। कस्य कार्यस्य क्षम इत्याह जलादीनां जलघृतक्षीरादीनाम्, आहरणे देशाद्देशान्तरनयने आनीतानां च धारणे पतनप्रतिबन्धे समर्थः प्रत्यलः। उत्तरगुणनिर्वर्तनया पाकजरक्तादिगुणपरिसमाप्त्या निर्वृत्तो निष्पन्नो, द्रव्यविशेषः। उत्तरगुणनिर्वृत्तिपर्यन्तानुधावनेन मृत्पिण्डावस्थादिवामघटादपि भावघटस्य भेदमाह तस्मिन्नेवमात्मके, एकस्मिन् विशेषा ये शुक्लपीतादयः कनकरजतादयः खण्डकुण्डादयो वा तद्वति, तज्जातीयेषु वा सर्वेषु लोकप्रसिद्धेषु, अविशेषादभेदेन परिज्ञानं निश्चितावबोधो, नैगमः देशसमग्रग्राहीत्यस्य प्रपञ्चोऽयम्। अत्र द्रव्यत्वेनाधारतायां विशेषाणां गुणत्वपर्यायत्वादिना, घटत्वेनाधारतायां रक्तत्वत्वसौवर्णत्वत्वादिना, सामान्यत्वेनाधारतायां विशेषत्वेन, घटसामान्यत्वेनाधारतायां

महत्, ह्रस्वापेक्षया दीर्घं, दीर्घापेक्षया च ह्रस्वं, लघ्वपेक्षया गुरु, गुर्वपेक्षया च लघ्वित्यनेकाकाराऽऽपेक्षिकप्रमाणात्मकज्ञानेन निरूप्यते तथैवात्माद्येकैकवस्त्वपि द्रव्यापेक्षयाऽभिन्नं नित्यमेकञ्च प्रतिक्षणभिन्नभिन्नपर्यायापेक्षया भिन्नमनित्यमनेकञ्च स्वद्रव्यक्षेत्राद्यपेक्षया सत् परद्रव्यक्षेत्राद्यपेक्षया चासदित्याद्यनेकाकारेण ज्ञानेन महत्त्वाल्पत्वादिवत् अपेक्षाभेदप्रयोज्याविरोधशीला ये भेदाभेदादयो धर्मास्तदन्यतमैकधर्मस्य प्राधान्येन तदितरधर्माणामौदासीन्येनावगाहिना नयात्मकेनैकधर्ममुखेन तदभिन्नतदन्याशेषधर्मावगाहिना प्रमाणात्मकेन च ज्ञानेन निरूप्यत इत्यर्थः। तज्जन्यज्ञाने प्रमिणोमि नयामीति प्रतीतिसाक्षिकजातिभेदस्येति—उक्तलक्षणप्रमाणात्मकज्ञाने सति स्याद्वादागमपरिकर्मितबुद्धीनां प्रमिणोमीति योऽनुव्यवसायप्रत्यय उक्तलक्षणनयात्मकज्ञाने सति नयामीति यश्चानुव्यवसायप्रत्ययस्तत्सिद्धप्रमाणत्वनयत्वजातिभेदस्येत्यर्थः। वैजात्यव्यञ्जकमेवेति—प्रमाणत्वविजातीयनयत्वाख्यजातिव्यञ्जकमेवेत्यर्थः। विशेषवतीत्यस्यार्थमाह—विशेषा च इत्यादि। तज्जातीयेषु—घटत्वजातीयेषु। अविशेषादित्यस्यार्थमाह—अभेदेनेति। परिज्ञानमित्यस्यार्थमाह—निश्चितावबोध इति। स एवायमिति तज्जातीयोऽयमिति च ज्ञानमित्यर्थः। ननु घटे रूपवति आत्मनि च ज्ञानवतीत्याद्युक्त्यैव तस्मिन्नेकस्मिन् विशेषवतीत्याद्युक्त्याऽऽधाराधेयभावो ज्ञापित इति स सामान्यविशेषयोः केन रूपेणेत्याशङ्कायामाह अत्र द्रव्यत्वेनाधारतायामित्यादि। गुणत्वपर्यायत्वादिनेति—अस्याधेयतेत्यनेनान्वयः, नैगमनयेन गुणपर्यायवद्द्रव्यमिति व्यवहारेण तत्तत्पूर्वापरपर्यायानुगाम्यूर्ध्वतासामान्यात्मकद्रव्यस्य द्रव्यत्वेनाधारतायां विवक्षितायां विशेषाणां सहभाविलक्षणगुणत्वेन क्रमभाविलक्षणपर्यायत्वेन चाऽऽधेयता विवक्षणीया, घटो रक्तत्ववान् सौवर्णत्ववान् पार्थिवत्ववानिति व्यवहारेण घटत्वेनाधारतायां विवक्षितायां रक्तत्वत्वेन सौवर्णत्वत्वेन पार्थिवत्वत्वादिना चाधेयता विवक्षणीया, एवमन्यदप्यूह्यमिति। नन्वाधाराधेयभावो हि भेदे सत्येव भवति भूतलघटयोरिवेति तेनोक्ताधाराधेययोर्भेदप्रतिपादनेऽपि तयोरभेदः कि

च नीलघटत्वादिनाऽऽधेयता यथायथमनुसरणीया । एकत्वमप्ययं देशग्राही ऊर्ध्वतासामान्यकृतं, सर्वग्राही च तिर्यक्सामान्यकृतमभ्युपैति । अत एव स एवायमिति तज्जातीय एवायमिति प्रत्यभिज्ञयोरुपपत्तिः । सङ्ग्रहः कथमिच्छतीत्याह —एकस्मिन् वा घटे, बहुषु वा नामादिविशेषितेषु नामस्थापनाद्रव्यभावेषु, साम्प्रतातीतानागतेषु त्रिकालवर्तिषु, घटेषु संप्रत्ययो घटोऽयं घटोऽयमित्यनुगताध्यवसायः सङ्ग्रहः । नामादिषु चतुर्षु घटेषु नैकानुगतजातिनाऽयमर्थानुगमः, किन्तु हरिर्हरिरितिवच्छब्दानुगम एव, स च साम्प्रतविषय एव संभवति, न सङ्ग्रहविषय इति चेत्, न, वाचकस्य वाच्यानुसारित्वेनार्थानुगमं विना शब्दानुगमस्याप्यसम्भवात्, हर्यादिपदेऽप्यन्यतरत्वादिनाऽर्थानुगमस्य सुकरत्वात् । केवलं तं सङ्ग्रहनय एव

निमित्त इत्याकाङ्क्षायामाह एकत्वमप्ययमिति । अयं—नैगमः, अभ्युपैतीति सम्बन्धः, देशग्राहिणो नैगमस्योर्ध्वतासामान्यकृतैकत्वाभ्युपगन्तृत्वादेव सर्वग्राहिणो नैगमस्य तिर्यक्सामान्यकृतैकत्वाऽभ्युपगन्तृत्वादेव च शुक्लपीतरक्तादिकनकरजतादिखण्डहुण्डादितत्तद्घटव्यक्तिलक्षणविशेषाणां पूर्वोत्तरपर्यायस्वरूपतया भिन्नानां तदनुगतोर्ध्वतासामान्याख्यघटसामान्यरूपेणाभेदावगाहिनी स एवायमिति प्रत्यभिज्ञा तत्तदखिलदेशवर्त्तिकालत्रयवर्त्तिसौवर्णराजतपार्थिवादिनिखिलघटानां सदृशपरिणामलक्षणतिर्यक्सामान्याख्यघटत्वसामान्यरूपेणानुगतेनाभेदावगाहिनी तज्जातीय एवायमिति प्रत्यभिज्ञा चोपपद्यते इत्याशयेनाह—अत एवेति नैगमादिनया नामघटस्थापनाघटद्रव्यघटभावघटान् मिथो भिन्नत्वेनाभ्युपगच्छन्ति, तत्रापि जगति ये नामघटास्तेषां सर्वेषां नामघटत्वेन ये स्थापनाघटास्तेषां सर्वेषां स्थापनाघटत्वेन ये च द्रव्यघटास्तेषां द्रव्यघटत्वेन ये च भावघटास्तेषां सर्वेषां भावघटत्वेनैक्यमभ्युपगच्छन्ति, नैवं संग्रहः, यतस्स निखिलानां नामघटस्थापनाघटद्रव्यघटभावघटानां घटत्वेनैक्यमभ्युपगच्छति, न पुनश्चतुर्णां भेदम्, तन्मते सामान्यमेव परमार्थसत् नान्ये विशेषास्सन्तीति नामादिचतुष्टयानुगतं घटत्वसामान्यं प्रधानीकृत्य घटोऽयं घटोऽयमित्यनुगतप्रत्यय इत्याशयेनाह नामस्थापनाद्रव्यभावेष्विति । आशङ्कते नामादिष्वित्यादिना । शब्दानुगम एवेति कृष्णवाचकहरिशब्दे सिंहवाचकहरिशब्दे एवं कप्यश्वादिवाचकहरिशब्दे हरिर्हरिरित्यनुगतश्शब्द एव, न तु कश्चिदनुगतोऽर्थस्तद्वन्नामघटस्थापनाघटद्रव्यघटभावघटेषु घटोऽयं घटोऽयमित्यनुगतशब्द एवानुभूयत इति तत्र शब्दानुगम एवेत्यर्थः । स च साम्प्रतविषय इति शब्दानुगमश्च साम्प्रताख्यशब्दनयविषय एवेत्यर्थः । उक्ताशङ्कां निराकरोति—नेति । अन्यतरत्वादिनेति—विष्णुसिंहकप्यश्वाद्यन्यतरत्वादिनेत्यर्थः । तमिति—विष्णुसिंहकप्यश्वाद्यन्यतरत्वादिनाऽर्थाऽनुगममित्यर्थः । अत्रानेकभेदावच्छिन्नप्रतियोगिताकभेद एवान्यतरत्वशब्दबोध्यो ग्रन्थकाराभिमतः, तेनान्यतमत्वाभिधानस्थानेऽप्यन्यतरत्वाभिधानमिति बोध्यम् । कृष्णसिंहकप्यश्वाद्यनेकार्थगतान्यतमत्वेन रूपेण हरिपदार्थानां विष्णुसिंहादीनां हरिपदजन्यशाब्दबोधे संग्रहनयवच्छब्दनयेऽपि मानं स्यात् स्यात्तदा तद्रूपेणैकीकृतार्थप्रतिपादकत्वेन हरिपदादौ नानार्थकत्वोच्छेदः, न च तेन तथा भानम-

गृह्णाति, न तु शब्दनयः, तज्जन्यशाब्दबोधे ततः कृष्णत्वादिनैव भानादिति न नानार्थकत्वोच्छेदः । सङ्ग्रहनये तु न किञ्चित्पदं नानार्थं नवाऽर्थो नाना । हन्तैवं यथोक्तघटेष्वेवेति कोऽयं सङ्कोचः वस्तुमात्राभ्युपगतम्, तत्र हेतुमाह—तज्जन्यशाब्दबोध इति । कृष्णत्वादिनैवेति—कृष्णत्वसिंहत्वादिप्रत्येकधर्मेणैवेत्यर्थः, अत्रैवकारेण संग्रहनये यथाऽन्यतरत्वेन भानं न तथा शब्दनय इति प्रतिपादितम्, तन्मतेनाऽन्यतरत्वाद्यनुगतधर्मानभ्युपगमादिति भावः । न नानार्थकत्वोच्छेद इति—कृष्णत्वसिंहत्वादीनां प्रवृत्तिनिमित्तानां शब्दनये भेदाभ्युपगमेनार्थभेदाभ्युपगमादिति भावः । न किञ्चित्पदं नानार्थमिति-घटपटादिशब्दानां तद्वाच्यव्यक्तिभेदान्नार्थभेदः, तथा सति घटशब्दस्यापि तद्वाच्यतत्तद्घटव्यक्तिभेदेनार्थभेदः स्यात्, किन्तु प्रवृत्तिनिमित्तभेदादेव, न च हर्यादिपदे सोऽस्ति, विष्णुसिंहादिगतान्यतरत्वरूपस्य प्रवृत्तिनिमित्तस्यैकत्वादिति हर्यादिपदमपि न नानार्थकमित्यर्थः । नवाऽर्थो नानेति अनुगतेनान्यतरत्वेन रूपेण नानार्थानामैक्यादिति भावः । ननु जगदन्तर्वर्त्तिनिखिलपदार्थानामेव सत्त्वेन रूपेणानुगताध्यवसायः सङ्ग्रहस्सम्भवतीति नामस्थापनाद्रव्यभावघटेष्वेव घटत्वेनैकत्वाध्यवसायः सङ्ग्रह इति किमिति महासामान्याऽपेक्षयाऽवान्तरसामान्यस्य सङ्कुचिताश्रयकत्वेन तद्ग्रहणस्य सङ्कोचरूपत्वात्सङ्कोचः क्रियत इति चेत्, उच्यते, पूर्वं यद्धर्मप्रकारेण वस्तुनो ग्रहणमाश्रित्य पश्चाद्विशेषाऽऽकलनपूर्वकं तत्परित्यज्य तदवान्तरधर्मप्रकारेण ग्रहणलक्षणविभजनं नयान्तरेण क्रियते तत्र तद्धर्मप्रकारेण वस्तुन एकरूपतया ग्रहणमेवापरसङ्ग्रहोऽभिमन्यते इति यदा घटत्वेन नामघटस्थापनाघटद्रव्यघटभावघटानामैक्यं पूर्वं तेन गृहीत्वा पश्चाद्विशेषपर्यालोचनेन तत्परित्यज्य नामघटस्थापनाघटद्रव्यघटभावघटानां घटत्वावान्तरधर्मरूपनामघटत्वस्थापनाघटत्वादिभिः पृथगेव ग्रहणं व्यवहारनय उररीकरोतीति स तेषां तत्प्रकारेण भेदमेव मनुते, तत्र घटत्वेन रूपेण तेषां नामस्थापनादीनामैक्यग्रहणमेवापरसङ्ग्रहः समाश्रयति । महासामान्याऽऽत्मसत्त्वेन यद्यपि सर्वेषामैक्यं समस्ति तथापि न कोऽपि सङ्ग्रहेतरनयः पूर्वं तथाऽभ्युपेत्य पश्चाद्विशेषपर्यालोचनेन तत्परित्यज्य तदवान्तरसामान्यरूपेण वस्तुविभजनं करोति ततो न महासामान्यं नयान्तराविषय इति तद्रूपेण सर्वेषामैक्याध्यवसायलक्षणसङ्ग्रहो नेतरनयग्रहस्य विनिर्मोकः, किन्तु सङ्ग्रहस्य तत्र विश्रान्तिरेवेत्यतः परनयविषयीकृतानेकस्वरूपनामादिघटेष्वेकत्वाध्यवसायमपरसङ्ग्रहं सङ्कोचितस्वरूपमादृत्याशङ्कोत्तराभ्यामाह हन्तैवं यथोक्तघटेष्वेवेति कोऽयं सङ्कोच इति । यद्यपि नैगमनयो महासामान्यमपि गृह्णाति, अवान्तरसामान्यादिकमपि, तथापि स पूर्वं महासामान्यं गृहीत्वा पश्चात्तद्विशेषाकलनेन न तत्परित्यजति तेन नैगमनयेनाऽपक्षपातितया महासामान्यावान्तरसामान्योभयस्य स्वीकृतत्वात्, न वा महावादिश्रीसिद्धसेनदिवाकरमते नैगमनयोऽतिरिक्तोऽस्ति, महासामान्यविषयकस्य तस्य संग्रहरूपत्वात्, अवान्तरसामान्यादिविषयकस्य तस्य व्यवहाररूपत्वात्, व्यवहारनयग्रहस्तु महासामान्यप्रकारको न भवत्येवेति तत्प्रकारकग्रहणं पूर्वमासाद्य पश्चात्तद्विशेषपर्यालोचनेन न तद्विनिर्मोकस्तत्परित्यागः, किन्त्ववान्तरे-

सामान्यादिकमेव पूर्वं गृहीत्वा पश्चात्तद्विशेषपर्यालोचनेन तद्ग्रहस्य विनिर्मोकः परित्यागः, एवञ्च यद्धर्मेत्यनेनावान्तरसामान्यादिधर्मस्य ग्रहणं तत्प्रकारकस्य संग्रहेतरव्यवहारादिनयेन ग्रहस्योक्तदिशा विनिर्मोको भवतीत्यवान्तरसामान्यादिप्रकारकद्रव्योपयोगस्यैवापरसङ्ग्रहनयेनोत्थानादुद्भवात्, तेन चापरसङ्ग्रहनयेनावान्तरसामान्यग्रहात्, महासामान्ये तु कोऽपि विशेषग्राहकः पर्यायनयः प्रवर्त्तत एव नेति सकलपर्यायनयेन ग्रहस्य प्रथमत एव विनिर्मोक एवेति महासामान्यमन्यनयाऽविषय एव सङ्ग्रहविषय इति तदुपयोगात्मकसङ्ग्रहस्य विश्रान्तेः, ततो ह्यनुगतस्यातिरिक्तस्याभावात् ततः परं द्रव्योपयोगाऽप्रवृत्तेरिति निर्गलितोऽर्थः ॥ उक्तार्थे सम्मतितर्कनयकाण्डाष्टमगाथासम्मतिमाह—" पज्जवणयवुक्कंतं " इत्यादि । अत्र—पज्जवणयवुक्कंतं, वत्थु दव्वट्ठियस्स वयणिज्जं ॥ जाव दविओगो, अपच्छिमवियप्पनिव्वयणो ॥ १–८ ॥ इति सम्पूर्णगाथा । अत्र न विद्येते पश्चिमे उत्तरे विकल्पनिर्वचने सविकल्पधीव्यवहारलक्षणे यत्र सः अपश्चिमविकल्पनिर्वचनः, संग्रहावसान इति यावत्, ततः परं विकल्पवचनाऽप्रवृत्तेः, ईदृशो यावद् द्रव्योपयोगः प्रवर्त्तते तावद् द्रव्यार्थिकस्य वचनीयं वस्तु, तच्च पर्यायनयेन व्युत्क्रान्तं वि–विशेषेण उत्–ऊर्ध्वं क्रान्तं–विषयीकृतमेव, पर्यायाऽनाक्रान्तसत्तामात्रसद्भावग्राहकस्य प्रत्यक्षस्यानुमानस्य वा प्रमाणस्याभावात् पर्यायाक्रान्तस्यैव सर्वदा सत्तारूपस्यार्थस्य ताभ्यामवगतेः, घटः सन् पटः सन् मठस्सन्नित्यादिप्रत्यक्षप्रतीतिभ्यो विशेष्यविधया घटपटादीनां पर्यायाणामपि सिद्धेः, तेषां काल्पनिकत्वे प्रकारीभूतायाः सत्ताया अपि तथात्वापत्तेः, तादृशप्रतीतिविषयत्वस्य तत्रापि समानत्वादित्येकोऽर्थः । यद्वा यद्वस्तु सूक्ष्मसूक्ष्मतरसूक्ष्मतमादिबुद्धिना पर्यायनयेन स्थूलरूपं त्यजतोत्तरोत्तरतत्तत्सूक्ष्मरूपाश्रयणात् व्युत्क्रान्तं गृहीत्वा विचारेण मुक्तं, किमिदं मृत्सामान्यं घटादिविशेषैर्विना प्रतिपत्तिविषयः, यावत् सूक्ष्मतमचरमरूपोऽन्त्यो विशेषस्तावत्सर्वं द्रव्यार्थिकस्य वचनयिम्, पूर्वपूर्वस्योत्तरोत्तरापेक्षयाऽनुगतरूपत्वादेवोत्तरोत्तरनयेन सूक्ष्मसूक्ष्मतरतत्तद्विशेषग्राहिणा परित्याग इति तस्य पूर्वपूर्वरूपस्य सामान्यात्मकस्य द्रव्यत्वमायातमेवेति तद्विषयकस्य नयस्य द्रव्यार्थिकत्वम्, तद्ग्राह्यस्य पूर्वपूर्वरूपस्योत्तरोत्तरसूक्ष्मसूक्ष्मतरपर्यायनयत्यक्तस्यार्थस्य द्रव्यरूपत्वम्, उत्तरोत्तरस्य च पूर्वपूर्वरूपापेक्षया विशेषरूपत्वेन पर्यायरूपतया तद्ग्राहिणो नयस्य पर्यायार्थिकत्वम्, तद्ग्राह्यस्य चोत्तरोत्तरपर्यायरूपत्वम्, यदेव चोत्तरापेक्षया पूर्वरूपत्वात् सामान्यरूपं तदेव च स्वपूर्वापेक्षया विशेषरूपमित्येकस्यापि वस्तुनः सामान्यविशेषोभयरूपत्वेन द्रव्यार्थिकपर्यायार्थिकनयविषयत्वम्, यतो यावदपश्चिमविकल्पनिर्वचनोऽन्त्यो विशेषस्तावद् द्रव्योपयोगो द्रव्यज्ञानं प्रवर्त्तते, न हि द्रव्यादयो विशेषान्ताः सदादिप्रत्ययाऽविशिष्टैकाऽव्यावृत्तबुद्धिग्राह्यतया प्रतीयन्ते, न च तथाऽप्रतीयमानास्तथाऽभ्युपगमार्हाः, अतिप्रसङ्गात्, तदेवं न सत्ता विशेषविरहिणी नापि विशेषास्सत्ताविकला इति सिद्धम् । ननु महासामान्यस्य तत्पूर्वं सामान्याभावात् शुद्धसङ्ग्रहेतरनयविषयत्वाभावेन विशेषरूपत्वाभावात्सामान्यरूपत्वमेव स्यात्, एवमन्त्यविशेषस्यापि तदुत्तरविशेषाभावात्तद्ग्रा-

एव संग्रहव्यापारप्रवृत्तेरिति चेत्, सत्यम्, यद्धर्मप्रकारकेतरनयग्रहस्य विनिर्मोकस्तद्धर्मप्रकारकद्रव्योपयोगस्यैव संग्रहनयेनोत्थानादवान्तरसामान्यग्रहसंभवात्सकलपर्यायनयग्रहविनिर्मोक एव महासामान्योपयोगात्मकसंग्रहविश्रान्तेः । तदुक्तं वादिमुख्येन—' पज्जवणयवुक्कंतं ' इत्यादि । व्यवहारनयाभिप्रायमाह तेष्वेवेत्यादि, तेष्वेवैकद्विबहुनामादिरूपेषु घटेषु, लौकिका लोकविदिताः, परीक्षकाः पर्यालोचकाः, तेषां ग्राह्येषु अभिलापविषयेषु जलाहरणाद्यर्थप्रवृत्तिविषयेषु च उपचारगम्येषु मुख्यत्वेन पूजाविषयेषु लक्षणाविषयेषु च, यथा स्थूलेषु सूक्ष्मसामान्योपसर्जनेषु, संप्रत्ययो

हक्रेण केनापि पर्यायनयेन ग्राह्यत्वाभावात्सामान्यरूपत्वाऽभावेन विशेषरूपत्वमेव स्यादिति चेद्, भवतु तथा, का नाम क्षतिः । अपसिद्धान्तत्वप्रसङ्ग इति चेत्, मवम्, " अयं द्रव्योपयोगः स्याद्, विकल्पेऽन्त्ये व्यवस्थितः । अन्तरा द्रव्यपर्याय–धीः सामान्यविशेषवत् ॥१५॥" इति श्लोकव्याख्यायां अयं द्रव्योपयोगः द्रव्यार्थिकनयजन्यो बोधः अन्त्ये विकल्पे शुद्धसङ्ग्रहाख्ये व्यवस्थितः पर्यायबुद्ध्याऽविचलितः स्यादित्युक्त्या शुद्धसङ्ग्रहविषये महासामान्ये पर्यायार्थिकनयो न प्रवर्त्तत इति तत्सामान्यरूपमेव न पर्यायरूपमित्युक्तम्भवति । अन्त्यविशेषविकल्पे च शुद्धर्जुसूत्रलक्षणे कारणाऽभावादेव द्रव्योपयोगो व्यवस्थितस्स्यात्—व्युपरतस्स्यादित्युक्त्या शुद्धर्जुसूत्रलक्षणस्य शुद्धपर्यायावगाहिनयस्य विषयेऽन्त्यविशेषे द्रव्योपयोगो द्रव्यार्थिकनयजन्यबोधो न प्रवर्त्तत इति स विशेष एव न सामान्यमित्युक्तम्भवतीति नापसिद्धान्तत्वप्रसङ्ग इति, विशेषार्थिना नयोपदेशवृत्तिरवलोकनीया, न च महासामान्यस्य सामान्यैकान्तरूपत्वेऽन्त्यविशेषस्य च विशेषैकान्तरूपत्वेऽनेकान्तत्वविरोधस्स्यादिति वाच्यम्, महासामान्यस्यापि तदुत्तरविशेषापेक्षयैवान्त्यविशेषस्यापि च तत्पूर्वसामान्यापेक्षयैव सद्रूपत्वेन विषयतासम्बन्धेन परस्परसापेक्षोभयविषयताकबोधम्प्रति तादात्म्यसम्बन्धेनोभयात्मकविषयस्य कारणतया प्रत्येकस्याप्युभयरूपत्वेनानेकान्तत्वविरोधाभावात् । अत एव द्रव्यार्थिकः केवलमहासामान्यात्मकद्रव्यविषयताकत्वेन पर्यायार्थिकश्च केवलविशेषात्मकपर्यायविषयताकत्वेन शुद्धजातीय इति सिद्धान्ते नाभ्युपगतम्, प्रत्येकनयस्याप्युपसर्जनीकृतस्वान्यविषयप्रधानीकृतस्वविषयतया प्रधानगौणभावेन सामान्यविशेषोभयविषयताकत्वेनाभ्युपगमात् । उक्तञ्च सम्मतौ—"दव्वट्ठिओ त्ति तम्हा, नात्थि णओ नियमसुद्धजाईओ । ण य पज्जवट्ठिओ णाम, कोइ भयणाइ उ विसेसो ॥ १–९ ॥" इति द्वितीयोऽर्थः । उपचारपदस्य पूजालक्षणारूपार्थद्वयविवक्षणेनाह—मुख्यत्वेनेति । ये हि मुख्या अर्थक्रियाकारित्वात्प्रधानास्ते पूजनीया भवन्ति व्यवहारनयविषयतयाऽभिमतेषु विशेषरूपार्थेषु लौकिकप्रवृत्तिनिवृत्तिलक्षणव्यवहारसम्पादकतया मुख्यत्वेन पूजाविषयेषु लोके पन्था गच्छति कुण्डिका स्रवति इत्यादि व्यवह्रियते तदुपपादनाय पथिशब्दस्य पान्थे कुण्डिकापदस्य कुण्डिकास्थजले लक्षणेत्येवं लक्षणाविषयेषु चेत्यर्थः । सूक्ष्मसामान्योपसर्जनेष्विति—आबालगोपालबुद्ध्यग्राह्यत्वात्सूक्ष्मं यत्सामान्यं तस्योपसर्जनं

विशेषप्रधानः परिच्छेदो, व्यवहारः । ऋजुसूत्रनयमतं विवृणोति तेष्वेवेति । तेष्वेव घटेषु, सत्सु विद्यमानेषु, साम्प्रतेषु प्रयोगाधारक्षणमात्रवृत्तिषु, संप्रत्यय ऋजुसूत्रः । साम्प्रताभिप्रायं निरूपयति तेष्वेवेत्यादि । तेष्वेव ऋजुसूत्राभिमतेषु, साम्प्रतेषु वर्तमानकालावधिकेषु, घटेषु घटशब्देषु, ऋजुसूत्राभिमतत्वप्रदर्शनं साम्प्रतत्वांशे न तु शब्दांशे, पूर्वस्यार्थनयत्वादुत्तरस्य च शब्दनयत्वादिति प्रतिपत्तव्यम् । कीदृशेषु घटेषु, नामादीनां नामस्थापनाद्रव्यभावघटानां मध्ये, अन्यतमग्राहिषु यस्य शब्दस्य नम्यमानः गुणभावो येषु तेष्वित्यर्थः । व्यवहारनयमते हि सामान्यमुपसर्जनीकृत्य प्राधान्येन विशेषैरेव घटोऽयं पटोऽयमित्यादिप्रतीतिर्व्यवहार इत्यभिप्रायेण सम्प्रत्यय इत्यस्यार्थमाह विशेषप्रधानः परिच्छेद इति । पूर्वस्यार्थनयत्वादिति नैगमादिनयचतुष्टयस्यार्थप्राधान्येन व्यवहारकारित्वेनार्थनयत्वादित्यर्थः । उत्तरस्य च शब्दनयत्वादिति शब्दादिनयत्रयस्य शब्दं प्रधानीकृत्य व्यवहारप्रवर्त्तकत्वेन शब्दनयत्वादित्यर्थः । यदभिहितं महाभाष्ये—
"अत्थप्पवरं सद्दोवसज्जणं वत्थुमुज्जुसुत्तंता। सद्दप्पहाणमत्थोवसज्जणं सेसया विंति ॥२२६२॥"
इति । ऋजुसूत्रनये हि घटशब्दस्यैकैव नामादिचतुष्टये शक्तिः, साम्प्रतनये तु तत्र न सा, किन्तु प्रत्येकं भिन्नैव, तथा च नामघटार्थवाचको घटशब्दो भिन्नः, स्थापनाघटवाचको घटशब्दो भिन्नः, द्रव्यघटवाचको घटशब्दो भिन्नः, भावघटार्थवाचको घटशब्दो भिन्न इत्याशयेनाह यस्य शब्दस्येत्यादि । नम्यमान इति अभिधीयमान इत्यर्थः । "सेसा इच्छंति सव्वनिक्खेवे" इति "भावं चिय सद्दणया" इति च वचनाद् भावनिक्षेपमेव शब्दनया अभ्युपगच्छन्तीति कथं तेषां यस्य शब्दस्य नम्यमान इत्यादिविविक्तवाचकत्वमुक्तं युक्तं, नामादिनिक्षेपत्रयस्यैव तैरनभ्युपगमादित्यारेका तु इत्थं निवारणीया, तथाहि नम्यमानपदार्थस्य योऽसाधारणो धर्मस्तद्रूपेण नम्यमानपदार्थो भाव एव, तद्रूपेणैव तस्य शब्दवाच्यत्वम् , न तु स्थाप्यमानादिगतधर्मेण तस्य शब्दवाच्यत्वम्, यस्य शब्दस्य स्थापना वाच्या तस्य स्थाप्यमानगताऽसाधारणधर्मेणैव स्थापना वाच्या भवति, तथाभूतधर्मेण स्थापनाऽपि भाव एव, न तु स्थापना नम्यमानादिगतधर्मेण वाच्या भवति, यस्य शब्दस्य द्रव्यं वाच्यं तस्य द्रव्यगताऽसाधारणधर्मेणैव द्रव्यं वाच्यं भवति, न तु प्रतिनियतस्वस्वकार्यनिरूपितोपादानतावच्छेदकधर्मवत्त्वेन यद्द्रव्यत्वं तेन रूपेण द्रव्यं वाच्यम्, स्वासाधारणरूपेण च द्रव्यमपि भाव एव, न तु नम्यमानादिगतधर्मेणापि तस्य वाच्यत्वमित्येवं भावमात्रनिक्षेपाभ्युपगन्तृत्वं शब्दनयस्यावसातव्यम्, नामादिनिक्षेपचतुष्टयस्य सर्वव्यापित्वे नामादिचतुर्ष्वपि तद्व्यापित्वम्, तद्यथा—घट इति द्व्यक्षरं यदेतन्नाम तद्यस्मिन्नाम्नि सङ्केत्यते इदं नाम घटनामेति तन्नामनाम, घट इति शब्दस्वरूपस्य यत्पत्रे लिपिस्वरूपाकारोट्टङ्कनं तन्नामस्थापना, यद्भाषावर्गणापुद्गलद्रव्यं घट इति नामरूपेण परिणतं परिणंस्यति वा तन्नामद्रव्यम्, यच्च घकारोत्तराकारोत्तरटकारोत्तरात्वसमधिगतं तद्भावनामेति, एवं स्थापनादिष्वपि, तत्र यदेतद्भावनाम या च भावस्थापना यच्च भावद्रव्यं तदभ्युपगच्छन्नपि शब्दनयो भावनिक्षेपाभ्युपगन्तैवेति सूक्ष्मधिया

पदार्थो वाच्यः, न तस्य स्थाप्यमानो यस्य स्थापना, न तस्य द्रव्यम्, यस्य द्रव्यं न तस्य भाव इत्येवं विविक्तवाचकत्वेन स्थितेष्वित्यर्थः । एकस्यापि शब्दस्य निक्षेपचतुष्टयप्रवृत्तेः । कथमेवं वाच्यभेदाद्वाचकभेदः स्यादत आह- **प्रसिद्धपूर्वेषु**–पूर्वं सिद्धाः सिद्धपूर्वाः प्राग्गृहीतशक्तिका इत्यर्थः, प्रकर्षेणाभिधानियन्त्रणलक्षणेन सिद्धपूर्वाः प्रसिद्धपूर्वास्तेषु, यः **संप्रत्ययः स साम्प्रतशब्द-नयः** । एकस्य शब्दस्य नानानिक्षेपत्वेऽपि यत्रैवाभिधानियन्त्रणं तत्रैव वाचकत्वं तच्च प्रकरणादिनेत्यभिधानियन्त्रणाद्वाचकत्वभेद इत्यर्थः । अर्थान्तरं तु तत्र गम्यमेवेत्यवसातव्यम् । यच्चैतस्य शब्द-विषयत्वमुक्तं तदेतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वाद्गामभ्याज दण्डेनेति पदवदिति शाब्दत्वजातिमदनुमानविशेषाभ्युपगमपक्षे, इदं वाक्यमेतदर्थकमिति तात्पर्यपर्यवसित-शाब्दबोधाभ्युपगमपक्षे वा संगमनीयम् । अर्थावच्छेदकत्वेन शब्दविषयत्वस्य सार्वत्रिकत्वसमर्थने तु नामादीनामन्यतमग्राहित्वमसमर्थितं स्यात् । समर्थ्यतां वा तदपि घटमुच्चारय, घटं पश्य, घटं मर्दय, घटं जलाहरणार्थं गृहाणेत्यादावन्यतमस्य मुख्यविशेष्यत्वपुरस्काराभिप्रायेण, शब्दस्यावाच्यत्वस्थलेऽपि व्यञ्जन-योपस्थितस्य सर्वत्रार्थावच्छेदकत्वसम्भवात् । न चैवं पक्षभेदेनानिर्धारणापत्तिः, एकैकस्य शतभेदत्वेन तत्संयोगानां चासंख्यत्वेन पक्षभेद एव विविक्तविवेकेन निर्धारणोपपत्तेरिति दिग् । समभिरूढाभिप्रायं प्रकाशयति तेषामेव नामादिघटानां, **साम्प्रतानां** वर्तमानकालवर्तिनाम्, **अध्यवसायासंक्रमो** भिन्नशब्दारू-

विचारणीयम् । **यत्रैवाभिधानियन्त्रणमिति**–शक्तिग्रहकाल इति शेषः । यस्मिन्नेव शब्दे अयं शब्दोऽस्यार्थस्य वाचक इति शक्तिग्रहप्रवृत्तिरिति भावः । **तत्र गम्यमेवेति**–न च वाच्यमिति शेषः । **यच्चैतस्येति** साम्प्रतनयस्यार्थविषयकत्वेऽपि यच्छब्दविषयत्वकत्वं व्यवह्रियते तच्छब्दस्यानुमानविधयैव प्रामाण्यम्, अनुमितौ च शब्दः पक्षविधया विषयो भवतीत्यभिप्रायेणोक्तम्, तत्रानुमानप्रकारमाह–**एतानि पदानि स्वस्मारित-संसर्गज्ञानपूर्वकाणीति** । अत्र पक्षान्तरमप्याह **इदं वाक्यमेतदर्थकमितीति** । साम्प्रतनयेऽर्थविशेषणत्वेन सर्वत्र शाब्दबोधे शब्दो भासते इत्यभिप्रायेण तत्र शब्दविषयत्व-समर्थने अस्य नयस्य नाममात्रग्राहित्वं अस्य च स्थापनामात्रग्राहित्वमित्यादिनियमव्यवस्था न स्यादित्याह–**अर्थावच्छेदत्वेनेति**–अर्थविशेषणत्वेनेत्यर्थः । **तदपि**–नामादीनामन्यतमग्रा-हित्वम् । यथाक्रमं नामादीनामुदाहरणान्याह **घटमुच्चारयेत्यादि** । घटमुच्चारयेत्यत्र स्थापनाघटादेर्नोच्चारणं किन्तु नामघटस्यैवेति घटमित्यस्य घटनामेत्यर्थः । घटं पश्येत्यत्र घट इति नाम्नो दर्शनाभावाद् घटमित्यस्य घटाकृतिमित्यर्थः । घटं मर्दयेत्यत्र नामघटादे-र्मर्दनाभावाद् घटमित्यस्य घटोपादानकारणमृदमित्यर्थः । चतुर्थोदाहरणे घटमित्यस्य भावभूत-घटमित्यर्थः । तदन्येषां नामघटादीनां जलाहरणसामर्थ्याभावादिति भावः । **शब्दस्या-ऽवाच्यत्वस्थलेऽपीति**–अर्थमात्रस्य वाच्यतया भानस्थलेऽपीति भावः । **उपस्थितस्येति**–अत्र शब्दस्येत्यस्यानुकर्षः । अथ यत्र नानापक्षस्तत्र न निर्णयः किन्तु संशय एवेति साम्प्रत-नयस्य तत्तत्पक्षभेदेन शब्दविषयत्वसमर्थने सति पक्षभेदेन संशयापत्तिरस्यादित्याशङ्क्य तन्निषे-धति–**एकैकस्य शतभेदत्वेनेति**, नयस्येति शेषः,

पितत्वेनाध्यवसायः, समभिरूढः । किं वत् ? वितर्कध्यानवदेकत्ववितर्काविचाराख्यशुक्लध्यानद्वितीयभेदवदित्यर्थः । आद्यस्य सवितर्कत्वेऽपि सविचारत्वात्त्यागः । अत्र यथा घटकुटादिशब्दभेदादर्थभेदस्तथा नामघटनामकुटादिशब्दभेदान्नामाद्यन्यतमार्थेऽभिधानियन्त्रणादपि चार्थभेदो द्रष्टव्यः । एवं च सति वाच्यं गम्यं चार्थं प्रति यदि शब्दभेदोऽभ्युपेयस्तत्राऽऽवृत्तिपक्ष आश्रयणीय इति संक्षेपः । एवम्भूताभिप्रायमाविष्करोति । तेषामेवानन्तरपरिगृहीतघटानां, यौ व्यञ्जनार्थौ तयोरन्योन्यापेक्षयाऽर्थग्राही अध्यवसाय एवंभूतः । का पुनरन्योन्यापेक्षा ? । उच्यते–घटपदे घटनक्रियाविशिष्टविषयकशाब्दबोधजनकत्वरूपं यथा वाचकत्वं घटपदजन्यघटनक्रियाप्रकारकशाब्दबोधविषयत्वरूपं घटे वाच्यत्वमपि तथेत्यन्योन्याश्रितवाच्यवाचकभावसम्बन्ध एव, बीजाङ्कुरस्थानीयत्वाच्चान्योन्याश्रयस्यादोषत्वं, यद्येवमन्योन्यापेक्षा न स्याद्वाच्यवाचकभावग्रह एव न स्यात् । प्रकाश्यापेक्षया हि प्रकाशकत्वं प्रकाशकापेक्षया च प्रकाश्यत्वम्, तद्वदत्रापि

ऽवाच्यत्वेनेत्यर्थः । वितर्कध्यानवदित्यनेन शुक्लध्यानद्वितीयभेदपरिग्रहार्थं तदर्थमाह एकत्ववितर्केति–अस्मिन् शुक्लध्यानद्वितीयभेदेऽर्थव्यञ्जनयोरितरस्मादितरत्र तथा मनःप्रभृतीनामन्यतरस्मादन्यत्र सञ्चरणलक्षणो विचारो न विद्यते यथा तथाऽर्थान् समभिरूढनये कुटशब्दसङ्क्रमस्स्ववाच्यवाचकत्वसम्बन्धेन न घटकुम्भादिशब्दान्तरे वर्तते एवं नामकुटशब्दसङ्क्रमो न नामघटनामकुम्भादिशब्दान्तरे वर्तते, अर्थात् कुटशब्दवाच्योऽर्थो घटकुम्भादिशब्दवाच्योऽपि, घटकुम्भादिशब्दवाच्योऽर्थः कुटादिशब्दवाच्योऽपि च शब्दनयेऽभ्युपगतः, कुटघटादिपर्यायशब्दानामेकार्थवाचकत्वेनाभ्युपगमात्, एवं नामकुटशब्दवाच्यो नामघटनामकुम्भादिरपि स्वीकृतः, नैवं समभिरूढनये, तदेव विवृणोति–अत्र यथेत्यादिना । नामघटनामकुटादिशब्दभेदादिति नामघटशब्दस्थापनाघटशब्दद्रव्यघटशब्दभावघटशब्दभेदादेवं नामकुटशब्दस्थापनाकुटशब्दद्रव्यकुटशब्दभावकुटशब्दभेदादित्यर्थः । शब्दभेदादर्थभेदाभ्युपगमे सति वाच्यार्थस्य गम्यार्थस्य च भेदाच्छब्दभेदोऽभ्युपेय इति समभिरूढनये एकस्माच्छब्दादुभयार्थबोधो न भवति किं तूक्तशब्दस्य पुनरावृत्त्या भिन्नत्वकल्पनेनेत्याह एवं च सति वाच्यं गम्यमिति । घटपदे घटनक्रियाविशिष्टविषयकशाब्दबोधजनकत्वमिति–दण्डविशिष्टः पुरुष इति बुद्धिर्दण्डवैशिष्ट्यकाल एव, न त्वन्यदा, दण्डोपलक्षितः पुरुष इति बुद्धिस्तु पुरुषे यदा कदापि दण्डसम्बन्धस्य सद्भावेऽपि, एष एव विशिष्टबुद्ध्युपलक्षितबुद्ध्योर्भेदः, तथा चात्र घटपदे घटनक्रियाविशिष्टविषयकशाब्दबोधजनकत्वरूपमित्युक्त्या घटनक्रियाकाल एव घटपदस्य घटनक्रियाविशिष्टविषयकबोधजनकत्वम्, अर्थात् घटपदात्तदानीमेवैवम्भूतनयेन तादृशबोधः, न त्वन्यदा, यदैव घटते तदैव घटार्थस्य घटपदवाच्यत्वाङ्गीकारात्, समभिरूढनयेन वर्तमानकालावच्छेदेन घटनक्रियाकारित्वाभावेऽपि पूर्वोत्तरकालावच्छिन्नघटनक्रियाकारित्वात्तदुपलक्षितघटात्मकार्थस्य घटपदवाच्यत्वं यथाभ्युपगतं तथैवम्भूतनयेनानभ्युपगमादिति सूचितम्–यद्यपि पदार्थमात्रस्य क्षणिकत्वाद् घटनाघटनक्रियावतोर्भिन्नत्वमुभयनयमतेऽविशिष्टं तथापि समभिरूढनये घटनक्रियाऽभाववतोऽपि घटस्य घटनक्रियाश्रयघटसजातीयत्वम्, एवम्भूतनये तु तद्वि-

स्तिकायावरुद्धत्वषड्द्रव्यक्रोडीकृतत्वधर्मैरेकत्वद्वित्वत्रित्वचतुष्ट्वपञ्चत्वषट्त्वाध्यवसायानां भिन्नत्वादविरुद्धकोटिकत्वाद्वा न विप्रतिपत्तित्वं तथा नयवादेऽष्वपीति पिण्डार्थः । सर्वं द्वित्वमित्यादौ धर्मिणि विधेये धर्मे विधानं धर्मधर्मिणोरभेदाभिप्रायेण । असद्धर्माध्यारोपाभावेन विप्रतिपत्तित्वं परिहृत्य क्षयोपशमविशेषात् पृथग् विशेषग्राहित्वेन तां परिहर्तुमाह किं चान्यदिति । पर्यायविशुद्धिविशेषादुत्कर्षेणेति पर्याया—भेदा मत्यादयः, तेषां विशुद्धिः स्वावरणापगमजनिता स्वच्छता, तस्या विशेषो भेदस्तस्मादुत्कर्षो विषयताभेदस्तेनेत्यर्थः । यथा मतिज्ञानी मनुष्यजीवस्य मनुष्यपर्यायं वर्तमानं चक्षुरादिनेन्द्रियेण साक्षात्परिच्छिनत्ति, तमेव श्रुतज्ञानी आगमेनानुमानस्वभावेन, तमेवावधिज्ञानी अतीन्द्रियेण ज्ञानेन, तमेव मनःपर्यायज्ञानी तस्य मनुष्यपर्यायस्य यः प्रश्ने प्रवर्तते तद्गतानि मनोद्रव्याणि दृष्ट्वाऽनुमानेनैव, केवलज्ञानी पुनरत्यन्तविशुद्धेन केवलेन, न चैता विप्रतिपत्तयो विरुद्धाः प्रतिपत्तयः, स्वसामर्थ्येन विषयपरिच्छेदात्, तद्वन्नयवादा इत्यर्थः । बहुबहुतरादिपर्यायग्राहित्वान्मत्यादीनां यथा विशेषो न च विप्रतिपत्तित्वं तथा नयवादानामित्यन्ये व्याचक्षते । एकविषये प्रवर्तमानानामेषां प्रत्यक्षादिवद्विलक्षणत्वादेव न विप्रतिपत्तित्वमित्याह—यथा

इति जीवाजीवात्मकत्वधर्मेण सर्वस्य द्वित्वाध्यवसायः, 'सर्वं त्र्यात्मकं द्रव्यगुणपर्यायात्मकत्वाद्' इति द्रव्यगुणपर्यायात्मकत्वधर्मेण सर्वस्य त्रित्वाध्यवसायः, 'सर्वं चतुष्टयात्मकं चतुर्दर्शनविषयत्वाद्' इति चतुर्दर्शनविषयत्वधर्मेण सर्वस्य चतुष्ट्वाध्यवसायः, सर्वं पञ्चात्मकं पञ्चास्तिकायावरुद्धत्वाद्' इति पञ्चास्तिकायावरुद्धत्वधर्मेण सर्वस्य पञ्चत्वाध्यवसायः, 'सर्वं षट्स्वरूपं षड्द्रव्यक्रोडीकृतत्वाद्' इति षड्द्रव्यक्रोडीकृतत्वधर्मेण सर्वस्य षट्त्वाऽध्यवसाय इत्येवमुक्तानां षण्णामध्यवसायानामित्यर्थः । पर्वते धर्मिणि वह्नौ विधेये सति पर्वतो वह्निमानिति विधानवत् पदार्थमात्रे धर्मिणि द्वित्वे विधेये सति सर्वं द्वित्ववदित्येवमुद्देश्यविधेयभेदसम्बन्धार्थकमतुप्प्रत्ययघटितमेव विधानं युक्तं न सर्वं द्वित्वमित्याशङ्कां मनसि कृत्वा तन्निवृत्त्यर्थमाह—सर्वं द्वित्वमित्यादाविति । धर्मास्तिकायादीनामन्यतमो यः कश्चिदेकः पदार्थस्तस्य मत्यादिज्ञानैरन्यान्यप्रकारेणोपलब्धौ हेतुमाह पर्यायविशुद्धिविशेषादुत्कर्षेणेति । तदर्थमाह- पर्याया भेदा इत्यादिना । तस्य मनुष्यपर्यायस्य यः प्रश्ने प्रवर्त्तते तद्गतानीति मनुष्यपर्यायविषयकप्रश्नकर्त्ता यस्तद्गतानि तेनैव काययोगेन गृहीत्वा मनोयोगेन मनस्त्वेन परिणमितानि, तद्विचारानुगुणानीति यावत् । अनुमानेनैवेति—अयं पुरुषः मनुष्यपर्यायं प्रष्टुमभिलषति तदाकारमनःपरिणत्यन्यथानुपपत्तेरित्यनुमानेनैवेत्यर्थः । अथवा एतत्पुरुषहृद्गतप्रश्नो मनुष्यपर्यायविषयकः, तदाकारमनःपरिणामान्यथानुपपत्तेरित्यनुमानेनैवेत्यर्थः । एकस्मिन्नेव विषये कारणभेदेन मत्यादीनां भेदमुपदर्श्य विषयभेदेन तदुपदर्शनप्रवणमन्येषां मतमुपदर्शयति बहुबहुतरादिपर्यायग्राहित्वादिति, अस्यायम्भावः—मतिज्ञानी मनुष्यादेर्जीवस्याल्पपर्यायान् परिच्छिनत्ति, ततश्श्रुतज्ञानी बहुपर्यायान् अवधिज्ञानी च बहुतरपर्यायान् मनःपर्यायज्ञानी च विशुद्धिप्रकर्षाद् बहुतमपर्यायान् केवलज्ञानी च सर्वपर्यायानिति । यथैतेऽल्पाधिकतरादिपर्यायग्राहित्वेन मत्यादिज्ञानविशेषरूपा ज्ञानभेदा अपेक्षाभेदप्रयोज्याविरो-

चेति । स्वविषयनियमात्–स्वविषयस्य सन्निकर्षलिङ्गसादृश्यपदवृत्त्यादिना नियतपरिच्छेदकत्वात् । यथा प्रत्यक्षादीनां विषयाभेदेऽपि सामग्रीभेदाद्भेदस्तथा नयवादानां, न च विप्रतिपत्तित्वमिति स्पष्टोऽर्थः । इदन्तु ध्येयम्, एकशब्दजन्यानामपि शक्यलक्ष्यव्यङ्ग्यप्रतीतीनां यथा वृत्तिभेदाद् भेदस्तथा नयधियामपि स्वस्वार्थवृत्तितदितरोपचाराभ्याम्, एतच्च नयज्ञानमेककोटिकत्वात्संशयसमुच्चयाभ्यामतस्मिंस्तन्निश्चायकत्वाभावाद्विभ्रमात्संपूर्णार्थग्राहित्वाभावाच्च महावाक्यजन्यप्रमाणबोधाद्विलक्षणमिति जात्यन्तरमेव । तदवदाम,

यशालिविविधपर्यायग्राहिणोऽपि न विप्रतिपत्तिरूपास्तथा नयवादा अपीति । **स्वस्वार्थवृत्तितदितरोपचाराभ्यामिति** एवं द्रव्यार्थिकनयस्तस्य यः स्वार्थः स्वविषयोऽभेदस्तत्र वृत्तिर्मुख्याश्रयणं तदितरस्मिन् भेदरूपे विषये उपचारो गौणवृत्त्याश्रयणम्, एवं पर्यायनये तद्वैपरीत्यं, ताभ्यामित्यर्थः । **एतच्च नयज्ञानं संशयसमुच्चयाभ्यां विलक्षणमित्यन्वयः** । तस्य संशयसमुच्चयवैलक्षण्ये को हेतुरित्याशंकायामाह **एककोटिकत्वादिति** । एकप्रकारतामात्रनिरूपकत्वादित्यर्थः । अत्र नयज्ञानं संशयात्मकं न एकप्रकारतामात्रनिरूपकत्वात्, उभयसम्प्रतिपन्ननिश्चयवदित्यनुमानप्रयोगः । उक्तहेतोरेव तन्न समुच्चयात्मकमपि । ननु संशयसमुच्चययोः को भेद इति चेत्, उच्यते, एकत्र धर्मिणि विरुद्धनानाधर्मप्रकारकज्ञानं संशय इति लक्षणे एकस्मिन् वृक्षे विभिन्नावच्छेदेन कपिसंयोगतदभावप्रकारकज्ञानस्य प्रमात्मकस्य संशयत्वं मा प्रसाङ्क्षीदित्येतदर्थं विरुद्धत्वस्य नानाधर्मविशेषणत्वं परेणापि स्वीक्रियते, विरोधभाने चाऽव्याप्यवृत्तित्वज्ञानं प्रतिबन्धकमिति तदभावः कार्यसहभावेन प्रतिबन्धकाभावविधया कारणमिति कारणीभूताऽव्याप्यवृत्तित्वज्ञानाभाववदितसामग्र्या संशये धर्मविशेषणतया संसर्गतया वा विरोधो भासते, न समुच्चये, यद्वा संशये सन्देह्मीत्यनुव्यवसायसिद्धा विलक्षणविषयता स्वीक्रियते, न समुच्चये, तत्र समुच्चिनोमीत्यनुव्यवसायसिद्धविषयतास्वीकारात्, अन्ये तु संशये प्रकारताद्वयनिरूपिता एका विशेष्यता, अभिन्नैव विशेष्यता, समुच्चये तु यद्यपि संशयवद् विशेष्यधर्म्येक एव तथापि तन्निष्ठा विशेष्यता प्रकारताभेदेन भिन्नैवेत्याहुः, तथा च संशयज्ञानमेकधर्मिनिष्ठविशेष्यतानिरूपकं तन्निष्ठप्रकारकत्वे सति तद्विरुद्धतदभावनिष्ठप्रकारताकम्, यद्वा तन्निष्ठप्रकारतानिरूपिता या तद्विरुद्धतदभावनिष्ठप्रकारतानिरूपितैकधर्मिनिष्ठा विशेष्यता तन्निरूपकज्ञानम्, समुच्चयज्ञानञ्च नानाधर्मनिष्ठप्रकारताकैकधर्मिनिष्ठनानाविशेष्यताकम्, यद्वैकधर्मनिष्ठप्रकारतानिरूपितधर्मिनिष्ठविशेष्यताभिन्नविशेष्यतानिरूपिततदन्यधर्मनिष्ठप्रकारताकज्ञानमिति, ताभ्यां नयज्ञानं मुख्यविधयैकधर्मनिष्ठप्रकारतानिरूपितैकधर्मिनिष्ठविशेष्यतानिरूपकत्वाद् भिन्नमिति भावः । विभ्रमाद्विलक्षणं नयज्ञानमित्यत्र हेतुमाह–**अतस्मिंस्तन्निश्चायकत्वाभावादिति**–तदभाववन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठप्रकारता तन्निरूपकत्वेनायथार्थं विभ्रमज्ञानम्, नयज्ञानं तु तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वेन यथार्थमिति तद्विलक्षणं तदिति भावः । सप्तभङ्ग्यात्मकमहावाक्यजन्यप्रमाणबोधाद्विलक्षणमित्यत्र हेतुमाह–**सम्पूर्णार्थग्राहित्वाभावाच्चेति**–सप्तभङ्ग्यात्मकमहावाक्यजन्यसप्तधर्मनिष्ठप्रकारताकैकधर्मिनिष्ठविशेष्यताकाखण्डशाब्द-

" अयं न संशयः कोटे रैक्यान्न च समुच्चयः । न विभ्रमो यथार्थत्वा–दपूर्णत्वाच्च न प्रमा ॥१॥ " इति, तथा " न समुद्रोऽसमुद्रो वा, समुद्रांशो यथोच्यते । नाप्रमाणं प्रमाणं वा, प्रमाणांशस्तथा नयः ॥१॥ " इति, तत्त्वमत्रत्यमस्मत्कृतनयामृततरङ्गिण्याम् ॥ उदाहरणदर्शितमेव नयलक्षणं संक्षिप्तरुचीनामनुग्रहार्थमाचार्याभिर्वक्तुकामः प्रक्रमते । आह–चेत्यादि । आह चेत्यात्मानमेव पर्यायान्तरवर्तिनं निर्दिशति । नैगमः निगमो जनपदस्तत्र भवा ये शब्दास्तेषामर्था अभिधेयास्तेषाम्, एको विशेषः, अनेकं सामान्यमनेकव्यक्तिवृत्तित्वात्, तावेव यावर्थौ तयोर्नयः प्रकटनं स एव गमोऽन्यव्यावृत्तिप्रकारस्तमपेक्षतेऽभ्युपैति यः स तथा, देशसमग्रे विशेषसामान्ये ग्रहीतुं शीलं यस्य स तथा, व्यवहारी सामान्यविशेषाभ्यां परस्परविमुखाभ्या अस्ति वस्त्विति व्यवहर्तुं शीलं यस्य स तथा, नैगमो नयो ज्ञेयः । परस्परविमुखत्वं च तयोः पदा-

बोधात्मकं प्रमाणज्ञानम्, नयज्ञानं त्वेकैकभङ्गजन्यवस्तुगतैकधर्मप्रकारकखण्डबोधरूपमिति ततस्तद्विलक्षणमिति भावः । यद्यपि नयज्ञानस्य तद्वति तत्प्रकारकत्वाल्लौकिकप्रवृत्त्युपयोगिप्रमात्वमस्त्येव, अन्यथा लौकिकव्यवहार एव न स्यात्, तथाप्यत्रालौकिकं तत्त्वविचारौपयिकं प्रधानभावार्पितसकलांशावगाहिज्ञाननिष्ठप्रमात्वं नास्त्येवेति प्राधान्येनैकांशावगाहिनस्तस्य नाऽलौकिकप्रामाण्यम्, न वाऽप्रामाण्यम्, लौकिकप्रामाण्यस्यापि सत्त्वात्, संशयसमुच्चयविपर्ययविलक्षणत्वाच्चेति तज्जात्यन्तरमेवेत्याह–जात्यन्तरमेवेति । स्वकृतनयोपदेशग्रन्थसंगतिमाह–अयं न संशय इत्यादि । एतच्च पूर्वमेव विवृतम् । एतेन नयस्य प्रमाणत्वनिषेधेऽप्रमाणत्वं स्यात्, तन्निषेधे प्रमाणत्वं स्यात्, विरोधिद्वयमध्ये एकनिषेधस्यापरविधानरूपत्वात्, राश्यन्तराभावात्, तथा च प्रमाणान्नयस्य पृथगुपन्यासो व्यर्थ एवेत्यपि निरस्तम्, प्रमाणविषयैकदेशग्राहित्वेन तस्य रूपान्तरत्वात् । एतदेव समुद्रांशदृष्टान्तेन व्यवस्थापयितुमाह न समुद्रोऽसमुद्रो वेत्यादि । समुद्रैकदेशस्य समुद्रत्वासमुद्रत्वनिषेधवत् प्रमाणैकदेशस्य नयस्य प्रमाणत्वाऽप्रमाणत्वनिषेधोपपत्तिर्भाव्या । उक्तञ्च समानतान्त्रिकैरपि तत्त्वार्थश्लोकवार्त्तिके "नाऽप्रमाणं प्रमाणं वा, नयो ज्ञानात्मको मतः । स्यात्प्रमाणैकदेशस्तु, सर्वथाऽप्यविरोधतः ।१।" इति । अधिकं पूर्वमेव भावितमिति । एको विशेषः, अनेकं सामान्यमनेकव्यक्तिवृत्तित्वादिति–यद्यपि यावन्ति नित्यद्रव्याणि तावन्तो विशेषा इति नित्यद्रव्याणामानन्त्याद् विशेषा अनन्ताः, सामान्यन्त्वनेकव्यक्त्यनुगतमेकमिति वैशेषिका अभ्युपगच्छन्ति, एवञ्चैकं सामान्यमनेको विशेष इत्येवं वक्तुमुचितम्, एको विशेषः अनेकं सामान्यमिति तु विपरीताभिधानमिव प्रतिभासते, सकलविशेषापेक्षया सकलसामान्यापेक्षया चाभिधाने यथा विशेषाणामानन्त्यं तथा परापरभेदभिन्नानां सामान्यानामपि आनन्त्यमिति विशेषवत्सामान्यमपि अनेकमित्येकं सामान्यमित्यपि वक्तुमयुक्तम्, तथाप्यत्र विशेषव्यक्तिसामान्यव्यक्त्यपेक्षयैवैकानेकनिर्वचनं, तत्र विशेषव्यक्तिरेकैकत्रैव वर्तत इति न तस्या आश्रयभेदात् स्वरूपतश्च भेद इति भवत्येको विशेषः, सर्वथैकस्यानेकवृत्तित्वं न सम्भवति, यतः कथञ्चिद्भेदाभेद एवाधाराधेयभाव इति सामान्यस्याधारेण सह कथञ्चिदभेदादाधारभेदे तस्यापि भेद इत्येकस्य सामान्यस्यानेकाधारवृत्तित्वादनेकत्वमिति भवत्यनेकं

दिरूपाः समुदाय्यादिव्यतिरिक्ता अनुभूयन्ते, विशेषस्यैव स्वप्रत्यक्षत्वात्, अभाव इव भावेऽपि सामान्यस्य कल्पितत्वेन तुच्छत्वात्, तादृशमपि च तद्वैज्ञानिकसम्बन्धेन सामान्यप्रत्यासत्तिघटकं स्वीक्रियत इति न व्याप्तिज्ञानादौ यावद्व्यक्तिभानानुपपत्तिः। ज्ञातस्य धूमत्वस्य स्वव्यापकविषयताकधूमप्रत्यक्षे हेतुत्वकल्पनात् स्वानभिमतोऽपि च विषययोगत्वेन कल्प्यमानो न स्वविषयप्राधान्यं हन्ति। यथा संग्रहस्यानुपूर्वीद्रव्याण्येको राशिरित्यत्र राशित्वघटकव्यक्तीनामेकवचनार्थबहुत्वविशेषस्य चाश्रयणेऽप्यानुपूर्वीत्वसामान्यजनितैकत्वप्राधान्यं संग्रहनयेऽव्याहतमिति व्यवस्थापितमनुयोगद्वारेषु द्रव्यप्रमाणचिन्तायां तद्वदत्रापि भावनीयमिति दिग्। तथा लोके उपचारो गिरिर्दह्यत इत्यादिकस्तत्र नियतं निष्पन्नम्, व्यवहारनयम्, विस्तृतं उपचरितानुपचरितार्थाश्रयणाद्विस्तीर्णं, विद्यादवबुध्येत ॥ ३ ॥

इति तदर्थमाह–विशेषा इति। ननु सामान्यस्य कल्पितत्वेनासद्रूपत्वे धूमत्वसामान्यप्रत्यासत्त्या कथं सकलधूमज्ञानं स्यात्, तदभावे च कथं सर्वोपसंहारेण जायमाने व्याप्तिज्ञाने सकलधूमभानं स्यादित्याशङ्कानिवृत्त्यर्थमाह तादृशमपि च तादिति–तुच्छमपि च सामान्यमित्यर्थः। वैज्ञानिकसम्बन्धेनेति–स्वप्रकारकज्ञानविषयत्वसम्बन्धेनेत्यर्थः। विषययोगत्वेनेति–विषयो धूमप्रत्यक्षविषयो धूमः, तस्य योगत्वेन सम्बन्धत्वेन, धूमत्वसामान्यलक्षणप्रत्यासत्त्यात्मकाऽलौकिकसन्निकर्षत्वेनेति यावत्। "संगहस्स आणुपुव्वीदव्वाइं किं संखिज्जाइं असंखेज्जाइं अणंताइं ?, नो संखेज्जाइं, नो असंखेज्जाइं, नो अणंताइं, नियमा एगो रासी" इत्यनुयोगद्वारसूत्रटीकायां ननु यदि सङ्ख्येयादिस्वरूपाणि एतान्यानुपूर्वीद्रव्याणि न भवन्ति तर्हि एको राशिरित्यपि नोपपद्यते, द्रव्यबाहुल्ये सति तस्योपपद्यमानत्वाद्, व्रीह्यादिराशिषु तथैव दर्शनात्, सत्यम्, किन्त्वेको राशिरिति वदतः कोऽभिप्रायः?, बहूनामपि तेषामानुपूर्वीत्वसामान्येनैकेन क्रोडीकृतत्वादेकत्वमेव, किञ्च यथा–विशिष्टपरिणामपरिणते स्कन्धे तदारम्भकावयवानां बाहुल्येऽप्येकतैव मुख्या, तद्वदत्रानुपूर्वीद्रव्यबाहुल्येऽपि तत्सामान्यस्यैकरूपत्वादेकत्वमेव मुख्यमसौ नयः प्रतिपद्यते, तद्वशेनैव तेषामानुपूर्वीत्वसिद्धेः, अन्यथा तदभावप्रसङ्गात्, तस्मान्मुख्यस्यैकत्वस्यानेन कक्षीकृतत्वात् संख्येयरूपतादिनिषेधः, गुणभूतानि तु द्रव्याण्याश्रित्य राशिभावोऽपि न विरुध्यत इत्युक्तम्, तथा च तत्र राशिभावोपपादनार्थं यथाऽऽनुपूर्वीद्रव्यगतबहुत्वसंख्याया गुणीभूताया आश्रयणेऽप्यानुपूर्वीत्वसामान्यस्यैकत्वेन तद्रूपेणानुपूर्वीद्रव्याणामेकत्वमिति तत्प्राधान्यं स्वाभ्युपगतं संग्रहनयेऽव्याहतं तथा व्यवहारनयेऽपि सामान्यप्रत्यासत्तिविधया गुणीभूतसामान्याश्रयणेऽपि स्वाभ्युपगतं विशेषप्राधान्यमव्याहतमित्याशयेनाह यथा सङ्ग्रहस्यानुपूर्वीद्रव्याणीति। तृतीयार्योत्तरार्द्धार्थमाह– तथा लोक इत्यादि। गिरिर्दह्यत इत्यादिक इति अत्र गिरिपदस्य गिरिस्थतृणादौ लक्षणा, मुख्यस्य गिरिपदार्थस्य पर्वतस्य दाहेऽन्वयसम्भवेऽपि तृणदाहतात्पर्यस्यानुपपत्तेः लक्षणाबीजस्य सत्त्वात्। तत्प्रयोजनं भूयो दग्धत्वप्रतीतिः, आदिपदेनाध्वा यातीत्यादि ग्राह्यम्, अत्राध्वपदस्याध्वनि गच्छति पुरुषसमुदाये लक्षणा,

साम्प्रतेत्यादि। साम्प्रतो वर्तमानो यो विषयस्तस्य ग्राहकम्, समासतः संक्षेपतः, ऋजुसूत्रनयं विद्यात्। समासत इत्यनेन वर्तमानकालस्य स्थूलसूक्ष्मतया स्थूलसूक्ष्मत्वाभ्यां भेद आत्मीयनामादिविषयभेदश्च विस्तरेणास्याभ्यूह्य इति सूचितं भवति। उत्तरार्धेन शब्दस्वरूपमाह–विद्यात् यथार्थशब्दमिति। यथार्थं व्युत्पत्तिनिमित्तसमव्यापकपदवाच्यताभ्युपगमप्रवणमध्यवसायम्, शब्दनयं विद्यादित्यर्थः। अनेन चैवम्भूत एव प्रकाशितो लक्ष्यते, सर्वविशुद्धत्वेन तस्य व्यञ्जनार्थविशेषणत्वात्। साम्प्रतसमभिरूढौ तर्हि कस्मान्न स्मारिताविति चेत्, स्मारितावेव। तदाह–विशेषितपदं तु शब्दनयमिति, विशेषितपदं विशेषज्ञानं, नामादिषु प्रसिद्धपूर्वाच्छब्दादर्थप्रतीतिः साम्प्रते, शब्दान्तरवाच्यार्थः शब्दान्तरस्य नाभिधेय इत्येवं च समभिरूढे विशेषितपदत्वं बोध्यम्। इतिर्नयानुस्मरणपरिनिष्ठासूचकः। अत्राह परः–घटाद्यजीवपदार्थोद्देशेन नैगमादयो नया विभाविताः। अथ जीव इति शुद्धपदे आकारिते उच्चारिते

अजीवपदार्थस्य स्थिरस्य गमनेऽन्यथानुपपत्तेः पुरुषतात्पर्यानुपपत्तेर्वा हेतोरक्षतत्वात्। तत्प्रयोजनं नैरन्तर्यप्रतीतिः, ऋजुसूत्रस्वरूपं सङ्क्षेपत आह **साम्प्रतेत्यादीति। वर्त्तमानकालस्य स्थूलसूक्ष्मतया स्थूलसूक्ष्मत्वाभ्यां भेद** इति–ऋजुसूत्रविषयीभूतस्य वर्त्तमानकालस्यापि नैकत्वं किन्तु स्थूलसूक्ष्मरूपत्वात् स्थूलत्वेन सूक्ष्मत्वेन स्वस्वभावेन भेद इत्यर्थः। **नामादीति**–अत्रादिपदेन स्थापनाद्रव्यभावपरिग्रहः कार्यः। **अस्य** ऋजुसूत्रनयस्य। **यथार्थमित्यस्यार्थमाह व्युत्पत्तिनिमित्तेत्यादि**। यत्रार्थे यदैव यच्छब्दव्युत्पत्तिनिमित्तक्रिया वर्त्तते तत्रार्थे तदैव तच्छब्दवाच्यता, यत्रार्थे यदैव यच्छब्दवाच्यता तत्रार्थे तदैव तच्छब्दव्युत्पत्तिनिमित्तक्रियेत्यभ्युपगमप्रवणमध्यवसायमित्यर्थः। विशेषितपदमित्यस्यार्थमाह–**विशेषज्ञानमिति। नामादिषु प्रसिद्धपूर्वाच्छब्दादर्थप्रतीतिः** साम्प्रते इत्यस्य **शब्दान्तरवाच्यार्थः शब्दान्तरस्य नाभिधेय इत्येवं च** समभिरूढे इत्यस्य चाऽर्थः पूर्वमेव कृत इति। संक्षिप्तबुद्धिसत्त्वानुग्रहाभिलाषुकपूर्वाचार्योक्तास्सप्तनयसंक्षिप्तस्वरूपप्रदर्शिकाः श्लोका अत्रोपयोगित्वादुल्लिख्यन्ते

"शुद्धं द्रव्यं समाश्रित्य, संग्रहस्तदशुद्धितः। नैगमव्यवहारौ स्तां, शेषाः पर्यायमाश्रिताः ॥१॥
तथाहि–अन्यदेव हि सामान्य–मभिन्नज्ञानकारणम्। विशेषोऽप्यन्य एवेति, मन्यते नैगमो नयः॥२॥
सद्रूपताऽनतिक्रान्तं, स्वस्वभावमिदं जगत्। सत्तारूपतया सर्वं, सङ्गृह्णन् सङ्ग्रहो मतः ॥३॥
व्यवहारस्तु तामेव, प्रतिवस्तु व्यवस्थिताम्। तथैव दृश्यमानत्वाद्, व्यापारयति देहिनः ॥४॥
तत्रर्जुसूत्रनीतिः स्यात्, शुद्धपर्यायसंश्रिता। नश्वरस्यैव भावस्य, भावात्स्थितिवियोगिनः ॥५॥
अतीतानागताकार कालसंस्पर्शवर्जितम्। वर्त्तमानतया सर्वं ऋजुसूत्रेण सूत्र्यते ॥६॥
विरुद्धलिङ्गसङ्ख्यादि,–भेदाद्भिन्नस्वभावताम्। तस्यैव मन्यमानोऽयं, शब्दः प्रत्यवतिष्ठते ॥७॥
तथाविधस्य तस्यापि, वस्तुनः क्षणवर्त्तिनः। ब्रूते समभिरूढस्तु, संज्ञाभेदेन भिन्नताम् ॥८॥
एकस्यापि ध्वनेर्वाच्यं, सदा तन्नोपपद्यते। क्रियाभेदेन भिन्नत्वा, देवम्भूतोऽभिमन्यते ॥९॥"

इति। आकारिते इत्यस्यार्थमाह–**उच्चारित इति, नैगमं समग्रग्राहिणं विहायेति**।

नोजीवोऽजीव इति देशसर्वप्रतिषेधयुक्तयोर्जीवशब्दयोरुच्चारितयोः, नोअजीव इति प्रतिषेधद्वयसमन्विते जीवशब्दे उच्चारिते केन नयेन नैगमादिना कोऽर्थः प्रतीयत इति वक्तव्यम्, अस्मिन्नुक्ते हि सर्वत्र विधिनिषेधयोर्नयज्ञानं व्युत्पन्नानामीषत्करं स्यादिति । सूरिराह–अत्रोच्यते–शुद्धपदे जीव इत्याकारिते नैगमं समग्रग्राहिणं विहायैवंभूतं च शेषैर्देशनैगमादिभिः सर्वासु गतिषु वर्तमानो जीवोऽभ्युपगम्यते । तदाह–नैगमदेशेत्यादि । नैगमेन देशग्राहिणा, तथा व्यवहारेण विशेषग्राहिणा, ऋजुसूत्रेण वर्तमानवस्तुग्राहिणा, साम्प्रतेन वर्तमानभावग्राहिणा, समभिरूढेन च प्रतिशब्दं भिन्नार्थग्राहिणा, पञ्चस्वपि नरकतिर्यङ्मनुष्यदेवसिद्धगतिषु, अन्यतम इति नरकादिवर्ती, जीवः प्राणी प्रतीयते । अत्र देशसङ्ग्रहपदस्वरसादौपशमिकादिभावैकदेशजीवत्वरूपपारिणामिकभावग्राहिसंग्रहग्रहणेऽपि न क्षतिः, जीवापेक्षया तस्य सर्वसङ्ग्रहत्वेऽपि भावापेक्षया देशसङ्ग्रहत्वात्, व्यक्तिग्रहस्य च

उक्तमतं कियतां नयानामित्याह " नैगमो देशसङ्ग्राही, व्यवहारर्जुसूत्रकौ । शब्दः समभिरूढश्चेत्येवमेते प्रचक्षते ॥४५॥ " नैगम इति–नैगमो नैगमनयः, देशसङ्ग्राही अवान्तरसङ्ग्रहः, सर्वसङ्ग्रहस्य सन्मात्रार्थत्वात्त्यागः, व्यवहारर्जुसूत्रकौ व्यवहारनय ऋजुसूत्रनयश्च, शब्दः समभिरूढश्चेत्येवमेते प्रचक्षते ॥ ४५ ॥ इति नयोपदेशवृत्तिपाठमनुसृत्य नैगमं समग्रग्राहिणं विहायेत्यस्य सत्ताख्यमहासामान्यग्राहिणं परसङ्ग्रहं विहायेत्यर्थः । एतेनैव सत्ताख्यमहासामान्यग्राहिनैगमं विहायेत्यपि लभ्यते, तथाभूतस्य नैगमस्य परसङ्ग्रह एवान्तर्भावस्य श्रीसिद्धसेनदिवाकरभगवत्सम्मतत्वादिति बोध्यम् । अत एव नैगमेन देशग्राहिणेत्यत्र नैगमेनेत्यस्य देशग्राहिणेति विशेषणं चरितार्थम्, परसंग्रहान्तर्गतसर्वग्राहिनैगमव्यावर्तकत्वात्तस्येति । भाष्योक्तदेशसङ्ग्रहेतिपदस्वारस्यलभ्यार्थमाह–अत्र देशसङ्ग्रहपदस्वरसादिति–औपशमिकादिभावैकदेशजीवत्वरूपपारिणामिकभावग्राहिसंग्रहग्रहणेऽपि न क्षतिरिति–औपशमिकादीनां पञ्चानां भावानां य एकदेशो जीवत्वरूपपारिणामिकभावस्तद्ग्राहिसङ्ग्रहग्रहणेऽपि न क्षतिरित्यर्थः । तत्र हेतुमाह जीवापेक्षयेत्यादि । जीवत्वरूपपारिणामिकभावरूपेण सर्वजीवानां संग्रहो भवतीति जीवापेक्षया जीवत्वरूपपारिणामिकभावग्राहिसङ्ग्रहस्य सर्वसङ्ग्रहत्वेऽपि पञ्चविधभावापेक्षया जीवत्वरूपपारिणामिकभाव एकदेश इति तद्ग्राहिणो देशसङ्ग्रहत्वादित्यर्थः । नन्त्तदिशा जीवत्वरूपपारिणामिकभावग्राहिसङ्ग्रहेण जीवशब्देन जीवत्वरूपपारिणामिकभावग्रहणेऽपि कथं जीवव्यक्तिप्रतीतिरित्यत आह–व्यक्तिग्रहस्य चेत्यादि । अयम्भावः यद्यपि विशुद्धसङ्ग्रहनये सर्वेषां त्रिप्रदेशिकादीनामनन्ताणुकपर्यन्तानां स्कन्धानामानुपूर्वीत्वसामान्याव्यतिरेकात्सर्वोऽप्येकैवानुपूर्वी तथाऽप्यविशुद्धसंग्रहनये " तिपएसिए आणुपुव्वी चउप्पएसिए आणुपुव्वी जाव दसपएसिए आणुपुव्वी संखिज्जपएसिए आणुपुव्वी असंखिज्जपएसिए आणुपुव्वी अणंतपएसिए आणुपुव्वी " इत्याद्यनुयोगद्वारसूत्रे यथा सर्वेऽपि त्रिप्रदेशिकास्स्कन्धास्त्रिप्रदेशिकत्वसामान्याऽव्यतिरेकादेकैवानुपूर्वी, एवं सर्वेऽपि चतुष्प्रदेशिकाश्च-

तत्रानुपूर्वीद्रव्यग्राहिसङ्ग्रहवदेवोपपत्तेरिति द्रष्टव्यम् । **कस्मादिति** किमत्रोपपत्तिरस्त्युत स्वेच्छया नैगमादयोऽभ्युपगच्छन्त्येवमिति हेतुप्रश्नोऽयम् । सूरिराह–अस्त्युपपत्तिः, तामाह–**एते हि नया** इत्यादिना, हि यस्मात्, **एते नया जीवं प्रति** जीवशब्दार्थमधिकृत्य, औपशमिकादियुक्तो यो भावोऽर्थस्तद्ग्राहिणः, सर्वासु च नरकादिगतिषु अवश्यमौपशमिकादीनां यः कश्चित्सम्भवति भावः सिद्धिगतौ च यद्यप्यौपशमिकक्षायोपशमिकौदयिका न सन्ति, तथापि क्षायिकपारिणामिकौ सम्भवत इत्यसावपि जीवः । यद्यप्यौपशमिकादीनां मिलितानामव्यापकत्वादलक्षणत्वं, तदन्यतमत्वस्य च पारिणामिकभावमादाय धर्मास्ति-

तुष्प्रदेशिकत्वसामान्याऽव्यतिरेकादेकैवानुपूर्वी, एवं यावदनन्तप्रदेशिकत्वसामान्याऽव्यतिरेकात् सर्वेऽपि अनन्तप्रदेशिकास्स्कन्धा एकैवानुपूर्वी प्रोक्ता, अत एव सङ्ग्रहनयस्य सामान्यवादित्वेन सामान्यस्य चैकत्वेन सर्वत्रैकवचनं न बहुवचनम्, तथा च तत्र त्रिप्रदेशिकस्कन्धादीनामनन्तप्रदेशिकस्कन्धपर्यन्तानां देशसङ्ग्रहनयेन विशेषाणां सामान्यरूपेण ग्राहिणा त्रिप्रदेशिकानुपूर्वीत्वाद्यनन्तप्रदेशिकानुपूर्वीत्वसामान्याऽव्यतिरेकात्त्रिप्रदेशिकानुपूर्व्यादिशब्देन ग्रहणस्येव जीवत्वरूपपारिणामिकभावग्राहिदेशसंग्रहेण जीवशब्दवाच्यतादृशभावाव्यतिरेकाज्जीवव्यक्तीनां जीवशब्देन ग्रहणस्याप्युपपत्तिस्स्यादेव, नरकाद्यन्यतमगतिवर्त्तिजीवव्यक्तिर्देशसङ्ग्रहनयेन जीवस्वरूपपारिणामिकभावसामान्याऽभिन्नत्वात् पञ्चस्वपि गतिषु जीवशब्देन प्रतीयते, जीव इति कथ्यत इति, औदयिकक्षायोपशमिकपारिणामिकभावत्रयनिष्पन्न एकस्त्रिसंयोगः षष्ठभङ्गलक्षणः औदयिकौपशमिकक्षायोपशमिकपारिणामिकभावनिष्पन्नश्चतुष्कसंयोगस्तृतीयभङ्गलक्षण एकः, अन्यश्चौदयिकक्षायिकक्षायोपशमिकपारिणामिकभावनिष्पन्नश्चतुर्थभङ्गलक्षण इत्येवं द्वौ चतुष्कसंयोगावित्येते त्रयोऽपि प्रत्येकं चतसृष्वपि गतिषु सम्भवन्तीत्याशयेनाह–**सर्वासु च नरकादिगतिषु अवश्यमौपशमिकादीनां यः कश्चित्सम्भवति भाव इति** । "कयरे से णामे खइएपारिणामिअनिप्फण्णे ? खइअं सम्मत्तं, पारिणामिए जीवे, एस णं से णामे खइअपारिणामिअनिप्फण्णे ।९।" इति वचनाद् दशद्विकसंयोगान्तर्गतनवमभङ्गस्य सिद्धिगतौ सम्भवादाह–**तथापि क्षायिकपारिणामिकौ सम्भवत इति** । अथ मिलितौपशमिकादिपञ्चभावान्वितत्वं जीवस्य लक्षणं क्रियते किं वौपशमिकादिनिखिलभावान्यतमवत्त्वम्, तत्राद्यं चेत्तदा तन्न युक्तम्, "कयरे से नामे उदइए उवसमिए खइए खओवसमिए पारिणामिअनिप्फण्णे ? उदइएत्ति मणुस्से, उवसंता कसाया, खइअं सम्मत्तं, खओवसमिआइं इंदियाइं, परिणामिए जीवे" इत्यनुयोगद्वारसूत्रोक्तपञ्चकसंयोगभङ्गः क्षायिकसम्यग्दृष्टिः सन् य उपशमश्रेणिं प्रतिपद्यते तस्य जीवस्य सम्भवति नान्यस्य, समुदितभावपञ्चकस्यास्य तत्रैव भावादिति तस्मिन् जीवे उक्तलक्षणस्य घटमानत्वेऽपि तदन्यजीवेष्वसम्भवेनाव्याप्तेः, द्वितीयं चेत्तदपि न, तस्य तादृशान्यतमपदग्राह्यं कमपि भावमादाय सर्वजीवेषु घटमानत्वेनोक्ताव्याप्तिनिवारणेऽपि तादृशान्यतमपदग्राह्यं पारिणामिकभावं धर्मास्तिकायत्वाधर्मास्तिकायत्वादिलक्षणमादाय तद्वत्त्वस्य धर्मा-

कायादावतिव्यापकत्वात्, तथापि जीवत्वभव्यत्वाभव्यत्वरूपपरिगणितपारिणामिकभावग्रहणे द्वितीयपक्षे न दोषः । न चैवं जीवत्वं जातिरेवानुगतं लक्षणमस्त्विति शङ्कनीयम् । एकलक्षणस्य लक्षणान्तरानपवादकत्वात्, इतरभेदानुमाने, पक्षतावच्छेदकहेत्वोरभेदेनोक्तजातेरलक्षणत्वात्, सामान्यानभ्युपगन्तृशुद्धपर्यायनयाननुग्रहाच्चेति द्रष्टव्यम् । नोजीव इत्युच्चारिते किं प्रतीयते तैर्नयैः, उच्यते—यदा नोशब्दः सर्वप्रतिषेधे वर्तते, तदा नञ्युक्तमिव युक्तं वेत्यनया कल्पनया वस्त्वन्तरमेव प्रतीयते, नाभावः, तच्चाजीवद्रव्यं पुद्गलादिकमित्यर्थः । यदा तु नोशब्दो देशप्रतिषेधकस्तदा देशस्यानिषिद्धत्वाज्जीवस्य देशश्चतुर्भागादिकः, प्रदेशो वाऽत्यन्ताऽविभजनीय उच्यते नोजीवशब्देनेति टीकाकृतः । अत्र सर्वप्रतिषेधपक्षे वस्त्वन्तरप्रतीतिः, नोशब्दस्यान्योन्याभाववदर्थकत्वं जीवपदार्थस्य चैकदेशेऽप्यन्योन्याभावेऽन्वय इत्यभिप्रायेण जीवपदस्य जीवान्योन्याभाववति लक्षणा नोशब्दस्तात्पर्यग्राहक इत्यभिप्रायेण वा,

स्तिकायादौ सत्त्वादतिव्याप्तेरित्याशयकं यद्यपीत्यादिनोक्त्वा तत्समाधत्ते—**तथापीत्यादिना । द्वितीयपक्षे इति**—तदन्यतमवत्त्वपक्ष इत्यर्थः । तथा चोक्तान्यतमवत्त्वलक्षणघटकपारिणामिकभावे जीवत्वभव्यत्वाभव्यत्वान्यतमात्मकत्वं विशेषणं देयमिति नोक्तदोष इति भावः । **इतरभेदानुमान इति**—इतरभेदानुमापकं लक्षणमिति तस्य फलमितरभेदानुमितिरेवेति जीव इतरभिन्नो जीवत्वादित्यनुमान इत्यर्थः । **पक्षतावच्छेदकहेत्वोरभेदेनेति**—ननु तयोरभेदे को दोष इति चेत्, उच्यते, घटो घट इति वाक्यवदितरभेदव्याप्यजीवत्ववांश्चायं जीव इत्युपनयवाक्याद्विशेष्यतावच्छेदकप्रकारतावच्छेदकयोरभेदे विरूपेणोपस्थितिरूपकारणाभावाद् भेदान्वयबोधानुपपत्तिर्दोषः, ननु विरूपेणोपस्थितेः कारणत्वे किम्मानमिति चेत्, अभेदान्वबोधो विरूपोपस्थितयोरेवेति व्युत्पत्तिरेवेति, तत्रापि किं मानमिति चेत्, उच्यते, तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधम्प्रति तद्धर्मभेदः कारणमिति कार्यकारणभाव एवोक्तव्युत्पत्तौ मानमिति भावः । दूषणान्तरमप्याह—**सामान्यानभ्युपगन्तृशुद्धपर्यायनयाननुग्रहाच्चेति** । नोजीव इत्यत्र नोशब्दस्य सर्वथैव जीवत्वरूपनिषेधार्थितयाऽङ्गीक्रियमाणत्वेन निषेधस्य चात्र पर्युदासरूपस्यैव ग्राह्यत्वेन जीवत्वावच्छिन्नप्रतियोगिताकान्योन्याभाववान् पदार्थत्वेन रूपेण जीवसदृशो योऽजीवस्स एव नोजीवशब्देन प्रतीयत इत्याह—**यदा नोशब्द इत्यादि, नञ्युक्तमिव युक्तमिति**—अनेन पर्युदासात्मकनिषेधोऽत्र ग्राह्य इति सूचितम् । **वस्त्वन्तरं प्रतीयत इति**—नोजीव इति पदजन्यशाब्दबोधे पुद्गलादिद्रव्यं विषयीभवतीत्यर्थः। प्रसज्यप्रतिषेधनिषेधमाह—**नाभाव इति** । देसनिसेहे वि तद्देसो त्ति वचनाद् देशनिषेधस्य देशाऽभ्यनुज्ञानान्तरीयकत्वान्नोजीवशब्दवाच्यो जीवदेशः जीवप्रदेशो वेत्याह—**देशस्याऽनिषिद्धत्वाज्जीवस्येत्यादि** । अत एव "नोजीव इति नोशब्देऽजीवः सर्वनिषेधके । देशप्रदेशौ जीवस्य तदिमान् देशनिषेधके" ॥४३॥ इति नयोपदेशवचनं सङ्गच्छते इति । ननु नोशब्दस्यान्योन्याभाववदर्थकत्वेऽन्योन्याभावस्य नोपदार्थतावच्छेदकत्वात्तत्रापि जीवपदरूपेतरपदार्थान्वयोपगमे पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तिविरोधस्स्यादित्याशङ्कानिरासार्थं पक्षान्तरमाह—**जीवपदस्य जीवान्योन्याभाववति लक्षणेति** । लक्षणा हि यत्र तात्पर्यानुप-

नोशब्दस्यान्योन्याभाव एवार्थः, प्रतियोगित्वमाश्रयत्वं च संसर्गमर्यादालभ्यमित्याभिप्रायेणैव वा, देशप्रतिषेधश्च क्वचिद्देशे सर्वप्रतिषेधः, यथा द्वादशाङ्गं गणिपिटकं नोआगमतो भावश्रुतमित्यत्र चारित्रक्रियाविशिष्टभावश्रुते धर्मीकृते क्रियारूपदेशे सर्वभावश्रुतनिषेधे, अन्यथाऽऽचारे सूत्रकृततादात्म्याभावादाचाराङ्गं नो आगमतो भावश्रुतमित्यस्याप्यापत्तेः, क्वचित्सर्वस्मिन् देशप्रतिषेधो, यथाऽत्रैव विशिष्टे सर्वस्मिन्नागमरूपदेशप्रतिषेधः, नीलविशिष्टघटे पीतनिषेधवत्, अत्र नोशब्दस्यैकदेशाभाववति लक्षणा, एकदेशे चागमस्याभेदेनान्वयः। क्वचिद्देशे सर्वतया निषेधः, यथा जीवस्य जीवे वा प्रदेशो नोजीव इति शब्दनयोदाहरणे एकजीवप्रदेशे धर्मीकृते जीववृत्तियावत्त्वसंख्यापर्याप्त्याश्रयतया, अत्र यावत्त्वपर्याप्त्यनाश्रयत्वं नोशब्दार्थः, यावत्त्वे च जीवपदार्थस्य वृत्तित्वेनान्वयः । क्वचिद्देशे देशस्य प्रतिषेधः । यथा प्रकृतोदाहरणे, अत्र जीवपदस्याधिकृतजीवदेशस्तत्प्रदेशो वा लक्षणयार्थो नोशब्दस्य तदितरदेशनिषेध इति व्यवस्था ज्ञातव्या । अजीव इत्यजीवद्रव्यमेव प्रतीयते पुद्गलादिकम् । नोअजीव इति पुनरभिहिते नोकाराकारयोः सर्वप्रतिषेध-

पत्तिस्तत्रैव, न चात्र सेति जीवपदस्य लक्ष्यार्थपरत्वाभावेन न नोशब्दस्तात्पर्यग्राहकः किन्त्वन्योन्याभावात्मकशक्यार्थ एव, यद्वोक्तपक्षे तात्पर्यग्राहकत्वं नोशब्दस्य निरर्थकत्वकल्पमेव स्यादित्याशयेन तृतीयपक्षमाह—**नोशब्दस्यान्योन्याभाव एवार्थ इति** । शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासत इत्यनुसृत्याह—**प्रतियोगित्वमाश्रयत्वञ्च संसर्गमर्यादालभ्यमिति** । पदार्थद्वयस्य यः संसर्गस्स आकाङ्क्षाभास्य एवेत्याकाङ्क्षाभास्येन प्रतियोगित्वसंसर्गेण जीवपदार्थस्य जीवस्य नोपदार्थेऽन्योन्याभावे तस्य चाश्रयत्वसंसर्गेण जीवद्रव्येऽन्वय इति भावः । देशप्रतिषेध इत्यस्य देशे सर्वस्य प्रतिषेधः, सर्वस्मिन् देशस्य प्रतिषेधः, देशे सर्वतया प्रतिषेधः, देशे देशस्य प्रतिषेध इत्येवं चतुर्भङ्ग्यार्थोऽत्र प्रतिपादनीयः, तत्राद्यभङ्गमाह **देशप्रतिषेधश्च क्वचिद्देशे सर्वप्रतिषेध इत्यादि** । क्रियारूपदेशे इति, द्वादशाङ्गमित्यत्र द्वादशाङ्गपदं चारित्रक्रियाविशिष्टद्वादशाङ्गार्थकं विवक्षितमिति तदेकदेशे चारित्रक्रियारूपे श्रुतभिन्नत्वेनानागमात्मके इत्यर्थः । तथाऽनभ्युपगमेऽतिप्रसङ्गमाह—**अन्यथेति**—देशे देशप्रतिषेधाभ्युपगमे इत्यर्थः । सदृष्टान्तं द्वितीयभङ्गमाह **क्वचित्सर्वस्मिन्निति** । तृतीयभङ्गं दृष्टान्तोपेतं विवृणोति **क्वचिद्देशे सर्वतया निषेध इति** । **जीववृत्तियावत्त्वसङ्ख्यापर्याप्त्याश्रयतेति**—अस्य निषेध इत्यनेनान्वयः कर्तव्य इति । दृष्टान्तान्वितं चतुर्थभङ्गं निरूपयति—**क्वचिद्देशे देशस्य प्रतिषेध इति** । अघटमानयेत्यत्र विभक्त्यर्थस्य प्रकारतया भानपक्षे यथाऽलुप्तनञ्पदस्थानीयाकारपदवाच्यः प्रसज्यारूपोऽत्यन्तानिषेधो न, तस्यानयनकर्मत्वेऽन्वयाऽयोगात् किन्तु पर्युदासारूपसर्वानिषेध आश्रीयते तथाऽजीव इत्यत्रापि लुप्तनञ्पदस्थानीयाकारपदवाच्यः स एव निषेध आश्रित इत्यघटपदेन यथा घटभिन्नघटसदृशपटादिकं प्रतीयते तथाऽजीवपदेन जीवभिन्नजीवसदृशं पुद्गलादिकमजीवद्रव्यमेव प्रतीयते, अत एव

" नञि सर्वनिषेधार्थे पर्युदासे च संश्रिते । —मजीव इति संज्ञितम् ॥ ४२ ॥ "

इति नयोपदेशवचनं सङ्गच्छते ।

प्रतीयते

वृत्तौ द्वयोः प्रतिषेधयोः प्रकृतिगमकत्वाज्जीवः प्रतीयते । नोनञोर्देशसर्वनिषेधवृत्तौ जीवस्यैव (अजीवस्यैव) देशप्रदेशौ । अत्र वैयाकरणैकदेशिनः प्रेरयन्ति । नन्वजीव इत्यत्र नञः सर्वनिषेधो नार्थः, एवं सति नञ्समासे उत्तरपदार्थप्राधान्येनातिसर्वे इत्यादाविवातस्मिन्नित्यादौ सर्वनामकार्यानापत्तेः, अभावविषयकबोधे हि घटो नास्तीत्यादावभावस्यैव विशेष्यतादर्शनेनातस्मिन्नित्यादौ तदर्थे तस्य विशेषणतया गौणत्वं सर्वनामकार्यं कथं न बाधेत । तस्मादब्राह्मण इत्यादावपि आरोपितत्वं नञर्थः, आरोपमात्रं वार्थः, विषयत्वं तु संसर्गः, ब्राह्मणारोपविषये ब्राह्मणपदस्यैव वा लक्षणा, नञ्पदं तात्पर्यग्राहकम् । अत एव तस्य द्योतकत्वम्,

पुद्गलादिकमिति । प्रकृतिगमकत्वादिति—द्वौ नञौ प्रकृतमर्थं गमयत इति वचनात्प्रकृतार्थप्रतिपादकत्वादित्यर्थः । जीवः प्रतीयत इति—नो अब्राह्मणा आयाता नो असाधव आयाता इत्यत्र ब्राह्मणा आयाता इति साधव आयाता इति च प्रतीयते तद्वन्नोअजीव इत्यत्रापि नोशब्दस्य लुप्तनञ्पदस्थानीयाकारवत् सर्वनिषेधार्थत्वे जीवः प्रतीयत इति भावः । अ मा नो ना प्रतिषेधे इत्यनुशासनतोऽर्थेऽपि समयपरिभाषया नोशब्दस्य देशनिषेधार्थत्वे लुप्तनञ्पदस्थानीयाकारस्य पर्युदासान्यसर्वनिषेधार्थत्वे चाजीवपदबोध्यस्य जीवभिन्नजीवसदृशाजीवस्यैकदेशः प्रदेशो वा नोअजीवपदेन प्रतीयत इत्याह—नोनञोर्देशसर्वनिषेधवृत्तावजीवस्यैव देशप्रदेशाविति—नोशब्दस्य देशप्रतिषेधवृत्तौ नञश्च सर्वप्रतिषेधवृत्तावजीवस्यैव देशप्रदेशौ गम्येते इत्यर्थः । अत्र जीवस्यैव देशप्रदेशाविति मुद्रितपाठोऽशुद्धः प्रतिभासते । अत एव "जीवो वाऽजीवदेशो वा, प्रदेशो वाप्यजीवगः । अनयैव दिशा ज्ञेयो, नो अजीवपदादपि" ॥ ४४ ॥ इति नयोपदेशेऽप्युक्तं सङ्गच्छते । इत्युक्तं नयोपदेशे । आरोपितः सर्व इत्यर्थकः असर्व इत्याद्यनुरोधेनारोपितार्थकत्वमपि नञोऽङ्गीकरणीयमित्यभ्युपगमे सर्वनाम्ना तच्छब्दादिना सह नञ्समासे उत्तरपदात्मकतच्छब्दार्थस्य प्राधान्यात् सर्वनामसंज्ञा सिद्ध्यति, असर्व इत्यत्रातस्मिन्नित्यत्र च नञो भेदार्थकत्वे तु तत्र प्रतियोगितयाऽन्वितस्य सर्वपदार्थस्य तत्पदार्थस्य चोपसर्जनत्वेन संज्ञोपसर्जनानां सर्वादिबहिर्भूतत्वेनातिसर्व इत्यादाविव सा न स्यात्, तथा चाऽसर्वस्मै इति अतस्मै इति च प्रयोगानुपपत्तिरस्यादित्याशयेनाह एवं सतीत्यादि । नञः सर्वनिषेधार्थकत्वे सति नञ्समासे पूर्वपदार्थस्यैव प्राधान्येन "अतिसर्वः" इत्यत्र सर्वमतिक्रान्त इत्यर्थकेऽतिपदार्थप्रधानके यथा न सर्वनामसंज्ञा तथा "अतस्मिन्" इत्यादौ तन्निषेधार्थके निषेधरूपपूर्वपदार्थप्रधानतया सर्वनामसंज्ञा न स्यात्, तथा च सर्वनामकार्यं न भवेदिति भावः । नन्वसर्व इत्यत्र भेदप्रतियोगी सर्व इति "अतस्मिन्" इत्यत्र च भेदप्रतियोगिनि तस्मिन्निति च बोधाभ्युपगमान्नोत्तरपदार्थस्य सर्वस्य तत्पदार्थस्य च प्राधान्यक्षतिरिति सर्वनामसंज्ञा स्यादेवेत्यत आह—अभावविषयकबोध इत्यादि । विशेष्यतादर्शनेनेति—नञर्थाभावस्य विशेष्यतायां तन्त्रत्वादिति भावः । तदर्थे—नञर्थे । तस्य—तच्छब्दार्थस्य । कथं न बाधेतेति—तथा चाऽतस्मै इति प्रयोगानुपपत्तिस्स्यादिति भावः । विषयत्वस्य संसर्गमर्यादयैव लाभादनन्यलभ्याऽऽरोपस्यैव नञर्थत्वं, न त्वारोपविषयत्वार्थकारोपितत्वस्य, गौरवादित्याशयेन पक्षान्तरमाह आरोपमात्रं वार्थ इति । अत एव

गौणत्वेऽपि नञ्समासे "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" इति ज्ञापकात् सर्वनामसंज्ञानुपपत्त्यभावात्, असः शिव इत्यत्र सुलोपवारणायानञ्समास इति विशेषणम्, नञ्समासे च तच्छब्दस्य सर्वनामता गौणत्वाद् दुर्वचा, अकोरित्यकच्सहितव्याप्त्या च सर्वनाम्नोरेव तत्र ग्रहणलाभ इत्यनञ्समास इति ज्ञापकमेव, नञ्समासप्रयुक्तगौणत्वं सर्वनामसंज्ञां नापवदतीत्याचष्टे । न चेद्गौण इत्यत्र च नञ्समासप्रयुक्तगौणत्वातिरिक्तगौणत्वाभाववत्त्वं चेदित्ययमेवार्थः कर्तव्यः । अनेकमन्यपदार्थे इत्यादावेकवचनं विशेष्यानुरोधात्,

व्याद्विबोधनाय यद्ब्राह्मणादिपदोपादानं तत्सादृश्यादिना बोधनार्थमित्यूहमूलकक्षत्रियादिबोधस्य तद्वयतिरेकी ब्राह्मण इत्यादिशक्यार्थबोधोत्तरमेव सम्भवादिति भावः । ननु वैयाकरणमते "अतः" इत्यत्रोत्तरपदार्थस्य प्राधान्येन तच्छब्दस्य सर्वनामत्वेन तत्कार्यं स्यादेव, नैयायिकमते तु तत्र नञर्थेऽप्रधाने तच्छब्दार्थस्यान्वयेन गौणत्वापत्त्या तत्पदादेः "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" इति भाष्यवचनेन सर्वादित्वाभावात् "सर्वादीनि सर्वनामानि" इति सूत्रेण सर्वनामसंज्ञा न स्यात्, तथात्वाभ्युपगमे चातदिति रूपं स्यात्, न त्यस इति, "त्यदादीनामः" इत्यस्य सूत्रस्याऽप्रवृत्तेः, यत्र हि सर्वनामत्वं तत्रैव तस्य प्रवृत्तिरित्यत आह–गौणत्वेऽपीति–नञ्समासघटकैतदाद्यर्थस्य नञर्थविशेषणत्वेऽपीत्यर्थः । ज्ञापकादिति–तत्सूत्रस्याऽनञ्समासग्रहणाज्ज्ञापकादित्यर्थः, गौणत्वेऽपि 'असः शिवः' इत्यादौ सर्वनामसंज्ञाप्रवृत्तौ ज्ञापकतामेव सूचयति असः शिव इत्यत्रेति "एतत्तदोः" पा० सू० ३६–१–३२ । इत्यनेन परस्परसाहचर्यात् सर्वनामैतत्तद्भ्यां परस्य सोर्हलि लोपो विधीयते । नञ्तत्पुरुषान्तर्गततत्तदोरुपसर्जनतया सर्वनामत्वाभावादेवानतिप्रसङ्गे व्यर्थं सदनञ्समासग्रहणं नञ्समासे गुणीभूतस्यापि सर्वादेः सर्वनामताज्ञापनेन चरितार्थमिति भावः । साहचर्यज्ञापकत्वस्याऽसार्वत्रिकत्वं सूचयन् सूत्रे सर्वनाम्नोरेव ग्रहणे मानान्तरमाह–अकोरिति । एतत्तदोरित्यादिसूत्रे अकोरित्यनेनाकच्सहितव्यावृत्त्या तत्सदृशसर्वनाम्नोरेव ग्रहणात् नञ्समासस्थले च सर्वनामत्वाभाववत् सुलोपाऽप्राप्तेरनञ्समासग्रहणं व्यर्थं सज्ज्ञापकमेव । अयम्भावः–"एतत्तदोरित्यादिसूत्रम्, अकच्विशिष्टभिन्नैतत्तच्छब्दिनः सोर्लोपं शास्ति । अकच् तु "अव्ययसर्वनाम्नामकच् प्राक् टेः" इति सूत्रेण सर्वनाम्न एव भवति, तद्विशिष्टभिन्नैतत्तच्छब्दोऽपि "नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" इति न्यायात् सर्वनाम एवेति अस इत्यत्र सुलोपो न स्यात्, तच्छब्दस्योपसर्जनत्वेनासर्वनामत्वात्, एवञ्चानञ्समासग्रहणं व्यर्थीभूय नञ्समासप्रयुक्तगौणत्वं सर्वनामसंज्ञां नापवदतीति ज्ञापयति, तथा च "त्यदादीनामः" इति सूत्रेण 'असः' इत्येव प्रयोगस्स्यात् न त्वतदिति । अनेकमित्यत्र नञर्थस्य प्राधान्ये स्वीक्रियमाणे एकभिन्नस्य तस्य द्वित्वबहुत्वान्वययोग्यत्वाद् द्विवचनबहुवचनयोरापत्तिः, एकत्वार्थस्य तत्र बाधात्तद्बोधकैकवचनस्यानुपपत्तिश्चेत्यत आह अनेकमन्यपदार्थे इति, अस्य सूत्रस्यानेकं प्रथमान्तमन्यपदार्थे वर्तमानं समस्यते स बहुव्रीहिरित्यर्थः । विशेष्यानुरोधादिति–असति विशेषानुशासने विशेषणवाचकपदस्य विशेष्यवाचकपदसमानवचनकत्वनियमात्, तथा चात्र सुबाऽऽमन्त्रिते पराङ्गवत्स्वरे ॥ पा०

" सुबामंत्रिते पराङ्गवत् स्वरे " इत्यतोऽनुवर्तमानं सुब्ग्रहणं विशेष्यमेकवचनान्तमेवेति जात्यभिप्रायं वा तत् , सेव्यतेऽनेकया सन्नतापांगयेत्यत्रापि योषयेति विशेष्यानुरोधात् प्रत्येकसेवनान्वयबोधनाय वैकवचनम् । न तूत्तरपदार्थप्राधान्यप्रयुक्तम् । अत एव पतन्त्यनेके जलधेरिवोर्मय इत्यादिकमपि सूपपादम् । अत्वं भवसि अनहं भवामीत्यादौ पुरुषवचनादिव्यवस्था च त्वमहमसि अहं त्वमस्मीत्यादाविवोपचारे

सू० २ । १ । २ । इति सूत्रादनुवर्तमानं सुब्पदं विशेष्यवाचकमेकवचनान्तमित्यनेकमित्यत्रापि तदनुरोधेनैकवचनमिति भावः । तद्विति एकवचनमित्यर्थः । अनेकशब्दाद् द्विवचनोपादाने बहूनां बहुवचनोपादाने द्वयोर्बहुव्रीहिर्न सिद्ध्येदित्युभयसंग्रहायैकवचनं जात्यर्थकमिति भावः। यदि त्वनेकशब्दोपादानादेव द्वयोः पदयोः बहूनां वा पदानां बहुव्रीहिसमाससिद्धौ द्विवचनबहुवचनयोरपि समयपरिपालनार्थत्वसंभवात् एकवचनं व्यर्थमेवेति विभाव्यते तदा " एकवचनमुत्सर्गतः करिष्यते " इति भाष्यसिद्धान्तात् औत्सर्गिकमेव एकवचनमिति बोद्धव्यम् । सति तात्पर्ये क्वचित्सार्थकमप्येकवचनमिष्यत एवेत्याह—प्रत्येकेत्यादि । एकभिन्नत्वेनोपस्थितासु योषासु प्रत्येकं सेवनान्वयबोधायेत्यर्थः । उपसंहरति—न त्विति । अनेकमित्यत्रानेकयेत्यत्र चैकपदरूपोत्तरपदवाच्यस्य यत्प्राधान्यं तत्प्रयुक्तं प्रधानीभूतस्य तस्यैकत्वादेकवचनं वैयाकरणैरभ्युपगतं, तन्नत्वास्थेयम्, तस्यान्यथासिद्धत्वादिति भावः । अत एवेति—अनेकशब्दस्यैकभिन्नार्थकत्वादेवेत्यर्थः, अनेकशब्दवाच्यानामेकप्रतियोगिकभेदवतां बहुत्वाद् बहुवचनमिति भावः । सूपपादमिति—भेदप्रतियोग्येकार्थत्वे तु तद् दुरुपपादं स्यात् । भेदप्रतियोग्येकरूपार्थस्याऽभेदसम्बन्धेन बहुत्वविशिष्टे ऊर्मिपदार्थेऽन्वयासम्भवादिति भावः, नन्वेकश्च, एकश्च, एकश्चेति एके, न एके अनेके इत्येवं पूर्वमेकशब्दस्य एकशेषं कृत्वा पश्चात् नञ्समासे कृते अनेके इत्यस्य भेदप्रतियोग्येकार्थकत्वस्वीकारेऽपि उभय इत्यनेन अन्वयबोधे नानुपपत्तिः एकशब्दस्यैकशिष्टतया नानार्थबोधकत्वादिति तु न वाच्यम् एकशेषेण समर्थनस्य अगतिकगतित्वात् । अत्र तु नैयायिकाद्यनुसारेण लक्षणाया वैयाकरणमतेन त्वप्रसिद्धात्मकशक्तिरूपाया गतेः सत्त्वात् । ननु वैयाकरणमते समासे नञर्थस्य विशेषणत्वपक्षे अत्वं भवसीत्यादौ भेदप्रतियोगित्वदभिन्नाश्रयिका भवनक्रियेत्येवमन्वयेन तिङो युष्मत्सामानाधिकरण्यान्मध्यमपुरुषत्वम्, अनहं भवामीत्यादौ च भेदप्रतियोगिमदभिन्नाऽऽश्रयिका भवनक्रियेत्येवमन्वयेन तिङोऽस्मत्सामानाधिकरण्यादुत्तमपुरुषत्वमिति पुरुषव्यवस्थातोऽत्वं भवसीति मध्यमपुरुषप्रयोग एव, अनहं भवामीत्युत्तमपुरुषप्रयोग एव समुचितः, निषेधार्थप्राधान्ये तु त्वद्भिन्नाश्रयिका भवनक्रिया, मद्भिन्नाश्रयिका भवनक्रिया, इत्येवमन्वयबोधेन अत्वं भवति अनहं भवतीत्येवं प्रथमपुरुषप्रयोग एवमापाद्येतेत्यत आह—अत्वं भवसीति—उपचारस्थले मुख्यस्य प्राधान्यं न हीयत इति य एव युष्मदर्थस्स एव युष्मद्भिन्नत्वेनोपचरितः, अस्मदर्थ एव च मद्भिन्नत्वेनोपचरित इत्यत्वमित्यस्य त्वद्भिन्नार्थकत्वेऽपि युष्मदर्थप्राधान्यापरित्यागादत्वं भवसीति मध्यमपुरुषप्रयोगः, अनहमित्यस्य मद्भिन्नार्थकत्वेऽप्यस्मदर्थ-

एवं त्वं न पचसीत्यत्र त्वदभिन्नाश्रयकपाकानुकूलभावनाभावः घटो नास्तीत्यत्र घटाभिन्नाश्रयकास्तित्वाभाव इति रीत्या बोधः। असमस्तनञः क्रियायामेवान्वयात्। स चाभावोऽत्यन्ताभावत्वान्योन्याभावत्वरूपेण शक्यः, तत्तद्रूपेण बोधादिति शब्दविदः। तत्र त्वं पाकानुकूलयत्नाभाववान्, घटोऽस्तित्वाश्रयत्वाभाववानित्येवमेव बोधः, प्रतियोग्यभावान्वययोस्तुल्ययोगक्षेमत्वात्प्रतियोगिनश्चाख्यातार्थस्य प्रथमान्तपदार्थ एवान्वयादिति तु न्यायविदः। एतन्मतमेव युक्तं न पूर्वमतम्। घटो न पचति अतीतघटो नास्तीत्यादौ घटाभिन्नाश्रयकपाकानुकूलभावनाया अतीतघटभिन्नाश्रयकास्तित्वस्य च निषेध्यस्याप्रतीतेः, अभावविशेष्यकबोधे क्वेत्याकाङ्क्षानुपरमाच्च। अन्ध आकाशं न पश्यतीत्यत्र चाकाशकर्मकत्वाभाववद्दर्शनाश्रयत्वाभाववानन्ध इत्येव बोधो नञो द्वेधान्वयादित्यादिकं भावनीयम्। तस्मात्सुष्ठूक्तं अजीव इत्यत्र नञः सर्वनिषेधोऽर्थ इति। नोशब्दस्य तु न नञ् समानशीलत्वं परिभाषानुरोधेन देशसर्वनिषेधयोः प्रवृत्तिदर्शनादिति किमतिप्रसङ्गेन॥ प्रकृतं प्रस्तुमः, एवं तावन्नैगमादयश्चतुर्षु जीव इत्यादिषु विकल्पेषु प्रवृत्ता, एवंभूतस्तु नैवं

इत्यर्थः॥ तथा चोत्तरपदार्थनिष्ठविशेषणतानिरूपितविशेष्यतयाऽभावान्वयपक्ष एव श्रेयानिति भावः। प्रसज्यप्रतिषेधार्थकनञो व्यवस्थामाह एवं त्वमित्यादि। नञर्थे युष्मदर्थान्वये तु प्रकृते पुरुषव्यवस्था न सिद्ध्येदिति सूचयितुं पचसीति मध्यमपुरुषनिर्देश इति। क्रियाप्रतियोगिकाभावविशेष्यकबोधे हेतुमाह—असमस्तनञ इति—एवं त्वमित्यादिना व्याकरणमतमुपदर्श्य न्यायमतमाह—तत्रेत्यादि। नञाऽघटितवाक्यार्थे यस्य विशेष्यत्वं नञ्घटितवाक्यार्थेऽपि तस्य विशेष्यत्वमित्यभिप्रेत्याह—प्रतियोग्यभावान्वययोरिति। तथा च त्वं पचसीति नञाऽघटिते वाक्ये पचसीत्याख्यातार्थस्य पाकानुकूलकृतिरूपस्य प्रथमान्तत्वंपदार्थे विशेष्येऽन्वयात्प्रकारत्वमिति त्वं न पचसीति नञ्घटितवाक्येऽपि पाकानुकूलकृतिरूपस्याख्यातार्थस्य प्रतियोगितासंसर्गेण नञर्थेऽभावेऽन्वयः, तस्य च प्रथमान्तत्वंपदार्थे विशेष्येऽन्वयात्प्रकारत्वमेवेति भावः। अप्रतीतेरिति—तथा चालीकप्रतियोगिकनिषेधाऽयोगात्तन्निषेधबोधो न स्यादिति भावः। अभावविशेष्यकबोधे क्वेत्याकाङ्क्षाऽनुपरमाच्चेति—सोऽभावः कुत्र वर्त्तत इत्याकाङ्क्षाऽनुपरमाच्चेत्यर्थः। नैगमनये न हि व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तम्, तथा सति गच्छतीति गौरिति व्युत्पत्तिनिमित्तगमनक्रियाकर्त्तरि महिषेऽपि गोव्यवहारस्स्यात्, किन्तु ततो भिन्नमेव तदिति जीवति—दशविधप्राणान् धारयतीति जीव इति व्युत्पत्तिनिमित्तदशविधप्राणधारणक्रियायाः सिद्धजीवेऽभावेऽपि जीवपदशक्यतावच्छेदकजीवत्वजातेस्तत्रापि सद्भावेन सिद्धोऽपि तन्मते जीव एव, एवम्भूतनयस्तु व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तमभ्युपगच्छतीति जीवति यथायोगं दशविधप्राणधारणमनुभवतीति जीवः, स च संसार्येव, न तु सिद्धः, जीवनपरिणामरहितत्वेन जीवशब्दार्थाऽघटनादिति स आयुष्मान् प्राणीत्यादिवज्जीव इत्यपि न व्यपदिश्यते, किं तर्हि, सत्तायोगात् सत्त्वः, अतति तांस्तान् ज्ञानदर्शनसुखादिपर्यायान् गच्छतीत्यात्मा इत्यादिशब्दैरेव निर्दिश्यते, उक्तञ्च विशेषावश्यकभाष्ये—"एवं जीवं जीवो, संसारी पाणधारणाणुभवो। सिद्धो पुणरजीवो जीवपरिणामरहिओत्ति ॥२२५६॥" २९ ।२। —एवम्भूतस्तु नैवं

प्रतिपद्यते। कथमिति चेत्, उच्यते–एवंभूतनयेनेत्यादि । एवंभूतनयेन जीव इत्युच्चारिते, भवस्थः संसारी, जीवः प्रतीयते । कथं सिद्धस्त्यज्यत इत्याह–हि यस्मात्, एष एवंभूतनयो, जीवं प्रति औदयिकभावस्यैव गतिकषायादिस्वभावस्य ग्राहकः । गतिकषायाद्यौदयिकभावयुक्तमेव जीवमसाविच्छति, यतः शब्दार्थ एवं व्यवस्थितो, जीवतीति जीवः । किमुक्तं भवति । प्राणितीति धातोः सकर्तृकत्वं स्पष्टयति । प्राणा इन्द्रियाणि पञ्च मनोवाक्कायास्त्रयः प्राणापानावेक आयुश्चेति दश, तान् धारयति यथायोगं न मुञ्चति यावत्तावदसौ जीव इति मन्तव्यः । त(च्च)तु जीवनं प्राणधारणलक्षणं सिद्धे न विद्यते । तस्माद्भवस्थ एव जीवो न सिद्ध इति । नोजीव इत्युच्चारिते नोशब्दः एतन्मते सर्वप्रतिषेधक एव, नञ्समानशीलत्वात्, न देशनिषेधकः, देशस्यैवाभावात्, देश्येव हि देशो न वस्त्वन्तरम्, न च देशिनो देशो भिन्न इत्यभिधातुं युक्तम्, यदि भिन्नः स्यात्, नासौ तस्य, भिन्नत्वादेव, वस्त्वन्तरवत्, अथाभिन्नो, देश्येव तर्ह्यस्ति न कश्चिद्देशो नामेति । न च वृक्षे कपिसंयोगतदभावावच्छेदकतया देशसिद्धिः, परमाणौ निरंशे षड्दिक्संयोगानामिवावच्छेदककल्पनामात्रेण वस्त्वसिद्धेः, अकल्पितस्य च देशिनः कल्पितेन देशेन न तादात्म्यम् प्रतियोग्यभावयोरिवेति, न नोशब्देन देशनिषेधविधी, तस्मान्नोजीव इत्युक्तेऽजीवद्रव्यं परमाण्वादि, सिद्धो वा प्राणधारणाभावात् प्रतीयते । अजीव इति तूच्चारितेऽजीवद्रव्यमेव परमाण्वादिकं प्रतीयते, नञः सर्वनिषेधकत्वात् । नो अजीव इत्युक्ते द्वौ प्रतिषेधौ प्रकृतिं गमयत इति भवस्थः

प्रतिपद्यत इति। तत्तु जीवनं प्राणधारणलक्षणं सिद्धे न विद्यत इति। उक्तश्च भगवत्यङ्गेऽपि–"जीवइ भंते! जीवे, जीवे जीवइ? गोयमा! जीवइ ताव नियमा जीवे, जीवे पुण सिय जीवइ, सिय नो जीवइ" इति। अस्यायमर्थः 'जीवइ' शब्देन दशविधप्राणलक्षणं जीवनं जीवितव्यमुच्यते, तत्र जीवनं यावत्तावद् नियमाज्जीवः, अजीवे तस्य सर्वथाऽसम्भवात्, जीवः पुनः स्याज्जीवति स्यान्न जीवति सिद्धजीवस्योक्तलक्षणजीवनाऽसम्भवादिति । एतेन "तिकाले च दु पाणा इंदियबलमाउ आणपाणा य । ववहारो सो जीवो निच्छयदो दु चेदणा जस्स" इति बृहद्द्रव्यसङ्ग्रहोक्तं निश्चयनयापेक्षया सिद्ध एव जीव इति मतमपि निरस्तम्, एवम्भूतनयस्यैव शुद्धनिश्चयनयरूपत्वेन तन्नयापेक्षया सिद्धो न जीव इत्येव सिद्धेः, औदयिकभावातीतत्वात्सिद्धस्य, गतिकषायाद्यौदयिकभावयुक्तस्यैव च तन्मते जीवत्वाभ्युपगमात् । उक्तञ्च नयोपदेशे " भावमौदयिकं गृह्णन्, एवम्भूतो भवस्थितम् । जीवं प्रवक्त्यजीवं तु, सिद्धं वा पुद्गलादिकम् ॥४९॥ सिद्धो निश्चयतो जीव, इत्युक्तं यद्दिगम्बरैः । निराकृतं तदेतेन, तन्नयेऽत्येऽन्यथा प्रथा ॥ ४८ ॥ " इति । ननु " जीवा मुत्ता संसारिणो य " इति वचनाज्जीवानां भेदद्वयकथनाच्चैतन्यलक्षणभावप्राणधारणात्सिद्धोऽपि जीव इति भवच्छास्त्रेऽपि श्रूयते, तत्कथमिति चेत्, तद् विचित्रनैगमनयाभिप्रायेणेति जानीहि । उक्तञ्च नयोपदेशे–"यज्जीवत्वं क्वचिद् द्रव्यभावप्राणान्वयात्स्मृतम् । विचित्रनैगमाकूतात् तज्ज्ञेयं न तु निश्चयात् ॥५०॥" इति । अधिकं नयोपदेशवृत्तितोऽवसेयमिति । कयोरिव न तादात्म्यमित्याशङ्कायामाह प्रतियोग्यभावयोरिवेति–विरुद्धस्वभावयोः प्रतियोग्यभावयोरिवेत्यर्थः ।

संसार्येव जीवो गम्यते । कस्मादनेन नोशब्दाद्देशप्रदेशौ न बोध्येते । तत्राह—समग्रार्थेत्यादि । भावितप्रायमेतत् । एवं तावच्चत्वारो विकल्पा एकवचनेन दर्शिताः, तद्वद्द्विवचनबहुवचनाभ्यामपि जीवौ नोजीवौ, अजीवौ नो अजीवौ जीवा नोजीवा अजीवा नोअजीवा इत्येवं चत्वारश्चत्वारो द्रष्टव्याः । तदाह—एवं जीवौ जीवा इति । इतिशब्द आद्यर्थे, द्वित्वबहुत्वाकारितेषु द्विवचनबहुवचनाभ्यामुच्चारितेषु, एवमेवाभ्युपगमो नैगमादीनाम् । अथ संग्रहस्य का वार्तेत्याह—सर्वसंग्रहेणेत्यादि । **सर्वसंग्रहेण** सामान्यवस्तुग्राहिणा एकवचनद्विवचनान्ता विकल्पा नाभ्युपगम्यन्ते । तांश्च विकल्पान् दर्शयति—**जीवो नोजीव** इत्यादि । **एकद्वित्वाकारितेषु** एकद्विवचनान्तेषूच्चारितेषु, **शून्यं** भवति, एकद्विवचनान्तपदमबोधकमिति व्युत्पत्तिमतस्ततो बोधो न भवतीत्यर्थः । हेतुमाह—एष हीति । एष संग्रहो, **यस्मात्संख्याया** जीवगताया आनन्त्यं प्रतिपद्यते, पञ्चगतिवर्तिनां तेषां बहुत्वात् । **यथार्थग्राही** चायमिति बहून् बहुत्वेनैव गृह्णाति । ततो जीवा नोजीवा, अजीवा नोअजीवा इत्ययमेवास्याभिलापः कार्यः । उदाहरणान्यपि च बहुत्वेनैव वाच्यानि । **शेषास्तु** नैगमादयो **नयाः, एकस्मिन्** जीवशब्दार्थेऽभिधेये, व्यक्त्येकत्वादेवैकवचनं, जीवसामान्येऽप्यभिधेये सामान्यैकत्वादेकवचनप्राप्तौ "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इति लक्षणेन **जात्यपेक्षं** सामान्यविषयापेक्षं **बहुवचनं बहुषु** जीवेष्वभिधेयेषु व्यक्तिबहुत्वादेव **बहुवचनमिच्छन्ति** । यतस्तत इति शेषः । **सर्वाकारितग्राहिण** एकवचनादिभिराकारितान् द्वादशापि विकल्पान् गृह्णन्तीत्येवंशीला भवन्ति । ननु सर्वसंग्रहो बहुवचनमेव सहत इति यदुक्तं तत्कथं युक्तम्, तस्य सामान्यविषयत्वेनैकवचनसहिष्णुताया एव युक्तत्वात्, पाक्षिकबहुवचनप्राप्तेरपि जात्याख्यायामिति समाख्यानुरोधेन सामान्यरूपेण व्यक्त्यभिधानस्थले नैगमादिभिरेव चरितार्थीकर्तुं शक्यत्वात् ।

**समग्रार्थेत्यादीति—समग्रो देशप्रदेशकल्पनारहितो निरवयव एकाभिधानाभिधेयो यः प्रतिपूर्णोऽर्थोऽखण्डवस्तु, न तु सांशं, तन्मते वास्तविकदेशदेशिनोरभावेनांशांशिभावाभावात् स समग्रार्थः, तं ग्रहीतुं शीलमस्य स समग्रार्थग्राही तस्य भावस्तत्त्वं तस्मादित्यर्थः । उक्तश्चानुयोगद्वारे "एवं वयंतं समभिरूढं संपइ एवंभूओ भणइ जं जं भणसि तं तं सव्वं कसिणं पडिपुण्णं निरवसेसं एगगहणगहियं देसे वि मे अवत्थू पएसेऽवि मे अवत्थू" इति । जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामिति १–२–५८ । जातिवाचिनि शब्दे एकव्यक्तावपि विकल्पेन बहुवचनं भवतीत्यर्थः । जात्यपेक्षमित्यस्यार्थमाह—सामान्यविषयापेक्षमिति । तत्किमित्यत आह बहुवचनमिति । अत एवैकस्मिन्नपि साधौ साधवः पूज्याः साधुः पूज्य इति विकल्पेन प्रयोगो भवतीति भावः । जीवशब्दस्य यदि बहवो जीवा वाच्या इति विवक्षा तदा नोक्तसूत्रेण बहुवचनं किन्तु "बहुषु चैव बहुवचनम्" इति सूत्रेणेत्याशयेनाह—बहुषु जीवेष्विति । सामान्यरूपेण व्यक्त्यभिधानस्थले इति विशेषरूपेणाविवक्षितव्यक्त्यभिधानस्थल इत्यर्थः । चरितार्थीकर्तुं शक्यत्वादिति—उक्तसूत्रानुरोधेन सामान्यरूपेणैव**

संपन्नो व्रीहिः, संपन्ना व्रीहय इत्युदाहरणयोरन्मत एवोपदर्शयितुं शक्यत्वात् । अत एव संख्यावाचकपदोपसंदानमेकतरनयविनिगमकत्वात्तदपवादकम् । तथा चानुस्मृतं श्रीहेमसूरिभिः, "जात्याख्याया नवैकोऽसंख्येयो(ऽसङ्ख्यो)बहुवत्" इति, उदाहृतं च द्व्याश्रयमहाकाव्ये "दूरे राज्ञोऽपतन् सूता विप्रः सर्वोऽन्तिकेऽवदत् । अन्तिकाद् गुरुराशास्त गायनाश्चान्तिकं जगुः ॥ १ ॥" इति । अत्र सूतगायनानां सामान्यरूपेणाभिधाने बहुवचनं विप्रगुर्वोश्चैकवचनमिति सामान्यस्य प्राधान्येनाभिधाने त्वेकवचनमेव समयसिद्धम् ।

भिधानस्थले व्यक्तेरेकत्वं बहुत्वञ्चैकव्यक्तिं बहुव्यक्तीश्चादाय सम्भवतीति तथाऽभ्युपगमपरो नैगमादिरेव, न तु सङ्ग्रहः, तस्य सामान्यस्वरूपमात्राभ्युपगमपरत्वेन व्यक्तिगतैकत्वबहुत्वाभ्युपगन्तृत्वाभावात् । तथा च तत्र नैगमादिभिरेव बहुवचनं चरितार्थयितुं शक्यम्, यतस्तद्वाच्यस्य बहुत्वस्य तत्र सद्भावात्, यत्र तु व्यक्तिगतसङ्ख्याया विवक्षा तत्रैकत्वसङ्ख्या विवक्षितैकवचनेनैवाभिधातुं शक्या, बहुत्वसङ्ख्या विवक्षिता बहुवचनेनैवाभिधातुं शक्येति न तत्र वैकल्पिकैकवचनबहुवचनप्रतिपादकोक्तसूत्रप्रवृत्तिरित्यर्थज्ञापनाय सामान्यरूपेण व्यक्त्यभिधानस्थले इत्युक्तम् । नैगमादिनयमतमाश्रित्य सामान्यरूपेण व्यक्त्यभिधानस्थलीयदृष्टान्तद्वयमाह—सम्पन्नो व्रीहिः सम्पन्ना व्रीहय इति—"जात्याख्यायां नवैकोऽसङ्ख्यो बहुवत्" २-२-१२१ इति हैमसूत्रेणोभयत्र जातिवाचिनि व्रीहिशब्दे एकवचनं बहुवचनं च विकल्पेन भवतीत्यर्थः । तन्मते—नैगमादिमते । नैगमनयेन व्रीहित्वजातेस्सकलव्रीहिगतया एकत्वेनाभ्युपगमात्तदपेक्षमेकवचनं, व्रीहिव्यक्तयो बह्व्योऽप्यभ्युपगता इति तदपेक्षं बहुवचनं । सङ्ग्रहनयस्तु सामान्यमात्राभ्युपगमपर इति व्यक्तीनां सामान्यरूपेणैकत्वस्यैवाभ्युपगन्तेति तन्मते नैवं बहुवचनं परमार्थवृत्त्या युक्तमिति भावः । अत एवेति उक्ताभिप्रायादेवेत्यर्थः । सङ्ख्यावाचकपदोपसन्दानमिति सङ्ख्यावाचकपदसमभिव्याहारस्थलीयैकवचनबहुवचनयोर्येन नैगमादिनयेन तद्वाच्यार्थस्योपपत्तिस्तेनैव नयेन सम्भव इति न तत्र वैकल्पिकतद्विधायकोक्तसूत्रप्रवृत्तिरिति सङ्ख्यावाचकपदोपसन्दानं तत्सूत्रप्रवृत्तिबाधकमित्यर्थः । " जात्याख्यायां नवैकोऽसङ्ख्यो बहुवत् " ॥ २ । २ । १२१ ॥ " इति जातेरेकत्वादेकवचन एव प्राप्ते पक्षे बहुवचनार्थं बहुवद्भाव उच्यते । जातेराख्याऽभिधानं जात्याख्या तस्यामेकोऽर्थः जातिलक्षणोऽसङ्ख्यः सङ्ख्याविशेषणरहितो बहुवद्वा भवतीत्यर्थः । दूरे राज्ञोऽपतन्निति—अत्र मुद्रितद्व्याश्रयमहाकाव्ये "दूरं राज्ञोऽपठन् सूता विप्रः सर्वोऽन्तिकेन तु । अन्तिकाद्गुरुराशास्त गायनाश्चान्तिकं जगुः ॥" इत्येवं तृतीयसर्गे अष्टसप्ततितमः श्लोकः । तस्यार्थश्चैवं तत्र कृतः, राज्ञो नृपस्य नृपाद्वा दूरं सूता भटा अपठन् । विप्रस्तु ब्राह्मणजातिः, पुनः सर्वोऽपि राज्ञोऽन्तिके वेदमपठन् । गुरुः पुरोहितजातिः सर्वोऽपि राज्ञोऽन्तिकात्समीप आशास्त, आशिषं दत्तवान् । कृत्यविधिमकथयद्वा । गायनाश्च राज्ञोऽन्तिकं निकटे जगुरिति ॥ सूतगायनानामिति—सूतगायनव्यक्तीनामित्यर्थः । सङ्ख्याया अविवक्षितत्वादत्र विकल्पेनैकवचनस्य बहुवचनस्य चोक्तसूत्रेण प्रवृत्तिरिति भावः । सामान्यस्य प्राधान्येनेति—जातेः प्राधान्येन विवक्षणे

अत एव नैगमव्यवहारयोर्भङ्गोपदर्शनायामेकवचनबहुवचनाभ्यां षड्विंशतिर्भङ्गा',

तस्या एकत्वेनैकवचनमेवौत्सर्गिकमिति न तत्र विकल्पेन विधायकोक्तसूत्रस्य प्रवृत्तिरिति प्रकृते सङ्ग्रहनयस्य प्राधान्येन सामान्यग्राहिणो मतेन नोक्तसूत्रेण वैकल्पिकबहुवचनोपपत्तिरिति भावः । षड्विंशतिर्भङ्गा इति—आनुपूर्व्यनानुपूर्व्यवक्तव्यकपदत्रयेणैकवचनान्तेन त्रयो भङ्गाः, एवं बहुवचनान्तेन तेन पदत्रयेण त्रय एव भङ्गाः, एवमेतेऽसंयोगतः प्रत्येकं भङ्गाः षड् भवन्ति, संयोगपक्षे तु पदत्रयस्यास्य त्रयो द्विकसंयोगाः, एकैकस्मिँस्तु द्विकसंयोगे एकवचन-बहुवचनाभ्यां चतुर्भङ्गीसद्भावतः त्रिष्वपि द्विकसंयोगेषु द्वादशभङ्गास्सम्पद्यन्ते, त्रिकयोगस्त्वत्रैक एव, तत्र चैकवचनबहुवचनाभ्यामष्टौ भङ्गाः, सर्वेऽप्यमी षड्विंशतिः ।

| | | |
|---|---|---|
| आनुपूर्वी १ | | |
| अनानुपूर्वी १ | | |
| अवक्तव्यकः १ | इत्येकवचनान्ताख्यः | |
| आनुपूर्व्यः ३ | | |
| अनानुपूर्व्यः ३ | | |
| अवक्तव्यकाः ३ | बहुवचनान्ताख्यः | |

| | | |
|---|---|---|
| आनुपूर्वी १ | अनानुपूर्वी १ | |
| ,, १ | अनानुपूर्व्यः ३ | |
| आनुपूर्व्यः ३ | अनानुपूर्वी १ | |
| ,, ३ | अनानुपूर्व्यः ३ | १ द्विकसंयोगे चतुर्भङ्गी |
| आनुपूर्वी १ | अवक्तव्यकः १ | |
| ,, १ | अवक्तव्यकाः ३ | |
| आनुपूर्व्यः ३ | अवक्तव्यकः १ | |
| ,, ३ | अवक्तव्यकाः ३ | २ द्विकसंयोगे ४ |
| अनानुपूर्वी १ | अवक्तव्यकः १ | |
| ,, १ | अवक्तव्यकाः ३ | |
| आनुपूर्व्यः ३ | अवक्तव्यकः १ | |
| ,, ३ | अवक्तव्यकाः ३ | ३ द्विकसंयोगे ४ |

| | | | |
|---|---|---|---|
| आनुपूर्वी १ | अनानुपूर्वी १ | अवक्तव्यकः १ | |
| ,, १ | ,, १ | अवक्तव्यकाः ३ | |
| ,, १ | अनानुपूर्व्यः ३ | अवक्तव्यकः १ | |
| ,, १ | ,, ३ | अवक्तव्यकाः ३ | |
| आनुपूर्व्यः ३ | अनानुपूर्वी १ | अवक्तव्यकः १ | |
| ,, ३ | ,, १ | अवक्तव्यकाः ३ | |
| ,, ३ | अनानुपूर्व्यः ३ | अवक्तव्यकः १ | |
| ,, ३ | ,, ३ | अवक्तव्यकाः ३ | ४ त्रिकसंयोगेऽष्टौ भङ्गाः |

संग्रहस्य तु सामान्याश्रिताः सप्तैव भङ्गा अनुयोगद्वारसूत्रे लिखिताः। अत एव च वृत्तावभेदैकत्वसंख्याया एव भानं न्यायसिद्धं वैयाकरणैरभ्युपगम्यते । सामान्यात्मनाऽविभागेन संख्याविशेषाणामवस्थानं हि सा, अस्या भानं च कपिञ्जलाधिकरणे त्रित्वस्येवात्रैकत्वस्य प्रथमोपस्थितत्वात्, न चेदेवं तदा राजपुरुष इत्यादौ राज्ञः राज्ञोः राज्ञां वेति जिज्ञासा न स्यात्, तस्याः सामान्यज्ञानपूर्वकत्वात्, तस्मान्न्यायबला-

नन्वियमानुपूर्व्यादिका संज्ञा, अयं च तदभिधेयस्त्र्यणुकादिरर्थः संज्ञीत्येवं संज्ञासंज्ञिसम्बन्धकथनस्य त्रिप्रदेशिकस्स्कन्ध आनुपूर्वी एवं यावदनन्तप्रदेशिकस्स्कन्ध आनुपूर्वीत्येवमेकवचननिर्देशमात्रेणैव सिद्धत्वात् त्रिप्रदेशिका यावदनन्तप्रदेशिका आनुपूर्व्य इत्यादिबहुवचननिर्देशः किमर्थ इति चेत्, उच्यते, आनुपूर्व्यादिद्रव्याणां प्रतिभेदमनन्तव्यक्तिख्यापनार्थो नैगमव्यवहारयोरित्थंभूताभ्युपगमप्रदर्शनार्थश्च बहुवचननिर्देश इति । नैगमव्यवहारयोर्द्विवचनान्तभङ्गाभ्युपगमेऽपि प्राकृते द्विवचनाऽभावात् अनुयोगद्वारे षड्विंशतिर्भङ्गा इत्युक्तम् । **सङ्ग्रहस्य तु सामान्याश्रिताः सप्तैव भङ्गा इति**–अस्ति आनुपूर्वी अस्ति अनानुपूर्वी अस्ति अवक्तव्यक इत्येकवचनान्तास्त्रय एव भङ्गाः, संग्रहस्य सामान्यवादित्वेन व्यक्तिबहुत्वाभावतो बहुवचनाभावात्, आनुपूर्व्यादिपदत्रयस्य च त्रयो द्विकसंयोगा भवन्ति, एकैकस्मिंश्च द्विकयोगे एकवचनान्त एक एव भङ्गः, त्रिकयोगेऽप्येक एवैकवचनान्त इति सर्वेऽपि सप्तभङ्गाः सम्पद्यन्ते, शेषास्त्वेकोनविंशतिर्बहुवचनसम्भवित्वान्न भवन्ति। नन्वेवं तर्हि सङ्ग्रहस्य सामान्यवादित्वेनानुपूर्वीसामान्यस्य सर्वत्रैकत्वेन तेनाभ्युपगमात् सत्पदप्ररूपणायां आनुपूर्वीद्रव्याणि सन्ति अनानुपूर्वीद्रव्याणि च सन्ति अवक्तव्यकद्रव्याणि सन्तीति बहुवचननिर्देशः कथं सम्भवतीति चेत्, सत्यम्, मुख्यरूपतया सामान्यमेवास्ति, गुणभूतं च व्यवहारमात्रनिबन्धनं द्रव्यबाहुल्यमप्यसौ वदतीत्यदोष इति भावः। **अत एव**–सामान्यस्यैकत्वादेव । **वृत्तावभेदैकत्वसङ्ख्यायाः**–समासे अभेदरूपैकत्वसङ्ख्यायाः । **सा**–अभेदैकत्वसङ्ख्या । कपिञ्जलानालभेतेत्यत्र बहुवचनेन त्रित्वचतुष्ट्वादीनां सर्वेषां सङ्ख्यानामुपस्थितावपि प्रथमोपस्थितौ तत्परित्यागे मानाभावेन त्रित्वस्यैव यथाग्रहणं तथाऽत्रापि राजपुरुष इत्यादौ प्रथमोपस्थितत्वादभेदैकत्वसङ्ख्याया एव ग्रहणमित्याह–**अस्या भानं चेति** । तथाऽनभ्युपगमे दण्डमाह–**न चेदेवं तदेति** । **तस्याः सामान्यज्ञानपूर्वकत्वादिति**–विशेषजिज्ञासायाः सामान्यरूपेण सङ्ख्याज्ञानपूर्वकत्वादित्यर्थः । ननु सामान्यज्ञाने सति विशेषजिज्ञासा कथं भवतीति चेदित्थम्, राजपुरुष इत्यत्र राजा चासौ पुरुषो राजपुरुष इति कर्मधारयसमासः, राज्ञः पुरुषो राजपुरुष इति षष्ठीतत्पुरुषसमासः, तत्र कर्मधारये राजपदशक्याऽर्थस्य पुरुषेणाभेदान्वयसम्भवान्न लक्षणा, किन्तु तत्पुरुष एव राजपदशक्यार्थस्य राज्ञो भिन्ने पुरुषपदार्थेऽभेदेनान्वयस्य बाधितत्वादभेदान्वयोपपत्त्यर्थं राजपदस्य राजसम्बन्धिनि लक्षणाऽऽश्रयणीया, तथा च तत्र तत्पुरुषसमासस्वरूपाधिगतये राज्ञः पुरुष इत्यादिविग्रहवाक्यानुसन्धानमावश्यकम्, इत्थञ्चानुसन्धीयमानराज्ञः पुरुष इति विग्रहके राजपुरुष इत्यत्र राजपदस्यैकराजसम्बन्धिनि लक्षणा, अनुसन्धीयमानराज्ञोः

जिज्ञासानुरोधेन तद्रूपेण वाच्यत्वाद्वा वृत्तौ तदवगम इति, किं बहुना ? लोकलोकोत्तरन्यायविरोधेनानुगतार्थग्राहिणि सर्वसंग्रहे बहुवचनाङ्गीकरणं न कथमपि विचारसहमिति चेत्, अत्रेदमाभाति, यत्र लोके लोकोत्तरे वा सामान्यप्राधान्येनाऽभेदैकत्वसंख्याया एवाश्रयणम्, तत्र श्रौतमार्थं वा एकवचनमेव युक्तम्, यत्र तु बौद्धमेकत्वं प्रकृतिपर्यवसितं क्रियते, तत्र सर्वसंग्रहनयोऽपि बहुवचनमेव प्रयुङ्क्ते, यथा का सेनेति प्रश्ने हस्त्यश्वरथपदातय इति, किं वनमिति प्रश्ने पुन्नागनागसहकारतालतमाला इति। तेन व्यणुकादीन्यनन्ताणुकपर्यवसानानि द्रव्याण्युद्दिश्य यत्रैकमानुपूर्वीसामान्यं विधीयतेऽनुयोगद्वारादौ तत्र बौद्धमेकत्वं संग्रहविषयः, इह तु व्यवहाराभिधित्सितस्य विधिप्रतिषेधाभ्यां जीवपदार्थविभागस्य पुरुष इति विग्रहके तत्र राजपदस्य राजद्वयसम्बन्धिनि लक्षणा, एवमनुसन्धीयमानराज्ञां पुरुष इति विग्रहके तत्र राजपदस्य बहुराजसम्बन्धिनि लक्षणेति वस्तुस्थितौ विग्रहवाक्यविशेषाप्रतिसन्धाने तत्पुरुषोऽयमित्येतावन्मात्रज्ञाने राजपुरुष इत्यादौ राज्ञः राज्ञोः राज्ञां वेति भवत्येव जिज्ञासेति बोध्यम्। तद्रूपेणेति–अभेदैकत्वसङ्ख्यात्वेन रूपेणेत्यर्थः। वृत्तौ तदवगम इति–समासे अभेदैकत्वसङ्ख्याऽवगम इत्यर्थः। विरोधेनेत्यस्य न कथमपि विचारसहमित्यनेनान्वयः। सामान्यप्राधान्येनेति–व्यक्तिविशेषमविवक्षित्वेत्यर्थः। श्रौतमिति–आगमसिद्धमित्यर्थः। सौत्रमिति पाठस्सम्भवति सूत्रसिद्धमित्यर्थः। आर्थमिति युक्तिसिद्धमित्यर्थः। यत्र तु बौद्धमेकत्वं प्रकृतिपर्यवसितं क्रियते, तत्र सर्वसंग्रहनयोऽपि बहुवचनमेव प्रयुङ्क्ते इति यत्र तु जीवानां स्वरूपतोऽनेकत्वेऽपि तेषां सामान्यरूपेण यदेकत्वं बुद्ध्या परिकल्पितं तद्बौद्धमेकत्वं प्रकृतिपर्यवसितं क्रियते बहुत्वमेव जीवत्वेनैकीकृतमतस्तदेकत्वस्य प्रकृतिर्मूलस्वरूपं बहवो जीवाः, अर्थात् जीवगतबहुत्वं तत्पर्यवसितं तत्स्वरूपविधानपरं विवक्ष्यते तत्र जीवव्यक्तीनां भिन्नत्वेन बहुवचनमेव न्याय्यमिति सर्वसंग्रहनयोऽपि बहुवचनमेव प्रयुङ्क्ते, तत्र दृष्टान्तद्वयमाह -यथेति–यथा सेनेत्यत्र सेनागतमेकत्वं बौद्धं हस्त्यश्वादीनामनेकेषां तत्समुदायत्वरूपसामान्यरूपेण बुद्ध्या परिकल्पितं यदेकत्वं तत्प्रकृतिरश्वगजादिगता बहुत्वसंख्या तत्पर्यवसितं तदेकत्वं विवक्ष्यते इति, का सेनेति प्रश्ने एकत्वविशिष्टाया एव सेनाया विषयत्वेनोत्तरवाक्येऽपि तस्या एव विधेयत्वमिति हस्त्यश्वरथपदातय इत्यत्र बहुत्वविशिष्टानामेव विधेयत्वेऽपि न प्रश्नोत्तरभावानुपपत्तिः, प्रश्ने बहुत्वे पर्यवसितस्यैवैकत्वस्य विषयत्वात्। यद्यपि बहुत्वरूपमेकत्वं प्रश्नविषय इति सेनेत्यत्र बहुवचनेन भाव्यम् तथापि तत्र प्रकृतिपर्यवसितं बौद्धमेकत्वं नाश्रीयते इत्येकवचनम्, हस्त्यश्वरथपदातय इत्यत्र तु तत् प्रकृतिपर्यवसितमाश्रीयत इति बहुवचनमिति भावः। अनुयोगद्वारादौ "से किं तं संगहस्स अट्ठपयपरूवणया ? तिपएसिए आणुपुव्वी, चउप्पएसिए आणुपुव्वी, जाव दसपएसिए आणुपुव्वी" इत्यादिसूत्रेण बहूनि द्रव्याण्युद्दिश्यैकमेवानुपूर्वीसामान्यं विधेयमिति सामान्यस्यैव प्राधान्येन तद्गतबौद्धैकत्वमेव विधित्सितं, न तु तत्प्रकृतिपर्यवसितं क्रियते इत्येकवचनमेव न्याय्यमित्याशयेनाह–तेनेत्यादि। इह त्विति–जीवा नोजीवा इत्यत्र त्वित्यर्थः।

धर्मितावच्छेदकबुद्धिप्रकारविषया प्रकृतिपर्यवसितं तत् क्रियत इति बहुवचनमेवाविरुद्धम् । अत एव सर्वसंग्रहण इत्यत्र सर्वेषां धर्मित्वेन संग्रहण इत्यर्थः । विधौ त्वेकत्वमविरुद्धमेव, बोद्धकत्वबहुत्वविशेषयोरनतिभिन्नत्वात् । साकाङ्क्षत्वनिराकाङ्क्षत्वे तु शाब्दक्रमविशेषेणैवेति सर्वमवदातम्, गम्भीरं वा भाष्यवचनमिदमन्यथापि सुधीभिः समर्थनीयम् । एकत्र दर्शिता विकल्पा अन्यत्र सुखेन दर्शयितुं शक्यन्त इत्यातिदिशति–एवं सर्वभावेष्वित्यादिना, एवमुक्तप्रकारेण सर्वभावेषु धर्मास्तिकायादिषु, नयवादेनानुगमः शब्दार्थव्याख्यानरूपः कार्यः तत्त्वैषिणा । एवं तावत् प्रमेये नयविचारः कृतः, अथ प्रमाणे तं कर्तुकाम आह अत्राहेत्यादि । सविपर्ययाणामज्ञानसहितानां पञ्चानां ज्ञानानां मध्ये कानि ज्ञानान्यज्ञानानि वा को नयो नैगमादिराश्रयत इति प्रश्नः । सूरिराह अत्रोच्यते–नैगमादयस्त्रयो नैगमसंग्रहव्यवहाराः, सर्वाणि निरवशेषाणि, कियन्ति ? अष्टौ श्रयन्त्यभ्युपगच्छन्ति । ऋजुसूत्रनयस्तु मतिर्मतिज्ञानं मत्यज्ञानं च तद्विपरीतं तद्वर्जानि, षट् श्रुतज्ञानश्रुताज्ञानावधिज्ञानविभङ्गज्ञानमनःपर्ययकेवलज्ञानलक्षणान्याश्रयते । अत्राह–कथं मतिं सविपर्ययां मत्यज्ञानसहितां न श्रयतेऽसौ । अत्रोच्यते–श्रुतस्य सविपर्ययस्योपग्रहत्वाद् व्यवहारावधारणदशायामुपजीवकत्वात्, तथा च श्रुतमुखनिरीक्षकत्वान्मतेरकिञ्चित्करत्वेनानाश्रयणमित्युक्तं भवति । यत्खल्विन्द्रियजं ज्ञानमुत्पद्यते तत्रावग्रहमात्रेण प्रवर्तमानं वस्तुनो निश्चयं कर्तुमलं, यदा तु श्रुतज्ञानेनासावर्थ आलोचितो भवति तदा यथावन्निश्चीयत इति तदेवाभ्युपगन्तव्यं श्रुतज्ञानम्, किं मतिज्ञानेनेत्यस्याशयः । शब्द-

धर्मितावच्छेदकबुद्धिप्रकारविषया इत्यादि–धर्मितावच्छेदकबुद्धिः जीवत्वनिष्ठप्रकारतानिरूपितजीवनिष्ठविशेष्यतानिरूपिका जीव इति बुद्धिः, तस्यां प्रकारः जीवत्वं तद्विषया तत्प्रकारेण जीवत्वसामान्यधर्मरूपेण तद्बोद्धमेकत्वं प्रकृतिपर्यवसितं जीवगतबहुत्वपर्यवसितं क्रियते अतस्तत्प्रतिपादकं बहुवचनमेव न्याय्यमित्यर्थः । को जीव इत्यत्र जीवत्वं न प्रश्नविषयः, तथा सति तत्स्वरूपमेव वक्तव्यं स्यात्, किन्तु जीवव्यक्तय एवेत्यभिप्रायेणाह–अत एवेति । विधौ त्वेकत्वमविरुद्धमेवेति सामान्यरूपस्य प्राधान्येन विधाने सामान्यस्यैकत्वमेव विधित्सितमिति विधावेकत्वमविरुद्धमेवेत्यर्थः । तत्र हेतुमाह–बोद्धैकत्वेत्यादि । न तत्र प्रकृतिपर्यवसानं विवक्षितमतस्तस्यैकत्वस्य बहुत्वाऽभिन्नत्वेऽप्येकवचनप्रतिपाद्यत्वमेव न्याय्यमिति भावः । यत्र यादृशविधशाब्दबोधः कर्तव्यस्तत्र तदनुकूलस्यैकवचनादेरसाकाङ्क्षत्वं तदननुकूलस्य च निराकाङ्क्षत्वं, तेन विधिरूपस्य सामान्यस्यैव प्राधान्यं विवक्षितं तत्रैकवचनं साकाङ्क्षम्, यत्र तु विधिप्रकाराणां विशेषाणां प्राधान्यं विवक्षितं तत्र बहुवचनमेव साकाङ्क्षमित्याह–साकाङ्क्षत्वनिराकाङ्क्षत्वे त्विति । श्रुतस्य सविपर्ययस्योपग्रहत्वादिति भाष्यस्यार्थमाह व्यवहारावधारणदशायामुपजीवकत्वादिति–सविपर्ययश्रुतज्ञाननिष्ठोपजीव्यतानिरूपितोपजीवकतावत्त्वात् सविपर्ययमतिज्ञानस्येत्यर्थः । मतिज्ञानं मूकत्वात् श्रुतज्ञानमुपजीव्य मत्यज्ञानञ्च श्रुताज्ञानमुपजीव्यार्थनिश्चयं परेषां कुरुतः, न स्वतः इत्यर्थनिश्चये तयोः पराधीनत्वादिति भावः । ततः किमित्यत आह तथा चेत्यादिना । उक्तार्थस्यैवाशयमाह यत्खल्वि-

नयस्तु भावार्थावलम्बी, द्वे एव श्रुतज्ञानकेवलज्ञाने श्रयते, नान्यानि। अथ कस्मान्नेतराणि श्रयते?। अत्रोच्यते—मत्यवधिमनःपर्यायाणां श्रुतस्यैवोपग्राहकत्वात् स्वालोचितार्थस्य परप्रत्यायने श्रुतस्यैव मुखनिरीक्षकत्वादित्यर्थः। यद्यपि तद्वत्केवलज्ञानमपि मूकमित्यनाश्रयणार्हम्, तथाप्यशेषार्थपरिच्छेदकत्वेन प्रधानत्वात्तदाश्रीयत इति भावः। तथा विपर्ययान्नाभ्युपैत्ययमित्याह—चेतनेत्यादि। चेतना सामान्यपरिच्छेदकत्वम्, ज्ञ इति भावप्रधाननिर्देशाद् ज्ञत्व विशेषपरिच्छेदिता, तयोः स्वाभाव्यं तथाभवनम्, तस्मात्, सर्वजीवानां पृथिवीकायिकादीना, नास्य नयस्य मते, कश्चिन्मिथ्यादृष्टिरज्ञो वा जीवो विद्यते, अयथार्थपरिच्छेदित्वं हि मिथ्यादृष्टित्वम्, न च पृथिवीकायिकादीनामपि यत्किंचित् स्पर्शाद्यंशेऽयथार्थपरिच्छेदिता नाम, यदपि शुक्तिकाशकले रजतज्ञानं, तदप्यगृहीतभेदं ज्ञानद्वयं ग्रहणस्मरणात्मकं, न त्वेकं, कारणाभावात्, एतदवलम्बनेनैव सर्वं ज्ञानं यथार्थमेवेति वदतोऽन्यथाख्यातिप्रतिक्षेपिणः प्राभाकरदर्शनस्य प्रवृत्ति.। अज्ञत्वमपि ज्ञानाभाव.,

न्द्रियमित्यादि। मत्यवधिमनःपर्यायाणां श्रुतस्यैवोपग्राहकत्वादिति—मत्यवधिमनःपर्यायज्ञाननिष्ठोपकारकतानिरूपितोपकार्यत्वाच्छ्रुतज्ञानस्यैवेत्यर्थः। उक्तमेव व्याख्याति—स्वालोचितार्थस्य परप्रत्यायने इति स्वानि मत्यवधिमनःपर्यायज्ञानानि, तैः प्रत्येकमालोचितो गोचरीकृतो योऽर्थस्तस्य, अत्र षष्ठ्यर्थो विषयत्वमिति परेषां श्रोतॄणां तद्विषयकशाब्दबोधात्मकप्रत्ययोत्पादने इत्यर्थः। श्रुतस्यैव मुखनिरीक्षकत्वादिति—यैर्यस्य मुखं निरीक्ष्यते तानि तदुपकारकाणि भवन्ति, यच्चोपकार्यं तदेव प्रधानतया कार्यकारणमिति लोकव्यवहारन्यायेन प्रकृते परेषां श्रोतॄणां मत्यादिभिरस्वालोचितार्थविषयकशाब्दबोधकरणे श्रुतस्य मुखं निरीक्ष्यत इति तानि मतिज्ञानादीनि तदुपकारकाणि इत्युपकार्यं श्रुतमेव शाब्दं साक्षाज्जनयतीति प्रधानतया तदेवाङ्गीकरोति शब्दनय इति भावः। तद्वदिति—मत्यवधिमनःपर्यायज्ञानवदित्यर्थः। मूकमिति—न स्वापेक्ष्यपरोपदेशक्षममित्यर्थः। न स्वातिरिक्तकारणानपेक्षपरोपदेशसमर्थमिति यावत्। अज्ञत्वमित्यत्र नञ्पदवाच्यः प्रसज्यप्रतिषेधात्मको निषेध एवेत्यभिप्रेत्य तदर्थमाह ज्ञानाभाव इति। अज्ञो जीवस्स एव स्यात्, यस्मिन् सर्वथा ज्ञानं न विद्यते, न चास्मिन् मते तथा सम्भवति "सुट्ठु वि मेहसमुदए होइ पहा चंदसूराणं" इति नन्दीसूत्रवचनाद् घनमेघाडम्बराच्छादने सत्यपि चन्द्रसूर्ययोर्दिनरजनीविभागकृदव्यक्तप्रकाशवदतिनिविडतमकर्मावरणे सत्यपि सर्वनिकृष्टोपयोगः सूक्ष्मनिगोदापर्याप्तजीवेष्वपि विद्यते, तत्र जीवाजीवविभागकृदव्यक्तज्ञानाभ्युपगमात्। तथा चोक्तमाचाराङ्गवृत्तौ

"सर्वनिकृष्टो जीवस्य दृष्ट उपयोग एष वीरेण।
सूक्ष्मनिगोदाऽपर्याप्तानां स च भवति विज्ञेयः॥ १॥
तस्मात्प्रभृतिज्ञानविवृद्धिर्दृष्टा जिनेन जीवानां।
लब्धिनिमित्तकैः करणैः कायेन्द्रियवाङ्मनोदृग्भिः॥ २॥" इति।

अन्यथोपयोगलक्षणस्याघटमानत्वेन जीवोऽप्यजीवत्वं प्राप्नुयादिति न कस्याप्यात्मनो

स चास्य मते न कस्यापि "सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो णिच्चुग्घाडिओ चिट्ठइ" इति वचनात् । न च प्रतियोगिसमानदेशत्वमभावस्य संभवति, तस्मात्सर्वे सम्यग्दृष्टयः, सर्वे च ज्ञानिन इत्यस्याभिप्रायः । 'विण्णेया संसारी सव्वे सुद्धाऽसुद्धणया' इति समानतान्त्रिकैर्यदुच्यते तदप्येतन्नया पेक्षया योज्यमानं समीचीनतामञ्चति । कर्मोपाधिनिरपेक्षशुद्धद्रव्यार्थिकेन तादृशशुद्धपर्यायार्थिकेन वा तद्योजनाया तु

ज्ञानाभावस्सम्भवतीत्याशयेनाह—स चास्य मते न कस्यापीति । न च यथा घटाधिकरणभूतले घटाभावो विद्यते, तथा न च ज्ञानवत्याऽऽत्मनि ज्ञानाभावोऽपि सम्भवति,

ननु शाखावच्छेदेन कपिसंयोगवति वृक्षे मूलावच्छेदेन कपिसंयोगाभावदृष्टान्तेन ज्ञानसमानदेशत्वं ज्ञानाभावस्य भविष्यतीत्यपि न चाशङ्कनीयम्, कपिसंयोगवज्ज्ञानस्याऽव्याप्यवृत्तित्वाभावात् । किञ्च तन्मते देश्येवास्ति न देश इति देशस्यैवाऽभावेन कपिसंयोगोऽपि नाव्याप्यवृत्तिरिति न तद्दृष्टान्तावलम्बनमपि युक्तमित्याशयेनाह न च प्रतियोगिसमानदेशत्वमिति । "विण्णेया संसारी सव्वे सुद्धा हु(उ) सुद्धणया" इति "मग्गणगुणठाणेहि य चउदसहि हवंति तह असुद्धणया । विण्णेया संसारी सव्वे सुद्धा हु सुद्धणया" इति बृहद्द्रव्यसंग्रहसत्केयं सम्पूर्णा गाथा । अस्याश्चायम्भावार्थः—सर्वे संसारिजीवा अशुद्धनयात् अशुद्धनयापेक्षया चतुर्दशमार्गणास्थानैश्चतुर्दशगुणस्थानैश्च चतुर्दशप्रकारा भवन्ति सम्भवन्तीति विज्ञेया ज्ञातव्याः । चतुर्दशमार्गणास्थानचतुर्दशगुणस्थानसहिता भवन्तीति यावत्, त एव सर्वे संसारिणः शुद्धनयात् शुद्धनिश्चयनयात् शुद्धनिश्चयनयापेक्षया शुद्धाः सहजशुद्धबुद्धैकस्वभावाः शुद्धपारिणामिकपरमभावग्राहकेण शुद्धद्रव्यार्थिकनयेन शुद्धनिश्चयात्मकेन मार्गणास्थानगुणस्थानरहिता जीवा इति यावत्, ननु शुद्धपारिणामिकपरमभावग्राहकशुद्धनिश्चयनयेन मार्गणास्थानगुणस्थानरहिता इत्युच्यमाने मार्गणास्थानमध्येऽपि भव्याभव्यभेदेन पारिणामिकभावस्य द्विधोक्तत्वात्तेन सह विरोधस्स्यात्, यतः पारिणामिकभाववतां जीवानां मार्गणास्थानसहितत्वेनोक्तत्वादिति चेत्, उच्यते, पारिणामिकभावो हि शुद्धाशुद्धभेदेन द्विविधः, तत्र शुद्धचैतन्यं जीवत्वमविनश्वरत्वेन शुद्धद्रव्याश्रितत्वाच्छुद्धद्रव्यार्थिकसंज्ञः शुद्धपारिणामिकभावो भण्यते, यत्पुनः "जीवभव्याभव्यत्वानि च" इति तत्त्वार्थसूत्रोक्तं कर्मजनितदशप्राणरूपं जीवत्वं भव्यत्वमभव्यत्वञ्चेति त्रयं तद्विनश्वरत्वेन पर्यायाश्रितत्वात्पर्यायार्थिकसंज्ञस्त्वशुद्धपारिणामिकभाव उच्यते, अशुद्धत्वं कथमिति चेत्, यद्यप्येतदशुद्धपारिणामिकभावत्रयं व्यवहारेण संसारिजीवेऽस्ति तथापि "सव्वे सुद्धा हु सुद्धणया" इति वचनाच्छुद्धनिश्चयेन नास्ति त्रयं, मुक्तजीवे पुनस्सर्वथैव नास्ति, इति हेतोरशुद्धत्वं भण्यते, तथा च मार्गणास्थानपतितः पारिणामिकभावोऽशुद्ध उक्तः, तद्भिन्नस्तु शुद्धचैतन्यलक्षणश्शुद्ध उक्त इति पारिणामिकभावस्य द्विभेदत्वान्नोक्तविरोध इति । उक्तदिगम्बरमतखण्डनार्थमाह—इति समानतान्त्रिकैर्यदुच्यते इत्यादि । एतन्नयापेक्षयेति शब्दनयापेक्षयेत्यर्थः । तादृशेति कर्मोपाधिनिरपेक्षेत्यर्थः । तद्योजनायामिति "विण्णेया संसारी" इत्यादि योजनायामित्यर्थः ।

केवलज्ञानं केवलज्ञानपर्यायान् वाऽऽदाय सर्वसंसारिषु शुद्धत्वं समर्थनीयं स्यात्, तत्र कर्मोपाधिनिरपेक्षत्वं विषये कर्मोपाधिप्रयुक्तभेदग्रहाविषयत्वम्, तच्च यद्यपि भेदग्रहप्रतिपक्षसामग्र्यनुप्रवेशविधया द्रव्ये निरुपचरितसंग्रहेण प्रतिपादयितुं शक्यम्, तथापि पर्याये न कथञ्चित्, पर्यायस्य संग्रहाविषयत्वात्, पर्यायनये च भेदस्यैव पुरःस्फूर्तिकत्वात् सदृशापरापरक्षणोत्पत्त्या भेदबुद्धितिरोधानं तु कर्मोपाधिसापेक्षतामेव समर्थयेत्, न तन्निरपेक्षताम्, उपप्लवावस्थायां सदृशापरापरक्षणानां कर्मसापेक्षाणामेवोत्पत्तेः, न चोपप्लवानुपप्लवसाधारणं सादृश्यमेकमस्ति, विसभागपरिक्षयादेव मोक्षप्रतिपादनात्, संग्रहानुगतीकृतविषयपुरष्कारे च न शुद्धः पर्यायनयः समर्थितः स्यात् । भाविनि वर्तमानोपचाराश्रयणे च नैगमव्यवहारावेवाश्रितौ भवेयाताम्, न चैवं कथमपि प्रत्युत्पन्नपृथिवीकायादिस्पर्शादिपरिच्छेदव्यक्तयः

**केवलज्ञानं केवलज्ञानपर्यायान् वाऽऽदाय सर्वसंसारिषु शुद्धत्वं समर्थनीयं स्यादिति**—केवलज्ञानरूपद्रव्याश्रयणेन मत्यादिसर्वज्ञानानामभिन्नत्वात् केवलज्ञानशुद्धत्वेन शुद्धत्वं सर्वथा कर्मोपाधिविलयानन्तरभाविकेवलज्ञानपर्यायाणामाश्रयणेन तच्छुद्धत्वात् पूर्वपूर्वमत्यादिज्ञानपर्यायाणामपि केवलज्ञानरूपद्रव्यपर्यायरूपतयाऽभेदाच्छुद्धत्वं वा समर्थनीयं स्यादित्यर्थः । न तत्समर्थनं समीचीनतामञ्चतीति प्रतिपादनायाह—**तत्रेत्यादि** । **विषय इति**—ज्ञानस्वरूपविषय इत्यर्थः । **उपप्लवावस्थायामिति**—सरागचित्तसन्तत्यवस्थायामित्यर्थः । **विसभागपरिक्षयादेवेति**—विसभागाः विसभागसन्ततिरूपाः केवलज्ञानपर्यायापेक्षया मत्यादिज्ञानपर्यायाः, विभावपरिणतिरूपत्वात्तेषाम्, तत्परिक्षयादेव तन्नाशादेवेत्यर्थः । **मोक्षप्रतिपादनादिति** पर्यायनयेनेति शेषः । **संग्रहानुगतीकृतविषयपुरस्कारे चेति**-संग्रहनयाभ्युपगतानुगतधर्मेण केवलज्ञानपर्यायैस्सहाऽभेदीकृतानां मत्यादिज्ञानपर्यायाणां केवलज्ञानपर्यायशुद्धत्वेन शुद्धत्वाभ्युपगम इत्यर्थः । **भाविनि वर्तमानोपचाराश्रयण इति**—भाविनि केवलज्ञाने वर्तमानत्वोपचारेण मतिज्ञानादिकालेऽपि केवलज्ञानस्य सद्भावात्तच्छुद्धत्वेन तच्छुद्धत्वाश्रयण इत्यर्थः । तत्र दोषमाह **नैगमव्यवहारावेवाश्रितौ भवेयातामिति**—तन्मत एवोपचाराश्रयणस्य युक्तत्वादिति भावः । अयमभिप्रायः शुद्धसंग्रहो द्रव्यमेवाभ्युपगच्छति, अतोऽस्याभेदज्ञानसामग्रीघटकत्वेन भेदज्ञानपरिपन्थित्वात् केवलज्ञानस्य द्रव्यरूपत्वाभ्युपगमेन मत्यादिज्ञानानामपि भिन्नानामनाश्रयणेनाभेदाश्रयणात् स्वविषयकेवलज्ञाननिष्ठकर्मोपाधिप्रयुक्तभेदग्रहाऽविषयत्वलक्षणं शुद्धत्वं सम्भवति, अतस्तदाश्रयणेन सर्वज्ञानानां यद्यपि शुद्धत्वमुपपादयितुं शक्यम्, तथापि तच्छक्त्यैव, न तु व्यक्त्या, यतस्सङ्ग्रहनयेन केवलज्ञानस्य वर्तमानमत्यादिज्ञानकाले शक्तिरूपेण सत्त्वेऽपि न तत्तन्मत्यादिज्ञानव्यक्त्यात्मनाऽवस्थानमिति तत्तन्मत्यादिज्ञानव्यक्तीनां व्यक्त्यात्मना संग्रहनयो न कथमपि शुद्धत्वं प्रतिपादयितुं शक्तः, पर्यायनयस्तु केवलज्ञानं पर्यायरूपतयैवाऽभ्युपगच्छति, तदभ्युपगमश्च पूर्वोत्तरज्ञानानां भेदाश्रयणेनैव, भेदश्च केवलज्ञानपूर्वभाविनां मत्यादिज्ञानानां कर्मोपाधिप्रयुक्त एव, नातस्स्वविषयज्ञानगतकर्मोपाधिप्रयुक्तभेदग्रहाविषयत्वं शुद्धत्वं तत्र

शुक्तिरजतभ्रमव्यक्तिधाराश्च शुद्धाः समर्थिताः स्युरित्यज्ञानमिथ्यात्वनिरपेक्षः शुद्धपर्यायार्थिको ग्रन्थकृदतिदिष्टप्रामाकरदृष्ट्याऽवश्यमभ्युपगन्तव्यः । तस्मादपि विपर्ययान् मत्यज्ञानादीन्नाश्रयते । अपिः प्रतिपक्षज्ञानानभ्युपगमकृतमज्ञानानभ्युपगमं समुच्चिनोति । यतोऽयं नयो विपर्ययान्न सहते, यतश्च छद्मस्थज्ञानानि सर्वाणि श्रुतेऽन्तर्भवन्ति अतो यत् "प्रत्यक्षमन्यदिति" सूत्रे प्रतिज्ञातं नयवादान्तरेण तु यथा मतिश्रुतविकल्पजानि भवन्ति तथा परस्ताद्वक्ष्याम इति तदुपपन्नमित्याह—अतश्चेत्यादि । प्रमाणनयविचारमनन्तरं सकलं चाध्यायार्थमुपसंहरन् कारिकाः पपाठ । आह चेत्यादि, विज्ञाय ज्ञात्वा, एकार्थानि पदानि जीवः प्राणी जन्तुरित्यादीनि, अर्थपदानि च पदनिरुक्तानि अक्षं प्रतिगतं प्रत्यक्षं अक्षेभ्यः परं परोक्षमित्यादीनि, विधानं नामस्थापनादिकम् । इष्टं च निर्देशस्वामित्वसत्संख्यादि, ततो विन्यस्य नामादिभिर्निःक्षिप्य, परिक्षेपात् सर्वव्यासेः, नयैः प्रमाणे प्रमेये च परिस्फोरितैर्नैगमादिभिः, परीक्ष्य प्रायमर्थ इत्थं न वेति । तत्त्वानि जीवादीनि सप्त ॥ १ ॥ ज्ञानमिति ज्ञानं मत्यादि, सविपर्यासं मत्यज्ञानादित्रयानुगतं, नैगमादयस्त्रयः, श्रयन्ति अभ्युपगच्छन्ति, आदित आदेरारभ्य, तेनात्यत्र यत्रव्यवच्छेदः, सर्वमष्टविधम् । स्वामिभेदमाह सम्यग्दृष्टेरर्हदभिहिततत्त्वश्रद्धायिनः, यदिन्द्रियजमनिन्द्रियजं च, तत्सर्वं ज्ञानं, मिथ्यादृष्टेः सर्वमेव विपर्यासोऽज्ञानम् । लोकोत्तरव्यवहारा-

सम्भवति, मतिज्ञानादिकेवलज्ञानान्तज्ञानपर्यायाणां सर्वेषां सदृशापरापरोत्पत्त्या भेदबुद्धितिरोधानेऽपि केवलज्ञानपूर्वभाविमतिज्ञानादौ सदृशापरापरोत्पत्तिः कर्मोपाधिप्रयुक्तैवेति कर्मोपाधिप्रयुक्तभेदग्रहविषयत्वमेव मतिज्ञानादिपर्यायाणां, न च केवलज्ञानोत्तरपर्यायतत्पूर्वमतिज्ञानादिपर्यायाणां सादृश्यमस्ति, येन केवलज्ञानोत्तरसदृशापरापरोत्पत्तौ कर्मनिरपेक्षत्वे तत्पूर्वमतिज्ञानादिपर्यायपरम्परोत्पत्तावपि तन्निरपेक्षतामाश्रित्य कर्मोपाधिप्रयुक्तभेदग्रहाविषयत्वमाश्रयितुं शक्येत, तस्मादुक्तदिशा शुद्धपर्यायार्थिकनयाश्रयणेन ज्ञानानां शुद्धत्वेन जीवशुद्धत्वमुपपादयितुमशक्यमेव, किन्तु शब्दनयमूलप्रभाकरमताश्रयणेनैवेति । तस्मादपीति शब्दनयमते मिथ्यादृष्टेरभावात्, अज्ञत्वाभावाच्चेति हेतुद्वयबलादपीत्यर्थः । अपिना तन्मते मतिज्ञानाद्यनभ्युपगमेन तद्विपक्षमत्यज्ञानादेरप्यनभ्युपगमादिति हेत्वन्तरं समुच्चिनोतीत्याह अपिरित्यादि । अयं नय इति शब्दनय इत्यर्थः । यदित्यस्य प्रतिज्ञातमित्यनेनान्वयः, यत्प्रतिज्ञातं तदेवाह—नयवादान्तरेण त्वित्यादि । नया नैगमादयः, तेषां वादः स्वरुचितार्थप्रकाशनं तस्यान्तरं भेदः, तेन मतिश्रुतयोर्विकल्पा ये भेदास्तज्जातानि यथाऽन्योक्तप्रमाणानि भवन्ति तथा परस्तान्नयविचारणायां वक्ष्याम इति । तदुपपन्नमित्याह—अतश्चेत्यादीति । शब्दनयस्य मते मत्यादिज्ञानानां श्रुतज्ञान एवान्तर्भावः, तस्य च प्रमाणैकरूपत्वेन प्रत्यक्षानुमानोपमानाप्तवचनानामपि तत्रैवान्तर्भावात्प्रामाण्यमस्त्यनुज्ञायत इत्यर्थः । आद्यकारिकार्थमाह—विज्ञाय ज्ञात्वेत्यादि । परिस्फोरितैरिति—एतत्प्रमाणमेतन्नयापेक्ष्यमेतत्प्रमाणञ्चैतन्नयापेक्ष्यम्, एतद्विषयः एतन्नयगोचरः, एतद्विषयस्त्वेतन्नयगोचर इत्येवं तत्तत्प्रमाणतत्तद्विषयविवेचनाय प्रकाशितैरित्यर्थः ॥१॥ द्वितीयकारिकार्थमाह ज्ञानमितीति ॥२॥

नुरोधेनायं विभागः ॥२॥ ऋजुसूत्र इति–ऋजुसूत्रः षण्मतिज्ञानमत्यज्ञानरहितानि श्रुतादीनि श्रयते । मतिं तु सविपर्यासां न श्रयते । कुतः ? । श्रुतोपग्रहात् श्रुतोपकारकत्वेन, अनन्यत्वाद्भिन्नत्वात्, श्रुतादिति गम्यं । (य)तस्य हि फलं प्रमाणं न कारणं मोक्षोपयोगिक्रियायाम्, अपि च श्रुतं कारणं न मतिः, तस्याः श्रुतेनान्यथासिद्धत्वादिति । शब्दस्तु श्रुतज्ञानकेवलज्ञाने श्रयते नान्यत् । किं कारणं, श्रुताङ्गत्वात्, श्रुतस्य प्रतिविशिष्टबलाधानहेतुत्वात्, अवधिमनःपर्यायाभ्यां हि स्वगृहीतार्थविवक्षारूपं भावश्रुतं स्वस्मिंस्तज्जनितशब्दद्रव्यराशिरूपद्रव्यश्रुतद्वारा श्रोतरि च शब्दार्थोपयोगरूपं तत्पुष्टिं नीयते, तदेव च

तृतीयकारिकार्थं विवृण्वन्नाह ऋजुसूत्र इतीति । श्रुतोपकारकत्वेनेति–श्रोतॄणां शाब्दप्रत्ययजनने श्रुतज्ञाननिष्ठोपकार्यतानिरूपितोपकारकतावत्त्वेन मतिज्ञानस्येत्यर्थः । यद्यपि श्रोतॄणां शाब्दप्रत्ययजनने श्रुतज्ञानमेव प्रधानम्, तथापि मतिज्ञानोपकृतमेव तच्छाब्दप्रत्ययं जनयति, तथा च मतिज्ञानं शब्दशक्त्याद्यवग्रहस्वरूपं श्रुतज्ञानमुपकरोतीति तदुपकारकरण एवोपक्षीणं मतिज्ञानम्, शाब्दप्रत्ययं तु श्रुतज्ञानमेव विदधातीत्यर्थप्रत्ययजनने श्रुतज्ञानस्यैवोपकारं करोति मतिज्ञानमिति हेतुनेति भावः । तदेवाश्रयणीयं भवति यन्मोक्षोपयोगिक्रियाकारणम्, मतिज्ञानन्तु न तथा, किन्तु मतिज्ञानाच्छ्रुतं, ततश्च मोक्षोपयोगिक्रिया भवतीति श्रुतमाश्रयणीयं भवतीत्याह–तस्य हीति, हिर्यतः, मतिज्ञानस्य फलं प्रमाणं–प्रमेयपरिच्छेदकम्, मतिज्ञानमर्थं प्रमिणोत्येव केवलमिति यावत्, मोक्षोपयोगिक्रियायान्तु कारणं न भवतीत्यर्थः । अपि चेति–अत्र चस्य त्वर्थकत्वात् अपि तु श्रुतं मोक्षोपयोगिक्रियायाः कारणमित्यर्थः । मतिः कस्मान्न कारणमित्यपेक्षायामाह–तस्या इति–मतेरित्यर्थः, यस्य हीति पाठे तु यस्य फलमर्थाधिगतिनिबन्धनत्वात् प्रमाणमेव भवति, न तु मोक्षोपयोगिक्रियायाः कारणं भवति तदाश्रयणं न युज्यते इति शेषः । अपि चेति–अपि त्वित्यर्थः, तथा च मोक्षोपयोगिक्रियायाः कारणत्वाच्छ्रुतस्याश्रयणं तदभावान्मतेरनाश्रयणमित्यर्थः । मतेरकारणत्वे हेतुमाह तस्या इति । श्रुताङ्गत्वादित्यस्यार्थमाह श्रुतस्य प्रतिविशिष्टबलाधानहेतुत्वादिति । एतद्विवेचयितुमाह अवधिमनःपर्यायाभ्यां हीति । हिर्यतः, अवधिमनःपर्यायज्ञानाभ्यां करणाभ्यामवधिमनःपर्यायज्ञानगृहीतार्थविवक्षारूपं विवक्षाया इच्छारूपाया आर्हतमते ज्ञानविशेषत्वाद् भावश्रुतं स्वस्मिन् वक्तरि पुष्टिं नीयते, ताभ्यां करणाभ्यां स्वगृहीतार्थविषयकविवक्षारूपं भावश्रुतं श्रोतृज्ञानोत्पादनसमर्थं भवति, उक्तविवक्षारूपभावश्रुतजनितशब्दद्रव्यराशिरूपद्रव्यश्रुतद्वारा श्रोतरि शब्दार्थोपयोगरूपं शब्दवाच्यार्थविषयकशाब्दबोधात्मकोपयोगरूपभावश्रुतं ताभ्यां करणाभ्यां पुष्टिं नीयते, वक्तृमुखोच्चारितपुद्गलात्मकशब्दरूपद्रव्यश्रुतद्वारा श्रोतर्युपजायमानं शब्दवाच्यार्थविषयकशाब्दबोधोपयोगरूपं भावश्रुतं विशिष्टचारित्रक्रियारूपार्थक्रियानुकूलसामर्थ्यरूपपुष्टिवद् भवतीति तदेव विशिष्टचारित्रार्थक्रियाकारित्वेन प्रधानं, न तु करणरूपे अवधिमनःपर्यायज्ञाने विशिष्टचारित्रार्थक्रियाकारित्वाभावेन प्रधाने, तयोः करणयोश्श्रुतज्ञानेनान्यथासिद्धत्वादिति मतिज्ञानवच्च तयो-

विशिष्टचारित्राद्यर्थक्रियाकारित्वेन प्राधान्यमास्कन्दतीति तदङ्गयोस्तयोर्मतिज्ञानस्यैव न गणना ॥३॥ मिथ्येति–मिथ्यादृष्टिर्मिथ्यादर्शनं चाज्ञानं च ते द्वे, अयं शब्दो न श्रूयते । किं कारणम्? । अस्य शब्दनयस्य मते न कश्चिदज्ञोऽज्ञानवानस्ति । कुतः? । ज्ञस्वाभाव्यात्–सर्वप्राणिनां ज्ञातृस्वरूपत्वात्, अत एव चास्य न कश्चिन्मिथ्यादृष्टिरप्यस्ति । नन्वेवमज्ञानमिथ्यादर्शननिवृत्त्यर्था प्रवृत्तिः कथमुपपद्यते, तस्यां स्वतः सिद्धत्वज्ञाने इच्छाया एवासंभवादिति चेत्, मैवम्, तत्र स्वेष्टसाधनत्वस्वकृतिसाध्यत्वासंसर्गाग्रहात्तदुपपत्तेः, यत्रैव परस्य विशिष्टज्ञानं कारणं तत्रैव मम 'तद्धेतोः' इत्यादिन्यायेन विशेषणासंसर्गाग्रह एवेति किमनुपपन्नम् ॥४॥ इतीति–इत्यनेन प्रकारेण, नयवादा–नैगमादिविचाराः, चित्रा बहुप्रकाराः, ज्ञेयवैचित्र्यात् । क्वचित्–स्वरुचितसामान्याद्यंशे विशेषादिग्राहिनयविचारावतारे, विरुद्धा इव–प्रतिबध्यमानोत्पत्तिका इव, अथ च सम्यगालोचनायां नयान्तरजन्यबाधज्ञानस्य नयान्तरजन्यज्ञानेऽप्रतिबन्धकत्वात्,

गणना, श्रुताङ्गत्वादिति भावः । तदेव–श्रुतज्ञानमेव । तदङ्गयोस्तयोरिति–प्रधानकारणीभूतश्रुतस्याङ्गयोर्गौणतया कारणीभूतयोरवधिमनःपर्यायज्ञानयोरित्यर्थः ॥३॥ चतुर्थकारिकार्थमाह–मिथ्येतीति । आशङ्कते–नन्विति, एवं–अज्ञानमिथ्यादर्शनाभावे सति । प्रवृत्तेरनुपपत्तौ हेतुमाह–तस्यां स्वतः सिद्धत्वज्ञाने इच्छाया एवासम्भवादिति–अज्ञानमिथ्यादर्शननिवृत्तौ स्वतः सिद्धत्वज्ञाने सा स्वत एव सिद्धा, अर्थात् ज्ञस्वाभाव्यादेवोक्तनिवृत्तिस्स्वतोऽस्तीति ज्ञाने मम सा भवत्वितीच्छाया एवाऽसम्भवादित्यर्थः । उत्तरयति मैवमिति । तत्र अज्ञानमिथ्यादर्शननिवृत्तौ । तदुपपत्तेरिति–प्रवृत्त्युपपत्तेरित्यर्थः । नैयायिकैः प्रवृत्तिं प्रतीष्टसाधनत्वप्रकारकेदन्त्वावच्छिन्नविशेष्यकमिदमिष्टसाधनमित्याकारकं एवं कृतिसाध्यत्वप्रकारकेदंविशेष्यकमिदं कृतिसाध्यमित्याकारकं विशिष्टज्ञानं कारणमभ्युपगतं, तच्चेष्टसाधनत्वरूपस्य कृतिसाध्यत्वरूपस्य च विशेषणस्य योऽसंसर्गो विशेष्येऽभावस्तस्य ग्रहे सति न भवितुमर्हति, तद्वत्ताबुद्धिं प्रति तदभावज्ञानस्य प्रतिबन्धकत्वादिति तदभावः प्रतिबन्धकाभावविधया कारणत्वेनाभ्युपगन्तव्य एवेति तेनैवास्माकं मतेऽपि प्रवृत्तिसिद्धौ किमुक्तविशिष्टज्ञानस्य कारणत्वकल्पनेनेत्याह यत्रैव परस्येत्यादि ॥४॥ पञ्चमकारिकां विवृणोति–इतीतीति । ज्ञेयवैचित्र्यादिति–नैगमादिनयमन्तव्यतत्तत्प्रकारवैचित्र्यादित्यर्थः । क्वचिदित्यस्यार्थमाह स्वरुचितेत्यादि । विरुद्धा इव इत्यस्यार्थमाह प्रतिबध्यमानोत्पत्तिका इवेति । सम्यगालोचनायाम् परमार्थदृष्ट्या यथार्थवस्तुतत्त्वविचारणायाम् । नयान्तरजन्यबाधज्ञानस्य नयान्तरजन्यज्ञानेऽप्रतिबन्धकत्वादिति–तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयरूपबाधज्ञानस्य प्रतिबन्धकत्वे मूलावच्छेदेन वृक्षे कपिसंयोगाभावज्ञाने सति शाखावच्छेदेन वृक्षे कपिसंयोगवत्त्वज्ञानमेव न स्यात्, भवति च, तस्मादव्याप्यवृत्तित्वज्ञानाभावविशिष्टमेवोक्तबाधज्ञानं प्रतिबन्धकं वाच्यम्, तथा च प्रकृते अक्षणिकत्वसामान्याद्यभ्युपगन्तृनयविषयाऽक्षणिकत्वसामान्यादिधर्मस्य क्षणिकत्वविशेषाद्यभ्युपगन्तृनयविषयक्षणिकत्वविशेषादिधर्मस्य चोभयस्य भिन्नापेक्षयैकस्मिन् वस्तुनि वृत्तित्वेनाऽव्याप्यवृत्तित्वमिति तज्ज्ञानस्योत्तेजकस्य

विशुद्धा–अव्याहतोत्पत्तयोऽव्याहतयाथार्थ्याश्च । अंशग्राहित्वेऽपि पारमेश्वरप्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तु-स्पर्शेन लौकिकविषयान् वैशेषिकादिशास्त्राण्यऽतीताः, तत्त्वज्ञानार्थं–समग्रनयसामग्रीसंपाद्यसप्तभङ्ग्या-त्मकमहावाक्यार्थपरिज्ञानार्थम्, अधिगम्या अभ्यसनीयाः । उत्सर्गतो हि पारमेश्वरप्रवचनपरिणतबुद्धीनां स्याद्वादाभिधानमेवोचितं परिपूर्णवस्तुप्रतिपादकत्वात्, तद्व्युत्पत्त्यर्थितया तु शिष्याणामंशग्राहिषु नयवादेष्वप्यपवादतः प्रवृत्तिरुचितैव । "अशुद्धे वर्त्मनि स्थित्वा, ततः शुद्धं समीहत" इत्यादि-न्यायादिति भावः । तदिदमाह–सम्मतौ महावादी–" सीसमईविप्फारण–मेतत्थो यं कओ समुल्लावो । इहरा कहामुहं चेव, णत्थि एयं(वं) ससमयंमि ॥ १ ॥" इति ॥

सत्त्वेन तज्ज्ञानविशिष्टतया नैगमनयजन्याक्षणिकत्वसामान्यादिप्रकारकज्ञानरूपबाधज्ञानस्य-र्जुसूत्रनयजन्यक्षणिकत्वविशेषादिप्रकारकज्ञानं प्रति न प्रतिबन्धकत्वमित्यत इत्यर्थः । विशुद्धा इत्यत्र हेतुं प्रदर्श्य तदर्थमाह अव्याहतेत्यादि । लौकिकविषयातीता इत्यस्यार्थमाह–अंशग्राहित्वेऽपीति । तत्तन्नयानां प्रकारविधया तत्तदंशग्राहित्वेऽपि तदितरांशाऽप्रतिक्षेपित्वेन श्रुतप्रमाणप्रतिपन्नानन्तधर्मात्मकवस्त्वेकदेशग्रहणलक्षणस्पर्शेनैकान्ता-त्मकलौकिकविषयप्ररूपकवैशेषिकबौद्धादिशास्त्रविषयैकान्तागोचरत्वेन तान्यतीतास्तत्तन्नयवादा इत्यर्थः । तत्त्वज्ञानार्थमित्यस्यार्थमाह–समग्रनयेति । अधिगम्या इत्यस्यार्थमाह–अभ्यसनी-या इति, दृढसंस्कारमापन्ना यथा स्युस्तथा सन्ततप्रवृत्त्या स्थैर्यभावेनात्मसात्कर्त्तव्या इति भावः । यद्यर्हत्सिद्धान्तोक्तानेकान्ततत्त्वाभ्यासजन्यतद्विषयकपरिपुष्टबुद्धीनां सप्तभङ्ग्यात्मकप्रमाणवाक्य-स्यैव सप्तविधजिज्ञासानिवर्त्तकसप्तधर्मप्रकारकैकधर्मिविशेष्यकाखण्डबोधजनकतापर्याप्तिमत्त्वात् उत्सर्गतस्स्याद्वादरूपप्रमाणवाक्याभिधानमेवोचितं तर्हि तत्तन्नयवादविषया प्रवृत्तिर्दुर्घटैव, तत्तन्न-यवाक्यानां मिथो विरोधितया विरुद्धनयवाक्यप्रतिपादनप्रवृत्तेरनुचितत्वादित्याशङ्कायामाह तद्व्युत्पत्त्यर्थितयेति–स्याद्वादवाक्यतज्जन्याशेषांशविशिष्टपरिपूर्णवस्तुविषयकनिराकाङ्क्षशाब्द-बोधात्मकज्ञानविशेषकार्यकारणभावविज्ञानरूपा या व्युत्पत्तिस्तदर्थितयेत्यर्थः । अस्य च शिष्या-णामित्यनेनान्वयः । अंशग्राहिषु नयवादेष्वप्यपवादतः प्रवृत्तिरुचितैवेति–न हि प्रत्येकतत्तदंशज्ञानाभावे निखिलांशविशिष्टार्थज्ञानं भवितुमर्हतीत्यशेषांशविशिष्टार्थबोधे एकैकत-त्तदंशविषयकनयज्ञानानामपि हेतुत्वात्तज्जनकेष्वंशग्राहिषु नयवादेष्वपि प्रवृत्तिरुचितैवेत्यर्थः । ननु तदितरांशनिरपेक्षतत्तदंशविषयकनयवादानां मिथोविरोधिनां तद्विषयासत्यत्वेनायथार्थज्ञानज-नकत्वात्तत्वतो मिथ्यात्वादशुद्धत्वेन तदुक्तयुक्त्याश्रयणं नोचितमित्याशङ्कायामाह–अशुद्धे वर्त्मनि स्थित्वेति–तथा चोक्तन्यायेन शिष्यमतिविस्फारणार्थं तदुक्तयुक्त्याश्रयणमपि न्याय्यम् । परमार्थतस्त्वेकान्तनयभाषाप्रयोग एव नास्ति, कुतस्तदुक्तयुक्त्याश्रयणमिति बोध्यम् । उक्तार्थे सम्मतितृतीयकाण्डसत्कपञ्चविंशतितमगाथासंवादमाह–"सीसमईविप्फारणे त्ति" । अस्या अयमर्थः शिष्यमतिविस्फारणमात्रार्थोऽयं विनीतविनेयबुद्धिविकाशनमात्रफलकोऽयं, अति-

स्वरूपतोऽशुद्धत्वेऽपि फलतः शुद्धत्वे सर्वेषां नयवादानां स्याद्वादव्युत्पादकतयेत्यर्वाग्दशायां सर्वथा तदाश्रयणं न्याय्यमिति परमार्थः ॥

॥ इति महोपाध्याय-श्रीकल्याणविजयगणिशिष्यमुख्यपण्डित-श्रीलाभविजयगणिशिष्यावतंसपण्डित-श्रीजीतविजयगणिसतीर्थ्यतिलकपण्डित-श्रीनयविजयगणिचरणकमलचञ्चरीकेण पण्डितश्रीपद्मविजयगणिसोदरेणोपाध्याय-श्रीयशोविजयगणिना विरचितायां भाष्यतर्कानुसारिण्यां तत्त्वार्थटीकायां प्रथमाध्यायविवरणं समाप्तम् ॥

॥ न्यायविशारद-न्यायाचार्य-महोपाध्याय श्रीयशोविजयगणिविनिर्मितायां भाष्यतर्कानुसारिण्यां तत्त्वार्थटीकायां प्रथमाध्यायविवरणं सम्पूर्णम् ॥

नम्रविनयभक्तिभावेनार्हच्छास्त्रीयद्रव्यानुयोगतत्त्वाभ्यासैकनिष्ठानां शिष्याणां सप्तभङ्ग्यात्मकमहावाक्यजन्यप्रमाणात्मकाखण्डशाब्दबोधजनकावान्तरवाक्यार्थज्ञानोत्पादनार्थं इति यावत् । कृतः समुल्लापः विहितः प्रबन्धः । इतरथा एकान्तवादैकवाक्यतापन्ननयवाक्यप्रतिपाद्यैकान्ततत्त्वकथैवैषा जैनसिद्धान्ते नास्ति, एकान्तनयविषयासत्त्वेन तत्कथाया अप्यसम्भवान्न सा प्रतिपादनीया, अत एव "नैवावधारणीं भाषां भाषेत" इति सिद्धान्तोक्तमपि सङ्गच्छते, अयञ्च निषेधः स्वतन्त्रनयविषय एव, तेन स्याद्वादैकवाक्यतापन्ननयवाक्यस्येतरधर्माऽप्रतिक्षेपितयाऽन्यासेपदेशसापेक्षैकदेशबोधजनकस्यानन्तधर्मात्मिकवस्त्वेकदेशेऽपि स्याद्वादरूप एवेति तत्प्रतिपादकत्वादेव सुनयवाक्यरूपतया तत्त्वार्थाधिगमकारणत्वेन तत्कथा तु प्रतिपादनीयैवेत्यायातम्, अत एव "प्रमाणनयैरधिगमः" इति सूत्रविरोधोऽपि नेति भावः । ननु किमेकान्तनयवादाश्रयणं नैव न्याय्यमित्याशङ्कायामाह स्वरूपतोऽशुद्धत्वेऽपीति । एकान्तविषयाऽसत्यत्वेन तद्विषयाणां एकान्तनयवादानामप्रामाण्येऽपीत्यर्थः । फलतः शुद्धत्वे हेतुमाह सर्वेषां नयानां स्याद्वादव्युत्पादकतयेति-अशेषनयानां प्रमाणात्मकमहावाक्यजन्याखण्डशाब्दबोधजनकावान्तरवाक्यार्थज्ञानजनकतयेत्यर्थः ॥

